पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन 'आदर्शशोधसंस्थानम्' इति सम्मानितम्

# गीताभाष्यम्

श्रीमज्जयतीर्थविरचितप्रमेयदीपिकाटीकया,
श्रीराघवेन्द्रतीर्थविरचितभावदीपव्याख्यया च सहितम्

सम्पादकः
विद्वान् सि.आर्. चतुर्वेदी प्रदीपसिंहाचार्यः
बेङ्गलूरु






प्रकाशनम्
पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२०१४

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीनराष्ट्रियसंस्कृतसंस्थानेन
'आदर्शशोधसंस्थानम्' इति सम्मानितम्

# गीताभाष्यम्

श्रीमज्जयतीर्थविरचितप्रमेयदीपिकाटीकया,
श्रीराघवेन्द्रतीर्थविरचितभावदीपव्याख्यया च सहितम्

सम्पादकः
विद्वान् सि.आर्. चतुर्वेदी प्रदीपसिंहाचार्यः
बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पमुख्यमार्गः,
बेङ्गलूरु-५६००२८

२०१४

**गीताभाष्यम्**
श्रीमज्जयतीर्थविरचितप्रमेयदीपिकाटीकया,
श्रीराघवेन्द्रतीर्थविरचितभावदीपव्याख्यया च सहितम् ।

**ISBN : 978-93-81275-40-5**

सम्पादकः- विद्वान् सि.आर्. चतुर्वेदी प्रदीपसिंहाचार्यः

प्रकाशकः- पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्,कत्तरिगुप्पमुख्यमार्गः,बेङ्गलूरु - २८

प्रथममुद्रणम् : २०१४

मुद्रितपुस्तकसङ्ख्या - १०००

पृ.सङ्ख्या - १९२ + ८९२

मूल्यम् - ४००-०० रूप्यकाणि

लावण्यमुद्रणद्वारा मुद्रितम् ।

**POORNAPRAJNA SAMSHODHANA MANDIRAM**
Recognised as 'Adarsha Shodha Sansthan'
by Rashtriya Sanskrit Saṁsthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

# GĪTĀ-BHĀṢYAM

**with the 'Prameyadīpikā' commentary of Sri Jayatīrtha and the 'Bhāvadīpa' sub-commentary of Sri Rāghavendratīrtha**

*Editor*
**Vidwan C.R. Chaturvedi Pradeepasimhacharya**
Bangalore

***Publisher :***
Poornaprajna Samshodhana Mandiram
**Poornaprajna Vidyapeetha, Katriguppa Main Road,**
**Bangalore-560028**

Poornaprajna Samshodhana Mandiram Series No. 114

# GĪTĀ-BHĀṢYAM

**with the 'Prameyadīpikā' commentary of Sri Jayatīrtha and the 'Bhāvadīpa' sub-commentary of Sri Rāghavendratīrtha**

**ISBN : 978-93-81275-40-5**

*Editor* : **Vidwan C.R. Chaturvedi Pradeepasimhacharya**

*Published by :* **Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Bangalore - 560.028.

First Edition : 2014

No. of Pages : 192 + 892

Copies : 1000

Price : Rs. 400/-

*Printed by :*
**Lavanya Mudrana**, Bangalore.

## श्रीश्रीविश्वेशतीर्थश्रीपादाः

श्रीपेजावराधोक्षजमठः, उडुपि

# अनुग्रहसन्देशः

महाभारतपारिजातसमुद्भूता गीता समेषां जनानां मधु पाययतीति सर्वेषामनुभवसिद्धम् । भगवता कृष्णेन उपनिषद्रूपाभिर्गोभिर्दुग्धं क्षीरम् आत्मपुष्टिदं प्रदत्तम् । परन्तु तत् क्षीरं नैकैराचार्यैः जलसंयोजनेन विनष्टमाधुर्यम् अनुपयोगि च कृतम् । अस्मिन् सन्दर्भे श्रीमध्वहंसः क्षीरे सम्मिलितम् नीरम् अन्यैर्विभक्तुमशक्यं नीराद्विभज्य शुद्धं गीताक्षीरं सुजनानां यथावत्प्रददौ । स्वीय-भाष्यप्रणयनेन गीतायाः हार्दम् आविश्चकार च । गीताभाष्यस्य आशयं विशदयन्ती प्रमेयदीपिका श्रीमट्टीकाकृद्भिः प्रणीता विराजतेतमाम् । अत्र च परमतविमर्शनपूर्वकं स्वाचार्यस्य च हार्दमाविष्कृतम् । अस्याश्च टिप्पणी श्रीमद्राघवेन्द्रतीर्थश्रीमच्चरणैः प्रणीता अद्ययावदप्रकाशिता भावदीपनाम्नी अन्वर्थाभिधा इदानीं संशोधनमन्दिरद्वारा प्राकाश्यं नीयत इति विदित्वा नितान्तं हृष्टा वयम् । श्रीमद्राघवेन्द्रतीर्थश्रीमच्चरणाः पदवाक्यप्रमाणपारावारपारीणाः पञ्चाशदधिक-प्रबन्धप्रणयनेन विश्रुतविभवाः कीर्तिशरीरा अद्यापि विराजन्तेतमाम् । तेषां च व्याख्या गात्रेणाल्पीयसी अर्थगौरवं बिभ्रती विदुषामविदुषां च तोषकारिणी उपकारिणी च भवतीत्यत्र सर्वानुभव एव प्रमाणम् । अस्य ग्रन्थस्य प्रकाशनार्थं श्री के. प्राणेशरावमहोदयः पञ्चविंशति-सहस्ररूप्यकाणि समर्पयामास । एवं वेणीश्रीनिवासमहोदयः पञ्चसहस्ररूप्यकाणि अदात् । उभयोः अस्मदाराध्यः श्रीकृष्णः आयुरारोग्यभाग्यप्रदानेन समनुगृह्णात्विति प्रार्थयामहे ।

ग्रन्थस्यास्य शोधकेन अस्मत्प्रियच्छात्रेण प्रदीपसिंहाचार्येण गुर्वी गुरुसेवा व्यधायि । अनेन विदुषा नैके ग्रन्थाः संशोधिता भवन्त्विति अस्मदाराध्यं श्रीकृष्णं प्रार्थयामहे । विद्वज्जनाः सज्जनाश्च ग्रन्थस्यास्याध्ययनेन निर्मलां दृष्टिमाप्नुवन्त्वित्याशास्महे ।

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**

**श्रीश्रीविद्यावल्लभतीर्थश्रीपादाः**

श्रीकाणियूरुमठः, उडुपि

# अनुग्रहसन्देशः

अतिपवित्राणि चत्वारि नामधेयानि श्रूयन्ते- गीता, गङ्गा, गायत्री, गोविन्दश्चेति । चतुर्गकारसंयोगे साधको कृतकृत्यो भवति । तत्राद्या गीता सर्वपावनी सर्वलोकमहिता । अस्याः गीतायाः भाष्यं श्रीमन्मध्वाचार्यैः विरचितम् । 'गीताभाष्यं चकारासौ' इति ग्रन्थमालिकास्तोत्रात् मध्वविजयतश्चायमतीव भगवत्प्रिय इति ज्ञायते । तट्टीकाटिप्पणिरूपः प्रमेयदीपिका-भावदीपाख्यः ग्रन्थः श्रीराघवेन्द्रतीर्थविरचितः बहोः कालाद् अमुद्रित एवासीत् । श्रीपेजावरमठाधीशानां चतुर्थपर्यायमहोत्सवकाले अस्मन्मठीयग्रन्थालयस्थमातृका-शुद्धीकरणकाले श्रीमद्भिः श्रीशेषगिरि आचार्यैः तथा प्रदीपसिंहाचार्यैश्चानेका मातृकाः शुद्धी-कृताः । तन्मध्येऽयं भावदीपग्रन्थोऽस्मद्गुरुभिः सम्पादितमातृकामध्ये लब्धः । मातृकाया अपरिपूर्णत्वान्मध्ये क्रिमिभक्षितत्वाच्च न पूर्णतया अस्या उपलब्धिरासीत् । संशोधनकर्मणि निरतः श्रीप्रदीपसिंहाचार्यः ग्रन्थमिमं संशोधनायास्मान् प्रार्थयामास । अस्मदभिमानिनां प्रदीपसिंहाचार्याणां प्रार्थनानुसारेण प्रदत्तेयं मातृका अन्यमातृकासहकारेण संशोधितेति नितरां सन्तुष्यामः ।

शास्त्रपारावारपारीणाः पूर्णप्रज्ञविद्यापीठ-पूर्णप्रज्ञसंशोधनमन्दिरादिनैकविद्यासंस्था-निर्माणेन सर्वदैव संस्मरणीयाः श्रीमद्विश्वेशतीर्थगुरुचरणाः संशोधनमन्दिरस्यास्य मार्गदर्शका अनुग्राहकाश्च । तेषां परमानुग्रहेण श्रीमद्भगवद्गीताभाष्यं प्रमेयदीपिकाटीकया तथा भावदीपाख्यटिप्पण्या सह सम्पादितमिदानीं प्राकाश्यं नीयते पूर्णप्रज्ञसंशोधनमन्दिरद्वारेति विदित्वा हृष्टा वयम् । तत्र शोधकर्मणि बद्धादारं प्रदीपसिंहाचार्यं सानन्दमभिनन्दामः, संशोधन-मन्दिराधिकारिणश्च । सर्वानितान् अस्मदुपास्यः सकलदुरितहारी सकलाभीष्टदायी श्रीमध्ववल्लभ-श्रीकृष्णाभिन्नलक्ष्मीनरसिंहोऽनुगृह्णात्वित्याशास्महे ।

**श्रीश्रीविद्यावल्लभतीर्थश्रीपादाः**

**श्रीश्रीविश्ववल्लभतीर्थश्रीपादाः**

श्रीसोदेवादिराजमठः, उडुपि

# अनुग्रहसन्देशः

मध्वप्रतिष्ठितं त्वां विध्वस्ताशेषकुजनकुलम् ।
मूर्ध्ना प्रणम्य याचे तद्विरचय यद्धितं ममाद्य हरे ॥

'गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः' इत्युक्तदिशा सकलैरपि भगवद्गीताऽध्येतव्या । श्रीमन्मध्वाचार्याः तत्त्ववादप्रसरणाय प्रथमतः श्रीमद्भगवद्गीतायाः भाष्यं वितेनुः । तदर्थस्फुटीकरणाय श्रीजयतीर्थाः प्रमेयदीपिकाख्यां टीकाम्, तट्टिप्पणीं प्रमेयदीपिकाभावदीपनाम्नीं च श्रीराघवेन्द्रतीर्थाश्च रचयामासुः । एतादृशाः बह्व्च अमुद्रिताः टीकाटिप्पण्य अस्मन्मठीयग्रन्थागारे तुळुलिप्यङ्किता उपलभ्यन्त इति महान् प्रमोदः । अस्मदीयग्रन्थागारस्थमातृकामवलम्ब्य सि.आर्. प्रदीपसिंहाचार्यः अन्धपङ्गुन्यायेन अन्या मातृका अप्युपयुज्य प्रमेयदीपिकाभावदीपं परिष्कृत्य सम्पादयाञ्चक्र इत्यभिनन्दनीयः ।

सकलशास्त्रनदीष्णाः श्रीकृष्णचरणाराधनसमेधितविभवाः पूर्णप्रज्ञविद्यापीठपूर्णप्रज्ञसंशोधनमन्दिरादिनैकविद्यासंस्थानिर्माणेन सर्वदैव संस्मरणीयाः श्रीमद्विश्वेशतीर्थगुरुचरणाः संशोधनमन्दिरस्यास्य मार्गदर्शका अनुग्राहकाश्च । तेषां परमानुग्रहेण संशोधनमन्दिरतः ग्रन्थोऽयं मुद्राप्यत इति प्रमोदनिदानम् ।

पूर्णप्रज्ञसंशोधनमन्दिरपदाधिकारिणः, एतद्ग्रन्थसम्पादकं चतुर्वेदी प्रदीपसिंहाचार्यं चास्मदुपास्यः भावीसमीरश्रीवादिराजवरदभूवराह-हयग्रीवाभिन्नवेदव्यासोऽनुगृह्णात्विति त्याशास्महे ।

**श्रीश्रीविश्ववल्लभतीर्थश्रीपादाः**

# Director's Note

I am extremely happy to present this Prameyadeepika-Bhavadeepa of Sri Raghavendratirtha, edited by Vidwan Pradeepasimhacharya. Gita Bhashya and Gita-Tatparya of Sri Madhvacharya are shining like Moon and Sun in the heart-sky of Sattvik souls. The Prameyadeepika of Sri Jayatirtha not only explains the inner meaning of his Guru but it is concentrating on refutation of misinterpretations on Gita also. Bhavadeepa of Sri Raghavendratirtha is focuses light on commentary of Sri Jayatirtha and criticises different interpretations of other schools.

So far, this manuscript was unpublished and unavailable to the Madhva society. Now Vidwan Pradeepasimhacharya edited the Bhavadeepa with great pain and recorded the readings of various manuscripts for the benefit of learned readers. He also wrote a valuable introduction and explained the unique contribution of Sri Raghavendratirtha.

I prostrate with sincere devotion to Sri Vishveshatirtha Swamiji who has been guiding the activities of the Samshodhana Mandiram for its all-round development.

I also submit my Pranamas and express our gratitude to H.H. Sri Vidyavallabhatirtha Swamiji of Sri Kaniyuru Matha and H.H. Sri Vishvavallabhatirtha Swamiji of Sri Sode Matha, for providing the valuable manuscripts of Gitabhashy-Prameyadeepika-Bhavadeepa for publication by Poornaprajna Samshodhana Mandiram.

H.H. Sri Vishvanandanatirtha Swamiji of Hanasoge Madhva Matha presented valuable summary of the text in English, Sanskrit and Kannada, which is effective and attractive to the learned readers. I express my gratitude and submit my Pranamas to H.H. Sri Swamiji for his contribution.

I sincerely thank Prof. Radha Vallabha Tripathi, Vice-chancellor, Rashtriya Sanskrit Samsthan, New Delhi, who evinces keen interest in all the activities of Samshodhana Mandiram and lends a helping hand whenever we approach him. I also express my gratitude to Prof. Subbaraydu, Registrar of Rashtriya Sanskrit Sansthan for continuous encouragement in development our institution.

I express my gratitude to Prof. K. Hayavadana Puranik, Chairman of Poornaprajna Samshodhana Mandiram for his whole hearted support for our academic activities. I also express my gratitude for Prof. D. Prahlada Char for valuable guidance in the development of institution.

Sri Pranesha Rao of Chamarajpet donated Rs. 25,000/-, Sri Veni Srinivasa Rao have donated Rs. 5,000/-, Sri Sanjay & Sri Gundu Rao have donated Rs. 1,000/- each for this publication. We express our gratitude for their valuable donation for this publication.

I thank M/s.Lavanya Mudrana, who have printed this book very nicely, in a short time. I am sure they will extend the same co-operation in future also.

**Dr. A.V. Nagasampige**
Director,
Poornaprajna Samshodhana Mandiram

# अनुग्रहसन्देशः

## श्रीश्रीविश्वनन्दनतीर्थश्रीपादाः

श्रीक्षेत्रहनसोगे मध्वमठः.हनसोगेक्षेत्रम्

## ।। श्रीमद्भगवद्गीतान्तरङ्गम् ।।

'शास्त्रेषु भारतं सारं तत्रापि गीतिका वरा' इत्युक्तप्रकारेण शास्त्रसारस्य भारतस्य सारभूता भगवद्गीता सुललितपदैः विरचितत्वात् सुशका बोद्धुं प्रतीयते । किन्तु विष्णुवेद इति प्राज्ञै-र्व्यवहार्यमाणोऽयं कृष्णगीतोपनिषत् भावगम्भीरैरपि वाक्यैस्तता विना व्याख्यानं दुर्ज्ञानेति ज्ञानिनां मतम् ॥

यद्यप्यनेके गीताव्याख्यानानि प्रणीतवन्तः । तथाऽपि नैकमपि गीताभावबोधनायालमिति मन्वाना भगवत्पादाः गीतागायकश्रीकृष्णापरावतारवासिष्टकृष्णशिक्षया सुशिक्षितमतयः यथाशिक्षं गीताभिप्रायमशिक्षयन्तः शिष्यानुग्रहचिकीर्षया गीताभाष्यं वितेनुः । तत्राद्यश्लोक एव गीतार्थं वक्ष्यामिति वदन्तोऽन्यैर्गीतार्थो नोक्तः, किन्तु स्वमनीषोत्थवचनैः स्वं स्वं मतं गीतार्थत्वेनोत्प्रेक्षितवन्त इति समसूचयन् । गभीरस्य गीताभाष्यस्य विद्वद्भिरपि दुर्गमस्य नैजमभिप्रायं भगवत्पादानुग्रहेणैव गृहीतवन्तो श्रीमज्जयतीर्थमुनयो माध्वसैद्धान्तिकाशेषप्रमेयवर्णनपरां प्रमेयदीपिकाख्यां टीकां वितेनिरे । प्रायस्सर्वासां टीकानां टिप्पणीकाराः श्रीमद्राघवेन्द्रतीर्था एनामपि टीकां भावदीपाख्यया टिप्पण्या दीपयामासुः ॥

महान्मोदोऽयं मान्ध्वग्रन्थलालसानां यदिदं भावदीपविभूषितप्रमेयदीपिकालङ्कृतगीता-भाष्याख्यग्रन्थरत्नं विदुषा प्रदीपसिंहाचार्येण संशोधितं सत् पूर्णप्रज्ञसंशोधनमन्दिरप्रकाशनरत्नाकरं समुद्भूतमिति । प्राङ्निर्दिष्टटिप्पणीटीकासमेतगीताभाष्यभावं प्रत्यध्यायं सङ्ग्रहीतुं प्रयतामहे ॥

बुधैरपि सुदुर्बोधे ग्रन्थे यन्मम साहसम् ।
तत्पारयन्तु निपुणा गुरुपादरजःकणाः ॥

अष्टादशाध्याय्यां गीतायामाद्योऽध्यायो द्वितीयायां दशश्लोकाश्च श्रीकृष्णोपदेशस्य उपोद्घातरूपः। तस्यायं सङ्ग्रहः ॥

॥ अथ प्रथमोऽध्यायः ॥

श्रीकृष्णानुग्रहपात्राः पाण्डवा विजयन्ते इति यद्यपि सिद्धम् । तथापि स्वपुत्रा विजयन्ते वेति दुराशया धृतराष्ट्रः सञ्जयं पृच्छति कौरवाः पाण्डवाश्च युद्धार्थं मिलिताः किमकुर्वतेति । तं प्रति सञ्जयो वक्ति । व्यूहात्मना रचितं पाण्डवसैन्यं दृष्ट्वा दुर्योधनो द्रोणमुपसङ्गम्य स्वपर-सैन्यगतवीराग्रण्यानां नामानि कीर्तयित्वा भीष्माभिरक्षितं स्वसैन्यं परविजयाय नालम्, किन्तु भीमाभिरक्षितं परसैन्यं स्वविजयायालमिति विज्ञापयामास । तस्य हर्षं सञ्जनयितुं कुरुवृद्धो भीष्मः सिंहनादं कृत्वोच्चैः शङ्खं दध्मौ । ततः कौरवनादितानां शङ्खादीनां शब्दस्तुमुलोऽभवत् । पाण्डवसेनागताः श्रीकृष्णादयोऽपि स्वं स्वं शङ्खं दध्मुः ।

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् । तदा अर्जुनः श्रीकृष्णं प्रति सेनयोरुभयोर्मध्ये रथं स्थापयितुं प्रार्थितवान् । श्रीकृष्णेन तथैव कृते पार्थो युद्धसन्नद्धान् बन्धूनाचार्यांश्च दृष्ट्वा परया कृपया आविष्टो विषादं कुर्वन्नेवमब्रवीत् । हे कृष्ण! इमं बन्धुजनं युद्धसन्नद्धं दृष्ट्वा मम गात्राणि सीदन्ति । मुखं परिशुष्यति । शरीरे कम्पनं रोमाञ्चश्च जायते । हस्ताद् गाण्डीवं स्रंसते । ज्वरग्रस्तस्येव त्वक् परिदह्यते । मनो भ्रमतीव । न शक्नोमि स्थातुम् । विपरीतानि निमित्तानि पश्यामि । स्वजनं हत्वा श्रेयो न भवति । विजयं, राज्यं, सुखानि च नाकाङ्क्षे । येषामर्थे वयं राज्यं भोगान् सुखान्यपेक्षामहे त इमे बान्धवाः प्राणांस्त्यक्तुं सिद्धा युद्धे तिष्ठन्ति । त्रैलोक्यराज्यस्यापि हेतोरिमान् हन्तुं नोत्सहे । यद्यप्येत आततायिनः, तथापि तद्धननेन बान्धवहननप्रसक्त्या पापमेव भवेत् । तस्माद्वयमेतान् हन्तुं नार्हाः ।

यद्यपि राज्यसुलुब्धा एते युद्धनिमित्तकदोषान् न गणयेयुः, तथापि तद्विद्वद्भिरस्माभिः एतादृशपापकरयुद्धादवश्यं निवर्तनीयम् । युद्धेन कुलक्षये तमनु कुलधर्माः प्रणश्यन्ति । तन्नाशेऽधर्मः कुलमभिभवति । तस्मात् कुलस्त्रीणां दूषणे वर्णसङ्करो जायते । स तु कुलघ्नानां कुलस्य च नरकायैव भवति । कुलधर्मनाशेन नरके नियतं वासो भवतीति श्रूयते । अतो वयं महत्पापं कर्तुमुद्यताः । यद्यप्रतीकारमशस्त्रं मां शस्त्रपाणयो धार्तराष्ट्रा हन्युः तन्मे क्षेमतरं भवेदिति ॥

एवमुक्त्वा सशरं धनुर्विसृज्य शोकाविष्टोऽर्जुनो रथोपस्थे न्यषीदत् । तं प्रति श्रीभगवान् उवाच - हे पार्थ ! विषमे युद्धकाले कथमेवं कश्मलं त्वां प्राप्तम् । एवं युद्धत्यागः अस्वर्ग्योऽकीर्तिकरोऽनार्यसेवितश्च । हृदयदौर्बल्यं त्यक्त्वा युद्धसन्नद्धो भव इति ॥

पुनरर्जुन आह । पूजार्हौ द्रोणभीष्मौ प्रति कथमिषुपातं करोमि । गुरून् हत्वा राज्यलाभादपि भैक्षचर्यैव वरा । तान् हत्वा तद्रक्तदिग्धभोगान् कथं भुञ्जेमहि । युद्धे कृतेऽपि जयः सन्दिग्धः ।

अहं त्वां शिष्यत्वेन शरणं गतोऽस्मि । मम यच्छ्रेयस्करं तद्बोधय इति । एवमुक्त्वा न योत्स्य इति तूष्णीं स्थितेऽर्जुने भगवान् सेनयोरुभयोर्मध्ये विषीदन्तं तं प्रत्युपदिदेशेति ॥

।। अथ द्वितीयोऽध्यायः ।।

विषीदन्तमर्जुनं प्रति कृतस्य भगवदुपदेशस्यायं सङ्ग्रहः ।

यान् त्वम् अन्वशोचः ते न शोकार्हाः, यान् त्वं भाषसे ते मनीषोत्थवादा एव । नतु प्राज्ञानां वादाः । कुतो न ते शोच्याः? कथं मम वादाः प्रज्ञावादाः? इति चेत् प्राज्ञाः जीवत इव मृतान् प्रत्यपि नैव शोचन्ति । कुतो न शोचन्ति इति चेत् किं जीवनाशं आशङ्क्य शोक उत देहनाशम् । जीवो नित्यः अनादित्वात् मद्वत् । देहनाशस्त्वनिवार्यः । देहभिन्नात्माभावात् । देहनाश एव आत्मनाश इति नाशङ्कनीयम्। देहभिन्नात्मनः देहावस्थाविशेषकौमाराद्यनुभववतः सद्भावात् । कौमारदेहहानेऽपि यौवनदेहप्राप्तेः, यौवनदेहहानेऽपि जीर्णदेहप्राप्तेश्च यथा शोकाभावः तथा एतद् - देहहानेऽपि देहेन्तरप्राप्तिसद्भावात् । तथाऽपि एतद्देहहाने तद्दर्शनस्पर्शनाद्यभावेन दुःखप्राप्तिरिति न मन्तव्यम् । केवलदर्शनादिना सुखदुःखाद्यप्राप्तेः, परन्तु अभिमानसहिततद्दर्शनादिनैव तत्प्राप्तेः । अतो अभिमानं त्यक्त्वा अदर्शनादिनिमित्तकदुःखं विफलीकुरु ॥

युद्धं कृत्वा बन्धुमरणे अभिमानत्यागेन शोकतरणादपि युद्धत्याग एव वर इति न मन्तव्यम् । अभिमानत्यागेन न केवलमिदानीं प्रसक्तस्य दुःखस्याभावः, किन्तु समग्रसांसारिकदुःखहानिरिति गुणलाभात् ।

किञ्च दुष्टहननस्य सत्कर्मत्वात् सत्कर्मणश्च नियमेन सुखप्रदत्वात् शोको न कार्यः । तस्मात् युद्ध्यस्व ॥ जीवस्य नित्यत्वे युक्तिरप्यस्ति । तथाहि जीवो नित्यः नित्यव्याप्तपरमात्मनः प्रतिबिम्बत्वात् यो नैवं स न नैवं यथा आदर्शे घटादिप्रतिबिम्ब इति प्रयोगस्याभिमतत्वात् ॥

अयं भावः - प्रतिबिम्बनाशो हि बिम्बनाशेन वा बिम्बसन्निधिनाशेन वा उपाधिनाशेन वा भविता। जीवबिम्बस्य परमात्मनो नित्यत्वात् व्याप्तत्वाच्च नाद्यद्वितीयपक्षौ सम्भावितौ । तृतीयपक्षस्तु परिदृश्यमानदेहाख्योपाधेःनाशेऽपिस्वरूपभूतसूक्ष्मदेहाख्योपाधिसद्भावादपहसस्तितः।जीवोनजायते म्रियतेवेतिकाठकश्रुतिरप्यस्ति।एवञ्चजीवनित्यत्वज्ञानेसतिअहंहन्मिइतिवाहतइतिवाभ्रान्तिर्नोदेति। यथा पुरुषो जीर्णवस्त्रं त्यक्त्वा नूतनं गृह्णाति तथा जीर्णं शरीरं विहाय नूतनशरीरं स्वीकरोति । तथाच युवदेहहानेन जीर्णदेहलाभेऽपि यदा न शोकः तदा जीर्णदेहहानेन नूतनदेहलाभे सुतरां शोको न कार्यः । जीवस्य स्वभावतो नाशाभावेऽपि शस्त्रादिना नाशसम्भव इति न मन्तव्यम् । जीवस्य

छेदनाद्यनर्हत्वात्। जातस्य च मरणावश्यम्भावात् शोको न कार्यः। पूर्वोक्तदिशा जीवपरमात्मज्ञानी दुर्लभः॥

किञ्च धर्म्यात् युद्धात् श्रेयस्करं क्षत्रियस्य नास्ति। विष्णुवैष्णवद्वेषितदनुबन्धिनिग्रहरूपमिदं युद्धं स्वधर्म इत्यवेक्ष्य शरीरकम्पनं त्यज। सुखहेतुभूतपुण्यवन्त एव क्षत्रिया ईदृशं युद्धं लभन्ते। तथा च धर्म्ययुद्धत्यागे स्वधर्महानेन पापावाप्तिः, कीर्तिहानिश्च भवति। कथं कीर्तिहानिः पार्थो बन्धुदयया युद्धादपगत इति कीर्तिरेव भविष्यतीति न मन्तव्यम्। यतो महारथाः त्वां भयात् रणादुपरतं मन्यन्ते। अपकीर्तिश्च सम्भावितस्य मरणादप्यधिका॥ किञ्च धर्म्ये युद्धे मरणेऽपि वीरस्वर्गावाप्तिः, जये तु राज्यप्राप्तिश्च। अतो अभिमानत्यागेन सुखदुःखादिद्वन्द्वं समीकृत्य युद्धकरणे नैव पापावाप्तिः॥

एवं तव ज्ञानविषयकोपदेशः कृतः ज्ञानसाधनविषयकोपदेशमिदानीं करोमि।

फलापेक्षां त्यक्त्वा भगवत्प्रीत्यर्थं भगवत्प्रेरणानुसन्धानपूर्वकं स्वधर्मानुष्ठानमेव योगो नाम ज्ञानोपायः। एतादृशभागवतधर्मस्य प्रारम्भमात्रम् इच्छा वा निष्फला न भवति। भागवतधर्ममुपक्रम्य किञ्चिद् विघ्नादिना त्यागेऽपि प्रत्यवायो नास्ति। अल्पोऽप्ययं धर्मो महतो भयात् त्रायते। सत्स्वपि बहुवादिप्रोक्तबहूपायेषु मदुक्त एवायमुपायः श्रेयस्करः। प्रमाणैः निश्चितत्वात्। उपायान्तराणि तु प्रमाणैः अनिश्चितत्वात् वादिजनमनीषया कल्पितत्वाच्च उपायाभासा एव। अज्ञानिनो वेदैः यन्मुखत उच्यते। तदर्थमादाय कामात्मानः सन्तः स्वर्ग एव पुरुषार्थ इति मन्यमानाः काम्ययज्ञाद्यनुष्ठानं श्रेयःप्रदमिति मन्यन्ते। तादृशकर्माचरणेन वेदोक्तेनापि भगवति मनःसमाधानं न भवति। अतः तादृशात् काम्यकर्मणो निष्क्रान्तो भव।

कूपे यावत्प्रयोजनं तावत्तदधिकं च प्रयोजनं यथा समुद्रे भवत्येवं कर्मणो यत्फलं तावत् तदधिकं च ज्ञानेन भवति। अतो ज्ञानोपायमेव अनुतिष्ठ, कर्माचरण एव तवाधिकारो न तु फलेऽपि। अतो फलापेक्षयैव कर्माचरणं न कुरु। कर्मत्यागमपि न कुरु। ज्ञानात् कर्म जघन्यम्। अतो ज्ञानोपायमनुतिष्ठ। एवं योगानुष्ठानं कुर्वन्तो अन्तःकरणशुद्धिद्वारा मनीषाशब्दितापरोक्षज्ञानं लब्ध्वा जन्मबन्धविनिर्मुक्ताः सन्तः शाश्वतं पदं लभन्ते। यदा ते बुद्धिः सर्वं मोहं त्यजति, यदा च श्रुतिभिः विप्रतिपन्ना अपि बुद्धि - र्भगवति निश्चाञ्चल्येन समाधीयते तदा योगं प्राप्स्यसीति॥

एवमुपदिष्टो अर्जुनः पृच्छति- हे केशव ! समाधिस्थत्वमपरोक्षज्ञानिलक्षणमिति यत् त्वयोक्तं तन्मया अवगतम्। किन्तु तल्लक्षणं न सार्वत्रिकव्यवहारोपयोगि। तस्मात् सार्वत्रिक-व्यवहारोपयोगिज्ञानिलक्षणं ज्ञानिप्रवृत्तिप्रकारं च ब्रूहीति॥ अयमत्र भगवतः प्रत्युत्तरक्रमः -

यदा सर्वान् मनोगतान् कामान् प्रजहाति भगवज्ज्ञानेन भगवत्प्रसादेन आत्मन्येव अलम्बुद्धिमान् तदा अपरोक्षज्ञानी इत्युच्यते । समसुखदुःखरागभयक्रोधरहितो अपरोक्षज्ञानी इत्युच्यते । यदा कूर्मः स्वाङ्गानीव अनायासेन इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तदा अपरोक्षज्ञानीति ज्ञातव्यः ।। अनेन सर्वेन्द्रियजयवत्त्वे सति कामक्रोधादिरहितः समसुखदुःखो अपरोक्षज्ञानीति तल्लक्षणमुक्तं भवति ।।

एवं चेत् सर्वेऽपि सर्वेन्द्रिय जयसम्पादनेन अपरोक्षज्ञानं किमर्थं न लभन्ते इति चेत् - निराहारत्वादिक्लिष्टोपायसाध्यत्वात्तस्य । निराहारे इन्द्रियशक्तिकुण्ठनद्वारा विषयविनिवर्तनेऽपि रसनेन्द्रिय जयो न भवति । विषयाभिलापनिवृत्तिरपि न भवति । तदुभयं भगवद्दर्शनेनैव भवति । विषयध्यानेन सङ्गकामक्रोधमोहस्मृतिविभ्रमबुद्धिनाशप्रणाड्या आत्मनाशाख्यनरकाद्यनर्थप्राप्तेः बुभूषुणा विषयध्यानं त्याज्यम् । रागद्वेषौ विहाय आत्मवश्यैः इन्द्रियैः यात्रदेहयात्रं विषयाननुभवन् प्रसादं लब्ध्वा दुःखान् जहाति । प्रसादरहितस्य पुंसो भगवति मनोयोगो दुःशकः । योगाभावे ध्यानाभावः । ध्यानाभावे मोक्षाभावः । मोक्षाभावे सुखाभावः । इदं प्रति द्रवणादेव हि इन्द्रियाणामिन्द्रियत्वम् । एवं स्वभावतः चरताम् इन्द्रियाणाम् अनु यदि मनश्चरति तर्हि समुद्रे नावं वायुरिव अस्य प्रज्ञामपहरति । तस्मात् सर्वेन्द्रियजय एव अपरोक्षज्ञानसाधनम् । स्वभावतः तद्वानेव अपरोक्षज्ञानी ।।

सर्वभूतानि येषु विषयेषु जाग्रति तेषु ज्ञानी स्वपितीव । सर्वभूतानि यद्भगवद्विषये सुप्तानि तत्र जागर्ति ज्ञानी । मत्तस्य सञ्चार इव अतीवानुसन्धानराहित्येन ज्ञानी विषयननुभवतीति भावः । यथा समुद्रो नदीजलागमने न प्रयतते, वर्षाकाले न वर्धते जलागमनेन, ग्रीष्मे जलानागमनेन न ह्रसते तथा ज्ञानी विषयसम्पादनाय न प्रयतते । न वा विषयप्राप्त्योत्सेकं प्राप्नोति, नापि विषयाप्राप्त्या अनुत्सेकं प्राप्नोति ।।

सर्वकामत्यागपूर्वकं निर्ममो निरहङ्कारः सन् चरति चेत् शान्तिं प्राप्नोति । अन्तकालेऽपि ब्राह्मीसञ्ज्ञकैतदवस्थायां स्थितो अप्राकृतशरीरं परं ब्रह्म आप्नोतीति ।।

भावदीपस्य स्वारस्यमपि स्थालीपुलकन्यायेन सन्दर्श्यते ।

भगवदुपदेशारम्भे प्रज्ञावादानित्यस्य स्वमनीषोत्थवचनानि इति भाष्यम् । तद्विवृतं टीकायाम् । सङ्करः प्रज्ञावादानित्येतत् प्रज्ञावतां वचनानीति व्याख्यातवान् । तदसत् । न ह्यर्जुनवाक्येषु कश्चित् बुद्धिमद्वादो विद्यते । अतोऽन्यथाव्याख्यातं भाष्ये । स्वमनीषोत्थवचनानीति कथं लभ्यत इति चेत् प्रज्ञायाः वादाः प्रज्ञावादाः । कार्यकारणभावे षष्ठी । सुवर्णस्य पदमितिवत् । सर्ववादोऽपि प्रज्ञापूर्व एवेति सामर्थ्यात् स्वेति लभ्यते । अब्भक्ष इतिवत् सावधारणमेतत् । अन्यथा पुनर्वैयर्थ्यादिति

पुनर्वैयर्थ्यं व्युत्पादितं भावदीपे। सर्वस्यापि वादस्य प्रज्ञापूर्वकत्वमिव स्वप्रज्ञापूर्वकत्वमपि सिद्धमेव। अतः स्वप्रज्ञावादानित्युक्तेऽपि वैयर्थ्यमेव। तद्वारणार्थं सावधारणत्वं व्याख्येयम्। तथाच केवलं स्वप्रज्ञापूर्वकवादाः न तु शास्त्राचार्योपदेशपरम्पराप्राप्ता इति॥

आगमापायिनो नित्याः इत्यत्र पौनरुक्त्यपरिहारार्थं भाष्ये न चागमापायित्वेऽपि प्रवाहरूपेणाऽपि नित्यत्वमस्ति। सुप्तिप्रलयादावभावादित्याह गीताचार्यः-अनित्या इतीति। तत्र प्रलयशब्दः मूर्च्छार्थः इति व्याख्यातं टीकायाम्। प्रसिद्धार्थं परित्यज्य एवं व्याख्याने बीजमाह भावदीपकारः- प्रलये देहाद्यभावादेव ज्ञानसुखादिकार्याभावो नाभिमानाभावनिमित्तः। अत्र तु अभिमानाभावे ज्ञानसुखाद्यभावो व्युत्पादनीयः। अत एवं व्याख्यातमिति॥

॥ अथ तृतीयोऽध्यायः॥

पूर्वाध्याये 'न त्वेवाहम्' इत्यादिना साङ्ख्यशब्दोक्तं जीवेश्वरस्वरूपयोगाख्यं ज्ञानसाधनं चोक्तम्। स योगो द्विविधः, कर्मयोगो ध्यानयोगश्चेति। तत्र कर्माकरणं विनिन्द्य निवृत्तकर्मानुष्ठानरूपः कर्मयोगो विधीयतेऽस्मिन्नध्याये। 'दूरेण ह्यवरं कर्म' इत्यादौ कर्मणः सकाशाद् ज्ञानस्य ज्यायस्त्वं भगवदभिहितमनूद्य अर्जुनः पृच्छति भगवन्तम्, ज्ञानं कर्मणो ज्यायश्चेत् ज्ञानादवरे कर्मणि तत्रापि रागद्वेषसमाकुलत्वेन घोरे किमर्थं मां नियोजयसीति॥

तत्रायं भगवतः परिहारक्रमः। यद्यपि ज्ञानं ज्यायः, तथाऽपि द्विविधा जनाः सन्ति। केचन गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत्। केचन पुनः गृहस्थधर्मस्था एव ज्ञाननिष्ठा जनकादिवत्। तत्र भवत आधिकारिकत्वात् गृहस्थाश्रममपरित्यज्यैव तद्विहितानि कर्माणि निष्कामतयाऽनुष्ठेयानि, तथैवेश्वरनियमात् प्रियव्रतवत्॥

किञ्च कर्माकरणमात्रेण मुक्तिर्न भवति। यदि स्यात्तर्हि कर्मण्यनधिकृतानां स्थावरादीनामपि स्यात्, संसारेऽनादौ कदाचित् तादृशदेहस्य सम्भवात्॥ इदानीं कर्माकरणेऽपि पूर्वतनानेकशरीरेषु कृतानां कर्मणामभुक्तत्वात्, तेषां भोगसमये पुनः पुनः कर्मणां सम्पादनात् ज्ञानं विना मोक्षो न स्यादेव। ज्ञाने सति भगवत्प्रसादेन कर्मनाशो भवति॥

निष्कामकर्मणः स्वर्गादिफलाभावात् यत्किञ्चित्फलस्यावश्यम्भावित्वात् मनुस्मृत्युक्त-रीत्या मोक्षफलमेष्टव्यम्। अतस्तत्साम्यात् कर्माकरणेऽपि मोक्षो भवतीति चेन्न। निष्कामकर्मणा अन्तःकरणशुद्धिद्वारा ज्ञाने जाते भगवत्प्रसादेनैव मोक्षो भवति इत्यङ्गीकारात्। अतः सन्न्यासशब्दो-दितकाम्यकर्मपरित्यागमात्रेणापि न मुक्तिः॥

सन्न्यासशब्दस्य यत्याश्रमपरत्वेऽपि न चतुर्थाश्रमस्वीकारमात्रेण मुक्तिः। किन्तु मनःप्रायत्यद्वारा भगवत्तोषेण ॥ कर्माणि सर्वात्मना त्यक्तुमशक्यानि च । कर्मेन्द्रियसंयमं कृत्वा विषयान् स्मरन् मिथ्याचारी भवति । मनसेन्द्रियाणि नियम्य निष्कामकर्म कुर्वन्नेव विशिष्टो भवति । अतोऽपि वर्णाश्रमोचितं कर्म कर्तव्यमेव ॥

कर्मणोवन्धकत्वेऽपिभगवत्प्रीत्यर्थंकरिष्यमाणंकर्मनवन्धकम्।अस्मिन्विषयेऽर्थवादोऽप्यस्ति। पुरा चतुर्मुखो यज्ञान् प्रजाश्च सृष्ट्वा 'यज्ञैर्देवतोषणं कुरुध्वम् । ते च देवा वृष्टिदानेन वो भावयन्ति । यज्ञाकरणे देवभागहारित्वात् स्तेयत्वप्राप्तिः । यज्ञशिष्टभोजने सर्वकिल्बिषनाशः' इत्युक्तवान् । अनेन ज्ञायते कर्मविधाने तात्पर्यमस्तीति ॥

किञ्च कर्माकरणे विश्वचक्रनाशजनितप्रत्यवायप्राप्तिर्भवति । तथाहि- भूतानि अन्नाद् भवन्ति । अन्नं मेघचक्राभिमानिनः पर्जन्याद्भवति । यज्ञेनोपभुक्तेन पर्जन्यस्य वलाद्युपचयात् यज्ञः पर्जन्यस्य कारणमुच्यते । देवतामुद्दिश्य द्रव्यपरित्यागरूपो यज्ञ इतरक्रियारूपकर्मणो भवति । कर्म परब्रह्मणो जायते । तस्यैव कर्मप्रेरकत्वात् । परब्रह्म प्रसिद्धाक्षरैर्व्यज्यते । अतोऽक्षरैः समुद्भवतीत्युच्यते । तान्यक्षराणि भूतैरुच्चार्यन्ते इति चक्रम् । एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म नित्यं यज्ञे प्रतिष्ठितमुच्यते । तदेतज्जगचक्रं यो नानुवर्तयति स तद्विनाशकत्वात् पापार्थमेव जीवति । अतोऽपि कर्म कर्तव्यमेव ॥

तर्हि अतीव मनस्समाधानमपि न कर्तव्यमिति न मन्तव्यम् । असम्प्रज्ञातसमाधिं प्राप्तस्य कर्तव्या-भावात् । तादृशसमाधिं कुर्वतः इतरकर्मणा कृतेन प्रयोजनं नास्ति । अकृतेन प्रत्यवायोऽपि नास्ति । तदवस्थायां गुर्वाद्यागमनेऽपि तत्सत्कारादिना प्रयोजनं नास्ति । समाधेर्विरतस्तु कर्म कुर्यादेव ॥

अस्मिन् विषये आचारोऽप्यस्ति । जनकादयः कर्मयोगिनः कर्म कृत्वैव सिद्धिं प्राप्ताः । अतो लोकसङ्ग्रहार्थमपि कर्म कर्तव्यम् । अस्मिन् विषये भगवानेव दृष्टान्तः । भगवानपि स्वयं कर्म कृत्वाऽविदुषः कर्म ग्राहयति ॥

एवं विद्वदविदुषोरुभयोरपि कर्मसत्त्वेऽपि विद्वान् प्रकृतिशब्दितभगवद्रमाजडप्रकृतीनां व्यापारं ज्ञात्वाऽहङ्कारं त्यजति । अविद्वांस्तु तदज्ञात्वाऽहमेव कर्तेति मन्यमानो बध्यते । अतो भ्रान्त्या जीवेऽध्यारोपितानि कर्माणि भगवानेव करोतीति भगवति सन्न्यस्य नाहं करोमीति ममतां त्यक्त्वा भगवत्पूजेति बुद्ध्या युध्यस्वेति भगवानादिशति ॥

एवं भगवन्मतमनुष्ठन्ति ये तेऽपि कर्म कृत्वा ज्ञानद्वारा मुच्यन्ते । किं अपरोक्षज्ञानिनः? ये तु असूयया तन्मतं नानुतिष्ठन्ति ते नष्टा अबुद्धिमन्तो वेदितव्याः । एवं चेत् किमिति सर्वे भगवन्मतं

नानुतिष्ठन्तीति चेत् - सर्वाणि भूतानि पूर्वसंस्कारवशात् प्रवर्तन्ते । अतो मन्दानां बोधने नास्ति प्रयोजनम् । यद्यपि संस्कारो बलवान्, तथाऽपि शक्तितो निग्रहः कार्यः । सोऽन्यथा कर्तुं शक्यतेऽतिप्रयत्नेन । एवं सत्यपि युद्धमुग्रमिति चेत् - सत्यम् । विगुणोऽपि स्वधर्मः स्वनुष्ठितात् परधर्मात् श्रेयानित्याह भगवान् ॥

एवमुपदिष्टोऽर्जुनो भगवान् सर्वकर्तेति जानन् पापकर्मकारणेषु को बलवान्? तं प्रति महान्तं यत्नं करिष्यामीति भावेन प्रापप्रेरकः क इति पृच्छति । भगवान् एवं परिहरति । क्रोधजनको रजोगुणजन्यः काम एव बलवान् । स च महद्भोग्यत्वात् महाशन इति, ब्रह्महत्यादिकारणत्वात् महापाप्मेति, सर्वपुरुषार्थविरोधित्वात् वैरीत्युच्यते । कामोऽन्तःकरणमावृत्य जीवं बद्ध्वा परमात्माभिव्यक्तिनिरोधको भवति । तस्येन्द्रियाणि मनो बुद्धिश्चाधिष्ठानम् । यथाऽधिष्ठाने हते वैरी निगृह्यो भवत्येवम् इन्द्रियादीनि नियम्य कामो निगृह्यः । तत्रायुधभूतं तारतम्यज्ञानमेव । भूताभिमानिभ्य इन्द्रियाभिमानिनो वराः । तेभ्योऽर्थमानिन्यः । ताभ्यो मनोऽभिमानिनः। तेभ्यो बुद्ध्यभिमानिनी । तस्या आत्माभिमानी । तस्माद् अव्यक्ताभिमानिनी रमा । तस्या भगवानिति तारतम्यज्ञानेन मनो निगृह्य कामरूपः शत्रुर्हन्तव्य इति ॥

अत्र विस्तरेण कर्मयोगस्य प्रतिपादितत्वात् स्तुतत्वाच्च कर्मैव मोक्षकारणमिति कर्मसमुच्चितज्ञानं वा मोक्षकारणमिति भ्रान्तिर्भवति । अतो भाष्यकाराः ज्ञानेनैव मोक्ष इति निपुणतरं प्रतिपादितवन्तः । प्रयागमरणादिना मुक्तिप्रतिपादकवचांसि तीर्थस्तुतिपराणि, पापमुक्तिपराणि, मुक्तिसाधनभूतज्ञानोपायपराणि, अज्ञानां मोहकानि वेति चतुर्धा व्याख्यातानि ॥

विश्वचक्रवर्णनप्रस्तावे ब्रह्मशब्दः परब्रह्मपर इति, अक्षरशब्दो वेदपर इति भाष्यकारैर्व्याख्यातम् । अन्यैस्तु ब्रह्मशब्दो वेदपर इति, अक्षरशब्दः परब्रह्मपर इति व्याख्यातम् । तत्खण्डनपरं भाष्यस्थवाक्यम् 'न च मुख्ये सम्भाव्यमाने पारम्पर्येणौपचारिकं कल्प्यम्' इति । तट्टीकाकारैर्द्वेधा व्याख्यातम् । कर्म ब्रह्मोद्भवमित्यत्र ब्रह्मशब्दस्य परब्रह्मपरत्वेऽङ्गीकृते कर्मणा उद्भवो नाम जन्मेति मुख्यार्थ एव सम्भाव्यते । एतत् परित्यज्य ब्रह्मशब्दं वेदपरं व्याख्याय कर्मणो वेदादुद्भूतमसम्भावितमिति कृत्वा उद्भवशब्दस्य प्रकाशनरूपोऽर्थः औपचारिकः कल्प्येत । तन्न युज्यत इत्येकं व्याख्यानम् । अपरं तु ब्रह्मशब्दस्य मुख्येऽभिधेये परब्रह्मणि सम्भाव्यमाने इति अमुख्यं वेदाख्यं ब्रह्मशब्दार्थतया न कल्प्यमिति ॥

किञ्च 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मशब्दोदितो वेदोऽक्षरशब्दितपरब्रह्मणा उत्पन्नमिति न

युज्यते । वेदानामपौरुषेयत्वात् । वेद ईश्वरोत्पन्न इति मन्यमानः सङ्करः शास्त्रयोनित्वाद् इत्यत्र शास्त्रस्य योनीति यद्व्याख्यातवान् तदपि नोचितम्, सर्वप्रमाणविरुद्धं चेति कुशलतरमुपपादितम् ।।

'स्वराद्यन्तोपसृष्टाच्च' इति कात्यायनवचनमनित्यम् । अत एव न पाणिनिरभाणीत्' इति टीकावाक्यं किमधिकृत्य प्रवृत्तमित्येव झटिति न ज्ञायते । भावदीपकाराणामयमाशयः । गीतायां 'नियोजयसि' इति प्रयुक्तम् । 'प्रोपाभ्यां युजेरयज्ञपात्रेपु' इति पाणिनीयसूत्रे प्र उपेति उपसर्गाभ्यामनन्तरं विद्यमानस्य युजिर् योगे इति धातोः अयज्ञपात्रेषु वाच्येषु आत्मनेपदं भवति इत्यभिहितम् । तत्र वार्तिककारः 'स्वराद्यन्तोपसृष्टाच्च' इति वक्तव्यमित्याह । अस्यार्थः- स्वरशब्दिताजादि-अजन्तोपसर्गयुक्ताद् युजेरात्मनेपदित्वं वक्तव्यमिति । तथाच प्रकृते 'नि' इत्युपसर्गस्य स्वरान्तत्वात् आत्मनेपदित्वे नियोजयसे इति भाव्यम् । कथं नियोजयसीति प्रयोग इति शङ्का । अत्र समाधानम् - नायं नित्यः । अत एव पाणिनिरेवं नोक्तवान् । अतः परस्मैपदित्वं युज्यत इति ।।

'सहयज्ञाः प्रजाः सृष्ट्वा' इत्यदिना अर्थवाद उक्तः । स च स्तुतिर्निन्दा परकृतिः पुराकल्प इति चतुर्धा इति भाष्यटीकयोः प्रतीयते । तत्स्फुटीकुर्वन्ति भावदीपकाराः । गुणिनिष्ठगुणोक्तिः स्तुतिः । दोषोक्तिर्निन्दा । एककर्तृकचरितानुवादः परकृतिः । बहुकर्तृकचरितानुवादः पुराकल्पः । तत्र 'पुरोवाच प्रजापतिः' इति परकृतिः, 'प्रजा इति देवा इति' च पुराकल्पः, यज्ञकर्तॄणां स्तुतिः, तदकर्तॄणां निन्दा चेति चतुर्णामप्युक्तिरिति ।।

।। अथ चतुर्थोऽध्यायः ।।

तृतीयाध्यायोक्तं कर्मयोगं स्पष्टीकर्तुं कर्मभेदं च वक्तुमयमध्यायः प्रवृत्तः । तत्रादौ भगवान् स्वेन विवस्वते प्रोक्तं योगं स मनवे स चेक्ष्वाकवेऽब्रवीत् । एवं परम्पराप्राप्तो योगः कालबलेन नष्ट इति स एव पार्थाय प्रोक्त इत्याह । एवमुक्तोऽर्जुनो विवस्वदुपलक्षितजीवपरमात्मनोर्जन्मनोर्वैलक्षण्यं पृष्टवान् । ज्ञाताभिप्रायो भगवानेवं प्रत्युत्तरं दत्तवान् । तस्यायं सङ्ग्रहः ।।

हे अर्जुन मम त्वदुपलक्षितजीवस्य च बहूनि जन्मान्यतीतानि । तानि सर्वाण्यहं वेद, त्वं तु न वेत्ता । यद्यप्यहं जन्ममरणशून्यः, तथाऽपि प्राकृतं वसुदेवादिशरीरं प्रविश्य स्वेच्छया प्रादुर्भवामि । यस्मिन् यस्मिन् काले धर्मस्य ग्लनिरधर्मस्योत्थापनं च भवति तदा तदाऽहं प्रादुर्भविष्यामि । सतां रक्षणं दुष्कृतां विनाशः धर्मसंस्थापनं च ममावतारस्य प्रयोजनम् । एवं मम जन्म कर्म च दिव्यं यो वेत्ति स मुक्तो भवति । एवं मुक्ताः बहवः सन्ति । तत्तद्भजनानुसारेण फलदानेन अहं तांस्तान् भजामि । ये फलापेक्षया देवता भजन्ति तेषां मानुषे लोके क्षिप्रसिद्धिर्भवति । किन्तु सा अल्पा । मां ये भजन्ति

तेषां बहुफलं भवति। ममैव चातुर्वर्ण्यस्रष्टृत्वेन जगत्पितृत्वात्। जगद्व्यापारं कुर्वन्तमपि मां कर्माणि न लिम्पन्ति। कर्मफले स्पृहाभावादनभिमानाच्च। एवं मां जानन्नपि कर्मफलरहितो कर्मलेपरहितो भवति। पूर्वैः पूर्वतरैरेवं ज्ञात्वा कर्माचरितम्। अतः त्वमप्येवं कर्म आचर ॥

कर्माकर्म विकर्मविषये कवयोऽपि मोहिताः। कर्माकर्मविकर्माणि विविच्य ज्ञातव्यानि। शास्त्रविहितं कर्म। तत्त्यागो अकर्म। शास्त्रनिषिद्धं विकर्म। जीवेन कर्मकरणकाले भगवतः प्रेरणारूपं कर्म जानीयात्। जीवेन कर्म त्यक्त्वा स्वापकालेऽपि भगवत्कर्म जानीयात्। स एव मनुष्येषु बुद्धिमान् सर्वकर्मफलवांश्च। कामसङ्कल्परहितः, ज्ञानाग्निना दग्धकर्मा पण्डितः। फलाभिलाषां विहायाभिमानं त्यक्त्वा केवलं शारीरं कर्माचरन् किल्बिषं नाप्नोति। भगवदिच्छया यल्लब्धं तेनालम्बुद्धिमान् सुखदुःखादिद्वन्द्वातीतः लोकसिद्धावसिद्धौ च उत्सेकानुत्सेकहीनो न बध्यते ॥

यज्ञे क्रियमाणे दर्व्यादि होमसाधनं हविरग्निः होमः तदितरकर्म ध्यानं चैतत्सर्वं ब्रह्माधीनमिति चिन्तयन् ब्रह्मैवाप्नोति। यज्ञोऽनेकविधः। केचित् योगिनो दैवमेव यज्ञं यथा स्यात् तथोपासते, अपरे प्रसिद्धेनाश्वमेधादिना यज्ञेन परमात्मानम् अग्नौ यजन्ते। अन्ये श्रोत्रेन्द्रियसंयममेव यज्ञत्वेनानुतिष्ठन्ति। अपरे इन्द्रियाख्येष्वग्निषु शब्दादीन् विषयान् जुह्वति। अपरे प्राणेन्द्रियकर्माणि सङ्कुच्य तदेव यज्ञत्वेन समर्पयन्ति। गृहस्थाः द्रव्ययज्ञाः। ब्रह्मचारिणः स्वाध्याययज्ञाः। वनस्थाः तपोयज्ञाः। यतयो ज्ञानयज्ञाः। योगिनो ध्यानयज्ञयाः ॥

प्राणायामपरायणाः अपरे प्राणे अपानम्, अपाने जुह्वति। कुम्भकस्था एव भवन्तीत्यर्थः। केचन आहारनियमं कृत्वा कर्मेन्द्रियव्यापाराणि सङ्कुचितानि कुर्वन्ति। सर्वेऽप्येते स्वयोग्ययज्ञानुष्ठानेन किल्बिषं क्षपयिष्यन्ति। यज्ञशिष्टम् अमृताख्यमन्नं ये भुञ्जते ते ब्रह्म यान्ति। यो यज्ञं त्यजति स अधोलोकं गच्छति। एवं बहुविधा यज्ञाः ब्रह्मोद्देशेनैव प्रवृत्ताः। सर्वेऽप्येते कर्मजाः। एवं ज्ञात्वा त्वमेव कर्म कृत्वा आत्मानं मोचयितुमिच्छसि ॥

एतेषु यज्ञेषु द्रव्यमयायज्ञात् ज्ञानयज्ञः श्रेयान्। ज्ञाने सत्येव कर्म समग्रफलप्रदं भवति। गुरुप्रणामं परिप्रश्नं सेवां च कृत्वा ज्ञातव्यांशं जानीयात्। तव तु अहमेवोपदिशामि। ज्ञाने सति पुनरेवं मोहं न यास्यसि। ज्ञानेनैव सर्वं पापं तरिष्यसि। एधांस्यग्निरिव ज्ञानाग्निः सर्वदुष्कृतानि भस्मीकरोति। ज्ञानसदृशं पवित्रम् इह लोके नास्ति। पूर्वोक्तदिशा निवृत्तकर्म आचरन् श्रद्धावान् जितेन्द्रियो मत्सर्वेशत्वज्ञानी ब्रह्मापरोक्षं लब्ध्वा प्रारब्धकर्मभोगसमनन्तरमेव मोक्षं लभते। तद्विरुद्धोऽज्ञोऽश्रद्धधानः संशयात्मा विनश्यति। तस्यायं लोको वा परलोको वा नास्ति। तस्मात् अज्ञानोत्थं हार्दं संशयं ज्ञानासिना छित्वा स्वधर्माख्यं योगमनुतिष्ठस्वेति ॥

'अपरं भवतो जन्म' इति श्लोकस्य अवतारिकाभाष्ये मयि सर्वाणीत्युक्तम्। तन्माहात्म्यमादितो ज्ञातुं पृच्छति अपरमितीति। एवमवतरणे कारणमाहुष्टीकाकाराः नत्वेवाहमित्यादिना सर्वप्रकारेणे उत्पत्तिनाशराहित्यमुक्तं भगवतः। तच्छुत्वा कथम् अपरमिति पृच्छतीति शङ्कायामाह- मयीतीति। तत्र सर्वप्रकारेणेत्येतत् भावदीपे द्वितीयाध्यायोक्त्यनुसारेणैवं विवृतम्। शस्त्रपावकादिना प्रकारेण, यद्वा स्वरूपेण देहेन कूटस्थत्वेन वेत्यर्थः इति॥

ईश्वर इत्येतत् ईशेभ्योऽपि वर इति भाष्ये व्याख्यातम्। एवं व्याख्याने वीजमुक्तं टीकायाम्। ईशतेः ताच्छील्यार्थकवरच्प्रत्यये ईश्वर इति रूपसिद्धौ ईशनशील इत्यर्थो भवति। किन्तु ईशन-शीलानामपि ब्रह्मादीनामुत्पत्तिर्दृश्यते। अत ईश्वरोऽपि सम्भवामीति कथमुच्यते इत्यतोऽन्यथा व्याख्यातम्। भाष्योक्तब्रह्मवैवर्तवचनादेव समास-अकारलोपावनुमन्तव्याविति। तर्हि ईशवर इति भाव्यम्। पञ्चमीभयेन इति सूत्रात् चोरात् भयं चोरभयम् इतिवत्। भयेनैव समासोक्तेः कथं समासः इत्याशङ्क्य टीकाकारैः भाष्योक्तागमवलादिति उक्तमिति भावदीपे व्यक्तम्॥ भावदीपोक्तमपि उपलक्षणमिति मन्यामहे। पञ्चमी इति योगं विभज्य पञ्चमी समर्थेन समस्यते इति वृत्तिकथनेन पुरुषाभ्याम् उत्तमः पुरुषोत्तमः इत्यादौ समासदर्शनाचेति॥

॥ अथ पञ्चमोऽध्यायः ॥

तृतीयाध्याये कर्मयोग उक्तः। तत्प्रपञ्चनं क्रियतेऽस्मिन्नध्याये। तर्हि चतुर्थाध्यायेन अन्तरितत्वं कुत इति चेत् चतुर्थाध्याये 'यदृच्छालाभसन्तुष्टः' इत्यादिना कामादिवर्जनरूपसन्न्यासः 'कुरु कर्मैव' इत्यादिना कर्मयोगश्चोक्तः। सोऽयमर्थ एतदध्यायोत्थानबीजम् इत्यतश्चतुर्थाध्यायानन्तरत्वं युज्यते॥

मुख्यकर्मयोगस्य द्वावंशौ यौ सन्न्यासः कर्मयोगश्चेति तयोर्मध्ये यदि सन्न्यासोऽधिकः, तर्हि द्वेषस्य युद्धेऽवर्जनीयत्वात् तत् त्यक्त्वा सन्न्यास एव कर्तव्ये किमर्थं वैगुण्यमङ्गीकृत्यापि युद्धे प्रेरणमित्याशयेन अर्जुनः प्रश्नं करोति। तत्रायं भगवतः परिहारक्रमः।

कामादिवर्जनरूपः सन्न्यासः स्ववर्णाश्रमोचितकर्मानुष्ठानरूपकर्मयोगश्चेत्युभौ श्रेयस्करौ। तयोः सन्न्यासात् कर्मयोगो वरः। नात्रोक्तः सन्न्यासो यत्याश्रमः कर्मयोगो वा गृहस्थाश्रमः। यत्याश्रमस्य गृहस्थाश्रमापेक्षया अत्युत्तमत्वादिति भाष्यकारैः सम्यगुपपादितम्। उभावपि ज्ञानान्तरङ्गाविति तौ मिलितावेव श्रेयस्करौ। ज्ञानकर्मणी पृथगिति ये वदन्ति ते बालाः नतु पण्डिताः। कर्मयोगिभिरपि ज्ञानद्वारा ज्ञानफलस्य प्राप्यत्वात्॥

योगाभावे मोक्षादिफलं न भवति। किन्तु केवलं कामजयादिप्रयुक्तायासजन्यदुःखमेव

फलम् । सन्यासयुक्तो योगी तु ज्ञानद्वारा ब्रह्म प्राप्नोत्येव । अतोऽपि सन्यासाद्योगो वरः । य इन्द्रियैस्तत्तद्व्यापारान् कुर्वन्नपि भगवत्प्रेरितानीन्द्रियाणि स्वस्वविषयेषु प्रवर्तन्ते इति जानाति, न द्वेष्टि नवा काङ्क्षति स सन्यासी । एतादृशः सन्यासी कर्म कुर्वन्नपि पद्मपत्रमम्भसेव पापेन न लिप्यते । एवमेव महदाचारोऽप्यस्ति ॥

योगयुक्तः सन्यासी मोक्षमाप्नोति । अयोग्यसन्यासी तु नितरां बध्यते ॥ सर्वकर्मणां मनसाऽभिमानत्यागेनैव त्यागो युक्तः नतु स्वरूपत्यागः ॥

दर्शनादि कुर्वन्नेव न करोमीति चिन्तने मिथ्याज्ञानी प्रसज्येतेति चेन्न । भगवत्प्रेरितः कुर्वन्नपि स्वातन्त्र्येण न करोमीमित्याशयात् ॥ स्वातन्त्र्याभावेऽप्यहं कर्तेति स्वातन्त्र्यभ्रमः कुत इति चेत् अज्ञानावृतत्वात् । परोक्षज्ञानेन अज्ञाने शिथिलीकृते तेषामपरोक्षज्ञानं ब्रह्म प्रकाशयति ॥

परोक्षज्ञानमपरोक्षज्ञानस्य साधनं भवदपि न साक्षात् । साक्षात् साधनानि तु भगवति बुद्धिः, भगवानेव स्वामीति चिन्तनम्, भगवन्निष्ठत्वम्, भगवानेव मुख्याश्रय इत्यनुसन्धानम्, नीचोच्चाधिष्ठानगतस्यापि तस्य रूपेषु साम्यचिन्तनं चेति ॥

एवं सप्रपञ्चं परिहारमुक्त्वा भगवानध्यायशेषेण सन्यासयोगज्ञानानि मिलित्वा प्रपञ्चयति ।

तथाहि - ब्रह्मज्ञानी प्रियाप्रिये प्राप्य न प्रहर्षति नोद्विजते वा । कामरहितः पुरुष आत्मनि यत् सुखं विन्दति स एव ब्रह्मविषयकयोगयुक्तश्चेत् तदेव अक्षयं सुखं विन्दति । विषयजभोगाः दुःखकारणानि आद्यन्तवतश्च । अतो बुधो न तत्र रमते । न मनुष्यशरीरसम्प्राप्तावेव कामक्रोधोद्भवो वेगस्सोढुं सुशकः । एवं यः कुरुते स ब्रह्मलोकादिस्थानेषु सुखी भवति। ज्ञानी भगवद्दर्शननिमित्तसुखम् अन्तरङ्गे लभते । असम्प्रज्ञातसमाधिं कुर्वन् स बाह्यदर्शनं विना अन्तरेव ब्रह्म पश्यति । बाह्यदर्शनेऽपि स चित्तविक्षेपं न प्राप्नोति ॥

सर्वभूतहिते रता ज्ञानप्रतिबन्धकपापक्षयानन्तरं ज्ञानोत्पत्तौ संशयविपर्ययरहिताः सन्तो ब्रह्म लभन्ते । तादृशानां सर्वतो ब्रह्म रक्षकत्वेन वर्तते । एतादृशज्ञानस्य ध्यानम् अन्तरङ्गसाधनम् । इन्द्रियाणि नियम्यभ्रुवोर्मध्यम् अवलोकयन् कुम्भके स्थित्वा यज्ञानां तपसां च भोक्तारं सर्वलोकस्य महान्तमीश्वरं सर्वभूतानां सुहृदं भगवन्तं ध्यात्वा शान्तिशब्दितमोक्षं प्राप्नोति इति ॥

भाष्ये नियमनादिना सकललोककर्षणात् कृष्णः इति निर्वचनं कृत्वा तन्महाकौर्मवचनेन साधितम् । किमर्थमेतन्निर्वचनमिति स्पष्टयन्ति टीकाकाराः कृष्णशब्दो वर्णविशेषमात्रवचन इति प्रतीतिनिरासार्थमेतदिति ॥

कर्मयोगप्रपञ्चनरूपेऽध्यायेऽस्मिन् पुनःपुनः योगशब्दस्य प्रयोगात् योगशब्दार्थोऽयं निष्कृष्य ज्ञातव्यः। अतो दयालवष्टीकाकारा योगशब्दार्थमेवं विवृण्वन्ति। 'द्व्यंशश्चायं कर्मयोगः। कामादिवर्जनम् ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं चेति। तत्रायं सन्न्यासशब्दोक्तं द्वितीयमुपचारेण कर्मयोगशब्दोक्तम्' इति॥

एवमामूलाग्रं नैकेऽध्येतृमनोरञ्जकविवरणानि प्रमेयदीपिकायामुपलभ्यन्ते।

भाष्ये यत्याश्रमस्य उत्तमत्वस्य वर्णनसन्दर्भे 'ब्रह्मचर्यादेव प्रव्रजेत्' इति वाक्यस्थं ब्रह्मचर्यादिति पदं टीकायां ब्रह्मचर्यं विसृज्य इति व्याख्यातम्। तत्कथमिति झटिति न भासते। अतो भावदीपकारा एवं व्याचख्युः 'ल्यब्लोपे पञ्चमी' इति भावेनेति। विसृज्येति ल्यबन्तं लोपयित्वा ब्रह्मचर्यपदात् पञ्चमी प्रयुक्तेति भावः॥

योगं विना सन्न्यासो दुःखहेतुरित्युक्तम्। तदुपरि टीकाकारः योगोऽपि सन्न्यासं विना दुःखहेतुरेवेति शङ्कां कृत्वा 'सत्यम्। तथापि चरमभावित्वेन विशेषः' इति समाधानमाहुः। तदर्थः स्फुटं न भाति। अतो भावदीपकाराः स्पष्टीकुर्वन्ति सन्न्यासापेक्षया परभावित्वात् ज्ञानोत्पत्तौ अव्यवहितसाधनत्वात् ततोऽप्यस्यातिशय इति भाव इति॥

॥ अथ षष्ठोऽध्यायः ॥

योगो द्विविधः। कर्मयोगो ध्यानयोगश्चेति। तत्र कर्मयोगो ज्ञानं प्रति बहिरङ्गसाधनम्। ध्यानयोगः अन्तरङ्गसाधनम्। कर्मयोगः पूर्वमुक्तः। तत्साध्यो ज्ञानसाधनभूतो ध्यानयोग उच्यतेऽस्मिन्नध्याये॥

निरग्निको निष्क्रियश्च यतिरेव ध्यानयोगाधिकारीति केषाञ्चिन्मतम्। भगवान् तदपाकरोति। यः कर्मफलापेक्षां त्यक्त्वा स्वविहितं कर्म करोति स एव सन्न्यासी योगी च, न तु निरग्निरक्रियश्चेति। योगसन्न्यासयोः अत्यन्तभेदो नास्ति। सन्न्यासो मुख्ययोगान्तर्गतः। कर्मयोगोऽपरोक्षज्ञानपर्यन्तम् अनुष्ठेयः। यो योगारोहशब्दितापरोक्षज्ञानेच्छुः तस्य नानाजनशुश्रूषाख्यकर्म तत्साधनं भवति। अपरोक्षज्ञानिनस्तु स्वोत्तमशुश्रूषयैवालम्। तेनापि मोक्षेऽतिशयानन्दार्थं ध्यानप्रवचनादि कार्यम्। अप्रयत्नेन विषयेषु प्रवृत्तकर्मणि च सङ्गराहित्ये सति ममतात्यगो योगारूढस्य लक्षणम्।

मनोजयं विना ध्यानयोगोऽसाध्यः। वशीकृतमनाः सन् भगवदनुग्रहेण आत्मानं पुरुषार्थभाजनं कुर्यात्। मनसि वशीकृते भगवति च भक्त्या वशीकृते मनो भगवांश्च बन्धुवदाचरतः। अन्यथा शत्रुवन्नरकभाजनं कुर्वतः। जितमनस्कस्य मनस्समाधानं भवति।

समाहितमनसः परमात्मा हृदि सन्निहितो भवति। यः सुखदुःखादिद्वन्द्वेषु प्राप्तेष्वपि तन्निमित्तोत्सेकानुत्सेकहीनो ज्ञानविज्ञानतृप्तश्च स योगसम्पूर्तिमानुच्यते । सुहृन्मित्रादिषु सर्वे भगवन्नियताः सर्वे चेतनत्वेन समानाः सुहृत्वादिकं तेषामन्तःकरणौपाधिकं सर्वेषु स्थितो भगवान् सम इति ज्ञानी विशिष्टः ॥

इदानीं ध्यानप्रकार उच्यते । एकाकी रहसि फलकमनां त्यक्त्वा निरभिमानी यतचित्तः सन् ध्यानं कुर्यात् । शुचिदेशे स्थिरं नातिनीचं नात्युन्नतं चैलाजिनकुशोत्तरमासनं प्रतिष्ठाप्य तत्रोपविश्यैकाग्रचित्तेन योगं कुर्यात् । कायं शिरः कण्ठं च समं धृत्वा नासाग्रे दृष्टिं निधाय दिशोऽनवलोकयन् ध्यायीत । भयरहितो ब्रह्मचारिव्रते स्थितः भगवानेव पर इति मनोयोगं कुर्वन् शान्तिं लभते ॥

अतिभोजनं कुर्वतो वा भोजनमकुर्वतो वा जाग्रतो वा स्वप्नशीलस्य वा योगो न भवति । किन्तु स्वोचिताहारविहारस्य युक्तस्वप्नावबोधस्यैव भवति ॥

यदा चित्तं भगवत्येव तिष्ठति सर्वतो निस्पृहश्च भवति तदा युक्त इत्युच्यते । तस्य वातरहितदेशस्थदीप उपमा । अस्यामवस्थायामात्मनि भगवन्तं पश्यन्नात्यन्तिकं सुखं लब्ध्वाऽपरं नाधिकं मन्यते, गुरुणाऽपि दुःखेन न विचाल्यते च । एष योगो निश्चयेन योक्तव्यः ॥

सङ्कल्पजान् सर्वकामानशेषतस्त्यक्त्वा मनसा सर्वेन्द्रियाणि सर्वतो निगृह्य शनैः शनैः विषयेभ्य उपरमेत् । मनो भगवति निधाय अन्यत् किञ्चिदपि न चिन्तयेत् । चञ्चलं मनो यतो यतो धावति ततस्ततो नियम्य भगवत्येव नयेत् । एवम्भूतस्य योगिनो महासुखं भवति । यो भगवन्तं सर्वत्र पश्यति नियामकत्वेन, सर्वं च भगवति पश्यति तदधीनत्वेन भगवान् तस्य योगक्षेमं वहति । स च सदा भक्तो भवति । सर्वत्र स्थितो भगवानेक एवेति यो दृढं जानाति स प्रामादिकैर्दोषैर्न लिप्यते । आत्मनो यथा सुखप्राप्तिं दुःखहानिं चेच्छति तथा सर्वसज्जनानां य इच्छति स योगी परमो मतः ॥

एवमुपदिष्टोऽर्जुनः पृच्छति । हे कृष्ण योऽयं योगस्त्वया प्रोक्तस्तस्य स्थिरां स्थितिं न पश्यामि । यतो मनश्चञ्चलं प्रमाथि च । मनसो निग्रहं वायोरिव सुदुष्करं मन्य इति । तत्र भगवानाह । सत्यं किन्तु अभ्यासेन वैराग्येण च गृह्यते । यद्यपि अजितमनस्केन योगो दुष्प्रापः, तथापि जितमनस्केन चोपायतोऽवाप्तुं शक्यत इति ॥

पुनरर्जुनः पृच्छति । श्रद्धावान् विशेषप्रयत्नरहितो योगभ्रष्टः कां गतिं गच्छति । उभयभ्रष्टश्छिन्नमेघ इव नश्यति वा तस्योद्धारो वर्तते वेति । तत्र भगवत इदमुत्तरम् । तस्य विनाशो नैव । यतः

कल्याणकृद्दुर्गतिं नैव गच्छति । योगभ्रष्टः पुण्यकृतां लोकं प्राप्य तत्र बहुवर्षाणि वासं कृत्वा शुचीनां श्रीमतां गृहे वा धीमतां गृहे वा जायते । ईदृशं जन्म दुर्लभम् । तत्र पूर्वाभ्यासेन पूर्वतनबुद्धिं लब्ध्वा पुनर्यतते । योगस्य जिज्ञासुरपि क्रमेण सिद्धिं लभते । अनेकजन्मसु प्रयत्नं कृत्वा परां गतिं लभते । योगी तपस्विभ्यो ज्ञानिभ्यः कर्मिभ्यश्चाधिकः । तस्माद्योगी भव । योगिनामपि यो मद्गतान्तरेण श्रद्धावान् मां भजते स युक्ततम इति ॥

कियत्कालं कर्म कर्तव्यमित्यत आह गीताचार्यः - आरुरुक्षोर्मुनेः इति भाष्यम् । तदुपरि प्रमेयदीपिकायाम् अस्य प्रश्नस्य द्वितीय एव 'यदा ते मोहकलिलम्' इति परिहृतः । किमर्थं पुनरारम्भ इति शङ्कित्वा तत्र ज्ञानार्थिनोऽत्र तु योगरोहार्थिन इति भेदात् । तयोश्च साध्यसाधनयोः पृथक्त्वात् इत्युक्तम् । तच्च स्फुटीकृतं भावदीपे । ज्ञानेत्यस्य परोक्षेत्यर्थः । योगरोहेत्यस्य समाधिरित्यर्थः । ज्ञानार्थिनो हि ज्ञानं साध्यम्, श्रवणमननादिकं साधनम् । समाध्यर्थिनस्तु निर्णयरूपं तत्त्वज्ञानादि साधनम्, अपरोक्षं साध्यमिति ॥

'समानां विषमा पूजा' इति भाष्योक्तस्मृतौ समानामिति प्रयोगः कथमित्याशङ्क्य टीकायां सर्वशब्दपर्यायस्य समशब्दस्यैव सर्वनामसञ्ज्ञा, न साधारणार्थस्य यथा समेदेशे यजति इतीत्युक्तम् । तद्विवृतं भावदीपे । सर्वादीनि सर्वनामानि इति सूत्रे सर्वादिगणे समशब्दः पठितः । अतः 'आमि सर्वनाम्नः सुट्' इति सुडागमे समेशामिति भाव्यमिति शङ्काभिप्रायः । समाधानाभिप्रायः टीकायामेव व्यक्तम् । तत्रोदाहरणं तु 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादेरर्थानुवादः । समे देशे इति तदर्थः । अन्यथा समस्मिन्निति स्यादिति भावः ॥

।। अथ सप्तमोऽध्यायः ।।

पूर्वोक्तसाधनसाध्यज्ञानोक्तिः द्वितीयषट्के । तत्रादौ भगवान् स्वेन वक्ष्यमाणज्ञानस्य दौर्लभ्यमाह । मनुष्याणां सहस्रेषु कश्चित् सिद्धये यतते । तेषां मध्ये कश्चन सिद्धिं प्राप्नोति । सिद्धानां मध्ये कोऽपि ज्ञानं लभत इति । तज्ज्ञानमाह । मदधीना जडप्रकृतिः भूजलाग्निवायुगगनमनोबुद्ध्यहङ्कार-भेदेनाष्टधा । अपरा मदधीना चित्प्रकृतिः जगद्धत्ते । अहमेव समस्तजगतः सृष्टिलयकर्ता । अहमेव परतरशब्दितसर्वोत्तमः । मयि सर्वमिदं जगत् सूत्रे मणिगणा इवाश्रितमिति ॥

इदानीं विज्ञानमाह । अप्सु रसोऽहम् । न केवलं आपः मदधीनाः, किन्तु रसोऽपि मदधीन इत्यर्थः । एवमेवोत्तरत्रापि ज्ञातव्यम् । शशिसूर्ययोः प्रभाऽस्मि । आकाशे शब्दोऽहम् । नृषु पौरुषोऽहम् । अहमेव पृथिव्यां पुण्यो गन्धः, अग्नौ तेजः, सर्वप्राणिषु जीवनम्, तपस्विषु तपः, बुद्धिमतां बुद्धिः,

तेजस्विनां तेजः, बलवतां अनर्हेऽप्रयुज्यमानं बलम्, धर्माविरुद्धः कामः, सर्वभूतानां मूलकारणं च । न केवलमेतावत्, किन्तु सर्वे सात्त्विकराजसतामसपदार्था मदधीनाः, नाहं तदधीनः । गुण-मयपदार्थान् दृष्ट्वा तत्सदृशोऽहमिति मन्वानाः मां गुणातीतं न विदुः । कुत इति चेत् मदधीना गुणाभिमानिनी रमा दुरत्यया । मामेव ये प्रपद्यन्ते ते मत्प्रसादेन गुणमयीं मायां तरन्ति । तर्हि सर्वे कुतस्त्वामाश्रित्य मायां न तरन्तीति चेत् तेषामासुरस्वभावत्वात् ॥

मम भक्ताश्चतुर्विधाः । आर्तो जिज्ञासुरर्थार्थी ज्ञानी चेति । एते सर्वेऽप्युदाराः, किन्तु ज्ञानी मम परमप्रियः । बहूनां जन्मनामन्ते ज्ञानवान् पुनर्बहूनां जन्मनामन्ते मां प्रपद्यते । सर्वं वासुदेवाधीनमिति ज्ञानी दुर्लभः । स्वस्वभावेन नियताः कामैर्हृतधियोऽन्यदेवताः प्रपद्यन्ते । ये ये यां यां देवतां भजन्ते तत्र तत्र स्थित्वाऽहमेव फलं ददामि । तेन कारणेन तत्र श्रद्धायुक्ताः सन्तः तामेव देवतां पुनः भजन्ते । अल्पज्ञानिनां तेषामल्पफलं भवति । देवयजो देवान् यान्ति । मद्याजिनो मां यान्ति । अज्ञानिनः प्राकृतदेहरहितं मां प्राकृतदेहसहितं मन्यन्ते । अत्र कारणं मम मायैव ॥

अहं भूतभवद्भविष्याणि सर्वाणि भूतानि वेद । मां तु न कश्चन वेद । सृष्टौ सर्वे इच्छाद्वेषजन्यद्वन्द्वमोहेन संमोहं यान्ति । येषां पुण्यकर्मणां पापं नष्टं ते मां भजन्ते । य एवं यतन्ते ते ब्रह्म कर्माध्यात्माधिभूताधिदैवाधियज्ञान् विदुः । मरणकालेऽपि मामेवं ज्ञात्वा मां प्राप्नुवन्ति ॥

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यत्रत्यप्रभावप्ययशब्दौ भगवत्पादैरेवं व्याख्यातौ । प्रभवादेः सत्ताप्रतीत्यादेः कारणत्वात्तद्वेक्तृत्वाच्च प्रभव इत्यादीति । एतद्विवरणं प्रमेयदीपिकायां कृतम् । प्रभवप्रलयौ जगद्धर्मौ प्रमितौ । कथं तयोस्साक्षाद्भगवदैक्यमुच्यत इत्यतो नात्र भगवदैक्यमुच्यते । किन्तु प्रभवादेः सत्तादेरपि भगवानेव कारणमिति तदधीनत्वन्यायेन भगवान् प्रभव इत्यादिरुच्यत इति ॥

किञ्च यथा पुत्रादिप्रभवः रिपुप्रलयश्च ज्ञातः सुखहेतुरित्युपलब्धः पित्रादेः पुत्रादिप्रभवभोक्तृत्वं वैरिणो रिपुप्रलयभोक्तृत्वं च तथा भगवतोऽपि प्रभवादिभोक्तृत्वमिति । भोक्तृत्वं च लीलयेत्यवगन्त॰ यम् ॥

'रसोऽहमप्सु' इति श्लोकस्यावतारिकायां भगवत्पादैः 'रसोऽहमित्यादि विज्ञानम्' इत्युक्तम् । तत्र टीकाकाराणामयमाशयः - पूर्वं ज्ञानं विज्ञानं च वक्तव्यतया प्रतिज्ञातम् । तत्र ज्ञानप्रकरणं कुत्र समाप्तमिति न ज्ञायते । रसोऽहमित्यादिनाऽलौकिकभगवन्माहात्म्यप्रतिपादनादस्य विज्ञानप्रकरणत्वं ज्ञायते । अतस्तत्पूर्वं ज्ञानप्रकरणसमाप्तिरित्यवसीयते इतिशब्दाद्यभावेऽपीति ॥

प्रमेयदीपिकायां 'द्विविधेन योगेन यज्ज्ञातव्यं तच्छृणु' इत्युक्तम् । तद्विवृणोति भावदीपकारः 'द्वितीयेऽध्याये' बुद्धिर्योगे त्विमां श्रुणु' इति ज्ञानसाधनबोधनं प्रतिज्ञातम् । ज्ञानस्य बहिरंङ्गसाधनं कर्मयोगमापञ्चमाध्यायसमाप्ति निरूप्य षष्ठे तदन्तरङ्गसाधनं समाधियोगो निरूपित इति द्विविधेन योगेनेत्युक्तमिति ॥

भगवतः सर्वभोक्तृत्वे भाष्यकारैः सर्वकाम इत्यादि छान्दोग्यश्रुतिरुदाहृता । टीकाकाराः सर्वकाम इत्यादेः द्विरुक्तत्वादेकं भोगविषयमिति ज्ञायत इति व्याख्यातवन्तः । तच्च स्पष्टीकृतं भावदीपे । छान्दोग्ये तृतीयेऽध्याये 'सर्वं खल्विदं ब्रह्म' इति चतुर्दशखण्डे 'सर्वकाम' इत्यादि वाक्यं द्विरुक्तम् । तत्रैकं स्वरूपपरम्, अन्यत् तद्भोक्तृत्वपरम् । अन्यथा पौनरुक्त्यप्रसङ्गादिति ॥

॥ अथ अष्टमोऽध्यायः ॥

पूर्वाध्यायान्ते ब्रह्मादि प्रस्तुतम् । मरणकालेऽपि विदुस्ते ब्रह्म प्राप्नुवन्तीति चोक्तम् । मरणकाले कर्तव्यस्मरणविषयत्वपरमप्राप्यत्वादिरूपो भगवन्महिमा एतदध्याये प्रतिपाद्यते । तत्रार्जुन आदौ ब्रह्म-अध्यात्म-कर्म-अधिभूत-अधिदैव-अधियज्ञस्वरूपं प्रयाणकाले स्मरणप्रकारं च पृच्छति ।

तान् क्रमेण परिहरति भगवान् । ब्रह्म परमाक्षरशब्दितो भगवानेव । अध्यात्मं जैवं स्वभावः अन्तःकरणादिदेहपर्यन्तः । कर्मजीवजडानां सृष्टिकरी ईश्वरक्रिया । अधिभूतं विनाशी कार्यपदार्थः देहाद् बहिष्टोऽव्यक्तपर्यन्तः । अधिदैवं सङ्कर्षणो ब्रह्मा वा । देहे अधियज्ञः सर्वयज्ञभोक्तृत्वतत्प्रवर्तक-त्वादिरूपेण भगवानेव ॥

अन्तकाले भगवन्तमेव स्मरन् यः कलेवरं त्यजत स भगवति निदुःखनिरतिशयानन्दात्मिकां सत्तां लभते । यं यं भावं स्मरंस्त्यजति तं तमेवैतीति नियमात् अन्त्यकालस्मरणं भगवत्प्राप्तिसाधनम् । अन्त्यकालस्मरणोपायस्तु निरन्तरं भगवति मनःप्रणिधानेन अतिशयेन तद्वासनायुक्तत्वम् ॥

ध्यानप्रकारस्तु भगवान् सर्वज्ञः पुराणः शासकोऽणोरणीयान् सर्वस्य धारणपोषणकर्ता साकल्येनाचिन्त्यः प्रकृतिविदूरः उद्यदादित्यवर्णश्चेति ॥

योगी प्रयाणकालेऽचलेन मनसा भक्त्या भ्रुवोर्मध्ये प्राणमावेश्य प्रणवमुच्चारयन् भगवन्तम् अनुस्मरन् ब्रह्मनाड्यादिना उत्क्रान्तः परमं पुरुषं प्राप्नोति । भगवत्प्राप्त्यनन्तरं पुनर्जन्म नोपैति । मेरुस्थब्रह्मसदनं जनोलोकं चारभ्य ऊर्ध्वलोकं गत्वा तत्रस्थभगवन्तं प्राप्तानां पुनर्जन्म नास्ति । भगवन्तं चारभ्य ऊर्ध्वलोकं गत्वा तत्रस्थभगवन्तं प्राप्तानां पुनर्जन्म नास्ति ॥

भगवन्तं प्राप्तानां पुनर्जन्माभावो भगवतो महामहिमत्वाद् युज्यते । तथाहि- द्विपरार्धात्मको-ऽनेकसहस्रयुगरूपः कालः परब्रह्मणो दिनमिति रात्रिरिति च व्यापारसद्भावाभावाभ्यामुपचर्यते । अहरागमे सर्वा व्यक्तयोऽव्यक्तात् प्रभवन्ति । रात्र्यागमे प्रलीयन्ते । जगद्विलक्षणो भगवान् सर्वनाशेऽपि स्वयं न विनश्यति । भगवत्प्राप्तानामपि पुनरावृत्तिराहित्येन कैमुत्याद् भगवतोऽविनाशित्वं सिद्धम् । भगवत्प्राप्तौ परमसाधनं भक्तिरेव ॥

वेदोक्ते द्वे सृती वर्तेते । धूममार्गोऽर्चिरादिमार्गश्चेति । तत्राद्यमार्गे गताश्चान्द्रमसं ज्योतिः प्राप्य निवर्तन्ते ॥ द्वितीयमार्गे गता ब्रह्म प्राप्य न निवर्तन्ते । एतौ मार्गौ सोपायौ ज्ञात्वाऽनुष्ठाय किञ्चिन्मोहमाप्नोति । तस्मात् सर्वकालेषु योगयुक्तो भवेदिति सर्वमवदातम् ॥

अधिभूतं क्षरो भाव इत्यत्र भाष्यकारैः क्षरो भावः विनाशी कार्यपदार्थ इति व्याख्यातम् । तद्गम्भीरत्वात् प्रमेयदीपिकायामेवं व्याख्यातम् । क्षरशब्दव्याख्या विनाशीति । भावशब्दस्य अर्थद्वयं कार्यमिति पदार्थ इति । भवति उत्पद्यत इति भावः । तथाच अधिभूतं किमित्यस्य उत्तरद्वयमुक्तम् । उत्पत्तिमान् पदार्थो नाशवान् पदार्थ इति ॥

प्रयाणकाले इति श्लोको भाष्यकारैः 'वायुजयादियोगयुक्तनां मृतिकाले कर्तव्यमाह विशेषतः इत्यवतारितम् । तत्र वायुजयेत्यादिविशेषणं किमर्थं दत्तमिति न ज्ञायते । तदाह टीकाकारः 'साधकाः द्विविधाः भक्त्यादिप्रधानाः वायुजयादिप्रधानाश्चेति । अतो विशेषणमिति ॥

परमं पुरुषं दिव्यम् इत्यत्र दिव्यमित्येतत् भगवत्पादैः सृष्ट्यादिक्रीडायुक्तमिति व्याख्यातम् । तदभिप्रायमाह टीकाकारः । दिवि भवो दिव्यः । स च सूर्यमण्डलस्थत्वात् हिरण्यगर्भ इति कश्चित् व्याख्यातवान् । तदसत् । भगवत्प्रयोगेन भगवत एव प्राप्यत्वादिति भावेनैवं व्याख्यातमिति ॥ तत्र च दिवु क्रीडा विजिगीषा इत्यादेरौणादिके यक्प्रत्यये कित्त्वाद्गुणाभावे रूपम् ॥

पुरुषशब्दनिर्वचने टीकाकारैः अधिकरणे शेतेः इति डः । 'वर्णागमो वर्णविपर्ययश्च' इति साधुः इत्युक्तम् । तद् गाम्भीर्यात् भावदीपकारैरेवं व्याख्यातम् ॥

'अधिकरणे शेतेः' इति वृत्तौ शेतेर्धातोः अधिकरणत्ववाचि सुवन्त उपपदे डप्रत्ययो भवतीत्युक्तम्। तथाच पुरि शीङ् इति स्थिते डित्वाट्टिलोपे शकारस्य षकारे पूर्वपदस्योकारन्तत्वे च रूपम् । रेफान्तपूर्वपदस्य (पूर्-शब्दोऽयम्) उकारागमे शकारस्य षकारतया वर्णविपर्यये च पृषोदरादिसूत्रे वृत्तावुक्तं वचनमाह -'वर्णागम' इति । 'तथा परौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगः

तदुच्यते पञ्चविधं निरुक्तम्' इति वाक्यशेषः इति ॥ एवमितरराघवेन्द्रीयटिप्पणीवदियमपि टिप्पणी व्याकरणविशेषाणां सुखबोधायात्यन्तोपयोगिनी ॥

अन्यत्र भाष्ये पुरुपं पूर्णमिति व्याख्यातम् । तत्र टीका- पृ पालनपूरणयोरित्यतो विदिपुरोश्चेति कुपन्प्रत्यये पूर्णमिति सिध्यतीति ॥ तद्विवृतं भावदीपे । कुपन्प्रत्ययस्य कित्वात् गुणाभावे 'उदोष्ट्यपूर्वस्य' इति सूत्रेण पकारस्य ओष्ट्यत्वात् ऋकारस्य उदादेशे 'उरण् रपरः' इति रपरत्वे पुर् उप पुरुप इति रूपसिद्धिः । धात्वर्थानुगमे पूर्ण इत्यर्थः सिध्यतीति ॥

'आमेरुब्रह्मसदनाजनात्र जनिर्भुवि' इति भाष्यस्थश्लोकटीकायां पृथिवीसम्बन्धिनां तदसम्बन्धिनां ग्रहणायोभयोपादनमित्युक्तम् । नेदं सुबोधमिति भावदीपे एवं व्याख्यातम् । पृथिवीसम्बन्धिनां मेरुस्थेतद्वीपानन्तासनानां ग्रहणाय जनोलोकमारभ्य स्थितलोकानां ग्रहणाय च मेरुस्थब्रह्मसदनादिति आजनादिति उभयोपपादनमित्यर्थ इति ॥

'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इत्यत्र भगवत्पादैः महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिमित्युक्तम् । प्रमेयदीपिकायां तद्भाव उद्घाटितः । आब्रह्मेति गीतावाक्ये ब्रह्मभुवन-शब्दितसत्यलोकसहितानां पुनरुत्पत्तिरुच्यते इति कश्चिद् व्याख्यातवान् । तदसदिति भावेनाह । ब्रह्मभुवनमारभ्य परतः स्थितानामेवं जनोलोकमारभ्य परतः स्थितानां सकाशात् न पुनरावृत्तिः पृथिवीसम्बन्धिकं तदसम्वन्धिनां च लोकानां ग्रहणायोभयोपादनमिति ॥

।। अथ नवमोऽध्यायः ।।

सप्तमाध्यायोक्तं भगवन्माहात्म्यं स्पष्टीक्रियतेऽस्मिन्नध्याये । सप्तमाध्यायोक्ताध्यात्मादिपदार्थ-व्याख्यानार्थम् अष्टमेनान्तरितत्वं बोध्यम् ॥ तत्रादौ भगवान् स्वोपदिश्यमानविद्यायामादरजननायेयं विद्या अतिश्रेष्ठाऽतिगुह्या चेति वदति । अपरोक्षज्ञानसाधनभूताया एतस्या विद्याया अयं सङ्क्षेपः ॥

अव्यक्तशरीरेण भगवता सर्वमिदं जगद्व्याप्तम् । सर्वभूतानि तदधीनानि, न तु स तदधीनः । भगवदाश्रयेणसर्वपदार्थानांस्थितत्वेऽपिभगवत्पदार्थयोरन्योन्यधर्मसङ्क्रातिर्नास्ति।इदंपरमेश्वरस्यैश्वर्य-लक्षणसामर्थ्यम्।अत्रआकाशस्थितःसर्वगोवायुरेवदृष्टान्तः।नहिआकाशस्थितोवायुःतद्धर्मानाप्नोति। नाप्यकाशः स्वस्थितवायुधर्मानाप्नोति ॥

प्रलयकाले सर्वभूतानि भगवदधीनप्रकृतौ लीयन्ते । सृष्टिकाले भगवान् प्रकृतेः पुनस्सर्वभूतानि सृजति । एवं सृष्ट्यादि कुर्वन्नपि भगवान् कर्मभिर्न निबध्यते, तस्यैव कर्मनियामकत्वात् । असक्तेः

भगवानुदासीन इवास्ते। सोऽध्यक्षः सन् प्रकृतेः चराचरप्रसवितृत्वं नियामयति। एवं महामहिमानमपि भगवन्तं मानुषशरीरसदृशशरीरवन्तं दृष्ट्वा तस्योत्तमां स्थितिमजानन्तो मूढा भगवन्तमवजानन्ति। एतन्मोहस्य मूलकारणं तेषामासुरराक्षसस्वभावत्वम्। एतत्फलं तु तेषां ज्ञानकर्माशानां व्यर्थत्वम्। न केवलमेतावत्। परत्र नरकानन्तरं तमःप्राप्तिश्च। एतद्विरुद्धस्वभावा दैवीं प्रकृतिमाश्रिता महात्मानो भगवन्माहात्म्यं यथावज्ज्ञात्वा सततं कीर्तयन्तः एकादश्यादिव्रतानाचरन्तो नमस्यन्तश्च नित्यं मनोयोगं कुर्वाणा उपासते। पाञ्चरात्रिकाः अनेकप्रकारेण व्यूहरूपं भगवन्तं ज्ञानयज्ञेन यजन्ते॥

सप्तमाध्यायोक्तरीत्या तत्तन्नियन्तृत्वेन तत्तद्भोक्तृत्वेन च भगवान् क्रत्वादिशब्दवाच्यः। स एव सर्वाश्रयः प्रलयेऽन्यत्रापि संहारको जगद्व्यञ्जकत्वाद् बीजशब्दवाच्यः सर्वस्वामी। स एव सूर्यादिषु स्थित्वा तपनवर्षणादिनियामक इति॥

द्विविधा विष्णुभक्ताः - त्रैविधा भागवताश्चेति। तत्र तैविद्याः स्वर्गादिकामनया भगवद्याजिनः, इतरदेवताः पूजयित्वाऽन्ते भगवति समर्पकाश्च। भागवतास्तु केवलं भगवद्याजिनः, भगवत्परिवारतयैवान्यदेवतायाजिनो निराकाङ्क्षाश्च। एतयोर्मध्ये त्रैविद्याः स्वर्गादिस्थानं प्राप्य पुण्यभोगान्ते मर्त्यलोकं पुनरागच्छन्ति। अनन्यचिन्तकभागवतनां भगवानेव योगक्षेमं वहति॥

यद्यपि अन्यदेवता भक्ता अपि अन्ततो भगवन्तमेव यजन्ते। तथाऽपि तेषां भगवत एव सर्वयज्ञभोक्तृत्वादिकमिति ज्ञानं स्फुटं नास्ति। अतस्ते च्यवन्ति। देवपितृभूतयाजका देवपितृभूतानेव यान्ति। भगवद्याजिनो भगवन्तमेव यान्ति। भगवत्तोषार्थं महापूजासाधनानि नापेक्षितानि। किन्तु भक्त्या प्रदत्तेन पत्रादिनैवालम्। एवं भक्तिसुलभभगवत्तोषेण महापुरुपार्थस्य साध्यत्वात् यद्यत् क्रियतेऽश्यते हूयते दीयते तप्यते च तत्तत् भगवदर्पणं कुर्यात्। एवंविधसन्न्यासयोगयुक्तो मुक्तो भविष्यति। भक्त्यनुसारेण भगवदनुग्रहो भवति। प्रायस्तद्भक्तो दुराचारो न भवति। तथापि देवादिः यदि बहुपुण्यसम्पादनानन्तरं कथञ्चिद्भवति सुदुराचारः तर्हि साधुरेव स ज्ञातव्यः, यतः स क्षिप्रं धर्मात्मा भवति। भगवद्भक्तः कदाचिदपि न प्रणश्यति॥

पापं कृत्वा ये स्त्रीशूद्रादिपापयोनिषु जातास्तेऽपि भगवन्तमाश्रित्य परां गतिं यन्ति। पुण्यं कृत्वा विप्रादियोनिषु जाता यान्तीति किमु वक्तव्यम्। अतो भगवन्मना भगवद्भक्तो भगवद्याजी च भूत्वा भगवति प्रह्वश्चेत् भगवन्तमेवैष्यति भगवत्परायणः इति सर्वं समञ्जसम्॥

'ममात्मा भूतभावनः' इति गीतावाक्ये 'मम आत्मा देह एव भूतभावनः' इति भगवत्पादैर्व्याख्यातम्। एतदभिप्रायमेवमुद्घाटितं प्रमेयदीपिकायाम्। पूर्वमेव मत्स्थानीति भूतधारकत्वं भगवत

उक्तम् । अत्र पुनः भूतभृदिति किमर्थं पुनरुच्यत इति शङ्कायाम् अस्ति पुनरुक्तेरत्र प्रयोजनान्तरम् । अत्र अव्यक्तमूर्तिना इति मूर्तावुक्तायां सा मूर्तिरस्मदादीनामिव भिन्नेति भ्रान्तः स्यान्मन्दानाम् । तन्निरासार्थं यथा भूतधारकत्वं भगवल्लक्षणमभिहितं तदत्र देहस्योच्यत इति ॥

भगवतो भूतमहेश्वरत्वे भगवत्पादैः 'ब्रह्मपुरोहित ब्रह्मकायिक महाराजिक' इति मोक्षधर्मवचनमुदाहृम् । तद्दुर्गमार्थत्वाट्टीकाकारैरेवं व्याख्यातम् । पुरोहितादिदेवनिकायास्त्वदधीना (भगवदधीना) इत्यर्थः । ब्रह्म इति द्विरुक्तिरादरार्थेति ॥

राजविद्येत्येतत् प्रधानविद्या इति भाष्यकारैर्व्याख्यातम् । एतत् राज्ञां विद्येति कस्यचिदप० याख्याननिरासायेत्युक्त्वा टीकाकारैः राजा चासौ विद्या चेति राजविद्येत्यर्थः इति विग्रहः प्रदर्शितः ॥ भावदीपकारैस्तु राज्ञी चासाविति पाठो गृहीतः । अयश्यं चैतदेवमेवेति ज्ञातव्यम् । विद्याशब्दस्य स्त्रीलिङ्गत्वात् तद्विशेषणस्यापि स्त्रीलिङ्गेन भवितव्यत्वात् । तर्हि राजविद्येति समस्तपदं कथमिति शङ्कित्वा स्त्रियाः पुंवद्भावितपुंस्कत्वात् इति पुंवद्भाव इति समाहितम् । क्वाचित्कं राजा चासौ विद्या चेति पाठमप्यङ्गीकृत्य तत्र समासस्य साधुत्वं व्याकरणमहाभट्टैः भावदीपकारैरवं साधितम् । राजविद्येत्यत्र राजशब्दस्य राजस्त्रीत्वमविवक्षितम् । किन्तु प्राधान्यमेव विवक्षितम् । अतो न स्त्रीप्रत्ययम् । 'टापं चैव हलन्त्यानाम् ' इति भागुरिन्यायेन राजन्शब्दात् टाप्प्रत्यये टिलोपे राजा इति रूपम् । ततः कर्मधारये पुंवद्भावे राजविद्येति साधु इति ॥अन्योऽपि साधुत्वप्रकारसम्पादनक्रमः प्रदर्शितः । राजशब्दात् बहुलान्ताद्वा इति टापि कृते 'ङ्यापोः सञ्ज्ञाछन्दसोः बहुलम्' इति बहुलग्रहणात् ह्रस्वत्वे राजविद्येति साध्विति ॥

'अपि चेत्सुदुराचारः' इति श्लोको देवदेवांशादिविषय इति भाष्यकाराः । तत्र देवाः चन्द्रादयः, तदंश सुग्रीवादयः इति टीका । भावदीपकाराः दुराचारम् आदिशब्दद्वयसङ्ग्राह्यं चाहुः । चन्द्रस्य गुरुदारपरिग्रहो दुराचारः, सुग्रीवस्य वालिदारपरिग्रहः, प्रथमादिपदेन दिक्पालादीनां भगवता युद्धादिः दुराचारः, द्वितीयादिपदेन अश्वत्थामादिः ग्राह्य इति ॥

॥ अथ दशमोऽध्यायः ॥

षष्ठाध्यायोक्तध्यानार्थं भगवद्विभूतयो वर्ण्यन्तेऽस्मिन्नध्याये । तत्रादौ भगवान् स्वमाहात्म्यातिशयं वक्ति ॥

मम महिमानं ममोत्पत्तिं मत्तो जगदुत्पत्तिं च देवर्ष्यादयोऽपि न जानन्ति । यो मामेवमनादिं जानाति स सर्वपापविमुक्तो भवति । ज्ञानाज्ञानसुखदुःखादि सर्वे धर्मा भूतानां मत्त एव भवन्ति ।

ब्राह्मणादिभेदेन चतुर्विधा देवाः स्वायम्भुवादि चत्वारो मनवो मरीच्यादिसप्तर्षयश्च मम मानसाः पुत्राः । एतन्मम विशिष्टभवनं महत्त्वं च यो वेत्ति स ध्यानयोगी भवति । ज्ञानदीपेनाहं तत्तमो हरिष्यामीति ॥

एवमुपदिष्टोऽर्जुनो भगवद्विभूतीर्बुभुत्सुः प्रार्थयते । तदुत्तरत्वेन भगवानाध्यायसमाप्ति स्वविभूती-र्वक्ष्यति॥

विभूतयो नाम वस्तूनां विशिष्टताप्रदरूपाणि विविधस्वरूपाणि च । तानि च कानिचित् स्वजातीयवस्तुमध्ये कस्यचिद्वस्तुनो विशिष्टत्वप्रदानि सजातीयविभूतिरूपाणीत्युच्यन्ते । कानिचन स्वजातीयवस्तूनां मध्ये किञ्चिद्विहायेतरेभ्यो विशिष्टत्वप्रदानि सजातीयैकदेशविभूतिरूपाणि इत्युच्यन्ते । कान्यपि विजातीयवस्तुध्ये विशिष्टत्वदायीनि विजातीयविभूतिरूपाणि इत्युच्यन्ते । कानिचित्पुनः साक्षात् भगवत्स्वरूपाण्येव सहजविभूतिरूपाणीत्युच्यन्ते ॥

तत्राद्यानि यथा- मनुष्यदृश्यानां ज्योतियां मध्ये रविर्विशिष्टः, मरुतां मध्ये मरीचिर्विशिष्टः, इन्द्रियाणां मध्ये मन इत्यादि । तत्र रव्यादिषु स्थित्वा तेषां विशिष्टत्वप्रदानि रव्यादिसनामकानि भगवद्रूपाणि सन्ति ॥

द्वितीयानि यथा वेदानां मध्ये ऋग्वेदं विहाय सामवेदो विशिष्टः, पाण्डवेषु भीमं विहाय धनञ्जयो विशिष्टः, देवेषु ब्रह्मरुद्रौ विहाय वासवो विशिष्ट इत्यादि । तत्र सामादिषु स्थित्वा तेषां सजातीयैकदेशे विशिष्टत्वप्रदानि तत्सनामकानि भगवद्रूपाणि सन्ति ।

तृतीयं यथा विजातीयनक्षत्रणां मध्ये शशी चकास्ति । तत्र शशीनामकं भगवद्रूपं वर्तते ।

चतुर्थानि यथा- आदित्यानां विष्णुर्विशिष्टो वृष्णीनां वासुदेवश्शस्त्रभृतां रामो भगवान् कपिलः सिद्धानामिति । एते विष्ण्वादयो साक्षाद्भगवानेव ॥

सत्ववतां सत्वम्, ज्ञानवतां ज्ञानमित्यादीनि तु पञ्चमानि विभूतिरूपाणि यानि धर्मिषु सत्वादिसारधर्मप्रदानि । एवं त्रिधानि विभूतिरूपाणि पृथक् पृथक् सङ्कीर्त्य भगवान् वक्ति । सङ्क्षेपत एव विभूतिवर्णनं कृतम् । सङ्क्षेपकरणं च विभूतीनामनन्तत्वादेव ।

विभूतिविस्तरश्च लक्षणोक्तिपूर्वकमुच्यते । यद्यद्वस्तु स्वजातितः श्रैष्ठ्योपेतं सम्पयुक्तमुत्कृष्टं वा तत्तद्वस्तु भगवद्विभूतियुक्तं जानीयात् । इतोऽप्यधिकं पार्थादिमहाधिकारिवेद्यं विभूतिरूपं वर्तते । तदेकांशेन सर्वजगद्व्याप्य स्थितम् । सर्वांशेन व्याप्तुं जगत्सहस्रमपि नालमिति ॥

'मद्भावा मानसा जाताः' इति मानसानां स्वायम्भुवादीनां मनूनां भगवज्जातत्वमुच्यते । तत्र

ब्रह्मपुत्रत्वे मानसत्वमस्तु । न तु तदा ते मनवः । किन्तु तद्देहपरित्यागेन प्रियव्रतादिपुत्रत्वे हि तेषां मनुत्वम् । अतो मनुषु मानसत्वमसम्भावितमित्याशङ्क्य भाष्ये 'अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद्भवति' इति समाहितम् ।

अत्र प्रमेयदीपिकायां सम्प्रदायविशेष उल्लिखितः 'द्वितीये शरीरे जतो तत्पूर्वशरीरेणैक्यमापद्यते' इति । अपरित्यज्येत्यस्य परं स्थितानामिति टीकायां शेष उक्तः । तदभिप्रायमुद्घाटयन्ति भावदीपकाराः - ल्यवन्तप्रयोगेन समानकर्तृकत्वं द्योत्यते । कयोः क्रिययोरिति न स्फुटम् । अतस्तन्निर्वाहाय स्थितानामिति शेषोक्तिरिति । तथाच परित्यागस्थितिरूपक्रिययोः समानकर्तृकत्वं लब्धमिति ॥

भाष्ये जनार्दनशब्दो न जायतेऽर्दयति संसारमिति व्याख्याय तत्र बाभ्रव्यशाखासम्मतिर्दत्ता । अस्मिन् विषये टीकाकाराणामिदमाकूतम् । अर्द गतौ इति धातोः आसुरजनानां नरकादि-गमयितृत्वाज्जनार्दन इति सङ्करभाष्ये व्याख्यातम् । तदप्रामाणिकं, मद्व्याख्यानं तु श्रौतत्वादुपादेय-मिति श्रुत्युदाहरणमिति ॥

न जायते इति प्रतीकं गृहीत्वा टीकाकारैः 'नञः परनिपातः, अत एव नलोपाभावः । उत्तरपदे तस्य स्मरणादित्युक्तम् । तदाभिप्रायो विवृतो भावदीपे । न जायते इति व्युत्पत्तौ अज इति भाव्यम् । जन इति कथमिति चेत् निरुक्तिबलात् नञः परनिपातः । 'न लोपो नञः' इति सूत्रम् उत्तरपदाधिकारे पठितम् । अत उत्तरपदे परत एव नलोपस्योक्तत्वात् । अत्र तु नञ एव उत्तरपदत्वेन परत उत्तरपदाभावात् नलोपो नेति ॥

॥ अथ एकादशोऽध्यायः ॥

दशमाध्यायान्ते उक्तस्य व्याप्तरूपस्य विश्वरूपापरनामकस्य वर्णनमस्मिन्नध्याये क्रियते ध्यानसौकर्याय ॥

तत्रादावर्जुनो विश्वरूपं दिदृक्षुः प्रार्थयते । भगवान् स्वविश्वरूपस्य मांसचक्षुषा द्रष्टुमशक्यत्वात् दिव्यचक्षुर्दानपूर्वकं स्वविश्वरूपमाविष्कृत्वा पश्येत्यर्जुनं विधत्ते ॥

अनेकमुखबाहूरुपादाद्यवयवोपेतम् अनेकदिव्याभरणमेकोद्यतायुधम् अनेकादित्यसङ्काशं सर्वाश्चर्यमयं तद्रूपं तत्रैकदेशे कृत्स्नं जगद् दृष्ट्वा विस्मयाविष्टो हृष्टरोमा धनञ्जयो देवं शिरसा प्रणम्य अञ्जलिपुटं कृत्वा विज्ञापयते । हे भगवन् जगद्व्याप्ते त्वद्विश्वरूपे नाभिकमले स्थितं ब्रह्मणं तदङ्कगं हरं तदङ्ग विशेषेषु सर्वदेवांश्च पश्यामि । अनन्तमिदं रूपम् । त्वमेव परमाक्षरो भगवान् । यदि मद्वदन्येऽपि रूपमेतत् पश्यन्ति तर्हि मद्वद्भीता भवेयुः । सर्वेऽस्मदीयाः कौरवेयाश्च ते वक्त्राणि त्वरमाणा विशन्ति ।

केचिद्दशनान्तरेषु विलग्नाः सञ्चूर्णितशिरसो दृश्यन्ते । तवोग्रा भासो जगत्समग्रं प्रतपन्ति । को भवानुग्ररूप इति । ज्ञातभगवत्स्वरूपोऽपि पार्थो विशेषज्ञानार्थं पृच्छतीति द्रष्टव्यम् ॥

एवमर्थितो भगवानाह । कालोऽहं लोकान् संहर्तुं प्रवृत्तः । त्वदादीन् कश्चित् विहायान्ये सर्वे नावशिष्यन्ति । तस्माद्युद्धसन्नद्धो भव । मयैव हतांस्त्वं जहि । समृद्धं राज्यं भुङ्क्ष्वेति । एतच्छ्रुत्वाऽतिभीतोऽर्जुनः पुनर्भगवन्तं स्तुत्वा वारंवारं नत्वा प्रार्थयते ।

हे भगवान् ! त्वं सखेति मत्वा हे कृष्ण! हे यादव! हे सखेति यत्सम्बोन्धितो विहारशय्यास नभोजनेष्वसत्कृतश्च तत् त्वामहमप्रमेयं समक्षं क्षामये । मम सर्वापराधं सोढुमर्हसि पुत्रस्य पितेव सख्युः सखेव प्रियायाः प्रिय इव । अदृष्टपूर्वं रूपं दृष्ट्वा रोमाञ्चितोऽस्मि भीतोऽस्मि । तदेव चतुर्भुजं सौम्यं रूपं पुनर्दर्शयेति ॥

तदा भगवान् स्वविश्वरूपदर्शनस्य दौर्लभ्यं महाधिकारिभिर्भक्त्यैव लभ्यत्वमपि स्पष्टीकृत्य स्वकीयतया प्रदर्शनीयं चतुर्भुजरूपं दर्शयित्वाऽर्जुनमाश्वास्ते । अर्जुनेन 'इदं मानुषं रूपं दृष्ट्वा प्रसन्नचित्तः पूर्वस्वभावं प्राप्तश्चाहम्' इति विज्ञापितो भगवान् एवंविधरूपस्य ज्ञानं दर्शनं प्रवेशनं चानन्यया भक्त्या शक्य इत्युक्त्वा फलस्नेहहीनतया स्ववर्णाश्रमोचितानुष्ठानरूपकर्म मद्भक्तिपूर्वकं कुर्वित्याज्ञापयते ॥

सर्वाश्चर्यमयमित्येतत् भगवत्पादैः सर्वाश्चर्यात्मकमिति व्याख्यातम् । तत्र बीजमाह टीकाकारः 'सर्वाश्चर्यमिति केनचित् प्राचुर्यार्थो मयड्व्याख्यातः । तदसत् । सर्वशब्देन गतार्थत्वात् । मयटस्तादात्म्यार्थे प्रमाणमुक्तमेव' इति । तत्प्रमाणं स्मारयन्ति भावदीपकाराः - 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इत्युक्तं सप्तमाध्याय इति ॥

अनेकबाहूदरवक्त्रनेत्रमित्यत्र अनेकशब्दोऽनन्तवाचीत्युक्त्वा तत्र सम्मतित्वेन विश्वतश्चक्षुरिति श्रुतिरुदाहृता भाष्ये । विश्वतश्चक्षुरित्यस्य सर्वतश्चक्षुष्मानित्यर्थस्य प्रतीतेः तदुदाहरणमयुक्तमिति भाति । तत्र समाधानमाह टीकाकारः- विश्वतः इत्यत्र प्रथमार्थे तसिः । विश्वशब्दश्चानन्तवाचीति भाष्य एवोक्तम् । अतो विश्वतश्चक्षुरित्यस्य अनन्तचक्षुरित्यर्थ इति तदुदाहरणं युक्तमेवेति ॥

ननु बहुवक्त्रनेत्रमिति बहुत्वस्यैवोक्तत्वादनन्तबाह्वादित्वोक्तिरनुपपन्नेति शङ्कायां भाष्ये 'महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति' इत्युक्तम् । तदप्रतिपत्तेष्टीकाकारा तद्भावं प्रकटीचक्रुः । स्यादियमनुपपत्तिः यदि भगवद्रूपस्य महत्त्वमात्रं तदवयवानां च बहुत्वमात्रमुच्येत । न चैवम् । अवच्छेदकाश्रवणात् । अतः महत्त्वबहुत्वोक्तिः परममहत्तात्मकत्वेनान्तावयवत्त्वेन च पर्यवस्यतीति ।

तत्र अवच्छेदकाश्रवणं त्रेधा व्याख्यातं भावदीपे। महत्तत्त्वतोऽहङ्कारादितत्त्वतो वा, त्रिगुणं चतुर्गुणम् इत्यादिरूपेण वा, 'पृथिव्या ज्यायान् नु दिवो ज्यायान्' इत्यादिरूपेण वाऽवच्छेदकाश्रवणादिति ॥

॥ अथ द्वादशोऽध्यायः ॥

लक्ष्मीनारायणयोरुपासनयोर्मध्ये नारायणोपासनं गरीय इति वर्ण्यतेऽस्मिन्नध्याये।

तत्रादावर्जुनो देव्या नित्यमुक्तत्वेन मुक्तिदातृत्वशक्तिसद्भावात् तदुपास्त्याऽपि मोक्षसम्भवात् देवदेव्युपासकयोर्मध्ये को गरीयानिति पृच्छति। तत्रायं भगवतः परिहारक्रमः।

भगवदुपासका एव योगशब्दितमोक्षोपायवत्सु श्रेष्ठाः। कुत इति चेत् - यद्यपि देव्युपासनयाऽपि मोक्षो भवति, तथापि देव्युपासनद्वारको मोक्षमार्गः क्लेशाधिक्यवान्। देव्या उपासने विशेषेण जितेन्द्रियत्वं सर्वत्र समबुद्धित्वं सर्वभूतहितकरत्वं सुप्द्वाचारश्चावश्यकः। एतान् विना न देवीप्रसादः। तेन विना नेश्वरप्रसादः। यावताऽऽयासेन देव्युपासनं तन्न्यूनायासेन अत्र भगवदुपासनं सुशकम्॥ अतो रमाब्रह्मादिपरिवारयुक्ततया भगवदुपासनं कार्यम्। तदशक्तौ भगवद्विषयकज्ञानं सम्पाद्यम्। प्रत्याहाररूपाभ्यासेन मनस्समाधानाय यतितव्यम्। तत्राप्यशक्तौ भगवद्विषयककर्मानुष्ठेयम्। तत्राप्यशक्तौ देवतान्तरविषयककर्म कृत्वाऽन्ते भगवति समर्प्य सर्वकर्मफलत्यागं कुर्यात्॥

अज्ञानपूर्वकाभ्यासाज्ज्ञानं श्रेयः। ज्ञानपूर्वकसकामध्यानात् निष्कामध्यानं श्रेयः। तस्मादपरोक्षज्ञानं श्रेयः। तदनन्तरं मोक्षो भवत्येव। भगवत्प्राप्तौ भक्तिरेव प्रधाना। द्वेषाभावो मैत्री कारुण्यं निर्ममत्वं निरहङ्कारत्वं साम्यं क्षमा सन्तोषः तत्त्वनिश्चयोऽनपेक्षता शौचं दाक्ष्यं सर्वारम्भपरित्याग इत्यादयो धर्मा भगवत्प्रीतिकराः॥

अव्यक्तोपासनस्य मोक्षसाधनत्वमुपचरितमित्याशङ्क्य भगवत्पदैः महच्च माहात्म्यं तस्या वेदेपूच्यते इत्युक्त्वा तत्र सम्मतित्वेन चतुष्कपर्दा इत्यादिश्रुतय उदाहृताः। तद्भाव उद्घाटितः टीकाकारैः॥

युक्तं ब्रह्माद्युपासनास्य मोक्षसाधनतायामुपचरितत्वकल्पनं तेषां जननमरणादिमत्त्वेन असम्भवात्। श्रियस्तु महामाहात्म्यवत्वेन वेदोक्तत्वादसम्भवाभावात् नोपचरितत्वकल्पनम्। उदाहृतश्रुतिषु नित्ययौवनं ज्ञानमयत्वं सर्वदेवतापूज्यत्वमित्यादयो धर्माः स्पष्टं प्रतीयन्ते। एवमुत्तरत्रेति॥ तत्रोत्तरत्रेति कुत्रेति न प्रतिभासते। अत आह भावदीपकारः -अव्यवहितभाष्योदाहृतायां 'चतुः-शिखण्डा' इति श्रुताविति॥

'ज्ञानाद् ध्यानं विशिष्यते' इति गीता । तत्र ज्ञानमात्रात् सज्ञानं ध्यानमिति भाष्यम् । तद्विवृतं टीकाकारैः । सध्यानस्यापि ज्ञानस्य कस्मिंश्चित्पुरुपे सम्भवात् तथाऽज्ञानपूर्वस्य ध्यानस्यापि कस्मिंश्चित्पुरुपे सम्भवाच्च ज्ञानाद् ध्यानं कथं विशिष्यते इत्याशङ्क्य भगवत्पादैः ज्ञानमात्रात् सज्ञानं ध्यानं विशिष्यत इत्युक्तमिति ॥

'यो न हृष्यति न द्वेष्टि' इत्यत्र भाष्यं हर्पादिभिर्मुक्त इत्युक्ते कादाचित्कत्वमपि भवतीति 'यो न हृष्यति' इत्युक्तमिति । तथोक्तेः सार्वकालिकत्वं कथं लब्धमिति न ज्ञायते । अत आहुष्टीकाकाराः क्रियाप्रबन्धे लडिति । क्रियाप्रबन्धे विहितेन लटा सर्वकालीनत्वं प्रतिपादयतीति । तद्विवृतं भावदीपे । 'नाद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति सूत्रे क्रियाप्रबन्धे सामीप्ये च गम्यमाने अनद्यतनवत् प्रत्ययविधिर्न भवतीति तदर्थः । क्रियाप्रबन्धो नाम सातत्येनानुष्ठानम् । यथा यावज्जीवमन्नमदात् यावज्जीवमन्नं दास्यतीति । क्रियाप्रबन्धे गम्यमाने भूते लङ् भविष्यति, लृट्प्रत्ययश्चानद्यतने न भवत इत्युक्त्या अद्यतने लटोऽप्रतिपेधात् क्रियाप्रबन्धे लडित्युक्तम् । तथाच हृष्यतीति सन्ततहर्षवान् इत्यर्थो भवतीति ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

जीवस्वरूपं भगवत्स्वरूपं क्षेत्रशब्दितभगवदावासस्थानं च पूर्वं विप्रकीर्णतयोक्तं बुद्ध्यारोहाय पिण्डीकृत्योच्यतेऽस्मिन्नध्याये ।

तत्रादावर्जुनः प्रकृतिपुरुपक्षेत्रक्षेत्रज्ञज्ञानसाधनज्ञेयानां ज्ञानमर्थयते । तत्र भगवानाह । अव्यक्तादिकं भगवदावासस्थानत्वात् क्षेत्रमित्युच्यते । एतज्ज्ञानी भगवानेव क्षेत्रज्ञः । प्रकृतिः महदहङ्कारबुद्धिमनांसि दशेन्द्रियाणि पञ्चतन्मात्राः पञ्चभूतानि च क्षेत्रप्रकाराः । इच्छाद्वेपसुखदुःख-देहादयः क्षेत्रविकाराः । भगवानेव प्राधान्येन ज्ञेयः । तज्ज्ञानसाधनानि तु अमानित्वम् अदम्भित्वम् अहिंसा क्षमा आर्जवम् आचार्योपासनं शौचं स्थैर्यं मनोनिग्रहो वैराग्यम् अहङ्कारवर्जनं पुत्रादिपु सङ्गाभावः साम्यम् अनन्यभक्तिरेकान्ते वासः शास्त्रपर्यालोचनमित्यादीनि । एतदभावे न सर्वथा भगवज्ज्ञानम् ॥

ज्ञेयो भगवान् कार्यदेहादिहीनो मूर्तामूर्तातीतः सर्वत्र सर्वेन्द्रियवान् सर्वेन्द्रियेपु सर्वेन्द्रियशक्तिमान् प्राकृतसर्वेन्द्रियवर्जितः प्राकृतगुणवर्जितोऽप्राकृतकल्याणगुणपूर्णः सर्वजगद्व्यापी सूक्ष्मत्वादविज्ञेयो दूराद्दूरोऽन्तिकादन्तिको विभक्तेपु भूतेपु स्वयमविभक्तो भूतभर्ता सृष्टिलयकर्ता परञ्ज्योतिर्ज्ञानरूपो ज्ञानगम्यस्सर्वस्य हृदि सन्निविष्टश्च ॥

सर्वे विकाराः प्रकृतिसम्भवाः । देहेन्द्रियादिकर्तृत्वे प्रकृतिशब्दितलक्ष्मीः कारणम् । सुख-दुःखभोक्तृत्वे पुरुषशब्दितनारयणः कारणम् । जीवस्तु प्राकृतदेहस्थितो विषयसङ्गात् सदसन्मिश्र-योनिषु सञ्चरन् सुखदुःखेऽनुभवति । तत्साक्षित्वेन देहेऽस्मिन्नेव स्थितः परमात्मा शुभैकभोक्ता । एवंविधापरोक्षज्ञानी कामचारोऽपि मुच्यत एव । केचिद्ध्यानयोगेन केचन ज्ञानयोगेन केऽपि कर्मयोगेन परेऽपि स्वोत्तमेभ्यः श्रुत्वोपास्य संसारमतितरन्ति ॥

यद्यत् सत्वं जायते स्थावरं जङ्गमं वा तत्तत् क्षेत्रक्षेत्रज्ञसंयोगादेव । यः सर्वत्र स्थितं भगवन्तं साम्येन पश्यति नश्यमानेषु पदार्थेषु न नश्यमानं पश्यति तमेव कर्तारं पश्यन्नात्मानमकर्तारं पश्यति स एव ज्ञानी । अनादिर्निर्गुणो भगवान् शरीरस्थोऽपि शरीरधर्मेन लिप्यते, यथाऽऽकाशः सर्वत्रावस्थितोऽपि नोपलिप्यते । यथा रविः सर्वं प्रकाशयत्येवं भगवान् कृत्स्नं चेतनाचेतनजातं प्रकाशयति । य एवं विदुस्ते ब्रह्म यान्तीति ॥

'तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च' इति गीतावाक्यस्य 'यद्विकारि' इत्येतत् भाष्ये 'येन विकारेण युक्तम्' इति व्याख्यातम् । तद्भावमाह टीकाकारः । यो विकारो यस्य तत् यद्विकारि इति केनचिद् व्याख्यातम् । तदसत् । बहुव्रीहितायामिनेर्वैयर्थ्यात् । किन्तु यश्चासौ विकारश्चेति यद्विकारः सोऽस्यास्तीति यद्विकारीति कर्मधारयात् इनिरिति भाव इति ॥ तत्र इनेर्वैयर्थ्यं स्पष्टीकरोति भावदीपकारः । 'अत इनिठनौ' इति मत्वर्थे विहितः इनिप्रत्ययः । बहुव्रीहिणैव सोऽस्यास्तीति मत्वर्थस्य लाभात् पुनरिनिप्रत्यये वैयर्थ्यमिति भावः ॥

कार्यकारणकर्तृत्वे' इत्यत्र कार्यं शरीरं कारणानीन्द्रियाणीति भाष्ये व्याख्यातम् । तदभिप्रायमाह टीकाकारः । कार्यकारणयोरभेदेन कारणानामपि कार्यत्वात् पृथगुक्तिव्यर्थेत्यतो रूढिमाश्रित्य कार्यकारणशब्दौ व्याख्याताविति ॥

'य एवं वेत्ति पुरुषम्' इत्यस्य भाष्यम् 'अन्यत्र महातात्पर्यविरोधः । उत्कर्षे हि महातात्पर्यमिति' । तत्र अन्यत्रेति कुत्रेत्यप्रतिपत्तेः सङ्गतिं दर्शयन्नाह टीकाकारः । अत्र कश्चित् 'य एवं वेत्ति पुरुषं साक्षादयमहमस्मि' इत्येवमध्याहारेण जीवेश्वरैक्यं व्याख्यातवान् । तद्दूषयति । जीवेश्वरैक्ये सर्ववेदानां प्राधान्येन प्रतिपादकत्वमिति यत् तत्र निरोध इति । कथमित्यत उत्कर्षे इत्युक्तमिति । तदपि कुतः । प्रागुक्तयुक्तेरिति । तत्र प्रागुक्तयुक्तिं स्मारयति भावदीपकारः । द्वितीयाध्याये 'महातात्पर्याच्च' इत्युपक्रम्य 'मोक्षो हि' इत्यादिना मोक्षरूपपरमपुरुषार्थहेतुभगवत्प्रसादकारणतदीयगुणोत्कर्षज्ञान-जननाय सर्ववेदानां प्रवृत्तत्वात् इत्युक्तयुक्तेरिति ॥

।। अथ चतुर्दशोऽध्यायः ।।

त्रिगुणात्मकप्रकृत्या वन्धनप्रकारं तन्मोचनप्रकारं चाह भगवान् अस्मिन्नध्याये ।

लक्ष्मीर्भगवद्गर्भसन्धारणार्था भार्या । तस्यां भगवता गर्भाधानेन सर्वप्राणिनां जन्म भवति । न केवलमादिसर्ग एवानयोः कारणत्वं किन्तु सर्वयोनिषु यानि सत्वानि भवन्ति तेषां सर्वेषां रमानारायणावेव मातापितरौ । प्रकृतिसम्भवास्त्रयो गुणा देहिनं निबध्नन्ति । तत्र सत्वं सुखसङ्गेन, रजः कर्मसङ्गेन, तमस्तु निद्रादिभिर्वध्नाति । गुणत्रयमध्ये य उत्कटः स इतरावभिभूय स्वकार्यं करोति।।

प्रकाशप्रवृत्तिप्रमादैस्त्रिगुणविवृद्धिर्ज्ञेया । तत्फलं तु क्रमेण दुःखहीनं दुःखमिश्रमज्ञानं च । गुणत्रयविवृद्धिकाले मृतानां क्रमेण सात्विककुले काम्यकर्मिकुले दैत्यकुले च जन्म भवति । सात्विकानां जनआदिलोकप्राप्तिः । राजसानां स्वर्गादिप्राप्तिः । तामसानां निरयादिप्राप्तिः । गुणा एव परिणामिकर्तारः । एतत्त्रिगुणात्यये जन्ममृत्यादिदुःखैर्मुक्तोऽमृतमश्नुते इति ।।

एवमुपदिष्टोऽर्जुनो गुणातीतस्य लक्षणमाचारं त्रिगुणात्ययोपायं च पृच्छति । तत्र भगवानाह - यदा प्रकाशप्रवृत्तिमोहान् सम्प्रवृत्तान् न द्वेष्टि निवृत्तान् न काङ्क्षति तदा त्रिगुणातीतो ज्ञातव्यः । स गुणकृतावैष्णवकर्मकरणाय न चेष्टते । वैष्णवान्येव कर्माण्याचरति । सुखदुःखादिद्वन्द्वप्राप्तौ उत्सेकानुत्सेकहीनो भवति । अव्यभिचरितभक्तियोगेन सेवनमेव त्रिगुणतरणोपायः । गुणातीतो लक्ष्मीसमीपं प्राप्य तदनुगृहीतो भगवन्तं प्राप्नोतीति ।।

ज्ञानानां ज्ञानमुत्तमं वक्ष्यामीति प्रतिज्ञाय मम योनिरित्यादिना तदुक्त्वा तदनन्तरं सत्वं रजस्तम इत्यादिना वन्धप्रकारो दर्शितो गीतायाम् । तत्र भाष्यं च वन्धप्रकारं दर्शयति साधनानुष्ठानायेति । तदभिप्रायमाह टीकाकारः । ज्ञानं प्रतिज्ञाय तदुक्त्वा बन्धप्रकारवर्णनेऽसङ्गतिः स्यादित्याशङ्का । तत्रेदं समाधानम् । यो हि बद्धोऽस्मीति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वाऽनुतिष्ठतीत्यतो वन्धोच्छेदसाधनानुष्ठानाय तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतवन्धप्रकारं दर्शयति । एतदादिपञ्चनामध्यायानां प्राधान्यतः साधनज्ञापनार्थं प्रवृत्तत्वादिति ।।

'प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव । न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति' इति गीतावाक्यं 'प्रायो न द्वेष्टि नकाङ्क्षति' इति भाष्ये व्याख्याय तत्र भाल्लवेयशाखासम्मतिदत्ता । तदभिप्रायः टीकाकारैः सुन्दरं वर्णितः । सत्वादयो गुणा द्विविधाः । स्थूलाः सूक्ष्माश्चेति तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायन्ते । सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः । तत्राद्येषु गुणातीतस्य

द्वेपासङ्गे प्रायो न स्तः । न तु सर्वथा न स्त इति । प्रारब्धवशात् कदाचित् सम्भवात् । द्वितीयेषु तु आकाङ्क्षादिकं विद्यत एवेति ॥

इदं ज्ञानमित्यादिश्लोकद्वयेन प्रतिज्ञातं ज्ञानमुक्तमिति टीकाकारैरुक्तम् । तत्रेयमाशङ्का - ज्ञानं सम्पाद्यम् । न वचनार्हम् । तत्कथमेवं व्याख्यानमिति । तत्समाधानमुक्तं भावदीपे । ज्ञानमित्यत्र ज्ञायत इति ज्ञानमिति कर्मव्युत्पत्त्या ज्ञातव्यमित्यर्थः ।ल्युटो भाववत् कर्मण्यपि व्युत्पत्तिरस्तीति भावः ॥ ज्ञातव्यं द्वयमुक्तम् । प्रकृतेः सर्वकारणत्वं प्रकृतौ भगवतो बीजाधायकत्वं चेति ॥

समदुःखसुखः -तुल्यप्रियाप्रियः इत्यत्र भाष्ये तुल्यत्वार्थ उक्तः पुरस्तादित्युक्तम् । तत्र टीकायां तुल्यत्ववाचिनः शब्दस्यार्थ इत व्याख्यातम् । एतद्भावो भावदीपे स्पष्टीकृतः । यद्यपि द्वितीयाध्याये तुल्यतार्थकथनप्रसङ्गे तुल्यशब्द एव नास्ति । तथापि दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः इत्यादि तुल्यत्ववाचिशब्दस्य सत्वात् तुल्यत्ववाचिनः शब्दस्यार्थ इत्युक्तमिति ॥

॥ अथ पञ्चदशोऽध्यायः ॥

समग्रं संसारहेतुप्रकृत्यादिजगत्स्वरूपं प्रदर्श्य तदत्ययसाधनं प्रपञ्चयत्यनेनाध्यायेन ।

श्वः एकरूपेण न तिष्ठतीति वा अश्ववत् चञ्चलत्वेन तिष्ठतीति वाऽश्वत्थसञ्ज्ञकमिदं जगद्वृक्षम् उच्चतमत्वेनोर्ध्वसञ्ज्ञकभगवदाख्यमूलयुक्तम् । अचित्प्रकृतिरस्य जगद्वृक्षस्य परिणामितया मूलम् । चित्प्रकृतिरपि तदधिष्ठातृत्वात् मूलम् । एवं त्रिमूलस्यास्य नीचत्वादधःसञ्ज्ञका महदाद्यष्टौपदार्थाः साभिमानिनः शाखा इत्युच्यन्ते । वेदाः पर्णस्थानीयानि । लोके पर्णोत्पत्तावेव फलोदयदर्शनात् । काममोक्षरूपे फले ॥

सत्वादिगुणैः प्रवृद्धाः पूर्वोक्तशाखाः कारणभूताव्यक्ताख्यमूले सूक्ष्मरूपेण व्याप्ताः । मूलानि च कारणत्वेन शाखासु प्रविष्टाः । तानि च कर्माण्यपेक्ष्य फलादातॄणि । विकारित्वादस्य जगद्वृक्षस्य रूपं यथास्थितमवगन्तुं दुःशकम् । अस्य सृष्टिस्थितिलयकर्ता विष्णुरपि सूक्ष्मत्वान्नोपलभ्यते । वैराग्याख्यशाणेन तेजितेन ज्ञानाख्यासिना जगद्वृक्षस्य विवेचनाख्यं छेदनं कृत्वा ब्रह्मान्वेष्टव्यम् । तदुपायस्तु भगवच्छरणागतिरेव ॥ भगवत्प्रतिपत्तौ साधनान्तराणि च मानमोहसङ्गराहित्यम् । भगवच्छ्रवणादौ निरतत्वं निष्कामत्वं द्वन्द्वसञ्ज्ञेषु सुखदुःखादिषु साम्यमित्यादीनि ॥

भगवत्पदं सूर्यादिर्न प्रकाशयति । तत् प्राप्य पुनः संसारं न याति । जीवो भगवतो भिन्नांशो न मत्स्यादिवत् स्वरूपांशः । भगवान् यद्यच्छरीरमाप्नोति स्वेच्छया तत्तत्प्रति जीवमादाय गच्छति ।

देहे स्थित्वा श्रोत्रादिद्वारा भोगे सत्यपि भगवान् गुणान्वितमेव भुङ्क्ते न त्वशुभम् । एतद्गुणविशिष्टं भगवन्तं विमूढा अकृतात्मानो यतन्तोऽपि न पश्यन्ति । योगिनो यतमाना एनं पश्यन्ति ॥

आदित्यादितेजो भगवदधीनम् । भगवान् भूमिमाविश्य निखिलं बिभर्ति । सोमगतः सर्वाश्चौषधीः पुष्णाति । वैश्वानररूपेण चतुर्विधमन्नं पचति । स सर्वहृदि सन्निविष्टः । तत एव सर्वेषां ज्ञानाज्ञानादि भवति । स एव सर्ववेदवेद्यः । व्यासरूपेण वेदान्तकृत् ।

न केवलमेवं सर्वान्तर्यामी किन्तु सर्वोत्तमश्च । तथाहि- लोकेऽस्मिन् शरीरक्षरणहेतुना ब्रह्मादयः क्षरशब्दिताः पुरुषाः सन्ति । अक्षरदेहत्वात् श्रीरक्षरः पुरुषः उच्यते । पुंवच्छक्तिमत्वात् पुल्लिङ्गत्वं तस्या युज्यते । क्षराक्षराभ्यामुत्तमोऽन्यः पुरुषः पुरुषोत्तमः । भगवान् कृष्ण एव सः ॥

अत्र युक्तिरप्यस्ति । भगवान् पुरुषाभ्यामुत्तमः तद्भर्तृत्वात्, यो यद्भर्ता स तस्मादुत्तमः सम्मतवदिति । लोकनाशेऽपि लोकप्रवर्तकतया तन्निविष्टो भगवान् न नश्यति तादृशैश्वर्योपेतत्वात् । एवं श्रीकृष्णं पुरुषोत्तमं जानन् सर्वज्ञो भवति । सर्वशास्त्रार्थत्वादस्यैव तत्त्वस्य । अतिगोप्यत्वादेतत्प्रमेयं यस्मै कस्मैचिन्न वाच्यम् । एतज्ज्ञात्वाऽपरोक्षज्ञानी भूत्वा मुक्तो भवति इति ॥

ऊर्ध्वमूलमित्यत्र ऊर्ध्वो विष्णुरिति व्याख्याय पुनरूर्ध्व उत्तम इति व्याख्यातं भाष्ये । तदभिप्रायमाह टीकाकारः । ऊर्ध्वशब्दस्य विष्णुवाचित्वे प्रवृत्तिनिमित्तमाह भाष्यकार उत्तम इतीति ॥

'तमेव चाद्यं पुरुषं प्रपद्ये' इत्यत्र प्रपद्ये इत्येतत् प्रपद्येतेति व्याख्यातं भाष्ये । तदभिप्रायमाह टीकाकारः । ब्रह्मज्ञानार्थं तदुपायो विधेयः । प्रपद्ये इति लटि उत्तमपुरुषप्रयोगः कथमित्यत व्यत्ययो बहुलमिति वचनमाश्रित्य विध्यन्तत्वेन व्याख्याति प्रपद्येतेति ॥

'अश्वत्थं प्राहुरव्ययम्' इत्यत्र जगतः अश्वत्थत्वं कुत इति शङ्कायां भाष्ये श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः इत्युक्तम् । तत्र तिष्ठतीति लडर्थेऽनादरसूचनाय लडिति टीका । अस्य भावं स्पष्टयति भावदीपकारः ।

श्वः इत्युक्त्वा तिष्ठतीति लट्प्रयोगः कथम् । स्थाता इति प्रयोक्तव्यं किल इत्याशङ्कायां व्यत्ययो बहुलमित्युक्तेः लट्प्रयोगः । किमर्थमयं व्यत्ययः कृत इति चेत् -अनद्यतने भविष्यति काले लुट् भवतीत्युक्तत्वात् कालविशेषे जगत् यथेदानीं तथा स्थातेत्यर्थः स्यात् । स माभूदिति लट्प्रयोगः । तेन क्रियाप्रबन्धे लटः स्मृतेः जगद्विपरिणामे सातत्यं सूचितं भवतीति ॥

असङ्गशस्त्रेणेत्यत्र सङ्गराहित्यसहितेन ज्ञानेनेति भाष्यम् । जगच्छेदने ज्ञानस्यैव शस्त्रत्वादेवं व्याख्यातम् । टीकायामेतद्व्याख्याने दध्योदनादिवत् इति दृष्टान्त उक्तः । तदभिप्रायस्यासुगमत्वात्

भावदीपे दधिसक्तोदनो दध्योदन इति यथा प्रयोग एवमत्रापि असङ्गसहितशास्त्रमिति मध्यमपदलोपी समास इति स्पष्टीकृतम् ।।

।। अथ षोडशोऽध्यायः ।।

दैवासुरसम्पद्विभागार्थोऽयमध्यायः ।।

अभयं चित्तप्रसादो ज्ञानोपायनिष्ठत्वं दानमिन्द्रियनिग्रहो यज्ञः स्वाध्यायस्तप आर्जवम् अहिंसा सत्यम् अक्रोधः त्यागो भगवन्निष्ठत्वम् अपैशुनं दयाऽलौल्यं मृदुत्वम् अकार्यकरणे लज्जा स्थैर्यं तेजः क्षमा जिह्वोपस्थजयः शौचम् अद्रोहोऽहङ्काररराहित्यमित्यादयो दैवीं सम्पदं प्राप्तस्य भवन्ति । आसुरीं सम्पदं प्राप्तस्य तु दम्भदर्पाभिमान क्रोधपारुष्याज्ञानानि भवन्ति ।

दैवी सम्पद्विविधमोक्षाय भवति । असुरीसम्पत्तु नीचस्थाने बन्धाय भविता । लोकेऽस्मिन् द्वावेव स्वभावौ दैव आसुरश्चेति । दैवस्य प्रागेवोक्तत्वादासुरः प्रपञ्च्यते । आसुरा विहिते प्रवृत्तिं निषिद्धे निवृत्तिं च न विदुः । शौचाचारसत्यानि तेषु न विद्यन्ते । तेजगत्सृष्टिस्थितिलयकर्तारं जगत्स्वामिनं विष्णुं न जानन्ति । जगन्मिथ्या ज्ञानबाध्यं नियन्तृहीनं सदसद्विलक्षमित्याहुः । एतत्सर्वं मायिमते द्रष्टव्यम् ।

एतां दृष्टिमाश्रित्य स्वयं नष्टा जगन्नाशाय कलियुगादौ प्रभवन्ति । कामदम्भमानमदान्विताः सन्तः कुशास्त्राभ्यासजन्यविपरीतनिश्चयवन्तोऽशुचिव्रताः सन्तः क्षुद्रभोगाय प्रवर्तन्ते । मरणान्तिक-चिन्तामाश्रित्य विषयभोगैकरता भवन्ति । आशापाशाशतैर्बद्धाः कामभोगार्थमन्यायेन अर्थसञ्चयं कुर्वन्ति । लोभाभिभूताः सन्तोऽहमेवेश्वरो भोगी सिद्धो बलवान् सुखी सम्पन्नः कुलीनोऽसदृशो यक्ष्ये दास्यामि मोदिष्य इति कथ्यन्ते । मदान्धाः हिरण्यकशिपुर्वा दुर्योधनो वेव ।।

अनेकविधभ्रान्तिमन्तो भार्यापुत्रादिमोहजालनिबद्धा नरके पतन्ति । वयमेव पूज्या इति मन्यमाना अत एव गुरुष्वनम्रा मदाविष्टा दम्भेनाविधिपूर्वकं भजन्ते । ईश्वरः कारयिता अस्ति तर्हि अकुर्वाणं मां कारयतु कुर्वाणं वा विघातयतु इत्येवं भगवदपलापं कुर्वन्तो निर्दोषे भगवति दोषान् वदन्तो यजन्ते । नीचान् क्रूरांस्तान् भगवद्द्वेषिणो भगवान् आसुरीष्वेव योनिषु पुनः पुनः क्षिपति । जन्मजन्मासुरीं योनिमापन्ना भगवन्तमप्राप्यैव नित्यनिरयलक्षणं गतिं यान्ति ।

कामः क्रोधो लोभश्चेति त्रिविधं नरकद्वारम् । एतैर्विहीनः पुमर्थसाधनमाचरन् मोक्षं याति । शास्त्रविधिमुत्सृज्य कामचारे नापि सिद्धिः नाप्यैहिकामुष्मिकसुखप्राप्तिः । तस्माच्छास्त्रं प्रमाणीकृत्य कार्याकार्ये विनिश्चित्य शास्त्रोक्तं कर्म कार्यमिति ।।

'सम्पदं दैवीमभिजातोऽस्ति' इत्येतत् दैवीं सम्पदमाभिजातः प्रति जातः इति व्याख्यातम् । तत्रेयं प्रमेयदीपिका । नायं जनिधातुः सकर्मकः । तत्कथं सम्पदमिति द्वितीयेत्याशङ्क्य केचित् व्याचक्षते अभिलक्ष्य जात इति । तदसत् । अर्जुनस्य देवन्द्रावतारत्वेन देवत्वमुद्दिश्य जन्मायोगादित्याशयेन भगवानेवमाह- तत्रायमभिप्रायः । नायमभिरुपसर्गः येन तस्य जनिसम्बन्धे द्वितीयाऽनुपपत्तिः लक्षिसम्बन्धे पूर्वोक्तानुपपत्तिः । किन्तु प्रतीत्यर्थे अभीति प्रयोगः । प्रतीत्यस्य कर्मप्रवचनीयत्वात् कर्मप्रवचनीययुक्ते द्वितीया युक्तेति । दैवी सम्पत् जातस्य तव लक्षणमित्यर्थः कर्मप्रवचनीयसंज्ञायाः प्रतीत्यादेः लक्षणाद्यर्थचतुष्के प्रमितत्वात् ।।

आसुरीसम्पद्विवरणे 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' इत्येतच्छ्लोकार्थः भगवत्पादैः जगतः सत्यं प्रतिष्ठा ईश्वरश्च विष्णुः तद्वैपरीत्येनाहुः इति व्याख्यातः । तद्भावमाह टीकाकारः न केवलं जगतो मिथ्यात्वादि वदतामसुरत्वमनेनोच्यते । किन्तु जगज्जन्मादिकारणं विष्णुं ये न मन्यन्ते तेषां सर्वेषामपीति भावेनाहेति ।।

आसुरलक्षणे पठितस्य दर्पशब्दस्यार्थ उक्तो भाष्ये 'राजादेस्तु मदाद्भीतेरदृष्टिर्दर्प उच्यते' इति । अत्र टीकायां 'अदृष्टिः' इत्येत् 'अनुत्पत्तिः' इति व्याख्यातम् । तत्कुत इति दुर्गमत्वात् भावदीपेऽस्य भाव उद्घाटितः । यथाश्रुतेऽर्थे स्वीक्रियमाणे भीतेर्मनोधर्मस्य ज्ञातैकसत्वेनादृष्टेरयोगादेवं व्याख्यातमिति । तत्रैव मदादित्युक्त्या धात्वर्थोऽप्यनुगत इति टीकायाम् । कोऽयं धात्वर्थ इति भावदीपे स्पष्टीकृतम् । दर्पहर्षविमोहनयोः इति । मदेरपि हर्षार्थकत्वेन धात्वर्थानुगम इति भावः ।।

दैवीं सम्पदम् अभिजातः इत्यत्राचार्यैः प्रतिजातः इति व्याख्यातम् । तद्भावः स्पष्टीकृतष्टीकायां 'नायमभिरुपसर्गः । येन तस्य जनिसम्बन्धेऽस्य धातोरकर्मकत्वात् द्वितीयानुपपत्तिः स्यात् । किन्तु प्रत्यर्थलक्षणे कर्मप्रवचीनीयः' इति । एतद्भावस्याप्यनुगमत्वात् भावदीपकाराः आहुः 'लक्षणेत्थम्भूत ाख्यानभागवीप्सासु प्रतिपर्यनवः' इति प्रतीत्युपसर्गस्य लक्षणरूपार्थे कर्मप्रवचनीयसंज्ञोक्तेरिति भावः इति । तथाच 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन द्वितीयोपपद्यते ।।

।। अथ सप्तदशोऽध्यायः ।।

सत्वादिगुणत्रयविभागकथनार्थमयमध्यायः प्रवृत्तः ।

तत्रादावर्जुनो ये शास्त्रविधिमज्ञात्वा श्रद्धया यजन्ते ते किं सात्विका राजसास्तामसा वेति पृच्छति । भगवानेवं परिहरति । ते त्रिविधा अपि सन्ति । सात्विकी राजसी तामसीति त्रिविधा श्रद्धा

जीवस्वरूपानुरूपा । तत्र सात्त्विका देवान्, राजसा यक्षरक्षांसि, तामसा भूतप्रेतान् यजन्ते, तेषां मोक्षः, साङ्कल्पिकः स्वर्गः, भूतादित्वं च क्रमात् फलम् । न केवलं तामसानां भूतादित्वप्राप्तिः किन्तु अन्ते तमःप्राप्तिश्च भवति ॥

आहारो यज्ञस्तपोदानमित्यादि सर्वं सात्त्विकादिभेदेन त्रिविधम् ।

तत्र आयुस्सत्त्वबलारोग्य-सुखप्रीतिवृद्धिहेतवो रसभरिताः स्नेहवन्तः सेवनेन बहुकालगुणप्रदा मनोहारिण आहाराः सात्त्विकाः । अतिशयेन कट्वाम्ललवणा अत्युष्णाः सर्षपाद्यास्तीक्ष्णाः स्वतो नीरसाः सन्तापकरा आहारा राजसाः । ते दुःखशोकरोगप्रदाः । यामानन्तरितपाकं गतरसं दुर्गन्धं दिनान्तरितपक्वम् उच्छिष्टम् अपवित्रं च तामसम् ।

फलाकाङ्क्षां विना विधिज्ञानपूर्वकः मनस्समाधानपूर्वको यज्ञः सात्त्विकः । फलानुसन्धानपूर्वकः दम्भार्थो यज्ञो राजसः । विधिमन्त्रदक्षिणाश्रद्धान्नदानरहितो यज्ञस्तामसः ।

तपश्शरीरवाङ्मयमानसभेदेन त्रिविधम् । तत्र देवद्विजगुरुज्ञानिपूजनं बाह्याभ्यन्तरं शौचं त्रिकरणशुद्धिः ब्रह्मचर्यमहिंसा च शारीरं तपः । परासन्तापकरं सत्यं प्रियं हितं च वाक्यं स्वाध्यायश्च वाङ्मयं तपः । मनःप्रसादोऽक्रौर्यं मननं मनोनिग्रहोऽकामत्वं च मानसं तपः । एतत्त्रयमपि सात्त्विकादिभेदभिन्नम् । फलापेक्षारहितं भगवदर्पणबुद्ध्या कृतं सात्त्विकम् । सत्कारमानपूजार्थं दम्भेन कृतं राजसम् । आत्मपीडया परपीडार्थं कृतं तामसम् ॥

आस्तिक्यबुद्ध्या देशकालपात्रविवेचनेन दानं सात्त्विकम् । प्रत्युपकारार्थम् अन्यायमार्जितस्य दानं राजसम् । देशकालपात्राण्यनालोच्य सत्काराराहित्येन अवज्ञापूर्वकं दानं तामसम् ॥

पूर्वोक्तेषु सात्त्विकादिलक्षणेषु एकैकमपि सात्त्विकादिहेतु, किं मिलितमिति द्रष्टव्यम् ॥

भगवतो गुणपूर्णत्वात् जगत्प्रविष्टत्वाच्च ॐ इति नाम । वेदैकवेद्यत्वेन परोक्षत्वात् तदिति नाम । निर्दोषसर्वशुभगुणपात्रत्वात् सदिति नाम । एतन्नामार्थज्ञानपूर्वकम् ओमित्युच्चार्य तत्फलं मे भूयादित्यननुसन्धाय भगवद्विषयतयाऽनुष्ठितं कर्म तारकम् । तद्विरुद्धं तु इह वा प्रेत्य वा फलाय न भवतीति ॥

'ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा' इत्यत्र भाष्ये ब्राह्मणादीनां विधानं नाम निर्माणम् । वेदानां तु व्यञ्जनं वेदानामपौरुषेयत्वेन निर्माणायोगात् इत्यभिप्रायेण 'वेदविधिर्व्यञ्जनम्' इति व्याख्यातम् । तत्र विधिशब्दग्रहणस्य स्वारस्यं विवृतं टीकाकारैः । परमेश्वरस्य वेदव्यञ्जनं

नाध्यापकवत्। किन्तु तत्र स्वातन्त्र्यमप्यस्ति। वेदो हि नियोगापरपर्यायविध्यात्माऽस्ति। नियोगश्च स्वतन्त्रनियोजकपुरुषाधीनम्। न चैवं पौरुषेयत्वापत्तिः। अनादिसिद्धेनैव शब्दार्थसम्बन्धेन तस्य नियोक्तृत्वाभ्युपगमादिति ॥

'मां चैवान्तः शरीरस्थं कर्शयन्तः' इत्यत्र भगवत्कर्शनं नामाल्पत्वदृष्टिरेवेति भाष्यकाराः। तदाभिप्रायमाहुः टीकाकाराः ॥ निर्विकारस्य भगवतः कथं कर्शनमुच्यत इत्यत एवमाह भगवान् भाष्यकारः। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति सूत्रात् कर्शप्रातिपदिकात् दृष्टिरूपधात्वर्थविवक्षायां णिचि तस्माल्लटिरूपमिति ॥

सुखप्रीतिविवर्धनाइत्यत्रभाष्येप्रीतिरानन्तरिकाइतिव्याख्यातम्। अत्रटीका। ठन्प्रत्ययान्तमिति। तत्र स्पष्टीक्रियते भावदीपे। ठक्प्रत्ययान्तत्वे टिड्ढाणञ् इत्यादिना ङीपि आनन्तरिकी इति भाव्यम्। अतो नायं ठगन्तः, अपि तु तद्धिताः ति बहुवचनिर्देशादन्य एवेत्याहेति ॥

ओ३म् तत् सत् इत्यादिना कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाहेति भाष्यम्। तत्रेतिकर्तव्यतेत्येतत् 'इत्थम्भावः' इति टीकायामुक्तम्। तद्विवृतं भावदीपे। ओ३म् तत् सत् इति शब्दत्रयार्थभगवज्ज्ञानभक्त्यादिपूर्वकं फलानभिसन्धानेन ओमादिशब्दत्रयार्थभगवन्तमुद्दिश्य ब्राह्मणैः सह यज्ञतपोदानानुष्ठानं कार्यमित्येवं यज्ञाद्यनुष्ठानोपयुक्ताङ्गकलाप इत्यर्थ इति। अहो भावदीपकाराणां भावोद्घाटनशैली ॥

॥ अथाष्टदशोऽध्यायः ॥

पूर्वाध्यायेपूक्तस्य सर्वस्य सङ्ग्रहरूपोऽयमध्यायः।

तत्रादावर्जुनः सन्यासस्य त्यागस्य च स्वरूपनिर्णयाय पृच्छति। भगवान् काम्यानां कर्मणां न्यासः सन्यासः, सर्वकर्मफलत्यागस्त्याग इति स्पष्टयति। बन्धकत्वात् काम्यकर्म त्याज्यम्। भगवत्प्रीत्यर्थं यज्ञदानतपःकर्म कार्यमेव। न त्याज्यम्। इदमुभयमपि मनीषिमतमेव॥

फलाभिसन्धिं ममतां च त्यक्त्वा पावनानि यज्ञदानतपांसि कार्याण्येव। स्वरूपत्याग एव त्याग इति मिथ्याज्ञानाद्यज्ञादिपरित्यागस्तामसः। दुःखकारणमिति कायक्लेशभयात् त्यागो राजसः। नियतं कर्म कृत्वा सङ्गफलत्यागस्तु सात्त्विकः। सात्त्विकत्यागी तात्कालिककायक्लेशदं कर्म न द्वेष्टि। पुण्यफलं नेच्छति। तत्त्वनिश्चयवान् भवति। सर्वथा कर्मत्यागस्य प्राणिना त्यक्तुमशक्यत्वात् कर्मफलत्याग एव त्यागः। एतादृशत्यागिनां कर्मफललेपो नास्ति।

कर्मणि फलवत् कर्तृत्वाभिमानमपि त्याज्यम् । सर्वकर्मणां देहाद्यधिष्ठानं, स्वतन्त्रकर्ता विष्णुः , इन्द्रियस्रुक्स्रुवादि करणं, देहेन्द्रियमनसां क्रियापरपर्याया चेष्टा, अदृष्टं चेति पञ्चकारणानि सन्ति । एवंसति जीवं स्वतन्त्रकर्तारं यो मन्यते स दुर्मतिः । यस्य नाहङ्कारो नापि फलरागादिलेपः स रुद्रो यमो वा विश्वहननेनापि न वध्यते । जीवस्य कर्म प्रति स्वातन्त्र्याभावेऽपि विधिविषयं ज्ञानं चेष्टादिरूपं ज्ञेयं सर्वप्रेरकेश्वरसन्निहितज्ञात्राख्यजीवं चादाय कर्मसु वैदिकी प्रेरणा युज्यते ॥

ज्ञानं कर्म कर्ता च सात्त्विकादिभेदेन त्रिधा । तद्यथा - परस्परं भिन्नेषु तारतम्योपेतेषु सर्वपदार्थेषु तदाधारकत्वेन अधिष्ठानभेदेनापि भेदहीनत्वेन स्थितं भगवन्तं यद्विषयीकरोति तत् सात्त्विकं ज्ञानम् । विष्णोरन्यत्र जगति यथार्थं विष्णौ सन्दिग्धं राजसम् । यज्ज्ञानं जीवब्रह्माभेदविषयकं जगदिदं जीवकल्पितमिति विषयीकुर्वत् अल्पं युक्तिशून्यं च तत्तामसम् । हरिभक्तिपूर्वकं तदर्पणबुद्ध्या क्रियमाणं स्ववर्णाश्रमोचितं कर्म सात्त्विकम् । फलापेक्षया कर्तृत्वाभिमानेन क्रियमाणं राजसम् । अनुबन्धं नाशं परपीडां स्वसामर्थ्यं चाविमृश्य अहं कर्तेति मिथ्याज्ञानेन क्रियमाणं तामसम् ॥

फलस्नेहहीनः स्वातन्त्र्याभिमानहीनः धृत्युत्साहयुक्तो निर्विकारः कर्ता सात्त्विकः । फलप्राप्तिकामः लोभी हर्षशोकान्वितोऽशुचिः कर्ता राजसः । भगवद्योगरहितोऽनम्रः गूढद्वेषी नीचकर्मकृत् आलस्यस्वभावो विषदी परकृतदोषं दीर्घकालमत्यनुचितं सूचयन् कर्ता तामसः ।

बुद्धिरपि त्रिधा । प्रवृत्तिनिवृत्तिकार्याकार्यभयाभयबन्धमोक्षप्रकारं या वेत्ति सा सात्त्विकी । धर्मादिकं किञ्चिद्यथावत् किञ्चिदयथावत् या जानाति सा राजसी । या सर्वार्थान् विपरितान् जानाति सा तामसी ।

धृतिरपि त्रिधा । विहितविषयया भगवद्भक्तियुतया यया धृत्या मनःप्राणेन्द्रियक्रिया धार्यन्ते सात्त्विकी । या फलाकाङ्क्षी यया धर्मकामार्था धार्यन्ते सा राजसी । यया सर्वं निषिद्धं भगवद्द्वेषादि धार्यते सा तामसी ।

सुखमिपि त्रिविधम् । यदग्रे विषमिव किन्तु परिणामेऽमृतोपमं विष्णोः प्रसादाद्बुद्धिप्रसादाच्च जातं तत् सात्त्विकम् । विषयेन्द्रियसंयोगजन्यम् अग्रेऽमृतोपमं परिणामे विषमिव तद्राजसम् । यदग्रे विपाककाले च मोहकं निद्रालस्यप्रमादोत्थं तत्तामसम् । किं बहुना जगति यत्किञ्चित्स्थितं वस्तुजातं गुणत्रयबद्धमेव । सात्त्विका मुक्तियोग्या राजसा नित्यसंसारिणस्तामसास्तमोयोग्याः तेऽपि पुनस्सात्त्विकादिभेदेन त्रिधा ।

ब्राह्मणादिवर्णानां कर्माणि स्वभावजगुणैर्भिन्नानि । तत्र शमादयो विप्रस्य, शौर्यादयः क्षत्रियस्य, कृष्यादयो वैश्यस्य, परिचर्या शूद्रस्य च स्वभावजं कर्म। सर्वोऽपि सर्वभूतप्रवर्तकं सर्वव्याप्तं भगवन्तं स्वकर्मणाऽभ्यर्च्य सिद्धिं विन्दते । सम्यगनुष्ठितात् परधर्मादपि स्वधर्मोऽङ्गहीनो वरः । सदोषमिति बुद्ध्या स्वकर्म न त्यजेत् । फलबुद्धिं विहाय विष्ण्वर्पणधिया स्वधर्माचरणे ज्ञानद्वारा मोक्षसिद्धिर्भवति ॥

एवं मुक्तिप्राप्तौ शुद्धबुद्धित्वं विषयवैराग्यं विविक्तसेवित्वं लघ्वाहारवत्त्वं ध्यानं कामक्रोधर्पाहङ्काराभिमानराहित्यमित्यादयोऽङ्गानि । एवं वर्तमानो ब्रह्मणि स्थितमनस्कः सन् परां भक्तिं लभते । तया स्वयोग्यतानुसारेण भगवज्ज्ञाने मुक्तो भवति ॥

एवमुपदिश्य भगवान् अर्जुनं प्रति स्वोपदेशमुपसंहरति । सर्वकर्माणि मयि सन्यस्य अहमेव सर्वोत्तम इति सदा चिन्तय । एवं चेत् मत्प्रसादात् सर्वदुर्गाणि तरिष्यसि । अथाहं न योत्स्यमीत्यहङ्कारान्मम वचनं श्रुत्वा न करोषि चेत् विनङ्क्ष्यसि ॥

किञ्च या न योत्स्यामीति ते मतिस्सा मिथ्यैव । कुत इति चेदीश्वरेच्छा त्वां योद्धुं प्रेरयति । हे कौन्तेय ! बन्धुस्नेहनिमित्तमोहात् यद्युद्धाख्यं कर्म कर्तुं नेच्छसि तद्भगवदिच्छाधीनस्सन् करिष्यसि । ईश्वरो मायाख्यस्वेच्छया सर्वभूतानि प्रेरयन् सर्वभूतानां हृदयाकाशे वर्तते । तमेव सर्वप्रकारेण शरणं गच्छ । तत्प्रसादात् शाश्वतं वैकुण्ठादि स्थानं प्राप्स्यसि ॥

एवमुपदेशमुपसंहृत्य भगवान् अर्जुनमाक्षिपति । गोप्याद्गोप्यतरमपि ज्ञेयं तुभ्यमुपदिष्टम् । एतदशेषेण विचार्य यथेच्छसि तथा कुरु । अयमाक्षेप एव न तु यथेच्छाचरणेऽनुज्ञा ।

साधनसारमुपसंहरति भगवन् । मन्मना भव । मद्भक्तो भव । मद्यजी भाव । मां नमस्तुरु । एतेन साधनचतुष्टयेन मां प्राप्स्यसीति निश्चयः । वैष्णवेतरसर्वधर्मान् परत्यज्य मां साङ्गं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि । शोकं मा कार्षीरिति ॥

एवमुपसंहृत्य गीताशास्त्रेऽधिकारिणं निर्दिशति । इदं शास्त्रं तपस्विने गुरुशुश्रूषारताय भक्ताय अनसूयवे उपदेष्टव्यमिति । इदमधिकारचतुष्टय-मुत्तरोत्तरं बलीयः ॥

गीताशास्त्रस्य फलं वक्ति । गीताशास्त्रव्याख्याता मद्भक्तिं कृत्वाऽसंशयं मां प्राप्स्यति । तत्समो मनुष्यभक्तो नास्तीति तस्मिन् ममाधिका प्रीतिः । गीताध्यायनमपि ज्ञानयज्ञः । गीताश्रवण-कर्ताऽपि मुक्तो भवति ॥

एतेन एतत्तारतम्यं सूचितं भवति । गीताश्रोतुः गीताध्येता वरः । तस्मात् गीताव्याख्यातेति । एतन्मनुष्येषु । गीतार्थप्रतिष्ठापका देवास्ततोऽपि वराः । गीताभाष्यकारो भगवानाचार्यः सर्वाधिकारिषु वरतम इति ज्ञातव्यम् ॥

एतावानुपदेशोऽरण्यरोदनवद्व्यर्थो न सञ्जातः किमिति भगवता पृष्टोऽर्जुनः हे अच्युत भवदनुग्रहेण मम मिथ्याज्ञानं नष्टम् । नारायणद्विट्तदनुबन्धिनिग्रहः कर्तव्येति स्मृतिर्जाता । गतसन्देहोऽस्मि । युद्धे सन्नद्धोऽस्मि । तव वचनं करिष्य इत्यङ्गीकरोति ।

एतत् कृष्णार्जुनसंवादरूपं गीताशास्त्रं व्यासप्रसादाच्छ्रुतवान् सञ्जयः तत्संवादं तदद्भुतं रूपं च स्मारं स्मारं विस्मयाविष्टो रोमाञ्चितो स्वपुत्रविजयविवित्सुधृतराष्ट्रप्रश्नस्योत्तरमाह - यत्र सेनायां योगीश्वरः कृष्णः गाण्डीवधनुर्धारी पार्थश्च वर्तते तत्र राज्यलक्ष्मीः सम्पन्नीतिश्च निश्चयेति मम निश्चय इति ॥

त्यागसन्न्यासयोः स्वरूपं भगवता 'काम्यानां कर्मणां न्यासः सन्न्यासः । सर्वकर्मफलत्यागः त्यागः' इति प्रोक्तम् । तद्व्याख्यातं भाष्यकारैः 'फलानिच्छया अकरणेन वा काम्यकर्मणो न्यासः सन्न्यासः । त्यागस्तु फलत्याग एव'इति । तद्विवरणं प्रमेयदीपिकायां कृतम् । काम्यानामश्वमेधादीनां कर्मणां स्वरूपेण त्यागः सन्न्यासः । नित्यनैमित्तिकादिसर्वकर्मफलत्यागस्त्याग इति । तदसदिति भावेनाह भगवानाचार्यः फलेति । तथाहि -काम्याः द्विविधाः । वैकल्पिककाम्या ज्योतिष्टोमादयः । नियतकाम्याः कारीर्यादयः । तत्राद्यानां स्वर्गादिफलानिच्छया विशेषणत्यागेन द्वितीयानामकरण-रूपस्वरूपत्यागेन त्यागः सन्न्यासः काम्यकर्मणामेव फलत्यागस्तु त्यागः करणाकरणे न विवक्षिते' इति ॥

'अधिष्ठानं तथा कर्ता' इत्यत्र कर्ता विष्णुरिति व्याख्याय तत्समर्थनार्थं भाष्ये जीवस्य चाकर्तृत्वे प्रमाणमुक्तमित्युक्तम् । टीकायां च 'अपराधीनत्वाभिप्रायेणेदं निराकरणम् । पराधीनं कर्तृत्व-मङ्गीकृत्यान्यत्र जीवो व्याख्यात इत्यविरोधः' इत्युक्तम् ।

भाष्याभिप्रेतप्रमाणं शिष्यैरेवोह्यतामिति कृत्वा टीकाचार्यैर्नोक्तम् । तत् स्पष्टीकृतं भावदीपे-'नहि प्रतिबिम्बस्य क्रिया' इत्यादिना द्वितीये, 'यत्र यत्रैव संयुक्तः' इत्यादिना पञ्चदशे चोक्तमिति । टीकास्थान्यत्रशब्दोपि विवृतः । स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनोक्तेश्च इति तात्पर्ये, 'कर्ता शास्त्रार्थवत्वात्' इति सूत्रभाष्ये चेत्यर्थः ॥

'ज्ञानं ज्ञेयं परिज्ञाता' श्लोकमवतारयिष्यन् भगवान् भाष्यकारः 'एवं तर्हि न पुरुषमपेक्ष्य विधिः, अकर्तृत्वादित्यत आह' इति। तत्रावश्यं शेषपूरणं कुर्वंष्टीकाकारः 'यदि जीवो न कर्मणां कारणं तर्हि श्रौतः स्मार्तश्च विधिर्न प्रवर्तेत। ततश्च तद्वैयर्थ्यप्रसङ्ग इति शेष इति। वैयर्थ्यमेव स्पष्टीकृतं भावदीपे। 'जडेशवरयोः विध्यविषयत्वाज्जीवं प्रत्यप्यविधाने वैयर्थ्यमेवेति भाव इति ॥'

॥ श्रीकृष्णार्पणमस्तु ॥

**Sree Lakshmi Hayagreevo Vijayate**

# Eessence of Bhagavadgeeta

## first chapter

The great Epic "Mahabharata" is being revered as the essence of all "Shastras". "Srimad Bhagavadgita", which contains 18 chapters & which can be classified in to 3 sections of 6 chapters each, is being considered by the learned scholars as containing the gist of the entire 18 "Parvaas" of "Mahabharata". It is for these reasons that, "Srimad Bhagavad Gita" is considered as the nectar of "Mahabharata". The group of six chapters in "Srimad Bhagavad Gita" is referred to as "Shatkaa". The first Shatka deals with the "Saadhana" an individual has to undergo to attain the knowledge of "Brahman", the second Shatka teaches us the "Bhagavad Jnana" and the 3rd Shatka is the summary of the first two Shatkaas. Chapter 18 in "Srimad Bhagavad Gita" is unique in the sense that it covers whatever that has been described in the first 17 chapters.

The first chapter and the first 10 "Shlokas" of the second chapter is a prelude to the preaching of Lord Krishna. During the course of the 18 day long, the "Battle of Mahabharata", "Bhishma Pitaamaha" fell to the arrows of Arjuna and was provided a makeshift bed of arrows! "Dhrutarashtra" who was informed of this incident, expresses his desire to be updated on the happenings at the battle field as it happened! This job of keeping "Dhrutarashtra" in know of the happenings at "Kurukshetra" was assigned to "Sanjaya". Sanjaya was blessed with special powers by "Lord Vedavyaasa" so that he could view the battle as it unfolded from the place where he was sitting with Dhrutarashtra, which was far away from Kurukshetra.

Once the special power bestowed upon Sanjaya was active, Dhrutarashtra asked him thus: Oh! Sanjaya, what is happening at the holy battlefield of Kurukshetra, where my children & Pandavaas have gathered with an intention to wage war? Dhrutarashtra was not only blind by birth, but also blind in so far as his love for his wicked sons are concerned. This blind love for his sons made him to ask this question even though the final outcome of the war was a foregone conclusion as Lord Krishna was on the side of Dharma i.e. Pandavaas.

Sanjaya started narrating the happenings at the battle field to Dhrutarashtra.

The army of Pandavaas being commanded by "Dhrushtadumna" is strategically positioned to pounce upon the enemy army. Looking at the army of Pandavaas, "Dhuryodhana" speaks to "Dronacharya", the Guru of the leading lights of the opposing armies. Sir! The Pandava Army has in its ranks "Maharathins" in Virata, Drupada, Kuntibhoja, Saatyaki, Abhimanyu et al, who are as brave as Bheema & Arjuna. On our side, we have you, Bhishma, Krupa, Shalya, Karna, and Ashwathama, who are equally brave as any of the leading warriors and who are ready to sacrifice their life for my sake. In spite of the superiority in numbers, I am afraid, the chances of our winning this battle against the Pandava Army protected by Bheema is very remote. Also, please ensure that Bhishma, who is the chief protector of our army, is safeguarded when he is engaged in a battle with someone, lest others shoot him down with an arrow.

Hearing the thus speaking Dhuryodhana, Bhishma, who wants to keep his grandson in good humor, roared like a lion & blew his Conch. The other Kaurava warriors followed Bhishma in blowing their respective Conches, Bugles, and Trumpets. In a fitting response to the war cries of Kauravaas, Pandavaas too responded with more vigor lead by Lord Krishna, who blew "Panchajanya", followed by "Yudhishtira" who blew his conch named "Anantha Vijaya", "Bheema" blew "Paundra", Arjuna used "Devadatta" to raise the pitch of the war cries & was ably supported by the twins "Nakula" and "Sahadeva" who used their conches "Sughosha" and "Manipushpaka" respectively. This dealt a severe Body blow to the Kauravaas!

Arjuna, who rode a chariot driven by Lord Krishna, expressed his desire to have a clear view of the enemy troupes who are eager to fight Pandavaas as well his own army and hence requested Lord Krishna to suitably place him in the battle field. Obliging, Lord Krishna took him to the centre of the battle field from where Arjuna could easily gauge both the armies.

Arjuna, when looked at both the armies, found his Teachers, Aacharyaas, Cousins, Brothers, Nephews, Maternal Uncles, Paternal Uncles, Brothers in Law who are all closely related to him. The thoughts of combating with them and to eventually eradicate them, made him highly uncomfortable.

The fact that the primary duty of a Kshatriya is to severely punish those who oppose Lord Vishnu and his disciples and failing in this duty is against the "Dharma" did not occur to Arjuna, a born Kshatriya and a follower of the "Raja Dharma" in letter and spirit. This prompted him to talk to Lord Krishna in a sober

voice thus – Swamyn! Looking at the relatives who are preparing for their last journey in the opposite camp makes me deeply disturbed, the thoughts of making them the target for my deadly arrows makes me shiver. The "Ghandeeva" is slipping out of my hands. I am feeling as though I have a very high fever and the body temperature is uncontrollably shooting up! I am not able to stand properly because of the giddiness. Just for the sake of winning the kingdom, I think, it is highly improper to decimate them. Yes, it is clearly mandated in the "Shaastraas" that an "Aatataayi" can be annihilated, but, in that act, I am eliminating my own kiths and kins! It is a fact that the Kauravaas are not even perturbed a bit to carry out such a heinous crime, but, that does not mean that we too follow the suit! This war results in a large scale devastation of innumerable clans. Destruction of clans results in wiping out their religion. Once the religion is last, "Adharma" occupies its place. The first to be affected by Adharma are the women folk. If women lose their character, it results in "Varna Saankarya". The perpetrators of this Varna Saankarya would suffer unending woes at the hands of Yama bhataas. So, I don't want to be labeled as the culprit who caused this chaotic situation in the society. Hence, I am unable to continue with this battle.

Saying these, an inconsolable and shell shock Arjuna left his Bow and Arrows uncared-for and sat in the chariot deeply depressed, sadly dejected!

**Thus is the substance of the first chapter**

## 2 Chapter

Listening to the thoroughly traumatized words of Arjuna, Lord Krishna, spoke to him in a consoling voice. Oh! Arjuna, why are you so confused at this crucial juncture of the war? This unnecessary disarray is not worth it. It would do no good to you. This will defame your name to no end. You are speaking as if there is no potency left within you. This murmuring is not befitting of your status. Prepare yourself mentally for the testing times ahead in the battle field! Not convinced and still confused, Arjuna retorted. My Lord! How can I shoot my fatal arrows at Dronacharya and Bhishmacharya, who have nurtured me right from my childhood and whom I hold in the highest regard even to date? It is not possible for me to imagine even in the wildest of my dreams, ruling this kingdom which we would get by spilling the blood of our near and dear ones. Moreover, we are not sure, if we emerge on the winning side of this epic battle. The opposite camp has such

notorious crooks that it is better to beg than to kill these outlaws and rule the kingdom. So, I am in a state of panic! Hence, I am surrendering to you to guide me as to the best course of action for myself. Then, Lord Krishna started preaching Arjuna.

Oh Arjuna! You are showering sympathies on those, who don't deserve even a bit of it! The way you are talking does not befit your status as a learned scholar! You are talking without applying your mind. Just as they won't mourn those who are hale and healthy, the wise won't grieve, even if a person is dead. The primary reason behind you being aggrieved is the fear that Bhishma et al will be decimated in this war. Wouldn't they be? What is the reason for your grief – That the soul is going to be annihilated? Or, that the body is going to be engulfed in the pyre? But, remember that the soul can't be destroyed! He can neither be created nor be destroyed, just as me! That's the fundamental truth about all the souls, be it a divine soul or an ordinary one. The experience of various phases a living being undergoes viz. the infancy, childhood, adolescence, youth, middle age and the old age is neither for the body nor for the mind. So, we have to conclude the existence of an eternal soul, who is different from the human body. Such a soul, who can act only upon in a body, assumes different bodies with every change in the phases of a human life viz. childhood etc. Such inevitable changes are not welcomed with sorrow but are celebrated, just as they celebrate the 60th birthday of an individual. This being the case, why should one mourn the loss of an old and decaying body, when they are getting a new, young and energetic body? This is as simple as a person shedding his worn out clothes to wear a newer one. A person who has born has to die either today or sometime in the future. This is inescapable. A person would definitely assume a new life after the current one. As an individual can't break away from this cycle of life and death, it is useless to mourn the loss of a life.

You may say that when Bhishma, Drona and others attain the heavenly abode during the course of this bitterly waged war, you may lose their interaction, and hence you feel dejected at the very thought of eliminating them during the war. But, I say that your thinking on these lines is nothing but improper. A person will not be either happy nor be sad just because he is involved in something. But, he will be either happy or sad only if he connects himself with it and assumes its ownership. This can be justified with this example. When a person is fast asleep, he won't react joyously even if he is adorned with a beautiful garland nor will he

प्रमेयदीपिकाव्याख्याकौशलस्येदमेकं निदर्शनम् । न भाष्यकारः कचिदपि नानुपयुक्तान् शब्दान् प्रयुज्यत इत्येतावन्मात्रम्, किं नाम चत्वितीत्याद्युपसर्गानपि इति टीकाकाराणामाशयः । यथा -'चशब्दः हेतौ ७-९, तुशब्दः विशेषार्थः ११-३३ इत्यादि । चत्वादीनां हेत्वाद्यर्थत्वम् अन्यत्राप्युपपादितम् । परन्तु भाष्यस्थेतिशब्दप्रयोगबीजं प्रमेयदीप एव निरूपितम् । ।

अष्टमाध्याये चतुर्थश्लोके अधियज्ञादिशब्दार्थकथनावसरे गीताकल्पवचनमुदाहृतं भाष्ये - 'आह च गीताकल्पे' इत्युपक्रम्य 'देहस्थविष्णुरूपाणि' इत्यारभ्य सर्वदेवेश्वरेश्वरः' इति । 'यथाप्रतीतं वा सर्वमत्रनैव विरुद्ध्यते' इति' इति ।। अत्र प्रमाणवचनमध्ये इतिकरणस्य प्रयोजनमाह टीकाकारः 'किञ्चिद् व्यवहितत्वात् मध्येऽपि इतिशब्दः' इति ।।

तदुपपादितं च भावदीपकृता - यद्यपि 'यथा' इत्याद्यपि गीताकल्पगतमेव वाक्यम् । तथापि 'इति'पदस्य मध्ये कीर्तनस्याभिप्रायमाह-किञ्चिदिति' इति ।। तथाचायमभिप्रायः - देहस्थेत्यारभ्य विरुद्ध्यत इत्यन्तं गीताकल्पगतमेव वचनम् । तत्र 'देवदेवेश्वर' इत्यनन्तरं प्रकृतप्रमेयसङ्गतभागः किञ्चिद् व्यवहितोत्तरभागस्थ इति प्रकृतप्रमेयसङ्गतवाक्यमात्रमत्र प्रदर्शितो भाष्यकृता मध्ये इतिकरणेन । अन्यथा 'यथा' इतिवाक्यस्यानङ्कितकारत्वं प्रसज्येतेति । अहो भाष्यकारीयप्रयोगचातुर्यम्, अहो टीकाकाराणां कौशलम्, नमो नमो भावदीपकाराणां टीकाभाववर्णनचातुर्यस्य ।।

प्रमेयदीपिकायां गीताभाष्यमूलपाठनिर्धारणे कश्चन विशेषः स्पष्टीकृतः संशोधकानामुपकाराय । 'भाष्ये पुराणे च अनुष्ठाय इति स्थाने कचिदीकारो लेखकदोषेण पतितः । मूलपुस्तकेष्व-दर्शनात्'(८.२७) इति । एवमेव न्यायसुधायामपि ३-१-१५ अनुव्याख्यानेपि 'गवश्वयोः' इति प्रमादपाठः मूलकोशेष्वदर्शनात्' इत्युक्तम् । तेन व्याख्यातृभिः संशोधकैश्च मूलमातृकासम्पादनाय प्रयतितव्यमिति सूचितम् ।। एवं गीताभाष्ये पाठान्तराणि तत्र तत्र सूचितानि । तद्यथा -

**गीताभाष्यप्रमेयदीपिकायां टीकाकृत्सूचितपाठान्तराणि**

१. 'अलम्बुद्धिं च' ३-१७ **(प्र.दी)** 'अलम्बुद्धिः इति पाठे'

२. 'मद्भावं मयि सत्तां' ८-५ **(प्र.दी)** 'कचित् पाठो मद्भावं मद्भद्भावम् इति'

३. 'निरतिशयानन्दात्मिकां' ८-५ **(प्र.दी)** 'अत्र आत्मकमिति पाठः'

४. 'नाव्यक्तदिस्तु' १२-५ **(प्र.दी)** 'नाव्यक्तादेरिति पाठे'

५. 'कर्म हेतु' १८-१४. (प्र.दी) 'कर्म हेतुः इति कचित् पाठः'

६. 'कामः स्वल्पः कादाचित्कोपि' इति मूलपाठः (प्र.दी) कामः सङ्कल्प इति प्रामादिकः

एवं प्रमेयदीपिकायामुपलभ्यमानानि गीताभाष्यपाठान्तराणि ।

किञ्च भावप्रदीपिका-भावप्रकाशिकयोः व्याख्यातः गीताभाष्यपाठः प्रमेयदीपिकाव्याख्यात-पाठश्च बहुषु स्थलेषु भिन्न इति नात्र वयं क्षमाः अयमेव गीताभाष्यपाठ इति निर्धरितुम् । नचैतावन्मात्रम् । टिप्पण्यन्तरेषु यानि गीताभाष्यवाक्यान्युदाह्रियन्ते व्याख्यातृभिः तानि चान्यथैवोपलभ्यन्ते प्रचलितपाठेषु इत्यविवादम् । अध्येतृसौकर्याय दिङ्मात्रमत्र प्रदृश्यते ।

१. २-१६ श्लोके प्रचलितपाठः 'किमित्यत आह' इति । वस्तुतः अत्र 'किमिति? आह' इति भाष्यपाठः । तथोक्तं वाक्यार्थरत्नमालायाम् (मं-प्रकाशनम्,सम्पुटं-१४.पृ.सं ६६३७) ।

२. २-२१ श्लोके 'दुष्टे नष्टपदप्रयोगात् नाशशब्दो दोषवाची इति गीताभाष्यमनुरुन्धान आह-' इति वि.त.निर्णयलघुप्रभायामुल्लिख्यते । (मा.रा.सं.प्रकाशनम्-पृ.७०६) इदं वाक्यं कृतगीताभाष्ये नोपलभ्यते ।

३. वि.त.निर्णयटीकाश्रीनिवासतीर्थीये ७-२७ श्लोकसम्बन्धीनि कानिचिद् वाक्या-न्युल्लिखितानि । यथा 'यथोक्तं गीताभाष्ये 'द्वन्द्वमोहेन सुखदुःखादिविषयमोहेन । इच्छाद्वेषयोः प्रवृद्धयेः सतोर्न हि किञ्चित् सुखादिकं हेयतया ज्ञातुं शक्यम्' इति इत्युक्त्वा पुनः 'यथोक्तं गीतायां- सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप इति । व्याख्यातं च तद्भाष्ये भगवच्चरणैः 'सर्गमारभ्य शरीरे हि सति इच्छादयः' इति । एषु अर्थव्यत्यासाभावेपि महान् शब्दव्यत्यासः दृश्यते ।

४. एवमेव वि.त.निर्णयव्यासतत्वज्ञीये लघुप्रभायां 'द्वाविमौ' इति वि.त.निर्णयमूल-व्याख्यानावसरे इमानि वाक्यान्युदाहृतानि । 'खं छिद्रं विवरं कूटं इति गीताभाष्योक्तदिशा कूटवत् खवत् स्थितेर्निर्विकारतया अवस्थानात् कूटस्थः । पुल्लिङ्गं तु पुंवच्छक्तिमत्वात् - यथोक्तं गीताभाष्ये 'पुंवच्छक्तिमती स्त्री तु पुल्लिङ्गेनोच्यते बुधैः इति' ।। अनयोर्मध्ये ६-८ श्लोकगीताभाष्ये ' कूटं खं विदलं व्योम सन्धिराकाश उच्यते' इति वाक्यं गीताभाष्ये अधुनोपलभ्यमानम् । एवं छान्दोग्यभाष्ये 'पुल्लिङ्गेनोच्यते श्रीश्च पुंवच्छक्तिमती कचित्' इति वाक्यं च उपलभ्यते । गीताभाष्यस्थत्वेनोदाहृते द्वे अपि गीताछान्दोग्यभाष्यसंवादिन्येव नतु यथारूपे । इमे लघुप्रभोदाहृतवचने नान्यत्रोपलभ्येते ।।

६. वि.त.निर्णयमङ्गलवादस्थमपरं वाक्यम् ३-२० गीताभाष्यसम्बद्धम् । यथा ' मङ्गलवादे 'अत एव गीताभाष्ये 'आचाराच्चैवमित्याह- कर्मणैव हि' इति वाक्यम् । उपलभ्यमानंगीता-भाष्यपाठस्तु ' आचारोऽप्यस्तीत्याह– कर्मणैवेति' इति ।।

७. ३-२० श्लोके तत्वप्रकाशिकाभावदीपे ३-१-७ सूत्रभाष्यटीकाभावदीपे 'प्राप्य वा' इति गीताभाष्यवाक्यं प्रयुक्तम् । प्रमेयदीपिकाभावदीपरीत्या तु 'प्राप्य इति वा ' इति इतिशब्दसहितः पाठः । यथोक्तं भावदीपे ' 'इति वा' इतिशब्दात् पूर्वं भाष्ये शेषमाह' इति । इदं भावदीपवाक्यं मातृकासु, भावरत्नकोशकारैरप्येवमेवोदाहृतमिति न लेखकप्रमादायत्तः इतिशब्दः ।। तेन भाष्ये इतिशब्द आवश्यक इति भाति ।।

८. एवमुपोद्घातभाष्ये ' तथोपरिचराद्यन्ये भारतं परिचक्षते ' इति महाभारतवचनमुदाहृतम् इदं वचनं महाभारततात्पर्यनिर्णयभावप्रकाशिकायां यथास्थितमेव व्याख्यातं श्रीमद्वादिराजश्रीमच्चरणैः । परन्तु महाभारतलक्षालङ्कारे अन्त्यपादे 'विप्राः सम्यगधीयिरे' इति व्यत्यासः, तथैव व्याख्यानं च दृश्यते ।।

एवमेव अन्यान्यपि टीकाटिप्पणीषु बहूनि व्यत्यासानि स्युः । यावद् दृष्टिपथमुपगतं तावन्मात्रमत्र निर्दिष्टम् ।।

प्रमेयदीपिकायाः पाठान्तरविषये टिप्पणीकारैः श्रीनिवासतीर्थैः, भावबोधकारैः, उमर्जी-कृष्णाचार्यैः, सुमतीन्द्रतीर्थैः, श्रीराघवेन्द्रतीर्थप्रभृतिभिश्च नानाविधतया प्रतीकग्रहणं कृतं दृश्यते । मयापि चतस्रः मातृकाः सङ्गृह्य प्रमेयदीपिकायाः शुद्धपाठे प्रयतितम् । तथापि न निश्चेतुं शक्यते क्वचित् । अधस्तनटिप्पणीषु टिप्पण्यन्तरेषु विद्यमानपाठभेदोपि सूचितः प्रायः ।।

एकस्यां मातृकायां (३-४) श्लोके 'न चात्रोपादानत्वस्य .........न हीति' इति प्रमेयदीपिकावाक्यं पठ्यते । इदं वाक्यं एकादशटीकोपेतश्रीमद्भगवद्गीतापुस्तकेपि पाद-टिप्पण्यामुल्लिख्य इदं वाक्यं क्वचिन्मातृकासु उपलभ्यते इत्युक्तम् । इदं वाक्यं कस्य भाष्यस्य व्याख्यारूपमिति न स्पष्टम् ।। 'न हि' इति भाष्यवाक्यमपि नोपलभ्यते ।।

एवं (४-४) श्लोके 'आदीयते इत्यनेन...' इत्येकं वाक्यमधिकं पठ्यते । न व्याख्यातेयं पङ्क्तिः टीकाव्याख्यातृभिः । अतोस्य टीकास्थत्वं विमतम् ।

एवं प्रमाणपद्धतौ विठ्ठलभट्टीये अन्तिमप्रकरणे उदाह्रियमाणा वाक्यरीतिरपि विभिन्ना । तेन क्वचित् स्फुटं टीकापङ्क्तिस्वरूपनिर्धारः अशक्यः ।।

प्रमेयदीपिकायां भाष्योक्तप्रमेयप्रतिपादनावसरे ग्रन्थान्तराण्यप्युदाह्रियन्ते । यथा - २-२४ पुराणोल्लेखः, २-२५ सूत्रोल्लेखः, २-४७ उपनिषदुल्लेखः इत्यादि । तत्र भागवतश्लोकानां व्याख्यानावसरे अधुनोपलभ्यमानभागवतपाठस्य गीताभाष्योदाहृतपाठस्य च महद्वैलक्षण्यमनुभूयते तत्र तत्र ।।

एवं गीताभाष्योक्तप्रमाणवचनव्याख्यावसरे प्रमेयदीपिकायां भागवतादिपुराणवचांसि व्याख्यातानि । तत्र विजयध्वजीय-यादुपत्यव्याख्यानयोः प्रमेयदीपिकायाश्च क्वचित् वैलक्षण्यं दृश्यते । प्रमाणवचनानां पादटिप्पण्यां विजयध्वजीयव्याख्यादिकमध्ययनसौकर्याय निवेशितम् । तत्र पाठव्यत्यासोपि दरीदृश्यते यथा २-४४, ९-१२ इत्यादिस्थलेष्विति भागवतशुद्धपाठे प्रयतितव्यं सुधीभिः ।।

**गीताभाष्योदाहृतभागवत-प्रचलितभागवतपाठयोर्वैलक्षण्यम् -**

| प्रचलितभागवतपाठः - | गीताभाष्योदाहृतपाठः |
|---|---|
| १.'वासुदेवे परे तत्वे' | 'वासुदेवे भगवति ' |
| २.'तपो मे हृदयं ब्रह्म' | 'तपो मे हृदयं साक्षात् ' |
| ३.'दम इन्द्रियसंयमः' | 'दम इन्द्रियनिग्रहः' |

४.'तुष्टे च तत्र किमलभ्यमनन्त आद्ये' इति विजयध्वजीये ।

'तुष्टे तु तत्र किमलभ्यमनन्त ईशे' इति यादुपत्ये ।

५. 'असङ्गज्ञानासिमादाय' 'ज्ञानासिनोपासनया सितेन' इत्यादिष्वपि मूलपाठः न स्पष्टः

६) 'चतुर्थ उत्तमभ्राता हरिः' इति श्लोकः भागवतस्थत्वेन प्रमेयदीपिकायामुल्लिखितः । परन्तु अयं भागवते नोपलभ्यते । अस्मिन् विषये सुमतीन्द्रतीर्थैः भावरत्नकोशे विशेषतया विमर्शः कृतः । एवं सत्यधर्मतीर्थैरपि भागवतव्याख्याने अस्य श्लोकस्य भागवतस्थत्वे सविमर्शं विचारः कृतः । अत्र किमपि निश्चेतुं न शक्यते । अत्र रामानुजभाष्यटीकायामपि तापसस्य भगवदवतारत्वविषये बहुविचारः कृतः । विमृशन्तु महान्तः ।

७)'कर्मभिः शुद्धसत्वस्य वैराग्यं जायते हृदि इति भागवते' इति गी.भा.उ.श्लोकोपि भागवते नोपलब्धः ।

८)एवमेव प्रमेयदीपिकाभावदीपे उल्लिख्यमानाध्यायसङ्ख्याविषयेपि व्यत्यासः दृश्यते ।

'एकोनत्रिंशाध्याये ' इति भावदीपकारः । अयं त्रिंशाध्याये प्रकृतमुपलभ्यते । एवमध्यायविभाग-व्यत्यासः विजयध्वजीयसत्धर्मीययोरपि दृश्यते ।।

**एवमेवान्यग्रन्थोदाहृतप्रमाणेष्वपि व्यत्यासः एवं सङ्गृह्यते**

गीताभाष्य-अनुव्याख्यानयोरुदाहृतानुपूर्वीव्यत्यासः

(१) कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् गी.भा. - ९.१२

यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् - अनु.

अत्र भिन्नमेवेदं द्वयमिति सामान्यतो प्रतीयते । परन्तु सुधाशेषवाक्यार्थचन्द्रिकायामेक-मेवेदं प्रमाणमित्यभिहितम् ।-

(२) 'यदन्तरं सूर्यशशाङ्कयोर्दिवि '- अनु.व्याख्यान-शे.वा.चन्द्रिका ।

'यदन्तरं सूर्यसुरेड्यबिम्बयोः '- गीताभाष्ये ।

(३) एवं गीताभाष्योक्तप्रमाणवचांसि कृ.महार्णवेप्युल्लिखितानि । यथा - जीवंश्चतुर्दशादूर्ध्वम् इत्यादि ब्राह्मवचनानि । अत्र कृष्णामृतमहार्णवटिप्पणीषु व्याख्यातृभिः भिन्नभिन्नपाठाः स्वीकृताः ।।

(४) एवं 'समानां विषमा पूजा' इति वचनमपि ध्येयम् ।।

एवं महाभारतवचनानां मूलपाठेपि गीताभाष्य-अधुनोपलभ्यमानमहाभारतपाठयोः महद्वैलक्षण्यमनुभूयते । यथा १०-४० । एवमाद्यनेकस्थलेषु भिन्नपाठा उपलभ्यन्ते ।। विभिन्न-महाभारतपाठोपलब्धिः परभाष्योदाहृतमहाभारतवचनेष्वपि समानम् ।। महाभारतशुद्धपाठालाभ एवात्र परं निदानम् ।। अत एवाचार्याः ग्रन्थोप्येवं विलुलित कात्स्यंशोपि नविद्यते इत्यभ्यधुः ।।

**आचार्योदाहृतप्रमाणवचनेषु पाठशुद्धिविषये प्रमेयदीपिकायाः उपयोगः**

१)'वेदोखिलं धर्ममूलं आत्मनो रुचिरेव च' इति मनुस्मृतिवाक्यं(२.४६) पठ्यते । अत्र आत्मनः मनसः रुचिः विकल्पविषये इति प्रमेयदीपिकायाम् । परन्तु मनुस्मृतिव्याख्याने कल्लूकभट्टीये 'आत्मनस्तुष्टिरेव च' इति पाठमादृत्य तुष्ट्यन्तपाठसंवादितया गर्गवचनमुदाहृतम् । तेन स्मृतिपाठोपि विमर्शनीयः ।।

२) 'वित्तं बन्धुः वयः कर्म गरीयो ह्युत्तरोत्तरम्' इति मनुस्मृतौ पठ्यते । अत्र श्रीसुमतीन्द्रतीर्थैः भावरत्नकोशे 'गरीयो यद्युदुत्तरम्' इति पाठ आदृतः ।

एवमेव प्रमाणवचनानामाकरविषयेपीदमवश्यं वक्तव्यम् ।

१) पञ्चमाध्याये द्वितीयश्लोके 'तानि हवा एतान्यवराणि तपांसि' श्रुतिवाक्यमुदाहृतम्। यद्यपीयं महानारायणोपनिषदि 'अवराणि' इति स्थाने 'अपराणि' इति पाठेनोपलभ्यते । गीताभाष्यटीकाटिप्पणीषु अस्याः शाखान्तरस्थत्वं नोल्लिखितम् । तथापि विष्णुतत्वनिर्णयगत-टीकाटिप्पणीतः अस्या शाखान्तरस्थत्वं स्फुटमवगम्यते ।।

तथाहि -तत्वनिर्णये नवकृत्व उपदेशसन्दर्भे 'लवणमेतदुदके तद्ध तथा चकार' इति वाक्य-टीकायां 'स ह चकार इति क्वचित् पाठः । स सदृशशाखान्तरस्थो ज्ञातव्यः । एवमन्यत्रापि' इति पठितम् । विवृतमेतच्च वि.त.नि.भावदीपे लघुप्रभायां च । भावदीपे-'एवमन्यत्रापि । सूत्रभाष्यादावित्यर्थः । 'अत एव प्राणः इत्यत्र ह्रीश्चते लक्ष्मीश्च पत्न्यौ'इति वक्तव्ये'श्रीश्च ते लक्ष्मीश्च' इति पाठः, तथा दहरनये'धृतेश्च'इति सूत्रे 'स सेतुर्विधृतिरिति वक्तव्येपि 'एष सेतुर्विधरणः' इति पाठः । तथा पत्यादिशब्देभ्यः इत्यत्र 'सर्वस्य वशी सर्वस्येशानः' इति वाच्येपि 'सर्वस्याधिपतिः सर्वस्येशानः' इति पाठ इत्यादिरिति भावः ।। लघुप्रभायाम् -एवमन्यत्रापि **'तानि हवा एतान्यवराणि तपांसि' इति गीताभाष्यादावित्यर्थः'** इति ।।

४) गीताभाष्ये एकादशाध्याये 'गुणाः श्रुताः सुविरुद्धाश्च 'इति श्रुतिः जाबालखिलश्रुतिरिति पठ्यते । इयमेव श्रुतिः गीतातात्पर्ये ऋग्वेदे सौपर्णशाखायाम् इति । एतद्विरोधनिरसने भाष्यदीपिकैव शरणम् । ब्र.सू.भाष्येपि २.३.३८ उदाहृतेयं श्रुतिः । तत्र श्रुत्यर्थविवरणे भाष्यदीपिकायां विरोध एवं परिहृतः **-इयं च गीतातात्पर्योक्तरीत्या ऋग्वेदे सौपर्णशाखाश्रुतिः । गीताभाष्ये त्वियं जाबालिखिलश्रुतिरित्युक्तम् । सुपर्णदृष्टाया अपि श्रुतेर्जाबालिदृष्टत्वसम्भवा-दविरोधः'** इति ।।

**एदद्ग्रन्थसम्पादनावसरे गीताभाष्योदाहृतप्रमाणानामाकरविषये एतावत्पर्यन्तं मुद्रित-ग्रन्थेषु अनुल्लिखिताकाराणां प्रमाणानामाकरः अध्येतृसौकर्याय महता प्रयत्नेन मूलग्रन्थान् विमृग्य निर्दिष्टः । प्रमाणवचनानि च -**

**१. 'त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते'** **२.' न योगत्वादीश्वरत्वात्'**

**३.'चित्रं न चैत् त्वयि कार्यकारणे '** **४. ' अन्तेषु रेमिरे धीराः'**

**५. ' कामान्नी कामरूप्यनुसञ्चरन्'** **६. ' न ह वै सशरीरस्य'**

७. 'योसावतीन्द्रियग्राह्यः' ८. 'सुवर्णज्योतीः'

९. 'न तस्य प्राकृता मूर्तिः ' १०. 'कर्मणा बध्यते जन्तुः '

११. 'अनादिनिधना नित्या' १२. 'केतुः केतः चितिः'

१३. 'क्रीडतो बालकस्येव' १४. 'मनः परं कारणमामनन्ति '

१५.'अपाणिपादः' १६. 'मधु द्यौरस्तु नः पिता' इत्यादयः ।।

किञ्च श्रीमदाचार्यैः उदाहृतानि वचांसि मूलाकरेषु नोपलभ्यमानान्यपि परभाष्येष्वपि तेषामुल्लेखः दृश्यते । यथा - 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम 'इति गीताभाष्ये २-१६ विष्णु-पुराणस्थत्वेनोदाहृतम् । अयं काण्वसंहितासायणभाष्ये 'सन्ततम्' इति पाठभेदेनोहृतम् ।।

एवं गीतासर्वतोभद्रटीकायां (आनन्दाश्रमग्रन्थावली-११२. पृ-२२०) श्रीमदाचार्यैः अनु-व्याख्यानोदाहृतं 'योन्यथा सन्तमात्मानं ... चोरेणात्मापहारिणा ' इति वचनमुदाहृतम् ।।

एवं माध्वगीताभाष्योदाहृतप्रमाणानि भगवद्गीतारामानुजभाष्ये ब्रह्मसूत्ररामानुजभाष्ये तथा गीताशाङ्करभाष्ये च उदाहृतानि दृश्यन्ते । यथा -

१.' न तस्य प्राकृता मूर्तिः ' इति वेङ्कटनाथीयतात्पर्यचन्द्रिकाउपोद्घाते ।

२.'को ह्यन्यः पुण्डरीकाक्षात् ' - श्रीभाष्ये ।

३.'कर्मणा बध्यते जन्तुः ' - (३-१) शाङ्करभाष्ये ।

४. आसीदिदं तमोभूतम् '- श्रीभाष्ये ।

५. 'अग्नौ प्रास्ताहुतिः '- गीताशाङ्कर-रामानुजभाष्ययोः ।

६.'क्रीडतो बालकस्येव ' श्रीभाष्ये ।

७. 'मन एव मनुष्याणां ' -रामानुजभाष्ये । इत्यादि ।।

किञ्च न केवलमाचार्योदाहृतवचनानामाकरानुपलब्धिः किं नाम शाङ्कररामानुज-भाष्ययोः ब्रह्मानन्दगिरि-नीलकण्ठ- पैशाचव्याख्यानेष्वपि अनङ्किताकाराणि अनुपलभ्य-मानाकाराणि च परःशतं प्रमाणवचांस्युपलभ्यन्ते । सङ्गृहीतानि च तानि मया ।।

किञ्च धर्मशास्त्रग्रन्थेषु मनुस्मृतिवचनत्वेनोदाह्रियमाणानि वचांसि त्रिशताधिकानि

इदानीं नोपलभ्यन्ते । ते च सङ्गृह्य मुद्रिताः मोतीलाल्प्रकाशनतः । तेन नाकरोल्लेखाभावे तेषाप्रामाण्यं कथमिति चिन्त्यं सुधीभिः ।।

**प्रमेयदीपिका-न्यायदीपिकयोः सादृश्यम्**

गीताभाष्य-तात्पर्यव्याख्यानयोः प्रमेयदीपिका-न्यायदीपिकयोः साम्यं दरीदृश्यते । यद्यपि न्यायदीपिकायां तात्पर्यावतारिकावसरे विशेषांशः न दृश्यते । भाष्योक्त एव विचारः न्यायदीपिकायां तात्पर्यावतारिकात्वेनोदाह्रियते । एवं तात्पर्यमूलवाक्यान्येव भाष्यावतारिकायां प्रमेयदीपिकायां पठ्यन्ते । एतादृशव्याख्याने बीजं नोपलभ्यते । तत्रोदाहरणतया केचन श्लोका अत्रोदाहृताः ।

०१.१४-२२ **श्लोके** न्यायदीपिका-प्रमेयदीपिकयोः व्याख्याने व्यत्यासो नास्ति ।

०२. ४-२७ **श्लोके** 'मायेति प्रकृता महालक्ष्मीः ' इति प्र.दी.वाक्यम् । तात्पर्ये तु 'ब्रह्मेति प्रकृता महालक्ष्मीः' इत्युक्तम् । अत्रैव न्या.दी.वचनम्- ' ब्रह्म इत्यन्यथा प्रतीतिनिरासायाह ' इति । प्र.दीपिकायां तु ' ब्रह्मणो हि इत्येतत् परब्रह्मणो हि इत्यन्यथा व्याचक्षते ' इति ।।

०३. १७-३ **श्लोके** 'सत्त्वानुरूपा' इत्यस्य 'चित्तानुरूपा' इति व्याख्या । चित्तशब्दस्य चित्तं चैतन्यः जीव इति यावत्' इति भाष्ये । तात्पर्ये तु 'जीवानुरूपा ' इत्येवम् । अनयोः भाष्य-तात्पर्यवाक्ययोरवतारिकापि नातिभिन्ना ।

०४. १७-८ **श्लोके**- 'स्थिराः स्थिरगुणाः धृतादयः' इति तात्पर्यवचनम् । भाष्ये तु 'स्थिराश्च न तदैव पक्का भवन्ति । तथा हि आज्यादयः' इत्युक्तम् ।

०५. १७-१६ **श्लोके** 'मौनं इत्यस्यान्यार्थत्वप्रतीतिनिरासायाह- मौनं मननम्' इति तात्पर्यवचनम् । भाष्ये तु 'मौनं वाङ्नियमनम् इत्यन्यार्थत्वप्रतीतिनिरासाय मौनं मननशीलत्वमिति । कथमन्यथा मानसं तपः स्यात्' इति भाष्यवचनम् । इदमेव न्यायदीपिकायामुदाहृतम् ।

०६.१८-१४ **श्लोके** 'अधिष्ठानं देहादि' इति भाष्यम् । 'शरीरादि ' इति तात्पर्यम् । अत्रापि न्यायदीपिकायां विशेषांशः नोल्लिखितः ।।

०७.१८-१७ **श्लोके** 'तज्ज्ञानं स्तूयते यस्येति' इति न्यायदीपिकावचनं 'तज्ज्ञानं स्तौति' इति भाष्यवाक्योपोद्बलितम् ।

०८. 'कर्मसङ्ग्रहः' इति गीताव्याख्याने व्यत्यासो नास्ति ।

०९. १८-१९ श्लोके भाष्यस्थवाक्यान्येव न्यायदीपिकायामवतारिकात्वेनोल्लिखितानि । एवं तत्रैव 'गुणसङ्ख्याने' इत्यस्य 'गुणगणनप्रकरणे' इति भाष्ये व्याख्यातम् । 'परमसाङ्ख्यशास्त्रे' इति तात्पर्ये । विषयस्त्वेक एव । प्रतिपादनक्रम एव व्यत्यासः ।

१०. १८-४९ श्लोके नैष्कर्मसिद्धिशब्दस्य अवतारिकायां शब्दार्थविवरणे च विशेषांशः नोपलभ्यते ।।

*प्रमेयदीपिकायाम् अपव्याख्याननिराकरणसन्दर्भे परभाष्यानुवादः कृतः क्वचित् । क्वचित् तद्भाष्यस्थान्येव वाक्यान्युल्लिखितानि । भावरत्नकोशे श्रीनिवासतीर्थीये च यत्र परभाष्यानुवादः तत्र अनुवादोयम् इति स्पुटमुल्लिख्यते । तेन न मूलगवेषणा तत्र । तथापि 'आवृतं ज्ञानमेतेन ' इति ३-३९ श्लोकव्याख्यानसमये 'अपरे तु 'ज्ञानिनो नित्यवैरिणा । न मूर्खस्य । ज्ञानी हि विनाशयिष्यामि काममिति यतते । मूर्खस्तु तमनुवर्तते' इति वर्णयन्ति ' इति शाङ्करभाष्योल्लेखः कृतः । परन्तु अधुनोपलभ्यमानतद्भाष्ये 'ज्ञानी ..अनुवर्तते' इत्यन्तो भागः नैवोपलभ्यते ।।

एवं १३-२४ श्लोके 'अपव्याख्यानमपास्तम् ' इत्युक्तम् । तत्र भावदीपकारः 'श्रेत्रज्ञं मां विद्धि जानीहि ' इत्यपव्याख्यानम् इति विवृण्वन् । अयं वस्तुतः शाङ्करभाष्यानुवादः । तत्र 'क्षेत्रज्ञं यथोक्तलक्षणं चापि मां विद्धि जानीहि । सर्वक्षेत्रेषु यः ... सदसदादिशब्दप्रत्ययगोचरं विद्धीत्यभिप्रायः' इति शाङ्करभाष्यम् ।।

एवं १४-४ श्लोके टीकायां 'स्वरूपभूता इति शाङ्करभाष्यमुदाहृतम् । परन्तु शाङ्करभाष्ये स्वभूता इत्येव पठ्यते ।

एवं २-१३ श्लोके टीकायां 'मीयन्ते विषया एभिः' इति पठ्यते । शाङ्करभाष्ये 'आभिः' इति प्रयुज्यते । एतादृशशाब्दिकव्यत्यासः विमर्शनीयः सुधीभिः ।।

*प्रमेयदीपिकायां प्रमेयस्पष्टीकरणाय गीतातात्पर्यनिर्णयस्योल्लेखः बहुवारं कृतः । तानि चैवं सङ्गृह्यन्ते-

क्वचित् अपव्याख्याननिराकरणसमये-

'अपव्याख्यानं त्वन्यत्र निराकृतम्' २-१६

‘ग्रन्थान्तरादवगन्तव्यः’ ३-२८

‘उत्तरापव्याख्याननिराकरणं तु तात्पर्यनिर्णय इत्युक्तमेव’ १२.१

क्वचित् उक्तार्थस्योपपादनार्थ-

‘यथा च परतत्वं ‘मुक्तस्तु स्यात् पराभासः इति वचनात्’ । ७.७

‘विभूतिशब्दार्थः तात्पर्यनिर्णये अभिहितः’ १०-१

‘शेषं तात्पर्यनिर्णये’ ८.४

‘सर्वतः इत्यस्यार्थः तात्पर्यनिर्णये अवगन्तव्यः ११-१६

‘किन्तु ‘त्रिषु लोकेषु स्थितैर्भक्तैः ’ इत्युक्तप्रमाणेन ११-३०

‘प्रश्नवाक्यस्थस्य तात्पर्यनिर्णये तथाभ्युपगतत्वात् ’ ५-२

‘व्याख्यानान्तरे तु ’ १३-२४

‘पराधीनकर्तृत्वमङ्गीकृत्यान्यत्र जीवो व्याख्यातः’ १८-१५

एवं प्रमेयदीपिकायां कण्ठतोनुक्तत्वेपि परम्परया गीतात्पर्योल्लेखः

१. ‘उक्तयोर्ज्ञानकर्मणोः’[१] ४-१

२. ‘व्यंशश्चायं कर्मयोगः’[२] ५-१

※ एवं प्रमेयदीपिकायां प्राचीनसम्प्रदायोक्तिः ‘सम्प्रदायस्तु’ इति उल्लिखिता दृश्यते १०-६ श्लोके । एकस्मिन् शरीरे अन्यशरीरान्तर्भावविचारः प्रस्तुतोत्र । अन्यत्र टीकाकारैः कृतः सम्प्रदायोल्लेखः न मद्दृष्टिपथं गतः ।।

परमतविमर्शः

※ प्रमेयदीपिकायां प्रतिश्लोकमपव्याख्यानिराकरणं न कृतम् । यत्र परभाष्येषु विगीतिः तत्र ‘इत्यसत्’ ‘इत्यन्यथाप्रतीति’ इत्यादि स्पष्टीक्रियते । क्वचित् ‘प्रतीतिनिरासाय’ इत्येवेच्यते । कुत्रचित् ‘शङ्कानिराकरणार्थम् ’(८.८) इत्यपि प्रयुज्यते । क्वचित् ‘इत्यपरः’, । ‘ इति कश्चित्’ ‘अपरस्तु’ (५-२०),इति, क्वचित् ‘इत्येके’ इति । क्वचित् ‘ये तु (१३.१३)’, ‘परे’

१ गीतातात्पर्योक्तयुक्तिमाह- उक्तयोरिति इति भावदीपकारः ।

२ गीतातात्पर्यविरोधं निराह- व्यंशश्चायमित्यादिना ।

(१४-३)इति । 'अपव्याख्यानम्'(१३-२४) क्वचित् टिप्पणीकाराः केषामपव्याख्यानमिदमिति स्पष्टयन्ति । बहुस्थलेषु न स्पष्टयन्ति ।।

अस्मिन् संस्करणे यत्र शाङ्करभाष्यमेव साक्षात् निराकृतं तत्र शाङ्करभाष्यम् इत्युल्लिख्य शाङ्करभाष्यस्य पृष्ठ-संख्या सूचिता । एवं यत्र शाङ्करभाष्यानुवादः तत्रापि 'शाङ्करभाष्यानुवादः' इत्युल्लिखितम् । क्वचित् रामानुभाष्ये अस्पष्टमपि तट्टिप्पण्यां वेङ्कटनाथीये उल्लिखितमत्र प्रमेयदीपिकायां निराकृतम् । तत्रापि पृष्टसङ्ख्यादिकं सूचितम् ।।

एवं प्रासङ्गिकतया १२-१भाष्ये पुरुषसूक्तस्यापव्याख्यानमपि निरस्तम् । तद्विवृतं च टीकाकारैः ' केचित् 'सहस्रशीर्षा' इत्यादिकं हिरण्यगर्भविषयमिति मन्यन्ते । अतस्तद्विधूयेश्वर-विषयतया स्वमतं गृहीतुम् 'आदित्य' इत्याद्युक्तम् ' इत्यादिना ।।

प्रमेयदीपिकायामिव न्यायदीपिकायामपि ७५ स्थलेषु अन्यथाप्रतीतिनिराकरणं कृतं टीकाकारैः ।।

**ग्रन्थान्तरेषु गीता-तद्भाष्य-टीका-प्रमेयानि**

१) देह-जीवयोर्मध्ये आवरणान्यनेकानि सन्ति इत्यस्मत्सिद्धान्तः । तदाह गीताभाष्यकारः -'देहाद् बाह्यं विना अतीव बाह्यत्वात् अधिदैवतम् ' इति । अत्र प्रमेयदीपिकायां तट्टिप्पणीषु वा कोत्र प्रमेयः प्रतिपादित इति न प्रतिपादितः । ब्रह्मसूत्रतदभिध्यानाधिकरण(२.३.१३) भाष्यदीपिकायां जगन्नाथयतिविरचितायां 'देहाद् बाह्यं विना' इति वाक्यमुदाहृत्यायं प्रमेयः प्रतिपादितः ।।

२) शक्तिरिति भावपदार्थः इति द्वैतिनः । शक्तेः पदार्थान्तरत्वे प्रमाणतया, अस्याः गुणानन्तर्भावसाधनाय गीतावाक्यमुल्लिखितम्- वि.त.निटीका-टिप्पण्यां (द्वि.परि) लघु-प्रभायाम् - 'सच भावः विधिमुखप्रत्यवेद्यत्वात् घटवत् । सच न द्रव्येन्तर्भवति .. नापि गुणे चतुर्विंशत्यन्यत्वात् । 'अहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति ज्ञानेपि अज्ञाननिवृत्तिशक्त्युक्तेः इति' इत्यादि ।।

३) 'आगममिष्यत् सुखं चापि' इति वाक्यमीशावास्यटीकाटिप्पणीषु विस्तरशो व्याख्यातम् । एवमादिवाक्यानि बहूनि पादटिप्पण्यां संयोजितानि । कानिचनोत्रादाहृतानि । अपि चोर्वरितानि ग्रन्थविस्तरभिया कालानवकाशाच्च न सङ्गृहीतानि ।।

**ग्रन्थान्तरगतटीकावचनानां गीताभाष्यटीकावचनानां समानविषयत्वम्**

(१) 'देवादीनामादिराज्ञाम्' इति (३.४) भाष्ये पाद्मवचनम् । अत्र आदिराज्ञामित्यस्य साधुत्वोपपादनाय समासान्तविधेरनित्यत्वमुक्त्वा तदुदाहरणतया व्याकरणमहाभाष्यवचनमुदाहृतं 'समासान्तविधेरनित्यत्वात् **'आदिराज्ञाम्'** इति युक्तम् । यथोक्तं महाभाष्ये-शुच्यम्पि तटाकानीति' इति प्रमेयदीपिकायाम् । एवमेव वि.त.निर्णयेपि 'स्त्रीपुंमलाभियोगात्मा' इति ब्रह्माण्डपुराणवचनमुदाहृतमाचार्यैः । तत्रापि 'समासान्तो विधिरनित्य इति स्त्री-पुंसेति नोक्तम्' इति टीका । अत्र पाण्डुरङ्गीटिप्पण्यां 'तदनित्यत्वे ज्ञापकस्तु 'शुच्यम्पि तडागानि' इति भाष्यकारीयः प्रयोग एव ।' इति ।।

(२) एवमेव चार्वाकमतनिराकरणे वि.त.नि.टीका-प्रमेयदीपिकयोः नातीव भेदः ।

३) द्वितीयाध्याये -'न च प्रतिबिम्बस्य' इत्यादिना ग्रन्थेन भाष्ये बिम्ब-प्रतिबिम्बयोः ऐक्यं निराकृतम् ।

अयं भागः वि.त.निर्णये बहुजीववादिमतनिरासावसरे टीकायां विवृतः ।

**प्रमेयदीपिका-भावदीपस्वारस्यानि**

व्याख्या हि पाञ्चलक्षणिका - पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् इत्यभियुक्तोक्तेः। तदेतत्पाञ्चविध्यं भावदीपे सूच्यते ।

**पदच्छेदः** -पदच्छेदे हि तत्र सन्दिह्यते यत्र अकारान्तप्रकृतिः सप्तम्यन्ततया प्रयुज्यते तदुत्तरं च नञ्प्रयुज्यते तत्र तत्पदं तृतीयान्तमिव प्रतिभाति । क्वचित् विसर्गसन्धौ सवर्णदीर्घसन्धौ च यत्रोत्तरपदं आकारमादिमं कृत्वा भवति तत्राप्येवमेव पदच्छेदसन्देहो भवति । तदेतत्स्थलद्वयेपि प्रायः भावदीपकारः पदच्छेदं स्पष्टयति ।

'उभयोरप्यन्तरङ्गत्वेन न विरोधः' (५-४) इति भाष्यवचनम् । एतेन भाष्ये **न विरोधः** इति पदच्छेदः सूचितः ' इति भावदीपकाराः ।। एवं प्रमेयदीपेपि ।।

'यतः कामेनाधिकारः' २-४७ इति टीका । 'यतः' 'कामे' इति 'नाधिकारः' इति पदविभागः इति भावदीपकाराः । अत्र 'कामेन अधिकारः' इति न पदच्छेद इति विवृतं भवति ।। एवमेवोत्तरत्र ।।

'इति श्लोके न प्रतिज्ञातः इति (२-४१) इति टीका । 'इति श्लोक इति विभागः ' इति भावदीपकाराः ।।

ते 'न तदा मुच्यन्ते' इति शेषः '(२-४७) इति टीका । 'न तदा मुच्यन्त इति पदविभागः इति भावदीपकारः ।

'ब्रह्मणोबुद्धिपूर्वम्' (३-१५) इति टीका । 'अबुद्धिपूर्वमिति पदविभागो ज्ञेयः' इति भावदीपकारः ।।

'व्याख्यानव्याख्येयत्वे न पुनरुक्तिदोष इत्यर्थः' (४-२२) इति टीका । 'न पुनरुक्तीति पदविभागः' इति भावदीपकारः ।

नकेवलं प्रमेयदीपिकाभावदीपे किंनामान्यत्रापि । तद्यथा-

कारणत्वेन ब्रह्मणः -इत्यत्र न ब्रह्मणः इति विच्छेदः -तत्वप्रकाशिकायाम् .२-१-४

अविशिष्ट इति विभागः तर्कताण्डवे स्वतस्त्वानुमाबाधोद्धारे

अप्रतीतिः स्यादिति पदच्छेदः - -अनुगतजातौ बाधकप्रकरणे

२. पदार्थोक्तिरपि - सूत्रार्थ इति क्वचित् टीकापदप्रयोगः । किमिदं ब्रह्मसूत्रं किं वा पाणिनीयमिति सन्देहे इति पाणिनिसूत्रार्थ इति विवृतं भावदीपे । तथा क्वचित् ब्रह्मसूत्रार्थोपि विवृतः यथा-२-२५ ६-३ इत्यादिषु ।

एवं व्याख्यान्तरेष्वविद्यमानविवरणमपि भावदीपे उपलभ्यते । केचन निर्दिश्यन्ते

१ ) **यवनिका इति (७-२६)शब्दार्थः भावदीप एव ।**

**२. गुणक्रियाजाति-इति टीका । 'जातिः तदसाधारणो धर्मः' इति भावदीपे एव (७.१३)**

**३ ) तथाभावदर्शनात् । अजामिलादाविति योज्यम् (५-३१)**

**४ ) एतेन भाष्ये न विरोधः इति पदच्छेदः सूचितः(३-४)**

**५ ) 'अचिन्त्येत इति ' इति प्रतीकविवरणम् (३-१५)** इत्यादि ।

३.शब्दस्वरूपनिष्पादने पाणिनीयसूत्राणामुल्लेखः प्रायः सर्वैः क्रियते । परन्तु भावदीपे क्वचित् स्पष्टार्थताय सूत्रार्थोपि विव्रियते । यथा २-३० श्लोके । तथा पाणिनिसूत्रविवरणसमये वृत्तिकारवचनमुदाह्रियते भावदीपे ।।

४. टीकाकृद्भिः यदि भाष्यस्थप्रमाणानां विवरणं नास्मिन् ग्रन्थे कृतं तदा कुत्र कृतमिति स्पष्टीकृतं भावदीपे । यथा 'मां विधत्ते इति श्लोकार्थस्तु समन्वयसूत्रटीकायां व्यक्तः' (२-४२) इति । अयमेव श्लोकः तात्पर्यचन्द्रिकायामप्युदाहृतः व्यासतीर्थैः असदधिकणे । तत्रापि प्रकाशे श्रीराघवेन्द्रतीर्थैः 'इति एकादशस्कन्धतात्पर्यस्मृतिः समन्वयसूत्रटीकायां व्याख्याता' इति आकरव्याख्यास्थलादिनिर्देशः कृतः ।।

एवमेव तत्वप्रकाशिकाभावदीपेपि ३-१-२१ सूत्रे प्राचीनटीकायां तत्वप्रदीपे भाष्योक्तप्रमाण-व्याख्यासद्भावात् तत्वप्रकाशिकायां स्मृतिविवरणं न कृतं टीकाकृद्भिरिति स्पष्टयति भावदीपकारः । यथोक्तम् 'स्मृतिस्तु तत्वप्रदीपे व्याख्याता '(३-१-२१ तत्वप्रकाशिकाभापदीपे) इति ।

५. टीकायाम् 'वक्ष्यति' ' उक्तं पुरस्तात् ' इत्यादि प्रयुज्यते । कुत्र वक्ष्यत्याचार्यः, कुत्र वोक्तं पूर्वत्रेत्यादि स्पष्टीक्रियते भावदीपे । यथा २-४७ श्लोके । सप्तमाध्याये १२ श्लोके'इत्युक्तत्वादिति टीका । तत्र 'पूर्वाध्याये' इति विवरणं केवलं भावदीपे एव ।।

६. क्वचित् साक्षात् भाष्यस्यैव व्याख्या कृता -यथा 'महदाचारेण' इत्यत्र 'महतां प्रचेतसा-माचारात् ' इति भावदीपकारः । अस्य शब्दस्य प्रमेयदीपिकायां व्याख्या नास्ति ।

७. टीकायां भाष्यवाक्यानि क्वचिद् शब्दमनूद्य व्याक्रियन्ते क्वचिद्भावार्थ एवोच्यते । तत्र मूलं किं व्याख्या का, को वा अनुवादः इति स्पष्टीक्रियते भावदीपे । 'इत्यनुवादः' 'इति व्याख्या' इत्येवं रूपेण ।।

श्रीराघवेन्द्रतीर्थाः स्वव्याख्यानेषु टीकामूलपाठविषये स्वाभिप्रायं प्रकटयन्ति । पाठान्तरं, अपपाठं,लेखकदोषमूलपाठं च विवृण्वन्ति । क्वचित् पाठान्तमनूद्य तत्पक्षेपि व्याकुर्वन्ति । यथा - १) तत्वप्रकाशिकाभावदीपे - क्वचित्तु श्रुतिन्यायोपेतश्रुतिविरोधेति पाठः ।

२) तात्पर्यचन्द्रिकाप्रकाशे १-२-५'अत्र अधिदैवादिषु इति पाठः कैश्चित् कल्पितः एव न वास्तवः'।

३)'इत्यादि टीका पक्षेपि' असदधिकरणचन्द्रिकाप्रकाशे ।

४) गुहाधिकरणप्रकाशे -'दर्शपूर्णमासप्रकरणात् इति लेखकदोषमूलः पाठोयम्' ।

५) तात्पर्यचन्द्रिकाप्रकाशे- 'अत्र गाणपतमति पाठः साधुः'

५)२-१-४ त.प्र.भावदीपे - 'विवदमानमिति पाठः साधुः। आत्मनेपदविधानात् । विवदन्तमिति पाठे तु परस्मैपदं समाधेयम् ।'

६) तर्कताण्डवे- पदशक्तिभङ्गप्रकरणे- 'दोषदशकमिति पाठः साधुः । दोषनवकमिति तु लेखकदोषमूलमित्याहुः '।

एवमेव प्रमेयदीपिकाभावदीपे एषु स्थलेषु मूलपाठस्य निर्धारणं कृतम् ।

(१) **'क्वचित् राजा चासौ विद्या च इति पाठः । लेखकदोषमूलोऽयं पाठ इत्येके'** ९.२

(२) **'मनिन् इति पाठः साधुः । मन् इत्येव पाठे तु.'....** ११.४१

(३) **'इडभावः छान्दस इति लेखकदोषमूलः'** १५-१५.

(४) **इति मूलपाठ इति** ।।'कामः सङ्कल्पः' इत्यद्यतनकोशगतपाठो लेखककृत इत्युक्तं भवति ६-२४.

अत्रेदमपि प्रासङ्गिकतया वक्तव्यम् । प्रायः टिप्पणीकाराः टीकायाः पाठान्तराणि अपपाठानि वा उल्लिखन्ति । तत्र टीकावाक्यानाम् आवापोद्वापः प्रायः कैरपि न क्रियते । श्रीसत्यनाथतीर्थश्रीपादैः बहुस्थलेषु नेमाः टीकापङ्क्तयः इत्युच्यते तदुपपाद्यते च । जिज्ञासाधिकरणतत्वप्रकाशिकाभावदीपे यद्वाक्यं विवृतं भावदीपकारैः तद्वाक्यं टीकास्थमेव नेत्युच्यते । एवं मायावादखण्डनपरशौ चन्द्रिकाकारैः व्याख्यातटीकापङ्क्तिः नैव टीकास्थेत्युच्यते । चिन्त्यमेतत् सुधीभिः ।।

**ग्रन्थान्तरगतभावदीपेषु गीताभाष्योल्लेखः-**

१) 'विस्तृतमेतत् तृतीये गीताभाष्ये कर्मणैव संसिद्धिमित्यत्र , कर्म कृत्वैव ततो ज्ञानं प्राप्य वा इत्यादिना .. कर्म तु तत्साधनमेव इत्यन्तेन' ३.१.७ . तत्वप्रकाशिकाभावदीपे । एवं २-३-१७ तत्वप्रकाशिकाभावदीपे - ४-६ श्लोकव्याख्या ।।

एवं ४-१-७., ४-२-१, ४-२-१७, ४-४-४, ४-४-१९ स्थलेषु तत्वप्रकाशिकाभावदीपे गीताभाष्योल्लेखः द्रष्टव्यः ।।

२) आविपालगोपालं देहात्मभेदज्ञानस्यान्यत्रोपपादितत्वात् इति वि.त.नि.टीका । भावदीपः -'अन्यत्रेति ।। तथा -गीताभाष्ये -द्वितीये 'देहिनोस्मिन् यथा देहे इति श्लोकव्याख्यावसरे प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वदेहानुसन्धेरुक्तत्वेनोपपादितत्वात् ।....

गीताभाष्ये च द्वितीये चार्वाकनिरासप्रस्तावे अहं मनुष्य इत्याद्यनुभवाच्च इति शङ्कितस्यानुभव-स्यासिद्धेरप्रामाण्यस्य वा परिहारे अनुक्तेश्च'।

३.त.प्र.भावदीपे 'इति च नारदीये ' इति चशब्दार्थघटिततया भाष्यपङ्क्त्युदाहरणम् । 'इति नारदीये ' इति प्रचलितः । एवं 'यथा चैव ग्रहादयः' इति प्रचलितपाठः 'यथा देवग्रहादयः' इति तत्वप्रकाशिकाभावदीपे । अयमेव साधीयान् भाष्यपाठः ।

४.प्रकृतविषयोपसंहारानन्तरं यत्र अधिकविचारः अन्यत्र विस्तृतः तदप्युल्लिखन्ति भावदीपकाराः। यथा ४-८ श्लोके 'तदुक्तं सर्वधर्मोपपत्तेश्च' इत्यत्र इत्यादि ।। अत्रोदाह्रियमाणानि वाक्यानि तत्वप्रकाशिकायां न्यायसुधायां वा नोपलभ्यन्ते । कुत्रत्यानीमानि इति न स्पष्टम् ।।

५ टीकासु यत्र पाठव्यत्यासः दृश्यते तत्र मूलवाक्यस्याकरोल्लेखः भावदीपे क्वचित् कृतः । यथा ३-१-१७ सूत्रभाष्ये भाष्यप्रतीकग्रहणं तत्वप्रकाशिकायां तत्वप्रदीपे च भिन्नम् । तत्र 'बह्वृचाः पठन्ति ' इति तत्वप्रकाशिकाप्रतीकस्याकरमुक्त्वा, 'तथाच याजुषपाठः ' इति तत्वप्रदीपस्थमूलवचनं शाखान्तरस्थमिति सूचितम् । गीताभाष्यस्थानेकप्रमाणेषु सत्स्वपि टीकाभेदेन पाठान्तरेषु कुत्रापि नैवमुल्लेखः कृतो भावदीपे ।

६. अधिकतया नैव कुत्रापि विस्तारः क्रियते । यथा- ४-१२ श्लोके सर्वमेतत् व्यक्त-मन्तिमाध्यायतात्पर्ये'इति । एवमन्यत्रापि । यथा वि.त.निटीकाविवरणे प्रामाण्यस्वतस्त्व-प्रकरणे 'विस्तरस्तु तर्कताण्डवे,' इति । तर्कताण्डवन्यायदीपे- 'तन्निरासश्च गुरुटीकायां व्यक्तः' 'विस्तृतं चैतद् गुरुपादैः ' । त.प्र भावदीपे- २.१.४. 'विस्तरस्तु तर्कताण्डवे' इत्यादि ।।

**वाक्ययोजना** - भावदीपा एकस्यैव वाक्यस्य द्विधा त्रिधा अवतारिकामुल्लिख्य वाक्यानि योज्यन्ते । यथा ७-२४ द्वेधा व्याख्यानम् । १०-२ श्लोके त्रेधा । क्वचित् प्रत्येकशः । यथा 'अधर्मं करोषि किमति इति योजना' (६-२४)इति।

**भावदीपे मतान्तरोल्लेखः**

प्रायः भावदीपकाराः यत्रास्वारस्यादिकं वा मतभेदो वा स्यात् तत्र 'एके' 'अन्ये' केचित् ' इति उल्लिखन्ति । न नामनिर्देशः क्रियते प्रायः । गीताविवृतौ द्वितीयाध्याये श्रीनरहरितीर्थानामभिप्रायः केचिदित्यादिनोल्लिखितः इति स्पष्टमवगम्यते । एवं प्रमेयदीपिकाभावदीपे नैकवारं मतभेदाभिप्रायः उल्लिखितः । यथा -

(१) उपोद्घाते-'ब्रह्मापि' इति श्लोके 'इत्येके । प्राज्ञास्तु .. इत्याहुः ।

(२)'इत्येके,' 'प्राज्ञास्तु'.... ९-२. (३) इत्येके ९-१२

(४) इत्येके, अन्ये तु १३-२० (५) लेखकदेषमूलोऽयं पाठ इत्येके ९-२

एवं तन्त्रदीपिकायामपि 'केचिद्वदन्ति' इत्यादि प्रयोगः दृश्यते ।

*प्रमेयदीपिकायां भावदीपे च प्रमेयस्पष्टीकरणाय न्याय, मीमांसा,अलङ्कार,व्याकरणशास्त्राणि उदाह्रियन्ते । एवं प्रसिद्धा न्यायकारिकाः उदाह्रियन्ते । परन्तु मूलग्रन्थेषु तासामाकरः नोपलब्धः ।

यथा - १.अनुकूलेन तर्केण सनाथे सति साधने

२.य उपाधिर्लगति साध्ये सम्बन्धविशेषणे

३.ऋजुमार्गेण सिद्ध्यतोर्थस्य वक्रेण साधनायोगात्

४.द्विष्टो यद्यपि सम्बन्धः (इदं हरिवचनम् इति भावदीपकाराः उल्लिखन्ति)

५.'सम्भावितः प्रतिज्ञायाः 'इत्यादयः

* एवमलङ्कारशास्त्रोल्लेखः टीकायामुपोद्घाते- 'यतिर्विच्छेदसंज्ञितः, 'श्लोकेषु नियतस्थाने' इत्यत्र । २-४२ श्लोके 'अत्यल्पत्वेनोपमा' इति भावदीपकारः ।

एवं ३-३० श्लोके 'सर्वत्र गूढोपमा' इति प्रमेयदीपकाराः । आलङ्कारिकास्तु लुप्तोपमालङ्कारं निर्दिशन्ति एतादृशस्थलेषु ।।

आलङ्कारिका अपि भगवद्गीताश्लोकानुल्लिखन्ति क्वचित् स्वशास्त्रेषु निदर्शनतया । यथा- 'या निशा सर्वभूतानाम्' इति श्लोकः धन्यालोके । एवं काव्यदृष्ट्या भगवद्गीताश्लोकेषु नानाअलङ्काराः प्रतिभासन्ते । निदर्शनतया कानिचन प्रदर्श्यन्ते-

'मात्रास्पर्शास्तु कौन्तेय' इत्यत्र काकुवक्रोक्तिः

'वेदाविनाशिनं नित्यम् ' इत्यत्र पुनरुक्तभङ्गः

'सङ्गात् सञ्जायते कामः' इत्यत्र मालादीपकम्

'पितेव पुत्रस्य सखेव सख्युः' इत्यत्र मालोपमा

'बहिरन्तश्च भूतानाम् ' इत्यत्र विरोधाभासः

'कर्मणो ह्यपि बोद्धव्यम्' इत्यत्र छेकानुप्रासः

'यस्मान्नोद्विजते लोकः ' इत्यत्र लाटानुप्रासः

अर्जुनस्य युद्धारम्भावस्थायां समाध्यलङ्कारः इत्यादयः ।

*प्रमेयदीपिकाभावदीपे मीमांसाशास्त्रोल्लेखः २-४७ श्लोके जैमिनिसूत्रोल्लेखपुरस्सरं प्रमेयदीपिका व्याख्याता । १३-२६ श्लोके पाठक्रमादर्थक्रमस्य बलीयस्त्वे मीमांसान्यायः विवृतः ।।

*एवं व्याकरणनियमोल्लेखेन शब्दसाधुत्वं सम्पादितं टीकायाम् -यथा- 'ज्ञानप्रधाना देवास्तु असुरास्तु रता असौ' इति नारदीयवचनं सप्तमभाष्ये (७.१५) दृश्यते । अत्र पदसन्धेर्विवक्षाधीनत्वादसन्धिर्न दोषः' इति टीका ।।

* महाभाष्यवेङ्कटभट्ट इति ख्यातनाम्नां श्रीराघवेन्द्रतीर्थानां व्याकरणवैदुष्यं स्पष्टं प्रतिभाति प्रमेयदीपिकाभावदीपे । दशप्रकरणभावदीपेषु, तत्वप्रकाशिकाभावदीपे, वादावलीभावदीपे, न्यायसुधापरिमले, न्यादीपिकाभावदीपे च व्याकरणविचारः कचिदेव किञ्चिदेव कृतस्तत्र तत्र ।। यद्यपि विष्णुतत्वनिर्णयभावदीपे रूपनिष्पत्तिः वृत्त्युदाहरणेन कृताऽपि न न्यासपदमञ्जर्याद्युल्लेखस्तत्र । उपनिषत्खण्डार्थेषु रूपनिष्पत्तिमात्रं क्रियते न सूत्राद्युल्लेखः । परन्तु प्रमेयदीपिकाभावदीपे न्यास, पदमञ्जरी, काशिकावृत्त्याद्युदहरणेन शब्दानां साधुत्वं सम्यगुपपादितम् ।।

किञ्चैवं निरूपणावसरे कचित् भावदीपान्तरेषु निरूपिता एव विषयाः प्रमेयदीपिकाभावदीपेऽप्युल्लिखिता दृष्यन्ते विना व्यत्यासेन । यथा कृपालुशब्दनिष्पत्तिः तत्वप्रकाशिकायां, न्यासुधापरिमले, प्रमेयदीपिकाभावदीपे च । एवं 'लक्षणेत्थंभूत' इति सूत्रार्थोल्लेखः परिमले, भावदीपे च । एवमादयः तत्र तत्र अधस्तनटिप्पणीषु निर्दिष्टाः ।।

किञ्च भगवद्गीताया विषये इदं तावद् वक्तव्यम् । भगवद्गीतायाः सन्त्यनेकव्याख्यानानि । तानि चोल्लिखितानि वेङ्कटनाथेन स्वटिप्पण्यां तात्पर्यचन्द्रिकायां १८-६६ श्लोके 'पिशाच-रन्तिदेव-यादवप्रकाश-भास्कर-नारायणार्य-यज्ञस्वामिप्रभृतिभिः स्वं स्वं मतमास्थितैः परःशतैर्भाष्यकृद्भिः ' इत्यादिना । तेन नानाभाष्यकारैः गीतायां नानापाठा आदृताः । माध्वभाष्यरीत्या गीतापाठं स्वीकृत्य पादटिप्पण्यां मतान्तराण्यप्युल्लिखितानि अध्येतृसौकर्याय । मतत्रयरीत्या गीतापाठभेदः परिशिष्टे एकत्र निर्दिष्टः ।।

किञ्च द्वैतसिद्धान्ते भगवद्गीतापाठः व्याख्यातृभिः नैकधा स्वीकृता इति न वयं गीतामूल-पाठनिर्धारणे क्षमाः । तद्यथा -

| | गीताभाष्यम् | तात्पर्यम् |
|---|---|---|
| २.२४ | नित्यः सर्वगतस्थाणुः | नित्यसर्वगतस्थाणुः[1] |

**एवं श्रीवादिराजश्रीमच्चरणैः महाभारतलक्षालङ्कारे गीताप्रतीकग्रहणेन गीता व्याख्याता । तत्रापि प्रचलितपाठाद् भिन्नपाठः स्वीकृतः । क्वचित् पदच्छेदः व्यत्यस्तः । सतु न बाधकः ।**

**※ गीतालक्षालङ्काररीत्या एषु स्थलेषु प्रचलितपाठाद् भिन्नपाठः आदृतः**

| | | |
|---|---|---|
| ३.६ | यस्त्विन्द्रियाणि संयम्य य आस्ते | कर्मेन्द्रियाणि संयम्य सदास्ते |
| ३.३३ | सदृशं चेष्टते स्वस्याः | सदृशं चेष्टते यस्याः |
| ६.१० | एकाकी यतचित्तात्मा | एकाकी जितचित्तात्मा |
| ७.१८. | त्वात्मैव मे मतम् | त्वात्मैव मे मतः[2] |
| ७.२० | कामैस्तैस्तैर्हृतज्ञानाः | कामैस्तैस्तैर्हतज्ञानाः |
| ७.२४ | अव्यक्तं व्यक्तिमापन्नं | अव्यक्तं व्यक्तमापन्नं |
| ८.३ | स्वभावोध्यात्ममुच्यते | स्वभावाध्यात्ममुच्यते[3] |
| १८.३० | प्रवृत्तिं च निवृत्तिं च | प्रकृतिं विकृतिं चैव |

**※ अर्थव्यत्यासाभावेपि शब्दव्यत्यसः स्थलद्वये**

| | | |
|---|---|---|
| २.११ | प्रज्ञावादांश्च | प्रज्ञावादांस्तु |
| १३.१७ | अविभक्तं च भूतेषु | अविभक्तं तु भूतेषु |

अनयोः श्लोकयोः व्याख्यायां चकारतुकारयोः अर्थः कुत्रापि नोक्तः ।

---

१. श्रीनरहरितीर्थैः भावप्रकाशिकायां भाष्यतृतीयाध्यायावतारिकायामेवमेव प्रतीकग्रहणं कृतम् ।

२. (अ)प्राचीनभगवद्गीता इति व्यवह्रियमाणे-अभिनवगुप्तपाठे मत इत्येव पठ्यते ।

(आ) रामानुजभाष्यटीकायां वेङ्कटनाथीये 'मत इति परोक्तपाठस्त्वप्रसिद्धः' इत्युक्तम् । परोक्तपाठ इति यमधिकृत्योक्तमिति न स्पष्टम् ।

३.'स्वभावः अध्यात्मम् इत्युच्यत' इति विवृतिकाराः। 'स्वभावेनात्मानमधिकृत्य वर्तमानम्'इति लक्षा.

※ गीताभाष्य-तात्पर्ययोः पदच्छेदव्यत्यासः -

| | | |
|---|---|---|
| ४.१६ | तत्ते कर्म - | तत्तेऽकर्म[1] |
| ४.१७ | कर्मणो ह्यपि बोद्धव्यः | कर्म नो ह्यपि बोद्धव्यम् |
| ४.२० | नित्यतृप्तो निराश्रयः | नित्यतृप्तोऽनिराश्रयः |
| ५.२५ | छिन्नद्वैधाः यतात्मानः | छिन्नद्वैधाः आयतात्मानः[2] |

महाभारतलक्षालङ्कार-गीताविवृतिरीत्या पदच्छेदव्यत्यासः

| | लक्षालङ्कार- | गी.वि |
|---|---|---|
| २.४१ | बुद्धयो व्यवसायिनाम् | बुद्धयः अव्यवसायिनाम् |
| ४.२४ | ब्रह्मकर्मसमाधिना[3] | ब्रह्म कर्म समाधिना |
| ८.२० | अव्यक्तः अव्यक्तात् सनातनः[4] | अव्यक्तो व्यक्तात् सनातनः |

※ 'आ ब्रह्मभुवनाल्लोकाः' 'आब्रह्मभवनाल्लोकाः' (८.१६) इति श्लोके भवन इति प्रतीकमेव सर्वत्र व्याख्यानेषु दृश्यते । प्रचलितपाठस्तु भुवन इति ।

गीताभाष्य-गीताविवृत्त्योः पाठभेदः-

(१) 'बुद्धिनाशात् प्रणश्यति' इति गीताभाष्ये,

'बुद्धिनाशात् विनश्यति' इति गीताविवृतौ (२.६३)

(२)'असक्तं सर्वभुक् चैव' इत्यत्र -'असक्तं सर्वभृत् चैव'(१३.१५)

'सर्वं भुङ्क्ते इति सर्वभुक् । सर्वसंहर्तृ इति वा सर्वसारभोक्तृ इति वा अर्थः । सर्वभृच्चेति पाठान्तरम् ।' इति

---

१. लक्षालङ्कारेऽपि तत् ते अकर्म इति छेदः । अकर्म अयोग्यतया कस्यचिदकर्तव्यं पुण्यकर्म' इति । पद्मनाभतीर्थैरप्येवं पदच्छेदः कृतः ।

२. अयं पदच्छेदः गीताभाष्य एव कण्ठत उक्तः ।

३. रामानुज-शाङ्करभाष्ययोरप्ययमेव पाठ आदृतः । टीकायां तु ब्रह्मविषयसमाधिरित्यर्थे समासः निराकृतः । 'ब्रह्मण्येव कर्मविषयकचित्तसमाधानवता' इति लक्षालङ्काराभिप्रायः ।।

४. अन्यः परमात्माख्यः पदार्थः अव्यक्तादप्यक्तः(लक्षा);

अव्यक्तस्तु भगवांस्तु तस्मात् प्रभवप्रलयोपेतात् व्यक्तात् भूतग्रामात् अन्यः विलक्षणः भावः -गी.वि.

गीताविवृत्तावपि विभिन्नपदच्छेद-पाठादिकं क्वचित् । यथा

(१) १४. १९. नान्यं गुणेभ्यः - ना अन्यं(राघ), न अन्यं

(२) १५. ३. नच संप्रतिष्ठा नच संप्रविष्ठः (राघ)-

एवं गीताविवृत्ति-भावरत्नकोशयोः गीतायां भिन्नपाठः दृश्यते । 'प्राप्य पुण्यकृतान् लोकान्'(६.४१) इत्यत्र 'पुण्यकृताम् अश्वमेधादियाजनाम्, 'पुण्यकृतान्' इत्यपि पठन्ति' इति भा.र.को.। गीताविवृतौ तु 'पुण्यकृतान् पुण्यसम्पाद्यान्' इति ।। एवं 'धार्तराष्ट्रान् स्वबान्धवान् ' इति १-३७ पाठः पाङ्गीआचार्यैः 'सबान्धवान्' इति व्यत्यस्तः ।।

गीताश्लोकसङ्ख्याविषयेऽपि व्याख्यान्तरेषु विगीतिः दृश्यते । तत्र रामानुजभाष्यटीकायामेव गीतायामधिकश्लोकाः प्राचीनव्याख्यातृभिरव्याख्याततत्वादुपेक्ष्या इत्युक्तमिति नात्रास्मदवसरः ।

त्रयोदशाध्याये 'प्रकृतिं पुरुषं चैव' इति श्लोकः कैरपि भाष्यकारैः टीकाकारैश्च न व्याख्यातः । अतो नास्य गीतान्तर्गतत्वमिति केचिदाहुः । अयं मध्वमतानुसारिभिः वनमालिमिश्रैरपि गीतागूढार्थचन्द्रिकायां न व्याख्यातः । तथापि अमृततरङ्गिणीकारेण तथा श्रीवादिराजतीर्थैः लक्षालङ्कारे, गीताविवृत्तौ राघवेन्द्रतीर्थैश्च व्याख्यात इति गीतान्तर्गतत्वमस्य श्लोकस्य द्वैतिभिः स्वीक्रियते ।। अपिकिञ्चिल्लेखनीया गीताद्यधिकृत्य ।ग्रन्थविस्तरभयादुपोद्घात उपसंह्रियते ।।

**उपसंहारः-**

**मातृकास्वरूपम् - गीताभाष्यटीकाभावदीपः**

१.प्रथममातृका तुळुलिप्यां विद्यमाना काणियूरुमठे उपलब्धा २००० वर्षे । मातृकायाः प्रारम्भे 'श्रीगुरुभ्यो नमः । श्रीमदधोक्षजविठ्ठलाय नमः' इति लिखतम् । तेनेयं मातृका मूलतः पेजावरमठीया स्यात् । पेजावर-काणियूरुमठयोः द्वन्द्वमठत्वात् कदाचित् काले काणियूरुमठे गता तत्रैव स्थिता इत्यूह्यते । अस्यां मातृकायां १९१ पत्राणि सन्ति । द्वादशाध्याये एका मातृका न लिखिता । पत्रसङ्ख्या त्वनुस्यूता ।।

२०००वर्षे अयं भावदीपः मुद्रितो वा न वा, किमिदं श्रीराघवेन्द्रतीर्थाणामेव व्याख्यानमित्यादि न स्पष्टमासीत् । तन्मध्ये भावरत्नकोशः मुद्रितः पूर्णप्रज्ञसंशोधनमन्दिरात् । तत्र श्रीसुमतीन्द्रतीर्थैः राघवेन्द्रतीर्थयत्वेन उदाहृतानि वाक्यानि अत्रापि समानीति विमृश्य

लिप्यन्तरे प्रवृत्तम् २००३ वर्षे । तत्र श्रीभीमभट्टाचार्याणां तनूजेन श्री एस् बि. कृष्णमूर्तिमहोदयेन तथा उण्डारुश्रीनिवासाचार्येण च लिप्यन्तरं समापितं २००८ वर्षे । अस्यां मातृकायां एकं पत्रमेव नासीत् ।।

२.अनन्तरं दैवात् मध्ये मध्ये बहुक्रिमिभक्षिता देवनागरी मातृका कथञ्चिद् लब्धा अपूर्णा चेयम् । तत्रापि बहुस्थलेषु क्रिमिभक्षिततया न शुद्धपाठोपलब्धिः। मातृकाद्वयसहकारेण प्रकाशनार्थं सिद्धोयं ग्रन्थः ।।

अस्याः मातृकायाः विशेषस्तु अध्यायान्त्यभागे भगवतः तदध्यायलेखनं समर्प्यते विशिष्टतया । यथा संशप्तकशत्रुसारथिश्रीकृष्णार्पणमस्तु । शिष्टजनप्रियकृष्णप्रीतिरस्तु । त्रयोदशवर्षपर्यन्तं राज्यपालकरामकृष्णवेदव्यासार्पणमस्तु । चतुर्दशभुवनाधाश्रीकृष्णार्पणमस्तु । पञ्चदशरूपात्मकश्रीकृष्णार्पणमस्तु इत्यादिकम् ।।

३. २०११ वर्षे दैवात् सोदेमठीयग्रन्थालये अकस्मात् उपलब्धा अन्या भावदीपमातृका । इयं न क्रिमिभक्षिता । लेखकदोषभूयिष्टा अपि बहुस्थलेषु त्रुटितपङ्क्त्युद्धारे सक्षमा । अस्यामपि क्वचित् अधिकवाक्यानि पूर्वमातृकास्वनुपलब्धानि सन्ति ।। इयं मातृका श्रीविश्ववल्लभतीर्थानामाज्ञया लिप्यन्तरीकृता कृष्णमूर्तिमहोदयेन । अधमर्णोहं श्रीचरणानामनुग्रहोपरकाराय ।।

सोदेमठीयमातृकायाः स्वरूपम् -इयं २५० वर्षात् प्राक् लिखिता मातृका तुळुलिप्यां वर्तते । अस्यां २२५ पत्राणि सन्ति । द्वादशाध्याये १९१ पत्रे कानिचन वाक्यान्येवोपलभ्यन्ते । यथालब्धं मुद्रतमत्र । न पूर्णपाठः अस्मिन्नध्याये ।।

वेदवल्लभतीर्थानामदमारुमठपरम्परागतानां काले लिखितेयं मातृका इति मातृकान्त्यभागात् विज्ञायते । वेदवल्लभतीर्थाः श्रीपेजावरमठीयश्रीविश्वपतितीर्थान्तेवासिन इतीतिहासः । मातृकान्त्यभागे 'विसर्गबिन्दुमात्राणि पदपादाक्षराणि च । न्यूनानि चातिरिक्तानि क्षमस्व पुरषोत्तम । पदे पदे विसर्गाणि बिन्दुमात्राणि केवलम् । न्यूनानि चातिरिक्तानि क्षमस्व पुरुषोत्तम ।। वेदवल्लभभिक्षूणां शङ्कराख्यद्विजेन हि । लिखिता भगवद्गीताभाष्यव्याख्यानं मुदे' इतीमानि श्लोकानि लिखितानि दृष्यन्ते ।।

४. एतदभ्यन्तरे मन्त्रालयमठात् एका मातृका उपलब्धा । सा यथामातृकैव मुद्रिता, न तत्र शुद्धपाठविचारः । एतासु चतसृष्वपि मातृकासु बहुषु स्थलेषु वाक्यानामावापोद्वापः कृतः ।

केवलं सोदेमठादुपलब्धमातृकात एव भावदीपे शुद्धपाठनिर्धारः तथा अनेकपङ्क्त्युद्धारश्च । अधस्थनटीप्पणीषु तत्र तत्र सूचितमेतत् । द्वादशाध्यायान्तिमभागे मातृका काणियूरुमातृकायां पूर्णं न लिखिता । सोदेमठीये न स्पष्टेत्यादिकारणतो तत्र न पूर्णपाठोपलब्धिः ।

एवं मन्त्रालयमातृकायामेव विद्यमानानि वाक्यानि न तुळुमातृकयोरुपलभ्यन्त इति तत्रापि सप्तदशाध्यायान्तिमभागे अपूर्णतोपभ्यते । क्वचित् प्रतीकग्रहणमात्रं दृष्यते न व्याख्यायते तत्र प्रायः लिपिकारेण पङ्क्तयः न लिखिता इति भाति । एवं भावदीपशुद्धपाठनिर्धारणे महान् श्रमः अनुभूतः । यावच्छक्यं तावत् शुद्धपाठे प्रयतितम् ।

एवं प्रमेयदीपिकायाः मातृका एका श्रीमद्भिः डा.व्यासनकेरे प्रभञ्जनाचार्यैः दत्ता सनाभिमातृका शुद्धाक्षरा । अस्याः मातृकायाः सहकारो महान् । अनेकस्थलेषु शुद्धपाठार्थेयमुपयुक्ता । अन्या एका प्रमेयदीपिका मातृका अस्मदीयग्रन्थागारस्था सनाभिमातृका पञ्चमाध्यायादरभ्य सप्तदशाध्यायपर्यन्ता । अस्यां क्वचित् स्थलेषु हंसपादं चिह्नित्वा टीकाक्षरार्थः विवृतः । स अधस्थनटिप्पण्यां निवेशतस्तत्र तत्र । यथा -१३-१, १३-९, १३- २३, १५-१, १५-८, १६-५, १६-८, १७-२८, १७-२४, १८-२ इत्यादिस्थलेषु ।।

एवमपरे प्रमेयदीपिकायाः द्वे मातृके उपयुक्ते । ते च श-१ मातृका, श २ मातृका इति सूचिते ।।

किञ्च बेळंगाव्नगरात् मुद्रिता सनाभिगीताभाष्यप्रमेयदीपिका, एवं गुजरात्प्रेस्द्वारा मुद्रिता एकादशटीकोपेता श्रीमद्भगवद्गीता, एवं वेदान्तग्रन्थमालातः प्रकाशिता मतत्रयभाष्यटीकोपेता श्रीमद्भगवद्गीता च गीताभाष्य-प्रमेयदीपिकापाठसम्पादने उपयुक्ता । एवं श्रीपद्मनाभतीर्थीय-नरहरितीर्थीयटीका संविलितं श्रीप्रभञ्जनाचार्यैः सम्पादितं श्रीमद्गीताभाष्यमपि अस्मिन् संस्करणे उपयुक्तम् ।। संशोधनमन्दिरतः प्रकाशितं भावरत्नकोशसहितं गीताभाष्यमपि ।।

बेळगांव्पाठः 'बे' इति, गुजरात्प्रेस्पाठः 'गुज' इति, वेदान्तग्रन्थमालापाठ 'वे-ग्रं' इति, डा. प्रभञ्जनाचार्याणां भाष्यपाठः 'प्रभ' इति च निर्देशितः पादटिप्पण्याम् ।।

प्रमेयदीपिकायां यत्र भाष्यव्याख्या नास्ति तत्र स्पष्टतार्थं अधिकांशोपलब्धये पद्मनाभतीर्थीया नरहरितीर्थीया च टीका निवेशिता । यथा २-२१, २-२४,२-४२, ४-१, ८-७, । क्वचिदप-व्याख्यानिरासार्था ८-८, १५-१२ इत्यादिषु ।।

किञ्च प्रमेयदीपिकायां यत्र यत्रापव्याख्याननिरासः तत्र परभाष्यपत्रसङ्ख्यादि निवेशिता विमर्शकानां सौकर्याय ।।

किञ्च गीताभाष्यस्थप्रमाणवचनानां व्याख्या अन्यत्र टीकायां, टिप्पणीषु वा विद्यमाना अध्ययनसौकर्यायात्र निवेशिता । यथा सत्यधर्मीयरामायणव्याख्यानगताः, भाष्यदीपिकागताः, उपनिषत्खण्डार्थाः, भागवतस्य विजयध्वजीयव्याख्या इत्यादयः सहस्राधिकाः अधस्तनटिप्पण्यः बहुप्रयासेन संशोध्य संयोजिताः । महता प्रयासेन उन्मूलिता अपि अनेके टङ्कणदोषाः अप्युर्वरिताः मानुषबुद्धित्वात् । मुद्रणानन्तरं दृष्टिपथं गताः अन्त्ये प्रत्येकपत्रे निवेशिताः । अपि चान्ये सम्भविताः मुद्रणदोषैकदृग्भिर्विद्वद्भिः सूचिताः दोषा मार्जयन्त इति सादरं निवेद्यते ।।

यद्यपि 'आनन्दतीर्थवचसां विशिष्टव्याख्यानकर्मणि सुरा ह्यधिकारिणोत्र' इत्यभियुक्तोक्तेः नाहं विमर्शकः, संशोधको वा । केवलं लिप्यन्तरादिकं कृत्वा भाष्यटीकादिकं यथाशक्ति संयुज्य आलेखक एव । तथापि करकृतमपराधं क्षाम्यन्तु मे हन्त मुहुर्महान्त इति हंसक्षीरन्यायेन गुणान् ग्राहयन्तु इति च विमर्शकेषु विद्वत्सु सविनयं प्रार्थये ।।

शुभान् ध्यायन्ति ये कामान् गुरुदेवप्रसादजान् ।
इतरानात्मपापोत्थान् तेषां विद्या फलिष्यति ।।

भावदीपसुशोधेन लब्धपुण्यमनुत्तमम् ।
प्राप्यास्मद्गुरवः प्रीताः क्रियासुः करुणां मयि ।।

इति विद्वद्वशंवदः
सि.आर.प्रदीपसिंहाचार्यः चतुर्वेदी.

## सभक्तिश्रद्धं प्रणतिततिसमर्पणम्

※ पूर्णप्रज्ञविद्यापीठे सुधा,चन्द्रिकान्तद्वैतसिद्धान्तवेदान्तविद्योपदेशकानामस्मद्गुरुचरणानां परमपूज्यानां शिष्यवत्सलानां भाविपर्यायपीठाधिरोहिणाम् श्रीपेजावरअधोक्षजमठाधीशानां श्रीमद्विश्वेशतीर्थश्रीमच्चरणानां चरणनलिनयोः

※ यजुस्सामाथर्ववेदोपदेशकानां श्रीपेजावरमठाधीशानां श्रीश्रीविश्वप्रसन्नतीर्थ-श्रीमच्चरणानां पादकमलयोः

※ भावदीपमातृकाप्रदानेनागृहीतवतां श्रीकाणियूरुमठाधीशानां श्रीश्रीविद्यावल्लभतीर्थ-श्रीमच्चरणानां पदकीलालजयोः

※ भावदीपमातृकाप्रदानेनागृहीतवतां श्रीसोदेवादिराजमठाधीशानां श्रीश्रीविश्ववल्लभतीर्थ-श्रीमच्चरणानां पत्कञ्जयोः

※ श्रीमद्गीता-भाष्य-टीका-भावदीपानामामूलाग्रसारलेखनपुरस्सरं तत्र तत्र भावदीप-शोधनकर्मणि च मामनुगृहीतवताम् अध्यात्ममार्गोपदेशकानां श्रीहनसोगेमध्वमठाधीशानां श्रीश्रीविश्वनन्दनतीर्थश्रीमच्चरणानां पादकमलयोः

※साधनशरीरज्ञानदात्रोः मातापित्रोश्च सभक्तिश्रद्धं साष्टाङ्गप्रणतिततीः समर्पये ।।

## कृतज्ञतासमर्पणम्

※ भूर्जपत्रेषु प्रमेयदीपिकाभावदीपमालिख्य द्वैतवेदान्तसारस्वतप्रपञ्चस्यापूर्वमातृकालिपि-करणेनोपकृतवतो श्रीवेदवल्लभतीर्थशिष्यस्य शङ्कराख्यद्विजस्य सर्वे वयं माध्वा अधमर्णाः ।।

※ परिशोधनकर्मनिरतानां संशोधनमन्दिरनिदेशकानां मम संशोधनकर्मणि स्वानुभवेन मार्गप्रदर्शकानां श्री डा.ए.वि.नागसम्पिगे आचार्यमहोदयेभ्यः

※ प्रमेयदीपिकाशुद्धपाठशोधार्थं प्रमेयदीपिकामातृकाप्रदानेन मामुपकृतवद्भ्यः नैकमातृका-संशोधनप्रकाशनादिनिरतेभ्यः श्री.डा.प्रभञ्जनाचार्यमहोदयेभ्यः

※ तुळुलिप्यन्तरीकरणपूर्वकं मातृकाद्वयपठनपुरस्सरं मातृकालेखनशोधनादिकर्मणि, साहाय्य-माचरितवद्भ्यः नैकलिपिमातृकापठनचतुरेभ्यः एस्. बि.श्रीकृष्णमूर्तिमहोदयेभ्यः, तथा उण्डारु श्रीनिवासाचार्यमहोदयेभ्यः

✲ ग्रन्थमिममामूलाग्रं परिशील्य आवश्यकसूचनाप्रदानपुरस्सरं शोधनकर्मणि सहायकेभ्यः श्रीवीरनारायणाचार्यपाण्डुरङ्गीमहोदयेभ्यः,

✲ संशोधनमार्गे मत्प्रोत्साहकेभ्यः प्रकाशनात्पूर्वं ग्रन्थमवलोक्य आवश्यकसूचनां दत्तवद्भ्यः श्रीतिरुमलाचार्यकुलकर्णिमहोदयेभ्यः

✲ उपोद्घातविषये आवश्यकसूचनां दत्तवद्भ्यः मन्मित्रेभ्यः सत्तिगेरिवासुदेवाचार्येभ्यः

✲ पादटिप्पणियोजने आवश्यकसूचनां दत्तवद्भ्यः मन्मित्रेभ्यः एन्.रविकुमाराचार्येभ्यः

✲ अप्रकटितमातृकाशोधकर्मप्रोत्साहकेभ्यःश्रीनिधिवासिष्ठ, वे.श्रीनिवासमहोदयेभ्यः

✲ पूर्णप्रज्ञसंशोधनमन्दिरकार्यकार्यधिकारिवर्गेभ्यः

✲ पूर्णप्रज्ञविद्यापीठीयग्रन्थलयाधिकारिभ्यः

✲ प्रमेयदीपिकापाठशोधार्थं प्रमेयदीपिकामातृकापठनार्थमुपकृतवद्भ्यः महिशूरप्राच्यविद्या-संशोधनालयाधिकारितत्कार्यकारिवर्गेभ्यः

✲ भगवद्गीतासारसङ्ग्रहाङ्ग्लभाषानुवादटङ्कनकृते श्रीमते पि.वि.रघुनन्दनभारद्वाजमहोदयाय

✲ मातृकापाठान्तरकर्मणि साहाय्यमाचरितवते सुहृदे एम्.राघवेन्द्रमहोदयाय

✲ एतद्ग्रन्थटङ्कनकर्मणि प्राथमिकतया साहाय्यमाचरितवद्भ्यः के. सुब्बण्णमहोदयेभ्यः

✲ श्रीमद्गीताभाष्यटीकाभावदीपग्रन्थमुद्रणार्थ धनसाहाय्यमाचरितवद्भ्यः

| | | |
|---|---|---|
| १. प्राणेशराव् (चामराजपेटे) | (२५०००) | पञ्चविंशतिसहस्ररूप्यकाणि |
| २. वेणीश्रीनिवास् दम्पती | (५०००) | पञ्चसहस्ररूप्यकाणि |
| ३. सञ्जय् | (१००१) | एकाधिकसहस्ररूप्यकाणि |
| ४. गुण्डूराव् महोदयेभ्यः | (१००१) | एकाधिकसहस्ररूप्यकाणि |

एवं परोक्षमपरोक्षं साहाय्यमाचरितवद्भ्यः सर्वेभ्यः हितचिन्तकेभ्यः माध्वबन्धुभ्यः सप्रश्रयं कृतज्ञोहम्.

श्रीकृष्णार्पणमस्तु

# सङ्केताक्षरसूची

| | |
|---|---|
| अ.को. | अमरकोशः |
| अ.श्लो. | अध्याय-श्लोक-सङ्ख्या |
| अधि. | अधिकरणम् |
| अनु.(अनु.व्या) | अनुव्याख्यानम् |
| आथ. | आथर्वणोपनिषत् |
| आथ.उ.भा. | आथर्वणोपनिषद्भाष्यम् |
| ई.उ. | ईशावास्योपनिषत् |
| ई.खं.राघ. | ईशावास्योपनिषत्खण्डार्थः(राघवेन्द्रतीर्थविरचितः) |
| ई.टी.टि | ईशावास्यटीकाटिप्पणी |
| उ.सू. | उणादिसूत्रम् |
| उदा. | उदाहृतम् (उदाहृतवचनम्) |
| उ.व. | उदाहृतवचनम् |
| उ.म.प्रकाशनम् | उत्तरादिमठप्रकाशनम् (पृष्ठसङ्ख्या) |
| ऋ. | ऋग्वेदे अध्याय -मण्डल-सूक्त-(वर्ग)मन्त्रसङ्ख्या |
| ऐत. | ऐतरेयोपनिषत् |
| ऐ.उ.भा. | ऐतरेयोपनिषद्भाष्यम् |
| कठ.(उ.) | कठोपनिषत् |
| कर्म.नि.भा | कर्मनिर्णयभाष्यम् |
| का.(उ)भा. | काठकोपनिषद्भाष्यम् |
| का.वेदेशीये | काठकोपनिद्भाष्यटिप्पणी वेदेशीया |
| का.खं.रा | काठकोपनिषत्खण्डार्थः(राघवेन्द्रीया) |
| का.प्र.पा. | काण्ड.प्रपाठक.मन्त्रसङ्ख्या |
| कृ.म. | कृष्णामृतमहार्णवः |

| | |
|---|---|
| कृ.टि. | उमर्जीकृष्णाचार्यटिप्पणी |
| गी.भा. | गीताभाष्यम् |
| गी.ता. | गीतातात्पर्यम् |
| गी.वि. | गीताविवृतिः |
| त.प्र. | तत्वप्रकाशिका |
| त.प्र.भावदीपः | तत्वप्रकाशिकाभावदीपः |
| त.दी.(तन्त्र.दी) | तन्त्रदीपिका |
| तै.उ.टि. | तैत्तिरीय.उपनिषत् -टिप्पणी |
| त.तां.(पृ.) | तर्कताण्डवः (पृष्ठसङ्ख्या) |
| त.सा.सं | तन्त्रसारसङ्ग्रहः |
| तै.सं | तैत्तिरीयसंहिता |
| तै.उ. | तैत्तिरीयोपनिषत् |
| तै.(उ.)भा. | तैत्तिरीयोपनिषद्भाष्यम् |
| तै.उ.खं. | तैत्तिरीयोपनिषत्खण्डार्थः(राघवेन्द्रीयः) |
| तै.श्री.खं. | तैत्तिरीयोपनिषत्खण्डार्थः (श्रीनिवासतीर्थीयः) |
| तै.भा.प्रकाशिका | तैत्तिरीयोपनिषद्भाष्यप्रकाशिका-वादिराजीया |
| द्वि.भा | द्वितीयभागः |
| द्रं. | द्रष्टव्यम् |
| ना.अ.क | नारायणअष्टाक्षरकल्पः |
| ना.प.उ | नारदपरिव्राजकोपनिषत् |
| न्या.सु. | न्यायसुधा |
| छां.उ.(भा) | छान्दोग्योपनिषत् (भाष्यम् ) |
| जै.सू. | जैमिनीयसूत्रम् |
| ज्ये.मा.मा. | ज्येष्ठमासमाहात्म्यम् |

| | |
|---|---|
| परि. | न्यायसुधापरिमलम् |
| प्र.दी. | प्रमेयदीपिका |
| प्र.भा | प्रथमभागः |
| पा.सू . | पाणिनीय-अष्टाध्यायी सूत्राणि .अध्याय,पाद-सूत्रसङ्ख्या |
| पा.धा. | पाणिनीयधातुपाठः |
| प्र-परि(च्छेद) | प्रथमपरिच्छेदः |
| प्रच. | प्रचलितपाठः |
| प्रभ. | प्रभञ्जनाचार्यसम्पादितपुस्तके विद्यमानपाठः |
| पृ. | पृष्ठसङ्ख्या |
| ब्र.सू. | ब्रह्मसूत्रम् -अध्याय-पाद-(अधिकरण-)सूत्रसङ्ख्या |
| ब्र.सू.भा. | ब्रह्मसूत्रभाष्यम् |
| ब्र.सू.भाष्य.दी. | ब्रह्मसूत्रभाष्यदीपिका |
| बृ.उ. | बृहदारण्यक -उपनिषत् अध्याय,ब्राह्मण,खण्ड-मन्त्र |
| बृ.उ.भा. | बृहदारण्यकोपनिषद्भाष्यम् । |
| भाग. | भागवतम्.स्कन्ध-अध्याय,श्लोकसङ्ख्या । |
| भाग.ता.(भा.ता) | भागवततात्पर्यम् । |
| भाग.सत्य- | भागवतसत्यधर्मीयटीका |
| भाग.विज. | भागवतविजयध्वजीयटीका |
| भार.र.को. | भावरत्नकोशः |
| म.भा.ता.नि. | महाभारततात्पर्यनिर्णयः |
| म.ना.उ. | महानारायणोपनिषत् |
| मनु.,म.स्मृ | मनुस्मृतिः. |
| म.भा. | महाभारतम् पर्व,अध्याय,श्लोकसङ्ख्या |
| म.भा.ता.नि. | महाभारततात्पर्यनिर्णयः |

म.भा.ता.नि.टीका महाभारततात्पर्यनिर्णयटीका
मा.रा.सं.स. माध्वराद्धान्तसंवर्धिनीसभामुद्रितपुस्तकम्
यादुपत्यम् भागवतयादुपत्यव्याख्यानम्
युद्ध.(यु.कां) रामायणयुद्धकाण्डसत्यधर्मीयव्याख्या
रामा. रामायणम्
रा-खण्डार्थे राघवन्द्रतीर्थविरचितखण्डार्थः
रा.भा.टि. रामानुजभाष्यटिप्पणी वेङ्कटनाथीया
वराह.पु.चा.मा. वराहपुराण-चातुर्मास्यमाहात्म्यम् ।
वि.स.ना. विष्णुसहस्रनामानि
वा.स.ना. वासुदेवसहस्रनामानि
वा.रत्नमाला. वाक्यार्थरत्नमाला
वि.पु. विष्णुपुराणम् अध्याय श्लोकसङ्ख्या
वि.त.नि. विष्णुतत्वनिर्णयः
वि.त.नि.टीका. विष्णुतत्वनिर्णयटीका
वि.त.नि (व्यास.टि)
व्या.टि. विष्णुतत्वनिर्णयव्यासतत्वज्ञटिप्पणी
विजयध्वजीयम् (वि.टी) विजयध्वजीया भागवतटीका
व्या.टी. व्यासतत्त्वज्ञटिप्पणी.
वि.त.नि.भावदीपः. विष्णुतत्वनिर्णयभावदीपः
वृ.हा. वृद्धहारीतस्मृतिः
शत.ब्रा. शतपथब्राह्मणम्
शां.भा.(भा.) शाङ्करभाष्यम् (भागः
शु.य.वे. शुक्लयजुर्वेदः
शे.वा.चं. शेषवाक्यार्थचन्द्रिका(सुधाटिप्पणी)

| | |
|---|---|
| शे.ता.चं | शेषतात्पर्यचन्द्रिका(रघुनाथयतिकृता) |
| श्लो. | श्लोकः |
| ष.प्र.उ.(भा) | षट्प्रश्नोपनिषत् (भाष्यम् |
| श्रीनि.टि. | श्रीनिवासतीर्थीया टिप्पणी |
| श्रीनि.खण्डार्थे. | श्रीनिवासतीर्थीयोपनिषत्खण्डार्थः |
| सि.कौ. | सिद्धान्तकौमुदी |
| सुधा.टि. | न्यायसुधाटिप्पणी |

******

# विषयानुक्रमणिका

# श्रीमद्भगवद्गीताभाष्यटीकाभावदीपविषयानुक्रमणिका

## श्रीमद्भगवद्गीताभाष्योपोद्घातः

## ।। अथ श्रीमद्भगवद्गीतायां प्रथमोऽध्यायः ।।



## ।। अथ श्रीमद्भगवद्गीतायां द्वितीयोऽध्यायः ।।

।। अथ श्रीमद्भगवद्गीतायां तृतीयाध्यायः ।।

।। अथ श्रीमद्भगवद्गीतायां चतुर्थोऽध्यायः ।।

।। अथ श्रीमद्भगवद्गीतायां पञ्चमोऽध्यायः ।।

।। अथ श्रीमद्भगवद्गीतायां षष्ठोऽध्यायः ।।

॥ अथ श्रीमद्भगवद्गीतायां सप्तमोऽध्यायः ॥

।। अथ श्रीमद्भगवद्गीतायाम् अष्टमोऽध्यायः ।।

॥ अथ श्रीमद्भगवद्गीतायां नवमोऽध्यायः ॥

## ।। अथ श्रीमद्भगवद्गीतायां दशमोऽध्यायः ।।



## ।। अथ श्रीमद्भगवद्गीतायाम् एकादशोऽध्यायः ।।

।। अथ श्रीमद्भगवद्गीतायां द्वादशोऽध्यायः ।।



।। अथ श्रीमद्भगवद्गीतायां त्रयोदशोऽध्यायः ।।

।। अथ श्रीमद्भगवद्गीतायां चतुर्दशोऽध्यायः ।।

।। अथ श्रीमद्भगवद्गीतायां पञ्चदशोऽध्यायः ।।

।। अथ श्रीमद्भगवद्गीतायां षोडशोऽध्यायः ।।



।। अथ श्रीमद्भगवद्गीतायां सप्तदशोऽध्यायः ।।



।। अथ श्रीमद्भगवद्गीतायाम् अष्टादशोऽध्यायः ।।

## परिशिष्टम्

This edition wold not have been possible without the active support and encouragment of

S.B. Krishnamurthi bhat



undaru shrinivasacharya.

I offer special acknoweldgemnent for sri. krishnamurti bhat's active interest in preservation of Dvaita literature and generously making copies of manuscripts in his collection avliable to serious seekers. I sincerely request his continud support in this challenging task.

- c.r. pradeepasimhacharya, chaturvedi

श्रीमन्मध्वमहाचार्यपदपद्मैकसद्मनाम्

अणूनां महतां चापि भवतात् करुणा मयि ।।

श्रीपद्मनाभनातीर्थभट्टारकाः

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ।।

श्रीश्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# श्रीमद्भगवद्गीताभाष्यम्

( मङ्गलाचरणम् )

**देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।**
**परिपूर्णं [1]गुरूंश्चान् गीतार्थं वक्ष्यामि लेशतः ।।**

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीका

श्रीजयतीर्थमुनिविरचिता

## प्रमेयदीपिका

गुणगणनिलयं पतिं रमायाः जगदघदहनं च वासवीसूनुम् ।
मुनिकुलतिलकं च पूर्णबोधं गुरुमपि परमं गुरुं च मे वन्दे ।। १ ।।

आनन्दतीर्थभगवत्पादाचार्यविनिर्मितम् ।
व्याख्यास्ये[2] भगवद्गीताभाष्यं तत्करुणाबलात् ।। २ ।।

---

१. 'देवतानतिसमनन्तरं गुरूनपि नमति - गुरूंश्चेति । 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि' इत्यतो न तन्नाम जग्राह ।..। यद्यपि गुरुर्न देवताभिन्नः । तथाऽपि विशेषानुग्रहार्थं पृथङ्नतिरिति।।'

**ब्र.सू.भा. त.प्रकाशिका.१.१.१.**

२. (अ) '..आत्मनेपदप्रयोगेण ग्रन्थकर्तुः प्रीतेरात्मगामित्वं सूचयति । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति स्मरणात्' **प्र.लक्षणभावदीपे ।**

(आ) '..आत्मनेपदेन 'य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति' इत्युपक्रम्य, 'मामेवैष्यति' इत्युक्तं भगवत्प्राप्तिलक्षणं फलं 'व्याख्यैकस्य शतोत्तरा' इति तन्त्रसारोक्तं भगवत्पूजाधिक्यं फलं चात्मगामीति सूचयति' **इति वि.त.नि.व्या.टि.**

श्रीसुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रतीर्थविरचितः

# श्रीमद्भगवद्गीताभाष्यटीकाप्रमेयदीपिकाभावदीपः

।। श्रीगुरुभ्यो नमः ।। श्रीमदधोक्षजविठ्ठलाय नमः ।।[१]

**लक्ष्मीनारायणं नत्वा तथा मध्वादिदेशिकान् ।**

**प्रमेयदीपिकाभावदीपं कुर्यां यथामति ।। १ ।।**

ग्रन्थादौ मङ्गलमाचरति– **गुणगणेति** ।। गुणगण[२]पदेन ज्ञानानन्दबलौदार्यद्युतिप्रभृतयो भावधर्माः जरामरणाद्यभावरूप[३]धर्माश्च गृह्यन्ते । प्रतिपाद्यदेवताया रमापतेः, गीताकर्तुर्व्यासस्य, भाष्यकर्तुः पूर्णबोधस्य च वन्द्यत्वोपपादनाय प्रत्येकं '**गुण**' इत्यादि त्रीणि विशेषणानि । कृष्णार्जुनसंवादव्याजेन परापरतत्त्वोपदेशेन जगच्छब्दितसाधुलोकपापहारिणमित्यर्थः । **मे**[४] **गुरुम्** अक्षोभ्यतीर्थम् । **परमं गुरुं** माधवतीर्थम् । **चापिशब्दाः**[५] वन्द्यानामन्योन्यसमुच्चये ।।

व्याख्याने बीजं वदन् चिकीर्षितं प्रतिजानीते– **आनन्दतीर्थेति** ।। '**भगवत्पाद**' इत्युक्त्या तत्कृतस्यात्युपादेयत्वं व्याख्यानबीजं सूचितम् ।।

## प्रमेयदीपिका

प्रारिप्सितविघ्नविघातादिप्रयोजनं समुचितविशिष्टेष्टदेवतागुरुप्रणामं[६] ग्रन्थारम्भप्रतिज्ञां चादौ निबध्नाति भगवान् भाष्यकारः – **देवमिति** ।। अत्र देवशब्दो देवताशब्द[७]पर्यायः प्रतिपाद्यमाह[८] । सन्निधानाच्च 'भगवद्गीतायाः' इति लभ्यते । तेनेदानीं नारायणस्य प्रणामे

१. श्रीकाणियूरुमठीयतालपत्रे एवं ग्रन्थारम्भक्रमः ।
'श्रीः। श्रीविजयध्वजतीर्थगुरुभ्यो नमः । वेदवल्लभतीर्थगुरुभ्यो नमः' इति सोदामठीयतालपत्रग्रन्थे ग्रन्थारम्भः।

२. सो-। 'गण' इति का-पाठे नास्ति ।

३. सो-। 'द्यभावधमा'–पां-का ।

४. सो पाठे 'मे' इति शब्दः नास्ति ।

५. सो, क। 'चापिशब्दौः' ख ।

६. भक्तिश्रद्धापूर्वकत्वं प्रकर्षः । तादृश एव हि प्रणामो भवत्यभिमतसिद्धेरङ्गम् । तादृशस्यैव हि प्रणामस्य 'तद्विद्धि प्रणिपातेन' इति गुर्वतिप्रीतिहेतुत्वेन कर्तव्यतोक्तेः'-वि.त.नि.न्या.टि.

७. वि.त.नि.श्री.निटिप्पणीरीत्या अत्र 'शब्द' इति न पठ्यते ।'देवतापर्यायः:' इति टीकापाठ आदृतस्तत्र ।

८. (अ) ऋग्भाष्यटीकायां-१.१.२२.५.'देवताशब्दः देवपर्यायः'।
(आ)वि.त.नि.टीका-श्रीनि-टिप्पण्याम् -'देवशब्दो देवतापर्यायः प्रतिपाद्यमाह' इति गीता-

समुचिततामाचष्टे । अज्ञानपारतन्त्र्यादिभिः **सर्वदोषैर्विशेषेण** सर्वदा **सर्वात्मना वर्जितम्** । **परितो** देशतः कालतो गुणतश्च **पूर्णमिति** वैशिष्ट्यमाचष्टे । परमवैष्णवस्य भगवतो भाष्यकारस्य विष्णुरिष्टदेवतेति प्रसिद्धमेव।।

## भावदीपः

**प्रारिप्सितेति** ।। सम्भावितविघ्नानां शिष्यप्रभृतीनामिति योज्यम् ।। **आदिपदेन** प्रचयः । बहुव्रीहिः । प्रणामो विशेष्यम् ।। **समुचितेति** ।। सम्यग्योग्येत्यर्थः ।। देवताप्रणामस्य समुचितत्वे हेतवः – **विशिष्टेष्टदेवतेति** ।। तत्त्रयमग्रे व्यक्तम् ।। 'आदौ' इत्युक्त्या गुरुदेवता-प्रणामस्य ग्रन्थावयवत्वं सूचयति ।। मूले **'नत्वा'** इत्युक्तावपि प्रकृष्टनतिरभिप्रेतेति **'प्रणामम्'** इत्युक्तम् ।। **'देवम्'** इत्यस्य कृत्याप्रतीतेराह– **अत्र देवेति**[1]।। स्तुत्यर्थाद् दीव्यतेः कर्मणि घञ्प्रत्ययान्त इति भावः[2] ।। **सन्निधानाच्चेति**।। **'गीतार्थम्'** इति गीतापदसन्निधानादित्यर्थः ।। गीतानां च[3] वेणुभ्रमरभिक्षुगीतादिरूपेणानेकत्वाद् **'भगवद्गीता'** इति विशेषणोक्तिः ।। **तेनेति** ।। गीता[4]-प्रतिपाद्यत्वविशेषणकथनेन ।। **समुचिततामाचष्ट इति** ।। प्रतिपाद्यस्य स्वविषयग्रन्थार्थावबोधसम्पादकत्वात् प्रणतदेवतैव तत्सम्पादनहेतुरिति भावः ।।

'वि' इत्युपसर्गार्थः– **विशेषेणेति** ।। तद्व्यनक्ति – **सर्वदा सर्वात्मनेति** ।। निश्शेषत इत्यर्थः ।। **'इति'**, **'वैशिष्ट्यम्'** इति विशेषणद्वयेन 'भावाभाव[5]रूपेतरसाधारणधर्मवत्त्वमाचष्टे' इत्यनुषङ्गः ।। **वक्ति** भाष्यकार इत्यर्थः । तेन नारायणप्रणामस्य समुचिततामाचष्टे' इत्यनुषङ्गः । विशिष्टदेवताया एव विघ्नविघातादौ शक्तत्वादिति भावः ।।

ननु भक्त्यादिप्रकर्षयुक्ता नतिरिष्टदेवतायामेव भवतीति प्रणामस्य समुचितत्वोपपादनाय इष्टता नारायणस्य कुतो नोक्ता? इत्यत आह– **परमवैष्णवस्येति** ।।

---

भाष्यटीकोक्तरीत्या देवशब्देनैवाधिकृतत्वमप्युक्तं वेदितव्यम्' इत्युक्तम् । तत्रैव **व्या.टि.** देवमिति प्रतिपाद्यत्वम् । देवताशब्दपर्यायत्वात्तस्य । यथोक्तं गीताभाष्यटीकायां- देवताशब्दपर्यायो देवशब्दः' इति ।

१. सो-पाठे 'देवतेति' इति पठ्यते । 'अत्र देवेति' इति मं, का, ख पाठेषु ।

२. **'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदस्वप्नकान्तिगतिषु'** इत्युक्तेः स्तुत्यर्थाद्दीव्यतेः कर्मणि घञ्प्रत्यये **'पुगन्तलघूपदस्य च'** इति गुणे देव इति रूपसिद्धिरिति भावः' **वि.त.नि.भावदीपे** -पृ ४४५। अत्राधिकधात्वर्थविचारः **सप्तमे १४, अष्टमे च ८** श्लोके च द्रष्टव्यः ।

३. चशब्दः सो-पाठ एव । अन्यत्र नास्ति ।

४. ख, सो पाठेषु- गीतेति नास्ति ।

५. 'भाव' इत्यादि -का, ख पाठे नास्ति । सो, मं- पाठे ।

## प्रमेयदीपिका

यद्वा भगवद्गीताप्रतिपाद्यत्वं नारायणस्य न परेषामिव जीवत्वनिर्विशेषत्वादिरूपेण । किं नाम? सर्वदोषवर्जिततया, परिपूर्णतया चेति पदद्वयेनाख्याति ।। **आन्** व्यासान् ।

'अ आ अं अः पुराणार्षिर्व्यासः शाखासहस्रकृत्' (वा.स.ना.२७५)

इत्यकारस्य तन्नामसु पाठात् । बहुवचनं च गौरवादेव[१]।।

**'गीता'** इति भगवद्गीतैवाभिप्रेयते । **'मुख्यामुख्ययोर्मुख्ये कार्यसम्प्रत्ययः'** इति न्यायात्[२]।। यद्यपि बह्वर्था गीता, शक्तश्चाहं तद्वचने । तथाऽपि श्रोतॄणां मन्दां मतिमपेक्ष्याल्पमेवोच्यत इति भावेनोक्तम् **–लेशतः** इति ।। [३]इत्थम्भूतलक्षणार्थतृतीयान्तात् तसिः । अर्थशब्देन सर्वार्थग्रहणप्रसक्तौ सर्वेषां च[४] भाष्येऽदर्शनाद् वन्ध्येयं प्रतिज्ञेति मन्दाशङ्कानिरासायेदमुदितम् ।।

## भावदीपः

'परिपूर्णम्' इत्यनेनैव वैशिष्ट्यलाभात् **'सर्व'** इत्यादेः नातीव कृत्यमिति मन्वान आह– **यद्वेति** ।। जीवत्वस्यानेकदोषयुक्तत्वात्[५] **'सर्व'** इत्यादिविशेषणेन तन्निरास इति भावः।। **तन्नामस्विति** ।।

'............व्यासः शाखासहस्रकृत् ।
महाभारतनिर्माता कवीन्द्रो बादरायणः ।

---

१. **त.प्र.भावदीपे** -'भाष्ये बहुवचनं 'बहुवचनं गौरवादेव' इति गीताभाष्यटीकोक्ताशयं वा' इति।

२. (अ) 'मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः' गारुडवचनम् -ब्र,सू.भा.१.१.१ ।
(आ) इदं वाक्यमुदाहृत्य वैशेषिकाधिकरणसुधाटिप्पण्यां वाक्यार्थरत्नमालायां (द्रं -सुधा -सम्पुटम्-१५. पत्रे.७२०७) अनेकवाक्यविरोधं प्रदर्श्य एकवाक्यता योज्येत्युक्तम् । विदांकुर्वन्तु सूरयः ।

३. **जन्माधिकरणपरिमले**- 'इत्थम्भूतलक्षण इति । कश्चित्प्रकारं प्राप्त इत्थम्भूतस्तस्य लक्षणे ज्ञापके तृतीया भवति । छात्रेणोपाध्यायमद्राक्षीदित्यत्रोपाध्यायत्वप्रकारं प्राप्तस्य छात्रशब्दितः शिष्यो ज्ञापक इति । तत्र तृतीयोक्ता पाणिनिना ।...। उक्तं च तृतीये अध्याये ऋग्भाष्यटीकायां सप्तदशे वर्गे 'अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम्' (ऋ.१.३८.१३) इत्येतद्भाष्यस्य 'व्याप्तया गिरा । जरायै संस्तुतित्वेन तृतीया भावरूपिणी' इत्यस्य व्याख्यावसरे'जरायै' इत्यत्र 'जरया' इति व्यत्ययमुपेत्य तृतीयाया इत्थम्भूतलक्षणत्वमुपेत्य 'जरया संस्तुत्या संस्तुतित्वेन स्तुतित्वरूपेणोपेतया' इति ।

४. गुज,वे-ग्रं पुस्तकयोः चशब्दः भाष्ये इत्यनन्तरं पठितः ।

५. 'पुतत्वात्' इति का,मं ।

**कृष्णद्वैपायनः सर्वपुरुषार्थैकवोधकः'** (वा.स.ना.२७५,२७६)

इति वासुदेवसहस्रनामस्वित्यर्थः ।। **गौरवादेवेति** ।। नतु व्यक्तिबाहुल्याभिप्रायेणेति भावः । कुतः? इत्यत आह– **मुख्येति** ।। वेणुगीतादेरमुख्यत्वेन भगवद्गीताया एव मुख्यत्वादिति भावः । मुख्यत्वं चाग्रे भाष्य एव[१] व्यक्तमिति भावः ।। **इत्थम्भूतेति**।। 'प्रतियोगे पञ्चम्यास्तसिः' (पा.सू.५.४.४४) इति सूत्रे 'आद्यादिभ्य उपसङ्ख्यानम्' इति वार्तिके (वा.३३३९) प्रथमादि-विभक्त्यन्तादप्याद्यादिशब्दग्रहणात्[२] पञ्चमी इत्युक्तेरिह तृतीयार्थे तसिः[३] । सा चेत्थम्भूतलक्षणार्था । 'इत्थम्भूतलक्षणे तृतीया'(पा.सू.२.३.२१) इति सूत्रात् । छात्रेणोपाध्यायत्वप्रकारक ज्ञानम् इतिवत् लेशेन गीतार्थत्वप्रकारं वक्ष्यामीत्यर्थः । कञ्चित्प्रकारं प्राप्तस्येत्थम्भूतशब्दार्थत्वात् ।।

[४]यद्वा,**'अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम्'** (ऋ.१.३८.१३) इत्यत्र ऋग्भाष्य-टीकायाम्[५] 'जरायै जरया' इति व्यत्ययेन 'इत्थम्भूतलक्षणे तृतीया' इत्युक्त्वा 'जरात्वेन स्तुतित्वप्रकारं प्राप्तया गिरा' इत्युक्तदिशा अल्पत्वप्रकारं प्राप्तमित्यर्थः ।। **वन्ध्येति**।। अर्थहीनेत्यर्थः ।। **मन्दाशङ्केति** ।। सर्वगीतार्थमित्युक्त्या शङ्कानुदयात्[६] 'मन्द' इत्युक्तम् ।

## प्रमेयदीपिका

### ( भाष्यकारीयप्रतिज्ञाप्रयोजनम् )

नन्वस्तु नमस्कारग्रथनं शिष्यशिक्षणार्थम्[७]। प्रतिज्ञा तु किमर्थं ग्रन्थे निवेशनीया? उच्यते । बहुभिर्व्याख्यातृभिः भगवद्गीताया व्याख्याततत्वाद् व्यर्थमिदं भाष्यमित्याशङ्कानिरसनं प्रयोजनमस्याः[८]। अन्यैस्स्वपक्षनिक्षिप्तदृष्टिभिस्स्वाभिप्रायो भगवद्गीतार्थत्वेन आरोप्योक्तः । अहं तु **गीतार्थमेव वक्ष्यामी**ति सूचनात् ।।

---

१. 'एव' इति सो नास्ति ।

२. अयं शुद्धपाठः सो मात्रे । '..आदिशब्दे गणशब्दार्थत्वात् । यद्वा' इति कां,मं,ख पाठेषु अनन्वितभागः।

३. 'इत्थंम्भूतलक्षणार्थः' इति पाठान्तरम् ।

४. **'यद्वा-...इत्यर्थ'** इति पर्यन्तम् -का नास्ति । ख, सो अधिकः पाठः ।

५. अत्र **ऋक्टीका**–'**जरायै संस्तुतित्वेन** ।..**चतुर्थी तृतीयार्थे** ।.। **तृतीयैवेत्थम्भूतलक्षणे स्मर्यते** ।..। **मा भूद्वा विभक्तिव्यत्ययः** । **चतुर्थ्यैवेत्थम्भूतलक्षणार्था व्याख्येया** ।...**संस्तुतिरूपेणोपेतगा गिरेत्यर्थः**' इति। तथाच भावदीपः टीकाभावानुवादपरः ।।

६. 'सर्वार्थमित्यनुक्त्या' -ख । 'गीतार्थमित्याशङ्कानुदायात्-'कां ।

७. गुज,वे-ग्रं । 'शिक्षार्थम्'-प्र । ८. गुज,वे-ग्रं । 'अस्य'-प्र ।

( भाष्ये यतिभङ्गस्यादोषत्वोपपादनम् )

न चात्र यतिभङ्गो दोषः । तस्य काव्यविषयत्वात्[१] । शास्त्रे तु -

'य उपाधिर्लगति साध्ये सम्बन्धविशेषणे'[२] (कुसुमाञ्जली )

इत्याद्यभियुक्तवाक्ये दर्शनादिति ।।

**भावदीपः**

ननु 'यतिर्विच्छेदसञ्ज्ञिता[३]' इति वृत्तरत्नाकरोक्त्या[४]

---

१. (अ) 'वस्तुतस्तु यतिभङ्गस्य काव्यविषयत्वमेव । न शास्त्रदोषत्वमपि । य उपाधिर्लगति साध्ये सम्बन्धविशेषणे इति शास्त्रे पदमध्येपि विरतिदर्शनात् । अत एव गीताभाष्यटीकायां तस्यादोषत्वेनैव समाधानमुक्तमिति' - ( इति सुधाशेषवाक्यार्थचन्द्रिकायाम्)

(आ) 'नचात्र यतिभङ्गः शङ्कनीय इत्येतत् प्रमेयदीपिकावाक्यव्याख्यानावसरे अस्माभिः कृतं तत एव प्रतिपत्तव्यम्'- ( इति वाक्यार्थरत्नमालायाम्)

(इ) 'स खलु गोपिकानन्द नो भवान्' इति (भाग.१०.२९.५)श्लोकव्याख्यावसरे 'अत्र न यतिभङ्गः शङ्क्यः । तस्य क्षुद्रकाव्याभव्यताविषयत्वात् । स्पष्टं चैतत् प्रमेयदीपिकादिषु' इति सत्यधर्मतीर्थाः।।

२. 'तद्विशेषणयुक्तैतदभावाभूस्तु केवलः' इति पूर्णपाठः । सुधा. सम्पुटम्-१२-पृ-५६९१।

अत्र वाक्यार्थरत्नमाला 'सम्बन्धविशेषणे साध्ये । यदवच्छिन्ने साध्ये अयमुपाधिः लगति तदवच्छेदक भूतविशेषणयुक्तो यः एतस्योपाधेरभावः तस्याभूदभावकेवले साध्ये उपाधिरिति श्लोकार्थः। 'लालगीता' इत्यादि पाठान्तरं तर्कताण्डवे अस्ति । तथापि गीताभाष्यटीकायां 'शास्त्रे तु यः उपाधिर्लगति' इति पाठस्य धृतत्वात् ..' ।।

(सत्यव्रतीया-तद्विशेषणयुक्तैतदभावः -तस्य साध्यस्य यद्विशेषणं, तेन युक्तः स च एषः । एतच्छब्देनोपाधिरभिधीयते । तस्याभावः, तस्य भूः सत्ता अभूः अभाव इत्यर्थः )

३. 'यतिर्विच्छेदसंज्ञितः' - पा ( सुधा.टि.चषक १.१.५ पृ.३११५)।

४. अब्धिभूतरसादीनां ज्ञेयाः सञ्ज्ञास्तु लोकतः । ज्ञेयः पादश्चतुर्थांशो यतिर्विच्छेदसञ्ज्ञितः ।। १२ ।।

लोकः शास्त्रकारः । अथवा लोक्यते मायते शब्दार्थसम्बन्धोऽस्मिन्नित्यधिकरणसाधनेन तद्व्यवहारो वा लोकः । तस्माल्लोकव्यवहारात् । अब्धिभूतरसादीनां सङ्ख्या गणनास्तु ज्ञेया ज्ञातव्याः । बुद्धिमद्भिरिति शेषः । तद्यथा - अब्धयश्चत्वारः । भूतानि पञ्च । रसाः षट् । आदिशब्दात्स्वराः सप्त । वसवोऽष्टौ । ग्रहानवेत्यादीनां ग्रहणम्। चतुर्णां पूरणश्चतुर्थः । पद्यस्य प्रथमो द्वितीयस्तृतीयः पादः क्रमेणाऽप्युत्क्रमेण वा चतुर्थो भवति । तेनापि चतुर्णां पूरणात्वात् वृत्तस्य चतुर्थो भागः पादः ज्ञेयः वेदितव्यः । यमनं यतिः विरामः जिह्वेष्टविरामस्थानमिति यावत् ।

'श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः'[१] (काव्यादर्शे.४.२९)

इति दण्डिनोक्त्या[२] पदस्यैव पदान्ते विरामप्राप्तेः [३]कथनात् कथम् **'आन् गीतार्थम्'** इत्यत्र पदमध्य एव पदान्ते विरामः? श्लोकेषु नियतस्थान एव पदच्छेदस्यैव यतित्वेनात्र यतिभङ्गः कथं न स्यात्? इत्याशङ्क्य निषेधति– **नचात्रेति** ।। कुसुमाञ्जल्युदाहृतश्लोकं[४] संवादयति– **य उपाधिरिति** ।। **'दर्शनात्'** इत्यस्य **'न चात्र यतिभङ्गदोषः'** इति पूर्वेणान्वयः।।[५]

---

यदुक्तं काव्यादर्शे 'श्लोकेषु विश्रमस्थानं पदच्छेदं यतिं विदुः' इति ।

पिङ्गलेन तु- **'अधातुनामभेदेन विरामो विरतिर्यतिः ।**

**स्वरसन्ध्यासमसौन्दर्यात्तद्भेदेऽपीष्यते क्वचित्'** इति ।

अत्र अधातुनामभेदेनेति धातूनां वा नाम्नां वा प्रातिपदिकानां वा अभेदेन यतिः स्यात् । तद्यथा, **'शोभां पुष्यत्यधिकमधिकम्'** इत्यत्र **'मन्दाक्रान्ता जलधिषडगैम्भौं नतौ तो गुरू चेत्'** इति वचनाच्चतुर्भिरक्षरैर्यतिर्भाव्यत्वात् । पुष्यतीत्यस्मिन् पदे प्रत्ययवशाद्भिन्नेऽपि पदे इति धातोरभेदान्न दोषः । **'स्पर्शक्लिष्टामसमितनखेनासकृत्सारयन्तीम्'** इत्यत्र **'मन्दाक्रान्ते दशभिरक्षरैर्यतेर्भावात्'** **'असमितनखेन'** इति पदे प्रत्ययवशाद्भिन्नेऽपि नखशब्दाभेदान्न दोषः । **'मेघालोके भवति सुखिनोऽप्यन्यतावृत्ति चेत्'** इत्यत्र अपिशब्दे भिन्नेऽपि पूर्वरूपेण स्वरसन्धिवशात् सौन्दर्यमस्तीतीष्यत एव । केचित् कवयो यतिभङ्गदोषमदोषमाहुः । दृश्यते महाकविप्रयोगे । यथा अनर्घराघवनामनाटके- **'याश्चादैन्यपराङ्ग्ि यस्य कलहायन्ते मिथस्त्वं वृणु त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं कथ्यताम्'** इत्यत्र 'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' इति वचनाद्द्वादशभिर्वर्णैर्यतिर्भवितव्यत्वात् कलहाय इति धातोर्भेदेऽप्यदोषं विदधाति ।

**'यावच्छृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि'** इति च गीतगोविन्दाख्ये काव्ये । अत्र जयदेव इति नाम्नि यतिभङ्गेऽपि न दोषः । **'कविवरादिभिर्मुदं यास्यति'** इत्यादिष्वपि नास्ति दोषः । विच्छेद इति सञ्ज्ञा यस्य स विच्छेदसञ्ज्ञकः स्वार्थे कः ।। इति **१भिकायाम्** ।।

१. **'तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ।। लुप्तं पदान्ते शिष्टस्य पदत्वं निश्चितं यथा ।**
**तथा सन्धिविरामान्तं पदमेवेति वर्ण्यते'** इति **पूर्णपाठः** ।

२. 'दण्ड्युक्त्या' इति कां पाठे ।

३. 'कथनात्' इति स-पाठे नास्ति ।

४ 'कुसुमाञ्जल्युक्तोदयनश्लोकम्' इति सो-कोशे ।

५. अनुव्याख्याने स्थलद्वये इत्थं यतिविचारः विवृतः ।

(अ) **'इत्यादिनाध्यायेन वदत्यजः'** (अनुव्याख्याने १-१-५) इत्यत्र

**सुधा- 'स्वादिष्वसर्वनामस्थाने'** इति पदसञ्ज्ञानुशासनादत्र न यतिभङ्गः शङ्कनीयः ।।

**परिमले-** स्वादिष्विति । **कप्रत्ययावधिषु परतः पूर्वं पदसञ्ज्ञं भवति'** इत्युक्तत्वात्, इह च **तृतीयाविभक्तेर्नाशब्दस्य स्वादित्वेन तत्परतः पूर्वस्य पदत्वेन पदस्यैव** पादान्ते विरामप्राप्तेरिति भावः।।

## ( वेदव्यासावतारे बीजम् )

**भाष्यम् —** नष्टधर्मज्ञानलोककृपालुभिः ब्रह्मरुद्रेन्द्रादिभिरर्थितो ज्ञानप्रदर्शनाय भगवान् व्यासोऽवततार ।।

### प्रमेयदीपिका

ननु प्राधान्येन व्याख्येयता प्रामाण्ये अधिकारिविषयप्रयोजनाभिसम्बन्धे दुर्गमार्थत्वे च सति सम्भवति । तत्कथं भगवद्गीतायाः प्रामाण्यादिकम्? सति वा तस्मिन् तथाविध-ग्रन्थान्तरपरिहारेणास्या एव व्याख्याने को हेतुः? इत्याशङ्क्य महाभारतान्तर्गतत्वाद् भगवद्गीतायास्तस्य प्रामाण्यादिसिद्धौ तस्या अपि तत्सेत्स्यतीत्याशयवान् महाभारतस्य प्रामाण्यादिकं साधयितुमाह- **नष्टधर्मज्ञानेति।।** किमनया कुटिलिकया? गीताया एव पृथक् प्रामाण्यादिकं साध्यताम् । मैवम् । महावाक्यप्रमाण्याद्यनधिगताव[1]वान्तरवाक्यप्रामाण्यादे-रसम्भावनाग्रस्तत्वेन साधयितुमशक्यत्वात् । यथोक्तम् –

'सम्भावितः प्रतिज्ञाया अर्थस्साध्येत हेतुना'[2] इति ।।

नष्टशब्दोऽदर्शनवाची । 'णश अदर्शने' **(पा.धा.११९४)** इति स्मरणात् । धर्मो निवृत्तिलक्षणः । ज्ञानशब्देन ज्ञेयं परं तत्वं वासुदेवाख्यमपरं च प्रकृत्यादिकं लक्ष्यते । लक्षणायाश्च[3] प्रयोजनम् यथा धर्मो ज्ञात्वा उत्पादनीयः न तथेदम् । किन्तु ज्ञानपरम्परैव तद्विषयाऽनुष्ठेयेति ज्ञापनम् । 'लोकः' इति सज्जनो विवक्षितः । नष्टेऽदर्शनं गते धर्मज्ञाने यस्य तस्मिन् लोके विषये कृपालुभिः ।।

---

यतीति ।। यतिरुपरमः । यम उपरम इति धातोः । यस्मिन् स्थले उपरमः पदस्योचितस्तस्यभङ्ग इत्यर्थः । पदान्तस्यैव पादान्ते उपरमोचितत्वेन पदमध्येऽनुचितत्वात् । 'यतिर्विच्छेदकसञ्ज्ञिका' इति वृत्तरत्नाकरोक्तेः । 'श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः' इति दण्डिनोऽप्युक्तेः ।।

(आ)'अभेदेऽपि विशेषेणैवान्य' (१.१.५) इत्यत्र -

सुधा- नचात्र यतिभङ्गः शङ्कनीयः । 'पूर्वान्तवत् स्वरः सन्धौ क्वचिदेव परादिवत् ।
द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत्' इति वचनात् ।।

१. गुज,वे-ग्रं । 'द्यनभिधाने'-प्र ।

२. 'न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो मृतः' इत्युत्तरार्धम् । **वि.त.नि.टीकायामुदाहृतम् ।**

३. गुज,वे-ग्रं.। 'लक्षणायां च' प्र ।

### भावदीपः

**प्राधान्येनेति** ।। इष्टोपायतयाऽवश्योपादेयत्वेनेत्यर्थः ।। **अभिसम्बन्ध इति** ।। अधिकार्यादित्रयस्यान्योन्यमभिसम्बन्धे चेत्यर्थः ।। **साधयितुमाहेति** ।। भारतस्वरूपाद्युक्तिपूर्वं तदुत्पत्तिप्रकारमाहेत्यर्थः ।। **किमनयेति** ।। महाभारतान्तर्गततत्वाद्युक्त्येत्यर्थः ।। **यथोक्तं** तार्किकैः - **'ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधनायोगात्'**[१] इति ।।

ध्वस्तता(त्व)भ्रान्तिनिरासायाऽह– **नष्टेति** ।। नष्टपदस्याज्ञातार्थतोक्तेः तदानुगुण्याय अर्थमाह– **ज्ञानशब्देनेति** ।। **लक्ष्यत इति** ।। ज्ञानपदस्य भावार्थे रूढत्वादिति वा, कर्मव्युत्पत्त्या ज्ञेयमात्रस्य लाभेऽप्यत्राभिमतपरापरतत्त्वस्यालाभादिति वा अभिप्रायः ।।

### ( कृपालुशब्दसाधुत्वसमर्थनम् )

### प्रमेयदीपिका

यद्यपि 'स्पृहिगृहि' **(पा.सू.३.२.१५८)** इत्यादिना कृपेरालुच्प्रत्ययो न विहितः । तथाऽपि व्याकरणान्तरबलादवगन्तव्यः[२]।। कलशवाची वा आलुशब्दः । कृपापूर्णकलशैरित्यर्थः।।

मोक्षसाधनयोः धर्मज्ञानयोरदर्शनात् संसारे क्लिश्यमानान् सज्जनानवलोक्योत्पन्नकृपैरिति यावत् । अन्यपदार्थानां देवानां **'ब्रह्मरुद्रेन्द्रादिभिः'** इति यद्विशेषणं तत् प्रसिद्धप्रभावानामपि भगवदितरेषामशक्यमिदं कार्यमिति ज्ञापनार्थम् । **ज्ञान**पदेन धर्मोऽप्युपलक्ष्यते । समकक्षत्वनिरासाय स्वशब्देनाग्रहणम् । एतच्च पूर्वोत्तरेण च सम्बद्ध्यते । ज्ञानप्रदर्शनायार्थितो ज्ञानप्रदर्शनायावततार इति ।। **भगवान्** समग्रज्ञानैश्वर्यवैराग्यादिगुणसम्पन्नो **नारायणः** व्यासरूपेण **अवततार** इत्यर्थः ।।

### भावदीपः

**स्पृहीति** ।।[३] 'स्पृहि-गृहि-पति-दयि-निद्रा-तन्द्रा-श्रद्धाभ्य आलुच्'**(पा.सू.३.२.१५८)** इति

---

१. सो -पाठे इयं पङ्क्तिर्नास्ति ।

२. **नप्रयोजनाधिकरणे 'दृश्यन्ते हि कृपालवः'** इति सुधावाक्यविवरणसन्दर्भे वाक्यार्थरत्नमालायां, कम्वालूरुरामचन्द्रतीर्थीये च इदं वाक्यमुदाहृत्य (द्रं -सुधा -सम्पुटम्-१३. पत्राणि -६३०२ तः ६३१२) एकादशपत्रेषु कृपालुशब्दसाधुत्वं विवृतम् ।

३. **न्यायसुधापरिमले- जिज्ञासाधिकरणे** -'कृपालुत्वेति ।। ननु तृतीयस्य द्वितीयपादे 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्राभ्य आलुच्' इति सूत्रे 'कृपू सामर्थ्ये' इत्यत आलुच्प्रत्ययस्याविधानात्

सूत्रेण 'कृपू सामर्थ्ये' (पा.धा.७६२) इति धातोरित्यर्थः ।। व्याकरणान्तरादिति ।।

'इन्द्रश्चन्द्रः काशकृत्स्नोऽपिशलिः शाकटायनः ।
पाणिन्यमरजैनेन्द्रा एतेऽष्टावादिशाब्दिकाः'[१]

---

कथं कृपालुशब्दप्रयोगः? न चात्र सूत्रे शकारेत्सञ्ज्ञकालुच्प्रत्ययस्य विधानेनापि तस्य शित्वेन 'तिङ् शित्सार्वधातुकम्' इति सार्वधातुकसञ्ज्ञायाम्, 'कर्तरि शप्' इति शपि सति गुणेऽयादेशे च 'अतो दीर्घो यञि' इति दीर्घे च सति ण्यन्तानां स्पृहीत्यादीनां स्पृहयालुरित्यादिरूपसिद्धावपि आलुच्ग्रहणं शयालुरित्यादिरूपसिद्ध्यर्थमिति मञ्जर्यामुक्तत्वात्, कृपि धातोरपि आलुचि कृते 'सञ्ज्ञापूर्वको विधिरनित्यः' इति पुगन्तलघूपधस्य च इति प्राप्तगुणाभावे च सति कृपालुशब्दनिष्पत्तिरिति वाच्यम् । तथात्वे 'कृपो रो लः' इत्युक्तलत्वाभावस्य दयावत्त्वरूपार्थलाभस्य चानुपपत्तेः। मैवम्। 'कर्कर्यालुर्गलन्तिका' इत्यमरोक्तेरालुशब्दस्य कलशवाचितया कृपाकलशार्थत्वेन कृपालुशब्दनिर्वाहात्। तथैव गीताभाष्यटीकोक्तेः ।।

यद्वा कृपां लाति आदत्त इति कृपापदोपपदात् ला आदाने इति धातोर्डुप्रत्यये कृपालुरिति निष्पत्तिः। 'विप्रसम्भ्यो ड्वसञ्ज्ञायाम्'इत्यत्र मितद्र्वादिभ्य उपसङ्ख्यानम् इत्युक्तेः । 'षिद्भिदादिभ्योऽङ्' इत्यत्र 'कृपेः सम्प्रसारणं च'इति भिदादिगुणसूत्रेण 'कृप कृपायाम्' इति धातुरूपस्यकृपेर्लाक्षणिकत्वेन 'कृपो रो लः' इत्यत्राग्रहणमित्यष्टमे वृत्तावुक्तत्वेन लत्वाभावोऽर्थानुगमश्च ।। 'स्याद्दयालुः कारुणिकः कृपालुः सूरतस्समाः' इत्यमरव्याख्याने वन्दिघटीये दुर्घटवृत्त्यादौ च कृपां लातीत्यत्र साधुत्वोक्तेः ।।' इति,

तत्त्वप्रकाशिकाभावदीपे- 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्भ्य आलुच् इत्यत्र शकारेत्सञ्ज्ञकलुच्प्रत्ययस्य विधानेनापि तस्य शित्वेन 'तिङ् शित्सार्वधातुकम्' इति सार्वधातुकसञ्ज्ञायाम्, 'कर्तरि शप्' इति शपि सति गुणेऽयादेशे च 'अतो दीर्घो यञि' इति दीर्घे च सति 'ण्यन्तानां स्पृहीत्यादीनां स्पृहयालुरित्यादि-रूपसिद्धावपि आलुच्ग्रहणं शयालुरित्यादिरूपसिद्ध्यर्थम्' इति मञ्जर्याः तृतीयस्य द्वितीयपादे अभिधानात् । कृपिधातोरपि आलुचि कृते 'सञ्ज्ञापूर्वको विधिरनित्यः' इति 'पुगन्तस्य लघूपधस्य च' इति गुणाभावे च सति कृपालुरिति साध्वित्येके । 'नष्टधर्मज्ञानलोककृपालुभिः' इति गीताभाष्यटीकायामुक्तदिशा कृपाकलशा इति कलशार्थो वा आलुशब्दः । 'कर्कर्यालुर्गलन्तिका' इत्यमरोक्तेः । कृपां लाति आदत्त इति कृपापदोपपदात् 'ला आदाने' इति धातोर्डुप्रत्यये वा कृपालुरिति रूपम् ।।

'विप्रसम्भ्यो ड्वसञ्ज्ञायाम्' इत्यत्र 'मितद्र्वादिभ्य उपसङ्ख्यानम्' इत्युक्तेः इत्यन्ये । अन्त्ययोस्तु तृतीयाध्याये 'षिद्भिदादिभ्योऽङ्' इत्यत्र 'कृपेः सम्प्रसारणं च' इति भिदादिगणसूत्रेण निष्पन्नस्य 'कृप कृपायाम्' इति धातुरूपस्य कृपेर्लाक्षणिकत्वेन 'कृपो रो लः' इत्यत्राग्रहणमित्यष्टमे वृत्तावुक्तत्वेन लत्वाभावोऽर्थानुगमश्च ।। 'स्याद्दयालुः कारुणिकः कृपालुः सूरतस्समाः' इत्यमरव्याख्याने वन्दिघटीये दुर्घटवृत्तौ च कृपां लातीत्यस्यैव साधुत्वोक्तेः ।। ' इति ।।

१. अयं श्लोकः तर्कताण्डवभावदीपे प्र-परिच्छेदे २० प्रकरणे कविकल्पद्रुमस्थत्वेनोदाहृतः । तत्र 'पिशली' इति प्रथमपादे, 'जयन्त्यष्टादिशाब्दिकाः' इति चतुर्थपादे च व्यत्यासः । त.तां.पृ.१७९ ।

इत्युक्तेर्व्याकरणानामनेकत्वादिति भावः । महाव्याकरणादिति वा अर्थः[१]। यद्वा, व्याकरणं व्याख्यानम् । व्याख्यानविशेषादित्यर्थः ।।

'स्पृहि' इत्यादि सूत्रे आलुच्प्रत्ययविधानेनापि 'स्पृहयालुः' इत्यादिरूपसिद्धेरालुज्विधानं शयालुरित्यादिरूपसिद्ध्यर्थम्' इत्यभियुक्तव्याख्यानात् कृपेरालुच्। 'कृत्सञ्ज्ञापूर्वको विधिरनित्यः' इति गुणाभावे बहुलग्रहणात् कृपेरालुचि 'कृपो रो लः' **(पा.सू.८.२.१८)** इति लत्वाभावे च कृपालुरिति [२]रूपसिद्धेरिति भावः ।। **कलशवाची वेति** ।। 'गर्गर्यालुर्गलन्तिका'[३] **(अमर.२.१६६)** इत्यमरोक्तेरिति भावः ।। **ब्रह्मरुद्रादिभिरिति** ।। बहुव्रीहिपदस्य विशेष्यवाचिपदाप्रतीतेः 'देवैः' इति पदमन्यपदार्थप्रधान[४]बहुव्रीहिः विशेष्यपदमिति दर्शयन् 'देवैः' इत्येव वाच्ये तद्विशेषणतया विशिष्य 'ब्रह्मरुद्रादिभिः' इत्युक्तेः कृत्यमाह– **अन्यपदार्थेति** ।। **ज्ञानपदेनेति** ।। परापरतत्त्वलक्षकज्ञान-पदेनेत्यर्थः ।। कुतो 'ज्ञानधर्म' इति नोक्तम्? इत्यत आह– **समेति**[५]।। परापरतत्त्वस्य धर्मस्य चेति योज्यम् ।। **स्वशब्देन** वाचकशब्देन धर्मस्येत्यर्थः ।। **समग्रेति** ।।

**'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।**

**[६]ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरिणा' (वि.पु.६.५.७४)**

इत्युक्तेरिति भावः ।। विशेष्यानुक्तेर्व्यास एव रूपान्तरेणावततारेति प्रतीतेश्चाऽह– **नारायण इति** ।।

**( महाभारतरचनावतरणिका )**

**भाष्यम् — ततश्चेष्टानिष्टप्राप्तिपरिहारसाधनादर्शनाद् वेदार्थाज्ञानाच्च संसारे क्लिश्यमानानां वेदानधिकारिणां स्त्रीशूद्रादीनां च धर्मज्ञानद्वारा मोक्षो भवेदिति**

१. 'इत्यर्थः' इति सो-पाठे।
२. रूपेति सो -नास्ति।
३. अत्र '**कर्कर्यालुर्गलन्तिका**' इति प्रचलितपाठः । मातृकासु गर्गर्यालु इत्येव पठ्यते ।
४. सो-पाठः । बहुव्रीहिविशेष्यम् इति का,मं पाठे ।
५. स्पष्टमेवेति इति सो पाठे प्रतीकमधिकं दृश्यते ।
६. (अ) **छान्दोग्यभाष्ये उदाहृतम् । 'विज्ञानयोश्चैव'-इति प्रचलितः ।**
(आ) **सुधापरिमले १.१.१'विज्ञानयोश्चैव' इति पाठ उक्तः । मातृकायामपि कचिदयं पाठः ।**
(इ) **'ऐश्वर्यं च तथा वीर्यं तेजः शक्तिरनुत्तमा । ज्ञानं बलं यदेतेषां षण्णां भग इतीरितः' वृ.हा.६.१६४.**

**कृपालुः सर्ववेदार्थोपबृंहितां तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्तां च सर्वप्राणिनाम् अवगाह्यानवगाह्यरूपां केवलभगवत्स्वरूपपरां परोक्षार्थां महाभारतसंहिताम् अचीक्लृपत् ॥**

## प्रमेयदीपिका

ततः किं प्रकृते? इत्यत आह– **ततश्चेति** ॥ [१]तस्माद् धर्मज्ञान[२]प्रदर्शनार्थम् अवतीर्णत्वादेव । अवतारानन्तरमेव वा । विजातीयव्यापाराख्य[३] व्यवधानमन्तरेणेति यावत् । धर्मज्ञानप्रदर्शनाय **महाभारतसंहितां** महाभारताख्यं शास्त्रम् **अचीक्लृपत्** समर्थितवान् । 'व्यासः' इति सम्बन्धः । धर्मादिज्ञानमपुरुषार्थं कथं शास्त्रप्रयोजनमभिप्रेतवान्? इत्यत उक्तम्– **धर्मज्ञानलक्षणया द्वारा सज्जनानां मोक्षो** भवेद् इत्यभिप्रायेणेति । अत्र ज्ञानशब्दो मुख्यार्थ एव ॥

एतद्ग्रन्थनिर्माणे भगवतः किं प्रयोजनम्? इत्यत उक्तम्– **कृपालुरिति** ॥ संसारे स्वाभाविके मोक्षार्थं प्रयत्नः काकीयकार्ष्ण्यापनयनार्थप्रयत्नतुल्य इत्यत उक्तम्– **इष्टानिष्टप्राप्तिपरिहारसाधनादर्शनात् संसारे क्लिश्यमानानामिति** ॥ मोक्षस्य पुरुषार्थतासमर्थनार्थं वादिविप्रतिपत्तेः तत्स्वरूपनिर्धारणार्थं च **इष्ट** इत्याद्युक्तम् । 'आत्यन्तिक' इति चोपस्कर्तव्यम् । साधनं च धर्मज्ञानस्वरूपम् ॥ ननु वेदानामुद्धृतत्वात् तत एव धर्मादिप्रतिपत्तिसम्भवात् किं भारतनिर्माणेन? इत्यत उक्तम् – **सर्ववेदार्थेति** ॥ अनेन वेदाधिकारिणां त्रैवर्णिकानां पुंसां वेदार्थज्ञानोपायो भारतमिति सूचयति ॥

### ( अनुबन्धचतुष्टयनिरूपणम् )

किञ्च वेदानधिकारिणां वेदतुल्यत्वाच्च तन्निर्माणं युक्तमित्याशयवानाह– **वेदेति**॥ तदनेन परमाप्तिमूलत्वान्महाभारतस्य प्रामाण्यम् । धर्मः परमपरं च तत्वं विषयः । तज्ज्ञानं[४] चावान्तरप्रयोजनम् । मोक्षः परमम् । सज्जनाश्चाधिकारिण इत्युक्तं भवति । **'नष्टधर्म'** इत्यादिना बहुशो विषयप्रयोजनाभिधानेन तयोरनन्यलभ्यत्वं सूचितम्[५] । यदभावात् सतां [६]संसारक्लेशः, यदर्थं देवातानां प्रार्थनम्, यदर्थश्च भगवतोऽवतारस्तद्भारतनिर्माणेनैव पर्यवसितमिति ॥

---

१ गुज,वे-ग्रं । यस्मात् .अवतीर्णस्तस्मादेव इति -प्र। २'धर्मप्रदर्शन' इति भावदीपकाराणां सम्मतपाठान्तरम् ।

३. गुज,वे-ग्रं । व्यापारव्यवधान-प्रच । ४.गुज,वे-ग्रं । तज्ज्ञानमवान्तरम् -प्र ।

५. गुज,वे-ग्रं । सूचयति–प्र । ६.गुज,वे-ग्रं । संसारे क्लेशः -प्र ।

**भावदीपः**

'चशब्दोऽवधारणे' इत्युपेत्य **'ततश्च'** इत्यस्य प्रतिपदं वदन्नेवार्थमाह– **तस्मादिति** ।। **धर्मेति** ।। ज्ञानस्याप्युपलक्षणम् ।। **क्वचिद् धर्मज्ञानेत्यपि पाठः**[१] ।। आनन्तर्यार्थत्वमुपेत्याऽह– **अवतारेति** ।। 'नतु गुरुकुलवासादिना विद्यां सम्पाद्य' इत्येवकारार्थ इति भावेनाऽह– **विजातीयेति** ।।

एतेन- **'द्वैपायनः सोऽथ जगाम मेरुं चतुर्मुखाद्यैरनुगम्यमानः ।**
**उद्धृत्य वेदानखिलान् सुरेभ्यो ददौ मुनिभ्यश्च यथाऽऽदिसृष्टौ ।।**
**सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्णयं ब्रह्मसूत्रं चकार ।**
**तच्छुश्रुवुर्ब्रह्मगिरीशमुख्या सुरा मुनीनां प्रवराश्च तस्मात् ।।**
**समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयम् ।**
**वेदोत्तमम्...'** **(म.भा.ता.नि.१०.५७-५९)**

इति भारततात्पर्यनिर्णयदशमाध्यायविरोधो निरस्तः ।।

वेदोद्धारादेर्ज्ञानहेतुतया सजातीयत्वादिति ।। भारतकृतौ प्रयोजनं वदन्नेव **'ततश्च'** इत्यस्यान्वयमाह– **धर्मज्ञानेति** ।। **समर्थितवानिति** ।। 'क्लृपू सामर्थ्ये' **(पा.धा.७६२)** इति धातोरिति भावः । अकरोदिति यावत् । इतिशब्दः प्रकारार्थ इत्युपेत्य शेषोक्त्याऽन्वयमाह – **इत्यभिप्रायेणेति** ।। **मुख्यार्थ इति** ।। न लक्षणया परापरतत्त्वपर इत्यर्थः ।। बाधनिरासायाऽह – **आत्यन्तिकेति चोपस्कर्तव्यमिति** ।। 'प्राधान्येन' इत्यादिना पूर्वं कृतचोद्यस्य **'नष्टधर्म**[२]**'** इत्यादिग्रन्थेन कथं परिहारः? इत्यत आह– **तदनेनेति** ।। **'नष्ट'** इत्यादिना **'अचीक्लृपत्'** इत्यन्तेनेत्यर्थः ।।

**'वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता' (अनु.व्या.१.१..)**

इत्यनुभाष्योक्तेः, अत्र च **'देवैर्ज्ञानार्थं प्रार्थितो हरिर्व्यासो भूत्वा भारतमकरोत्'** इत्युक्त्या क्रमात् [३]प्रसङ्गवक्तृश्रोतृणामानुकूल्यरूपा आप्तिमूलता लब्धेति भावेनोक्तम्– **परमाप्तिमूलत्वाद्**

---

१. इदं वाक्यं सो-मातृकायां नास्ति । पूर्ववाक्यपर्यालोचनया टीकायां पाठान्तरमूह्यम् ।
२. 'नष्टधर्मज्ञान' इति क्वचित् ज्ञानशब्दः अधिकः।
३. 'प्रसङ्गात् श्रोतृवक्तृणाम्' इति सो-।

इति ।। **धर्म इति** ।। भगवत्प्रीत्युद्देशेन क्रियमाणनिवृत्तिलक्षणोऽग्निहोत्रादिरित्यर्थः ।। **सूचित** - मित्येतद् व्यनक्ति – **यदभावादित्यादिना**।। [१]तद्भारतनिर्माणेनैव पर्यवसितं नान्येनेति हेतोः अनन्यलभ्यत्वं विषयप्रयोजनयोरित्यर्थः ।।

**( परोक्तगीतासङ्गतिनिरासः )**

**प्रमेयदीपिका**

एतेनैतदपि प्रत्युक्तम् - यदाह **भास्करः** 'शास्त्रप्रयोजनाभिधाने प्रस्तुतेऽवतारप्रयोजनाभिधानमसङ्गतम्' इति । **सङ्करः** कृष्णावतारपुरस्कारेण गीतायाः सङ्गतिमाह । तदतिक्रमेण व्यासावतारपुरस्कारे को हेतुः? इति चेत्, [२]कृष्णस्य बलकार्यत्वेन ज्ञानोपदेशस्य प्रासङ्गिकत्वम्। व्यासस्य ज्ञानकार्यत्वेन प्राधान्यमिति ।।

**भावदीपः**

**एतेनेति** ।। अवतारोक्तेः प्रामाण्योपयुक्तत्वकथनेनेत्यर्थः ।। **'इत्येतदिति'** इतिपदस्य पूर्वेणान्वयः । सङ्करस्यैवायं दोषो नास्माकमिति भावः ।। **ज्ञानोपदेशस्येति** ।। 'उद्धवादिकं प्रति' इति योज्यम् ।।

**प्रमेयदीपिका**

वेदादिसंवादेनापि भारतस्य प्रामाण्यनिश्चय इत्याशयेनाऽऽह– **सर्वेति** ।। नैतावता वेदादिसमं भारतम् । किन्तु तदनुक्तार्थस्यापि प्रतिपादनेन ततोऽधिकमिति भावेनाऽऽह– **तदिति** ।। तर्हि निर्मूलत्वेनाप्रामाण्यं प्रसज्यत इत्यत उक्तम् - **ईश्वरेति** । **ज्ञानदृष्टः** ज्ञानविषयीकृतः । [३]सर्वज्ञत्वस्य झडिति स्फुरणार्थं 'स्वेन'[४] इत्यनुक्त्वा 'ईश्वर' इत्युक्तम् । ईश्वरज्ञानस्य कुतः प्रमाण्यम्? इत्यत उक्तम्– **केवलेति** ।। इन्द्रियाद्यनपेक्षम् । अनेन सत्स्वप्यन्येषु ग्रन्थेषु किमेतद्व्याख्यानेन? इति परिहृतम् ।।

ननु 'नष्टधर्म 'इत्यादिना मन्दान् प्रतीदं निर्मितमिति सूचितम् । ते च वेदैकदेशार्थमपि ज्ञातुमशक्ताः । तत्कथं सर्ववेदाद्युक्तानुक्तार्थवतोऽस्य प्रणयनम्? मैवम् । ब्रह्मादीनाम्

---

१. तद्भारतेति टीकानुगुणः पाठः इति भाति। सो- मं-पाठ एवमेव । तत्तु भारतनिर्माणेन इति का-पाठः।

२. **'कृष्णरामादिरूपेण बलकार्यो जनार्दनः । दत्तव्यासादिरूपेषु ज्ञानकार्यो जनार्दनः'** ।। म.भा.ता.

३. गुज.ते-ग्रं ।'सार्वज्ञस्य' इति ।

४. गुज.ते-ग्रं । 'स्व' इति प्र-पाठः।

अप्यत्राधिकारित्वात्[1]। यथोक्तम्–

**'वेदोत्तमं तच्च विधातृशङ्करप्रधानकैस्तन्मुखतः सुरैः श्रुतम्'** (म.भा.ता.नि.१०.५९)

इति । कथमेतदुभयम्? इत्यत आह– **सर्वेति** ।। रूपशब्दोऽभिधेयार्थः । 'स्वं रूपं शब्दस्य' (पा.सू.१.१.६८) इत्यत्र रूपशब्देन प्रसक्तस्य बाह्यार्थस्य व्यावृत्तये 'स्वम्' इत्युक्तवात् । स च व्याघातपरिहारार्थः ।। सामान्येन द्व्यर्थं भारतम् । तत्रैकोऽर्थः सर्वप्राणिनामवगाह्यः । अपरः सर्वप्राणिनामनवगाह्यः[2] । किन्तु केषाञ्चिदेवेति न कश्चिद्दोष इति ।। अनवगाह्यरूपतायां हेतुमाह– **परोक्षेति** ।। परोक्षः अत्यन्तगूढः ।। ननु धर्माद्यनेकविषयत्वे[3] अस्य कथमेकवाक्यता? इत्यत आह– **केवलेति** ।। केवलम्[4] एकमेव भगवत्स्वरूपं परं मुख्यप्रतिपाद्यं यस्यास्सा तथोक्ता । धर्मादिकं तु तादर्थ्येनामुख्य-प्रतिपाद्यमिति भावः ।[5]भगवत्प्रतिपादनं न सङ्कीर्णतया। अपि तु निष्कृष्टतयेति ज्ञापनाय **'स्वरूप'** इत्युक्तम् ।।

**भावदीपः**

ननु 'वेदानामुद्धृतत्वात्' इत्यादिशङ्कानिरासकतया व्याख्यातमेव अन्यथाऽप्यवतार्य व्याचष्टे – **वेदादीति** ।। **इन्द्रियाद्यनपेक्षमिति** ।। एतेन नित्यतया निर्दोषत्वात् प्रामाण्यमित्युक्तं भवति ।। **अनेनेति** ।। 'सर्व' इत्यादिविशेषणद्वयकथनेन प्रागुक्तशङ्का परिहृतेत्यर्थः ।। **यथोक्तमिति** ।। भारततात्पर्ये दशमे ।। **उभयमिति** ।। मन्दाधिकारिकत्वं ब्रह्मादिसुराधिकारिकत्वमित्यर्थः ।।

**स्वं रूपमिति** ।। 'स्वं रूपं शब्दस्याशब्दसञ्ज्ञा' (पा.सू. १.१.६८) इति प्रथमाध्यायाद्यपादे 'रूपं शब्दस्य' इति वक्तव्ये 'स्वम्' इति यद्विशेषणं कृतं[6] पाणिनिसूत्रे तत्तु शब्दस्य वाच्यार्थरूपो यो बाह्योऽर्थस्तन्निरासेन [7] वर्णमालारूपमन्तरङ्गं यद्रूपं शब्दस्य वाच्यमस्ति तस्यैव ग्रहणाय' इत्युक्तम् ।। अन्यथा 'अग्नेर्ढक्' (पा.सू.४.२.३३) इत्यत्र अग्नेरित्यग्निशब्दरूपग्रहणेन 'आग्नेयम्' इति रूपं न सिद्ध्येत् । तदर्थस्य वह्न्यादेरेव ग्रहणप्रसङ्गापत्तेः । (अतः[8]) 'स्वम्' इति विशेषणमित्युक्तम् । तेन ज्ञायते रूपशब्दो वाच्यार्थपर इत्यर्थ इति । तदुक्तं वृत्तौ 'शब्दस्य स्वयमेव रूपमन्तरङ्गं यद्रूपं शब्दस्यावाच्यमस्ति, तस्यैव ग्रहणायेत्युक्तम् । स्वयमेव रूपं ग्राह्यम् ।

१. गुज,वे-ग्रं । 'अधिकारात् '-प्र ।
२. 'सर्वप्राणिनां नावगाह्यः'- गुज,वे-ग्रं ।
३. गुज,वे-ग्रं । 'विषयत्वस्य' प्र ।
४. गुज,वे-ग्रं-एकशब्दः नास्ति ।
५. गुज,वे-ग्रं । 'भगवत्स्वरूप'-प्र ।
६. का.मं-। 'विशेषणं यत् कृतं' -सो ।
७. सो।'तस्य निरासेन'इति कां-मं पाठे ।
८. सो-नास्ति ।'विशेषणमुक्तम्' इति कां-मंपाठे ।

बोध्यं = प्रत्याय्यं भवति । नतु बाह्योऽर्थः'[१] इति ।। **व्याघात इति।।** अवगाह्यानवगाह्यत्वोक्तेरिति भावः[२] ।। **सङ्कीर्णतयेति** ।। स्वप्रतिपाद्यान्तरसाधारण्येन[३] भवति । किन्तु इतरासाधारण्यतयेत्यर्थः ।।

**( महाभारतस्य सर्वशास्त्रोत्तमत्वे प्रमाणानि )**

**भाष्यम् — तच्चोक्तम् -**

**'लोकेशा ब्रह्मरुद्राद्याः संसारे क्लेशिनं जनम् ।**
**वेदार्थाज्ञमधीकारवर्जितं च स्त्रियादिकम् ।।**
**अवेक्ष्य प्रार्थयामासुः देवेशं पुरुषोत्तमम् ।**
**ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च ।।**
**अन्यावताररूपैश्च वेदानुक्तार्थभूषितम् ।**
**केवलेनात्मबोधेन दृष्टं वेदार्थसंयुतम् ।।**
**वेदादपि परं चक्रे पञ्चमं वेदमुत्तमम् ।[४]**
**भारतं पञ्चरात्रं च मूलरामायणं तथा ।।**
**पुराणं भागवतं चेति सम्भिन्नश्शास्त्रपुङ्गवः ।'**

**इति नारायणाष्टाक्षरकल्पे ।**

**प्रमेयदीपिका**

कुत एतत् प्रतिपत्तव्यम्? इत्यत आह– "**नचोक्तमिति** ।। यदेतत् '**नष्टधर्म**' इत्यादिनोक्तं तत् '**लोकेशाः**' इत्याद्यागमचतुष्टयेन उक्तं च । न केवलमस्माभिरुच्यते[६]।।

---

१. इदं वाक्यं सो-पाठे स्पष्टं वर्तते । कां-पाठे अस्पष्टतया।

२. कां । 'इत्यर्थः' इति सो, मं-पाठे।

३. सो-पाठः । 'साधारणेन' इति, 'साधारणतया' इत्युत्तरत्र च कां पाठे ।

४. 'भारतं वेदतुल्यं स्यादर्थतो अधिकमुच्यते । तत्रापि भगवद्गीता विष्णोर्नामसहस्रकम् ।।
शताधिकफलं प्रोक्तं...।।' अ.१.श्लो.८ (वराह.पु.चा.मा.)

५. गुज,वे-ग्रं । 'तच्चेति' -प्र ।

६. **ब्र.सू.भाष्यदीपिकायां (१.१.१)**'यद्यप्याचार्यः स्वोक्तार्थे स्वयमेव प्रमाणं, सर्वज्ञत्वादविप्रलम्भकत्वाच्च। तथाऽपि स्कान्दे चोक्तमिति प्रौढवादं करोति' इति । 'न केवलमस्माभिः' इति प्रमेयदीपेऽपि ।

'उपसर्गस्य घञमनुष्ये बहुलम्' **(पा.सू.६.३.१२२)** इत्यतो **'अधीकार'** इति दीर्घः । **स्त्रियादिकम्** इति छान्दस इयङ् । **व्यासो भूत्वा च** व्यासो भूत्वैव । विलम्बमकृत्वा । **अभूत्वा** मूलरूपेण चेति वा । **तेन** व्यासरूपेण, अन्यावताररूपैश्च ।। **परम्** अतिशयेनोत्तमम् । कोऽसौ पञ्चमो वेदः? इत्यत आह– **भारतमिति** ।। पञ्चमवेदाख्यः **शास्त्रपुङ्गवः**। **इति सम्भिन्नः** प्रभिन्नः । अथवा **इति शास्त्रपुङ्गवः** । स च **सम्भिन्नः** एकार्थतया सङ्गत इत्यनेकेष्वपि ग्रन्थेष्वेकवचनमिति योज्यम् ।। अत्र पञ्चरात्रं नारायणावतारेण कृतम् । मूलरामायणं [1]हयग्रीवरूपेण । आदिभागवतं मूलरूपेण ।।

### भावदीपः

**आगमचतुष्टय इति** ।। नारायणाष्टाक्षरकल्पोपनारदीयनारदीयस्कान्दरूप इत्यर्थः ।। **उक्तं चेति** ।। **चशब्दार्थः- न केवलमित्यादि** ।। **उपसर्गस्येति** ।। उपसर्गस्य घञन्ते उत्तरपदे अमनुष्येऽभिधेये बहुलं दीर्घो भवतीति षष्ठतृतीयपादगतसूत्रस्यार्थः ।। 'इको यणचि' **(पा.सू.६.१.७७)** इति यणादेशे स्त्र्यादिकमिति भाव्यमित्यत आह – **छान्दस इति** ([2]इयङादेश इति। एष आदेशः)।। **विलम्बमिति** ।। विजातीयव्यापारमित्यर्थः ।।

**'पञ्चमं वेदं चक्रे'** इत्यस्य विवरणपरत्वस्य [3]ज्ञापनाय शेषोक्तिपूर्वं वाक्यं योजयति– **पञ्चमवेदाख्यमित्यादिना** ।। **इति सम्भिन्न इति** ।। भारतादिरूपेण पञ्चधा सम्भिन्न इत्यर्थः ।। मिश्रित इति भ्रमनिरासार्थमाह– **प्रभिन्न इति** ।। **अथवेति** ।। **'शास्त्रपुङ्गवः'** इत्यत्र पञ्चमवेदाख्यमित्यनुषङ्गः ।। **एकेति**।। अनेकेषु भारतादिपञ्चसु 'पञ्चमं वेदम्' इत्येकवचनमित्यर्थः। तत्र 'हेतुतया अपि' इति पदमावर्त्यमित्युपेत्योक्तम्– **सङ्गत इतीति** ।। किं केन कृतम् ? इत्यतो विवेकमाह– **अत्रेति** ।। '[4]भारतपुराणे व्यासकृते' इत्यनुक्तिः सिद्धमिति नोक्तम् ।।

### ( महाभारतं दशार्थकम् )

**भाष्यम् —** **'ब्रह्मापि तन्न जानाति ईषत्सर्वोऽपि जानति ।**

१. 'हयग्रीवावतारेण'-गुज,वे-ग्रं ।
२. अत्र टीकायाम् 'इयङ्'इत्येव पाठो दृश्यते । कंसान्तर्गत भागः सो -पाठे एव ।
३. 'परत्वस्थापनाय' इति मं-पाठः ।
४. 'भागवत' इति लेखकप्रमादः काणियूरुमातृकायाम् ।

वह्वर्थमृषयस्तत्तु भारतं प्रवदन्ति हि ।।'

इत्युपनारदीये ।

'ब्रह्माद्यैः प्रार्थितो विष्णुर्भारतं सञ्चकार ह ।
यस्मिन् दशार्थाः सर्वत्र न ज्ञेयाः सर्वजन्तुभिः ।।'

इति नारदीये ।

### प्रमेयदीपिका

**ब्रह्माऽपि**[1] बृहस्पतिरपि ([2]इत्येके) । 'कृत्स्नम्' इति शेषः । **सर्वोऽपि** जनो जानति जानाति । वह्वर्थमिति प्रवदन्ति।।[3]

### भावदीपः

**ब्रह्माऽपि** इत्यपिपदेन समुच्चेयमाह– **ब्रह्मा बृहस्पतिरपीत्येके** ।। प्राज्ञास्तु 'ब्रह्म' इत्यनुवादेन 'बृहस्पतिरपि' इत्यर्थोक्तिरित्याहुः । उक्तं हि तृतीयस्कन्धतात्पर्ये सप्तविंशाध्याये[4] 'ब्रह्मा बृहस्पतिरित्यादीति' इत्याहुः ।। 'तन्न जानाति' इत्यत्रोत्तरवाक्याविरोधाय शेषमाह– **कृत्स्नमिति शेष इति** ।।

**भाष्यम्** — 'भारतं चापि कृतवान् पञ्चमं वेदमुत्तमम् ।
दशावरार्थं सर्वत्र केवलं विष्णुबोधकम् ।
परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं तु यत् ।'

इति स्कान्दे ।

### प्रमेयदीपिका

**भारतं चापीति** पूर्वोक्तेन समुच्चयः ।। दश अवरा येषु ते तथा । तेऽर्थाः यस्येति[5] विग्रहः ।।

---

१. वे,गुज,वे-ग्रं, मातृका-१,२ । प्र-पाठ 'अपिः' नास्ति ।
२. प्र.पाठे 'इत्येके इति न दृश्यते । भावदीपे प्रती[illegible] कृतम् ।
३ रामायणव्याख्याने सत्यधर्मीये सुन्दरकाण्डे-५१ सर्गे ४५श्लोके- 'यद्वा ब्रह्मा बृहस्पतिः । 'ब्रह्मापि तन्न जानाति' इति गीताभाष्यप्रमेयदीपिकायां 'ब्रह्मा बृहस्पतिः' इति व्याख्यानात्' इति ।।
४. 'यस्मिन् ब्रह्मा राजनि पूर्व एति' इति श्रुतिः ।
'बृहस्पतिः पुरोधाश्च ब्रह्मा च ब्रह्मणस्पतिः' इत्यभिधानम् ।। भाग.ता. ३.२७.७२ ।
५. वे, गुज, वे-ग्रं 'येषु ' इति प्र.पाठः । मातृकायां यस्य इति पठ्यते ।

याजकादेराकृतिगणत्वाद् **'विष्णुबोधकम्'** इति समासः । **करणार्थघञन्तेन** वा समासः। पश्चादल्पाद्यर्थे कः ।। **उत्तममित्युक्तस्यैव** विवरणम् – **वेदादप्युत्तमममिति**।। एषु वाक्येषु यथासम्भवं पूर्वोक्तार्थोऽवगन्तव्यः ।। **'यदि विद्यात्'** इत्यादि भारतवाक्यपर्यालोचनया चोक्तं तदवसीयत इति सम्बन्धः।।

**भावदीपः**

**पूर्वोक्तेनेति** ।। स्कान्दपुराण एव पुराणादिग्रन्थानुक्त्वा पश्चाद् **'भारतं चापि'** इत्युक्तत्वात्। तेन समुच्चय इत्यर्थः ।।

**( विष्णुबोधकमिति शब्दे समासविचारः )**

'कर्तरि च' **(पा.सू.२.२.१६)**इति सूत्रे 'कर्त्रर्थकतृजकाभ्यां योगे या कर्मणि षष्ठी सा न समस्यते' इत्युक्तेः कथं 'विष्णुबोधकम्' इति षष्ठीसमासः? इत्यत आह– **याजकादेरिति** ।। द्वितीयाध्यायद्वितीयपादे 'याजकादिभ्यश्च'**(पा.सू.२.२.९)** इति सूत्रे याजकादिशब्दैः षष्ठी समस्यत इति प्रतिप्रसवात् तस्य आकृतिशब्दितस्वभावसिद्धगणवत्वादयमपि शब्दः तन्मध्ये बोध्यत इति भावः । वृत्त्यादावाकृतिगणत्वानुक्तेराह– **करणार्थ इति**।। बुद्ध्यतेऽनेनेति व्युत्पत्त्या 'बुध अवगमने'[1] **(पा.धा.११७२)** इत्यतो 'अकर्तरि च कारके सञ्ज्ञायाम्' **(पा.सू.३.३.१९)** इत्यनेन घञ्प्रत्यये 'पुगन्त'**(पा.सू.७.३.८६)** इति गुणे अवबोध इति सिद्धे विष्णोर्बोधः विष्णुबोधः । अल्पो विष्णुबोधो विष्णुबोधक इति रूपसिद्धेरिति भावः ।।

पञ्चमे तृतीयपादे 'अल्पे'**(पा.सू.५.३.८५)** इति सूत्रे अल्पत्वविशिष्टेऽर्थे कप्प्रत्ययो भवतीत्युक्तेः,अल्पं तैलं तैलकमित्यादाविव भगवद्विषयाल्पज्ञानजनकमित्यर्थः । आदिपदात् स्वार्थ इति ग्राह्यम् ।।

**विवरणमिति** ।। 'वेदात्' इत्यवध्युक्तेः । अतो न पुनरुक्तिरिति भावः ।। **यथासम्भवमिति** ।।

**'लोकेशा ब्रह्मरुद्राद्याः, प्रार्थयामासुः देवेशं पुरुषोत्तमम्'** इत्यनेन

---

१. **'अव बोधने' इति सो-मातृकायां पठ्यते । यद्यप्ययं बुध् धातुः भ्वादौ ८५८, तथा दिवादौ ११७२ पठ्यते । उभयत्रापि 'अवगमने' इत्येव । 'बुधिर् अवबोधने' ८५७ इति चान्यः धातुः भ्वादौ पठ्यते।। अत्र घञ्विधानाद् दिवादिर्धातुः स्वीकृतः ।**

**'ब्रह्माद्यैः प्रार्थितो विष्णुः'** इत्यनेन च **'ब्रह्मरुद्रादिभिरर्थितः'** इत्यस्यार्थः;
**'संसारे क्लेशिनम्'** इत्यनेन 'संसारे क्लिष्यमानानाम्' इत्यस्य;
**'वेदार्थाज्ञम्'** इत्यनेन च 'इष्टानिष्ट' इत्यादि 'वेदार्थाज्ञानाच्च' इत्यन्तस्य;
**'अधीकारवर्जितम्'** इत्यनेन 'वेदानधिकारिणाम्' इत्यादेः;
**'अवेक्ष्य'** इत्यनेन 'अवलोक्योत्पन्नकृपालुः' इत्यस्य;
**'ततः प्रसन्नः'** इत्यादिना 'ज्ञानप्रदर्शनाय' इत्यस्य;
**'भगवान् व्यासो भूत्वा'** इत्यनेन 'व्यासोऽवततार' इत्यस्य,
**'व्यासो भूत्वैव'** इत्यनेन; (**'भूत्वा'**इत्यनेन च)[1] 'ततश्च' इत्यस्य;
**'वेदानुक्तार्थभूषितम्'** इत्यादिना 'तदनुक्त' इत्यादेः;
**'वेदार्थसंयुतम्'** इत्यनेन 'सर्ववेदार्थ' इत्यादेः;
**'ब्रह्मापि तन्न जानाति'** इत्यादिना,
**'यस्मिन् दशार्थाः'** इत्यादिना च 'सर्वप्राणिनामनवगाह्य' इत्यादेः;
**'केवलं विष्णुबोधकम्'** इत्यनेन 'केवलभगवत्' इत्यस्य;
**'परोक्षार्थम्'** इत्यनेन 'परोक्षार्थम्' इत्यस्य

'अर्थ उक्तः' इत्यादिरूपेण ध्येय इत्यर्थः ।। **'अवसीयते'** इत्यस्य कर्माप्रतीतेः **'तच्चोक्तम्'** इत्यनेनान्वयमाह– **यदि विद्यादित्यादि भारतवाक्येति** ।।

**भाष्यम् — 'यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान् द्विजः ।**
**न चेत् पुराणं संविद्यान्नैव स स्याद्विचक्षणः ।।'** (म.भा..१.१.२६८)
[2]**'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।'**
**विभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति**[3]**।'** ( म.भा.आदि..२९३)

---

१. कंसान्तर्गतभागः कां-मं । सो-नास्ति ।
२. 'इतिहासपुराणैश्च कृतोयं निश्चयः पुरा ।
विभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति' वा.पु.१.२२.
३. (अ)न्यायामृते द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखण्डनभङ्गे-
'शब्दस्य नापातप्रतीत एवार्थः । 'विभेत्यल्पश्रुताद्वेदः' इति स्मृतेश्च' इत्युक्तम् । तत्रैव तरङ्गिण्याम् - 'मामयं चालयिष्यति इति स्मृतिः' इति चतुर्थपादो दृश्यते ।।

## ( चतुर्वेदान् इत्यस्य साधुत्वोपपदानम् )

### प्रमेयदीपिका

चत्वारश्च ते वेदाश्चेति विशेषणसमास एवायं न द्विगुः[१]। अङ्गानि चोपनिषदश्च अङ्गोपनिषदमिति समाहारद्वन्द्वः । तेन 'द्वन्द्वाच्चुदषहान्तात् समाहारे' (पा.सू.५.४.१०६) इति समासान्तोऽकारः । ततो बहुव्रीहिः । प्रचलिष्यति प्रचालयिष्यतीति ।।

### भावदीपः

ननु 'चतुर्णां वेदानां समाहारः' इत्यत्र 'तद्धितार्थोत्तरपदसमाहारे च' (पा.सू. २.१.५१) इति सूत्रे तद्धितार्थे विषये उत्तरपदे च परतः समाहारे वाच्ये '[२]दिक् सङ्ख्ये समस्येते' इति समासे 'सङ्ख्यापूर्वो द्विगुः' (पा.सू.२.१.५२) इति द्विगुसञ्ज्ञायाम्, 'द्विगोः'(पा.सू.४.१.२१) इति ङीप्प्रत्यये 'चतुर्वेदी' इति स्यादित्यत आह– **चत्वारश्च त इति** ।। 'विशेषणं विशेष्येण बहुलम्' (पा.सू.२.१.५७) इति सूत्रेण विशेषणसमास इत्यर्थः ।। **द्वन्द्वादिति** ।। चवर्गान्ताद् दकारान्तात् षकारान्ताद् हकारान्ताद् द्वन्द्वात् समाहारे च टच्प्रत्ययो भवतीति पञ्चमान्त्यपादीयसूत्रार्थः । 'चुटू' (पा.सू.१.३.७) 'हलन्त्यम्' (पा.सू.१.३.३) इत्येताभ्यां टकारचकारयोरपगमे अङ्गोपनिषदमिति रूपम् । तेन सहितानीति[३]। 'सहयुक्तेऽप्रधाने' (पा.सू. २.३.१९) इति सूत्रेण बहुव्रीहिरित्यर्थः ।।

## ( महाभारतार्थस्य त्रैविध्यम् )

**भाष्यम् —** 'मन्वादि केचिद् ब्रुवते ह्यास्तिकादि तथापरे ।[४]

---

(आ) अत्र ब्र.सू.श्रीभाष्ये १.१.१ रङ्गरामानुजीये, तथा वे-ग्रं पुस्तके 'प्रतरिष्यति' इति;

(इ) गीताप्रेस्मुद्रिते 'प्रहरिष्यति' इति च पाठः ।

(ई) वसिष्ठस्मृतौ २७.६ 'इतिहास....प्रहरिष्यति' इति पाठः ।।

१. एवमेवाचार्यैः अनुव्याख्याने-(१.१.६)'उक्त्वा पञ्चस्वरूपाणाम्' इति छान्दसप्रयोगः कृतः । तत्रेयं सुधा- 'पञ्चस्वरूपाणाम् इति विशेषणसमास एवायं न द्विगुः । तद्धितार्थाद्यभावात् इति । अधिकं परिमले ।

२. 'दिक्सङ्ख्ये सञ्ज्ञायाम् '(२.१.५.)इति सूत्रस्य वृत्तिरियम् ।

३. ते सहितान् इति इत्येव सो पाठे । सहयुक्त इत्यादि नास्ति ।

४. 'मन्वादि भारतं केचिदास्तीकादि तथापरे ।
तथोपरिचराद्यन्ये विप्राः सम्यगधीयिरे' इति प्रचलितपाठः भारते।

तथोपरिचरायन्ये भारतं परिचक्षते ।' (म.भा.आदि.१.६६)'

---

मन्वादि भारतम् इत्यत्र मनवो मन्त्राः । सहस्रनामाद्याः ये विष्णुमन्त्राः, अक्षरशास्त्रादीनां च गायत्र्यादयो ये मन्त्राः तेषामभिमानी भीमः मनुरित्युच्यते । तदादिः तन्महिमप्रतिपादनमेव आदिः यस्य तत् मन्वादि । असाधारण्येन भीममहिमप्रतिपादकमेव भारतमिति केचिद्विप्रा अधीयिरे । अस्ति परदेवता इति ये विदुः ते आस्तीकाः । पञ्चपाण्डवद्रौपद्याद्याः तेषां सर्वेषां महिमप्रतिपादनमिति केचिद्विप्रा अधीयिरे । तथा उपरिचरादि एतेषां सर्वेषामुपरि एतदुत्तमतयेत्यर्थः चरतीति सर्वान्तर्यामी नारायणः। तदादि तन्महिमप्रतिपादकमेवेति केचिद् विप्रा अधीयिरे । द्रौपद्याः अर्जुनादीनां च चरित्रस्य तत्र तत्र कथ्यमानत्वात् ते सर्वे भारतप्रतिपाद्या इति यथाश्रुतार्थवेदिनो वदन्ति । तेष्वपि प्राणरूपेण भीमस्यैव प्रविष्टत्वात् भीमस्यैव चरित्र प्रतिपादकं भारतमिति रहस्यविदः ऋष्यादयो वदन्ति । भीमस्य तेषां च अन्तर्यामी हरिरेवेति सकलभारतं हरिचरित्रप्रतिपादकमिति एकान्तिनो ब्रह्माद्या वदन्ति । अतः पक्षत्रयमप्युचितमेवेति भावः - इति **महाभारतलक्षालङ्कारे ।**

१. प्रकारान्तरेणापि भारतार्थत्रैविध्यं वक्तुमुपक्रमते । 'मन्वादि केचिद् ब्रुवते' इति श्लोकस्यापाततः प्रतीयमाना मनव आस्तीकाख्यो ऋषिः, उपरिचराख्यो वसुश्च नार्थः । मनूनां प्रसङ्गस्यैव भारतेऽभावात्। आस्तीकोपरिचरवस्वोश्च सर्पयागविघ्नकरणाय सत्यवत्युत्पत्तये चादिपर्वण्यादिभागे एकैकाध्यायमात्रेण प्रसञ्जनेऽपि आदिपर्वण्यन्ते प्रसञ्जनाभावेन सकलभारतप्रतिपाद्यत्वस्य सुतरामयोगात् । तस्मात् 'वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' इति भारत एवोक्तत्वात् उपरि सर्वेषामुपरि चरतीति उपरिचरः सर्वोत्तमो नारायणः तस्यैव स्वरवर्णपदवाक्यात्मकसकलभारत-ग्रन्थेन परममुख्यया वृत्त्या प्रतिपादनमुचितम् । 'चरितं वैष्णवानां तु विष्णूद्रेकाय कथ्यते' इति वचनात् वैष्णवाग्रेसराणां पाण्डवानां द्रौपद्याश्च कथापि तदनन्तरं कथनार्हा । दृश्यते च तेषामेव उत्पत्त्यादिकमपि सर्वत्र भारते । विविदिशन्ति यज्ञेन दानेन तपसानाशकेन' इति श्रुतेः । 'भक्तिरेवैनं नयति' 'भक्त्या त्वनन्यया शक्यः' 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'तद्विज्ञानार्थं स गुरूमेवाभिगच्छेत्' 'वेदा ह्येवैनं वेदयन्ति' इत्यादि वचनेभ्यः धर्माचरणस्य भक्तिवैराग्यादिगुणानां श्रवणादीनां गुरूपसत्त्यादिविनयानां वेदस्य च तेषामेव वैष्णवानां तस्यैव विष्णोः साक्षात्कारप्रसादादावङ्गत्वात् । तद्वन्दनमपि तेषामेवोपकाराय कर्तुमुचितम् । एवञ्च मुख्यतः हरेः तदनन्तरं पाण्डवानां तथा धर्मस्य भक्त्यादिगुणानां च उत्कीर्तन-मेव न्यायप्राप्तम् । श्रूयते च सभापर्वाश्वमेधिकपर्वादिषु राजसूयाश्वमेधादिधर्माणां प्रसङ्गः प्रशंसा । तथापि हरेरग्रपूजया कृष्णे निरुपचरिता भक्तिश्च श्रूयते । कचित् कचित् श्रवणमननादीनां कर्तव्यता चोच्यते । समृद्धराज्यपरित्यागेन वैराग्यं, सत्यपरिपालनं मार्कण्डेयादिऋषिभ्यः भगवत्कथायाः तद्धर्माणां च श्रवणमनादिकमपि आरण्यकपर्वादौ श्रूयते । ज्येष्ठानुवृत्त्या विनयादिकमपि तत्र तत्रोच्यते । तस्मात् एतस्य श्लोकस्य एवं योजना ।।

मीयते प्रमीयते एभिः परमात्मा इति मनवो धर्माः । भक्त्यादिदशकं श्रुतादिः शीलविनयौ वेदाश्चेति मनुपदवाच्यं पञ्चकं यत्र यत्र प्रस्तूयते तस्मिन् तस्मिन्नंशे धर्माभिमानित्वात् मनुपदवाच्यो धर्मराजः। भक्त्यादिदशगुणाभिमानित्वान्मनुपदवाच्यः श्रीभीमसेनः । श्रुताभिमानित्वात् मनुपदवाच्यो अर्जुनः । शीलविनयाभिमानित्वात् मनुपदवाच्यौ नकुलसहदेवौ । वेदाभिमानित्वात् मनुपदवाच्या द्रौपदी च इति

( महाभारतस्य निर्णेयता निर्णायकता च )

'भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।
देवैर्ब्रह्मादिभिस्सर्वैः ऋषिभिश्च समन्वितैः ।
व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ।'[१] (ब्रह्माण्डपुराणे)

---

पश्च आदयः तेन तेनांशेन आदीयमानत्वाद् आदयः प्रतिपाद्याः यस्य तत् मन्वादि। अनया व्युत्पत्त्या भारतं मन्वादि केचिद् ब्रुवते । अभिमन्यमानकथनव्याजेन तदभिमानिनां पञ्चपाण्डवानां द्रौपद्याश्च स्तुत्यर्थं भारतं प्रवृत्तमिति वदन्तीति भावः ।। आस्तीकाः अस्तिपरदेवता अस्ति परलोक इति सदा जानन्तः पाण्डवाः द्रौपदी च आस्तिका इत्युच्यन्ते । आस्तिका एव आस्तीकाः । आस्तिकेभ्यो मनु-मुन्यादिभ्योऽप्यतिशयेन आस्तीका इति सूचनाय दीर्घः। धर्मादिकमनन्तर्भाव्य केवलमास्तिकान् पाण्डवानेव पुरस्कृत्य तदुत्पत्तितच्चरित्रतत्कृतयुद्धादिकं च यत्र बहुशः वर्ण्यते तद् आस्तीकादि । उक्तविधया आस्तीकाः द्रौपदीसहिताः पञ्चपाण्डवाः आदयः प्रतिपाद्याः यस्य तद् आस्तीकादि । धर्मादिकमनन्तर्भाव्य परमास्तिकशिरोमणित्वात् पुण्यश्लोका पाण्डवा एव बहुशः वर्णनीया इति ग्रन्थकर्तुः ग्रन्थस्य च यत्र अभिसन्धिः तत्सर्वप्रकरणम् आस्तीकादीत्युच्यत इति भावः । सकलं भारतम् अन्यद्वारा वा स्वातन्त्र्येण वा परमवैष्णवपाण्डवप्रशंसार्थं प्रवृत्तमिति हृदयम् । सर्वोत्तमत्वात् उपरिचरनामा महाविष्णुरेव आदिमध्यावसानेषु आदिः प्रतिपाद्यो यस्य तद् उपरिचरादि इत्यर्थः । अत्र परममुख्यया वृत्त्या स्वरवर्णपद-वाक्यात्मकसकलभारतेष्वपि विष्णुप्रतिपादकत्वस्याभिप्रेतत्वात् । पाठक्रमादर्थक्रमो ज्यायान् इति न्यायेन चरमोक्तमपि विष्णुप्रतिपादकत्वमेव सर्वस्मादपि मुख्यतोऽभिमतम् । मध्योक्तं केवलपाण्डवप्रतिपादकत्वं मध्यममभिमतम् । आदावुक्तमपि अन्यद्वारा क्वचिद्भागे प्रतिपादनं तु अमुख्यमिति विवेको ज्ञेयः-**इति महाभारतप्रकाशिकायां वादिराजतीर्थाः।।**

१. (अ) 'एकतश्चतुरो वेदा भारतं चैतदेकतः । पुरा किल सुरैस्सर्वैः समेतैस्तुलया धृतम् ।।
चतुर्भ्यस्सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा ' **इति म.भा.१.२९७,२९८ ।**

(आ) सदृष्टान्तं तदुत्तमत्वप्रतिपादकं विष्णुसर्वोत्तमत्वप्रतिपादकं ब्रह्माण्डपुराणवाक्यं पठति- भारतमिति। तुलारोपणं प्रतिनिधिमण्यादिरूपेण । सर्ववेदाः- वेदयन्तीति वेदाः शास्त्राणि च । समन्वितैः युक्तैः । तुलारोपणेन शास्त्रपरूक्षणे शास्त्रकर्तुः क्षोभः स्यादित्यत आह- व्यासस्येति । आज्ञयैवेत्यन्वयः । तत्र तयोर्मध्ये भारतमेव अत्यरिच्यत अतशयेनाधिकमभूत् ।। ननु गीतातात्पर्यभाष्ययोः अत्र च अत्यरिच्यत भारतम् इति भारतस्योत्तमत्वम्, अनुव्याख्याने 'अतो नैतादृशं किञ्चित्प्रमाणतममिष्यते' इत्यनेन सूत्रस्योत्तमत्वमुच्यते । तत्कथमुभयोरिति चेदित्थम् - निर्णायकेषु सूत्रस्य निर्णेयेषु भारतस्येति । इदमुक्तं जयतीर्थार्यैः -'विचार्येषु शास्त्रेषु तदिति' इति । नचात्र भारतस्यापि निर्णायकत्वमुक्तम् । अतः कथं सूत्रस्य निर्णायकात्तमत्वमिति वाच्यम् सूत्रेण निर्णीतं भारतमन्येषां निर्णयकमिति सम्भवात् । अत एव भाष्ये -'शब्दजातस्य सर्वस्य यत्प्रमाणश्च निश्चयः' इति विशेषतः, अत्र च 'निर्णयः सर्वशास्त्राणाम्'इति सामान्यत उक्तम् । भारतस्य सर्वशास्त्रनिर्णायकत्वे स्वयं स्वस्य निर्णायकमिति भवेदिति चेत् -इष्टमेतत् । ..। अत एव निर्णेयता निर्णायकता च' **इति म.भा.ता.नि टीकायां जनार्दनतीर्थाः ।।**

'महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।'[१] (म.भा.१.३००)
'यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्'[२] ( म.भा.आदि ६.५०)
'विराटोद्योगसारवान्' ( म भा.१.८९)
इत्यादि तद्वाक्यपर्यालोचनया, ऋषिसम्प्रदायात्,
'को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत्' ( वायुप्रोक्तवचनम्)'

इत्यादि पुराणग्रन्थान्तर[४]गतवाक्यार्थान्यथानुपपत्त्या नारदाध्ययनादिलिङ्गै-श्चावसीयते ।।

---

१. (अ)'भारतम्' इत्यारभ्य 'प्रमुच्यते' इति पर्यन्तं म.भा.ता.नि.२.१०-११ उदाहृतम् ।
प्रकारान्तरेणाप्युत्तमत्वमाह-महत्वादिति । महत्वात् पूज्यार्थप्रतिपादकत्वात् । महत् भारवत्वात् प्रतिनिधिमणिद्वारा भारवत्वात् भारतम् । तद्वत्वार्थे तप्रत्ययः । पर्वतशब्दवदुपसङ्ख्यानात् । यद्वा भारेण ततत्वाद् भारतमिति एकदेशग्रहणम् । समाने लोप इति इत्येकलोपेन वा भारतं महच्च भारतं चेति महाभारतमुच्यते । निरुक्तं नितरामुक्तं वचनं व्याख्यानमित्यर्थः । अस्य भारतस्य निर्वचनज्ञानमात्रेण सर्वपापक्षयकथनदुत्तमत्वं ज्ञेयम्' इति जनार्दनतीर्थाः ।।
(आ)'व्यासस्यैवाज्ञया तुलामारोपिताः' इत्यन्वयः' । 'महत्वात् महार्थप्रतिपादकत्वात् । भारवत्वात् उत्तमार्थप्रतिपादकत्वेन तुलायामारोपणेऽपि गुरुत्वात्' इति प्रकाशिकायां वादिराजस्वामिनः ।

२. न तत् क्वचित् -गुज,वे-ग्रं ।

३. म.भा.ता.नि २.५५.उदा ।
'वायुप्रोक्तेपि तत् प्रोक्तं भारतस्य प्रशंसनम् ।
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्' । इति म.भा.ता.नि ।
अत्रैवं व्याचक्रुः -जनार्दनतीर्थाः-'ननु वायुप्रोक्ते इति वाक्ये कृष्णद्वैपायनम् इति पूर्वार्धः प्रतिज्ञारूपः । को ह्यन्यः इत्युत्तरार्धः व्यतिरेकव्याप्तेः प्रतिपादकः अनुक्तो हेतुर्व्याप्तिवचनसामर्थ्यादूह्यः । तत्र न तावद् ग्रन्थकर्तृत्वं हेतुः । ग्रन्थकर्तृत्वस्य नारायणादितरत्र कालिदासादावपि साम्यादनैकान्त्यप्रसङ्गात् । नापि भारतकर्तृत्वं ग्रन्थव्यक्तिविशेषकर्तृत्वेन नारायणत्वसाधनस्य कालिदासादावपि साम्यादतिप्रसङ्गात् । तथाच कथं विवक्षितार्थलाभ इति चेत् - नारायणादन्येन कर्तुमशक्यकार्यकर्तृत्वस्य विवक्षितत्वात् । न चासिद्धिः । भारतस्य तथात्वाद् व्याप्तिवाक्यं च तदभिप्रायं मन्तव्यम् ।' इति ।।

४. (अ)विष्णुपुराणे अयमेव श्लोकः पठ्यते ३.४.५।
(आ) महाभारते मोक्षधर्मे 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं भुवि ।
को ह्यन्यः पुरुषव्याघ्र महाभारतकृद्भवेत्'।।(कृ-टि उ.म.भा.वचनम्)

## प्रमेयदीपिका

**'भारवत्त्वात्'**इत्यनेन मत्वर्थे तप्रत्यय[१] .इत्युक्तं भवति ।। भारतप्रामाण्यमप्यङ्गी - कृत्यैव इतरदनङ्गीकुर्वाणं प्रतीदमुक्तम् । युक्त्यनुसन्धानेन विनाऽभिप्रेतार्थोऽत्र[२] न प्रतीयते। अतः [३]**'पर्यालोचनया'** इत्युक्तम् । अनुसन्धानप्रकारं च लेशेन दर्शयिष्यति । ऋषीणां वैशम्पायनादीनां सम्प्रदायात्, शिष्येभ्यः प्रदानाच्चैतद् **अवसीयते** । न हि प्रामाण्यादिरहितम् [४]ऋष्यादयः शिष्येभ्यः श्रेयसे व्याकुर्युरिति युज्यते । **'कोऽह्यन्यः'** इत्यादि **पुराणलक्षण-ग्रन्थान्तरगतवाक्यार्थान्यथानुपपत्त्या** [५]च तदवसीयते । **'ग्रन्थान्तर'** इति विशेषणस्य प्रयोजनं स्वयमेव वक्ष्यति । वाक्यस्योक्तार्थे सामर्थ्याभावात् **'अन्यथानुपपत्त्या'** इत्युक्तम् । तच्च प्रदर्शयिष्यते ।।

नारदस्याध्ययनव्याख्यानादिलिङ्गैश्चोक्तार्थोऽवसीयते । **'ऋषिसम्प्रदायात्'** इत्यनेनैव गतमेतदिति चेत् - न । ऋषीणां गृहस्थत्वेन परार्थोऽन्यविषयो व्यवहारः कथञ्चित् सम्भाव्येतापि । नारदस्य तु परमहंसस्य स्वार्थोऽपि व्यापारोऽन्यविषयो न [६]सम्भवतीति ज्ञापनार्थत्वात् । अत एव **'सम्प्रदायात्'** इति **'अध्ययन'** इति चोक्तम् ।।

## भावदीपः

**'यदि विद्यात् चतुर्वेदान्'** इत्यादिवाक्यानामुक्तेरुपयोगमाह– **भारतप्रामाण्यमिति**।। **इतरदिति** ।। धर्मज्ञानद्वारा मोक्षहेतुत्वं सर्ववेदार्थबृंहितत्वं **'तदनुक्तकेवलेश्वर'** इत्यादिनोक्त-मित्यर्थः ।। **इदमिति** ।। **'यदि विद्यात्'** इत्यादिकम् ।। **लेशेन दर्शयिष्यतीति** ।। **'कथ-मन्यथा'** इत्यादिनेति भावः ।। **प्रदानाच्चेति** ।। ' **'न केवलम्'** इत्यादिवाक्यपर्यालोचनया' इति चार्थः ।। **'प्रामाण्यादि'** इत्यादिपदेन **'इतरत्'** इत्यत्रोक्तस्य सङ्ग्रहः ।। **वक्ष्यतीति** ।। **'ग्रन्थान्तरगतत्वाच्च'** इत्यादिनेति भावः ।। **प्रदर्शयिष्यत इति** ।। **'कथं चान्यस्य'** इत्यादि-नेति भावः ।। **उक्तार्थः** प्रामाण्यादिः ।।

---

१. बे.गुज,वे-ग्रं । क्त इति प्र पाठः असाधुः ।
२. गुज,वे-ग्रं । प्र-अत्र इति नास्ति ।
३. बे,गुज,वे-ग्रं । तत् इति प्र-पाठे अधिकम् ।
४. बे,गुज,वे-ग्रं । प्र- ऋषयः शिष्याणाम् ।
५. बे, गुज,वे-ग्रं । प्र-'पत्त्यैतदव'।
६. बे, गुज, वे-ग्रं । संशब्दो नास्ति ।

'मन्वादि केचिद् ब्रुवते' इति श्लोको भारततात्पर्यनिर्णये द्वितीये (२.१३७)

'सकृष्णान् पाण्डवान् गृह्य योऽयमर्थः प्रवर्तते ।

प्रातिलोम्यादिवैचित्र्यात्तमास्तीकं प्रचक्षते'[१]

इत्यादिना[२] व्याख्यानादत्र न व्याख्यातः ।।

**(युक्त्या भारतस्य सर्वोत्तमत्वसमर्थनम् )**

**भाष्यम् —कथम् अन्यथा भारतनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः । प्रसिद्धश्च सोऽर्थः ।।**

**प्रमेयदीपिका**

**'तद्वाक्यपर्यालोचनया'** इत्युक्तम् । कीदृशी सा पर्यालोचना? इत्यतो लेशेन दर्शयति– **कथमिति** ।। **'महत्त्वात्'** इति वाक्ये भारतशब्दं निरुच्य तज्ज्ञानात् सर्वपापक्षयोऽभिधीयते। नतु भारतस्योत्तमत्वं साक्षात् । तथाऽपि पर्यालोचनया गम्यत एव । यथा हि नारायणादि भगवन्नामनिरुक्तिज्ञानाद् भवन् पापक्षयोऽभिधेयस्य सर्वोत्तमत्व एव तथाऽयमपि । **अन्यथा** भारतस्य सर्वशास्त्रोत्तमत्वाभावे । **कथं** तच्छब्दनिरुक्तिज्ञानमात्रेण **सर्वपापक्षयः स्यात्**? शब्दान्तरनिरुक्तिज्ञानेन तदभावादिति ।।

स्यादेतदनुमानम् । यदि हेतूकृतोऽर्थः प्रमितः स्यात् । न चैवम् । अयथार्थप्रशंसया अपि दर्शनेन वचनस्यान्यथासिद्धेरित्यत आह – **प्रसिद्धश्चेति** ।। [३]धियां तावत् प्रामाण्यं स्वतः। बाधकादप्रामाण्यम् । न चेह तदस्ति । अर्थवादानां चाबाधिते स्वार्थे प्रामाण्यमस्त्येव । अतो हेतूकृतो योऽर्थो भारतशब्दनिरुक्तिज्ञानेन सर्वपापक्षयः **स प्रसिद्धः** प्रमित एवेति । सर्वपापक्षये तदैव मुक्तिः स्यादिति चेत् तर्हि सर्वशब्दार्थ एव सङ्कोच्यताम् । न तु सर्वो वाक्यार्थः।।

---

१. 'प्रातिलोम्यं पश्चात् कथनीयस्य पूर्वं कथनं प्रातिलोम्यम् । भीमेन हता इति वक्तव्ये अर्जुनेन हता इति पुरुषव्यत्यास इत्यादिप्रकारेण योयमर्थः प्रवर्तते तमास्तीकं प्रचक्षते' इति जनार्दनतीर्थाः।

२. आदिपदेनेमौ श्लोकौ म.भा.ता.निर्णयोक्तौ वेदितव्यौ ।

धर्मो भक्त्यादिदशकः श्रुतादिः शीलयौवनौ । सब्रह्मकास्तु ते यत्र मन्वादि तं विदुर्बुधाः ।। (२.१३८)

नारायणस्य नामानि सर्वाणि वचनानि तु । तत्सामर्थ्याभिधायीनि तमौपरिचरं विदुः ।। (२.१३९)

३. वि.त.नि.टीकायां प्रामाण्यस्वतस्त्वं टीकाकारैर्व्युत्पादितम् ।

**भावदीपः**

एवं दृष्टान्तं स्वयमुक्त्वा वाक्यार्थमाह– **तथाऽयमपीत्यादिना** ।। **'अयमपि'** इत्यस्य **'सर्वपापक्षय'** इत्यनेनान्वयः । **'अन्यथा'** इत्यनुवादः **'भारतस्य'** इत्यादि व्याख्या ।। 'भारतम्' इति पदमत्त्युत्तमाभिधेयकम् । सर्वपापक्षयहेतुज्ञानविषयनिरुक्तिकत्वान्नारायणा-दिनामवदित्युक्तं भवति ।। **अयथार्थेति** ।। **'गङ्गास्नानेन वा मुक्तिः'** इत्यादाविति भावः।। **न चात्रेति** ।। **'निरुक्तिमस्य यो वेद'** इत्यादिवाक्ये [1]तत्र बाधकं नास्तीत्यर्थः ।। वाक्यार्थ-माह– **अतो हेतूकृत इत्यादिना** ।।

( महाभारतवाक्यपर्यालोचनम् )

**प्रमेयदीपिका**

एवमन्यान्यपि भारतवाक्यानि पर्यालोचनीयानि । तथाहि -**'यदि विद्यात्'** इति वाक्ये यद्यपि भारतं नोक्तम् । तथाऽपि उत्तरत्रेतिहासशब्देन गृहीतत्वात् पुराणपदं तदुपलक्षणमिति ज्ञायते । न ह्यनुक्तस्योपपादनं युक्तम् । ततश्च भारतस्य वेदार्थज्ञानोपायताऽनेन सिद्ध्यति । अचेतनत्वपर्यालोचनायां **'बिभेति'** इत्येतद् बिभेतीव [2]स्वार्थमन्तर्धापयतीति ज्ञेयम्।।

यद्यपि **'मन्वादि'** इत्येतदापाततो न प्रकृतं कमप्यर्थं [3]प्रत्यापादयति । तथाऽपि भगवत्पादै-रन्यत्रोदाहृतस्य एतद्व्याख्यानरूपवाक्यस्यानुसन्धाने भारतस्य भगवत्परत्वादि गमयति ।।

तुलारोपणं भारवत्त्वं च प्रतिनिधिद्वारेणोपपादनीयम् ।। **'यदिह'** इत्यस्य स्तुतिपरत्वोपपत्तये **'तदेवान्यत्र'** इति व्याख्याने सर्ववेदाद्यर्थोपबृंहितत्वादिकं सिद्ध्यति ।।

**'विराट'** इत्येतत् पूर्वोत्तरवाक्यानुसन्धानेन[4] भारतस्य कल्पतरुतां प्रतिपादयद् भारतस्य सर्वपुरुषार्थहेतुतां गमयतीति ।।

**भावदीपः**

**पुराणपदमिति**।। 'नचेत् पुराणम्' इत्यत्र विद्यमानं पुराणपदमित्यर्थः ।। **अन्यत्रेति**।।

---

१. तद्बाधकं नास्ति इति सो- पाठः ।

२. वे-ग्रं -स्वमर्थं ।

३. गुज,वे-ग्रं प्रत्याययति -प्र ।

४. श्रीनि टिप्पण्यनुसारेण टीकापाठो आदृतः । गुज,वे-ग्रं । प्र.पाठे तु– वाक्यानुसन्धाने भारतस्य कल्पतरुरूपतां प्रतिपादयद् भारतस्य सर्वपुरुषार्थहेतुतां गमयति इति ।

भारततात्पर्ये ।। **स्तुतित्वोपपत्तय इति** ।। भारतमाहात्म्योक्तिपरत्वसिद्धय इत्यर्थः ।। **विराटेत्येतदिति** ।। गमयतीत्यन्वयः ।। **पूर्वोत्तरेति** ।। भारत एव तत्पूर्वोत्तरवाक्येत्यर्थः ।।

**भाष्यम् — कथञ्चान्यस्य कर्तुं न शक्यते ।।**

**( 'अन्यस्य कर्तुम्' इति प्रयोगस्य साधुत्वम् )**

**प्रमेयदीपिका**

'को ह्यन्यः' इति पुराणवाक्यान्यथानुपपत्त्या इत्युक्तम् । कीदृशी साऽन्यथानुपपत्तिः? इत्यत आह - **कथं चेति** ।। 'अन्यथा' इति च वर्तते । **'अन्यस्य'**इति व्यत्ययेन तृतीयार्थे षष्ठी ।। यद्वा **कर्तुमिति** कृद्योगे कर्तरी । 'न लोकाव्यय'(**पा.सू.२.३.६९**) इति प्रतिषेधश्च 'नञा निर्दिष्टमनित्यम्' इत्यनित्यः । अत एव 'तोसुन्कसुनोः योगे षष्ठी दृश्यते' । 'सूर्यस्योदेतोः' 'क्रूरस्य विसृपः' इति ।।

**'को ह्यन्य'** इति वाक्ये तावद्भारतस्य नारायणादन्येनकर्तुमशक्यत्वमुच्यते । तत्कथ-मन्यथा केवलेश्वरज्ञानदृष्टार्थयुक्तत्वाभावे युज्यते? तथाविधानामन्यैः कर्तुमशक्यत्वस्या-दर्शनादिति ।।

**भावदीपः**

**कृद्योगे कर्तरीति** ।। 'षष्ठी' इत्यनुषज्यते । 'कर्तुम्' [१]इति तुमुन्प्रत्ययस्य तिङ्प्रत्ययभिन्नतया 'कृदतिङ्' (**पा.सू.३.१.९३**) इति कृत्सञ्ज्ञायाम्,'कर्तृकर्मणोः कृति' (**पा.सू.२.३.६५**) इति सूत्रेण [२]कृद्योगे कर्तरि कर्मणि च षष्ठी भवतीत्युक्तेरिति भावः।।

ननु 'कर्तुम्' इत्यस्याव्ययत्वात्, अव्यययोगे 'न लोकाव्ययनिष्ठाखलर्थतृणाम्' (**पा.सू. २.३.६९**) इति द्वितीयाध्यायीयतृतीयपादीयसूत्रेण षष्ठीनिषेधात् कथमेवमुक्तिः[३]? इत्यत आह– **न लोकाव्ययेति** ।। 'इदमस्थमुः'(**पा.सू.५.३.२४**) इत्यत्र थमुप्रत्यये मकारान्ततया वक्तव्ये उकारान्ततयोच्चारणं 'हलन्त्यम्'(**पा.सू.१.३.३**) इति मकारस्य लोपनिवृत्त्यर्थम् । 'न विभक्तौ तु स्माः'(**पा.सू.१.३.४**) इति सूत्रेण मकारलोपाप्रसक्तेरुकारोऽत्र व्यर्थ एव । अथापि क्रियते, तेन ज्ञायते 'न विभक्तौ तुस्माः' इति 'नञा निर्दिष्टमनित्यम्' इति थमुप्रत्ययोकारेण नञा निर्दिष्टस्यानित्यताज्ञापनादिह 'न लोक' इति न निषेध इति भावः ।। **अत एव** ।। षष्ठी-

१. सो पाठः । इत्यस्य- इति कां-मं ।
२. अत्र 'षष्ठी । कृद्योगे' इत्यधिकं सो मातृकायाम ।
३. कथमेवमुक्तम् इति मं, सो पाठे ।

प्रतिषेधस्यानित्यत्वादेवेत्यर्थः ।। एवं च सति, उक्तप्रतिषेधे 'कमेर्भाषायामप्रतिषेधः' 'दास्याः कामुकः' 'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः' इति च वार्तिकद्वयं नारम्भणीयम् । अनित्यत्वादेवोपपत्तेः वृत्तौ तद्वार्तिकोक्तिः स्पष्टार्थेति भावः ।।

न्यासे च 'बहुलग्रहणादेवैवमादावप्रतिषेधः सिद्धः' इति वार्तिकमेतन्नारभ्यमित्युक्तम् ।। प्रथमाध्यायाद्यपादे 'अव्ययीभावश्च' **(पा.सू.१.१.४१)** इति सूत्रवृत्तौ चाव्ययीभावस्य स्वरादौ पाठेन 'स्वरादिनिपातमव्ययम्' **(पा.सू. १.१.३७)** इत्येवाव्ययत्वपूर्तौ[१] पुनरेतत् सूत्रं नारभ्यम्। अथापि क्रियते । तेन ज्ञायतेऽव्ययकार्यमनित्यमिति । तेन 'तोसुन्-कसुनोरप्रतिषेधः' इति वार्तिकं नारभ्यमित्युक्तम् ।। **उदेतोरिति ।।** भावलक्षणे 'स्थेण्-कृञ्-वदि-चरि-हु-तमि-जनिभ्यस्तोसुन्' **(पा.सू.३.४.१७)** इति तृतीयान्त्यपादीयसूत्रेण उत्पूर्वस्य 'इण् गतौ' **(पा.धा.१०४५)** इत्यस्य तुमर्थे तोसुन् प्रत्ययः ।। **विसृप इति ।।** सृपि 'तृदोः कसुन्' इति सृपेः कसुन्प्रत्ययः ।।

**भाष्यम् — ग्रन्थान्तरगतत्वाच्च नाविद्यमानस्तुतिः । नच कर्तुरेव । इतरत्रापि साम्यात् ।**

**प्रमेयदीपिका**

नन्वन्यैः कर्तुमशक्यत्वमिति हेतुरसिद्धः । **को ह्यन्यः** इति वाक्यस्याविद्यमानार्थ-स्तुतित्वोपपत्तेरित्यत आह– **ग्रन्थान्तरेति ।। 'अविद्यमान'** इत्यतः परमर्थशब्दोऽध्याहार्यः। 'इदं वाक्यम्' इति शेषः । यद्वा स्तुतिः गुणोत्कर्षः । 'अत्रोच्यते' इति शेषः । [२]अत्र नार्थशब्दाध्याहारः । अनेन प्रागुक्तस्य ग्रन्थान्तरेति विशेषणस्य प्रयोजनमुक्तम् । इयं च सम्भावनायुक्तिः । निश्चययुक्तिस्तु चशब्दसूचिता बाधकरहितत्वादिः ।।

ननु [३]भवेदेतद्यद्यत्र भारतस्यान्येन कर्तुमशक्यत्वलक्षणा स्तुतिरुच्येत । न चैवम् ।

'कृष्णद्वैपायनं व्यासं विद्धि नारायणं परम्'

इति भारतस्य कर्तुर्व्यासस्य नारायणत्वलक्षणायाः स्तुतेरुपक्रमात् ।। उत्तरत्र तस्यैवा-र्थस्योपपादनादित्यत आह– **नचेति।। कर्तुरेव** अत्र स्तुतिरुच्यत इति च **न** वाच्यम् । किन्तु भारतस्यापि । कथम्? इति चेत्- अत्र ह्यनुमानेन व्यासस्य नारायणत्वं साध्यते ।।

---

१. सिद्धौ -इति सोपाठः।

२. वे, गुज,वे-ग्रं । 'नात्रार्थ–प्र.पा ।

३. 'भवेद्यद्यत्र' -गुज,वे-ग्रं ।

तत्र **'कृष्णद्वैपायनम्'** इति पूर्वार्धः प्रतिज्ञारूपः । **'को ह्यन्यः'** इति द्वितीयार्धो[१] व्यतिरेकव्याप्तेः प्रतिपादकः । अनुक्तो हेतुः व्याप्तिवचनसामर्थ्यादूह्यः । [२]अत्र न तावद्ग्रन्थकृत्त्वं हेतुः । कुतः[३] ? इत्यत आह– **इतरत्रापीति** ।। ग्रन्थकृत्त्वस्य नारायणादितरत्रापि साम्यादनैकान्त्यप्रसङ्गात् । नापि भारतकृत्त्वम् । कुतः? इत्यत आह– **इतरत्रापीति**।। [४]ग्रन्थव्यक्तिविशेषकृत्त्वेन नारायणत्वसाधनस्य **इतरत्र कालिदासादौ अपि साम्यात्** अतिप्रसङ्गात्[५]। तस्मान्नारायणादन्येन कर्तुमशक्यस्य कार्यस्य कर्तृत्वमत्र[६] हेतुः । न चासावसिद्धः । भारतस्य तथात्वादित्यूह्यम् । व्याप्तिवाक्यं च तदभिप्रायं मन्तव्यम् । तथाच कथमत्र भारतस्य स्तुतिर्नावगम्यते । श्रुत्या अनवगमेऽप्यर्थादवगमादिति ।।

### भावदीपः

शब्दानुपपत्तिं निरस्य वाक्यार्थमाह– **को ह्यन्य इतीति** ।। **'अन्यथा'** इत्यनुवृत्तस्यानुवादः– **अन्यथेति** ।। तद्व्याख्या– **केवलेत्यादि**।। **तथाविधानां** केवलेश्वरदृष्टार्थकत्वहीनानां मन्वादिषु दर्शनादित्यर्थः ।। **बाधकरहितत्वादिरिति** ।। स्वतः प्रमाणवाक्यप्रमितत्व-मादिपदार्थः ।। **अत्र हीति** ।। श्लोक इत्यर्थः ।। **प्रतिज्ञारूप इति** ।। व्यासो नारायणो भवितुमर्हतीत्येवं रूपः ।। **व्यतिरेकेति** ।। 'यत्र पुण्डरीकाक्षपदोक्तनारायणत्वाभावः तत्र महाभारतकृत्त्वाभावः' इति प्रतीतेरिति भावः ।। **तदभिप्रायमिति** ।। यत्र पुण्डरीकाक्षत्वाभावः तत्र पुण्डरीकाक्षादन्येन अशक्यकार्यकर्तृत्वाभावः यथा चैत्रादावित्येतदभिप्रायमित्यर्थः ।। **अर्थादिति** ।। भारतस्योत्तमत्वाभावे । तत्कर्तृत्वेन व्यासस्य पुण्डरीकाक्षत्वेन स्तुत्ययोगात् तदन्यथानुपपत्तिबलादित्यर्थः ।।

### ( गीता महाभारतादप्यधिका )

**भाष्यम् — तत्र च वासुदेवार्जुनसंवादरूपां सर्वभारतार्थसङ्ग्रहां भारत-पारिजातमधुभूतां गीतामुपनिबबन्ध ।।**

---

१. गुज,वे-ग्रं । प्र -'इत्युत्तरार्धो'- ।
२. अत्र-श्रीनि-टि । भा.र.को -'तत्र '।
३. गुज,वे-ग्रं इत आरभ्य -'भारतकृत्त्वम् 'इतिपर्यन्तं नास्ति ।
४. भा.र.को.। गुज,वे-ग्रं -'व्यक्ति' इति नास्ति ।
५. गुज । 'अनैकान्त्यप्रसङ्गात् 'इति प्र.वे- पाठो टिप्पणद्वयाननुगुणः ।
६. वे,गुज,वे-ग्रं । 'कर्तृत्वमेव'-प्र ।

### प्रमेयदीपिका

अस्त्वेवंविधं भारतम् । व्याचिख्यासितायास्तु गीतायाः किमायातम्? इत्यत आह - **तत्र चेति** ।। **तत्र** एवंविधप्रमाण्याद्युपेते भारते । **गीतामुपनिवबन्ध** व्यासः ।।

किमियं गीतायाः प्रामाण्यादेः सम्भावना? उत निश्चययुक्तिः? न द्वितीयः । तथात्वे कलिङ्गोपदेशादेरपि तत्प्रसङ्गात् । अनुवादोऽसाविति चेत् । अयमपि तथैव । आद्ये निश्चायकं वाच्यमित्यत उक्तम् – **वासुदेवेति** ।। संवादं रूपयतीति **संवादरूपा** । तथाऽपि भारतैकदेशान्तरपरिहारेण अस्या एव[१] व्याख्याने को हेतुः? इत्यत आह– **सर्वेति** ।। सर्वभारतार्थस्य सङ्ग्रहो यस्यामिति गमकत्वाद् व्यधिकरणो [२]बहुव्रीहिः । एतद्व्याख्याने सर्वमपि भारतं व्याख्यातप्रायं भवतीति भावः । नैतावता भारतसमा गीता । किन्तु ततोऽधिका चेत्याशयवानाह[३] - **भारतेति** ।।

### भावदीपः

भारतस्य प्रामाण्यादौ प्रमाणोक्तिः– **किमियमिति** ।। प्रामाण्याद्युपेतभारतमध्योपनिबद्धत्वोक्तिरित्यर्थः ।। **अयमपीति** ।। गीतोपदेशोऽपि ।। **रूपयति** प्रकाशयतीत्यर्थः ।। **गमकत्वादिति** ।। एवंरूपार्थस्य बोधने शक्तत्वात्तादृशस्थले सर्वैरपि समासोपगमादिति भावः ।।

**( गीताशास्त्रस्यानुबन्धचतुष्टयनिरूपणम् )**

**भाष्यम् —** **तच्चोक्तम्–**

**'भारतं सर्वशास्त्रेषु भारते गीतिका वरा ।**

**विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद् द्वयम् ।।'**

**इति महाकौर्मे ।**

### प्रमेयदीपिका

कुत एतत्? इत्यत आह– **तच्चे**[४]ति ।। **सर्वशास्त्रेषु** वरम् । तदेवाप्तिमूलत्वादिना

---

१. बे, गुज, वे-ग्रं, -प्र-पाठे अधिकं गीतायाः इति।

२. गुज,वे-ग्रं ,वे । प्र-करणबहु ।

३. बे, गुज,वे-ग्रं । प्र-आशयेनाह ।

४. तच्चोक्तमिति- बे, गुज,वे-ग्रं ।

प्रामाण्यात्, धर्मादिप्रतिपादनेन सविषयत्वात्, मोक्षार्थत्वेन सप्रयोजनत्वात्,[1]सदधिकारित्वात्, दुर्गमार्थत्वाच्च व्याख्येया गीतेति स्थितम् । तत्र ज्ञानमेव केवलं मोक्षसाधनम् । धर्मस्तु ज्ञानात् प्रागनुष्ठितोऽन्तःकरणशुद्ध्यादिद्वारा ज्ञानं जनयन् मोक्षसाधनम् । ज्ञानोत्तरस्तु मुक्तावानन्दोत्कर्ष[2]हेतुरित्येवं विषयप्रयोजनयोः सम्बन्धोऽभिहितः ॥

### भावदीपः

**आप्तिमूलत्वादिनेति** ॥ वेदसंवाद आदिपदार्थः ॥ स्वरूपवेदने पर्याप्त इत्यत्र दोषमाह– **ज्ञानात् प्रागनुष्ठित इति** ॥ **धर्म** इति पूर्वेणान्वयः॥

### ( गीतोक्तधर्मानुष्ठानं मुक्तिहेतुः )

**भाष्यम् — 'स हि धर्मस्सुपर्याप्तो ब्रह्मणः पदवेदने'** (म.भा.१३.१६.१२.) इत्यादि च ।

### प्रमेयदीपिका

**केचित्तु**[3] 'ज्ञानोत्तरकालं धर्माद्यनुष्ठानमेव नास्ति' इति ब्रुवते। **अन्ये**[4] तु 'ज्ञानकर्मसमुच्चयसाध्यत्वान्मोक्षस्य तत्प्रतिपादनाय गीतारम्भो न धर्मादिप्रतिपादनार्थम् । तदर्थानां मन्वादिधर्मशास्त्राणां सनकादियोगशास्त्राणां च प्रतिकालं विद्यमानत्वात्' इत्याचक्षते । तदुभयं निराकर्तुमाह – **स हीति** । **सः** गीतोक्तः **धर्मः ब्रह्मणः** स्वरूपज्ञाने **सुपर्याप्तः** ज्ञानात् प्रागनुष्ठितः । **ब्रह्मणः पदवेदने** जातेऽनुष्ठितस्तु **सुपर्याप्तः** सुपर्याप्तमुक्तिहेतुरित्यनुगीतोपक्रमे भगवतैवोक्तम् । उदाहरिष्यन्ते चात्र स्पष्टार्थानि वाक्यानि ।

न च गीतायां तथाविधमेकमपि वाक्यं दृश्यते । तथा च वक्ष्यते । मन्वादिशास्त्राणां विद्यमानत्वेन धर्मादेरप्रतिपाद्यत्वे समुच्चयोऽपि न प्रतिपाद्यः । श्रुत्यादिप्रतिपाद्यत्वाभ्युपगमात् । [5]तत्र च न स्फुटम्, अत्र च स्फुटप्रतिपादनमिति चेत् न । समम् । यथोक्तम्–

१. वे-ग्रं -साधिकारित्वात् ।
२. गुज,वे-ग्रं, श्रीनि-टि । भा.र.को -आनन्दोद्रेक ।
३. **मायावादिनः** ।
४. **ज्ञानकर्मसमुच्चयवादी-भास्करः** ।
५. **मातृकामात्रे इदमुपलभ्यते । अवश्यं चैवमेवेदम् । द्र-श्रीनि-टि** । गुज,वे-ग्रं पाठे'तत्र च न स्फुटं प्रतिपादनम् इति चेन्न' इति दृश्यते ।

**वेदार्थाज्ञानाच्चे**ति। तस्माद्यत्किञ्चिदेतदित्युक्तमेव विषयादिकमिति ।।

**भावदीपः**

तस्यैव वाक्यस्य योजनान्तरमाह– **ब्रह्मणः पदवेदने जात इति** ।। पूर्वयोजनायां जनयितव्य इत्यर्थ इति भावः ।। **उदाहरिष्यत इति** ।। तृतीयेऽध्याये **'कर्मणैव'**(३.२०) इत्यादिश्लोकव्याख्यावसरे **'कर्मणा सह'** इत्यादिना, **'अत एव समुच्चयनियमो[१] निराकृतः'** (३.३१) इत्यन्तेन ।। **तथाविधम्** ।। परोक्तार्थकम् ।। **वक्ष्यत इति** ।। उक्तस्थल एवेति ज्ञेयम् ।।

परोक्ते स्वयं दोषमाह– **मन्वादीति** ।। **समुच्चय इति** ।। 'परेण' इति च योज्यम्।। [२]कुतः? इत्यत आह– **श्रुत्यादीति** ।। **सममिति** ।। गीतायामपि न स्पष्टमित्यर्थः । समुच्चयो वेदे नोच्यते, किन्तु स्वोक्तरीत्या एव धर्मस्योपयोग उच्यत इत्यत्र सम्मतिमाह– **यथोक्तमिति** ।। अस्मदुक्तरीत्या वेदार्थाज्ञानादित्यर्थ इति भावः ।।

**( ज्ञानिनो अर्जुनस्येषन्मोहप्रकारनिरूपणम् )**

**भाष्यम्— तत्र सेनयोर्मध्ये बान्धवादिमोहजालसंवृतं विषीदन्तमर्जुनं भगवान् उवाच।।[३]**

**प्रमेयदीपिका**

इदानीं गीताव्याख्यानावसरे प्राप्ते **'धर्मक्षेत्रे'** (१.१) इत्यारभ्य **'अशोच्यानन्वशोचस्त्वम्'**(२.११) इत्यतः प्राक्तनस्य ग्रन्थस्यातिरोहितार्थत्वात् तात्पर्यमाह– **तत्रेति** ।। तत्र गीतायाम्[४]। 'कैश्चन श्लोकैरिदमुच्यते' इति शेषः ।।

१. नियमोपि इति अपिपदं सो-कां मातृकासु अधिकं दृश्यते । परन्तु भाष्ये अपिर्नास्ति ।

२. इदं वाक्यं सो, कां, मं मातृकासु मन्वादीति इत्यनन्तरमेव पठ्यते । लेखकप्रमादः स्याद्वा ।

३. **'व्यवसितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या ।**
**कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु'** ।। (भाग.१.९.४२)
**विजयध्वजीये- 'यः परमः वीरस्वर्गं प्राप्तुं युद्धाय व्यवस्थितयोः निश्चितयोः पृतनयोः सेनयोः मुखं भीष्मादिशरीरं निरीक्ष्य 'हत्वार्थकामांस्तु गुरूनिहैव' इति दोषबुद्ध्या 'न योत्स्ये' इत्युक्त्वा स्वजनहननाद्विमुखस्य निवृत्तस्यार्जुनस्य कुमतिं दुष्टनिग्रहशिष्टपरिपालनलक्षणव्यापारबुद्धेः विपरीतबुद्धिं 'अशोच्यानन्वशोचस्त्वम्' इत्यादिरूपया आत्मविद्यया अहरत् 'करिष्ये वचनं तव' इति दुष्टनिग्रहलक्षणे धर्मे बुद्धिं कारितवान्' इत्यादि** ।।

४. भा.र.को । गीतिकायाम् -वे-ग्रं ।

नन्वत्र न[१] धर्मो नापि तत्वं प्रतिपाद्यते । तत्कुतोऽस्य गीतायामनुप्रवेशः? मैवम् । भगवतोऽर्जुनबोधने प्रसक्तिं दर्शयतोऽस्य ग्रन्थस्य तादर्थ्यात्तत्र प्रवेशोपपत्तेः । बान्धवादिविषयो मोहः- 'ममैते, अहमेतेषाम्, एते च मन्निमित्तं नङ्क्ष्यन्ति, कथमेतैर्विनाऽहं भवेयम्?,पापं च मे भविष्यति, जयश्च सन्दिग्धः' इत्यादिरूपो मिथ्याप्रत्ययो बान्धवादिमोहः । तेषु स्नेहो वा। स जालमिव, तेन संवृतम् । तत एव विषीदन्तम् । विषादो नाम मोहनिमित्ताच्छोकाद् यन्मनोदौर्बल्यं यस्मिन् सति सर्वव्यापारोपरमो भवति ।।

नन्विदानीमेव कुतोऽर्जुनस्य मोह[२]समुत्पत्तिः ? नहि 'एते बान्धवादयः' इत्यादिकं प्राङ् नाज्ञासीत् । येन युद्धाय महान्तमुद्योगमकार्षीदित्यत उक्तम्– सेनयोरिति ।। महापकार-स्मरणेनानुवर्तमानोऽपि कोपो मृदुमनसां बान्धवादिमृतिकाले[३] निवर्तते । स्नेहश्चोत्पद्यते। ततो मोह इति प्रसिद्धमेवेति भावः । अर्जुनस्य ज्ञानित्वान्मोहजालसंवृतत्व[४]मीषदेवेति मन्तव्यम् ।।

**भावदीपः**

**'भगवानुवाच'** इत्यनन्तरं शेषमाह– **कैश्चनेत्यादिना** ।। **'दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्'** (१.२८) इत्यादि श्लोकतात्पर्यमनुवदति– **ममैत इत्यादिना** ।।

**।। इति श्रीसुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रतीर्थविरचिते**

**श्रीमद्गीताभाष्यटीकाप्रमेयदीपिकाभावदीपे उपोद्घातः ।।**

---

१. वे-ग्रं - नञ् नास्ति ।
२. बे, गुज,वे-ग्रं । प्र- मोहः समुत्पतितः ।
३. वे-ग्रं-बान्धवादिष्वन्तकाले ।
४. वे-ग्रं- । प्र -संवृतत्वादिकम् ।

# ।। अथ श्रीमद्भगवद्गीतायां प्रथमोऽध्यायः ।।

( धृतराष्ट्रस्य युद्धविषयकप्रश्नः )

**धृतराष्ट्र उवाच—**

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ।। १ ।।**

श्रीपाङ्गीश्रीनिवासाचार्यविरचिता गीतात्रिविधार्थविवृतिः

श्रीनारदाभिधगुरोर्हृदयस्थपूर्ण-
प्रज्ञान्तराङ्गरमो गजवैरिवक्त्रः ।
मत्कामितं प्रवितरन्नमितो यदर्थं
प्रत्यूहहा जयति तात्त्विकमुख्ययन्ता ।। १ ।।

श्रीगीताप्रथमाध्यायमध्यात्मादौ विपश्चितुम् ।
उद्यतस्यापि मे बाल्यं क्षन्तुमर्हन्ति सूरयः ।। २ ।।

नन्विदमुद्यमनमयुक्तम् । अस्य व्याख्येयग्रन्थस्यैवानारम्भणीयत्वात् । तथाहि- अनारम्भणीयनिमित्तं तु द्वेधा । अप्रामाण्यम्, अनुबन्धवैधुर्यं, चेति । अप्रामाण्यनिमित्तमपि त्रेधा। अनाप्तवचनम्, श्रुतिविरोधो, युक्तिविरोधश्चेति ।। अनाप्तत्वहेतुरपि त्रिविधः, वक्तुः श्रोतुः प्रसङ्गस्य, च अनानुकूल्यम् । वक्तुरनानकूल्यमपि त्रिविधम् । विवक्षितार्थतत्वाज्ञानम्, करणापटुत्वम्, विवक्षाभावश्चेति ।।

ततश्चायं ग्रन्थः पौरुषेयः, अपौरुषेयो वा । नाद्यः । ऋगादीनामेवापौरुषेयत्वेन तदितरस्य तदभावात् । न च ऋगादिरेवायम् । तत्रानन्तर्भावात् । द्वितीये तु कोस्य? वक्ता व्यास इति चेत्- तस्य जननादिना अस्मत्सादृश्येन तत्वज्ञानपटुकरणत्वाभावादननुकूलत्वम् । न च भगवानेव व्यासः, जननादिमत्वात्, कृतकृत्यस्य च तस्य प्रयोजनाभावाद् विवक्षाशून्यत्वेनाननुकूलत्वं सुस्थमेव । एवं त्रिविधस्यापि वक्त्रानुकूल्यस्याभावाद्वक्तुर्व्यासस्यानाप्तत्वमेव ।।

श्रोत्रननुकूलत्वेनापि तत् । तथाहि - श्रोत्रानुकूल्यमपि द्विविधम् । तत्वज्ञानयोग्यता, वक्तृप्रीतिविषयता चेति । तत्र इह किमस्मदादीनां श्रोतृत्वं, ब्रह्मादीनां वा । नाद्यः, विषयैककामत्वेनोभयोरप्यभावात् । न द्वितीयः । तेषां स्वतः सर्वज्ञत्वेनैव श्रवणायोगात् श्रवणानादरेणैव वक्तृप्रीतिविषयताया अप्ययोगात् सुस्थमनाप्तत्वम् । प्रसङ्गविरहेणापि तत् । प्रसङ्गो नाम श्रोतृप्रयोजनोद्देशः । तत्र विषयापेक्षाणामस्मदादीनां श्रोतृणां नहि मोक्षादिप्रयोजनम्।। प्रसङ्गविरहेणापि ततः । प्रसङ्गो नाम श्रोतृप्रयोजनोद्देशः । तत्र विषयापेक्षिणामस्मदादीनां श्रोतृणां नहि मोक्षादिप्रयोजनम्, नाप्यनेन विषयलाभः । ब्रह्मादीनां तु देवत्वप्राप्त्यैव तदधिकान्यस्य प्रयोजनस्याभावः । एवं त्रिविधस्यापि आप्तवाक्यनिमित्तस्याभावादप्रामाण्यम् ।।

श्रुतिविरोधी चायम् । तत्र **'हिरण्यगर्भः समवर्तताग्रे'** इति ब्रह्मणोऽग्रे विद्यमानत्वकथनेऽपि, अत्र **'अहमादिश्च भूतानाम्'** इति भगवदुक्तेः । तथैव युक्तिविरोधी । एतद्ग्रन्थोक्तं नाचरणीयम्, दुःखसाध्यत्वात्, अग्निस्पर्शवदित्याद्युक्त्या तद्विरुद्धाचरणे सुखोपलम्भात् ।। एवं श्रुतियुक्तिविरोधानाप्तवाक्यत्वसम्भवेन सिद्धादप्रामाण्याद् अनारम्भणीयत्वम् ।।

अनुबन्धवैधुर्यादपि तत् । विषयप्रयोजनाधिकारिसम्बन्धभेदेनानुबन्धस्यापि चातुर्विध्यम्। तत्र नात्र विषयः । अस्त्यध्यात्मज्ञानमिति चेत्, ज्ञातृज्ञेययोर्भेदेन ज्ञानं, किं वा अभेदे । नाद्यः । भेदस्यैवाप्रामाण्यात् । नान्त्यः । ज्ञातृज्ञेययोरेकत्वे ज्ञातुर्ज्ञेयत्वेन ज्ञेयस्य च ज्ञातृत्वेन विद्यमानत्वप्रसक्त्या ज्ञानायोगात् । आत्मनः स्वप्रकाशतया नित्यसिद्धत्वाच्च । सन्दिग्धो हि विषयो भवति । आत्मनस्त्वहमित्यनुभवेनैव वेद्यतया शास्त्रस्य सिद्धसाधनतापत्तेश्च ।।

नापि प्रयोजनम् । किमैहिकं प्रयोजनं आमुष्मिकं वा । नाद्यः । अधीतेप्यस्मिन् कामोपलम्भाभावात् । न द्वितीयः । आमुष्मिकस्यैवाभावात् । भावे वा गीतापाठेनैव मोक्षगन्तुरश्रवणात् । विषयप्रयोजनाभावादधिकार्यभावः । उभयाभावादेव सम्बन्धाभावोपि । एवं चतुर्विधानुबन्धशून्यत्वेन चानारम्भणीयत्वमिति ।।

मैवम् । प्रामाण्यसद्भावात् । यत्तु प्रामाण्यकारणवक्त्रानुकूल्यनिरासाय जननादिहेतुना व्यासस्य नारायणत्वाभावः साधितः । तदसाधु ।

**'स्वयं नारायणो देवो ब्रह्मरुद्रेन्द्रपूर्वकैः ।**
**अर्थितो व्यासतां प्राप्य केवलं तत्वनिर्णयम् ।**

**चकारपश्चमं वेदं महाभारतसञ्ज्ञकम्'** इत्युक्तेः ।

नचागमानुकूल्यं विना केवलानुमानमर्थसाधकम् । सर्वत्र कर्तुं सुशकत्वात् । तदुक्तम्-

**'सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा ।**
**तस्मान्न सा शक्तिमती विनाऽऽगममुदीक्षितुम्'** इति वाराहे ।

जन्मादिप्रदर्शनं तु केवलासज्जनमोहनाय ।

**'अजातो जातवद्विष्णुरमृतो मृतवत्तथा ।**
**मायया दर्शयेन्नित्यमज्ञानां मोहनाय च ।।'** इति ब्राह्मे ।

यो हि सर्वज्ञकल्पानां ब्रह्मादीनां तत्वोपदेष्टा स कथमतत्वज्ञः।

**'ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।**
**ज्ञानं संस्थाप्य भगवान्क्रीडते पुरुषोत्तमः'** इति स्कान्दे ।।

यश्च बह्वागमप्रणेता स कथमपटुकरणो भवेत् ।

**'ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च ।**
**अन्यावताररूपैश्च वेदानुक्तार्थभूषितम् ।**
**भारतं पश्चरात्रं च मूलरामायणं तथा ।**
**पुराणं भागवतं चेति संम्भिन्नः शास्त्रपुङ्गवः'** इति नारायणाष्टाक्षरकल्पे ।।

**'उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम्'** इति स्कान्दे च ।।

यच्च कृतकृत्यतया प्रयोजनाभावेन विवक्षाभावसाधनं तदप्यनुचितम् । मास्तु स्वार्थं प्रयोजनम् तथापि परप्रयोजनार्थं विवक्षाभावसम्भवात् । दृश्यन्ते हि केवलं कृपापारवश्येन परोपकाराय प्रवृत्ताः । एवं त्रिविधस्यापि वक्त्रानुकूल्यस्य सत्वात्, व्यास्यानाप्तत्वाभावः ।।

यच्च श्रोत्रानुकूल्याभावसाधनं तदप्यनुचितम् । श्रोतारस्तावद्ब्रह्मादयः । न च तेषां सार्वज्ञेन श्रवणायोगः, ईश्वरविषये सार्वज्ञ्याभावात् । तथोक्तं वायुपुराणे-

**'सर्ववेदेषु ये चोक्ता गुणा विष्णोः सुमङ्गलाः ।**
**तानेव भगवान्ब्रह्मा वेत्ति लक्ष्मीस्ततोऽधिकान् ।**
**अज्ञाताश्च तथा लक्ष्म्या कोटिशः सन्ति ते गुणाः'** इति ।।

अतः श्रवणानादराभावः । ब्रह्मणो ज्ञानिश्रेष्ठत्वं चोक्तम् ।

**'प्रायो ब्रह्मणो नाप्रतिभासितम्'** इति तत्वप्रकाशिकायाम् ।

**'अहं ज्ञानिप्रियो नित्यम्'** इति वक्ष्यति ।

अतो न श्रोत्रानुकूल्याभावः ।। यच्च प्रसङ्गाभावसाधनार्थं देवत्वप्राप्तिरूपहेतुना ब्रह्मादीनां देवत्वाधिकान्यप्रयोजनाभाव उक्तः सोऽनुचितः । देवत्वदपि मोक्षस्याधिक्यात् । देवानां भयदुःखादिकं दृष्टम् ।

**'भीषास्माद्वातः पवते'** ।

**'यस्माद्बिभेम्यहमपि द्विपरार्धाधंधिष्ण्य'** इत्यादि श्रुतिस्मृतिभ्यः ।

मोक्षे तु तदभावात् ।

**'नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित् ।**

**कुत एव तु दुःखं स्यात्सुखमेव सदोदितम्'** इति नारायणतन्त्रे ।

तस्माद्देवत्वसकाशान्मोक्षस्याधिक्यसद्भावेन प्रसङ्गानुकूल्यस्याभावाभावात् अप्रामाण्याभावः ।। ननु वक्त्राद्यानुकूल्येन अप्रामाण्याभावेऽपि विप्रलिप्सया किं न स्यादिति चेन्न । विप्रलिप्सायाः श्रोतृप्रसङ्गाननुकूल्यैकनिबन्धनत्वात् तदभावेनाभावात् ।।

यच्चोक्तं 'श्रुतिविरोधि' इति तदप्यसत् । नहि 'हिरण्यगर्भः समवर्तताग्रे' 'अहमादिश्च भूतानाम्' इति वाक्ययोर्विरोधः । भूताग्रस्थितब्रह्मणोऽप्यग्रे हरेर्विद्यमानत्वात् ।

**'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः'** इति श्रुतिः ।

**'यो ब्रह्माणं विदधाति पूर्वम्'** इति च ।

स्वेतरभूताग्र इति श्रुत्यर्थः । ब्रह्मादिभूतानामिति गीतार्थः ।।

यच्च 'युक्तिविरोधि' इत्युक्तं, तदसम्यक् । न हि दुःखसाध्यत्वेनैतद्ग्रन्थोक्तं नाचरणीयम्। परिणामे सुखोपलम्भात् । न च तद्विरुद्धाचरणेन सुखोपलम्भः । तस्याग्रिमत्वेन राजसत्वात्। राजसस्य च सात्विकाधमत्वात् । तद्वक्ष्यति च-

**'यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**

**तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ।**

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**

**परिणामे विषमिव तत्सुखं राजसं स्मृतम्'** इति

**'पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ।**

**तमसस्तु रजस्तस्मात्सत्वं यद् ब्रह्मदर्शनम्'** इति भागवते ।।

एवं श्रुतियुक्तिविरोधानाप्तवाक्यत्वासम्भवेनाप्रामाण्याभावादनारम्भणीयत्वाभावः ।

यच्चानुबन्धवैधुर्यसाधनाय विषयाभावसादने 'अध्यात्मज्ञानं किं ज्ञातृज्ञेययोर्भेदेनोत अभेदेनेति' विकल्प्य पृष्ठम् । तत्र भेदेनेति वदामः । न च तस्याप्रामाण्यम् ।

**'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा**

**सत्यं भिदा मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः'** इति पैङ्गिश्रुतेः ।।

**'आत्मा हि परमः स्वतन्त्रोऽधिगुणो**

**जीवोऽल्पशकितरस्वतन्त्रोऽवरः'** इति भाल्लवेयश्रुतेश्च ।

**'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् ।**

**तेन सत्येन मां देवास्त्रायन्तु सह केशवाः'** इति स्मृतेश्च ।।

यदपि प्रयोजनाभावसमर्थनाय आमुष्मिकाभावकथनं तदतिजुगुप्सितम् ।श्रुतिविरुद्धत्वात् ।

**'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः'** इति कौण्ठरव्यश्रुतिः ।

यस्तु श्रुतिं नाभ्युपैति स नास्तिकत्वादुपेक्ष्यः । प्रयोजनाभावेन समयाभावाच्च । लोकोपकाररूपं प्रयोजनमस्तीति चेन्न । तन्मते अदृष्टस्यैवाभावेनोपकारस्याप्रयोजकत्वात् ।।

यच्च गीतापाठेन मोक्षगन्तुरश्रवणमुक्तं तदज्ञाननिमित्तम्,

**'दामोदरं ततो पूज्य गीतापाठं तदग्रतः ।**

**कृत्वा तु स्वायुरनीय देहमन्ते विसृज्य च ।**

**जगाम परमं स्थानं योगिनामपि दुर्लभम्'**

इति स्कान्दोक्त्या, जडमुक्तस्य मोक्षश्रवणात् ।।

एवं विषयप्रयोजनभावेन नाधिकार्यभावः । अधिकरी चात्र नित्यानित्यवस्तुविवेकवैराग्यशमदमादिसम्पत्तिमुमुक्षावान् । तस्यैवाध्यात्मज्ञानेन मोक्षश्रवणात् । अत एव सम्बन्धभावः । अतो नोद्यमनमयुक्तमिति सिद्धम् ।।

नन्वस्यारम्भणीयत्वेऽपि सत्सु चान्येष्वस्यैव व्याख्याने किं प्रयोजनमस्ति इति चेत्, सर्वशास्त्रेभ्यो वरिष्टत्वात् । तर्हि निखिलमेव भारतं व्याख्येयं किं पुनर्गीतैव व्याख्यायते इति चेत् । भारतेऽपि गीतिकाया एव श्रैष्ट्यात् । तदुक्तम्— कौर्मे

**'भारतं सर्वशास्त्रेषु भारते गीतिका वरा'** इति ।

तथापि समग्रां गीतां विहाय प्रथमाध्यायस्यैव व्याख्यानप्रतिज्ञानं किमर्थं कृतम्? इति चेत् - समग्रगीताया आचार्यादिभिर्व्याख्यातत्वात् प्रथमाध्यायस्य तु सङ्क्षेपेण व्याख्यानात् । तेनैव निर्वाहे पुनर्व्याख्याऽनुपयुक्तेति चेन्न । यद्यपि तैर्व्याख्यातम्, तथाऽप्यध्यात्मार्थे विस्तरेण न व्याख्यातम् । एतद्व्याख्यानस्य सविस्तराध्यात्मविषयत्वात् । तर्हि तथा अव्याख्याने पूर्वेषामज्ञानप्रक्तिरिति चेन्न । जानद्भिरेव तैः प्रायोविषयित्वेन जनानामरुचिकरमिति मत्वा तादर्थ्येनाव्याख्यानात् ॥

एवमपि भवद्व्याख्यानस्याप्यरुचिकरत्वं प्राप्तमिति चेत् । अस्तु विषयिणामरुचिकरत्वं, तथापि मुमुक्षूणां रुचिकरत्वात् । अध्यात्मज्ञानस्यैव मोक्षकारणत्वात् । तैरपि तदर्थमेव व्याख्यातव्यमिति चेन्न । तेषां ते सङ्क्षेपोक्त्यैवावगच्छेयुरित्याशयात् । तथापि श्रुतपरित्यागाश्रुतकल्पनाप्रसक्तिः । कुरुपाण्डवानां प्रथमाध्याये श्रुतत्वेन अध्यात्मस्याश्रुतत्वेन च प्रसिद्धेः । मैवम् ।

**'एवमध्यात्मनिष्ठं हि भारते सर्वमुच्यते'**

इति तात्पर्यनिर्णयोदाहृतव्यासोक्तेः ।

**'द्रोणाद्या इन्द्रियाण्येव पापान्यन्ये तु सैनिकाः ।**
**पाण्डवेयाश्च पुण्यानि तेषां विष्णुर्नियोजकः'** इति च ।

स्यादेतत् । यद्ययमध्यायो गीतान्तर्भूतः, स एव नास्ति । यतो गीतोपक्रमः =

'अशोच्यानन्वशोचस्त्वम्' इत्येतस्माच्छ्लोकादेव । तत एव भाष्यारम्भाच्च । 'कै गै रै शब्द इति धातोः' 'गीतं शब्दितगानयोः' इति हैमाच्च । गीताशब्दार्थस्य पूर्वाध्याये अभावः, नह्यौपदेशिकाऽत्र भगवदुक्तिः । तस्माद्गीताप्रथमाध्यायविपश्चनमित्युक्तमयुक्तं स्यादिति ।

अत्रोच्यते । सत्यं तथापि, इयं गीता कुत्र? कदा? केन निमित्तेन? कं प्रति? केन? किमर्थमुक्ता? इति आकाङ्क्षापूरणस्याप्यावश्यकत्वात् तस्य च **'अशोच्यानन्वशोचस्त्वम्'** इत्याद्युत्तरग्रन्थेऽभावात् । अत्र **'धर्मक्षेत्रे कुरुक्षेत्रे'** इत्यनेन देशस्य, **'प्रवृत्ते शस्त्रसम्पाते**

सत्यादिना कालस्य, **'दृष्ट्वेमं स्वजनं कृष्ण'** इत्यादिना निमित्तस्य, **'एवमुक्त्वाऽर्जुनः सङ्ख्ये'** इत्यादिना श्रोतुः, **'उवाच मधुसूदनः'** इत्यादिना वक्तुः, **'अनार्यजुष्टम्'** इत्यादिना दोषनिरासरूपप्रयोजनस्य सत्वात् । अस्य ग्रन्थस्यैवाकाङ्क्षापूरकत्वसिद्ध्या नानन्तर्भूतत्वमिति सिद्धम् । अतो न कोऽपि क्षुद्रशङ्कावकाशः ।।

अथ सर्वज्ञो भगवान् वेदव्यासः स्वकृतभारतस्य महत्वेन मन्दैर्बोद्धुमशक्त्वात्तदर्थमपि तत्सारभूतार्थप्रतिपादकां गीतामुपनिबध्नन् अत्राधिकरणं सूचयितुं प्रष्टारमाह– **धृतराष्ट्र इति ।।** धृतः = अवधृतो राष्ट्रः सांसारिकोपद्रवो येन स तथा मुमुक्षुरित्यर्थः । **'राष्ट्रो स्त्री विषये च स्यादुपद्रवे'** इत्यमरः । **उवाच** = गुरुं पप्रच्छेत्यर्थः ।।

**धर्मक्षेत्र इति ।। अध्यात्मार्थे** = **'धारणाद्धर्म इत्यपि'** इत्युक्तेः । मनूप्रत्ययान्तात् 'धृञ् धारणे' इति धातोश्च । धर्मः = विष्णुः, तस्य क्षेत्रं = निवासस्थानं, तस्मिन्, 'क्षि निवासगत्योः' इत्यतष्टन् । **कुरुक्षेत्रे** । कुरुशब्दः कर्मवाची 'डुकृञ् करणे' इति धातोः, निरुक्तिबलाद् उभयत्रोकारः ।

**'वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्'** इति ।।
**'करोस्मिन् मीयत इति कर्म जीव उदाहृतः'** इत्यत्र
**'कर इति शब्दः कर्मविधिवाची'** इति गीताविवृत्युक्तेश्च ।

तस्य क्षेत्रम् = उत्पत्तिस्थानं नृशरीरमित्यर्थः । तत्रैव स्वर्गादिसाधनकर्मोद्भवात् । तत्र **समवेताः** = अधिकारित्वेन मिलिताः, संवासेन अवगता इति वा । **युयुत्सवः** = स्व-स्वोत्कर्षसिध्यर्थं मिथो योद्धुमिच्छवः । **मामकाः**, मया = ज्ञानेन, अमाः = अपकाः ज्ञानरहिता इत्यर्थः । यद्वा मया = रमाभिमन्यमानया प्रकृत्या, न मान्ति = न जानन्ति, ते ।

अथवा मया = श्रिया युक्तः अः = वासुदेव माः । **'मः शिवे मा रमायां च'**इति विश्वः। **'अकारो वासुदेवः स्यात्'** इत्येकाक्षरश्च । तं न मान्ति = न जानन्ति । 'मा ज्ञाने' इति हि धातुः । अथवा । मा = नास्ति, मः = ज्ञानं येषां ते । 'अमानोनाः प्रतिषेधे' इत्युक्तेः। सर्वत्र स्वार्थे कः । 'बन्धने मः ... प्रकीर्तितः' इत्यभिधानात् । मा = नास्ति, अमः = अबन्धः, कं = सुखं च येषां त इति वा, । अकाः = तत्वाभिमानिनोऽसुराः ।

**पाण्डवाः** पाति = रक्षतीति, पः = विष्णुः, तस्य अण्डं, तदधीनब्रह्माण्डमिति यावत्,

तत् वान्ति = जानन्ति, ते, 'वा गतिगन्धनयोः'इति धातोः । गत्यर्थानां ज्ञानार्थत्वाच्च । यद्वा, 'पडि गतौ' इत्यतः, पण्डा = ज्ञानम्, तद्विषयो विष्णुः पाण्डः, तस्माद् वं = सुखं, येषां ते तत्वाभिमानिनो देवाश्च । **किं कर्म, अकुर्वत । सञ्जय** = सम्यग्जयति, संसारमिति सञ्जयः । यद्वा, सम्यक् अप्राकृतशरीरेण, जायते = अवतरतीति, सञ्जो = विष्णुः । तं याति = जानाति, शरणं प्राप्नोतीति वा सञ्जयः । तत्सम्बुद्धौ सञ्जयेति सद्गुरुसम्बुद्धिः । **इति अध्यात्मार्थे** ।।

**अंशार्थे तु** = ।। हे **अत्रे** स्वप्नसुषुप्तिमूर्च्छारहित, देवयोनित्वात्, **हे सञ्जय** = हे तुम्बुरो, गन्धर्व, '**सञ्जयस्तुम्बरुर्नामा गन्धर्वपतिरुच्यते**' इत्यंशावतरणे, तं प्रति धृतराष्ट्रनामा गन्धर्वः पृच्छतीत्यर्थः । '**धृतराष्ट्रः पुरा प्रोक्तो गन्धर्वस्तु सनामकः**' । **पाण्डवाः** = पुण्याभिमानिनो देवाः । '**पाण्डवेयानि पुण्यानि**' इति तात्पर्यनिर्णयोक्तेः । **धर्मक्षेत्रे** = धर्मपक्षे(भूमौ) स्थिता इति शेषः। **मामकाः** = धार्तराष्ट्राः पापाभिमानिनोऽसुराः '**सर्वदोषत्मकाः परे । धार्तराष्ट्राः**' इति चोक्तेः, धृतराष्टस्य कल्याविष्टत्वात्, असुरेषु 'मामकाः' इत्युक्तिः । तच्च तात्पर्यनिर्णये प्रसिद्धमेव । ते **कुरुक्षे** = कुत्सिते रुक्षे = स्नेहरहिते च स्थाने (पक्षे) स्थिताः। **असमवेताः** असमं = अधिकं न्यूनं, यद् वं = ज्ञानं बलम् वा, तेन इताः = युक्ताः । **युयुत्सवः** = स्वाभाविकद्वेषात् योद्धुमिच्छवः सन्तः । **किं** = सदसद्वा कर्म । **अकुर्वत** = चक्रुः **इत्यंशार्थे** ।।

**प्रसिद्धार्थे- मामकाः** = मत्पुत्रा दुर्योधनादयः । **पाण्डवाः** = युधिष्ठिरादयः । **कुरुक्षेत्रे** = कुरुवंशोत्पन्नत्वात् कुरुसंज्ञयोः विचित्रवीर्यपाण्ड्वोः, क्षेत्रे = अम्बिकाअम्बालिकाख्ये, कुन्तीमाद्र्याख्ये च भार्याख्ये । **समवेताः** = समं = समानं, वं गतिरूपं जन्म इताः = प्राप्ता एव । क्षेत्रजौरसयोः कथञ्चित् कलहो भवतु, समजन्मनोस्तु कथं युद्धेच्छा इत्याशयवानाह— **धर्मक्षेत्र इति** ।। धर्मेण क्षाया = भूम्याः इ = विचित्रं त्रं = त्राणं = रक्षणं यस्मिंस्तस्मिन् राज्यविषये । **किं** = कथम् । **युयुत्सवः** = योद्धुमिच्छवः आसन्निति शेषः । तथापि मामकाः किमकुर्वत, पाण्डवाश्च किमकुर्वतेति प्रश्नः, धर्मेण क्रियमाणे भूत्राणे के धर्मं के चाधर्ममकुर्वतेति भावः ।।

**पुनरप्यध्यात्मार्थे - मामकाः 'मः शिवे मा रमायां च'** इति विश्वात्, मः = शिवः, तं आ = आत्मत्वेन माति = जानातीति मामः = सङ्करः, शिवोहमिति वक्तृत्वात्, तस्य शिष्या मामकाः, मायावादिन इत्यर्थः । कप्रत्ययः कुत्सने । **पाण्डवाः** पाण्डुः = शुक्लवर्णत्वाद्वायुः, '**उद्यद्रवि-प्रकरसन्निभम्**' इत्युक्तेः, ज्ञानशीलत्वाद्वा, 'पडिगताविति धातोः' गत्यर्थानां च ज्ञानार्थत्वात्, '**ताच्छील्यार्थादुनस्तथा**' इत्युक्तत्वाच्च, तदीया शिष्याः पाण्डवाः = वैष्णवा इत्यर्थः ।

**धर्मक्षेत्रे** । **'धर्मो धर्मविदुत्तमः'** इत्युक्तेर्धर्मो विष्णुः क्षेत्रे = क्षीयते = ज्ञायते अनेनेति 'क्षि निवासगत्योः'गत्यर्थानां च ज्ञानार्थत्वात्, ततः ष्ट्रन् , विष्णुप्रतिपादिकेत्यर्थः । **अकुरुक्षेत्रे** = अकु = अकुत्सितं = निर्दोषमित्यर्थः, 'रु शब्दे' इति धातोः, शब्दक्षेत्रं = शब्दस्थानं = वेद इत्यर्थः, **'निर्दोषः शब्द आगमः'** इत्युक्तेः, वेदे भगवदेकप्रतिपादके सतीति भावः ।

पाण्डवविशेषणपक्षे, **असमवेताः इति पदम्**, न समाः = विषयाः यस्मिन् तत्, असमं = तारतम्योपेतमित्यर्थः, तादृशं यद् वं = ज्ञानं तेन युताः = युक्ता इति ।। यद्वा = **'नास्ति नारायणसमम्'** इत्युक्तेः असमः = विष्णुः, तस्य वं = ज्ञानं, तेन, युताः = युक्ताः । अथवा **'समभेदे समीचीनः'** इत्युक्तेः, सम् = अभेदः, तद्विरुद्धः असम्भेदः, तं भेदम्, अवेताः = अवगताः = जानन्तः, अवेतम् = अवगतं ज्ञानं येषामस्तीत्यर्श आद्यच्, भेदमुद्दिश्य ज्ञानवन्त इत्यर्थः ।। **समवेताः** इति **पदेपि**, समस्य = निर्दोषब्रह्मणः 'निर्दोषं हि समं ब्रह्म' इत्युक्तेः, लक्ष्मीयुक्तस्य वा वं = ज्ञानं तेन इताः = युक्ता इति वा । **मामकविशेषणपक्षे**,समवेता इति, **समं** =सर्वं समानम् इति यद् वं = ज्ञानं तेन इताः = युक्ताः। अथवा सम् = अभेदम्, अवेताः = जानन्तः । सः = समानः, मः = महादेवः, वः = वासुदेवश्च यस्मिन्, तेन ज्ञानेनेताः = युक्ताः इति वा । समं = यथायोग्यं, वं = ज्ञानं, इतं = गतं, येभ्यस्त इति वा । अत्रापि अकारप्रश्लेषे असमः = सर्वोत्तमो विष्णुरिति यद् वं = ज्ञानं तत् सतं गतं येभ्य इति वा । एवं सन्तः **युयुत्सवः** = वाग्युद्धं कर्तुमिच्छवः **किं** = कथं वादमकुर्वत ।।

अथवा, **अकुरुक्षेत्रे** = वेदे अधिकरणे । **धर्मक्षेत्रे** = धर्माः = ज्ञानानन्दजगत्कर्तृत्वादयः तेषां क्षेत्रे = पात्रभूते भगवति विषये । **मामकाः** ,**असमवेताः** = नञर्थकाकारेण समवेताः = ज्ञातारः निर्धर्मकं भगवतं जानन्त इत्यर्थः । **पाण्डवाः**, **समवेताः** = सं = अभेदेन अवेताः = जानन्तः, भगवता तद्धर्माणां चाभेदं जानन्त इत्यर्थः । असमेवतशब्दस्योभय-विशेषणत्वे विषमज्ञानवन्त इत्यर्थः ।

अथवा **अकुरुक्षेत्रे** अकुः = अकुसिता, निर्दोषेति यावत्, या रुक् = प्रभा, तस्याः क्षेत्रे = स्थानभूते । **धर्मक्षेत्रे**= 'धर्मः = विधित्वेन वेदोक्तः, **'वेदप्रणिहितो धर्मः'** इत्युक्तेः, क्षा = भूदेवी 'क्षा' शब्दस्य वैदिकनिघण्टौ पृथिवीनामसु पाठात् । ई = लक्ष्मीः **'लक्ष्मीरीकार उच्यते'** इत्येकाक्षरकोशात्, एतत्त्रितयं त्राति = रक्षतीति, धर्मक्षेत्रः = विष्णुः, तद्विषये **युयुत्सवः** = द्वेषिणः, मामकाः समवेताः = मिलिताः भक्तिमन्तः पाण्डवा इत्यर्थः ।

१. 'धर्मविधित्वेन' इति समस्तं पूर्वं मुद्रितम् ।

यद्वा = **धर्मक्षेत्रे, अकुरुक्षेत्रे, समवे, तायुयुत्, सवः, मामकाः, पाण्डवाः, च, एव, किम्, अकुः, वत, सञ्जय**, इति पदानि ।

**धर्मक्षेत्रे** = धर्मज्ञानसाधने धर्मशास्त्र इत्यर्थः । **अकुरुक्षेत्रे** कुत्सितं = दीनमिति यावत्, रुवन्ति = शब्दं कुर्वन्ति ते कुरवः = पशवः, तेषां क्षेत्रं = क्षयः 'क्षी क्षये' इति धातोः 'ष्ट्रन्'। अकुरुक्षेत्रं न पशुक्षयो यस्मिंस्तस्मिंश्च सति । **समवे** सति सम्यग् उक्तम् अवः = अन्नं यस्मिंस्तस्मिंश्च सति । 'अवः'शब्दस्य वैदिकनिघण्टौ अन्ननामसु पाठात्, अत्रासुन्लोपो गयाशिर इतिवत्, उक्तपिष्टपशुके इति यावत् ।

**तायुयुत्** = '**तकारः कीर्तितश्चोरे मोहे युद्धे च कीर्तितः**' इत्यभिधानात्, तेन = मोहेन, आ = अद्धा, युयुत् = प्राणवियोगो यस्मिन् स तथा । 'युयु वियोगे' इति धातोः प्रकरणयोग्यतया प्राणेन सम्बन्धः, तादृशः **सवः** = यज्ञः **अकुः** = निन्दारहितः किं न? अपि तु निन्दित एव । **बत** = खेदे । पाण्डवाः वेदाधिकारिणोऽपि मामकाः अज्ञानिन एव। एवंसति कौरवाः पाण्डवाश्च विहितहिंसाया अपि निषेधं किमर्थं मिथो हिंसां चक्रुरिति प्रश्नाभिप्रायः ।।

अथवा धृतराष्ट्रः सञ्जयं प्रति युद्धार्थकल्पिता कुरुक्षेत्ररूपा भूमिर्मत्पुत्राणाम् अनेयसी इत्याशयेनाह — **धर्मेति** ।। **पाण्डवाः** '**सप्तसुप्रथमा**' इति सूत्रात् प्रथमायास्तृतीयार्थत्वेन, पाण्डवैः युयुत्सवः प्रकरणान्मत्पुत्रा इति ग्राह्यम् । कुरुक्षेत्रे धर्मक्षेत्रे धर्मक्षेत्रे इति, तत्स्थलगमनं न मत्पुत्रकृतं किन्तु देवकृतमित्याह- **मामका इति** ।। मामका एव, मा = लक्ष्मीः '**इन्दिरा लोकमाता मा**' इत्यमरः, अः = विष्णुः '**अकारः सर्ववागात्मा परब्रह्माभिधायकः**' इत्युक्तेः, मः = शिवः '**मः शिवे मा रमायां च**' इति विश्वोक्तेः, कः = ब्रह्मा, '**हिरण्यगर्भः कः प्रोक्तः**' इत्युक्तेः एते देवा एव । इदमिति शेषः, धर्मक्षेत्रप्रापणमित्यर्थः । **अकुर्वत** चक्रुः, देवकृतातिक्रमणं दुष्करमित्याशयः ।।

यद्वा, **पाण्डवाः**, **असमवे** = सम्यक् अवतिः रक्षतीति समवः, अः = वासुदेवः समवः = रक्षकः यस्मिंस्तस्मिन् **धर्मक्षेत्र** = स्वपितृस्थले **किम् अताः** = कथं सततं गताः? 'अत सातत्यगमने' इति हि धातुः, **मामकाश्च** = मत्पुत्रास्तु **अत्रे** = रक्षकरहिते, कुरुक्षेत्राख्यस्थले '**क्षः क्षेत्रे राक्षसे स्थले**' इति वररुचिकोशात् । **किम् अताः, वत** = वबयोरभेदात् **वत** = अयं खेद इत्यर्थः । **अकुः** नकुत्सितः = योग्य एव । स्वपुत्राणां नाशोन्मुखत्वाच्छत्रूणां च जयोन्मुखत्वादिति भावः ।।

यद्वा । **मामकाः** = दुर्योधनादयः, समवे = स्वभर्तृसमानं, वं = गतिः = प्रवृत्तिर्यस्य तादृशे = बद्धतृत्वादिति भावः । **धर्मक्षेत्रे** = गान्धार्याख्यधर्मपत्न्यां जाता अपीति शेषः। **ता एव** = चोरा एव । '**तकारः कीर्तितश्चोरे**' इत्येकाक्षरः । **पाण्डवास्तु कुरुक्षेत्रे** = कुरुवंशोत्पन्नत्वात् कुरुशब्दवाच्यपाण्डोः क्षेत्रे = कुन्त्यां माद्र्यां जाताः = क्षेत्रप्रसूताः नत्वौरसाः, तथापि **अताः** = अचोरा एव, किम्? एतच्चकाराल्लभ्यते । अत्र **सवः** = विष्णुः '**एको नैकः सवः कः किम्**' इति विष्णुसहस्रनामसूक्तेः । **युयुत्** = युयोतीति स तथा। 'आधिक्येऽधिकम्' इति सूत्रात्, 'यु मिश्रणे' इति धातोश्च, अस्मत्कुले तेषामाधिक्येन मिश्रयितेत्यर्थः। शेषं पूर्ववत् ।

अपि वा, **स एव** = विष्णुरेव, **अकुः** =स्वयं निराश्रयः, **धर्मक्षेत्रे** = धर्मसाधनभूतदेहे, **समवेता** = योजकः, युयुत् = वियोजकश्च, 'युयु वियोगे' इति धातोः । एवं सति **मामकाः** = मत्पुत्राः, **पाण्डवाश्च, उक्षेत्रे** = 'उकारः शङ्करः प्रोक्तः' इत्येकाक्षरात्, उवाच्यशङ्करस्य क्षेत्रे अभिमन्यमानाहंममतारूपे, इदं द्वितीयाद्विवचनान्तं कर्म । **किमकुर्वत** = कथं चक्रुः।।

उत वा, धृतराष्ट्रः स्वपुत्रनाशं निश्चित्य वैपुयिभावामाकाङ्क्षात् स्वस्माद् वेश्यायामुत्पन्नस्य युयुत्सुनाम्नः पुत्रस्यायुष्मत्तायै धर्ममुपदिशन् आशिषं विधते - **धर्मेति ।।**

एतत्पक्षे पदानि **धर्मक्षेत्रे, कुरु, क्षेत्रे, समवेता, युयुत्सो ,अः ,मामकाः, पाण्डवाः, च, एव, किं, अकरु, अत, सञ्जय** इति ।

हे युयुत्सो त्वं पाण्डवाः मामकाः किमेव= एवं संशयं **अकरु** = मा कुरु । **अत** = सततं गच्छ, । तानिति शेषः । सं = सुखं च '**समभेदे समीचीने सुष्ठु पूजासुखेषु च**' इति यादवः । जयस्वाधिनं **कुरु** = प्राप्नुहीति यावत् , धर्मं क्षेत्रं चेयुभयं कुरु । **अः** = वासुदेवः, क्षेत्रे = अस्मिंस्त्वदीयशरीरे '**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते**' इत्यत्रैव वक्ष्यमाणत्वात् । **समवेता** = सम्बन्धकर्ता अस्त्विति शेषः । देहसम्वन्धस्यैव जीवनरूपत्वादिति भावः ।।

किं वा, हे सञ्जय **मामकाः** = मत्पुत्राः, **धर्मक्षेत्रे** = धर्मभार्यायां = द्रौपद्याम् । **किञ्च** किमपि अनिर्वाच्यमित्यर्थः ।'आगः' इति शेषः । **अकुर्वत** = चक्रुः, येन पाण्डव्नाः कुरुक्षेत्रे समवेताः सन्तः युयुत्सवः आसन्निति शेषः, तस्यैवेदं फलमिति भावः ।।

यद्वा धृतराष्ट्रो निर्विण्णः सन् स्वपुत्रसांसर्गिकदोषात् स्वात्मरक्षणं भगवति[१] प्रार्थयति **धर्मेति ।। धर्मक्षेत्रे, कुरुक्षेत्रे, सम्, अवे, अयुयुत्सवः, मा , आमकाः, पाण्डवाः, च, एव, किम्, अकुर्वत, सञ्जय** इति पदानि, ।।

१. भगवते इति पूर्वं मुद्रितापपाठः ।

हे सञ्जय, **आमकाः** = आमाः गर्भे अपकाः, दुर्योधनादयः 'स्वार्थे कः'। **धर्मक्षेत्रे** । धर्मश्च क्षेत्रं चेति द्वे, धर्मो नाम विष्णुप्रियं कर्म, क्षेत्रं नाम ज्ञानम् । 'क्षि निवासगत्योः' इति धातोः, गत्यर्थानां च ज्ञानार्थत्वात्, **अकुर्वत किम्**? किमाक्षेपे, नाकुर्वतेत्यर्थः । पाण्डवा एव **कुरुक्षेत्रे** कुरु = कर्म, क्षेत्रं = ज्ञानं चेति द्वे, सं = सम्यक् **अकुर्वत** अतस्तानिति शेषः, सञ्जय = अत्र अन्तर्णिच् । सम्यग्जयं प्रापयेत्यर्थः। एतत्पक्षे अयुयुत्सेति पृथक्पदं कृष्णसम्बोधनार्थे । न युयुत्सा = युद्धेच्छा यस्येति विग्रहः ।

सञ्जयेति सम्बोधनपक्षे अयुयुत्सुश्चासौ वश्चेति व्युत्पत्या एकमेव पदम् । 'नामैकदेशग्रहणात् नामग्रहणम्' इति न्यायेन वः = वासुदेव इत्यर्थः, ज्ञानरूपत्वाद्वा । **मा इति**= माम्, अवेत् = रक्षेत्, अत्रात्मनेपदमाषम् । यद्वा, हे **अयुयुत्सवः** = युद्धेच्छारहिताः = व्यासकृष्णसञ्जयाः यूयं, **मा** = माम्, अवेत = रक्षेत् । मध्यमपुरुषे लिङ्बहुवचनम् । केवलं परोपकारायेत्याकाङ्क्षाया परस्मैपदप्रयोगः, दुष्पुत्रसंसर्गपातकादिति शेषः ।।

**अध्यात्मार्थे** । यद्वा, **मामकाः** = मं = शिवं माति = स्वात्मत्वेन जानातीति ममः = सङ्करः, कप्रत्ययः = कुत्सने, तदीयशिष्या मामकाः = मायावादिन इत्यर्थः । **पाण्डवाः** = ज्ञानशीलत्वाच्छुक्लवर्णत्वाद्वा वायुः तच्छिष्याः पाण्डवाः = वैष्णवा इत्यर्थः । 'पडि गतौ' इति धातोः, **'ताचील्यार्थादुनस्तथा'** इत्युक्तेश्च । **उक्षेत्रे** = उः = रुद्राभिमान्यमानोऽहङ्कारः, क्षीयते = विनश्यति = अनेनेति तादृशे ।

**धर्मक्षेत्रे**, धर्मः विधिरूपेण वसत्यस्मिन्निति धर्मक्षेत्रं = वेदः **'वेदप्रणिहितो धर्मः'** इत्युक्तेः । अथवा धर्मो = विष्णुः **'वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः'** इति विष्णुसहस्रनामसूक्तेः, क्षीयते = ज्ञायते अनेनेति विष्णुसर्वोत्तमत्व-ज्ञानसाधनरूपो वेदस्तस्मिन्, **असमवेताः** असमं = विषमं यद् वं= ज्ञानं तेन, इताः = युक्ताः, **सन्तः**, **कुः** = प्रथमायाः सप्तम्यर्थकत्वात् कौ = भुवीत्यर्थः, **युयुत्सवः** वाग्युद्धं कर्तुमिच्छवः, **किं** = कथनं वादं जल्पं वितण्डं वा **'वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा'** इत्युक्तेः, **अकुर्वत** = चक्रुः । एतत्प्रश्नोत्तरं तु शङ्खवादनकाले ज्ञेयम् ।।

एवं पुनरनेकार्थसङ्ग्रहवत्यपि व्यासवाक्ये स्वबुद्धिमान्द्याद्ग्रन्थविस्तरभयाच्चोपरम्यते।।१।।

**सञ्जय उवाच–**

सञ्जयः सद्गुरुस्तुम्बरुर्वा, गावल्गणिर्वा, ।।

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥**

असुरादिपक्षीयदोषमाविष्कुर्वन्नाह -**दृष्ट्वेति** ॥

**अध्यात्मार्थे तदा** = उभयसम्मेलनानन्तरकाले, **दुर्योधनः** = स्वभावदुष्टान् योधान् नयति = प्रवर्तयति स तथा, अत एव **राजा** = महापाप्मा, **पाण्डवानीकं** = देवसैन्यं, **तु** = विशिषेण 'तु विशेषे'इत्युक्तेः, **व्यूढं** वौ = विष्णौ ऊढम्= आश्रितम्, '**विः पक्षिपरमात्मनोः**' इत्यभिधानम् । दृष्ट्वा असहमानः सन्निति शेषः। **अवचनं** = प्रत्युत्तरमदातारं, **आचार्यं** = रुद्रं '**त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय**' इत्युक्त्या तदधिकारकशास्त्रकर्तृत्वात्, **उपसङ्गम्य** = समीपं गत्वा **अब्रवीत्** । यद्वा राज्ञो वक्तुमयोग्यमभिप्रायमब्रवीत् ॥

**अंशार्थे** ॥ **दुर्योधनः** = कलिः '**दुर्योधनः कलिर्ब्रह्मवाय्वोरावेशयुक् सदा**' इत्युक्तेः। **आचार्यं** = अन्यथा ज्ञानित्वेन शुक्रबुध्या बृहस्पतिम् ॥ **प्रसिद्धार्थे** । दुर्योधनः = ज्येष्ठधार्तराष्ट्रः आचार्यं = द्रोणम् ॥ २ ॥

**( द्रोणाचार्यं प्रति दुर्योधनवचनम् )**

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

वचनमेवाह = **पश्येति** ॥ **अध्यात्मार्थे** ॥ हे **आचार्य** = रुद्र, शुक्र, द्रोणो वा । **एताम्**=अङ्गुलिनिर्देश्यां **पाण्डुपुत्राणां** = 'समाने लोपः' इति सूत्रेण पाण्डवाणामिति स्थिते, पाण्डुः = विष्णुः ।'पडि गतौ' मृगय्वादित्वात् कुः पृषोदरादित्वाद्दीर्घः । तस्य पुत्रो वायुः तस्मात् त्राणं रक्षणं यस्यास्तां । अत एव **महतीं** = पूज्यां, **धीमता** = बुद्धिमता, **तव** उत्पादितत्वात् पुत्रेण, शिक्षितत्वाच्छिष्येण च स्कन्देन **व्यूढां** = कृतव्यूडरचनां, **चमूं**= पश्य हे **द्रुपद** द्रुः= वटवृक्षः पदं = स्थानं यस्य स तथा । रुद्रस्य वटाधःस्थितिः प्रसिद्धैव । यद्वा द्रु = दारु, पदं = स्थानं यस्य तस्याग्नेः पुत्रेण स्कन्देन 'सेनानीरग्निभूर्गुहः' इति कोशात् ।

**अंशार्थे** हे **आचार्य** = शुक्र **पाण्डुपुत्राणां** = पुण्याभिमानिनां देवानां '**पाण्डवेयानि पुण्यानि**' इति वचनात्, **द्रुपदपुत्रेण** - द्रुतं पदानि = सुप्तिङन्तानि तदुपलक्षितवाक्यानि च,

यस्मात् स शीघ्रवक्ता गुरुरित्यर्थः, **तत्पुत्रेण** = कचेन, **तव शिष्येण** सञ्जीवनीविद्यादानात्, **व्यूढां** = सर्वेषु प्राणिषु ऊढः = मृत्युः प्रसिद्धः, विगतः ऊढो मृत्युर्यस्यास्तां ।।

**प्रसिद्धार्थे** हे **आचार्य** = द्रोण, **पाण्डुपुत्राणां** = युधिष्ठिरादीनां **चमूं पश्य** । ननु दृष्टैव पुनर्दर्शने को विशेषोऽत आह = **महतीमिति** ।। एव एकादशाक्षौहिण्यपेक्षया तत्सप्ताक्षौहिणीभिर्महत्वं कथमित्यतः - **द्रुपदपुत्रेण व्यूढामिति** ।। उभयसाधारणेन भीष्मेण व्यूढाया. अधिकाया अपि सकाशात् त्वत्कृतपितृपराभवत्वम्, अस्मत्कृतभगिनीक्लेशादिकं चासहिष्णुना धृष्टद्युम्नेन व्यूढत्वान्महत्वमिति भावः । ननु व्यूहरचनायां धृष्टद्युम्नस्य भीष्मसादृश्यं कथं भवेदित्यत उक्तम् **-तव शिष्येणेति** ।। त्वच्छिक्षयाऽऽधिक्यं भवेत्किमु सादृश्यमिति भावः । तवापि मच्छिक्षैव । अतस्तस्यैवाधिक्यं, कुतः? इत्यत उक्तम् - **धीमतेति** ।। शिक्षाग्रहणे न तादृशी मद्बुद्धिरिति भावः । अतो विशेषसद्भावेन पुनः पश्येति विज्ञापयामीत्याशयः ।। ३ ।।

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।**
**युयुधानो विराटश्च द्रुपदश्च महारथः ।। ४ ।।**

तेषां विशेषान्तरमाह - **अत्रेति** ।। **अध्यात्मार्थे** अत्र = अस्यां चम्वां, **युधि** सम्प्रहारविषये, **शूराः** = विक्रमिणः, **भीमार्जुनसमाः** भृताः = पूर्णाः, माः = मानोपलक्षितबलादीनि यस्य स भीमः '**भृतमो भीमः**' इत्युक्तेः स वायुरित्यर्थः । '**वायुर्भीमः**' इत्युक्तेः, अर्ज्यते पारमेष्ट्यं पदमनेति अर्जुनः = ब्रह्मा, 'अर्ज अर्जने' '**अर्जेर्णि लुग् वा**' इत्युनन् । '**अल्पाच्तरं पूर्वम्**' इति सूत्रात्, भीमशब्दस्यादौ निपातः, तावुभौ, समौ = महदभिमानित्वेन समानयोग्यतावन्तौ येषु ते। **महेष्वासाः**- इषुः = ज्ञानम् । 'ई गतिहिंसादर्शनेषु' गत्यर्थानां च ज्ञानार्थत्वात्, 'इषः किच्च' इति 'उः' । तस्मिन् आसा = निष्ठा, इष्वासा, महती = पूर्णा महेष्वासा येषां ते, सन्तीति शेषः ।

विक्रमणो देवानेवाह -**युयुधान** इति ।। 'युयु वियोगे' इति धातोः, विविक्तधानाकारचिह्नवान् शेषः, गोधूमाकृतिचिह्नानां नागे प्रसिद्धेः । **विराटः**- विशिष्टं = सर्वोत्कृष्टं, रमणं = सुखं यस्य तं विष्णुम् अटयति = गमयति वाहयतीति यावत्, स गरुड इत्यर्थः । **द्रुपदः** = रुद्रः, उभयसमुच्चये चशब्दौ, एते त्रयः अहङ्कारतत्वाभिमानिनः । अत एव 'महारथाः' इत्युक्तम्।, महत् = महत्तत्वं, रथः = कारणत्वेन गतिर्यस्य सोऽहङ्कारः 'रथगतौ' इति धातोः । अभिमान्यभिमन्यमानयोरैक्य० यपदेशादिति भावः । एकवचनं तु पार्थक्येन योज्यम् ।

**अंशार्थे** भीमार्जुनौ = वाय्विन्द्रौ **'भीमसेनः पुरा वायुः'** इत्युक्तेः
**'अर्जुनः पूर्वमेवेन्द्रः'** इति चोक्तेः, समत्वकथनं तु अन्यथाज्ञानित्वात् ।
**युयुधानः** = कृष्णपक्षाभिमानी देवः **'कृष्णपक्षो युयुधानाभिधेयः'** इत्युक्तेः,
**विराटः** = हाहानामा ब्रह्मगायको गन्धर्वः,
**'विराटस्तु हाहानामा गायको ब्रह्मणः पुरा'** इत्युक्तेः ।
**द्रुपदः** = हूहूगन्धर्वः, **'द्रुपदस्तु पुरा प्रोक्तः स हूहूर्नाम गायकः'** इत्युक्तेः ।।
**प्रसिद्धार्थे** ।। युयुधानः = सात्यकिः, तेषामेव महारथत्वकथनं तु स्वपक्षीयवचोब्रुवाणस्य रामस्य कृष्णसमीपमपि सात्यकिना निराकरणात् । विराटोत्तरगोग्रहणे पराजितत्वात् । गुरुदक्षिणादानकाले द्रुपदेनापि पराजितत्वादिति बोध्यम् ।। ४ ।।

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।**
**पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ।। ५ ।।**
**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः[१] ।। ६ ।।**

शेषानप्याह ।। **धृष्टकेतुरिति** ।। **अध्यात्मार्थे** धृष्टं = यक्षरूपं ब्रह्म, प्रश्नार्थमग्न्यादेरागमनेऽपि तत्प्रश्नात्पूर्वं स्वयमेव प्रश्नकरणे निर्भयत्वात्, तस्य केतुः = ज्ञानं प्रथमं यस्य स **धृष्टकेतुः** = इन्द्र इत्यर्थः ।
**'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया'** इत्यभिधानम्
इति गीताभाष्ये ।
**'इन्द्रस्तु प्रथमं ब्रह्म व्यजानात्तेन तूत्तमः'** इति ब्रह्मसारोक्तेः ।।
**चेकितानः** चकन्ते ते चेकिनः 'चक दीप्तौ' इतिधातोः, पृषोदरादित्वाद्गुणः । बर्हा इत्यर्थः। तेषां तानः विस्तारो यस्य स चेकितानः मयूरः सोस्य वाहनत्वेनास्तीति । अर्श आद्यच्। स्कन्द इत्यर्थः । 'विशाखः शिखिवाहनः' इत्युक्तेः । इमौ द्वौ मनस्तत्वाभिमानिनावित्याशयः ।।

१. असदधकरणसुधाटिप्पण्यां वाक्यार्थरत्नमालायां -'लोके 'सर्व एव जनो गतः' इति 'सर्वोपि' इत्यादिवाक्यस्य च समानार्थतायाः 'भवन्तः सर्व एव हि' 'सर्व एव महारथाः' इत्यादौ च सर्वोपि इत्येतत्समानार्थे अवधारणप्रयोगात् ...।। (द्रं -सुधा -सम्पुटम्-१३. पत्रे.६००२)

**काशिराजः** = काश्यन्ते सर्वत्रेति काश्यः = दिशः, विभुत्वात्तासां राजः = स्वामिनः = दिग्देवाः, इमे श्रोत्राभिमानिन इत्यर्थः ।

**वीर्यवान्** = अन्तर्णीतण्यर्थात्' 'वीगतौ' इति धातोर्गत्यर्थानां च ज्ञानार्थत्वात्, वीः = स्पर्शज्ञापकः यावात् = यबीजाभिमानी प्राणः अयं त्वगभिमानीत्यर्थः ।

पुरु = पूर्णं तमः जयतीति **पुरुजित्** = सूर्यः चक्षुरभिमानीत्यर्थः ।

**कुन्तिभोजः** = कुं = भूमिगुणं = गन्धं तनोति = विस्तारयतीति कुन्ति = अन्नादि, तद्भोजयति = तद्रसं ज्ञापयतीति यावत्, सवरुणः = जिह्वाभिमानीत्यर्थः ।

**शैब्यः** शवन्ति = गच्छन्ति = जानन्ति गन्धमनेनेति शिवि = घ्राणेन्द्रियं, 'बाहुलकादित्वं वबयोरभेदश्च' तदभिमानित्वाच्छैब्यः अश्विनौ, जात्येकवचनम्, घ्राणाभिमानिनावित्यर्थः ।

च **नरपुङ्गवः**, एतद् युधामन्योर्विशेषणम्, च = परं नरपुङ्गवो यस्येति ।

युधा सम्प्रहरेण सहितः, मन्यवः = यागः यस्मात् आग्नेयास्त्रेण युद्धसाधनत्वात्, हुताशनत्वेन यज्ञसाधनत्वाच्च, युधामन्युः =अग्निः वागभिमानीत्यर्थः ।

**नरपुङ्गवः** = जीवश्रेष्ठः, तस्यैव दक्षत्वात् पाण्यभिमानित्वम् ।

**विक्रान्तः** = विक्रमवान्, तस्यैव जयविस्तारकत्वाज्जयन्तः पादाभिमानी ।

**उत्तमौजाः** =महासामर्थ्यवान्, तस्यैव मानत्राणकर्तृत्वान्मित्रः पाय्वभिमानी ।

**वीर्यवान्** = वीर्यं = रेतः अधीनत्वेनास्यास्तीति स तथा मनुः, अत एवोपस्थाभिमानी।

**सौभद्रः** = शोभनानि भद्राणि = मङ्गलानि यस्याः सकाशात्सर्वेषामिति, सर्वमङ्गलत्वात् सुभद्रा = पार्वती, तत्पुत्रः **सौभद्रः** = गणपतिः आकाशाभिमानी = तदुपलक्षितमरीचिकादयः, वाय्वाद्यभिमानिन इत्यपि ग्राह्यम् ।

ननु सर्वेषां पार्थक्येन वचनादस्य वाय्वादिचतुष्टयस्य देवानामेवोपलक्ष्यत्वे किं निमित्तमिति न शङ्क्यम् । त्वग्वाग्जिह्वादैवतत्वेन वायुतेजोब्देवानां प्राणाग्निवरुणानामुक्तत्वात् पृथिव्याश्च तन्नामदेवताकत्वादिति ध्येयम् ।। **द्रौपदेयाः** = द्रुपदः = शिव इति पूर्वमुक्तः, तत्पुत्रा द्रौपदेयाः = प्राणापानव्यानोदानसमानाः पञ्च शब्दादिविषयाभिमानिनः ।

**'शब्दाद्याः पञ्च शिवजाः शब्दनात्स्पर्शनादपि'** इत्यादि गीतातात्पर्ये ।

**सर्वे** ब्रह्मवाय्वादयः **महारथाः** - महान्तः = आः = दोषाः यस्मिंस्तस्मिन्महारं = शरीरं तस्मिन्नधिकृत्य, थः = स्थितिर्येषां ते तथाविधा एव ।

'तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ' इत्युक्तेः

'.................ब्रह्मा तु पुरुषः स्मृतः ।
महांश्चाव्यक्तनाम्नी तु ब्रह्माणी सम्प्रकीर्तिता ।
एवं वायुरपि ज्ञेयो भारती चैव तत्त्रयम् ।
रुद्रोऽहङ्कार उद्दिष्टः स्कन्देन्द्रौ मन उच्यते ।
अहङ्कारः शेषवीन्द्रावपि विद्वद्भिरीरितौ ।
दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि ।
वह्निदक्षाविन्द्रसूनुर्मित्रश्चैव मनुस्तथा ।
इन्द्रियाख्याः शब्दनामा बृहस्पतिरुदाहृतः ।
अन्ये तु सूनवो वायोरुद्रस्यापि प्रकीर्तिताः' इति तन्त्रसारे ।

**अंशार्थे- धृष्टकेतुः** = संवर्तो मरुत् **'धृष्टकेतुः शैशुपालिः संवर्तो मरुदुच्यते'** इत्युक्तेः ।

**चेकितानः** प्रतिभाख्यो मरुत् **'चेकितानः पुरा प्रोक्तः प्रतिभो नाम वै मरुत्'** इत्युक्तेः ।

**काशीराजः** = कश्चिदेवः देवांशपक्षसाहाय्यकारित्वात्। **'ये पाण्डवानामभवन्सहाया देवाश्च देवानुचराः समस्ताः'** इत्युक्तेः । पुरुजिदिति विशेषणम् ।

**कुन्तिभोजः** = कूर्माख्यः प्राणः **'भोजराजः कूर्मकाख्यमरुदंशयुतः सदा'** इत्युक्तेः ।

**शैब्यः** = ऋभ्वाख्यो देवः **'शैब्यस्तु ऋभुदेवता'** इत्युक्तेः ।

**युधामन्युः** = विश्वावसुगन्धर्वः ।

'युधामन्युः पार्षतस्य ब्रह्मावेशयुतो बली ।
सुतो विश्वावसुर्नामा गन्धर्वः समुदाहृतः' इत्युक्तेः ।

**द्रौपदेयाः** = विश्वेदेवाः **'पञ्च पार्थसुताः प्रोक्ता विश्वेदेवाः पुरातनाः'** इत्युक्तेः ।

**महारथाः** = पूज्यरूपाः 'मह पूजायाम्' **'शरीरं रथमेव च'** इति काठकश्रुतेः ।

**प्रसिद्धार्थे -धृष्टकेतुः** = शिशुपालसुतः, धर्मजशालकत्वादन्तरङ्गः । **चेकितानः** = यादवः कृष्णसेवकत्वात्, **काशीराजः** = भीमश्वशुरत्वात्, **कुन्तिभोजः** = कुन्तीपितृत्वात्, **शैब्यः** = श्रीकृष्णभक्तत्वात्, **युधामन्युः** = पार्षतवंश्यत्वात्, **उत्तमौजाः** = तद्वंश्यत्वात्, **सौभद्रः** = अभिमन्युः अर्जुनपुत्रत्वात्, द्रौपदीसुतत्वात्, अन्तरङ्गा एव । न केवलमन्तरङ्गाः किन्तु महारथा अपीति परोत्कर्षासहिष्णुत्वेन वर्णनं बोध्यम् ।। ५ ।। ६ ।।

**अस्माकं तु विशिष्टा ये तान् निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य सञ्ज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥**

अथ स्वेषामन्तरङ्गत्वाभावं द्योतयितुमाह = **अस्माकमिति** ॥

**अध्यात्मार्थे** - हे **द्विजोत्तम** = द्विजानां सनकादीनां सकाशादुत्तम रुद्र, **अस्माकं** मध्ये **ये तु विशिष्टाः** = बहुश्रेष्ठाः, **तु** विशब्दस्य बहुनामसु पाठात् । **तान् निबोध** जानीहि । ये च **मम सैन्यस्य नायकाः** = प्रणेतारः, **तान् सञ्ज्ञार्थं** = नामार्थमुद्दिश्य **ब्रवीमि** ॥

**अंशार्थे** - हे द्विजोत्तम द्वे शब्दार्थतत्त्वे जानन्ति ते द्विजाः = कवयः 'जा ज्ञाने' धातूनामनेकार्थत्वात्, औणादिकोन्त्यलोपो वा । तेषामुत्तम शुक्र **'कवीनामुशना कविः'** इत्युक्तेः । तुविशिष्टाः = तुना = असुरावेशरूपविशेषेण विशिष्टाः **'तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे'** इत्युक्तेः, सञ्ज्ञार्थं = सम्यग्ज्ञानार्थम् ।

**प्रसिद्धार्थे**- हे **द्विजोत्तम** = ब्राह्मणोत्तम = द्रोण, विशिष्टशब्दस्य शिष्टविरोधित्वार्थं मनसि निधाय बहिः श्रेष्ठत्वरूपार्थं दर्शयन् द्व्यर्थकं तं शब्दं प्रायुङ्क्त । ये सैन्यस्य नायकाः ममैत सञ्ज्ञार्थं तु मदीया इति सञ्ज्ञारूपार्थमेव प्राप्ता इति शेषः, नान्ततो मद्धितकारिण इति भावः। तान् ब्रवीमीत्यन्वयः ॥ ७ ॥

( दुर्योधनपक्षीया महारथाः )

**भवान् भीष्मश्च कर्णश्च कृपश्च [1]समितिंजयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च[2] ॥ ८ ॥**

प्रतिज्ञातानाह = **भवानिति** ॥ **अध्यात्मार्थे**- **भवान्** 'भ उररीकरणे' इति धातोः, भं भयाङ्गीकारः, नामैकदेशग्रहणे नामग्रहणमिति न्यायाद्वा । भं = भयं, तद्वान्, **'भयात् कंसः'** इत्युक्तेः, कंसस्य कालनेमित्वात्, तस्य कामभिमानित्वाद्भवान् कामाभिमानी कालनेमिः ।

**'असुरा अशुभेष्वेव कामादेरभिमानितः ।**
**तत्र कामः कालनेमिः'** इति गीतातात्पर्ये ब्रह्मतर्कोक्तेः ।

**भीष्मः** भीषयतीति व्युत्पत्या क्रोधाभिमानी खरः । **'खरः क्रोधस्त्वया दृष्टः'** इत्युक्तेः। यद्वा

१. **'समितिशब्देन सङ्गरसभे गृह्येते । उभे अपि शस्त्रेण वाचा जयतीति समितिंजयः । खच्प्रत्ययो मुमागमो अनुस्वारश्च ।'समितिः सङ्गरसभयोः' इत्यभिधानम्'।** इति भा.टिप्पण्यां-१०.९०.१. विजयध्वजतीर्थाः

२. **'जयद्रथः'** इति नीलकण्ठीयपाठः ।

भवान् = कामाभिमानी मधुः भीष्मः = क्रोधाभिमानी कैटभः, तथा हरिवंशोक्तेः ।

**कर्णः** = केन = सुखेन ऋण्यते = ऊनीक्रियते स कर्णः = मत्सराभिमानी, वेनांशः, पौण्ड्रकः, मत्सरिण एव परोत्कर्षदर्शनेन हि सुखाभावः ।

**'एवं मत्सरिणं हत्वा पौण्ड्रकं हरिः'** इति भागवतोक्तेः ।

**'पापो वेनः पौण्ड्रको वासुदेवः'** इति च तात्पर्यनिर्णयोक्तेश्च ।

**कृपः** = 'कृती छेदने' इति धातोः, कृत्तं = छिन्नं पाति = रक्षति सतथा । कृतशब्दोपपदात्पातेः कतरि डः । उपपदान्त्यलोपश्च, मोहाभिमानी डिम्भकः, मोहित एव हि नष्टरक्षणे यतते ।

**समितिंजयः** = मित्या = मानेन सहितः, समितिः = मानी, तं जयतीति स तथा महामानी निकुम्भः, अत्रालुक् ।

**अश्वत्थामा** = न श्वयन्ति = न जानान्ति = ते अश्वः 'टु ओश्विगतिवृध्योः' 'गत्यर्थानां ज्ञानार्थत्वाच्च' अज्ञानिन इत्यर्थः, तेषु तिष्ठति सोऽश्वत्थः, अहङ्कारः। 'ष्ठा गतिनिवृत्तौ, सुपीति कः, पृषोदरादिः, ततो मतुबर्थे 'आतो मनिन्' । अङ्काराभिमानी विप्रचित्तिः ।

**विकर्णः** = विशेषेण करोति स्वसत्कर्म प्रसिद्धमिति 'कृवृपृ' इत्यादिना नन् । दम्भाभिमानी वज्रनाभः असुरः ।

**सौमदत्तिः** = सुतरां मदः सुमदः स एव सौमदः तं तनोतीति सौमदत्तिः , पृषोदरादित्वादन्ते द्वित्तता । मदाभिमानी कुञ्जरः **'कुञ्जरो मद उच्यते'** इत्युक्तेः ।

**अंशार्थे- भवान्** इति द्रोणं प्रति वचनात् बृहस्पतिः । **'द्रोणो बृहस्पतिः प्रोक्तः'** इत्युक्तेः।

**भीष्मः** = द्युनामा वसुः **'भीष्मस्तु द्युवसुर्नामा'** इत्युक्तेः ।

**कर्णः** = सूर्यस्यांशः सहस्रवर्माख्यासुरावेशी ।

**'कर्णः सूर्यः समाख्यातः सन्निधानयुतो हरेः ।**
**सहस्रवर्मनाम्नाऽपि आविष्टो नरकेण च'** इत्युक्तेः ।

**कृपः** = विष्कम्भो रुद्रः **'कृपाचार्यः पुरा प्रोक्तो विष्कम्भो नाम रुद्रकः'** इत्युक्तेः ।

ननु ते देवांशा एव कथं कलिना स्वीयत्वेनोच्यन्ते इत्यत उक्तम्- **'समितिञ्जय** इति ।। 'मिनु हिंसायाम्' इति धातोः मितिं = मृत्युं जयन्ति ते असुराः तैः सहितत्वाद् युक्तमुक्तमित्यर्थः । एकवचनोऽपि समितिंजयशब्दः पार्थक्येन सर्वत्र योज्य इति सूचयितुं समुच्चयार्थकाश्चशब्दाः ।

**अश्वत्थामा** = रुद्रः **'अश्वत्थामा नीलकण्ठः'** इत्युक्तेः ।

**विकर्णः** = अतिकायासुरः **'विकर्णोऽप्यतिकायकः'** इत्युक्तेः ।

चशब्दस्त्वर्थे विशेषद्योतकः, स्वभावादेव दुष्टः नावेशत इति । **सौमदत्तिः** = भूरिश्रवाः अहिर्बुध्न्यः । तथैव तात्पर्यनिर्णयोक्तेः । तथा द्रोणादिवदावेशत एव, चः समुच्चये, भूरिश्रवा अपि मदीय इति भावः ।।

**प्रसिद्धार्थे**- यमभिमुखीकृत्योच्यते तद्दाक्षिण्यमधिकमित्यतो द्रोणं प्रत्यादौ भवानित्युक्तिः । सैन्यनायककथनप्रसङ्गे मम सेनाधिपतित्वेऽपि द्रोणास्यादौ ग्रहणे व्यर्थो ममायास इति भीष्मो मन्येतेत्याशङ्क्य तदुत्तरमेव भीष्म इत्युक्तम् । चशब्देन ब्राह्मणत्वात्तदग्रोक्तिरिति सूचितम् । कर्णभीष्मयेर्वैमनस्याद्भीष्मनामग्रहणेन विवर्णवदनं कर्णं दृष्ट्वा अन्यवदानेनाग्रे कर्ण इत्युवाच । तथापि तन्मानसीं प्रीतिमदृष्ट्वा अनन्तरं कृपोपन्यासः । अनेन भीष्मस्य ब्राह्मणान्ते ग्रहणात् कर्णस्य तु ब्राह्मणादौ ग्रहणात् भीष्मापेक्षयापि कर्णस्य महाविश्वासपात्रत्वं ध्वनितम् ।

स्वापेक्षयाऽदौ कर्णस्य ग्रहणाद्दुष्टं कृपमवेक्ष्य सर्वेषामविशेषितत्वेऽपि तमेव समितिञ्जयपदेन विशेषितवान् । गुरुपुत्रत्वेन ब्राह्मणत्वेन महाशौर्यणमित्रत्वेन चादौ [1]स्वनाम्नोग्राह्यत्वेऽपि तदभावमालोक्य सञ्जातोपेक्षमश्वत्थामानं स्वभ्रात्रादौ जग्राह । अनेन बन्धोः सकाशादपि तदाधिक्यं निरूपितम् । बन्धूनामेव ग्रहणात् स्वभ्रातरो युद्धविमुखा भवेयु-रित्यतोऽन्वश्वत्थामान्ते च भ्रातृग्रहणम् । तत्रापि दुःशासनादीन्विहायविकर्णस्यैव ग्रहणे निमित्तं तु द्यूतकाले विरुद्धभाषितत्वं ज्ञेयम् । अनेन तद्ग्रहणाभावे तथा भाषितत्वात्तान्प्रति गच्छेदिति भीर्दृश्यते । स्वसाक्षाद्भ्रातृग्रहणेन दूरस्तस्य महावीरस्य भूरिश्रवसः वैमनस्यमाशङ्क्य तथैवेत्युक्तम् । साक्षाद्भ्रातृसमान इत्यर्थः, न तु दूरस्थत्वेन सोदरान्न्यून इति भावः ।। ८ ।।

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ।। ९ ।।**

अन्येषां स्वनामाग्रहणेन खिन्नत्वं समीक्ष्य तानपि शंसति - **अन्ये चेति** ।।

**अध्यात्मार्थे**- अन्ये = नमुचिपाकेल्वलादयः शूराः त्यक्तजीविता आसन् । ये च मदर्थे **अत्यक्तजीविताः** = धृतदेहाभिमानाः राहुविरोचनमन्देहादयः । ते च **नानाशस्त्रप्रहरणाः** अनेकशस्त्रप्रहारशीलाः । न केवलं तथा अपि तु सर्वेऽपि **युद्धे विशारदाः** = कुशलाः ।

---

१. अस्पष्टम्

**अंशार्थे-** शल्यदुःशासनजयद्रथाद्याविष्टसल्हादेन्द्रजित्कालकेयादयो असुराः **मदर्थे** = मदिष्टार्थे **त्यक्तजीविताः**, अत्यक्तजीविताः = धृतमनुष्यदेहा वा ।

**प्रसिद्धार्थे-** **अन्ये** = जरासन्धैकलव्यपौण्ड्रकादयः, त्यक्तजीविताः । ये चात्यक्तजीविताः शल्यादयः तेऽपि शूरा एव ।'अत्यक्त' इत्यत्राकारप्रश्लेषाभावे क्तप्रत्ययस्यातीतार्थकत्वेन पूर्वं मृतानामिदानीं योद्धृत्वासम्भवात् । यद्वा जीवितशब्देन तदाशा लक्ष्या ।। ९ ।।

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ।। १० ।।**

प्रशंसारूपसाम्ना सेनापत्यदानेन च भीष्मानुकूल्यं सम्पादितम्, इदानीं भेदेनापि सम्पादयन् तद्रोषजननायाह– **अपर्याप्तमिति** ।।

**अध्यात्मार्थे**- अत्र **'तत्'** इत्यव्ययम् । तत्रार्थे = तदुभयपक्षमध्य इत्यर्थः । असन्निकृष्टपरामर्शकस्य तस्य सन्निकृष्टपरामर्शकत्वायोगात् । **अस्माकं बलं** = सैन्यं **भीष्माभिरक्षितमिति** हेतुगर्भविशेषणम् । देवासुरेषु साम्याद्वर्तमानेन भीष्मेण क्रोधेन तदभिमानिनेति यावत् अभिरक्षितत्वादित्यर्थः । **अपर्याप्तं** =शत्रूणां जये अलं न भवेत् । यद्वा परितः सर्वतः आप्तं = हितकारी नास्ति । अथवा परः = परमात्मा अस्त्यस्मिन्निति परि आप्तं च पर्याप्तं, तद्विरुद्धमपर्याप्तम् विष्णुरहितम्, अनाप्तं चेत्यर्थः । **तेषां** = देवानां तु बलं भीमेन = पूर्णमानिना प्राणेन अभिरक्षितत्वात् । अत्रापि 'अस्माकम्' इत्यावर्त्यम् । दमे = असन्निग्रहे, पर्याप्तं शक्तम् । ज्ञानित्वस्यैकपक्ष एव वर्तमानत्वादिति भावः । 'अतः' इति शेषः । इ = आश्चर्यं **'इ विचित्रे स्मरे पुमान्'** इति यादवः । इदमेतच्छब्दाभ्यां दूरस्थसैन्यतत्पतीनां परामर्शायोगादियमेव योजना युक्ताः । परि = विष्णुसहितम् आप्तं चेति वा ।

**अंशार्थे-** भीष्मस्य वस्वंशत्वेन तत्पक्षीयत्वादिति भावः । भीमस्यांशावेशाभ्यामुभाभ्या-मप्यस्मत्पक्षानङ्गीकारादिति च । **प्रसिद्धार्थे-** भीष्मस्योभयपक्षसमानत्वाद् भीमस्यास्मन्निरसने सत्यप्रतिज्ञत्वादिति भावः । वाग्बाणभेदेनापि भीष्मः स्वार्थे यतेतेति तात्पर्यम् ।। १० ।।

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ।। ११ ।।**

इदानीं भीष्मोपरि अन्ततः कुपितः सन् बहिर्वर्धयन् सैनिकानामाज्ञापयति -**अयनेष्विति**।।

**अध्यात्मार्थे** -**सर्वेष्वयनेषु** = जीवस्थानरूपेषु देहेषु । **यथाभागं** = यथा अधिकारं, हि यस्मात्, भीष्मस्य क्रोधस्य रक्षणात् सर्वमस्मदभिप्रेतं भवेदिति भावः ।

**अंशार्थे सर्वेष्वयनेषु** = भीष्मद्रोणादिसर्ववीरेषु, **यथाभागं** = यथांशम्, अवस्थिताः भवन्तः = कालनेम्यादयः । **भीष्मं** = क्रोधाभिमानिनं, खरं, कैटभं वा, अभिरक्षन्तु । तेनैव अस्मत्कार्यसिद्धिरिति भावः ।

**प्रसिद्धार्थे**- **अयनेषु** = वाहनेषु, **यथाभागं** = व्यूहस्य यथोक्तपूर्वादिभागमनतिक्रम्याव-स्थिताः, सर्व एव भवन्तः **भीष्ममेवाभिरक्षन्तु** किमस्मद्रक्षयेत्याक्षेपोक्तिः । वर्धनपक्षे तस्मिन् रक्षिते सति सर्वे वयं रक्षिताः स्यामेति भावः ।। ११ ।।

**( भीष्मादिभिः शङ्खनादः )**

**सञ्जय उवाच**

**तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ।। १२ ।।**

सैनिकानां निजरक्षणस्याज्ञापनेन तुष्टः क्रोधाभिमानी, स्वस्वामिनो हर्षजननाय कृतां कृतिमाह- **तस्येति** ।।

**अध्यात्मार्थे** -'महः' इत्यत्र पृषोदरादित्वान्मकारोत्तरोकारलोपः । तथा 'सप्तसु प्रथमा' इति सूत्रात् प्रथमा षष्ट्यर्थे । तथा च महः = मोहस्य पिता = उत्पादकः **'क्रोधाद्भवति संमोहः'** इत्युक्तेः । कुरुवृद्धः ककाररेफोत्तरवर्तिनौ यावुकारौ ताभ्यां विभागयोगेन क्रो इति वर्णे स्थिते तेन वृत् = युक्तः धकारो यत्रेति स **कुरुवृद्धः** = क्रोधः, तदभिमान्यसुरः । **तस्य** = कलेः, **हर्षं सञ्जनयन् सन्** । **सिंहनादं** = आट्टहासं **विनद्य** = कृत्वा **वचनमब्रवीत्** इतिवद् ज्ञेयम्[१]। **शङ्खं** = शं = सुखं, कनति = उन्मूलयति तत् अन्यथाज्ञानम् । **दध्मौ** = नादयामास, प्रख्यापितवानिति यावत् । तथा विष्णुतो भीतिमानित्याह - **प्रतापवानिति**।। प्रः = विष्णुः । **'अ-क-य-प्र-वि-सं-भू-म-स-ख-हा विष्णुवाचकाः'** इत्यभिधानात् । तस्मात् तापयुक्त इत्यर्थः **इत्यध्यात्मार्थे** ।

**अंशार्थे**- **कुरुवृद्धः** = भीष्मः आवेशपात्रत्वेन यस्यास्तीति, 'अर्श आद्यच्' पितामहः = ब्रह्मा, तथैव तात्पर्यनिर्णयोक्तेः । **तस्य** = कलेः हर्षं सञ्जनयन् सन्निव इति लुप्तोत्प्रेक्षा । सिंह

१. अस्पष्टम् ।

इति नादः =शब्दः, नृसिंहनामेति यावत् । 'दुरितनिवृत्तये' इति शेषः । **'नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये'** इति भाष्योक्तेः । **विनद्य** = उच्चैरुच्चार्य । **शङ्खं** = शं = सुखसाधनं, खं = ज्ञानं, **दध्मौ** = व्यधमत्, निःसारयामासेति यावत् । यतः **प्रतापवान्** = प्रार्थं[1] = विष्णवर्थं, तापः = तपः तद्वान् ।

**प्रसिद्धार्थे**- तस्य= दुर्योधनस्य, कुरुवृद्धः पितामहः= भीष्मः, शङ्खं= कम्बु ।। १२ ।।

**ततः शङ्खाश्च [2]भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ।। १३ ।।**

आनन्तरिकं वृत्तमाह - **तत इति** ।। **अध्यात्मार्थे**- शङ्खः = शमुपलक्षितवस्तुजातकारणं खं = शून्यं येषु ते **शङ्खाः** = शून्यवादाः । **भेर्यः** भा = भवानी । 'नामैकदेशग्रहणेन नामग्रहणात्' शक्तिरिति यावत्, ईर्या = प्रतिपाद्या यस्मिन् स भेर्यः शक्तिवादः । 'पण व्यवहारे' इति धातोः, पणः = व्यवहारः, वं = बलं यस्मिन् स **पणवः** = मायावादः । तस्मिन् व्यावहारिकी सत्ताङ्गीकारात्, ओ = विष्णुः, कः = शब्दरूपत्वाद्वेदः, तौ अकौ यद्वादे न स्तः सः **अनकः** = नास्तिकवादः, गौः = नन्दीश्वरः, यद्वा शाकपार्थिवत्वाद् गोमान् = पशुपतिः मुखः = मुख्यो यस्मिन् स **गोमुखः** = पाशुपतवादः । एते **सहसैव** बलात्कारादेव **अभ्यहन्यन्त** 'हन हिंसागत्योः' इति धातोः उपसर्गाणामर्थद्योतकत्वाच्च, अभ्युपगताः । अङ्गीकृत्यावर्तिताः इति यावत् । अनेनैव तेषां निषिद्धत्वं द्योतितम् । **तुमुलः** सान्द्रः ।।

अंशार्थप्रसिद्धार्थयोः शङ्खादयो वाद्यभेदा एव ।। १३ ।।

**ततः [3]श्वेतहर्यैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ।। १४ ।।**

इदानीं देवपक्षीयवृत्तमाह - **ततः श्वेतैरिति** ।। **अध्यात्मार्थे**- 'टु ओश्विगतिवृध्योः' इति धातोः, श्वं ज्ञानं तत्सहितम् इतं = गमनोपलक्षितसर्वकर्मजातं येषां तैः, ज्ञानकर्मकरणै-रित्यर्थः । **हयैः** गच्छन्ति स्वविषयानिति **हयैः** = इन्द्रियैः 'हय गतौ' इति धातुः, **युक्ते** = सहिते ।

१. प्र-अर्थं= प्रः विष्णुः । अकयप्रविसंभूमा इत्युक्तेः ।
२. **'भेरी नाम चर्मपिहितः दीर्घमहादारुकृतो वाद्यविशेषः । पणवः ढक्काविशेषः ।'१.१०.१७** विजयध्वजतीर्थाः ।
३. **'श्वेतैर्हयैः'** इति लक्षालङ्कारे ।

**महति** = सर्वयोनिषु श्रेष्ठत्वात् पूज्ये, **स्यन्दने** = रथरूपे = नृदेहे,'शरीरं रथमेव तु' इति काठकम् । **स्थितौ** = आश्रितौ 'द्वा सुपर्णा' इति श्रुतेः, **माधवः** = रमापतिः, **पाण्डवः** = पाण्डं = प्रमेयं, वाति = जानातीति स तथा जीव इत्यर्थः । तावुभौ **दिव्यौ** पूर्वोक्तविलक्षणौ । शङ्खौ सुखसाधनभूतज्ञानसाधनावादौ, **प्रदध्मतुः** = व्याकुरुताम् ।।

**अंशार्थे** - **माधवः** = भगवान्, **पाण्डवः** = नरः इन्द्रो वा ।

**प्रसिद्धार्थे**- **माधवः** = भगवान्, **पाण्डवः** =अर्जुनः ।। १४ ।।

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ।। १५ ।।**

वाद्यवादकौ विविच्य आह = **पाञ्चजन्यमिति** ।।

**अध्यात्मार्थे**- हृदिन्द्रियनियन्ता भगवान् बिम्बरूपः । **पाञ्चजन्यं** पञ्च = धर्मार्थकाममोक्ष-तत्साधनज्ञानानि, जन्यानि = उत्पद्यानि यस्य तं वादम् । स्वार्थे अण् । **धनञ्जयः** = धनं = मोक्षसाधनं जायते यस्मात् तद् धनञ्जं = ज्ञानं, तद् यातीति स तथा, ज्ञानयोग्यः प्रतिबिम्बो जीव इत्यर्थः । **देवदत्तं** स्वयोग्यतानुसारेण, देवेन = भगवता, दत्तं = ज्ञापितं वादम् । प्रदध्मौ इति पूर्वोक्तवचनविपरिणामेन प्रत्येकमन्वयः । भगवदनन्तरमेव प्राणादीनां वक्तव्यत्वेऽपि अधुना जीवस्य बोध्यत्वेन प्राधान्यात् तदन्त एव वाय्वादिवादानाह- **पौण्ड्रमिति** ।। **भीमः** = विष्णुः 'अतुलः शरभो भीमः' इति सहस्रनामसु पाठात् । तदर्थमेव कर्माणि यस्य स प्राणः ।

यद्वा '**वामदेवो भवो भीमः**' इति कोशात्, भीमः = रुद्रः, तस्य कर्माणि यस्मात् सः '**आभासकोऽस्य पवनः पवनस्य रुद्रः**' इत्युक्तेः, रुद्रस्य प्राणप्रतिबिम्बत्वेन तत्कर्मणामपि तदधीनत्वात् । अवृकः न वृकः = छेत्ता यस्य सः । 'वृक' इति पदे तु वृक्णाति शत्रूनिति स तथा । अत एव अदरः = निर्भयः । **पौण्ड्रं** पुण्ड्राः = तिलकाः तदुपलक्षितचक्रादिमुद्राश्च सन्त्येषामिति पुण्ड्राः = वैष्णवाः,

**'नामचिह्नादिना देहे वह्निना वा मृदां कनम् ।**
**सा बाह्या प्रोच्यते दीक्षा'**

इत्युक्तेः तेषामिमं पौण्ड्रम् । **महाशङ्खं** महत् शं = सुखं, खं ज्ञानं च यस्मात्तं वादम् । **दध्मौ** = व्याकरोत् ।

**अंशार्थे- हृषीकेशः** = विष्णुः, **पाञ्चजन्यं** पञ्च = पञ्चवारं जनिः = प्रादुर्भावो यस्य स पञ्चजनिर्व्यासः - **'तृतीये पञ्चमे चैव षोडशे पञ्चविंशके ।**

**अष्टाविंशे युगे कृष्णः सत्यवत्यामजायत'** इति द्वितीयतात्पर्योक्तेः ।

तदीयः **पाञ्चजन्यः** = ब्रह्मसूत्रमहाभारतादिवादः **दध्मौ**= ख्यापयामास ।

यद्वा = पञ्चमहापातकानि जनयन्ति ते पञ्चजनाः = असुराः, तदीयं **पाञ्चजन्यं** = मायावादादिवादं, **दध्मौ** = व्यधमत् । धमतिशब्दस्य वधकर्मसु पाठात्, निरस्तवानिति यावत् । **धनञ्जयः** = इन्द्रः, **देवदत्तं** देवेन = ब्रह्मणा, दत्तम् = उपदिष्टम् **'य एषोऽन्तरक्षिणि पुरुषो दृश्यते स एष आत्मा'** इत्याकारकं वादं **दध्मौ** = ख्यापयामास । यद्वा- अदेवाय = विरोचनाख्याय असुराय, दत्तं = योग्यतानुसारेण ज्ञापितार्थं **दध्मौ** = व्यधमत् । **भीम-कर्मा** = उग्रकर्मा, **वृकोदरः** = प्राणः । **पौण्ड्रं** 'मडिभूषायां पुडि **च**'इति धातोः, भूषितं शङ्खं, दध्मौ = अवादयत् ।।

**प्रसिद्धार्थे हृषीकेशः** = कृष्णः, **पाञ्चजन्यं** = पञ्चजनासुराङ्गजम् । **धनञ्जयः** = अर्जुनः, **देवदत्तम्**= अग्निदत्तम् ।। १५ ।।

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**

**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ।। १६ ।।**

**अनन्तेति ।। अध्यात्मार्थे कुन्तीपुत्रः** = कुं = पृथिवीं, तनोति प्रजाभिरिति कुन्ती, ईपुत्रः = मायारूपायाः इयः = लक्ष्म्याः पुत्रः **'लक्ष्मीरीकार उच्यते'** इत्युक्तेः, युधि = युद्धकर्मणि स्थिरः = प्रवृत्तिरहितः । यद्वा कामक्रोधादिभिः सह युद्धे स्थिरः = अचलः, **राजा** देवेशो ब्रह्मा । **अनन्तविजयम्** अनन्तस्य = देशकालगुणतो अन्तरहितस्य विष्णोः विजयः = सर्वोत्कर्षो यस्मिन् तं ब्रह्मसूत्रात्मकं वादं **दध्मौ** = ख्यापयामास ।

**नकुलः** नकुं = भुवं, लाति = स्वीकरोति, गमने नकुलः = गरुडः । **सुघोषम्** = अपौरुषेयत्वेन शोभनो घोषः = वर्णात्मकः शब्दो यस्मिन् तं वेदरूपं वादं **'सुपर्णोऽखिल-वेदानाम्'** इति ऋग्भाष्योक्तेः । **सहदेवः** = देवेन = विष्णुना रामकृष्णाद्यवतारेषु शयने सह वर्तत इति शेषः, इत्यर्थः । **मणिपुष्पकम्** = मणिभिः मुक्ताफलैः पुष्यते स मणिपुष्पः = हंसः, तत्सदृशरूपत्वात् हंसरूपी विष्णुः, कः = ब्रह्मा तदुभयसंवादरूपत्वात् पञ्चरात्रात्मकं वादमित्यर्थः ।

**'पञ्चरात्रस्य नागराट्'** इत्यृग्भाष्योक्तेः ।

अंशार्थे **कुन्तीपुत्रः** = कुं = भूमिं तनोति प्रकाशेनेति कुन्तः सूर्यः तत्पत्नी कुन्तीसञ्ज्ञाख्या तस्याः पुत्रो = यमः **'धर्मराजो यमः पूर्वम्'** इत्युक्तेः, अधर्मेण साकं यद्युद्धं तस्मिन् स्थिरः। **अनन्तविजयं** = तन्नामकं शङ्खम् । नकुलः सहदेवश्च अश्विनौ ।

**'नकुलः सहदेवौ द्वौ नासत्यौ सम्प्रकीर्तितौ'** इत्युक्तेः ।

प्रसिद्धार्थे- युधिष्ठिरः = धर्मराजः । सुघोषाख्यं मणिपुष्पकाख्यं च ।। १६ ।।

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**

**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ।। १७ ।।**

**काश्य इति ।।** अध्यात्मार्थे - **काश्यः** = दिशः, अभिमानिनयन्यायेन तद्देवताः ।

**परमेष्वासः** परमस्य = विष्णोः, इषुत्वेन = बाणत्वेनास्त इति, प्राणपुत्रः प्राण इत्यर्थः

**'वायुपुत्रो हरेर्बाणः'** इत्युक्तेः ।

**शिखण्डी** = 'शा तनूकरणे' इति धातोः, श्यति ऊनीकरोति तमो हिमं वा । सः शी, खम् = आकाशम् अमति = गच्छति 'अम गत्यादौ', अमन्ताड्डः । कर्तर्यर्थे णिनिः। सूर्य इत्यर्थः ।

**महारथः** महान् = जलचरश्रेष्ठो मकरः, रथः = वाहनं यस्य सः = वरुणः, चशब्दादश्विनावपि, **धृष्टद्युम्नः** धृष्टं = धर्षणशीलं, द्युम्नं = बलं यस्य सोऽग्निः ।

**विराटः** = 'ला आदाने' इति धातोः रलयोरभेदाच्च, विशेषेण राम् = आदानादिक्रियाम् अटयति = प्रापयतीति विराटः = दक्ष इत्यर्थः ।

सात्यकिः सत्यं = सत्यलोकः, कं = शीर्षं यस्य स विष्णुः । **'सत्यं तु शीर्षाणि सहस्रशीर्ष्णः'** इति भागवते , तं प्रापयतीति विराटः = दक्ष इत्यर्थः । वा **सात्यकिः** विष्णुः तदीयोऽवतारः सात्यकिः जयन्त इत्यर्थः । **'जयन्तो वासुदेवांशः'** इति भागवते षष्ठे ।

**अपराजितः** अपरस्मिन् = पश्चिमे द्वारे, आ = सर्वतः, जितं = जयः = उत्कर्ष इति यावत्, यस्य स मित्र इत्यर्थः, चशब्दान्मनुरपि । अत्र शिष्टाश्चाः समुच्चयार्थे ।

अंशार्थे = काश्यः कश्चिद्देवः । शिखण्डी = द्युवसोः पत्नी वराङ्गी नाम्नी, वरात् पुंस्त्वम्,

**'अम्बा सा भीष्मभार्यैव पूर्वं नाम्ना वराङ्गिनी'** इत्युक्तेः ।

**'अम्बैवाभूच्छिखण्डीति स्फुटमुद्योगपर्वणि'** इति ।

**धृष्टद्युम्नः** = अग्निः **'धृष्टद्युम्नस्तस्याऽनलः'** इत्युक्तेः ।

**विराटः** हाहागन्धर्वः । **सात्यकिः** = संवहनामा कृष्णपक्षाभिमानी देवः ।

**प्रसिद्धार्थे** । **काश्यः** = काशीराजः, **शिखण्डी** = द्रुपदपुत्रः । **धृष्टद्युम्नः** = द्रौपदीभ्राता । **विराटः** = मत्स्यराजः । **सात्यकिः** = युयुधानो यादवः ।। १७ ।।

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**

**सौभद्रश्च महाबाहुः[१] शङ्खान् दध्मुः पृथक् पृथक् ।। १८ ।।**

**द्रुपद इति** ।। **अध्यात्मार्थे- द्रुपदः** = द्रुतं पदानि तदुपलक्षितवर्णवाक्यादीति यस्मात्स बृहस्पतिः । **द्रौपदेयाः** = शिवजाः पञ्चप्राणाद्याः । **सर्वशः** इत्यनेन प्राणपुत्राः शिवपुत्राश्च शब्दाद्यभिमानिन इति सूचितम् । **हे पृथिवीपते** शरीराद्यभिमानिन्, **सौभद्रः** = विनायकः, चशब्दाद्वाय्वग्निवरुणधरादयो गृह्यन्ते । यद्वा चशब्दाद्वायोरेव ग्रहणम् । महाप् इति पदं, महत्यः आपो यस्मात् सः महाप् अग्निः । **'अग्नेरापः'** इति श्रुतेः । पुनः महत्यः आपः यस्य स महाप् = वरुणः । अधीनार्थे षष्ठी । पुनः महत्यः =भूयस्त्ववत्यः गुरुत्ववद्द्रव्यमध्ये आपो यस्याः सकाशात् सा पृथिवी **'भूयस्त्वं चापाम्'** इत्युक्तेः । महति महयति वा देवतामनेन पुरुषस्येति महत् । मह्यते वा देवतात्वात् इति वा । **पृथक्** = भगवतो जडमपि पृथक्, जीवोऽपि पृथक्, 'इत्याहुस्तत्त्ववादिनः' इति शेषः । इति **शङ्खान्** = सुखज्ञानसाधनान् वादान् **दध्मुः** = ख्यापयामासुः । यद्वा, भगवान् पृथक्तः, पृथक्= एकरूप इति ।

**अंशार्थे- द्रुपदः** = हूहूगन्धर्वः, **द्रौपदेयाश्च** = विश्वेदेवाः, **सौभद्रः** = बुधः । हे **पृथिवीपते** = षड्जादिसप्तस्वराणां भ्वादिसप्तलोकस्थानत्वात् पृथिवीशब्देन षड्जस्वरः, धृतराष्ट्रगन्धर्वस्य तदभिमानित्वात्तं प्रति पृथिवीपते इति सम्बुद्धिः ।। **प्रसिद्धार्थे** द्रुपदः पार्षतः । द्रौपदेयाः प्रतिविन्ध्य-श्रुतसोमश्रुतकीर्तिशतानीकश्रुतकर्माख्याः । हे **पृथिवीपते** = धृतराष्ट्र, **सौभद्रः** = अभिमन्युः, **शङ्खान्** = दरान्, पृथक् पृथक् = प्रातिस्विकत्वेनेत्यर्थः, एककाल एव ।। १८ ।।

**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।**

**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ।। १९ ।।**

---

१. **'अर्जिदृषिकम्प्यमिपसिबाधाम् ऋजिपशितुक्बुग्दीर्घहकाराश्च'(उणादि)**इति बाधेर्हकारादेशः, बाहुः इति **४.८.१ इति** विजयध्वजतीर्थाः ।

विपक्षाणां नानावाद्यघोषाणामतुमुलत्वमेवाभिधाय स्वपक्षीयाणां केवलशङ्खशब्दानामेव परहृदयविदारकत्वमेवाऽभिधत्ते- **सघोष इति** ।।

**अध्यात्मार्थे-** धार्तराष्ट्राणां = **'धं धने निधने धीरे'** इत्येकाक्षरात्, धेन = नादेन, आर्तानि = राष्ट्राणि = देशाः येषां तेषामसुराणाम् ।

**अन्यत्र** दोषरूपाणाम् **'सर्वदोषात्मकाः परे धार्तराष्ट्राः'** इत्युक्तेः ।

**अपरत्र** = धृतराष्ट्रपुत्राणाम् **अनुनादयन्** = प्रतिध्वनयन् ।। १९ ।।

**अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।**

**प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ।। २० ।।**

**अथेति** ।। **अध्यात्मार्थे- अथ व्यवस्थितान्** इत्येकं पदं, थः = प्राणः, **'तथौ प्राणात्मकौ प्रोक्तौ'** इत्युक्तेः, वीन् = पक्षिणः अवतीति व्यवः = गरुडः, ताभ्यां सहस्थितो विष्णुः = व्यवस्थितः, स नास्ति येषु तान् धार्तराष्ट्रान् असुरान् । दृष्ट्वा, **कपिध्वजः** = कम्पयन्ति = चेष्टयन्ति शरीरमिति कपयः = जीवाः, तेषां मध्ये ध्वजः = श्रेष्ठः

**'ध्वजः पूर्वदशा गृहे ।**

**शिश्ने चिन्हे पताकायां खट्वाङ्गे शौण्डकेऽपि च'** इति हैमः ।

मोक्षयोग्यत्वादुत्तमो जीव इत्यर्थः । **शस्त्रसम्पाते** = शस्त्रेणैव सम्पातः = पराजयरूपो यस्मिंस्तस्मिन् वादरूपे युद्धे प्रवृत्ते आरब्धे सति । **धनुः** = प्रणवं **'धनुर्हि तस्य प्रणवं पठन्ति'** इति भागवते । **उद्यम्य** = उच्चार्य, सर्ववर्णानामादित्वात्, भाषणस्य च वर्णमयत्वादिति भावः । पाण्डोः ज्ञानमयस्य विष्णोः प्रतिबिम्बः पाण्डवः । **हृषीकेशं** = सर्वेन्द्रियाणां मुख्यप्रवर्तकं स्वबिम्बरूपं हरिं प्रति इदं वक्ष्यमाणमाह । **हे महीपते** = शरीराभिमानिन् जिज्ञासो ।

**अंशार्थे धार्तराष्ट्रान्** = पापरूपान् असुरान्, **कपिध्वजः** = कम्पयति पृथिवीमिति कपिः = ऐरावतः, तेन ध्वजति = गच्छतीति इन्द्रः 'ध्वजगतौ' इति धातोः , **पाण्डवः** = पाण्डं ज्ञानविषयं भगवन्तं, वाति = शरणं गच्छतीति स तथा हे महीपते, पूर्ववद्गन्धर्व ।

**प्रसिद्धार्थे अथ** = शङ्खघोषानन्तरं, **व्यवस्थितान्** = व्यवस्थितया स्थितान्, **धार्तराष्ट्रान्** = दुर्योधनादीन्, दृष्ट्वा **कपिध्वजः** = हनुमत्केतुरर्जुनः, **शस्त्रसम्पाते** = शस्त्रप्रहारे, प्रवृत्ते सति **पाण्डवः** = पाण्डुराजपुत्रः **हृषीकेशं** = कृष्णमिदमाह **हे महीपते** = धृतराष्ट्र ।। २० ।।

**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**

**अर्जुन उवाच**

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ।। २१ ।।**

**सेनयोरिति ।।** **अध्यात्मार्थे**- बिम्बस्य च्युतिरहितत्वे प्रतिबिम्बस्यापि युद्धात् च्युतिर्न भवेत् इत्यतो अच्युतेति सम्बुद्धिः। **यावदेतान्** = परान्, योद्धुकामान्, अवस्थितान्, नतु कृतयुद्धारम्भान्, निरीक्षे, तावदेवोभयोः = सुरासुरपक्षीययोर्मध्ये, अन्तःस्थितयोरिति शेषः। **सेनयोः** = सा लक्ष्मीः इनः = तत्स्वामी, तयोः **'सपरोक्षे च सा लक्ष्मीः'** इत्येकाक्षरः, **'इनः स्वामिनि सूर्ये च'** इति विश्वः । लक्ष्मीनारायणयोरित्यर्थः । रथं = ज्ञानं 'रथ गतौ' इति धातोः गत्यर्थानां च ज्ञानार्थत्वात् । **स्थापय** = स्थिरीकुरु, तेषु युद्ध्यमानेषु ममापि युद्धप्रसक्त्या श्री शयोर्ज्ञानस्थित्ययोगादिति भावः ।

**अंशार्थे- हे अच्युत** = च्युतं = च्यवनं येषामस्तीति 'अर्श आद्यच्' प्रत्ययेन च्युताः = युद्धप्रद्रुताः तद्विलक्षण भगवन् = उभयोः सुरासुरपक्षसम्बन्धिन्योः सेनयोर्मध्ये मे **रथं** = शरीरं **'शरीरं रथमेव च'** इति श्रुतेः, **स्थापय** = रक्ष । स्थितेः रक्षणार्थकत्वात्, त्वया रक्षिते न भयं मम किञ्चिदिति भावः, इतीन्द्रोक्तिः ।

**प्रसिद्धार्थे**- हे **अच्युत** = सारथेश्च्युतिरहितत्वे रथिनोऽपि युद्धात् च्युतिर्न भवतीत्यतोऽच्युतेति सम्बुद्धिः, हे कृष्ण, **उभयोः** कुरुपाण्डवपक्षसम्बन्धिन्योः सेनयोर्मध्ये मे **रथं** = स्यन्दनं **स्थापय** निधेहि, **यावत्** यावता । रथस्थापनेन, एतान् योद्धुकामान् अवस्थितान् सर्वान्, अहं निरीक्षे तथा रथं स्थापयेत्यर्थः । यद्वा यावत्, एतान् योद्धुकामानवस्थितान् नतु कृतयुद्धारम्भान्निरीक्षे तावद्रथं स्थापय आरम्भे जाते यत्र तत्र युद्धप्रसक्त्या मध्ये रथस्थापनायोगादिति भावः ।। २१।।

**यावदेतान् निरीक्ष्येऽहं योद्धुकामानवस्थितान् ।**

**कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ।। २२ ।।**

एवं सम्प्रार्थ्य पृच्छति- **कैरिति** ।। अस्मिन् **रणसमुद्यमे** = युद्धारम्भे मया कैः सह योद्धव्यम्, पक्षत्रयेऽप्यमेवार्थः ।। २२ ।।

**योत्स्यमानानवेक्ष्येऽहं य एतेऽत्र समागताः ।**

**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ।। २३ ।।**

योत्स्यमानेन योद्धव्यमित्युत्तरमाशङ्कयपरिहरति-**योत्स्यमानानिति** ।। **अत्र** = सङ्ग्रामे परपक्षे वा, **ये समागताः**= तान् सर्वान् **योत्स्यमानानेव** = युद्धकर्तॄनेव **अवेक्ष्ये** = पश्यामि । तस्मादादौ कैः सह योद्धव्यमित्यर्थः । महामल्लभङ्गन्यायमाश्रित्य प्रबलैः अथवा सूचीकटाहन्यायमाश्रित्य दुर्बलैः सहादौ योद्धव्यमिति प्रश्नाशयः । **'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'** इत्युक्तेः, सर्वराज्ञां त्वया सह युद्धेन किं फलमित्यत आह -**धार्तराष्ट्रस्येति**।। **धार्तराष्ट्रस्य** = अधर्मस्य, कलेर्वा दुर्योधनस्य वा प्रियसम्पादनमेव प्रयोजनमिति भावः।।२३।।

**सञ्जय उवाच**

**[१]एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**

**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ।। २४ ।।**

**एवमुक्त** इति ।। **अध्यात्मार्थे** - **गुडाकेशेन** गुडाका = निद्रा, तस्याः ईशेन, अधीननिद्रेणेत्यर्थः, त्यक्तनिद्रत्वात् स्वाभीष्टोद्योगिना, जीवेनेति यावत् । एवं सेनयोरुभयोः इत्याद्युक्तप्रकारेण उक्तः **हृषीकेशः** इन्द्रियनियन्ता बिम्बरूपो हरिः **उभयोः** सैन्ययोर्**मध्ये** स्थितयोः **सेनयोः** लक्ष्मी-नारायणयोः,**रथोत्तमम्** अन्यविषयज्ञानोत्तमं ज्ञानं **स्थापयित्वा** स्थिरीकृत्य उवाचेत्युत्तरेणान्वयः।।

**अंशार्थे**- गुडाकेशेन देवत्वेन त्यक्तनिद्रत्वादिन्द्रेणेत्यर्थः । उभयोः सेनयोर्मध्ये 'स्थितस्य' इति शेषः तस्य इन्द्रस्य **रथोत्तमं** = मनुष्यशरीरोत्तमं शरीरं **स्थापयित्वा** =पालयित्वा ।।

**प्रसिद्धार्थे**- गुडाकेशेन अर्जुनेन, हृषीकेशः कृष्णः, **रथोत्तमं** विजयरथं, **स्थापयित्वा** निधाय ।। २४ ।।

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**

**उवाच पार्थ[२] पश्यैतान् समवेतान् कुरूनिति ।। २५ ।।**

एवं प्रार्थितं कृत्वा प्रश्नोत्तरमाह = **भीष्मेति** ।। **अध्यात्मार्थे**- तसेः सार्वविभक्ति-कत्वात् भीष्मद्रोणप्रमुखानां = क्रोधकामाभिमान्याद्यानां सर्वेषामसुराणामित्यर्थः । यद्वा **भीष्मद्रोणप्रमुखतः**

---

१. 'सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य ।
स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ।।(भाग१.९.४२)
'सेनयोरुभयोर्मध्ये रथं स्थापय मे अच्युत' इति सख्युरर्जुनस्य वचः निशम्य सपदि वचः श्रवणानन्तरं निजपरयोः ..।।।' इत्यादि विजयध्वजीये ।

२. 'नर्माण्युदाररुचिरस्मितशोभनानि हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति' -भाग-१.१५.१८ ।

= क्रोधकामसन्मुखे, चशब्दः प्रमुखशब्दानुकर्षणार्थः । **महीक्षितां** = महीं = महाजनतां क्षिण्वन्ति ये तेषां, **सर्वेषां च** प्रमुखे स्थापयित्वेति पूर्वेणान्वयः । **हे पार्थ** पातीति-पः= विष्णुः तस्यार्थो यस्येति सम्बुद्धिः, हे जीवेत्यर्थः । **एतान्** = अग्रस्थान्, **समवेतान्** = मिलितान् **कुरून्** = कुत्सितं रुवन्ति = भाषन्ते तान् । 'रु शब्दे' तान् असुरान् पश्य । नात्र कोप्ययोध्य इति भावः । इत्युवाच ।।

**अंशार्थे-** भीष्मद्रोणप्रमुखतः द्युवसुगुर्वादीनां सर्वेषां च महीक्षिता = स्वमहिम्नैवेक्षिता = साक्षी, अं = ब्रह्मरूपः **'अं भवेत्परमं ब्रह्म'** इत्येकाक्षरः। तादृशो हरिः हे पार्थ इन्द्र, **एतान्** = दृश्यमानान् **समवेतान् कुरून्** = पापाभिमानिनोऽसुरान् पश्येत्युवाच ।

**प्रसिद्धार्थे-** हे कौन्तेय एतान् **कुरून्** = कुरुवीरान्, **समवेतान्** = आविष्टान् 'असुरः' इति शेषः, अतः सर्वेऽपि योद्धव्या इति भावः । यद्वा = एतान् कुरून् पश्य । तत्रापि अपररूपत्वादेतान् इति एकारप्रश्लेषः । अं = विष्णुम्, इतान् = शरणागतान् समव = सम्यग्रक्षेत्यर्थः । सं = सम्यक्त्वेन एतान् मया निर्दिष्टान्, अवेति वा ।

यद्वा -सं = विष्णुं **'अकयप्रविसंभूमसखहा विष्णुवाचकाः'** इत्यभिधानम् । इतान् = शरणं प्राप्तान्, अव = रक्ष, हे **पार्थप** = पस्य विष्णोः अर्थं = कामितं पातीति तथाविध अर्जुन, एतान् **कुरून्** = कुत्सितभाषिणः, श्य = जहि ।

इदं 'कैर्मया सह योद्धव्यम्' इत्यस्योत्तरं ज्ञेयम् ।। २५ ।।

**तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।**
**आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ।।२६ ।।**

**श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।**

अथ भगवदाज्ञानुसारिणीं तत्प्रवृत्तिमाह = तत्रेति ।।

**अध्यात्मार्थे -पार्थः** = जीवः, **तत्र**= तदा सेनयोर्वा, स्थितान् **पितॄन्** = वसून् **पितामहान्** = रुद्रान्, **अथ**शब्देन **प्रपितामहान्** = आदित्यान्,

**'वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः ।**
**प्रपितामहास्तथाऽऽदित्याः श्रुतिरेषा पुरातनी'** इति मन्वादिस्मृतौ ।

यद्वा **पितॄन्** = कर्माभिमानिनः पुष्करादीन्, **'कर्मणा जायते जन्तुः'** इत्युक्तेः, **'शेषेणेमं**

**लोकं व्रजति'** इति श्रुतेश्च, **'पुष्करः कर्मपोऽपि'** इत्युक्तेश्च ।

**पितामहान्** = वेदान् **'कर्म ब्रह्मोद्भवं विद्धि'** इत्युक्तेः ।

**आचार्यान्** = सदसच्छास्त्रकर्तॄन्, **मातुलान्** = अविद्याख्यमातुर्बन्धरूपान् मोहादीन्,

**भ्रातॄन्** **'मृत्युर्जन्मवातं वीरदेहेन सह जायते'** इत्युक्तेः तदभिमानिनो यमादीन् ।

यद्वा = मन आदीन् **'आत्मैव ह्यात्मनो बन्धुः'** इत्युक्तेः,

**पुत्रान्** = रोगादीन्, तदभिमानिनो देवानसुरांश्च

**'स्वदेहजोप्यामयवत् सुतो हि सः'** इत्युक्तेः ।

**पौत्रान्** = व्यथाभिमानिनः , **'रोगजन्यां व्यथां जयेत् '** इत्युक्तेः ।

यद्वा **पुत्रान्** = विषयबुद्धौ जातान् मनोवृत्तिरूपान्,

**पौत्रान्** = तज्जातान् वृत्त्यन्तररूपान् ।

**'तस्यामजनयत्पुत्रान् पुरञ्जन्यां पुरञ्जनः । शतान्येकादश विराड्'** इति भागवते।

**'पुत्राणां च भवन्पुत्रा एकैकस्यां शतं शतम्'** इति च ।

**सखीन्** = अविज्ञातादीन्, 'योऽविज्ञाताह्वयस्तस्य पुरुषस्य ' इत्यादेः,

**श्वशुरान्** = **'बुद्धिं तु प्रमदां विद्यात्'** इति भागवतोक्त्या सुबुद्धिदुर्बुद्धिरूपस्त्रीपितरः तत्वदर्शिनो मायिनश्च ।

**'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तात्त्वदर्शिनः'** इत्युक्तेः ।

**'मायिनश्चन्यथाज्ञानं स्वशिष्येभ्योदिशन्कलौ'** इत्युक्तेश्च

**सुहृदः** = सुमनसः, हितेच्छव इति यावत्, **उभयोः** = सुरासुरयोः, सेनयोरपि । चशब्दाद्यथासम्भवमेवेत्यर्थः ।।

अंशार्थे- **पार्थः** पः = विष्णुः = तमुपेन्द्रत्वेन अर्थयति =कामयति स तथा इन्द्रः,

**पितॄन्**, रुद्रादीन्, **पितामहान्** = ब्रह्मादीन्, **अथशब्देन प्रपितामहान्** निरन्नत्वाद्विष्णुः **'अनश्नन्नन्यः'** इति श्रुतेः, **'यस्मादन्नं थमुच्यते'** इति कौर्मे च ।

**आचार्यान्** = बृहस्पत्यादीन्, **मातुलान्** = आकूतिसूनुयज्ञादीन् यज्ञस्य च इन्द्रमातृमातृष्वस्रेयत्वात्, तस्यैवोपेन्द्रत्वात्,

**भातॄन्** = सूर्यादीन्, **पौत्रान्** = जयन्तसुतादीन्, **सखीन्**= प्रवीरादीन्, **श्वशुरान्** =

पुलोमादीन्, **सुहृदः** = स्वसम्बन्धिनः जयन्तश्वशुरवज्रनाभादीन् ।

**प्रसिद्धार्थे** - **पार्थः** = कौन्तेयोऽर्जुनः, **पितॄन्** = भूरिश्रवआदीन्, **पितामहान्** = भीष्म-सोमदत्तादीन्, **अथ**शब्देन प्रपितामहान् बाह्लीकादीन्, **आचार्यान्** =द्रोणादीन्, **मातुलान्** = शल्यशकुन्यादीन्, **भ्रातॄन्** = युधिष्ठिरदुर्योधनादीन्, **पुत्रान्** = सौभद्रादीन्, **पौत्रान्** = घटोत्कचपुत्रादीन्, **सखीन्** = कृष्णाश्वत्थामादीन्, **श्वशुरान्** = द्रुपदादीन्, **सुहृदः** = विराटादीन्, **उभयोः** = कुरुपाण्डवयोः ।। २६ ।।

**तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ।। २७ ।।**
**कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।**

अतः ममताभिमान्यसुराविष्टो जीवः आत्मात्मीयद्विड्वधं भगवत इष्टमपि अधर्मत्वेन मन्यमान आहेत्याह = **तानिति** ।। **कौन्तेयः** कुं = भूमिं देहं वा तनोति = विस्तारयतीति कुन्तिः = विष्णुः, तस्यायं प्रतिबिम्बत्वात् कौन्तेयः = जीवः, इन्द्रः, अर्जुनो वा । **अवस्थितान्** = युद्धभूमिस्थितान्, **तान्** = पित्रादीन्, **सर्वान् बन्धून्** = स्वाप्तान् समीक्ष्य, **अपरया** = न परः = परकीयः, यस्यां तया ममतारूपयेत्यर्थः । **कृपया** = तदभिमान्यसुरेणेति यावत् । आविष्टः, **विषीदन्** = खेदं प्राप्नुवन् सन् **इदं**= वक्ष्यमाणम् **अब्रवीत्** ।। २७ ।।

( अर्जुनविषादः )

**अर्जुन उवाच**

**दृष्ट्वेमं स्वजनं कृष्ण[1] युयुत्सुं समुपस्थितम् ।। २८ ।।**

**दृष्ट्वेति** । **इमं**= पित्रादिरूपं स्वजनम्, **युयुत्सुं** = योद्धुकामम् । यद्वा **युयुत्सुं** = धार्तराष्ट्रं वेश्यासुतम्, समुपस्थितं परपक्षादस्मान् प्राप्तं च दृष्ट्वा = अयं केवलं स्वीयममताहीनः इति चित्रं दृष्ट्वा इत्यर्थः । मम **गात्राणि** = अङ्गानि, **सीदन्ति** = स्वस्वव्यापारासमर्थानि भवन्ति मुखं च शुष्कं भवतीत्यर्थः ।। २८ ।।

**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।**
**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।। २९ ।।**

---

१. 'कृषति विलिखति दारयति मोहपटलमिति कृष्णः' १.८.२४ इति विजयध्वजतीर्थाः ।

वेपथुश्चेति ।। वेपथुः = कम्पः, रोमहर्षः = रोमाञ्चोद्भवो भवति ।। २९ ।।

**गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।**
**नच शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।। ३० ।।**

**अध्यात्मार्थे** - **गाण्डीवं** गाण्डी = अ मे ति त्रयाणां ग्रन्थिः सोऽस्यास्तीति गाण्डी वं प्रणवः । 'कृवृकात् इति वा ङीप्, मतुबर्थे वः, हस्तात् = हस्तः शुण्डादण्डः सोऽस्यास्तीति हस्तः गणपतिः । 'अर्शआद्यच्' अभिमान्यभिमन्यमानयोरैक्यव्यपदेशात्, आकाशोऽनेन लक्ष्यते, हृदाकाशादित्यर्थः, **स्रंसते** गच्छति, चित्ताकाशे प्रणवस्थैर्याभावेन तद्विचारहीनोऽस्मीति भावः ।

**अंशार्थे** । **गाण्डीवं** = धनुः **'जिष्णोर्धनुषि कोदण्डे गाण्डीवं गाण्डिवं तथा'** इति शाश्वतः **'कोदण्डो धनुर्मात्रेऽपि'** इति भानुजीदीक्षितः ।। **प्रसिद्धार्थे** **गाण्डीवं** = मद्धनुः त्वक्च परिदह्यते = सन्तप्यत एव ।। **न चेति** ।। अवस्थातुं = युद्धे वीरासनेन अवस्थातुं नैव शक्नोमि । मे मनश्च भ्रमतीव वध्येषु अवध्यत्वेन पश्यति, इमे वध्या अवध्यावेति संशयम् इवशब्देन दर्शयति,

**'किञ्चित्वे चोभयत्वे च संशये सदृशो तथा ।**
**इवशब्दः प्रयुज्येत न्यक्कारेऽपि च पण्डितैः'** इति शब्दनिर्णये ।

ननु हन्तुं शक्याशक्यत्वरूपसंशयस्तु सुशकुनरूपविशेषदर्शनेन परिहार्य इत्यत आह— **निमित्तानीति** ।। स्वस्य सव्यसाचित्वेन वामाङ्गस्फुरणादेः सुशकुनत्वेऽपि ममतासुरावेशवशाद् विपरीतानेवामन्यतेति भावः ।। ३० ।।

**निमित्तानि च पश्यामि विपरीतानि केशव ।**
**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।। ३१ ।।**

'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति वक्ष्यमाणादिशा उभयथाऽपि श्रेयः प्राप्तिं किं नाङ्गीकुरुषे इत्यत आह— **न च श्रेय इति** ।। पारत्रिकं श्रेयोऽदृश्यत्वादनङ्गीकार्यं, महीभोगादिरूपं दृश्यं श्रेयस्तु **आहवे** = युद्धे स्वजनं हत्वा नैवानुपश्यामि । राज्यस्य स्वजनपोषणैकफलत्वादिति भावः ।। ३१ ।।

**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।**
**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ।। ३२ ।।**

ननु स्वजनरूपशत्रुवधं विना विजयस्ते कथं स्यादित्यत आह— **न काङ्क्ष इति** ।। तद्विना राज्यानुपलम्भ इत्यत आह- **न च राज्यमिति** ।। तर्हि सुखरूपफलानाकाङ्क्षायाम् अन्य-फलाभावाच्च राज्यफलमाक्षिपति- **किं न इति** ।। भोगाः फलमिति चेत्तत्राह- **किं भोगैरिति** ।। अन्यथा जीवनानुपपत्तिरित्यत आह -**जीवितेन वेति** ।। वाशब्दः, किंशब्दानुकर्षणार्थः।।३२ ।।

**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।। ३३ ।।**

'न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे' इत्युक्तं स्पष्टयति - **येषामर्थ इति** ।। **नः** = अस्माकं, **येषामर्थे** = यत्कृते राज्यादि **काङ्क्षितम्** । अत्र काङ्क्षितशब्दस्य लिङ्गवचनविपरिणामेनोभयत्रान्वयः ।। यद्वा **एषामर्थे** = आचार्यादिभ्यः युद्धेन राज्यं नाहर्तव्यं किन्तु तेषामर्थ एव त्याज्यं, स्वयं नाकाङ्क्ष्यमित्यर्थे, राज्यादि **नो काङ्क्षितं** = न काङ्क्षितम्, **त इमे** सर्वे **युद्धे** = युद्धविषये **अवस्थिताः** । किं कृत्वेत्यतः, **प्राणान्** लक्षणया प्राणाद्याशाः **त्यक्त्वा** । अस्तु प्राणाशापरित्यागः, तथापि '**यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक्**' इत्युक्तदिशा धनार्थे युद्धैव स्थानं स्यादित्यत उक्तम् - **धनानि चेति** ।। धनानि च त्यक्त्वा । तस्मात्तेषां निष्फलप्रवृत्त्याऽज्ञत्वं पश्यता प्रेक्षावता मया तादृशी प्रवृत्तिर्न कार्येति भावः ।। ३३ ।।

**आचार्याः पितरः पुत्राः तथैव च पितामहाः।**
**मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।। ३४ ।।**

ते क इत्यत आह = **आचार्या इति** ।। एते प्रोक्तार्था एव । अत्र सखिस्थाने श्यालशब्दोक्तेः, सुभद्राबन्धुत्वात्तदर्थः कृष्ण एवेति **प्रसिद्धार्थे** ।।

**अध्यात्मार्थे तु-** बुद्धिबन्धुत्वात्प्राणाभिमानिनः '**बुद्धिः प्राणस्तु तैजसौ**' इत्युक्तेर्भागवते ।

**अंशार्थे** - पौलोमाः शचीबन्धुत्वादित्यर्थः । ननु श्यालशब्देन कृष्णग्रहणे तस्यापि निष्फल-प्रवृत्त्याऽज्ञत्वप्रसक्तिः स्यादिति चेन्न । योद्धृत्वाभावात् । योद्धृणामेव हि तदिति बोध्यम्। पूर्वोक्तानां मध्येऽत्र भ्रातृणामग्रहणं तु, तत्र भातृणां '**तत्रापश्यत्स्थितान् पार्थः**' इत्यनेन दृग्विषयत्वोक्तेरत्र च '**एतान्न हन्तुमिच्छामि**' इत्युक्त्या हननेच्छाऽविषयत्वोक्तेः, युधिष्ठिरादीनां सौहार्देन दुर्योधनादीनां च भीमप्रतिज्ञातवधत्वेन सर्वभ्रातृणां सर्वभ्रातृणां हननेच्छा-विषयत्वाभावादिति बोध्यम् ।। ३४ ।।

**एतान् न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ।। ३५ ।।**

फलितमाह = **एतानिति ।।** ते यदा त्वां हन्युः तदा त्वमपि स्वयमेव हनिष्यसीत्यत उक्तम् - **घ्नतोऽपीति ।।** हनने प्रवृत्तानपीत्यर्थः । पृथिवीराज्यलोभादेव हनिष्यसीत्यत आह - **अपीति** ।। त्रैलौक्यराज्यस्यापि हेतोः प्राप्त्यर्थं नेच्छामीति पूर्वेणान्वयः । **किं नु** = किमु वक्तव्यं **महीकृते** = पृथिवीराज्यमात्रप्राप्त्यर्थं नेच्छामीति ।। ३५ ।।

**निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्दन ।**
**पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ।। ३६ ।।**

ननु पूर्वं क्लेशदानां हनने प्रीतिरुत्पद्यते । अतो हन्तव्या इत्यत आह- **निहत्येति ।।** न कापीत्यर्थः, तत्र हेतुः **न इति ।।** अस्मदीयानित्यर्थः ।। भवता सम्प्रदाय एव सर्वार्दनं कार्यमिति, नास्माकं तथेति सूचनाय जनार्दनेति सम्बुद्धिः । प्रत्युत अनर्थप्राप्तिरेवेत्याह = **पापमिति ।।** 'आततायिनमायान्तं हन्यादेवाविचारयन्' इत्यतः आततायिशब्देन स्वानेव विशिनष्टि ।। यद्वा आततायिनोऽपि एतान् हत्वा स्थितानिति शेषः । अन्यथा ल्यबन्ततिङन्तयोरेककर्तृकत्वोपपत्तेः । दोषाङ्गीकारे तु, हतिस्थितिरूपक्रिययोः एककर्तृकत्वोपपत्त्या आश्रयणरूपक्रियायाः पृथगन्वयेन दोषाभाव इति भावः । अस्मान् पापमेवाश्रयेत्, एव शब्देनार्थप्राप्तिर्नास्तीति ध्वनितम् ।। ३६ ।।

**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।**[1]
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ।। ३७ ।।**

निगमयति ।। अध्यात्मार्थे - **तस्मात्** = अर्थानर्थप्राप्तिपरिहाराभावाद् वयम् , **धार्तराष्ट्रान्** 'धं धने निनदे धीरे' इत्येकाक्षरात्, धं = धनरूपं सम्पाद्यमिति यावत्, आर्तराष्ट्रम् = आर्तोपद्रवोयेशान् तान् असुरान्, **स्वबान्धवान्** = स्वेषां स्वकीयतत्वानां, बन्धं = ममताबन्धं अभिमानमिति यावत्, वान्ति = प्राप्नुवन्ति ते बन्धवाः त एव बान्धवाः तान्, स्वीयसम्बन्धित्वादिति भावः । **हन्तुं नार्हाः** = न योग्याः । धार्तराष्ट्रत्वेन वध्यत्वेऽपि स्वीयत्वादवध्या इत्यर्थः । हि = यतः, **स्वजनं** = ममतास्पदजनं **हत्वा कथं सुखिनः स्याम** न कथमपीत्यर्थः ।

१. सबान्धवान् इति पाठान्तरम् ।

यद्वा, अर्हावित्युत्तमपुरुषद्विवचनबलात् आवामिति लभ्यते । तव प्रयोजनाभावान्मम च स्वातन्त्र्याभावादेकैकस्य क्रियाऽयोग्यत्वेऽपि बिम्बत्वेन प्रवर्तकत्वात् त्वं, प्रयोजनार्थित्वादहं चेति मिलित्वा आवाम् । **धार्तराष्ट्रान्** 'षट्सु द्वितीया' इति सूत्रेण धार्तराष्ट्रेषु असुरेषु मध्ये यं कलिं हन्तुम् अर्हाव शक्तौ स्वः स कलिः । **स्वबान्धवान्** = इयं प्रथमाविभक्तिः, सुतरां नास्ति, वं = बले येषां ते स्वबाः = अन्धाः ज्ञानहीनाश्च ते स्वबान्धाः, ते पाल्यत्वेन उपदेशकत्वेन वा विद्यन्तेऽस्येति स तथाऽस्ति । तस्माद्बलज्ञानहीनपतित्वेन तच्छिष्यत्वेन वा दीनत्वान्न हन्तव्य इति शेषः । **हि** यस्मात् **स्वजनं** = स्वेनैव कर्मणा जन्यते जन्म-विकारोपलक्षितनानाविकारं प्राप्यते यः तं, हत्वा वयं सुखिनः =शक्तेन्द्रियवन्तः कथं स्याम। मृतस्य मारणमनुचितमिति भावः ।। **अंशार्थे** - **स्वबान्धवान्** कश्यपवंश्यत्वात्, **धार्तराष्ट्रान्** = पापाभिमानिनिनोऽसुरान् ।

**प्रसिद्धार्थे** - **धार्तराष्ट्रान्** = दुर्योदनादीन् स्वबान्धवानिति हेतुगर्भविशेषणम् । स्वजनहत्यया शोकप्राप्तिरेव, कुतः सुखमिति भावः ।। स्वपालकत्वाद् विनोदेन कृष्णं सम्बोधयति - **माधवेति** ।। भवत्कुल एव स्वजन-वधसम्प्रदायः । कंसेन बालहननात्, त्वया च मातुलादिहननात्, रामेण रुग्मिहनननाच्च, तन्मधुवंशोत्पन्नत्वात्तवैव तदुचितं नास्माकमिति मावः ।। ३७ ।।

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ।। ३८ ।।**

अज्ञैरविहिताचरणेऽपि सुज्ञैर्न तथाऽऽचरणीयमित्याह = **यद्यपीति** द्वाभ्याम् । **एते** = पाप्मानः, असुराः धार्तराष्ट्रा वा । लोभेन तदभिमानिना उपहतं = प्रणाशितं, चेतः = ज्ञानं येषां तथा सन्तः । कुलक्षयेण कृतं = सम्पादितं दोषं, **मित्रद्रोहे** चशब्दः कृतशब्दानुकर्षणार्थः, सम्पादितं पातकमित्यर्थः । यद्यपि **न पश्यन्ति** = न जानन्ति न जानन्तु ।। ३८ ।।

**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ।। ३९ ।।**

तथापि कुलक्षयकृतं **दोषं प्रपश्यद्भिः** = जानद्भिरस्माभिः **अस्मात्**= वक्ष्यमाणात् पापान्निवर्तितुं कथं न ज्ञेयं, ज्ञात्वा कुर्वाणस्य महान् दोष इति भावः ।। ३९ ।।

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ।। ४० ।।**

उक्तदोषाचरणे परम्परया महानर्थप्राप्तिमाह ।। कुलक्षय इति पञ्चभिः । कुलस्य = पुमात्मककुलस्य क्षये कृते सतीति शेषः । **कुलधर्माः** = पञ्च महायमादयः । **धर्मे** = धर्मजाते **कृत्स्नं कुलं** = शेषं स्त्रीबालात्मकं सर्वकुलम् । **अधर्मः** = विष्ण्वनिवेदिताविभक्तान्नभोगादि-रूपः ।। ४० ।।

**अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ।। ४१ ।।**

अधर्मकृताभिभवात् अधर्मेण कृतपराजयात् **वर्णसङ्करः** ब्राह्मणादिवर्णमिश्रीभावः।।४१ ।।

**सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ।। ४२ ।।**

विप्रस्त्रीषु शूद्रादितो गर्भसम्भवे विप्ररूपपितृणां पिण्डादिलोपेन पतनं निश्चितमिति भावः।।

**दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ।। ४३ ।।**

ननु पञ्चमहायज्ञादिलोपे नरकप्राप्तिः हतकुलस्यास्तु, हन्तॄणां तु तल्लोपाभावात्तत्प्राप्तिः कथमुच्यते इत्यत आह = **दोषैरिति ।।** कुलघ्नानां प्राप्तैरिति शेषः । वर्णसङ्करकारकैः एतैः उक्तैर्दोषैः नरकप्राप्तिर्युक्तैव । स्वधर्मादिलोपाभावोऽपि अन्यधर्मप्रणाशनादपि तत्सम्भवादित्यर्थः।। चशब्दो हेतौ । यस्माज्जातिधर्मादयः, **तैरुत्साद्यन्ते** = प्रणाश्यन्ते तस्मादपीति ।। ४३।।

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।**
**नरके नियतं वासो भवतीत्यनुशुश्रुम ।। ४४ ।।**

**उत्सन्नेति ।।** उत्सन्नाः = अन्तर्णीतण्यर्थत्वेन उत्सादिताः कुलधर्माः यैस्तेषां नरके नियतं वासः । हतकुलस्य तु नरकप्राप्तिमात्रमिति विशेषः । एवमर्थानङ्गीकारे

**'सङ्करो नरकायैव कुलघ्नानां कुलस्य च'**

इत्युक्त्या नरकप्राप्तावुक्तायां पुनर्नरके नियतं वास इत्युक्तेः पुनरुक्तताप्रसङ्गात् । एवमर्थाङ्गीकारो तु अभ्यधिकाशङ्कानिवृत्यर्थमिति वक्तुमुचितत्वात् । नेदं स्वमतिकल्पितम् किन्तु शिष्टेभ्यः श्रुतमित्याह = **अनुशुश्रुमेति** ।। ४४ ।।

**अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥**

आश्चर्यखेदहेतुकर्मकारिणः स्वान् निन्दयति - **अहो इति** ।। यद्यस्मात् , राज्यसुखलोभेन स्वजनं हन्तुमुद्यताः तस्माद् वयम् एते तत्वदेवताः धर्मराजादयो वा अहं चेति वयं महत् = नरके नियतवाससाधनत्वात् बृहत् पापं कर्तुं व्यवसिताः = कृतनिश्चयाः एतदहो बत । अहो इत्याश्चर्ये, बतेति खेदे च, महच्छब्देनाश्चर्यकथनं, पापशब्देन खेदकथनम् । अत एव महदिति पृथक्पदम् । अन्यथा कर्मधारये महच्छब्दस्य महेत्यादेशनियमभङ्गप्रसङ्गात्।।४५।।

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥**

विपक्षे बाधकमाशङ्क्य परिहरति - **यदीति** ।। धार्तराष्ट्राः = पाप्मानः, असुराः, कौरवा वा, शस्त्रपाणयो भूत्वा, अप्रतीकारं = प्रतियुद्धमकुर्वाणं, अशस्त्रं = शस्त्रहीनं मां रणे हन्युः यदि, तर्हि = तद्हननं मे = मम क्षेमतरं भवेत् । अत्र तरतमप्रयोजनमिदम् । मम हनने क्षेमं, कुलहननदोषाभावात् । तैरपि युद्धपरित्यागे क्षेमतमम्, उभयोः क्षेमत्वात् । अशस्त्रस्य मम सशस्त्रैर्हनने तु क्षेमतरं शत्रूणां पापलाभादिति बोध्यम् ।। ४६ ।।

**एवमुक्त्वाऽर्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥**

**।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ।।**

सञ्जय उपसंहरन्नाह = **एवमिति** ।। अर्जुनः जीवः, इन्द्रः, भीमानुजो वा सङ्ख्ये = युद्धे, रथोपस्थे = रथोपर्येव, रथिनः उपवेशनस्थाने उपाविशत् = निषसाद ।। शेषं सुगमम् ।।

**इति श्रीमद्भगवद्गीतासाग्रप्रथमाध्यायाध्यात्माद्यर्थपञ्चिकायां**
**श्रीमन्नारदानुग्रहीपाङ्गीश्रीनिवासविरचितायां प्रथमोऽध्यायः ।। १ ।।**

## ।। अथ श्रीमद्भगवद्गीतायां द्वितीयोऽध्यायः ।।

**तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ।। १ ।।**

**तमिति** ।। तथा कृपया = ममताऽसुरावेनिमित्तकृपया, अश्रुपूर्णे अत एवाकुले = विषयग्रहणासमर्थे ईक्षणे यस्य तम् ।। १ ।।

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ।। २ ।।**

भगवद्वचनमाह -**कुत इति** ।। विषमे = युद्धोपक्रमादसाधारणे काले, कश्मलं = मोहजालं त्वा = त्वां कुतः ममतासुरवेशतः, समुपस्थितं प्राप्तम् । इदम् आश्चर्यप्रदं 'इ विचित्रे स्मरे पुमान्' इति यादवः । कुत इत्यस्य तसिलप्रत्ययान्तकिंशब्दाङ्गीकारे विपर्यये पर्यवसानाभावेन आक्षेपार्थानुपपत्तेः । अज्ञात्वा प्रश्ने भगवतः सार्वज्ञ्याभावप्रसङ्गेन, ज्ञात्वा प्रश्ने अग्रे उत्तराभावेन प्रश्नार्थानुपपत्तेश्च । आश्चर्यप्रदत्वकथनेन निन्दने हेतुमाह - **अनार्येति** ।। आर्यसेवितत्वाभावादित्यर्थः । तदसेवने चेहामुत्र चासुखकरत्वरूपहेतुमाह- **अस्वर्ग्यमित्यादि** ।। न स्वर्ग्याः स्वर्गगतोपभोगाः यस्मात्तत्, इह तु अकीर्तिकरम् ।। २ ।।

**क्लैब्यं मा स्म गमः पार्थ नैतत् त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ।। ३ ।।**

**क्लैव्यमिति** ।। स्त्रीलिङ्गममताभिमानित्वेन तद्रूपत्वात् स्वतः पुंरूपत्वाच्च ममताऽसुरः क्लीबः, अतः क्लैब्यं = तदसुरभावं गाऽगमः स्म = मागच्छ, माङ्योगे लङ् अपि लोडर्थे। स्मशब्देन तदावेशायोग्यत्वं स्मारयति । तदेव स्पष्टयति- **नेति** ।। एतत्कश्मलं त्वयि नोपपद्यते न युज्यते, मत्प्रतिबिम्बत्वादिति भावः । अतो निन्दितत्वात् । क्षुद्रं = नीचं, हृदयदौर्बल्यं मनसोऽनुत्साहरूपं खेदं त्यक्त्वोत्तिष्ठ, युद्धायेति शेषः । अर्जुनं सम्बोधयति **परन्तपेति** ।। शुद्धिमनेत्यर्थः । अनेन शक्तिसद्भावः सूचितः ।। यद्वा सर्वधर्मरहस्यमाज्ञापयति ।। परं = आत्मान्यं देहं तप = 'अन्तर्णीतण्यर्थात्' कर्शयेत्यर्थः । इदं ब्राह्मणधर्मरहस्यं **'ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय तपसे चेह'** इत्युक्तेः । परं = शत्रुम् । **'परोरिपरमात्मनोः'** इत्युक्तेः, तप =

सन्तापय अन्तर्णीतर्णिच् । इदं क्षत्रियस्य । **'शत्रुसन्तापकृद्राजा भवेद्वै निमिनन्दन'** इत्युक्तेः । परं = इदं मौल्येन परमिदमपरम् इति, तप= आलोचय 'तप आलोचन' इति धातोः। इदं वैश्यस्य । परीक्षयैव हि तेषां व्यवहारोपपत्तेः । परं = आत्मनः श्रेष्ठं त्रैवर्ण्यं तप = सेवस्व 'धातूनामनेकार्थत्वात्' । इदं शूद्रस्य 'शूद्रस्य द्विजशुश्रूषा' इत्युक्तेः ।

परं = प्रमाणश्रेष्ठं वेदशास्त्रं, तप = आलोचय, इदं ब्रह्मचारिणः, अध्ययनधर्मत्वात् । परं स्वाश्रमादन्यं आश्रमत्रयं तप = पोषय, इदं गृहस्थास्य, त्रिभ्योऽपि वृत्तिदातृत्वात् । परं केवलं तप = तपः कुरु, इदं वानप्रस्थस्य, शरीरशोषणधर्मत्वात् । परं = परमात्मानं, तप= आलोचय, इदं सन्यासिनः 'यत्सर्वत्र तदीक्षणम्' इत्युक्तेः । एतन्मध्ये तव क्षत्रियत्वात् गृहस्थत्वाच, शत्रुमारणं त्रिवर्गपोषणं च स्वधर्म इति भावः ।। ३ ।।

**कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ।। ४ ।।**

पार्थः पुनरप्याक्षिपति ।। **अध्यात्मार्थे** । भीष्मं = क्रोधाभिमानिनं रुद्रं, द्रोणं = कामाभिमानिनं प्रद्युम्नम् । **अंशार्थे** = भीष्मं = द्युवसुं, द्रोणं बृहस्पतिम् । **प्रसिद्धार्थे** भीष्मं = पितामहं, द्रोणं = गुरुम् । पूजार्हयोरिषुभिः प्रतियोधनमयुक्तमिति भावः ।। ४ ।।

**गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्षमपीह लोके ।**
**हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ।। ५ ।।**

क्षत्रियस्य निषिद्धयोरपि गुरुहिंसाभिक्षयोः कदाचित्प्राप्तौ किमेकतरं विधेयमिति संशयस्य विशेषबलेन सिद्धान्तमभिधायापि पुनः सन्देहमाह = **गुरूनिति** ।।

**अध्यात्मार्थे** ।। हिमहानुभावानिति पदम् । हिमं हन्तीति हिमहा = अग्निः **'अग्निर्हिमस्य भेषजम्'** इति श्रुतेः, तदुपलक्षितज्योतिरहःशुक्लादेरपि ग्रहणम् । तम् अनुभावयन्ति = ज्ञापयन्तीति तान् = मोक्षमार्गोपदेशकानिति यावत् । वक्ष्यति च **'अग्निर्ज्योतिः'** इत्यादि । तान् गुरून् हत्वा इह लोके = अस्मिन् देहे भैक्ष्यं = याचितसुकृतफलं भोक्तुं श्रेयः उचितम् । निषिद्धयोर्हिंसाप्रतिग्रहयोर्मध्ये दुष्टहिंसाया औचित्येऽपि सद्हिंसापेक्षया प्रतिग्रहस्यैवौचित्यमिति भावः । अत्र न भैक्ष्यभोजने तात्पर्यं किन्तु गुर्वहिंसायाम् ।

**अंशार्थे** गुरून् = अर्जितान्,अहिमहानुभावान् - अहिः = वृत्रः, **'व्यूहवृन्देप्यहिर्वृत्रे'**

इत्यमरः, महानुभावः महः यज्ञोत्सवं प्रति अनुगतः भावः = विष्णुर्यस्य स बलिः **'मह उद्धव उत्सवे'** इत्यमरः । **'भूतकृद्भूतभृद्भावः'** इत्युक्तेः, आद्यर्थे बहुवचनम्, तान् अहत्वा = न शरणं गत्वा । 'हन हिंसागत्योः' इति धातोः । इह लोके = स्वर्गे । भैक्ष्यं = दध्यङ्ङृषये भिक्षितं वज्रम्, उपेन्द्राय भिक्षितं बल्यधीनं राज्यं चेत्यर्थः । भोक्तुं श्रेयः । अत्रापि न भैक्षभोजने तात्पर्यं किन्तु शत्रोरशरणागतौ ।

**प्रसिद्धार्थे** महानुभावान् = महासामर्थ्यवन्तः । यद्वा गुरुन् द्रोणादीन्, महानुभावान् = भीष्मादीन्, अहत्वा, इह लोके = भुवि, भैक्ष्यं = भिक्षितान्नं भोक्तुं श्रेय एवेत्येका कोटिः। अपरमाह- **हत्वेति** । पूर्वार्धगतोऽपि शब्दः अत्र विकल्पार्थे योज्यः । अपि वेत्यर्थः ।

**अध्यात्मार्थे** अर्थकामान् = अर्थकामरूपपुमर्थान् प्रति गुरून् = गुणान्, रुधिरप्रदिग्धान् रुधिरेण = शोणितेन प्रकर्षतो दिग्धाः स्त्रीदेहाः । शोणितातिरेके स्त्री भवतीति वचनात्, ते सन्त्येषामिति । अर्श आद्यच् । स्त्रीरूपान् अज्ञानिन इति यावत् । हत्वा = ज्ञात्वा गत्यर्थानां ज्ञानार्थत्वात् । इह = अस्मिन् शरीर एव, भोगान् = ईशप्रापितानिति शेषः भुञ्जीय = भोक्ष्ये ।

**अंशार्थे** । अर्थकामान् = मातुलासुरार्थकामवतो गुरून् = विश्वरूपादीन् । रुधिरप्रदिग्धान् कृत्वेति शेषः । हत्वा च इहैव भोगान् स्वयत्नार्जितभोगान् भुञ्जीय ।।

**प्रसिद्धार्थे** । अर्थकामान् = आ ईषत्, उदरपूर्तिमितत्वात्,स्वल्पमर्थं कामयानान् गुरून् = द्रोणादीन्, हत्वा इहैव = अत्रैव, रुधिरप्रदिग्धान् = गुर्वादिकृतीजनितान्, भोगान् भुञ्जीय सदं श्रेयो वेत्यपरा कोटिः । प्रतिग्रहापेक्षया राज्यभागार्थमल्पार्थकमनया वैष्णवद्वेष्टृत्वेन दुष्टहननमेव श्रेयस्करमिति भावः । एवं समानोभयकोटिकत्वात् संशय इत्याशयः ।। ५ ।।

**न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।**
**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ।। ६ ।।**

तत्संशयापनोदार्थं पृच्छति ।। **न चेति** ।। नः = अस्माकं कतरत् = उक्तोभयकोटयोर्मध्ये कतमं,गरीयः = श्रेयस्करम्, एतद्वयं न विद्मः = न जानीमः । भुञ्जीयेत्यनेन पूर्वमेकवचनस्य प्रकृतत्वेऽपि अत्र विद्म इत्यादि बहुवचनं न केवलमहं न वेद्मि किन्तु एते गुरवोऽपि न विन्दन्ति किं पुनर्मम ज्ञानाभावः इत्येतदर्थं बोध्यम् । किञ्च यद्वा यदि वयं तान् जयेम तर्हि श्रेयो वा । अथवा ते = रिपवोऽस्मान्यदि जयेयुः तर्हि श्रेयो वेत्येतदपि न विद्मः इत्यर्थज्ञापकश्च ।। ननु जीवनसाधनस्य जयस्यैव सर्वाकाङ्क्षितत्वाच्छ्रेयस्करत्वमिति चेन्नेत्याह - **यानेव हत्वेति** ।

**अध्यात्मार्थे-** वयं न जिजीविषामः = जीवितुमिच्छामः । तर्हि किमित्यत आह = त्वेति। त्वा = त्वां प्रति, याने प्रापणे मामिति शेषः, वह = आवह सदमेवेच्छामीत्यर्थः। ननु त्वया स्वस्य गतिः प्रार्थिता बहुवचनप्राप्तगुर्वादीनां तु का गतिरित्यत आह = त इति ।। ते = तव प्रमुखे = प्रसृतमुखे धार्तराष्ट्राः = पाप्मानः अवस्थिताः ।। वक्ष्यति च 'वक्त्राणि ते त्वरमाणाविशन्ति दंष्ट्राकरालानि भयानकानि' इति । भयानकत्वसूचकप्राब्देनैव तेषां दुर्गातिः सूचितेति भावः ।

**अंशार्थे** -धार्तराष्ट्राः = असुराः ते = तव प्रमुखे = अमर्यादयेति यावत् । व = साम्येन 'व वा यथा तथैवेवं साम्ये' इत्यमरः । योने = वाहने अवस्थिताः । तानेति शेषः । हत्वा = ज्ञात्वा दृष्ट्वेति यावत् । न जिजीविषामः = तद्वधं विना मुमूर्षाम इति भावः ।

**प्रसिद्धार्थे** = यान् धार्तराष्ट्रान् हत्वा वयमेव न जिजीविषामः, त एव धार्तराष्ट्राः पुमुखे अवस्थिताः तस्मात् जयोऽपि पराजयतुल्य इति भावः । यद्वा गुरून् हत्वा धार्तराष्ट्रहननमेव कार्यमित्यत आह = यानिति ।। यान् द्रोणादीन्हत्वा न जिजीविषामः ते द्रोणादयः, धार्तराष्ट्राः 'सप्तसु प्रथमा' इति सूत्रात्, धार्तराष्ट्राणां प्रमुखे = अग्रे अवस्थिताः, अतस्तद्वधं विना धार्तराष्ट्रहननमशक्यमिति भावः ।। ६ ।।

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वा धर्मसम्मूढचेताः ।**

**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मेशिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्।।७।।**[1]

नन्वास्तिकानां भक्तिमतां च संशयापनोदनपटुज्ञानं सुलभमेवेत्यत आह -**कार्पण्येति** ।।

**अध्यात्मार्थे** ।। कृपणो ममताऽसुरः, तदीयः कार्षण्यः स चासौ दोषश्च तेनोपहतः = नष्टः = यः स्वभावः स्वः = स्वतन्त्रो भगवान् 'स्वातन्त्र्यात्स्व इति प्रोक्त' इत्युक्तेः, तस्य भावः स्वभावः = सद्भावोभक्तिर्वा यस्य स तथा । अत एव धर्मसम्मूढचेताः । गुरूनहत्वा भैक्ष्यचरणं धर्मो वा, तान् हत्वा राज्यभोगो वा धर्मः, इति धर्मविषये सम्मूढं = संशयितं चेतो यस्य सोऽहं त्वां पृच्छामि । प्रष्टव्यमाह- **यदिति** ।। उभयोर्मर्ध्य यदन्यतमं निश्चितं श्रेयः, स्यात्तन्मे ब्रह्म । इत्थं निश्चितं चेतो यस्य सोऽहं त्वां पृच्छामि । प्रष्टव्यमाह - **यदिति** ।। उभयोर्मध्ये यदन्यतमं निश्चितं श्रेयः स्यात्तन्मे ब्रहि । इत्थं निश्चितं ज्ञानं गुरवे प्रष्टव्यम् । किं मां पृच्छसीत्यत आह = शिष्य इति ।। अहं ते = तव शिष्योऽस्मि । अतो मां शाधि = शिक्षय ।। आवयोर्गुरुशिष्यत्वं

१. तं-ताण्डवे पौरषेयत्वानुमानभङ्गे इदं वाक्यमुदाहृतम् ।

न स्मरामि पूर्वमुपदेशाभावादित्यत उक्तम् - **त्वां प्रपन्नमिति** ।। इदानीमेव शरणागतत्वात् गुरुशिष्यत्वारम्भोऽस्तु इति भावः । यद्वा, न केवलं मामेव शाधि, त्वां प्रपन्नमपि शाधि, यः यः प्रपन्नः तं शाधीत्यर्थः । मच्छासने सर्वशरणागतानामपि संशयापनोदः स्यादिति भावः।। ७ ।।

**न हि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ।। ८।।**

गुरुत्वेनाप्यन्यं वृणु किं मामेव वृणुषे इत्यत आह = **न हीति** ।। यदित्यव्ययम्, अतो यो मम इन्द्रियाणामुच्छोषणं = स्वस्वव्यापाराक्षमीकरणं शोकमपनुद्यात्, हि यस्मात्तं शोकापनोदकं त्वदन्यमिति शेषः न पश्यामि ।। यद्वा येन शोकेन ममेन्द्रियाणामुच्छोषणं भवति यस्तं शोकमपनुद्यात् परिहरेत् तमहं त्वदृते नैव पश्यामीत्यन्वयः । दरिद्रस्य शोकापनोदकः कथं युज्येत, सम्राजस्तु युज्यत एवेत्याह-**अवाप्येति** ।। निःशत्रुकं समृद्धं पृथिवीराज्यं सुराधिपत्यं च प्राप्यापि त्वां विना अन्यं न पश्यामीत्यर्थः । यद्वा, त्वदन्यादृश्यत्वे हेतुगर्भविशेषणान्याह **अवाप्येति** ।। भूमौ अवाप्य = अवतीर्य स्थितमिति शेषः । असपत्नं = शत्रुरहितम्, ऋद्धं = समृद्धं सुराणां = देवानां राज्यं = नीराज्यम् । अर्तिक्याद्युपाचारैरुपास्यमिति यावत् । उपसर्गाणां धात्वर्थद्योतकत्वात् । आधिपत्यम् आ = साकल्येन आधिपत्यं यस्य तं, सवर्णदीर्घत्वात् । अत एतादृशं त्वां विनाऽन्यं न पश्यामीत्यर्थः ।। ८ ।।

**एवमुक्त्वा हृषीकेशं गुडाकेशः[१] परन्तपः ।**
**न योत्स्य इति [२]गोविन्दमुक्त्वा तूर्ष्णीं बभूव ह ।। ९ ।।**

अर्जुनोक्तिमुपसंहरति । **एवमिति** ।।

**अध्यात्मार्थे** गुडाकेशः = गुडाका निद्रा,अभिमानिनयन्यायेनात्र तदभिमानिनी दुर्गा लक्ष्यते, सा ईशा = नियन्त्री यस्य स जीवः । हे गोविन्द अहं त्वां मुक्त्वा विना स्वातन्त्र्येणेति यावत् ।

१. (अ)'गुडाका निद्रा । निद्रा गुडाका सम्प्रोक्ता प्रमीला मृतिरुच्यते' इत्यभिधानम् । तस्याः ईशः । गुडाकेशः जितनिद्रो अर्जुनः । इन्द्रकीलके विनिद्रो भूत्वा तप्ततपाः पशुपतेरेतन्नाम लब्धवान्। गुडवद्रक्तकेशो वा। दीर्घस्तु छान्दसः'(१.१०.१८) इति विजयध्वजतीर्थाः।

(आ)'हे 'गुडाकेश' गुडाका निद्रा, तदीशस्तद्रहित इति यावत् । गुडवदासमन्तात् केशा यस्य सः श्लक्ष्णकेशेति वा'।

२. (अ) 'गवां विन्दः लाभः यस्य स तथा तस्मै, गवा वेदेन लभ्यत इति वा' १.८.२४।

(आ)'वेदवाणीलब्धविभव' (१.८.४६) इति विजयध्वजतीर्थाः ।

परं = शत्रुं न योत्स्ये । अतस्त्वमेव तप = तापय युद्धस्वेति यावत् । मम त्वत्प्रतिबिम्बत्वेन मत्क्रियायाश्च त्वधीनत्वात् युद्धे त्वत्प्रवृत्तौ मत्प्रवृत्तिः सिद्धैव । अन्यथा नेत्यर्थः । एवं हृषीकेशं = हृषीकाणां = लक्षणया इन्द्रियाभिमानिनाम् ईशं = भगवन्तम्, उक्त्वा तूष्णीं वाग्व्यापाररहितः बभूव ह = स्पष्टम् ।।

**अंशार्थे-** गुडाकेशः = पुरन्दरः हृषिकेशं = उपेन्द्रम् ।

**प्रसिद्धार्थे-** हृषीकेशं = कृष्णं गुडाकेशः = अर्जुनः । एवं = पूर्वोक्तप्रकारणोक्त्वा न योत्स्य इति गोविन्दमुक्त्वा । यद्वा, हृषीकेशं = सर्वेन्द्रियप्रेरकं मुक्त्वैव = विस्मृत्यैवेति यावत् । गोविन्दं वाग्विषयमेव मत्वेति शेषः । हठान्नयोत्स्य इत्युक्त्वा तूष्णीं बूभव । परन्तपेति धृतराष्ट्रं प्रति सम्बुद्धिः पाण्डवानां तापदायकेत्यर्थः ।। ९ ।।

**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ।। १० ।।**

भगवत्प्रवृत्तिमाह = तमिति ।। **अध्यात्मार्थे** । हे भारत = भे = भात्मके विष्णौ, रतः रतिमान्, भरतः = वायुः शिष्यत्वेन तदीय भारत, इति मुमुक्षुं प्रति सम्बुद्धिः । यद्वा, भे = विष्णौ, आ = अतिशयेन रत ।। **अंशार्थे** -'समाने लोपः' इति सूत्रेण भारततेति स्थिते, भान्ति ते भाः = देवाः तेषां रत्यर्थं ततं = वीणादिकं वाद्यं यस्य स तथा 'ततं वीणादिकं वाद्यम्' इत्यमरः इति धृतराष्ट्राख्यगन्धर्वसम्बुद्धिः ।

**प्रसिद्धार्थे ।** 'सर्वं सोढुमहं मन्ये ऋतेऽलीकपरं नरम्' इति भूम्युक्तेः । भाराः = अनृतत्वेन भूभारभूताः ताः = पाण्डवावित्तापहारित्वेन चोराः दुर्योधनादयो यस्मादिति धृतराष्ट्रसम्बुद्धिः। 'तकारः कीर्तितश्चोरे' इत्येकाक्षरः । हृषीकेशः = सर्वेन्द्रियप्रवर्तकः । अर्शआद्यच् । तं तथावादिनमर्जुनं प्रति प्रहसन्निव किञ्चिद्हास्यं कुर्वन् ।

**'किञ्चित्वे चोभयत्वे च संशये सदृशे तथा ।**
**इवकारः प्रयुज्येत न्यक्कारोऽपि च पण्डितैः'** इति शब्दनिर्णये ।

मदतिरिक्तस्यान्यस्य यत्किञ्चित्स्वातन्त्र्याभावेऽपि हटात् 'न योत्स्ये' इति मन्यते इत्याश्चर्येण किचिद्हास्ययुक्त इति भावः । अत एवान्ते वक्ष्यति । 'यदहङ्कारमाश्रित्य न योत्स्य इति मन्यते । मिथ्यैष व्यवसायस्ते प्रकृतिरत्वां नियोक्ष्यति' ।। अत्र प्रकृतिनयन्यायात्,

विष्णुर्ज्ञेयः । अत एव चात्र हृषिकेशपदग्रहणम् । उभयोः सेनयोर्मध्ये विषीदन्तमित्यर्जुन-विशेषणम् । खिद्यन्तामित्यर्थः । यद्वा, सेनयोः भीमसेनोग्रसेनयोः इत्युभयोर्मध्ये, अन्तः विर्षा = विशिष्टबलवान् भूत्वा स्थित इति शेषः । इदं कृष्णविशेषणम्, 'षकारो बलम्' इति श्रुतेः। दन्तं - दं = बुद्धिं तनोतीति तत् 'दं कलत्रं च बुद्धिश्च' इत्येकाक्षरः । तनु विस्तारे, ततो डः । इदं = वक्ष्यमाणं आश्चर्यप्रदं वा '.. विचित्रे स्मरे पुमान्' इति यादवः । वचः उवाच । इतोऽग्रिमगन्थस्य श्रीमदाचार्यटीकाकृत्पादादिभिः यावद्व्याख्याततत्वात् न वयं तदर्थे यतामहे । एवं भगवता यथावदवबोधितो जीवः सर्वत्र भगवत्स्वातन्त्र्यं ज्ञात्वा भगवद्द्विट्तदनुबन्धिवधे प्रयत्नं कृत्वा मोक्षयोग्यो भवेदित्यध्यात्मार्थः । एवमिन्द्रोपीत्यंशोर्थः । एवमर्जुनोपीति प्रसिद्धार्थः ॥ १० ॥

**इति श्रीमद्भगवद्गीतासाग्रदशप्रथमाध्यायाध्यात्माद्यर्थपत्रिकायां श्रीमन्नारदशिष्यपाङ्गी-भीमाचार्यात्मजश्रीनिवासविरचितायां त्रिविधार्थविवृत्त्यां द्वितीयेऽध्याये केचन श्लोकाः ॥**

( भगवता गीतोपदेशारम्भः )

**श्रीभगवानुवाच –**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

**भाष्यम् — प्रज्ञावादान् स्वमनीषोत्थवचनानि । कथम् अशोच्याः? गतासून् ॥**

**प्रमेयदीपिका**

**(प्रज्ञावादशब्दार्थः)**

'प्रज्ञावादान्' इत्येतत् 'प्रज्ञावतां बुद्धिमतां वादान् वचनानि' इति कश्चिद्[1] व्याख्यातवान्। तदसत् । नहि '**दृष्ट्वेमं स्वजनम्**'(१.२८) इत्याद्यर्जुनवाक्येषु कश्चिद्बुद्धिमद्वादो विद्यते । न हि बुद्धिमन्तो नारायणद्विट्तदनुबन्धिनिग्रहमधर्मं वदन्ति । नच धर्माधर्मविषयत्वमात्रेण बुद्धिमद्वादो भवति । [2]बौद्धादेरपि तत्त्वप्रसङ्गादित्याशयेनान्यथा व्याचष्टे– **प्रज्ञावादानिति** ॥ स्वस्या एव मनीषया उत्थितानि । नतु शास्त्राचार्योपदेशप्राप्तानि । कथमेतल्लभ्यते? उच्यते। प्रज्ञाया वादाः प्रज्ञावादाः । कार्यकारणभावे षष्ठी । न हि स वादोऽस्ति यः प्रज्ञापूर्वो न भवतीति सामर्थ्यात् स्वेति लभ्यते । सावधारणं चैतत्[3] । 'अब्भक्षः' इति यथा । अन्यथा पुनर्वैयर्थ्यादिति । **कथमशोच्याः**? 'इत्यत आह' इति शेषः । **गतासून्** इत्यतः परम् 'इति' शब्दः । आसन्नविनाशाः कथमशोच्याः? इत्यर्थः ॥

( आसन्नविनाशा न शोच्याः )

ननु प्रागशोच्यत्वानुवादेन 'अन्वशोचः' इत्येवोक्तम् । न त्वशोच्यत्वम् । तत्कथमेवमाक्षेपः? मैवम् । नहि यथाश्रुतैवात्र वाक्यवृत्तिः । असिद्धस्यानुवादः सिद्धस्य बोधनमित्यापत्तेः । किन्तु यान् अन्वशोचस्त्वं तेऽशोच्याः । तस्मात्तान् प्रति न शोकः कार्यः । त्वं यांश्च भाषसे ते प्रज्ञावादाः । अतो न भाषणीया इति । तथाचाशोच्याः कुतोऽवगन्तव्याः? इति प्रश्नो वाऽऽक्षेपो वा युज्यत एव ॥ ११ ॥

१. शाङ्करभाष्ये-प्रथमभाग , पृ-७९ ।'वादांश्च वचनानि च' इति तद्भाष्यपाठः ।
२. वे, वे-ग्रं । 'बौद्धोपदेशादेरपि' इति प्र.पाठो टिप्पणिद्वयाननुगुणः ।
३. भा.र.कोशरीत्या च तत् इति पाठः ।

**भावदीपः**

**धर्माधर्मविषयत्वमात्रेणेति** ।। मात्रपदेन वास्तवधर्माधर्मविषयत्वं व्यावर्त्यते ।। **तत्त्वेति** ।। बुद्धिमद्वादत्वप्रसङ्गादित्यर्थः ।तेनापि 'चैत्यवन्दनादि धर्मोऽन्योऽधर्मः' इत्युपदेशकरणादिति भावः ।। **पुनर्वैयर्थ्यादिति** ।। सर्वस्यापि वादस्य प्रज्ञापूर्वकत्वमिव स्वप्रज्ञापूर्वकत्वस्यापि सिद्धत्वेन 'स्वप्रज्ञावादान्' इत्यस्यापि वैयर्थ्यमेव । अतोऽवधारणं विवक्षणीयमित्यर्थः। (वैयर्थ्यमिति सावधारणम्)[१]।। **'कथमशोच्याः'** इति प्रश्नस्य शेषोक्त्याऽर्थमाह – **आसन्नेत्यादिना** ।। अस्योत्तरम् – **गतासूनिति** ।। भाष्ये प्रतीकग्रहणेनोक्तमुत्तरार्धं तदर्थस्तूत्तरश्लोकावतारिकायां वक्ष्यति ।। **वाक्यवृत्तिः** वाक्यस्थितिरित्यर्थः ।। **असिद्धस्येति** ।। अशोच्यत्वस्य प्रज्ञावादत्वस्य चेत्यर्थः ।। **सिद्धस्येति** ।। **'शोचामि'**[२] इत्यादिना पूर्वत्र शोकस्य, **'अर्जुन उवाच'** इति भाषणस्य च प्रस्तुतत्वादिति भावः ।। ११ ।।

( ईश्वरनित्यत्वसमर्थनम् )

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**

**न चैव न भविष्यामः सर्वे वयमतः परम् ।। १२ ।।**[३]

**भाष्यम्** — किमिति? **न त्वेवाहम्** ।। ईश्वरनित्यत्वस्याप्रस्तुतत्वाद्दृष्टान्तत्वेनाह– **नत्वेति** ।।

---

१. इदं वाक्यं मं मातृकायामेव । नान्यत्र ।

२. इदं पदं सर्वमातृकासु पठ्यते । टीकायां न लभ्यते ।

३. (अ) न्यायामृते अहमर्थस्यानात्मत्वभङ्गे -'नचैव ..परम् ' इत्यत्रानिवृत्त्युक्तेः ।

(आ) 'न त्वेवाहं ... वयमतः परम्' इति गीतायां साक्षाद् भगवत इश्वअहं च नासम् इति न, त्वं च नासीरिति न, इमे जनाधिपा नासन्निति नेति विचित्रानन्तजीवानां तन्निष्ठद्वैतस्य च स्वसमानयोगक्षेमतया अनादित्वमुक्त्वा 'अतः परं वयं सर्वे न भविष्याम इति च नैव इति स्वसमानयोगक्षेमतया भाव्यनन्तजीवपरम्परायास्तन्निष्ठभाविद्वैतानां चानवच्छिन्नभविष्यत्कालेपिनिवृत्त्यभावस्य एवकारेणावधारितत्वात् प्रपञ्चनिवृत्तिः तन्निष्ठद्वैतनिवृत्तिश्च न मनसापि स्मर्तुं शक्या । चशब्देन मुक्तावपि प्रपञ्चानिवृत्तिं समुचिनोति। 'नत्वेवाहम्' इत्यत्र विद्यमानतुशब्दस्य 'अहं तु' इति सम्बन्धः । तेन च स्वस्य देहपरम्परां विनैकेनैव देहेनानायनन्तकालेष्ववस्थानाख्यविशेषं सूचयति । 'वयं सर्वे भविष्यामः' इत्येवोक्ते चिरकालस्थायित्वोपीयमुक्तिरिति परस्य दुराशा स्यात् । तामप्युन्मूलयितुं 'न भविष्याम इति च नैव' इति नञ्द्वयेन 'द्वौनञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायानवच्छिन्नभविष्यत्कालेपि स्वात्मवत् प्रपञ्चस्य द्वैतस्यातिशयं गृह्णाति' इति माण्डूक्यभाष्यप्रकाशिकायां वादिराजतीर्थाः ।

### प्रमेयदीपिका

**किमिति** ।। कस्मात् कारणात् । पण्डिता अपि 'अगतासूनिव गतासूनासन्नविनाशान् नानुशोचन्ति' इति शेषः । अत्र 'नित्यत्वात्' इत्युत्तरम् । 'कुतो नित्यत्वम्? इत्यत आह' इति वाक्यं चाध्याहार्यम् । **'न त्वेवाहम्'** इत्यतः परम् 'इति'शब्दश्च । अर्जुनं निमित्तीकृत्य प्राप्तलोकोपकारार्थं हि भगवतोपदेशः क्रियते । तत्र ये भगवतः कृष्णस्येश्वरत्वं नित्यत्वं च न जानन्ति तान् प्रति यथाश्रुतैव योजना । दृष्टान्तस्तूत्तरत्र भविष्यति । ये तु तज्ज्ञात्वा जीवनित्यतामेव न जानन्ति तान् प्रत्यन्यथायोज्यमित्याह– **ईश्वरेति** ।। **अप्रस्तुतत्वाद्** अनाशङ्कितत्वाद् **दृष्टान्तत्वेनाह** । 'जीवनित्यतायां साध्यायामीश्वरम्' इति शेषः । अत एव 'कृष्ण' इत्यनुक्त्वा 'ईश्वर' इत्युक्तम् ।।

### भावदीपः

पूर्वमुत्तरार्धस्यार्थानुक्तेः 'किमिति' इति मूलानुवादेन तदर्थोक्तिपूर्वं **'गतासून्'** इति भाष्यस्य शेषोक्त्याऽर्थमाह– **किमितीत्यादिना** ।। **अत्रेति** ।। **'नत्वेवाहम्'** इत्यतः पूर्वं भाष्ये इत्यर्थः । **यथाश्रुतैवेति** ।। कृष्णस्यापि नित्यत्वोक्तिपरतयैवेत्यर्थः ।। नन्वस्मिन्पक्षे जीवनित्यत्वे दृष्टान्तो नोक्तः स्यादित्यत आह– **दृष्टान्तस्तूत्तरत्रेति** ।। **'देहिनोऽस्मिन्'** इति श्लोकव्याख्यानावसरे **'यथा कौमारादि'** इत्यादिभाष्ये कौमारयुवादिदेहभेदेऽपि तद्देहस्थ एकः स्सिद्धः, एवमनेकदेहप्राप्तावपि सर्वदेहगोऽनादिनित्यसिद्ध इति वक्ष्यमाणत्वादिति भावः ।।

यद्वा **'नासतः'** इति श्लोके **'प्रकृत्यादेः'** इति नित्यतोक्तेरिति भावः ।। **अत एवेति** ।। अविवादद्योतनार्थत्वादेवेत्यर्थः ।।

**भाष्यम् — यथा अहं नित्यः सर्ववेदान्तेषु प्रसिद्धः, एवं त्वमेते जनाधिपाश्च नित्याः ।। १२ ।।**

**(जीवनित्यत्वे ईश्वरः दृष्टान्तः )**

### प्रमेयदीपिका

नन्वीश्वरनित्यत्वं कुतस्सिद्धम्? पूर्वार्धे वाक्यत्रयसद्भावात् कथञ्चिद् योजनासम्भवे-ऽप्युत्तरार्धस्यैकवाक्यत्वात् कथं योजना? इत्यत आह– **यथेति** ।। **वेदान्ताः** उपनिषदः।

सिद्धस्यार्थस्य साध्यत्वेन निर्देशो दोषायेति सामर्थ्याद् 'यथा' 'एवं' शब्दाध्याहारेण, वाक्यभेदेन च योज्यमिति भावः ।।

ननु वेदान्तैरीश्वरनित्यत्वं जानन्तस्तत्रैवोक्तं जीवनित्यत्वं कथं न जानन्ति? उच्यते। 'नित्यो नित्यानाम्'[१] (कठ.५.१३) इत्यादौ[२] निर्धारणसामर्थ्याज्जीवानां नित्यत्वम्, ईश्वरस्य च परमनित्यत्वमवगम्य मन्दाः प्रतिपद्यन्ते । नित्यत्वं हि विनाशाभावः। न चाभावः तारतम्यवान् । अत ईश्वर एव नित्यो जीवेषु तूपचार इति । तान् प्रत्यनुमानेन जीवनित्यत्वमीश्वरदृष्टान्तेन साध्यते । तत्र **'न त्वेवाहं जातु नासम्'** इति दृष्टान्तेनानादित्वं साधनमनुवदति । **'न त्वम्'** इत्यादिना तस्य पक्षधर्मतामाह । **'न चैव'** इत्यादिना दृष्टान्ते पक्षे च साध्याभिधानमिति ।।

अत्र भगवता जीवानां परस्परमीश्वराच्च भेदे प्रतिपादितेऽपि बहुवचनं शरीरापेक्षयेति वदतो[३] भविष्यत्युत्तरम् ।।

**भावदीपः**

**वाक्यत्रयेति ।। 'न त्वेवाहम्'** इति **'न त्वम्'** इति **'नेमे'** इति प्रत्येकं नञ्श्रवणेन 'नासीत्' इति 'न नासन्' इति च क्रियाध्याहारात् 'यथा तथा' इति चाध्याहारात् **'कथञ्चित्'** इत्युक्तम् ।। **उत्तरार्धस्येति ।। 'न चैव'** इत्यादेः सकृदेव नञ्द्वयश्रवणात् सर्वेषां संसृष्टतया निर्देशाच्चोक्तम् - **एकवाक्यत्वादिति ।। उपनिषदः** 'नित्यो नित्यानाम्' इत्यादयः ।।

इत्थं भाष्ये योजनायां बीजमाह–**सिद्धस्येति** ।। ईश्वरनित्यत्वरूपार्थस्येत्यर्थः ।। **यथैवमिति** ।। यथैवंशब्दयोरध्याहारेणेत्यर्थः ।। **वाक्यभेदेन चेति** ।। 'अहं न भविष्यामीति न', 'त्वं न भविष्यसीति न', 'इमे जनाधिपा न भविष्यन्तीति न' इत्येवं रूपेणेत्यर्थः ।। **दृष्टान्त इति** ।। ईश्वरे त्वदादिजनाधिपरूपपक्षे चेत्यर्थः[४] । 'इमे त्वदादयो जनाधिपा नित्याः चेतनत्वे सत्यनादित्वात् ईश्वरावतारकृष्णवत्' इति ध्येयमिति भावः ।। **भविष्यत्युत्तरमिति** ।। **'बुद्धियुक्तः'**(२.५०) इति श्लोकव्याख्यावसरे **'नच एकीभूत एव ब्रह्मणा सह'** इत्यादिना जीवब्रह्मैक्यनिरासेनेति भावः ।। १२ ।।

---

१. 'नित्यानां' स्वरूपत अविनाशिनां सकाशात् 'नित्यः' देहतो अपि नित्यः परमनित्य इति यावत्'। ब्र.सू.भा. भाष्यदीपिका.२.३.१७ ।

२. वे, वे-ग्रं इति ।

३. शाङ्करभाष्यानुवादः, भाग.१.पृ-८३.'देहभेदानुवृत्त्या बहुवचनम् । नात्मभेदाभिप्रायेण' इति तद्भाष्ये ।

४. अयं सो-मात्रे पठ्यते । कां-मं नास्ति ।

( पाङ्गीआचार्यव्याख्या )

**न[५] त[४] एव[६] अहंजा[२] तुना[३] आस[७] न[९] त्वं[८] न[१२] इमे[१०] जनाधिपाः[११] ।**

**न[१२] च[१३] एव[१४] न[१६] भविष्याः[१५] मः[२०] सर्वे[२३] अव[२६] यम्[२४] अतः[२२]**

१७ १८ २१ २१

**परम्[२५] ।। । अतः[१] इति शेषः ।।**

पूर्वत्र नानुशोचन्ति पण्डिता इत्युक्तम् । तत्र गतासुविषये पण्डितानां शोकाभावः सूचितः । पण्डितत्वं चन घटादिज्ञत्वम् । किन्तु सर्वोत्तमत्वज्ञत्वमेव । त्वयि तद्वति, जाते सत्येव शोकाभावः स्यादित्याशयेनाह- **नत्वेवेति** ।। **अहं, अहंजा**- अहङ्कारोत्पन्ना भूतमात्रेन्द्रियपरम्परा । **तुना** 'तुर्विशेषे च भेदे च स्वसिद्धान्तेवधारणे' इति शब्दनिर्णय-वचनात्, **तुना** = स्वसिद्धान्तरूपेण, तु-विशेषेण **नैवासम्** = नाभवम्। अनेन पूर्वमपि भेदः प्रतिपादितः ।।

नन्वस्तु जडैर्भेदः, चेतनैस्त्वभेदः स्यादित्याशङ्क्य तन्निराकुर्वन् तावद्वर्तमानैरभेदं निराकरोति-न त्वमिति ।। त्वम् अर्जुनः, इमे=एतत्कालिका जनाधिपाः राजानः अहं तत्तभिन्नो नास्मीत्यर्थः । युष्मदिदंशब्दयोर्विद्यमानार्थगमकत्वादिति भावः ।।

अथ अवशिष्टभविष्यैरभेदं निराह- नचैवेति ।। अहं भविष्याराजानश्च नैव भविष्यामः ।। अस्तु उत्पन्नोत्पद्यमानोत्पस्यमानैः क्षुद्रैस्तव भेदः, तथापि जगत्सृष्टिसंहारकर्त्रोस्तु तवाभेदः स्यादित्यत आह- म इति ।। 'मः शिवश्चन्द्रमा वेधाः' इत्येकाक्षरात् शिवो ब्रह्मा वा मशब्दवाच्यः, सोपि नाहम्, इति तृतीय-पादगतद्वितीयनकारेणान्वयः । अतः कारणात्, सर्वे 'सप्तसु प्रथमा' इति सूत्रात् प्रथमा पञ्चम्यर्थे । सर्वेभ्य उक्तेभ्य इत्यर्थः। परं =विलक्षणं, श्रेष्ठं, पालकं वा । यं= ज्ञानरूपम्, 'येति ज्ञानं समुद्दिष्टम्' इति भागवतदशमतात्पर्योक्तेः। यद्वा सर्वे सृ-गतौ, वा गतिगन्धनयोः इति धातोः, औणादिना प्रत्ययलोपश्च । सरणेन गमनेन, वीयते इति सर्वः वायुः, सदागतिनामवत्वादिति योगाङ्गीकारात् । सर्व-नामसञ्ज्ञाभावेन तस्मिन्नित्यादेशस्य प्रसक्त्या सर्वे इति सप्तमी, वायावित्यर्थः । यं याति प्राप्नोतीति तं प्राणान्तर्यामिणमित्यर्थः । मामिति शेषः । अव = जानीहि, अवगत्यादौ, गत्यर्थानां च ज्ञानार्थत्वात् । एवं पण्डितो भवसि चेद् अशोको भवसीति भावः ।।१२ ।।

( देहानित्यत्वे दृष्टान्तः )

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ।। १३ ।।**

**भाष्यम् —** देहिनो भाव एतद्भवति । तदेवासिद्धमिति चेन्न । देहिनोऽस्मिन् ।।

**प्रमेयदीपिका**

ननु चात्र किं परिदृश्यमानदेहपक्षीकारेणानुमीयते, किं वा तदतिरिक्तदेहिपक्षीकारेण ? नाद्यः । देहोत्पत्तिविनाशयोः प्रत्यक्षसिद्धत्वेन हेतोस्स्वरूपासिद्धत्वात् कालात्ययापदिष्ट-त्वाच्चेति स्फुटत्वान्नोक्तम् । द्वितीये दोषमाह– **देहिन** इति ।।

**देहिनः** देहवतः देहातिरिक्तस्यात्मनः, **भावे** सद्भावे । **एतत्** नित्यत्वानुमानम् । **भवति** सम्भवति । देहपक्षोक्तदोषाभावात् । किन्तु **तत्** = देहातिरिक्तात्मसत्त्वम् **एवासिद्धम्** । प्रमाणाभावात् । ततश्चाश्रयासिद्धिरिति ।।

अस्तु वा देहातिरिक्तात्मसत्त्वम् । तथाऽपि नानुमानं सम्भवतीत्याह– **देहिन** इति।। '**देहिनः**' इत्येकवचनं तन्त्रम् । तत्पूर्वोत्तरदेहेष्वेक एवायमात्मेत्यस्यार्थस्य **भावे एतत्** = अनुमानं **सम्भवति** । स्वरूपासिद्ध्याद्यभावात् । किं नाम **तत्** =पूर्वोत्तरदेहेष्वात्मैकत्वम् **एवासिद्धम्** । प्रमाणाभावात् । तथाच देहोत्पत्तावुत्पत्तिमतः तद्विनाशे च नाशवतः कथमनादित्वेन नित्यत्वं साध्यत इति । तदुभयस्यापि[१] परिहारदर्शनादेवं योज्यम् । अर्थद्वयानुगुण्यायैव बहुवचने प्रकृतेऽप्येकवचनम् । तथा 'भावे' इति पुल्लिङ्गे प्रकृतेऽपि '**तदेव**'इति सामान्यग्रहणाय नपुंसकनिर्देशः । **न** 'इत्याह' इति शेषः । '**देहिनोऽस्मिन्**' इत्यतः परम् 'इति' शब्दश्च ।।

**भावदीपः**

'तत्' इत्यनुवादः, '**देहातिरिक्तात्मसत्त्वम्**' इति व्याख्या । '**आश्रयासिद्धिरिति**' इत्यनन्तरम् 'इत्येका[२] शङ्का' इति शेषः ।। तदेव वाक्यमन्यथा योजयति -**अस्तु वेति** ।। इत्येकार्थं **तन्त्रमिति**[३] ।। विवक्षितत्वेनोपात्तमित्यर्थः । **पूर्वोत्तरेति** ।। तदीयत्वेनाभिमतपूर्वोत्तर-

---

१. उभयस्यापि प्र.पाठः । तदुभयस्यापि इति टिप्पण्यां, मातृकायामपि । तदनुसारेण तदिति योजितम् ।
२. इदं सो मातृकायामेव । कां, मं नास्ति ।

देहेष्वित्यर्थः ।। **'एतत्'** इत्यनुवादः, **'अनुमानम्'** इति व्याख्या । **'साध्यत इति'** इत्यनन्तरम् **'अभ्यधिकाशङ्का'** इति शेषः ।। योजनाद्वये ज्ञापकान्याह– **तदुभयस्यापीति** ।। **'देहिनः'** इति श्लोके भाष्यरीत्या शङ्काद्वयपरिहारदर्शनादित्यर्थः । **बहुवचन** इति ।। पूर्वश्लोकस्योत्तरार्धे ।।

( देहातिरिक्तात्मसाधनम् )

**भाष्यम् — यथा कौमारादिशरीरभेदेऽपि देही तदीक्षिता सिद्धः । एवं देहान्तरप्राप्तौ अपि । ईक्षितृत्वात् ।**

**प्रमेयदीपिका**

आक्षेपद्वयपरिहाराय पादत्रयं व्याख्याति– **यथेति** ।। अत्र **'देही तदीक्षिता सिद्धः'** इति देहातिरिक्तात्मसाधनम् । 'तत्' इति कौमारादिपरामर्शः । याजकादित्वात् समासः । द्वितीयान्तस्य तृजन्तेन वा समासः ।।

**भावदीपः**

ननु 'तदीक्षता' इत्यत्र तस्य कौमारादेरीक्षितेति षष्ठीसमासो न युक्तः । 'कर्तरि च' **(पा.सू.२.२.१६)** इति सूत्रे 'कर्त्रर्थकतृजकाभ्यां योगे षष्ठी न समस्यते' इत्युक्तेरित्यतो **'याजकादिभ्यश्च' (पा.सू.२.२.९)** इति प्रतिप्रसवाद्वा ताच्छीलकतृन्प्रत्ययान्तत्वेन 'द्वितीयाश्रितातीत' **(पा.सू.२.१.१४)** इति सूत्रे 'गमिगाम्यादेरुपसङ्ख्यानम्' **(वार्तिक.१२४७)** इत्युक्तेः द्वितीयातत्पुरुषो वेत्याह– **याजकादित्वात्** इत्यादि ।। **द्वितीयान्तस्येति** ।। 'न लोकाव्यय' **(पा.सू.२.३.६९)** इति षष्ठीनिषेधादिति भावः ।।

**प्रमेयदीपिका**

अस्ति तावत् कौमारादिविषयमीक्षणम् । न चेक्षणमीक्षितारं विना सम्भवति । स च वक्ष्यमाणात् परिशेषप्रमाणाद् **'देही'** देहातिरिक्तः **'सिद्धः'** इति । अत्र कौमारादिग्रहणमतन्त्रम् । ज्ञानमात्रेण ज्ञातृसिद्धेः । देहशब्दश्चेन्द्रियादिसहितशरीरवृत्तिः। श्लोके च **'कौमारं यौवनं जरा'** इति विषयेण विषयीक्षणमुपलक्ष्यते । तत् **'देहिनः'** देहातिरिक्तस्येत्युक्तं भवति । 'यथा' इत्यादिसमस्तवाक्यं श्लोके च पादत्रयं देहभेदेऽप्यात्मैकत्वसाधनम् । कौमारादिमच्छरीरभेद इत्यर्थः । देह्येक एवेत्यर्थः ।। तदीक्षितेति।। योऽहं कुमारशरीरवानभूवं स इदानीं युवशरीरवान् वर्त

इत्यादि प्रत्यभिज्ञातेत्यर्थः ।। **देहान्तरप्राप्तावपीति** ।। अनेकदेहप्राप्तावपीत्यर्थः । 'एक एव देही सिद्धः' इति वर्तते ।। **ईक्षितृत्वादिति** ।।[१]प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वदेहानुसन्धानसिद्धेरित्याशयः ।।

**भावदीपः**

आद्यशङ्कोत्तरत्वेन भाष्यं योजयति– **अस्ति तावदिति** ।। **वक्ष्यमाणत्वादिति** ।। **'नहि जडस्य'** इत्यादिनेति भावः । अस्यां योजनायां **'यथा'** इति न सम्बद्ध्यते ।। **अतन्त्रमिति** ।। अविवक्षितमित्यर्थः ।। अत्र हेतुः – **ज्ञानमात्रेणेति** ।। इन्द्रियादिभ्योऽप्यतिरिक्तत्वसिद्ध्यर्थमाह– **देहशब्दश्चेति** ।। आदिपदेन मनःप्राणजाठराग्न्यादिग्रहः ।। **'सिद्धः'** इत्यन्तभाष्येण सूचितां मूलयोजनां दर्शयति – **श्लोके चेति** ।। एवं मूले पूर्वार्धव्याख्यापरं **'सिद्धः'** इत्यन्तभाष्यमाद्यशङ्कानिवर्तकत्वेन व्याख्यायाधुना **'ईक्षितृत्वात्'** इत्यन्तसमग्रभाष्यं पादत्रयव्याख्यापरं द्वितीये आद्यनिवर्तकया व्याख्याति – **यथेत्यादि** (इत्यादिना)[२] ।। **'देही च'** इत्येकवचनस्य तन्त्रत्वमुपेत्य आह – **देही एक एवेत्यर्थः** ।। कौमारादिदेहनिष्ठो जीवः एक एवेत्यर्थः ।।

( देहातिरिक्तात्मसद्भावे अनुभवप्रमाणम् )

**भाष्यम् — न हि जडस्य शरीरस्य कौमाराद्यनुभवः सम्भवति । मृतस्यादर्शनात् । मृतस्य वाय्वाद्यपगमादनुभवाभावः । 'अहं मनुष्यः' इत्याद्यनुभवाच्चैतत् सिद्धमिति चेत् ।**

**प्रमेयदीपिका**

एवमात्मनो देहातिरेकं देहभेदेऽप्येकत्वं च प्रसाध्य **'धीरस्तत्र न मुह्यति'** इत्युच्यते। तस्य वैयर्थ्यमित्याशङ्क्य येऽस्मिन् विषयेऽन्येऽपि मोहहेतवस्ते धीरेण स्वयं निराकार्या इत्येवमर्थत्वान्न वैयर्थ्यमित्याशयवान् तत्प्रदर्शनार्थमुत्तरं प्रकरणमारभते ।। तत्रेक्षणेन कथं देहातिरिक्तात्मसिद्धिः? ईक्षिता हि तेन सिद्ध्यति । स च शरीरप्राणजाठरानलेन्द्रियमनोविषयसन्निधावीक्षणदर्शनात् तेष्वन्यतमः किं न स्यात्? इत्यतः शरीरस्य तावदीक्षणं निषेधति– **नहीति** ।। अत्रापि **'कौमारादि'** इत्यतन्त्रम् । शरीरस्यानुभवो न सम्भवतीति प्रतिज्ञा ।

१. वि.त.नि.भावदीपे (मा.रा.सं.स.पृ-७८८) अधिकविचारः द्रं ।
२. कंसान्तर्गतभागः कां मातृकायामेव । सो-मं नास्ति ।

**'जडस्य' 'शरीरस्य'** इति हेतुद्वयम् । **'मृतस्यादर्शनात्'** इति दृष्टान्तोक्तिः । जडत्वं च भौतिकत्वं विवक्षितमिति न साध्याविशिष्टता ।।

अप्रयोजकत्वाभिप्रायेण शङ्कते– **मृतस्येति**।। जीवच्छरीरमृतशरीरयोर्भौतिकत्वे शरीरत्वे च समानेऽपि मा भून्मृतशरीरस्येक्षणम् । प्राणादिवायूनां जाठरानलस्येन्द्रियाणां चापगमात्। जीवतस्तु प्राणादिसन्निधानाद्भविष्यति । को विरोधः? मा हि भूदेकधर्मोपपन्नानामवान्तर-कारणवैचित्र्याद्वैचित्र्याभावः । न केवलमिदमाशङ्क्यते । किन्तु **'अहं मनुष्यः' इत्याद्यनुभवात् एतत्** देहस्येक्षितृत्वं **सिद्धं** प्रमितं चेत्यर्थः ।।

### भावदीपः

**उत्तरं प्रकरणम्** ।। **'न हि'** इत्यारभ्य **'धीरस्तत्र न मुह्यति'** इत्यन्तमनेक-वाक्यसन्दर्भरूपं प्रकरणमित्यर्थः ।। **इति प्रतिज्ञेति** ।। 'विमतं जीवशरीरं नेक्षितृ जडत्वात्, शरीरत्वाच्च, मृतशरीरवत्' इति प्रयोगः सूचितो भवति ।। जडत्वस्यानीक्षितृत्व-रूपत्वात् साध्याविशिष्टतेत्यत आह– **जडत्वं चेति** ।। ननु प्राणादिराहित्यतद्वत्त्वराहित्ये वैचित्र्येऽपि भौतिकत्वशरीरत्वसाम्यमात्रेण जीवच्छरीरमृतशरीरयोः अनीक्षितृत्वं सममिति किमर्थं नाभ्युपेयम्? इत्यत आह– **मा भूदिति** ।। घटपटकुड्यादीनां द्रव्यत्वरूपैक-धर्माक्रान्तानाम् अवान्तर[१]मृत्पिण्डादिकारणवैचित्र्याद् घटपटादिवैचित्र्याभावो मा भूदित्येतदर्थं नाभ्युपेयमित्यर्थः । अन्यथा पटोऽपि द्रव्यत्वसाम्यात् घटत्ववान् स्यात् । पर्वतह्रदयोरपि प्रमेयत्वसाम्याद्वा अग्निमत्वेन साम्यं स्यादिति भावः । [२]चशब्दार्थं वदन्नेव 'अहम्' इत्यादि भाष्यार्थमाह– **न केवलमिति** ।।

### ( जडस्य, सङ्घात-प्राणादिचैतन्ययोश्च ईक्षितृत्वनिषेधः )

**भाष्यम् — न । सत्येवाविशेषे देहे सुप्त्यादौ ज्ञानादिविशेषादर्शनात् ।**

### प्रमेयदीपिका

दूषयति– **नेति** ।। न प्राणादिसन्निधानं शरीरस्येक्षितृत्वे प्रयोजकं वाच्यम् । सुप्तिमूर्च्छयोः शरीरे प्राणाद्यपगमलक्षणविशेषरहिते **सत्येव** ज्ञानादीनां धर्माणा**मदर्शनात्** । ज्ञानग्रहणमुपलक्षणम् ।

---

१. मृत्वादि इति सो- मातृकायाम् ।

२. सो-मं मातृकासु । यच्छब्दार्थं इति का-पाठः ।

सुखदुःखेच्छाद्वेषप्रयत्नैरप्यात्मा साध्य इति सूचयितुमादिपदम् । मृतादौ ज्ञानाद्यभावश्च तत्कार्यादर्शनात् सिद्ध इति दर्शयितुं **'ज्ञानादिविशेष'** इत्युक्तम् । ज्ञानादीनां विशेषः = कार्यमिति ।। एतेन सङ्घातचैतन्यपक्षः प्राणादिचैतन्यपक्षश्च पराकृतो वेदितव्यः।।

**भावदीपः**

**प्रयोजकमिति** ।। निमित्तमित्यर्थः ।। **ज्ञानग्रहणमिति** ।। **'नहि'** इति वाक्ये **'कौमाराद्यनुभवः'** इत्यादावनुभवपदेन कृतं ज्ञानग्रहणमित्यर्थः । यद्वा **'ईक्षिता सिद्धः'** इत्यादावीक्षितृपदेन कृतमित्यर्थः ।। **साध्य इति** ।। नहि जडस्य सुखादिकं मृतस्य वाय्वाद्यपगमादज्ञानसुखाद्यभावः । 'अहं सुखी' इत्याद्यनुभवाच्चेत्येत्यादिरूपेण परिशेषात् साध्य इत्यर्थः।। **सङ्घातेति** ।। पृथिव्यादिभूतचतुष्टयसङ्घात एव । चेतनप्राणवायुरेव। इन्द्रियाणि वा जाठराग्निर्वा चेतन इति पक्षा निरस्ताः । सुप्त्यादौ [1]तेषु सत्स्वपि ज्ञानादेरदर्शनाद् इत्यर्थः ।।

**( मनो न ज्ञाता, किन्त्वात्मैव )**

**भाष्यम् — समश्चाभिमानो[2] मनसि । काष्ठादिवच्च ।।**

**प्रमेयदीपिका**

मनस ईक्षितृत्वमतिदेशेन निराचष्टे– **समश्चेति** ।। मनोविषय ईक्षितृत्वाभिमानश्च पूर्वेण **समः** । सुप्त्यादौ सत्यपि मनसि ज्ञानादर्शनात् । एवं तर्ह्यात्मापि ज्ञाता न स्यादिति चेत् - न। तदा तस्य मनसा सन्निकर्षाभावात् । मनसोऽपि तथाऽस्त्विति चेत् । सिद्धस्तावदत्मा ।।

मनसो ज्ञातृत्वे दोषान्तरमाह– **काष्ठादीति** ।। मनो न ज्ञातृज्ञानकरणत्वात् । यद्यस्यां क्रियायां करणं न तत्तत्र कर्तृ । यथा पाके काष्ठानि, छिदायां कुठारो वा । न चासिद्धो हेतुः । 'मनसा जानामि' इत्यनुभवात् ।।

एतेन 'आत्मसन्निकर्षेण मनो ज्ञातृ' इति निरस्तम् । ननु जन्यज्ञानं मनोनिष्ठमिति सिद्धान्तः । तत् कथमेतत्? मैवम् । मनोनिष्ठस्यापि ज्ञानस्य न मनः कर्तृ । किन्त्वात्मैव। यथाऽवयवविक्लेदलक्षणस्य पाकस्य न तण्डुलाः कर्तारः । किन्तु देवदत्त इति ।।

---

१. सो- मं मातृकासु । तत्सत्वेपि इति का-पाठः ।

२. 'अभिमानः ममेदमिति बुद्धिः' न्यायसुधा-१-१-६।

### ( इन्द्रिय-विषयचैतन्यदीनामात्मत्वनिराकरणम् )

एतेन इन्द्रियचैतन्यपक्षोऽपि निरस्तः । चक्षुषा पश्यामीत्यादौ तेषामपि करणत्वप्रतीतेरिति । अतीतादिज्ञानदर्शनाद्विषयचैतन्यपक्षः स्फुटदूषण इति न निराकृतः ।।

#### भावदीपः

**एवं तर्हीति** ।। सुप्त्यादौ ज्ञानाद्यभावे देहादेश्चैतन्याभावे तदानीं सत्यप्यात्मनिज्ञानाभावादेरदृष्टेरितिभावः।।**तथाऽस्तु** आत्मना सन्निकर्षासन्निकर्षादज्ञानाद्यभावोऽस्तु**इतिचे**दित्यर्थः।। **आदिपदार्थोक्तिः- कुठारो वेति** ।। **एतेनेति** ।। करणत्वसाधनेनेत्यर्थः।। **एतेनेन्द्रियेति** ।। **'काष्ठादिवच्च'** इति करणत्वोक्तिपरभाष्येणेत्यर्थः । देहान्यजीवसत्वे च परिशेषप्रमाणोक्तिः - **प्रत्यभिज्ञानमिति** ।। 'प्रत्यग्रजातस्य शिशोः' इत्यादिनोक्तप्रत्यभिज्ञानमित्यर्थः ।।

**भाष्यम् — श्रुतेश्च** ।।

#### प्रमेयदीपिका

एवं परिशेषप्रमाणेन देहातिरिक्त आत्मा सिद्धः । तस्य स्वभावादेवाहाराद्यभिलाषोप-पत्तेः प्रत्यभिज्ञानमसिद्धमिति वदन्तं प्रत्यात्मनित्यत्वे प्रमाणान्तरं चाह– **श्रुतेश्चेति** ।।

**'अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके'** (ऐ.उ.४.६)

इत्यादिश्रुतेश्च देहातिरिक्तो नित्य आत्मा सिद्धः । अत एव न स्वभाववादावकाश इति ।।

#### भावदीपः

**इत्यादिश्रुतेश्चेति** ।। ऐतरेयश्रुतेरित्यर्थः ।।

### ( बौद्ध-चार्वाकौ प्रति वेदप्रामाण्यसमर्थनम् )

**भाष्यम् — प्रामाण्यं च प्रत्यक्षादिवत् । न च बौद्धादिवत् । अपौरुषेयत्वात्। न ह्यपौरुषेये पौरुषेयाज्ञानादयः कल्पयितुं शक्याः ।।**

#### प्रमेयदीपिका

ननु बौद्धचार्वाकादीन् प्रति देहातिरिक्तनित्यात्मसाधनमिदम् । न च ते श्रुतेः प्रामाण्यमङ्गीकुर्वते । तत्कथं श्रुत्युदाहरणम्? इत्यत आह– **प्रामाण्यं चेति** ।। बौद्धेन तावत्

प्रत्यक्षानुमानयोः, चार्वाकेण च प्रत्यक्षस्य प्रामाण्यमङ्गीकृतम् । तत् कुतः? इति वक्तव्यम् । बोधकत्वेनेति चेत् - तर्हि तद्वच्छुतेरप्यङ्गीक्रियताम् ।।

ननु वाक्यत्वे समेऽपि केषाचिद् बौद्धादिवाक्यानामप्रामाण्यदर्शनाच्छुतेरपि तदाशङ्क्यत इत्यत आह– **नचेति** ।। बुद्धस्येदं बौद्धम् । चार्वाको बौद्धमुदाहरति, बौद्धस्त्वन्यदिति द्रष्टव्यम् ।। 'अप्रामाण्यं श्रुतेः शङ्कनीयम्' इति शेषः । तथासतीन्द्रियलिङ्गयोरपि क्वचिद् अप्रामाण्यदर्शनात् सम्प्रतिपन्नयोरपि प्रत्यक्षानुमानयोस्तच्छङ्काप्रसङ्गादिति भावः ।।

**( अपौरुषेये न पुरुषदोषाः कल्प्याः )**

प्रसक्ताऽपि शङ्का तत्र निर्दोषत्वेनापनीयत इति चेत् समं प्रकृतेऽपि इत्याह– **अपौरुषेयत्वादिति** ।। अपौरुषेयत्वेऽपि दोषित्वं किं न स्यात्? इत्यत आह– **नहीति** ।। सामान्योक्तित्वात् '**अपौरुषेये**' इति नपुंसकोक्तिः । अन्यथा श्रुतेः प्रकृतत्वात् स्त्रीलिङ्गं स्यात् ।। शब्दे ह्यबोधकत्वादयो दोषाः । ते च वक्तृपुरुषाश्रिताज्ञानादिमूलाः । यस्य तु वक्ता पुरुष एव नास्ति तत्र कथं वक्तृपुरुषाश्रिताज्ञानादयो दोषमूलत्वेन कल्पयितुं शक्याः? व्याहतेरिति । अत्र अज्ञानादीनां पौरुषेयत्वोक्तिरुपचारात् । पुरुषशब्दात् तत्कृतवाक्यादिष्वेव ढञः स्मरणात् ।।

**भावदीपः**

ननु बौद्धचार्वाकौ द्वावेवात्र निराकार्यौ । तथाच बौद्धादिवत् बौद्धचार्वाकवदिति वक्ता नान्योऽस्ति । अतः कथमेवमुक्तिः? इत्यत आह– **चार्वाक इति**[१]।। **अन्यदिति** ।। उन्मत्त-वाक्यादिकं चार्वाकवाक्यं चेत्यर्थः ।। **तत्कृतवाक्यादिष्वेवेति** ।। 'कृते ग्रन्थे' **(पा.सू. ४.३.११६)** इति सूत्रेण पुरुषेण कृतं वाक्यं पौरुषेयम् । 'तेन प्रोक्तम्' **(पा.सू. ४.३.१०१)** इत्यनेन च प्रोक्तमित्यर्थे ठगादिप्रत्ययविधानादित्यर्थः ।।

**( धर्मादिसिद्धावपौरुषेयवाक्यमेव मानम् )**

भाष्यम् — विना च कस्यचिद् वाक्यस्यापौरुषेयत्वं सर्वसमयाभिमत-

१. चार्वाकशव्दरूपनिष्पत्तिः- चार्वी वुद्धिः । तत्सम्बन्धादाचार्योपि चार्वी । तस्येमे छात्राः चार्वाकाः' २.२.३ न्यायसुधा । शे.वा.चं- 'वुद्धिवाचिनश्चारुशव्दात् वोतो गुणवचनात् इति ङीष्प्रत्यये चार्वी इति रूपसिद्धौ यष्टीः प्रवेशय इतिवदजहत्स्वलिङ्गादेव चार्वीशव्दात् वुद्धिमति लोकायतिकाचार्यपुरुष - विशेषे लाक्षाणिकात् तस्येमे इत्यर्थे आकच्प्रत्यये तद्धिता इति वहुवचनसामर्थ्यलव्धतद्धितगतिवैचित्र्येण उत्पादिते यस्येति चेतीकारलोपे चार्वाकशव्दनिष्पत्तिरिति द्रष्टव्यम् '।।

**धर्माद्यसिद्धिः। यश्च तौ नाङ्गीकुरुते नासौ समयी[१] । अप्रयोजकत्वात् ।**

## प्रमेयदीपिका

ननु श्रुतेरपौरुषेयत्वमेव नास्ति । वाक्यत्वात् । लौकिकवाक्यवदिति चेत् - किमेवं वदतः किमपि वाक्यमपौरुषेयं नास्तीति मतम् उत किञ्चिदस्तीति । आद्ये दोषमाह– **विना चेति** ।। कस्यचिद्वाक्यस्यापौरुषेयत्वाभावे धर्माधर्मयोरनिश्चयः प्रसज्येत । निश्चायकाभावात्। नच तथाऽस्त्विति वक्तुं शक्यम् । तत्सद्भावस्य सर्वैः समयिभिर्निश्चितत्वादिति ।।

## ( चार्वाकशास्त्रस्य विषयनिराकरणम् )

ननु प्रत्यक्षैकप्रमाणवादी यश्चार्वाको धर्माधर्मौ नाङ्गीकुरुते तस्य नेदमनिष्टम् । किमप्य-पौरुषेयवाक्यमनङ्गीकृत्य वेदापौरुषेयत्वं प्रत्याचक्षाणान् सर्वान् प्रति चायं प्रसङ्ग इत्यतः तेनापि धर्मादिकमङ्गीकार्यैनं प्रसङ्गं वक्ष्याम इत्याशयेनाह– **यश्चेति** ।। **तौ** धर्माधर्मौ। 'इति प्रसज्येत' इति शेषः ।। धर्माद्यनङ्गीकारे कुतः तच्छास्त्रस्याशास्त्रत्वप्रसङ्गः? येनासौ शास्त्री न स्यादित्यत आह– **अप्रयोजकत्वादिति** ।। प्रयुज्यते प्रवर्त्यते प्रणेता श्रोता च शास्त्रे याभ्यां ते प्रयोजके विषय-प्रयोजने । अविद्यमाने प्रयोजके यस्य शास्त्रस्य तत् तथा । अनन्यलभ्यं कमपि पुरुषार्थमधिकृत्य तत्साधनं तथाविधमर्थं प्रतिपादयन् वाक्यसमूहो हि शास्त्रम् । अन्यथाऽतिप्रसङ्गात् । नच अतीन्द्रियस्याभावेऽन्यत्तथाभूतं शक्यनिरूपणम् । अतः शास्त्रत्वसिद्धये विषयादित्वेन धर्मादिकं किमप्यङ्गीकार्यमिति भावः ।।

## भावदीपः

**'नासौ समयी'** इत्यनन्तरं शेषमाह– **इति प्रसज्यत इति** ।। **तथाविधमिति** ।। अनन्यलभ्यमर्थं विषयमित्यर्थः ।।

**भाष्यम् — माऽस्तु धर्मोऽनिरूप्यत्वादिति चेन्न । सर्वाभिमतस्य प्रमाणं विना निषेद्धुमशक्यत्वात् ।।**

---

१. (अ) **'यस्य धर्माधर्मौ न स्तः तत्सिद्धान्ते किं प्रयोजनम्। अतः स्वव्याहतेरेवोपेक्ष्यः' ब्र.सू.भा.२.२.६।**
(आ) **'नचापौरुषेयं वाक्यमेव नास्तीति वाच्यम् । तदभावे सर्वसमयाभिमतधर्माद्यसिद्धेः । यस्य तौ नाभिमतौ नासौ समयी । समयप्रयोजनाभावात् । न च तेन लोकोपकारः । धर्माद्यभावज्ञाने परस्परहिंसादिना अपकारस्यैव प्राप्तेः । नचोपकारेण तस्य प्रयोजनम् । अदृष्टाभावात् । अतो धर्माद्यभावं वदता स्वसमयस्य आनर्थक्यमङ्गीकृतमेवेति नासौ समयी ' -वि.त.नि. प्र-परिच्छेदे ।**

## प्रमेयदीपिका

शङ्कते– **मास्त्विति** ।। **मा** अयं न माङ् । **अस्तु** इत्यव्ययं वा । **'धर्मः'** इत्युपलक्षणम्। **अनिरूप्यत्वात्** = प्रमाणाभावेन प्रतिपादयितुमशक्यत्वात् ।।

इदमुक्तं भवति । विषयप्रयोजने हि ते भवतो ये प्रमाणेन प्रतिपादयितुं शक्येते । वाङ्मात्रस्य श्रोतृभिरनादरणात् । नच धर्मादिकं प्रमाणेन प्रतिपादयितुं शक्यम् । प्रत्यक्षा-गोचरत्वात् । अनुमानादेश्च प्रामाण्याभावात् । अतो न शास्त्रविषयत्वादिना धर्मादिकम् अङ्गीकर्तुमुचितम् । नचैतावता निर्विषयत्वाद्यापत्तिः । यतो धर्माद्यभावो विषयो भविष्यति। प्रयोजनं च श्रोतृणां धर्माद्यनुष्ठानप्रसक्तक्लेशनिवृत्तिः । धर्मादिसद्भावभ्रमोपरुद्धविषयसुखा-वाप्तिश्च । प्रणेतुश्च लोकोपकारः[1]। उपकर्तारं च प्रत्युपकुर्वन्ति लोका इति ।।

निराकरोति– **नेति**।। एवं वदता धर्माद्यभावोऽपि न शास्त्रविषयत्वेन शक्यते वक्तुम् । **सर्वाभिमतस्य** धर्मादेः **प्रमाणं विना** वाङ्मात्रेण **निषेद्धुं** नास्तीति प्रतिपादयितुम् **अशक्यत्वात्**। घटाद्यभाव इव प्रत्यक्षेणैव धर्माद्यभावो निश्चेष्यत इति चेत् । स्यादेवं यद्यत्र न काचिद् विप्रतिपत्तिः । यत्र त्वस्तित्वाभिमानः, तत्र पिशाचादाविव प्रत्यक्षानुपलम्भस्सन्देहहेतुरेव भवतीति । तदिदमुक्तम् – **सर्वाभिमतस्येति** ।।

## भावदीपः

[2]**माऽयं न माङ् इति** ।। 'अमानो नाः प्रतिषेधः'**(गणसूत्रम्)** इति वादिनिग्रहसूत्रे[3] पठितो निषेधार्थको माशब्दोऽयम् । न माङ् । तथात्वे 'माङि लुङ्'**(पा.सू.३.३.१७५)** इति लुङि माभूदिति स्यादिति भावः ।। **उक्तत्वादिति** ।। **'वाङ्मात्रेण'** इत्यादि ग्रन्थेनेति भावः ।।

## (धर्मादौ सर्वाभिमतिरेव प्रमाणम् )

**भाष्यम् —** नच सिद्धिरप्रामाणिकस्येति चेत्- न । सर्वाभिमतेरेव प्रमाणत्वात् ।

---

१. त.प्र.भावदीपे– 'लोकोपकार इति ।। इदानीं धर्मबुद्ध्या कामोपभोगोपरुद्धानां लोकानां धर्माद्यभावबोधने यथेष्टं प्रवृत्तिसम्भवादुपकारः प्रयोजनं भवतीत्यर्थः' ।।

२. तर्कताण्डवन्यायदीपे- (अ) न माङिति ।। इति निषेधार्थकमाशब्दोयम् । न माङ् । तेन माङि लुङ् इत्युक्तलुङभावः साधुः । पृ-५८; (आ) न माङिति ।। इति निषेधार्थकमाशब्दोयम् । न माङ् । तेन माङि लुङ् इति लुङा भाव्यमिति न शङ्क्यम् । (पृ-३९८ तं.तां न्यायदीपे -शक्तिवादे)।

३. 'च आदिगणसूत्रे ' इति मं-मातृकायाम् ।

**अन्यथा सर्ववाचिकव्यवहारासिद्धेश्च ।**

### प्रमेयदीपिका

पुनश्शङ्कते– **नचेति** ।। मा भूद्धर्माद्यभावस्य विषयत्वम् । तत्साधकप्रमाणाभावात् । तथाऽपि धमदिर्विषयत्वादिकं न घटते । **अप्रामाणिकस्य** प्रमित्यनुपपत्त्या साधयितुमशक्यत्वादिति ।।

निराकरोति– **नेति** ।। अस्ति तावद्धर्मादिविषये सर्वेषामाऽविपालगोपालम्[१] अस्तित्वाभिमानः । अभिमानो ज्ञानमेव । नच तस्य बाधकं किञ्चित् । धर्माद्यभावप्रतिपादकप्रमाणाभावस्योक्तत्वात् । अतः **सर्वाभिमतेरेव** धर्मादौ प्रमात्वात् तत्करणस्य च **प्रमाणत्वाद्** असिद्धमप्रामाणिकत्वमिति भावः ।।

किं तत् प्रमाणम्? इति चेत् । धर्मादेः प्रामाणिकत्वसिद्धौ किमनया व्यर्थचिन्तया? नच तत्र प्रमाणविशेषोऽशक्यनिरूपणः । आगमस्य तत्सहकारिणोऽनुमानस्य च सत्त्वात्। अत एव नान्धपरम्पराऽपि ।।

आगमादेः प्रामाण्यं नास्तीत्युक्तमित्यत आह–**अन्यथेति** ।। यद्यागमस्यानुमानस्य च न प्रामाण्यं स्यात्तदा सर्वस्य वाचा निर्वर्त्यस्य व्यवहारस्यासिद्धिः स्यात् । परप्रत्ययनार्थो हि वाग्व्यवहारः । स यदि न परं प्रत्याययद् व्यर्थो न क्रियेतैवेति ।। चशब्दः प्रमाणसामान्यसिद्ध्या तद्विशेषसिद्धेः समुच्चये ।।

### भावदीपः

**अत एव नान्धपरम्परापीति** ।। आगमानुमानमूलकत्वादेवेति भावः ।। [२]'वाचिक' इति ठगर्थमाह– **वाचा निर्वर्त्यस्येति** ।।

( अनुमानस्याप्रामाणिकत्वे वाचनिकव्यवहारासिद्धिः )

**भाष्यम् — नच मया श्रुतमिति तव ज्ञातुं शक्यम् । अन्यथा वा[३] प्रत्युत्तरं स्यात् । भ्रान्तिर्वा तव स्यात् ।।**

---

१. (अ) 'आऽविपालगोपालम्' इतिशब्दस्य साधुत्वं-वि.त.नि.गुरुराजीये-पृ-७९४ समर्थितम् ।
   (आ) 'आ अविपाल इति पदच्छेदः, अविपालमारभ्येत्यर्थः'-द्रं-सुधा-संपुटम्.१४,पृ.वं.पं ६८१४ ।

२. इदं वाक्यं सो-नास्ति ।

३. अत्र चशब्दः नरहरितीर्थीयभाष्यपाठे ।

### प्रमेयदीपिका

भवत्वागमाप्रामाण्ये वाचनिकव्यवहारासिद्धिः । अनुमानाप्रामाण्ये तु कथम्? इत्यत आह– **न** चेति ।। त्वदीयवाक्यं मया श्रूयत इति ज्ञात्वा मां प्रति त्वया वाग्व्यवहारः क्रियते? अन्यथा वा ? द्वितीये निष्फलो न कर्तव्यस्स्यात् । नाद्यः । परचित्तवृत्तीनां परस्याप्रत्यक्षत्वेन **मया श्रुतमिति तव ज्ञातुम्** अशक्यत्वान्मदीयं प्रत्युत्तरमेव तज्ज्ञानोपाय इत्येवं वक्तव्यमिति भावः । अस्त्वेवमित्यत आह– **अन्यथा** वेति ।। **'वा'**शब्दोऽवधारणे । प्रत्युत्तरं हि लिङ्गतया ज्ञापकम् । नच तव मतेऽनुमानं प्रमाणम् । अतः **प्रत्युत्तरमन्यथैव** ज्ञापकमेव **स्यादि**ति ।।

ननु शब्दलिङ्गयोः प्रामाण्यमेव नाङ्गीक्रियते । ज्ञापकत्वमात्रं त्वङ्गीक्रियत एव । अतः कथं वाचिकव्यवहारासिद्धिः? इत्यत आह - **भ्रान्तिर्वे**ति ।। ज्ञापकत्वमङ्गीकृत्य प्रामाण्यानङ्गीकारे शब्दलिङ्गाभ्यां जायमानः प्रत्ययः **तव** मते **भ्रान्तिर्वा स्यात्** संशयो वा । गत्यन्तराभावात् । नच परस्य भ्रान्त्याद्यर्थं वचनप्रयोगः । नापि प्रत्युत्तरेण भ्रान्तः सन्दिग्धो वा वाक्यं प्रयुङ्क्त इति युक्तम् । अतो वाचिकव्यवहारसिद्ध्यर्थमागमानुमानप्रामाण्यमङ्गीकार्यमिति ।।

### भावदीपः

**भ्रान्तिर्वे**ति वाशब्देन संशयग्रह इत्युपेत्याऽह– **संशयो वेति** ।।

### ( चार्वाकशास्त्रस्य प्रयोजनादिनिराकरणम् )

**भाष्यम् — सर्वदुःखकारणत्वं वा स्यात् । एको वाऽन्यथा स्यात् ।।**

### प्रमेयदीपिका

एवं चार्वाकशास्त्रस्य विषयं निराकृत्य प्रयोजनमपि निराकुर्वच्छ्रोतृप्रयोजनं तावन्निराचष्टे– **सर्वे**ति।। यथा शास्त्रस्य सर्वेषां श्रोतॄणां सुखकारणत्वं तथा धर्माद्यभावज्ञाने सर्वमर्यादाऽतिक्रमे परस्परहिंसादिना सर्वदुःखकारणत्वं च स्यात् । तथा च समव्ययफलं निष्प्रयोजनमेवेति। इदानीं शास्त्रप्रणेतृप्रयोजनं निराकरोति– **एको वेति** ।। धर्मादिज्ञानशून्याः पशुप्राया नोपकारिणमुपकुर्वन्ति । अपि तु सर्वेऽप्यपकर्तुमलम् । तदभावेऽपि **एको वा अन्यथा** अपकारकः **स्यात्** इत्यर्थः । तदेवं धर्माद्यनङ्गीकारे शास्त्रस्य विषयाद्यभावेनाशास्त्रत्वप्रसङ्गात् सर्वैर्धर्मादिकमङ्गीकार्यमिति ।।

### भावदीपः

**सुखकारणत्वमिति** ।। 'श्रोतृणां धर्माद्यनुष्ठाने' इत्यादिनोक्तरीत्येति भावः[१]।।

### ( न पौरुषेयवाक्येण धर्मादिसिद्धिः )

**भाष्यम् — रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशङ्का स्यात् । नचादोषत्वं स्ववाक्येनैव सिद्ध्यति ।।**

### प्रमेयदीपिका

ननु स्वीकृतं धर्मादिकम् । पौरुषेयवाक्यात् तन्निश्चयस्स्यादित्यत आह– **रचितत्वे चेति** ।। ततश्च न धर्मादिनिश्चय इति भावः । निर्दोषत्वेन प्रमितोऽसाविति चेत् । तस्य निर्दोषत्वं किं तद्वाक्यात् सिद्धम्? प्रमाणान्तरेण वा? न द्वितीयः । तदभावात् । आद्यं दूषयति– **न चेति** ।। अतिप्रसङ्गादिति भावः । नच प्रत्यक्षादिना धर्मादिसिद्धिः । अतः सर्वैः किमप्यपौरुषेयं वाक्यमङ्गीकार्यम् । अङ्गीकृतं च बौद्धादिभिः स्वसमयापौरुषेयत्वम् ।

**'शौद्धौदनिप्रभृतयः सम्प्रदायप्रवर्तकाः'**

इत्युक्तत्वात् । ततः किम्?इति चेत् । वाक्यत्वहेतोस्तत्रानैकान्त्यमिति ।।

### भावदीपः

**नच प्रत्यक्षादिनेति** ।। अयोग्यत्वादिति भावः ।।

**भाष्यम् —[२]नच येन केनचिदपौरुषेयमित्युक्तमुक्तवाक्यसमम् । अनादिकाल-परिग्रहसिद्धत्वात् । अतः प्रामाण्यं श्रुतेः । अतः कुतर्कैर्धीरस्तत्र न मुह्यति ।।**

### प्रमेयदीपिका

अस्त्वेवमनुमानस्यान्यतरानैकान्त्याच्छ्रुतेरपौरुषेयत्वे बाधकाभावः । साधकं तु किम्? इति चेत् । कर्तुरप्रसिद्धिरपौरुषेयत्वप्रसिद्धिश्चेति ब्रूमः । एवं तर्हि गूढकर्तृकस्य कृता-पौरुषेयत्वप्रसिद्धिकस्याप्यपौरुषेयत्वप्रसङ्ग इत्यत आह– **नचेति** ।। **केनचित्** 'कृतम्' इति

---

१. का- मातृकायां उपोद्घातान्त्यभागमारभ्य एवम्पर्यन्तो भागो नास्ति ।।

२. **'न च केनचित् कृत्वा वेद इत्युक्तं वेदसमम् । परम्पराभावात् । ....अतो अपौरुषेयवाक्येनैव धर्मादिसिद्धेः सर्ववादिनामपि तदङ्गीकार्यम् । तत्प्रामाण्यं च स्वत एव सिद्धम्'- वि.त.निर्णये.**

शेषः ।। **उक्तवाक्यसमं** वेदवदपौरुषेयमित्यर्थः । अनादिकाले यः परिग्रहः प्राक्तनमेवैतदिति ज्ञानं, तेन विषयीकृतत्वाच्छ्रुतेः । इतरस्य तदभावादपौरुषेयत्वप्रसिद्धिरेव तत्र भग्नेति भावः । अपौरुषेयत्वसिद्धौ सिद्धमर्थमुपसंहरति– **अत** इति ।।

एवञ्च चतुर्थपादोपयुक्तं प्रमेयमुक्त्वा तमिदानीं निवेशयति– **अत** इति ।। यत एवं नैरात्म्यवादिभिरुत्प्रेक्षिताः कुतर्का अतस्तैः **कुतर्कैः धीरः** = धीमान् **तत्र** = देहातिरिक्त-नित्यात्मसद्भावविषये **न** मोहमापद्यते । **'नरके नियतं वासः'(१.४४)** इत्याद्यर्जुनवचनेन तस्य नित्यात्मप्रतिपत्तिसिद्धेः प्रथमपुरुषप्रयोगः ।।

### भावदीपः

**अन्यतरेति** ।। बौद्धवाक्यापौरुषेयत्वस्य सिद्धान्तिनाऽनङ्गीकारात् अन्यतरेत्युक्तम् । अर्जुनं प्रत्युक्तिरूपत्वात् 'त्वं न मुह्यसि' इति वाच्ये'मुह्यति' इत्युक्तिः कथम् ? इत्यत आह– **नरक** इत्यादिना ।। चार्वाकादि[1]मतनिरासः ।।

### (मरणे शोकः न कार्यः )

**भाष्यम् — अथवा जीवनाशं देहनाशं वाऽपेक्ष्य शोकः । न जीवनाशम् । नित्यत्वादित्याह- न त्वेवेति ।। नापि देहनाशमित्याह– देहिन इति ।। यथा कौमारादिदेहहानेन जरादिप्राप्तावशोक एवं जीर्णादिदेहहानेन देहान्तरप्राप्तावपि।।**

### प्रमेयदीपिका

अनेकार्था गीतेति दर्शयितुं श्लोकद्वयं प्रकारान्तरेण व्याचष्टे - **अथवेति** ।। **न जीव-नाशमपेक्ष्य शोकः** 'कार्यः' इति शेषः । **नित्यत्वात्** जीवस्य । अनेन योजना पूर्ववदेव इति ज्ञापयति ।। १२ ।।

**'नापि'** इत्यत्रापि पूर्ववच्छेषः । अत्र पूर्वयोजना न सङ्गच्छते । अतोऽन्यथा पादत्रयं व्याख्याति –**यथेति**।।**'जरादिप्राप्तौ'** **'देहान्तरप्राप्तौ'**इति निमित्तसप्तम्यौ । ततश्चायमर्थः । कौमाराद्यवस्थाविशिष्टदेहहाने तावन्नास्ति शोक इति प्रसिद्धम् । तत् कस्य हेतोः? इति वाच्यम् । जरादिविशिष्टदेहान्तरलाभात् समानलाभेन हानिर्हि समाधीयत इति चेत् । तर्हि मरणेऽपि शोको न कार्यः । देहान्तरलाभादेव । यदा तु जीर्णलाभेन समीचीनहानेः

१. मत इति ख.सो मातृकासु नास्ति ।

प्रतिविधानं तदा सुतरां समीचीनलाभेन जीर्णहानेरिति । तत्रावस्थामात्रहानिः । अत्र त्ववस्थावतोऽपीत्येतदनुपयुक्तं वैषम्यम् । निष्कप्रदानेन पटग्रहणदर्शनादिति भावेनोक्तम्- **'धीरः'** इति ॥ १३ ॥

### भावदीपः

**जीर्णहानेरिति** ॥ 'प्रतिविधानम्' इत्यनुषङ्गः ॥ चतुर्थपादं स्वयं योजयति- **तत्रावस्थामात्रेत्यादिना** ॥ धीर इतीति ॥ तत्र पूर्वदेहत्यागेन देहान्तरप्राप्तिविषये धीरो विवेकी न मुह्यतीति मूलार्थ इति भावः ॥ १३ ॥

**( सुखदुःखादौ मनसो विषयसम्बन्ध एव कारणम् )**

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।[१]**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

**भाष्यम् — तथाऽपि तद्दर्शनाभावादिना शोक इति चेत्- नेत्याह- मात्रास्पर्शा इति ॥**

### प्रमेयदीपिका

प्रकारान्तरेण शोकं शङ्कते- **तथापीति** ॥ यद्यपि बान्धवादीनां हानिर्भविष्यतीति धिया न शोको युक्तः । उक्तविधयाऽऽत्महानेरभावात् । देहहानावपि प्रतिनिधिलाभात् । तथाऽपि तन्मरणे ममैव सुखहानिर्दुःखावाप्तिश्च भविष्यतीति धिया मे शोकः समुत्पतितः। कथम्? तद्दर्शनाभावादिना । **'तद्'** इति बान्धवादिदेहादिपरामर्शः । **आदिपदेन** विकृततद्दर्शनं च गृह्यते। प्रेमास्पदानां हि दर्शनस्पर्शनालापादिकं सुखहेतुः । तेषु मृतेषु तद्दर्शनाद्यभावात् सुखहानिः। तथा तेषां छेदभेदादिदर्शनेन दुःखावाप्तिश्चेति । एतन्निषेधपूर्वकं श्लोकमवतारयति- **नेति** ॥

**भाष्यम् — मीयन्त इति मात्रा विषयाः । तेषां स्पर्शाः सम्बन्धाः । त एव शीतोष्णसुखदुःखदाः । देहे शीतोष्णादिसम्बन्धाद्धि शीतोष्णाद्यनुभव आत्मनः। ततश्च सुखदुःखे ॥**

---

१. अयं श्लोकः सनत्सुजातीये २-१९ श्लोकव्याख्याने श्रीवादिराजतीर्थैः उदाहृतः ।

## प्रमेयदीपिका

### ( मात्राशब्दार्थः )

'मीयन्ते विषया [१]एभिरिति मात्रा इन्द्रियाणि'[२] इति व्याख्यानमसत् । पुराणादौ मात्राशब्दस्य विषये रूढत्वादित्याशयवान् व्याचष्टे– **मीयन्त** इति ।।

ननु गन्धरसरूपस्पर्शशब्दा विषयाः । अतो भिन्नपदत्वे द्वन्द्वत्वे[३] वा स्पर्शानां विषयान्तर्गततानां पुनरुक्तिव्यर्थेत्यत आह– **तेषामिति** ।। विषयाणाम् ।। तथाप्यनुपपत्तिः । विषयाणां स्पर्शाभावादित्यत आह–**सम्बन्धा** इति ।। एवं तर्हि किं षष्ठीसमासपरिग्रहणेन? भिन्नपदत्वादावपि दोषाभावादित्यतो वाक्यं योजयति– **त एवेति** ।। [४]**तुशब्दस्यार्थः 'एव'** इति[५]। नहि विषयाणां सम्बन्धानां च पृथगेतत्कार्यं सम्भवतीति भावः ।।

ननु शीतोष्णशब्दौ विषयविशेषवचनौ । तत् कथं विषयसम्बन्धा विषयविशेषं दद्युः? कथं च साक्षात् सुखदुःखे? कश्च प्रतिसम्बन्धी? कस्मै ददति? इत्यत आह– **देह** इति ।। देहशब्देनात्रेन्द्रियाणि लक्ष्यन्ते । अनेन शीतोष्णशब्दौ सकलविषयोपलक्षकौ । विषयोक्त्या च तत्साक्षात्कारो लक्ष्यत इति लक्षितलक्षणेयम् । अनुभवद्वारैव सुखदुःखदानम्। प्रतिसम्बन्धी देहः । दानं चात्मन इत्युक्तं भवति ।। एतेन लौकिकी प्रतीतिरर्जुनेन शङ्किताऽनूद्यते । तत्तद्विषयाणां तैस्तैरिन्द्रियैर्ये ये सन्निकर्षास्तैस्तैस्तत्तद्विषयसाक्षात्कारो[६] भवति । तत्रेष्टविषयसाक्षात्कारात् सुखं भवति । अनिष्टविषयसाक्षात्काराद्दुःखं भवतीति ।।

## भावदीपः

**विषयविशेषेति**[७] ।। स्पर्शरूपविषयविशेषेत्यर्थः ।। **कश्च प्रतिसम्बन्धीति** ।। मात्रास्पर्शशब्दितविषयसम्बन्धानां प्रतिसम्बन्धी क इत्यर्थः ।। **अनेनेति** ।। देह इत्यादिभाष्येणेत्यर्थः । **सकलेति** ।। 'शीतोष्ण' इत्युक्तेरिति भावः । '**अनुभवः**' इत्युक्तिलब्धमाह–[८]**तत्साक्षात्कार इति** ।। **लक्षितलक्षणेयमिति** ।। विषयविशेषवाचिशीतोष्णशब्दाभ्यां रूपादिसकलविषयलक्षणाद्वारा

---

१. शाङ्करभाष्ये 'आभिः' इति पाठः । २.शाङ्करभाष्ये-प्रथमभागे-पृ-९६ । ३.'द्वन्द्वे'-गु, वे-ग्रं ।

४ 'तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्ते अवधारणे ' इति नाममहोदधौ -ब्र.सू.भा.उ.३.२.१२ ।

५. 'तुशब्दार्थः एवेति'-पां । ६.'साक्षात्कारा भवन्ति'-पां ।

७. विशेषवाचकाविति - सो, का पाठे । एवं टीकायामपि कचित् वाचकौ इति पठ्यते ।

८. ख. पाठोयम् । क– तत्सारूप्यादि .. सकलविषय इत्येतावान् पाठः ।।

तदनुभवस्य लक्षणयोपपादनादिति[१] भावः ।। एवं भाष्यं व्याख्याय **'मात्रा'** इति मूले पूर्वार्धार्थमाह– **एतेनेति** ।। **'मात्रास्पर्शाः'** इत्यर्धेन कथमनूद्यते? इत्यत आह– **तत्तद्विषयाणामिति** ।।

**( आत्मनः विषयेन्द्रियसन्निकर्षमात्रेण दुःखादिर्नास्ति )**

**भाष्यम् — नह्यात्मनः स्वतो दुःखादिः सम्भवति ।**

**प्रमेयदीपिका**

भवेदेतदेवम् । ततः किं प्रकृतशङ्कायाः? इत्यतः तुशब्दात् परया काक्वा[२] **सिद्धमर्थमाह– न हीति** ।। **स्वतः** इति विषयेन्द्रियसन्निकर्षमात्रेण ।। **दुःखादिरिति** ।। विषयसाक्षात्कारः, सुखदुःखे च । अनेन मात्रास्पर्शा एव केवलाः किं शीतोष्णसुखदुःखदाः? नहि; किन्नाम? अभिमानसहिता इत्युक्तं भवति ।।

अभिमानो नामात्र विषयेषु शोभनत्वाध्यासननिमित्तस्स्नेहः । अरित्वादिभ्रमनिमित्तो द्वेषश्च शरीरेन्द्रियान्तःकरणेषु ममताऽतिशयहेतुकोऽविवेक इत्यादिः ।।

**भावदीपः**

**भवेदेतदेवमिति** ।। उक्तदिशा दुः(सु)खादिकं भवतीत्येतद् भवेदित्यर्थः ।।

**भाष्यम् — कुतः? आगमापायित्वात् । यद्यात्मनः स्वतः स्युः सुप्तावपि स्युः ।।**

**( अभिमान एव सुखदुःखादिकारणम् )**

**प्रमेयदीपिका**

विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः? येनाभिमानोऽप्यधिकः कारणसामग्र्यां निवेश्यत इति शङ्कापूर्वकमुत्तरपादं व्याचष्टे– **कुत** इति ।। ननु कथमिदं लभ्यते? 'यतः' इत्यध्याहारादिति ब्रूमः । प्रयोजनान्तराभावात्, हेत्वर्थगर्भत्वेन वा । 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात्, शीतोष्ण-

१. लक्षणयोपादानात् इति सो पाठः ।

२. (अ)**न्यायसुधापरिमले** -'**काकुरिति** । स्वरविशेषो काकुः ।

(आ)**काव्यप्रकाशटीकायाम्**- '**कायति अर्थान्तरमिति काकुः । यद्वा काकुः जिह्वा । तद्व्यापारविशेषसम्पाद्यत्वात् ध्वनेर्विकारोपि काकुः** ।-तृतीयोल्लासे-१८श्लोके ।

सुखदुःखदत्वविशिष्टानां मात्रास्पर्शानामिदं विशेषणं भवत्, शीतोष्णसुखदुःखदत्वमुपसङ्क्रामति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यत् तस्यागमापायित्वादित्यर्थः ।।

अनेन कथमुक्तशङ्का[1]निरासः? इत्यतोऽतिप्रसङ्गमुखेन व्याचष्टे– **यदीति** ।। मात्रास्पर्शा **यदि स्वतः** स्वयमेव अभिमानमनपेक्ष्य **आत्मनः** शीतोष्णसुखदुःखदास्स्युस्तर्हि **सुप्तावपि स्युः** । न हि कारणसामग्री कार्यं व्यभिचरतीत्यर्थः। नच वाच्यं सुप्तौ विषयेन्द्रियसम्बन्धा एव न सन्तीति । स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयत्वात् । अत एव **शीतोष्ण**ग्रहणं कृतम्।।

एतेन - इन्द्रियमनस्सन्निकर्षाभावोऽपि प्रत्युक्तः । न चात्ममनस्सन्निकर्षाभावः । मनसः कदाप्यात्मवियोगाभावस्य वक्ष्यमाणत्वात् ।।

### भावदीपः

**कथमिदमिति** ।। हेतुरूपत्वमित्यर्थः। **अनेन कथमुक्तशङ्केति** ।। 'आगमापायित्वात्' इत्यनेन 'विषयेन्द्रियसन्निकर्षादिव' इत्यादिनोक्तशङ्कानिरासः कथमित्यर्थः । शेषोक्त्या भाष्यं व्याचष्टे– **मात्रास्पर्शा इति** । विषयसम्बन्धा इत्यर्थः ।। **कारणसामग्री** कारणमेलनम्।। **अत एवेति** ।। अन्येन्द्रियाणां तदा विषयासम्बन्धेऽपि त्वगिन्द्रियस्य शीतादिस्पर्शरूपविषयसम्बन्धावश्यम्भावित्वादेवेत्यर्थः ।। **एतेनेति** ।। शीतोष्णरूपत्वगिन्द्रियविषयग्रहणेनेत्यर्थः । त्वगिन्द्रियस्य बहिरन्तर्व्यापित्वेन मनःसंयोगस्यावश्यम्भावित्वादिति भावः।। **वक्ष्यमाणत्वादिति** ।।

**'यत्र प्राणो मनस्तत्र जीवश्च परमस्तथा'**

इत्यष्टम(८.१२)भाष्ये केवलाभिमानं विना कृता इत्यर्थः ।।

**भाष्यम् — अतो यतो मात्रास्पर्शा जाग्रदादावेव ते सन्ति नान्यदेति तदन्वयव्यतिरेकित्वात् तन्निमित्ता एव नात्मनः स्वतः ।।**

### प्रमेयदीपिका

अतिप्रसङ्गस्य विपर्यये पर्यवसानं वदन् साक्षादर्थं दर्शयति– **अत** इति ।। अतो **मात्रास्पर्शा नात्मनः स्वतः** स्वयमेव केवलाः शीतोष्णसुखदुःखदा भवन्तीति सम्बन्धः। **अतः** इत्युक्तस्यैव[2] विवरणं **यतस्तन्निमित्ता एव** इति ।। '**तत्**' इत्यभिमानपरामर्शः । तेन निमित्तेन सहिता

१. 'शङ्कापरिहारः' -गुज,वे-ग्रं ।
२. 'एव' गुज नास्ति ।

एव शीतोष्णसुखदुःखदा यत इत्यर्थः । तत्कुतः? इत्यत उक्तम् - **मात्रेति।। मात्रास्पर्शाः** जाग्रत्-स्वप्नयोरभिमानवतोरेव **ते** तथाविधा शीतोष्णसुखदुःखदाः **सन्ति** =भवन्ति । **नान्यदा** = अभिमानरहिते सुप्त्यादौ इति मात्रास्पर्शानां शीतोष्णसुख-दुःखदत्वस्याभिमानान्वयव्यतिरेकानुविधायित्वादित्यर्थः ।।

### भावदीपः

**तथाविधाः ।।** अभिमानेन सहिताः सन्तः ।।

### (आत्मनः सुखादीनां च विषयविषयिभावसम्बन्धः)

**भाष्यम् — आत्मनश्च तैर्विषयविषयिभावसम्बन्धादन्यः सम्बन्धो नास्ति ।।**

### प्रमेयदीपिका

[1]नन्वभिमानहीनेऽपि ज्ञानोत्पत्तिस्तृणादौ दृश्यते । सत्यम् । सुखदुःखहेतुभूतं ज्ञानमत्राधिकृतमित्यदोष इति । इतश्चाभिमान एवात्मन उपप्लव इत्याह– **आत्मनश्चेति** ।। अत्र 'तैः' इति ज्ञानसुखदुःखपरामर्शः । **आत्मनः** ज्ञानादिभिः **सम्बन्धो नास्ति** । तेषां मनोवृत्तित्वात् । तथा चान्यगतधर्माः कथमन्यस्य विक्रियाहेतवः? विनाऽभिमानात्। प्रसिद्धं च स्वाभिमतगृहदाहो देवदत्तं दुःखीकरोतीति । ज्ञानादिभिरात्मनस्सम्बन्धाभावे कथमुक्तं 'शीतोष्णाद्यनुभव आत्मनः' इत्यादि? इत्यत उक्तम्– **विषयेति** ।। मनोवृत्तिरूपाणि ज्ञानदीनि विषयभूतानि । आत्मा च विषयी । साक्षिचैतन्यस्य तद्विषयत्वात् । एतमेव सम्बन्धमभिप्रेत्यात्मनो ज्ञानमित्यादिव्यवहारः । [2]उपलक्षणं चैतत् । ईश्वराधीनं स्वामित्वमपि ग्राह्यम् । तादात्म्यसमवायिनिरासे तात्पर्यात् ।।

### भावदीपः

ज्ञानमात्रस्य[3]अन्वयव्यतिरेकाभ्याममभिमानमात्र[4]कारणकत्वं मत्वा व्यभिचारं शङ्कते– **नन्विति ।। अभिमानहीनेऽपीति** ।। उदासीनज्ञानस्य तथात्वेऽपि सुखदुःखहेतुभूतज्ञान-

१. 'नचाभि-' वे-ग्रं, गुज ।
२. उपलक्षणमेतत्-इति चशब्दः कचिन्नास्ति ।
३. सो-ज्ञानमात्रेण मुक्तिमात्रकारणकत्वं -पां।
४. मात्रशब्दः सो- पाठे न पठ्यते ।

विषयविषयिसम्बन्धोऽभिमाने सत्येव तादृशविषयज्ञानं जनयित्वा सुखदुःखे[१](जनयतीति)[२] इत्युक्ते न क्वापि व्यभिचारः । तादृशज्ञानं चेह प्रकृतमित्याह– **सत्यमित्यादिना** ।। **अधिकृतम्** प्रकृतमित्यर्थः ।। **उपप्लवः** दुःखहेतुः ।। [३]**विक्रियाहेतुरिति** ।। तूलपिण्डपरिमाणस्यैवोच्च-नीचत्वरूपविकारहेतुरित्यर्थः । **दुःखीकरोतीति** ।। 'दुःखात् प्रातिलोम्ये' **(पा.सू.५.४.६४)** इति अच्प्रत्ययः । चित्तं पीडयतीत्यर्थः ।। **उपलक्षणं चैतदिति** ।'विषयविषयिसम्बन्धात्' इत्येतदुपलक्षणम् । ईश्वराधीनस्वस्वामिकत्वसम्बन्धादप्यन्यो नास्तीत्यपि ग्राह्यमित्यर्थः । [४]तथात्वे '**अन्यो न**' इत्युक्तिः कथं भाष्ये? इत्यत आह– **तादात्म्येति** ।।

## ( द्विविधमागमापायित्वम् )

**भाष्यम् — न चागमापायित्वेऽपि प्रवाहरूपेणापि नित्यत्वमस्ति । सुप्ति-प्रलयादावभावादित्याह– अनित्या इति ।।**

## प्रमेयदीपिका

ननु 'अभिमानसहितानामेव मात्रास्पर्शानां ज्ञानादिहेतुत्वं न केवलानाम्' इत्युपपादित-मेतत् । ततो '**अनित्याः**' इति व्यर्थमिति चेन्न । आगमापायित्वस्यैवानेन व्याख्यानात् । व्याख्यानेऽपि किं प्रयोजनम्? इत्यत आह– **नचेति** ।। आगमापायिशब्दो द्वयोः प्रयुज्यते । यत् प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यम् । यथा गङ्गोदकम् । तदेकमागमापायीत्युच्यते। यस्य तु प्रवाहोऽपि विच्छिद्यते यथा किंशुककुसुमं[५] तदपरमिति ।। तत्रागमापायिशब्दादुभय-प्रतीतौ '**आगमापयित्वेऽपि**' आगमापायिशब्दार्थत्वेऽपि यत् प्रवाहरूपेण नित्यत्वं तदत्र विवक्षितं **नास्ति** न भवति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वे [६]तदसम्भवात् । प्रकृतानुपयोगाच्च । किन्तु द्वितीयमेव । सुप्त्यादावभावेन सम्भवादुक्तरीत्या प्रकृतोपयोगाच्च इत्येतद् 'अनित्याः' इत्यनेन आह भगवानित्यर्थः ।।

१. सुखदुःखम् इति का, मं मातृकयोः ।
२. मं मातृकायामेव एवं पठ्यते ।
३. विक्रियाहेतव इति टीका। एकस्यां प्रमेयदीपिकामातृकायाम् अत्र एकवचनमेव पठ्यते । वाक्ये धर्माः इति बहुवचनानुसारात् बहुवचनान्त एव साधुरिति भाति । महान्तः प्रमाणम् ।
४. क– तथात्वेन..,भाष्यते इति इति अनन्वितम् । सो, काणि पाठानुसारेण शुद्धीकृतपाठः मूले।
५. कुसुमानाम् -गुज. वे-ग्रं ।
६. भावदीपानुगुणः-'तद्'इति ।'तद्' इति गुज, वे-ग्रं नास्ति ।

**प्रलयः**= मूर्च्छा । **आदि**पदेनासम्प्रज्ञातसमाधेर्ग्रहणम् ।। नन्वनित्यपदमप्यनेकार्थमेव । सत्यम् । तथाऽपि पुनः प्रयत्नाद्यालोचनाद् एतत्सिद्धिः। एतदपि विशेषणोपसङ्क्रान्तं विशेषणम् । आगामिव्याख्यानमपेक्ष्य भाष्यकृताऽयमर्थः प्रागुपन्यस्त इति ज्ञेयम् ।।

**भावदीपः**

**तदसम्भवादिति** ।। सुप्तिमूर्च्छादावसम्भवेन[१] प्रवाहतोऽनित्यत्वस्यासम्भवात् । मात्रा-स्पर्शादीनां विषयानुभवद्वारा सुखदुःखदत्वस्य प्रवाहतो नित्यत्वे अभिमानेन राहित्यदशायामपि तस्य सत्वेनाभिमानस्यान्वयव्यतिरेकाभ्यां तद्धेतुत्वोपपादनरूपप्रकृतप्रमेयानुपयोगाच्चेत्यर्थः ।। **उक्तरीत्येति**।। [२]'**अतो यतो मात्रास्पर्शाः**' इत्यादिभाष्योक्तदिशेत्यर्थः ।। प्रलये देहाद्यभावादेव ज्ञानसुखादिकार्याभावो नाभिमानाभावनिमित्त इत्यतस्तत्पदार्थमाह– **प्रलयो मूर्च्छेति** ।। **अनेकार्थमिति** ।। व्यक्त्यनित्यप्रवाहानित्यादिरूपानेकार्थमेवेत्यर्थः । **एव**शब्देन नोक्तशङ्कानिरासकं तदिति सूचयति ।। **पुनः प्रयत्नेति**[३] ।। '**आगमापायिनः**' इत्युक्त्वा पुनः '**अनित्याः**' इति पुनरनित्यपदप्रयोगरूपप्रयत्नो अङ्गीकृतः । तत्तात्पर्यालोचनादेतत् प्रवाहतोऽनित्यत्वार्थकत्वं सिद्ध्यति । अन्यथा नित्यपदं गीताकारो न [४]प्रयुञ्जीतेति भावः ।।

**एतदपीति** ।। यथा आगमापायित्वविशेषणं सुखदुःखदत्वविशिष्टमात्रास्पर्शानां विशेषणी-भूतसुखदुःखत्वविशेषणोपसङ्क्रान्तत्वं तथा प्रवाहतोऽनित्यत्वरूपम् अनित्यपदोक्तं विशेषणम् । सुखदुःखदत्वरूपविशेषणोपसङ्क्रान्तं[५] विशेषणं सुखदुःखदत्वं मात्रास्पर्शानां प्रवाहतो नित्यमित्येवं रूपेणेत्यर्थः ।। नन्वेवमागमापायिपदार्थोक्तिपरे '**अतो यतः**' इत्यादिभाष्य एवायमर्थः कथमुक्तम्? इत्यत आह– **आगामीति** ।।

**( देहाद्यात्मभ्रम एव दुःखकारणम् )**

**भाष्यम् — अतश्चात्मनो देहाद्यात्मभ्रम एव सुखदुःखकारणम् । अतस्तद्विमुक्तस्य बन्धुमरणादिदुःखं न सम्भवति । अतोऽभिमानं परित्यज्य तान् शीतोष्णादीन् तितिक्षस्व ।। १४ ।।**

---

१. अभावेन-सो-पाठः । २.का.मं अतो -इति नास्ति । ३.का– प्रयत्नादीति ।

४. सं प्रयुञ्जीत इति सो पाठे संशब्दो अधिकः पठ्यते ।

५. सङ्क्रान्तविशेषणं इति समस्तं पठ्यते सो-मातृकायाम् ।

### प्रमेयदीपिका

उक्तमर्थं पिण्डीकृत्योपसंहरति–**अत** इति ।। उक्तप्रकारेण देहादावात्मनो [1]ममैवैतदित्यादि **भ्रम एव** । भ्रमसहिता एव मात्रास्पर्शा इत्यर्थः । ततः किम्? इत्यत चतुर्थपादं व्याख्यातुं उपोद्घातमाह– **अत** इति ।। **'तद्विमुक्तस्य'** = भ्रमविमुक्तस्य । **बन्धुमरणादिदुःखं** यत् **प्राच्छङ्कितम्** । **नहि** सामग्रीकार्यमेकदेशेन **भवतीति** भावः । ततः किम्? इत्यतश्चतुर्थपादं व्याख्याति– **अत** इति ।। **तितिक्षस्व** = विफलीकुर्विति भावः ।। ननु **'तान्'** इति मात्रास्पर्शानां परामर्शो युक्तः । तत् कथं **'शीतोष्णादीन्'** इत्युक्तम्? मैवम् । शीतोष्णादिहेतूनां मात्रास्पर्शानामेव तच्छब्देनोपलक्षणात् ।। १४ ।।

### भावदीपः

**नहि सामग्रीकार्यमिति** ।। अभिमानसहितमात्रास्पर्शकार्यं सुखादि मात्रास्पर्शरूपैकदेशेन न भवतीत्यर्थः ।। **शीतोष्णादीति** ।। **शीतोष्णादिहेतूनां**[2] शीतोष्णाद्यनुभवद्वारा सुखदुःखहेतूनां **मात्रास्पर्शानां** विषयसम्बन्धानामित्यर्थः ।। १४ ।।

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ।। १५ ।।**

**भाष्यम् —** अतः प्रयोजनमाह– **यं हीति** ।। **यम् एते मात्रास्पर्शा न व्यथयन्ति**। पुरि शयमेव सन्तम् । शरीरसम्बन्धाभावे सर्वेषामपि व्यथाभावात् **पुरुषम्** इति विशेषणम् । कथं न व्यथयन्ति? **समदुःखसुखत्वात्** । तत्कथम्? **धैर्येण** ।। १५ ।।

### प्रमेयदीपिका

अतो मात्रास्पर्शानां विफलीकरणतः भवत्प्रयोजनमाह– **अत** इति ।। 'दुःखाभावस्य युद्धाकरणेनैव सम्भवात् किं तत् कृत्वा प्रसक्तदुःखाभावायाभिमानत्यागेन? इत्येतदाशङ्का-परिहाराय' इति शेषः ।।

<u>पूर्वश्लोके</u> 'तितिक्षस्व' इति पदं 'सहस्व' इति [3]कैश्चिद्व्याख्यातम् । तदसत् ।

१. 'ममैतदित्यादि'-वे-ग्रं ।

२. सो पाठ एवायं पठ्यते ।

३. शाङ्करभाष्यम्. प्र-भाग. ९६पत्रे ।

तदनुवादेऽत्र विफलीकरणस्यैव प्रतीतेरिति भावेन आद्यपादं व्याख्याति– **यमिति** ।। **न व्यथयन्ति** न चालयन्ति । न शीतोष्णसुखदुःखलक्षणवैषम्यवन्तं कुर्वन्तीत्यर्थः ।।

स्त्रीणामप्येवंविधानां मैत्रेयीप्रमुखानाममृतत्वश्रवणात् '**पुरुषम्**' इति विशेषणमयुक्तम् इत्यतोऽन्यथा व्याचष्टे – **पुरीति**।। शरीरसम्बन्धिनम् एव **सन्तम्** = शरीरदर्शनवन्तमित्यर्थः । एतदपि किमर्थं विशेषणम्? इत्यत आह– **शरीरेति** ।। सुप्त्यादौ **सर्वेषां** = प्राकृतानाम् **अपि** अभिमानाभावेन **व्यथाभावात्** अमृतत्वप्रसक्तिरित्याशङ्कानिवृत्त्यर्थमित्यर्थः ।।

**( समदुःखसुखशब्दार्थः )**

ननु यस्य देहादावभिमानो नास्ति तस्य दुःखं सुखं च नास्तीत्युक्तम् । तस्य कथं '**समदुःखसुखम्**', '**धीरम्**' इति विशेषणद्वयम्? अस्य 'पूर्वकक्ष्यागतत्वादित्याशङ्क्य तदुपायप्रदर्शनार्थं पूर्वावस्थानुवादोऽयमिति क्रमेण पृच्छापूर्वकमाशयमाह– **कथमिति** ।। येन अभिमानत्यागेन **मात्रास्पर्शा न व्यथयन्ति** स **कथं** = केनोपायेन भवतीत्यर्थः ।। दुःखं यथाऽनुपादेयम् अपुरुषार्थत्वात् तथा वैषयिकं सुखमप्यमृतत्वविरोधित्वाद् अनुपादेयं यस्य स समदुःखसुखः । एवम्भावे च कथं सुखहेतुषु शोभनाध्यासलक्षणः, तद्विरोधिषु द्वेषलक्षणोऽभिमानः स्यात्? इति भावः ।। 'तत्' समदुःखसुखत्वमेव, 'कथं' केनोपायेन भवतीत्यर्थः ।। **धैर्येणेति** ।। सुखे दुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तम्भकेन प्रयत्नेनेत्यर्थः ।। १५ ।।

**भावदीपः**

**एवंविधानामिति** ।। अभिमानहीनानामित्यर्थः ।। **श्रवणात्** बृहदारण्यक इति भावः ।। **पूर्वकक्ष्येति** ।। अभिमानत्यागात् पूर्वपक्षस्थत्वात्[2](समदुःखसुखत्वादेः तदुत्तरकालं सुखादेः(एव) अभाव इति पूर्वार्ध एवोक्तेः नेदं विशेषणद्वयमभिमानत्यागिनो युक्तमित्याशङ्क्येत्यर्थः)।।१५।।

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ।। १६ ।।**[3]

१. 'पूर्वावस्था' इति एकस्यां मातृकायाम् ।

२. कंसान्तर्गतभागः का-कोशे नास्ति । सो मातृकायां पठ्यते। पूर्वं कक्ष्यास्थात्वात् इति च तत्र पाठः ।

३. 'नासतो विद्यते भावः' इति पूर्वार्धेन असच्छब्दितस्य कारणस्य प्रकृतेः सच्छब्दितस्य ब्रह्मणश्चाभावः प्रागभावः प्रध्वंसश्च न विद्यते इति वेदनित्यत्वसाधकानादिनित्यत्वव्याप्तावनेकदृष्टान्तप्रदर्शनाय तत्रादरपूर्वकं प्रकृतिपरब्रह्मणोरनदिनित्यत्वमभिधाय अत्रार्थे सम्प्रदायरूपप्रमाणमुच्यते–उभयोरिति ।।

**भाष्यम् —** 'नित्य आत्मा' इत्युक्तम् । किमात्मैव नित्य आहोस्विदन्यदपि? अन्यदपि । तत्किमिति? आह–**नासत** इति ।। **असतः कारणस्य सतः ब्रह्मणश्च अभावो न विद्यते** ।।

'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम'[१]

इति वचनात् [२]श्रीविष्णुपुराणे ।

पृथक् '**विद्यते**' इत्यादरार्थः ।।

**प्रमेयदीपिका**

'**नत्वेवाहम्**' (२.१२) इत्यत्र भगवान् कृष्णोऽपि यं प्रति पक्षे निक्षिप्तः स आक्षेप्तुं प्रसक्तिं दर्शयति– **नित्य** इति ।। '**उक्तम्**' अनादित्वेन हेतुनानुमितम् । ततः किम्? इत्यत आह– **किमिति** ।। 'अनादिश्च' इत्यपि ग्राह्यम् । आद्ये दृष्टान्ताभावेन व्याप्तिग्रहासम्भवः। द्वितीयस्त्वप्रामाणिकत्वादशक्योपन्यास इति पूर्वपक्ष्यभिप्रायः ।।

विदिताभिप्रायः सिद्धान्ती किमृजावन्वये सम्भवति वक्रेण व्यतिरेकेण? इति मन्यमानो द्वितीयं पक्षमुपादत्ते– **अन्यदपीति**।। उक्ताभिप्रायेण पृच्छति– **तदिति** ।। इति 'शङ्कायाम्' इति शेषः[३]। दुर्गमार्थत्वात् पूर्वार्धं व्याचष्टे - **असत** इति ।। **कारणस्य** प्रकृतेः ।। **अभावः** प्रागभावः प्रध्वंसश्च । कुत एतत्? इत्यतो भाष्यकारस्तावत् प्रमाणमाह - **प्रकृतिरिति** ।। **पुरुषः** परमात्मा ब्रह्मशब्दोक्तः । अनादित्वेऽप्येवमागमो ज्ञेयः ।।

ननु 'असतः सतश्चाभावो न विद्यते' इत्येकेनैव वाक्येन द्वयोरभावप्रतिषेधे कर्तुं शक्ये किमेवं पृथक् प्रतिषेधेन? इत्यत आह– **पृथगिति** ।। '**विद्यते**' इति वाक्यद्वयग्रहणम् ।

---

'अनयोरुभयोः' सदसतोः 'अन्तः' निर्णयो अनादिनित्यत्वावधारणं 'तत्त्वदर्शिभिः' वेदार्थतत्वज्ञानिभिः 'अपि दृष्टः' कृतश्चेत्यर्थः ।। 'अपिसिद्धं' इतिवत् 'अपिदृष्ट' इति निर्देशः । यद्वा -'तत्वर्शिभिरपि' इति भिन्नक्रमेणापिपदान्वयः । न केवलं 'प्रकृतिः ..सत्तम' इत्यागमसिद्धमेतदित्यपिशब्दार्थः ।। यद्वा - 'अन्तः' निर्णयः तद्विषयीभूतार्थो दृष्ट इत्यर्थः ।। अनेन दर्शनमूलकः सम्प्रदाय उपपदेशपरम्परारूपो लक्षणयोक्तो भवति ।। ब्र.सू.भा.दीपिका.

१. सायणोऽप्युदाजहार च श्लोकमिमं स्वकाण्वसंहिताभाष्ये (पृ-३१२)'सन्ततम्' इति पाठभेदेन ।

२. श्री इति अधिकम् । (शम्याप्रासग्रन्थालयस्थगीताभाष्यमातृका) श.१। भं-मातृकायामपि ।

३. न्या.सु.सम्पुट-१४.पृ.६६३७ वाक्यार्थरत्नमालायामिदं वाक्यमुदाहृतम् । तदनुरोधेन अत्र भाष्यपाठ आदृतः । प्रचलितः सर्वोपि पाठः-'किमित्यत आह'-इत्येव ।

'असतोऽभावो न विद्यते', 'सतश्चाभावो न विद्यते' इति द्वयोः पृथगभावप्रतिषेध आदरार्थ इति योज्यम् । आदरश्चानुमानव्याप्तिसद्भावे । अत एवानेकदृष्टान्तप्रदर्शनम् ।।

**भावदीपः**

**यं प्रतीति** ।। 'पक्षे निक्षिप्तः' इति विभागेन योज्यम् । यस्य पुरुषस्य कृष्णेऽपि नित्यत्वसन्देह इत्यर्थः ।। उत्तरार्धव्यावृत्त्योक्तिः– **द्वितीयस्त्विति** ।।

ननु कृष्णादिसर्वचेतनं नित्यमनादित्वात् इत्यत्रान्वयव्याप्तौ दृष्टान्ताभावेऽपि व्यतिरेक-व्याप्तौ दृष्टान्तो घटादिरस्त्येवेति दृष्टान्तसिद्ध्यर्थं प्रकृत्यादेर्नित्यत्वोक्तिर्गीतायामयुक्तेति हृद्याशङ्क्य गीताभिप्रायमाह– **सिद्धान्तीति** ।। गीताकार इत्यर्थः ।। **उक्तेति** ।। अप्रामाणि-कत्वाभिप्रायेणेत्यर्थः ।। **ब्रह्मेति** ।। भाष्यस्थब्रह्मशब्दोक्तमित्यर्थः ।। **अनादित्वेऽपीति** ।।

**'सदेव सौम्येदमग्रे'(छां.उ.६.२.१),**

**'ब्रह्म वा इदमग्र आसीत्' (बृ.उ. ३.९.४)**

इत्यादिरागम इत्यर्थः ।। एवं प्रकृतेरनादित्वेऽपि -

**'अजामेकां लोहितशुक्लकृष्णाम्' (तै.आ.१०.१०.१),**

'गौरनाद्यन्तवती , भूतभावना सितासिता च रक्ता च'[१]

इत्यादिरागम इत्यर्थः ।। **अनेकदृष्टान्तेति** ।। गीतायां प्रकृत्याद्यनेकेत्यर्थः ।।

**भाष्यम् — असतः कारणत्वं च–**

'सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः'[२] (भाग.१.२.३१)

इति भागवते ।

'असतः सदजायत'[३] (ऋ.१०.७२.२) इति च ।

---

१. **'गौरनाद्यन्तवती सा जनित्री भूतभाविनी । सितासिता च रक्ता च सर्वकामदुघा विभोः'** ।

२. **'विभुः व्याप्तः भगवान् नारायणः अग्रे सृष्टेः पूर्वं आत्ममायया स्वेच्छया निमित्तकारणरूपया, सदसद्रूपया व्यक्ताव्यक्तरूपया गुणमय्या सत्वादिगुणात्मिकया जडप्रकृत्योपादनकारणरूपया चेदं जगत् ससर्ज'** इति विजयध्वजीये ।

३. (अ) **ब्र.सू.भा.२.३.९** उदाहृतेयं श्रुतिः । अत्र **भाष्यदीपिका**- 'असतः सत्' इति ऋक्श्रुतिः' इति । (आ)देवानां पूर्वे युगेऽसतः सदजायतेति । ब्रह्म वा असत् सद्भाव प्राणः प्राणं वाव महान् सह ओजो बलमित्याचक्षते' **ब्र.सू.भा.२.३.९** उदाहृता पैङ्गिश्रुतिः ।

**अव्यक्तेश्च । सम्प्रदायतश्चैतत्सिद्धमित्याह– उभयोरपीति ।। अन्तः निर्णयः[१] ।।१६।।**

**प्रमेयदीपिका**

ननु 'सतः ब्रह्मणः' इत्यस्तु । [२]'सदेव सोम्य' **(छां.उ.६.२.१)** इत्यादिप्रयोगात् । 'असतः कारणस्य' इति तु कथम्? इत्यत आह– **असत** इति ।। असच्छब्दार्थस्य कारणत्वं च भागवतेऽभिहित[३]मित्यर्थः । **असतः** असच्छब्दस्य । **कारणत्वं** कारणार्थत्वमिति वा । **सदसद्रूपया** कार्यकारणरूपया । [४]'असतः' इति श्रुतेरनेकार्थत्वादत्रोदाहरणम् । कारणस्य **अव्यक्तेश्च** असच्छब्दार्थत्वम् । गत्यर्थस्य सदेः क्विबन्तस्य कर्मणि हि सदिति रूपम्[५]।

**'असदव्यक्तरूपत्वात् कारणं चापि शब्दितम्'** इति वचनात् ।।

अत्रार्थे भगवता प्रमाणमुच्यते– **उभयोरपीति** ।। तदसत् । अन्यदर्शनस्य अन्यान् प्रति अप्रत्यायकत्वादित्याशङ्क्य दर्शनमूलकः सम्प्रदाय उपदेशपरम्परारूपो लक्षणयाऽत्र प्रमाणत्वेनोच्यत इत्याह– **सम्प्रदायतश्चेति** ।। चशब्दो भाष्यकारोदितप्रमाणसमुच्चये । आगमः = ग्रन्थनिबद्धं वाक्यम् । सम्प्रदायस्तु = उपदेशपरम्परामात्रमिति भेदः[६]।। 'एतत्' प्रकृतिपुरुषयोरनादिनित्यत्वम् ।।

**केचित्** अपिशब्दस्य भिन्नक्रमत्वमङ्गीकृत्य तेन सूचितं प्रमाणं प्रागुदाहृतमिति वर्णयन्ति ।। नन्वन्तो विनाशादिः परिच्छेदोऽत्र तत्वदर्शिभिर्दृष्ट इत्युच्यते । तत्कथं न विरोधः? इत्यत आह– **अन्त** इति ।। **निर्णयः** अनादिनित्यत्वावधारणम् ।।

---

१. **'अन्तः निर्णयः । उभयोरपि दृष्टोऽन्तः इति वचनात्'– इति ब्र.सू.भा ३.३.१ ।**

२. इदं वाक्यं वे-ग्रं,गुजपुस्तकयोः नास्ति ।

३. 'प्रसिद्धमित्यर्थः'वे-ग्रं, गुज ।

४. **'यद्यप्युक्तार्थसिद्धौ पैङ्गिश्रुतिरेवालम् । तथाऽप्यसच्छब्दस्य ब्रह्मणि निर्वचनार्थं 'तद्वा एतत्' इति पूर्वश्रुत्युदाहरणम् । असच्छब्दितान्नारायणात् सच्छब्दितो वासुदेवः समुद्भूत इति तैत्तिरीयभाष्यं तु व्याख्यानान्तरम् । यच्च 'असतः' इति श्रुतेरनेकार्थत्वादिति प्रमेयदीपिकायामसच्छब्दस्य प्रकृतिपरतया व्याख्यानम्, तदप्यमुख्यवृत्त्यैवेति ध्येयम्' इति ब्र.सू.भा.दी. असम्भवाधिकरणव्याख्याने ।**

५. **'अस् भुवि इत्यस्माद्भावे छान्दसशतृप्रत्यये श्नसोरल्लोपे नञ्समासे असदिति रूपम्'-असदधिकरणपरिमले।**

६. **(अ) तत्वप्रकाशिकाटिप्पण्यां वाक्यार्थमञ्जर्यां-(१-१-२३) इमानि वाक्यान्युदाहृत्य सम्प्रदाय-शब्दार्थविचारः कृतो तत्रैव द्रष्टव्यः ।**

**(आ) सुधायां (मन्त्रालयप्रकाशनम्) ७ सम्पुटे १-१-६ 'सकृद्धेत्यागमा ब्रूयुः सम्प्रदायविदोऽपि च' इति वाक्यविवरणेऽपि अधिकविचारः -पृ १३८२ द्रष्टव्यः।**

अपव्याख्यानं त्वन्यत्र निराकृतम् ।। १६ ।।

**भावदीपः**

**असच्छब्दार्थस्य कारणत्वमिति।।** कारणस्य असच्छब्दार्थत्वमित्यर्थः ।।

ननु 'असम्भवस्तु सतोऽनुपपत्तेः'[१] (ब्र.सू.२.३.९) इत्यत्र असच्छब्दस्य ब्रह्मपरत्वमुक्तम्। तथा 'एतेन सर्वे व्याख्याता व्याख्याताः'[२] (ब्र.सू.१.४.२७) इत्यत्रापि । 'असदिति चेत्'[३] (ब्र.सू.२.१.८) इत्यत्र त्वभावपरत्वमात्रमुच्यते । कारणपरत्वं तत्कथम्? इत्यत आह– **असत इति।। श्रुतेरिति ।।** प्रकृतिरूपकारणार्थत्वमपि [४]अत्रोपेत्य **'असतश्च'** इत्युदाजहारेत्यर्थः ।।

१. 'अत्र ब्रह्मोत्पत्तिश्रुत्यविरोध उच्यते । तुरेव । सतः ब्रह्मणः असम्भव एवानुत्पत्तिरेव । कुतः अनुपपत्तेः । असतः सकाशात् सज्जन्मनः अनुपपत्तेरित्यर्थः । काप्यदर्शनादिति भावः । उत्पत्त्यसम्भव इत्यनुवृत्तावपि तस्य न वियदिति नत्रा अन्वितत्वात् पुनरसम्भव इत्युक्तिः । तुरिति भागोत्पत्तिं पराधीनविशेषावाप्तिं च निराह । सतः इत्युक्तिः असतः सदजायत इति श्रुतिसूचनेन ब्रह्मणोप्यसद्रूपकारमस्तीति पूर्वपक्षयुक्तिं स्वातन्त्र्यरूपसिद्धान्तयुक्तिं च सूचयितुम् । सत्वं स्वातन्त्र्यमुद्दिष्टमिति भारतोक्तेः । युभ्वादिनये आविर्भाव-रूपोत्पत्तिसिद्धावप्यत्र प्रकरणेऽभिप्रेतपराधीनविशेषावाप्तिरूपोत्पत्तिनिरासोत्रेति ध्येयम् ।' इति तन्त्र.दी.

२. 'अत्र नये निषेधार्थाः शब्दाः समन्वीयन्ते । एतेन तदधीनत्वादिप्रागुक्तहेतुजातेन सर्वे शून्य-असदादिशब्दाः तत्तु मुख्यया वृत्त्या ब्रह्मैवेति व्याख्याताः प्रतिपादिता इत्यर्थः । प्रागुक्तसर्वप्रमेयावधारणार्था द्विरुक्तिः । अवधारणार्थं सर्वस्य इत्यादेः'- इति तन्त्रदीपिकायाम् ।

३. 'अत्र श्रुत्युपसर्जनकप्रागभावकर्तृत्वसाधकयुक्त्यविरोध उच्यते । श्रुतेर्ब्रह्मपरत्वोक्तावप्यन्यत्रापि वृत्तेः सम्भवात् । अत्रासच्छब्दः प्रागभावपरः अभावप्रतियोगिपरश्च । अस्तेर्भावे कर्तरि च शतृप्रत्यये श्नसोरल्लोपे नञ्समासे असदभवनमिति नास्तीत्यसदिति च रूपसम्भवात् । यद्यपि शतृ कर्तर्येव । तथापि छान्दसो भावसाधनः । कर्तृसाधनत्वं तु युक्तिसूचनार्थम् । अत एवाभाव इति वाच्ये असदित्युक्तिः । श्रुत्यनुगमसूचनार्था वा । अपीताविवितीहाप्यन्वेति । अपीतौ असत् लयवृत्तिः विश्वप्रागभावः जगत्कारणमित्यस्ति । अनन्यथा-सिद्धपूर्वक्षणवृत्तित्वात् । सामान्यव्याप्त्या घटप्रागभाववत् । असदेवेदमग्र आसीत् इति श्रुतेश्चेत्येका वत्तिः । अन्या तु भावजातम् अपीतौ लये असत् अविद्यमानं, भावत्वात् कार्यवत् इति । एवं लये भावमात्रासिद्धौ कार्यस्य सकर्तृकत्वनियमात् परिशेषादभावस्यैव कर्तृत्वं सिद्ध्यति । असदेव तन्मनोकुरुत इति श्रुतेः इति चेत् - न । प्रागभावः करोति न । प्रतिषेधमात्रत्वाभावधर्मवतां विना स्वरूपत एव निषेध-रूपत्वात् । घटप्रागभाववदित्यर्थः । भावेषु कुलालादिषु अन्योन्याभावधर्मात्मना प्रतिषेधरूपत्वमस्तीति व्यभिचारनिरासाय मात्रपदम् । कर्तृत्वाभावे विश्वकर्तृत्वं दूरे अपास्तमितिभावः।। यद्यपि निषेधमात्रेत्युक्त्या निषेधैकस्वरूपत्वं लभ्यते । तच्च पक्षे असिद्धं दृष्टान्ताद् व्यावृत्तं च । सर्वस्य धर्मात्मना द्विरूपत्वात् । तथापि प्रतिषेधमात्रपदेनान्नमात्रं भुक्तमितिवत् प्रतिषेधसामान्यं गम्यते। धर्मधर्मिणोश्च धर्मी प्रधान इति धर्मात्मतां विना धर्मित एव निषेधत्वादिति गम्यत इति बोध्यम्' इति तन्त्रदीपिकायाम् ।

४. इदं वाक्यं मन्त्रालयपुस्तके, सो पाठे च। काणियूरुमातृकायां नास्ति ।

ननु आगमसम्प्रदाययोः को भेदः? येन चशब्दोपपत्तिरित्यत आह– **आगम इति** ।। **'एतत्'** इति मूलानुवादः, **'प्रकृति'** इत्यादि व्याख्या ।। [1]ननु आत्मनो नित्यत्वं तदुपाधिभूतदेहानामपि सिद्धत्वं स्यादित्यतिप्रसङ्गोक्तिः ।। **भिन्नक्रमत्वमिति** ।। 'तत्त्वदर्शिभिरपि' इत्यन्वयमुपेत्येत्यर्थः ।। **अपव्याख्यानमिति** ।। सत्कार्यपरत्वं सदसद्वैलक्षण्यपरत्वादिरूपापव्याख्यानं तु तात्पर्ये निरस्तमित्यर्थः ।। १६ ।।

**अविनाशि तु तद् विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ।। १७ ।।**

**भाष्यम् —** **किं** बहुना? यद्देशतोऽनन्तं तन्नित्यमेव । वेदाद्यन्यदपि इत्याह– **अविनाशीति** ।। नापि शापादिना विनाश इत्याह– **विनाशमिति** ।। अव्ययं च तत् ।।

### प्रमेयदीपिका

### ( वर्ण-आकाशादयश्च नित्याः )

**'अविनाशि तु'** इति श्लोके सर्वगतस्य नित्यत्वमुच्यते । तत् प्रकृतानुपयुक्तमित्याशङ्क्य पूर्वार्धं तावत् प्रकृतोपयोगं सूचयन् व्याचष्टे– **किं बहुनेति** ।। वाक्यानामुपासनार्थत्वात्, सम्प्रदायस्य च मूलानिश्चयात्, प्रकृतिब्रह्मणोः च[2] स्वरूपस्यैवासिद्धेः, जीवादन्यस्यानादिनित्यस्याभावात् पुनरनुमानस्य[3] व्याप्त्यसिद्धिरित्याशङ्क्य **किं बहुना** प्रकृत्यादिस्वरूपसाधनेन ।। **किञ्चेदं** नित्यमिति **बहुना** प्रत्येकमुक्तेन ।। **'यद्देशतोऽनन्तं तन्नित्यमेव'** इत्येवं सङ्ग्राहकसङ्गृहीतं **वेदादिकं** जीवाद् **अन्यदपि** अस्ति, तद् व्याप्तिग्रहणस्थलं[4] भविष्यति इत्याह भगवान् इत्यर्थः ।। **वेदशब्देन** वर्णा गृह्यन्ते । **आदिपदेनाकाशादयः** । एतेषां च प्रत्यभिज्ञानादिना नित्यत्वसिद्धिः।।[5]

ननु कालावयवाः क्षणादयः सर्वगता अपि न नित्याः । सत्यम् । नह्यत्र व्याप्तिरुच्यते।

१. इदं वाक्यं एकस्यां मातृकायामेव । मातृका(काणियूरु,सो, मन्त्रालय)त्रये न दृश्यते ।
२. 'च' इत्यधिकं गुज, वे-ग्रं पाठे।
३. 'पुनरन्यस्य' इति वे-ग्रं, गुजपाठौ । इमौ भावदीपाननुगुणौ ।
४. 'स्थानं'-श-२ मातृकायां पाठान्तरम् ।
५. वर्णनित्यत्ववादः विष्णुतत्वनिर्णये तर्कताण्डवे च द्रष्टव्यः ।।

किन्तु बहूक्तिपरिहारायोपलक्षणमात्रमिति । तुशब्दार्थ एवेति ।। तथाप्युत्तरार्धः पुनरुक्त इत्यत आह– **नापीति** ।। पूर्वं स्वाभाविको नाशो निषिद्धः । 'अविनाशि' इति ताच्छीलिकप्रत्ययात्। अत्र तु नैमित्तिकः । '**कश्चित् कर्तुं नार्हति**' इति वचनात् ।।

प्रागनुक्तस्य वेदादेरव्ययत्वस्य कथमनुवादः? इत्यत आह– **अव्ययश्चेति** ।। विधानमेवेदं कैमुत्येन शापादिना विनाशस्याभावं साधयितुमिति भावः ।। १७ ।।

## भावदीपः

**वाक्यानामिति** ।। 'प्रकृतिः पुरुषः' **(गी.भा.१६उदा.वि.पु.व.)** 'सदेव सोम्य'इत्यादि ब्रह्मादि-बोधकवाक्यानामित्यर्थः ।। **अनुमानस्येति** ।। चेतननित्यत्वानुमानस्य '**नत्वेवाहम्**' (२.१२) इत्यत्रोक्तस्येत्यर्थः ।। **प्रत्यभिज्ञानादिनेति** ।। 'तदेवेदं वचनमिति प्रत्यभिज्ञानात्' **(वि.त. नि. प्र.परि)** इति तत्त्वनिर्णयोक्तेरिति भावः ।। 'यावद्ब्रह्म विष्ठितं तावती वाक्', 'अनादिर्वा अयमाकाशः' इत्यादिरादिपदार्थः ।। **ताच्छीलिकेति** ।। 'सुप्यजातौ णिनिः ताच्छील्ये' **(पा.सू.३.२.७८)** इति सोपसर्गस्यापि नशेः ताच्छीलिकछान्दसणिनिप्रत्यये विनाशीति सिद्धेरिति भावः ।। १७ ।।

( देहः अनित्यः )

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**[१]अनाशिनोऽप्रमेयस्य तस्माद्युद्ध्यस्व भारत ।। १८ ।।**

**भाष्यम् — भवतु देहस्यापि कस्यचिन्नित्यत्वमिति । नेत्याह– अन्तवन्त इति।। अस्तु तर्हि दर्पणनाशात् प्रतिबिम्बनाशवदात्मनाश इत्यत आह– नित्यस्येति ।। 'शरीरिणः' इति ईश्वरव्यावृत्तये ।।**

## प्रमेयदीपिका

देहानामन्तवत्त्वं प्रागुक्तं किमर्थमुच्यते? इत्यत आह– **भवत्विति** ।। आत्मनित्यत्वानुमानस्य प्रतिपक्षं वक्तुं स्वाभिप्रेतस्य हेतोः सिद्धान्तिनाऽप्यभ्युपगतत्वं दृढीकुर्वता पूर्वपक्षिणा देहस्यापि **कस्यचिन्नित्यत्वं भवतु** किम्? इति पृष्टे **नेत्याहेत्यर्थः** । सिद्धार्थतापरिहाराय '**कस्यचित्**' इत्युक्तम् ।। नन्वतिप्रसङ्गोऽयं कस्मान्न भवति । 'कस्यचित्' इति विशेषणवैयर्थ्यात् ।

१. रामानुजभाष्यरीत्या 'विनाशिनः' इति पाठः ।

**'नित्यस्य'** इत्यात्मनित्यत्वं पुनः कस्मादुच्यते? इत्यत आह– **अस्त्विति** ।।

एवं देहानित्यत्वं सिद्धान्तिनोऽपि सिद्धं कृत्वा तर्हि प्रतिबिम्बस्याऽत्मन उपाधेर्देहस्य नाशान्नाशोऽस्तु । **दर्पणनाशात्** मुखप्रतिबिम्बस्येवेति पूर्वपक्षिणा प्रतिपक्षेऽभिहिते तत्प्रतिषेधायेदम् **आहे**त्यर्थः ।। अनेन **'तथाऽप्यात्मा नित्यः'** इति वाक्यवृत्तिः सूचिता। अनुवादे प्रयोजनाभावात् । ये देहा अनित्या न तेषामुपाधित्वम् । यस्य चोपाधित्वं नासावनित्य इति भावः । तदिदमुक्तम् - **'इमे'** इति । व्यक्तीकरिष्यते चैतत् ।।

ननु 'शरीरिणो देहाः' इति व्यर्थम् । अशरीरस्य देहाभावादित्यत आह– **शरीरिण** इति।। नित्यस्य देहा अन्तवन्त इत्युच्यमाने ईश्वरदेहस्यापि अन्तवत्वं प्रसज्यते । तद्व्यावृत्त्यर्थं **'शरीरिणः'** इति विशेषणम् । 'जन्तुजन्युशरीरिणः' (अमर.को.१.४.३०) इत्यभिधानात्, शरीरिशब्दस्य जीवे प्रसिद्धेः । तथाऽपि **'अनाशिनः'** इति पुनरुक्तिरिति ।।

### भावदीपः

**प्रागुक्तमिति** ।। **'देहिनोऽस्मिन्'** (२.१३) इत्यत्र ।। **प्रतिपक्षमिति** ।। प्रतिबिम्बात्मा न नित्यः अनित्योपाधिकत्वात् दर्पणोपाधिकप्रतिबिम्बवत् इत्येवं प्रतिपक्षं वक्तुमित्यर्थः।। **सिद्धार्थतेति** ।। **'अन्तवन्त इमे देहाः'** इत्युक्तेः सिद्धार्थत्वपरिहाराय कस्यचिदपि त्वया शङ्कितस्य नास्तीति वक्तुं प्रश्ने **'कस्यचित्'** इति विशेषणोक्तिरित्यर्थः ।। नन्वात्मनो नित्यत्वे तदुपाधिभूतदेहानामपि नित्यत्वं स्यादित्यतिप्रसङ्गोक्तिपरमिदं वाक्यम् । अन्यथा प्रश्नार्थकत्वे 'भवतु' इति न स्यात्; 'भवति' इत्येव स्यादिति शङ्कते– **नन्विति** ।। **वाक्यवृत्तिः** गीतावाक्यस्य वृत्तिरित्यर्थः ।। कुतो **'नित्यस्य'** इत्यस्य विधेयपरता? इत्यत आह– **अनुवाद** इति ।। **व्यक्तीकरिष्यत इति** ।। **'नित्यश्चोपाधिः'** इत्यादावेतदुपाधिद्वैविध्यमिति भावः ।।

**भाष्यम् — नच नैमित्तिकनाश इत्याह– अनाशिन इति ।। कुतः? अप्रमेयेश्वरसरूपत्वात् ।।**

### ( टीकाकारैः गीतापाठान्तरनिराकरणम् )

### प्रमेयदीपिका

अत्र केचिदेतत्परिहाराय 'विनाशिनः'[1] इति पाठान्तरं कुर्वन्ति । तदसत् । **'अन्तवन्तः'**

---

१. रामानुजभाष्ये-भाग१-पृ -११४।

इत्यनेन पुनरुक्तितादवस्थ्यात् । कथञ्चित्[1](तत्)समाधानेऽपि अन्यत्रापि तत् समम् । किमन्यथापाठेन? इत्याशयवानाह– **न चेति** ।। उपाधिनाशेन नाशाभावेऽपि, उपाधिबिम्ब-सन्निधिनाशात् निमित्तात् प्रतिबिम्बस्यात्मनो नाशो भविष्यति । नचासिद्धिः शङ्क्या । परिच्छिन्नस्यैव प्रतिबिम्बसम्भवेन सन्निधिनाशध्रौव्यादिति पुनः प्रतिपक्षिते तत्प्रतिषेधायेदमिति भावः ।।

**'अप्रमेयस्य'** इत्यसम्भवि विशेषणम्, व्यर्थं चेत्यतः तन्निवर्त्यामाशङ्कां दर्शयित्वा व्याचष्टे– **कुत** इति ।। न हि प्रतिपक्षो वाङ्मात्रेण निषेद्धुं [2]शक्यत इति भावः । **'अप्रमेय'** इत्यनेन प्रतिपक्षहेतोरसिद्धिमाचष्टे। नायमात्मा घटादेः कस्यचित् प्रतिबिम्बः । किन्त्वीश्वरस्य। स चाप्रमेयः सर्वगत इति कथं तस्योपाधिबिम्बसन्निधिनाश इति ।। ननु कथमिदं लभ्यते? अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति प्रसिद्धमेव । नच सर्वगतस्य प्रतिबिम्बासम्भवः । तदधीनसारूप्यस्य प्रतिबिम्बत्वात् । तदिदमुक्तम् –**सरूपत्वादिति**।।

**भावदीपः**

**एतत्परिहारायेति** ।। पौनरुक्त्यपरिहारायेत्यर्थः ।। **कथञ्चिदिति** ।। स्वाभाविकनैमित्तिक-नाशभेदेनेत्यर्थः ।। **पुनः प्रतिपक्षित इति** ।। प्रतिबिम्बात्मा न नित्यः अनित्यबिम्बोपाधि-सन्निधिकत्वात् मुखप्रतिबिम्बवदिति प्रतिपक्षित इत्यर्थः ।। **इति भाव इति**।। **कुतः** इति 'शङ्कितुः' इति योज्यम् । कथम्? इत्यतोऽसिद्धिं व्यनक्ति – **नायमिति** ।। **कथमिद-मिति** ।। 'अप्रमेय[3]सरूपत्वात्' इत्येतत् प्रमेयमित्यर्थः ।। **'अप्रमेयस्य' 'शरीरिणः'** इति सामानाधिकरण्यमित्यर्थः ।। **प्रसिद्धमेवेति** ।। 'सिंहो माणवकः' इत्यादावित्यर्थः ।।

**( द्विविधोपाधिविचारः )**

**भाष्यम् — नह्युपाधिबिम्बसन्निध्यनाशे प्रतिबिम्बनाशः, सति च प्रदर्शके । स्वयमेवात्र प्रदर्शकः । चित्त्वात्[4] । नित्यश्चोपाधिः कश्चिदस्ति ।।**

१. तत्समाधाने इति मातृकायाम् । 'अपि' इति गुज, वे-ग्रं नास्ति ।

२. 'शक्यः इति क-मातृकायाम् ।

३. स्वरूपत्वात् इति सां-मातृकायां । अयं नरहरितीर्थीयानुगुणः ।

४. 'उपाधेश्चैव नित्यत्वात् नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम् ।। नचाभिन्नत्वमीशेन चिन्मात्रत्वं तु युज्यते' ब्रह्मतर्कवचनम्- भा.ता.१.१२.५५

'प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपया ।
चिद्रूपया युतो जीवः केशवप्रतिबिम्बकः ।।'[१]

इति भगवद्वचनात् ।। १८ ।।

## प्रमेयदीपिका

ननु वक्तव्यं सर्वमुक्त्वोपसंहारः क्रियते । तत्किमात्मनित्यत्वविषये सर्वशङ्कोद्धारो जातो येन **'तस्माद्युध्यस्व'** इत्युपसंह्रियते ? इत्यतो जात इत्याह– **नहीति** ।। **उपाधिबिम्बसन्निध्यनाशे सति प्रदर्शके** आदर्शे उपाधौ बिम्बे चाविनष्टे प्रतिबिम्बनाशो **न हि** अस्ति । उपपादितश्चात्र त्रयस्यानाश इति भावः ।। ननु विनाशिनां देहानामनुपाधित्वात् कोऽत्रोपाधिः? इत्यत आह– **स्वयमेवेति**।।उपाध्युपाधिमद्भावो विशेषबलेनेति भावः ।। लोकेऽदृष्टमिदं कथमङ्गीकार्यम्? इत्यत आह– **चित्त्वादिति** ।। जडेषु अयावद्वस्तुभावित्वात् सर्वत्र भेदाभेदौ । चित्स्वरूपत्वे तु यावद्वस्तुभावित्वादभेद एवेति भावः ।। स्वस्यैवोपाधित्वे मुक्तावात्मनिवृत्तिः स्यात् । उपाधिनिवृत्ति-लक्षणत्वामुक्तेरित्यत आह – **नित्यश्चेति** ।। द्विविध उपाधिरात्मनः । नित्योऽनित्यश्च। तत्र नित्यस्य अवस्थानम्, अन्यस्य निवृत्तिर्मुक्ताविति । कुत एतत्? इत्यत आह– **प्रतिपत्ताविति**।। प्राप्तौ सत्याम् । **युतः** 'तिष्ठति' इति शेषः ।।

## भावदीपः

चशब्दोऽनुक्तसमुच्चय इत्युपेत्योक्तम् – **बिम्बे चेति** ।। 'सति' इत्यस्यार्थः– **अविनष्ट इति** ।। **उपपादितश्चात्रेति** ।। **'नाभावो विद्यते सतः'** (२-१६) इति ईश्वरस्य, **'इमे अन्तवन्तः'** इत्युक्त्या अन्यो नित्योपाधिरस्तीति सूचनेन उपाधेः, **'अनाशिनः'** इत्यनेन बिम्बोपाधि-सन्निधेश्चानाश उपपादित इत्यर्थः । [२]**'अप्रमेय'** इत्यनेन हेतूक्तेः **'उभयोरपि दृष्टोऽन्तः'** इत्युक्तेश्चोपपादित इत्युक्तम् ।।

## ('उपाध्या' इतिभाष्यप्रयोगसाधुत्वसम्पादनम्)

## प्रमेयदीपिका

ननु 'उपाध्या' इति कथम्? किप्रत्ययान्तस्य पुल्लिङ्गतानियमात् । तर्हि इषुधिर्द्वयोः कथम्?

---

१. 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः।।
सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् । कथश्चात्मविनाशाय प्रयत्नः सेत्स्यति कचित्।।' भा.ता.नि.

२. अत्र 'मानाभिमान' इति अनन्वितपदं सो-मातृकायां स्पष्टं वर्तते (३०-साङ्कपत्रे७.पङ्क्तौ)।

प्रयोगदर्शनादपवादः । यथाऽह– **'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः'** **(अमर. ३.४३७)** इति। समं प्रकृतेऽपि । स्वः आत्मा रूपं यस्याः सा स्वरूपा । चिद्रूपत्वात् स्वरूपत्वम् । स्वरूपत्वान्नित्यत्वम् ।। १८ ।।

### भावदीपः

पाणिनीयलिङ्गानुशासने 'पुमान्' इत्यधिकारे 'क्यन्तो घुः'इति सूत्रे 'दाधाघ्वदाप्' **(पा.सू. १. १. २०)** इति घुसञ्ज्ञकस्य किप्रत्ययान्तस्य पुल्लिङ्गत्वोक्तेः उपाधिशब्दस्य च 'उपसर्गे घोः किः' **(पा.सू.३.३.९२)** इति किप्रत्ययान्तत्वात् स्त्रीलिङ्गानुपपत्तिरिति शङ्कते– **ननु उपाध्येति कथमित्यादिना** ।। **तर्हीषुधिरिति** ।।

**'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः'** **(अ.को.२.५५४)**

इति क्षत्रियवर्गे किप्रत्ययान्ते इषुधीशब्दस्य 'द्वयोः' इति पाणिनीयलिङ्गानुशासने इषुधिः 'स्त्रियां च' **(पा.सू.७.१.९६)** इति चशब्देन च पुल्लिङ्गस्त्रीलिङ्गत्वयोरुक्तिः **कथम्**? इषुधिशब्दः **द्वयोः** स्त्रीपुल्लिङ्गयोः[1] कथं वर्तते? इत्यर्थः । **अपवादः** 'पुल्लिङ्गनियमस्य' इति योज्यम् ।।

**यथाऽहेति** ।। अमरकोशकारो लिङ्गानुशासनवर्गे आहेत्यर्थः । पूर्वमनुक्तस्य लिङ्गस्य विधिः **लिङ्गशेषविधिः** ।। स च **व्यापी** व्यापकस्तदा स्यात् । यदि प्रागुक्तेरिहोक्तेश्च **विशेषैः अबाधितो** भवतीति तस्यार्थः । तथा च क्यन्तः पुमानेवेति विधिः इषुधिर्द्वयोरिति विशेषेण बाधित इति भावः । **सममिति** ।। 'उपाध्या' इति इहापि प्रयोगदृष्टेरिति भावः ।। १८ ।।

( आत्मनाशव्यवहारः भ्रान्तिमूलः )

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ।। १९ ।।**

**भाष्यम् —**व्यवहारस्तु भ्रान्त इत्याह– **य एनमिति** ।। कुतः? उक्तहेतुभ्यो नायं हन्ति न हन्यते ।।

### प्रमेयदीपिका

**'य एनम्'** इति पुनरात्मनित्यत्वं किमित्युच्यते? इत्यतो नास्य नित्यत्वप्रतिपादने

---
१. 'स्त्रीपुल्लिङ्गयोः ' इति सो नास्ति ।

तात्पर्यम् । किन्तु निष्टङ्कितं चेदात्मनो नित्यत्वं तर्हि का गतिस्तद्धननव्यवहारस्य? इत्याशङ्क्य तस्य भ्रान्तत्वमनेनोच्यत इत्याह– **व्यवहारस्त्विति** ।। व्यवहारोऽत्र ज्ञानम् । तथाऽपि '**नायं हन्ति न हन्यते**' इति पुनरुक्तिरेवेति चेन्न । ज्ञानानां प्रामाण्यस्य [1]बाधकैकापोद्यत्वात् । कुतो बाधकादस्य भ्रान्तत्वम्? इत्याशङ्क्य स्वपक्षसाधकानामेवोक्तहेतूनामेतद्बाधनेऽपि व्यापार-प्रदर्शनार्थत्वादस्येत्याह– **कुत** इति ।।

नन्वत्र हननमेकमेव । तत्कथम् '**उभौ**' इति? कथं च '**नायं हन्ति न हन्यते**' इति? [2]अथैकस्या अपि क्रियायाः कारकभेदादेवमुक्तिः, तर्हि करणाधिकरणोक्तिरपि प्रसज्यत इति। उच्यते । आत्मनो नित्यत्वमिवास्वातन्त्र्यमपि प्राक् प्रतिपादितम् । यथोक्तं तात्पर्यनिर्णये । तत्र हननव्यवहारवत् स्वातन्त्र्यव्यवहारस्यापि भ्रान्तत्वमनेनोच्यत इति '**उभौ**' इत्याद्युपपद्यते । अत एव भाष्यकारो '**व्यवहारस्तु**' इति सामान्येनाह । नतु हननव्यवहार इति निष्कृष्य।।

**भावदीपः**

गीतायां '**न विजानीतः**' इत्युक्तेः भाष्ये '**व्यवहारस्तु**' इत्युक्तिः कथम्? इत्यत आह– **व्यवहार इति** ।। **स्वपक्षसाधकानामेवेति** ।। जीवनित्यत्वसाधकानां बिम्बस्य नित्यत्वात्, उपाधेश्च नित्यत्वात्, तत्सन्निधेरनाशाच्चेति हेतूनामित्यर्थः ।। **करणेति**।। शस्त्रेण कुरुक्षेत्र इत्युक्तिप्रसङ्गादित्यर्थः।। **कथश्चेति**।।'**न हन्यते**' इत्येतावदुक्तौ च[3] हननबुद्धेर्भ्रमत्वोक्ति-सम्भवादिति भावः ।। **यथोक्तं तात्पर्यनिर्णय इति** ।। 'गीता'इति आदौ योज्यम् । गीतातात्पर्ये हि '**यद्यपि नित्यत्वं जीवस्याप्यस्ति । तथाऽपि सर्वप्रकारेणाविनाशित्वं विष्णोरेव**' इत्यादिना '**तस्मादनाशिनोऽप्रमेयस्य विष्णोः पूजार्थं युध्यस्व**' इत्यन्तेन ग्रन्थेन '**अविनाशि तु तद्विद्धि**' इत्यादिश्लोकार्थतया ईश्वरस्य स्वातन्त्र्यं जीवस्यास्वातन्त्र्यं चोक्तमित्यर्थः ।। **तत्रेति** ।। एवंसतीत्यर्थः ।।

**अनेन** '**य एनम्**' इति श्लोकेन **उच्यते** । य एनं जीवं स्वातन्त्र्येण हन्तारं वेत्ति [4]यश्चैनं जीवं हतं मन्यते । तावुभौ स्वातन्त्र्यज्ञानी जीवहननज्ञानी चेत्युभौ न विजानीतः भ्रान्तिमन्तौ । कुतः? ईश्वरप्रतिबिम्बत्वहेतुना स्वातन्त्र्याभावात् नायं स्वातन्त्र्येण हन्ति बिम्ब-

१. 'बाधैकापोद्यत्वात्' इति मातृकायाम् ।
२. '**अथ इति शङ्काद्योतको निपातः-' इति कथालक्षणभावदीपे** ।
३. **सो** - मातृकायामेव चशब्दः पठ्यते । अयं टीकाभावबोधकः।
४. अयं शुद्धपाठः सो मातृकायामेव । मातृकाद्वये 'हतश्चैनम्' इति पठ्यते ।

नित्यत्वादिप्रागुक्तहेतुभ्यो नित्यत्वेन न हन्यते यस्मादित्येवं रूपेणोच्यत इति हेतोः **'उभौ'** इत्याद्युपपद्यत इत्यर्थः ।।

**( प्रतिबिम्बस्य न स्वतः क्रिया )**

**भाष्यम् — नहि प्रतिबिम्बस्य क्रिया । स हि बिम्बक्रिययैव क्रियावान् ।**

**'ध्यायतीव'** (बृ.उ.६.३.७)[१]

**इति श्रुतेश्च ।। १९ ।।**

**प्रमेयदीपिका**

ननु नित्यत्वे बिम्बनित्यत्वादयो हेतव उक्ताः । अस्वातन्त्र्ये तु न कोऽपि । तत् कथम् **उक्तहेतुभ्यः** इत्युक्तम्? इति चेन्न । प्रतिबिम्बत्वस्योक्तत्वात् । तस्य कथमस्वातन्त्र्ये हेतुत्वम्? इत्यत आह– **नहीति** ।। **'क्रिया'** इति वदता **'हन्तारम्' 'हन्ति'**इति पदद्वयमुप-लक्षणार्थमिति सूचितम् ।। ननु प्रतिबिम्बस्यापि लोके क्रिया दृश्यते । जीवस्य च क्रियाभावे 'कर्ता शास्त्रार्थवत्वात्'[२] **(ब्र.सू.२.३.१७.३३)** इत्यादिविरोध इत्यत आह– **स हीति** ।। **बिम्बक्रियया** बिम्बाधीनक्रियया । तथाच पूर्वं स्वातन्त्र्याभावापेक्षया क्रियाप्रतिषेध इति ज्ञातव्यम् ।। ननूपाधिक्रिययाऽपि प्रतिबिम्बे क्रिया भवति । तत्कथमुच्यते बिम्बक्रिययैवेति? मैवम् । स्वातन्त्र्यप्रतिषेधे तात्पर्यात् । जीवस्य पृथगुपाध्यभावाच्च ।। जीवस्येश्वराधीनक्रियत्वे श्रुतिं चाह– **ध्यायतीवेति** ।। ईश्वरो जीवं ध्याययतीत्यर्थः[३]। इवशब्दोऽल्पार्थे[४]।। १९ ।।

---

१. (अ)**न्यायामृते कर्तृत्वाध्यासभङ्गे** -'ध्यायतीव लेलायतीव' इत्यादिश्रुताविवशब्दस्य 'परतन्त्रप्रभौ प्रभुरिव' इतिवत् जीवस्थकर्तृत्वस्येश्वरतन्त्रत्वपरत्वात् ।।

(आ) 'आत्मनो महिमान्तरमाह- ध्यायतीवेति । जीवं ध्याययतीत्यन्तर्णीतो णिजत्रोत्तरत्र च ज्ञेयः । जीवस्य ध्याने स्वातन्त्र्यं हरेरेवेति द्योतयितुमिवशब्दः ।' इति **रा.खण्डार्थे** ।

२. 'अत्र 'यत्कर्म कुरुते तदभिसम्पद्यते' ' नान्यः कर्ता' इति जीवकर्तृत्वाकर्तृत्वश्रुत्यविरोध उच्यते । ज्ञ इत्यस्ति । ज्ञः कर्ता । शास्त्रार्थवत्वात् विधिनिषेधरूपशास्त्रार्थवत्वात् । अन्यथा शास्त्रसार्थक्यं न स्यादित्यर्थः । जडेशमुक्तौनां तदविषयत्वादिति भावः ।' इति **तन्त्रदीपिकायाम्** ।।

३. 'स्वातन्त्र्याद् ध्यायतीवासौ ध्याययन् जीवमञ्जसा' इति महामीमांसा वचनम्. बृ.उ.भा.।

४. (अ)'उपमार्थे तथाऽल्पत्वेऽपीवशब्दः प्रयुज्यते ' इति शब्दनिर्णये.बृ.उ.भा.६.३.३१

(आ) ' भवेदेकत्र संयोग इवशब्दो विरुद्धयोः । धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षिते'

इति **का.भा.उ.२.१.११.**शब्दनिर्णयवचनम् ।

### भावदीपः

उक्तत्वादिति ।। **'अन्तवन्तः'** (२-१८) इति श्लोक इति भावः ।। **उपलक्षणार्थमिति** ।। हन्तारं हननोपलक्षितक्रियामात्रं प्रति कर्तारं मन्यते। हन्ति स्वातन्त्र्येण क्रियामात्रमपि न करोति ईशप्रतिबिम्बत्वादिति क्रियामात्रोपलक्षणार्थमित्यर्थः ।। १९ ।।

( जीवनित्यत्वे मन्त्रवर्णः )

**न जायते म्रियते वा कदाचित्**
**नायं भूत्वा भविता[1] वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ।। २० ||[2]**

**भाष्यम् — अत्र मन्त्रवर्णोऽप्यस्तीत्याह– न जायत** इति ।। **नचेश्वरज्ञानवद् भूत्वा भविता** । तद्धि - 'तदैक्षत' (छां.उ.६.२.३) ।

'देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा'[3] (भाग.३.७.९)

इत्यादि श्रुतिस्मृतिसिद्धम् ।

### प्रमेयदीपिका

तथाऽपि **'न जायते'** इति पुनरुक्तमित्याशङ्क्य नेदं भगवद्वाक्यम्, किन्तूक्तार्थे सम्मतित्वेन

---

१. 'भूत्वाऽविता' इति शाङ्करभाष्ये अपपाठः ।

२. (अ) 'न जातो न म्रियेताऽत्मा स हि देहाद्युपाधिभिः ।
निमित्तैरात्तधर्मोऽयम्' भाग.३.२७.४ । अत्र विशेषः द्र.भाग.ता ।।
(आ) 'अथ परो न जायते न म्रियते' ब्र.सू.भा.उ.-चतुर्वेदशिखा.वचनम्.४.२.२२.
(इ) 'न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमानेपि देहे' इति काठके.१.२.१८.

३. 'देशादिनिमित्तत्वेन अवस्थातः जाग्रदाद्यवस्थानिमित्तेन स्वतः अन्यतः परतः, अविलुप्तावबोधात्मा अविनष्टज्ञानस्वरूपो योऽसौ भगवान् सोऽजया प्रकृत्या कथं युज्येत । युक्त्या गुणरूपप्रकृतिसंसर्गो न सम्भवति । दृश्यते तथा ।'तुच्छेनाभ्वपिहितम्' इति श्रुतेः' इति विजयध्वजीये ।

मन्त्रवर्णोऽयमुदाह्रियत इत्याह– **अत्रेति** ।। ननु जीवः स्वरूपेण भूत्वा देहसम्बन्धेन भवितैव । तत्कथमुच्यते 'भूत्वा भविता न' इति? इत्यतोऽन्यथा व्याचष्टे– **न चेति** ।। जीवो नजायते चेत् तर्हि यथेश्वरज्ञानं वृद्धिह्रासादिवर्जितं भूत्वैव कयाचिदचिन्त्यशक्त्या भूतमिति व्यवहारा(व)लम्वनं तथा जीवेऽपि किं जननव्यवहारः तन्निमित्तः? इति पृच्छायां '**न**' इत्यनेनोच्यत इत्यर्थः ।।

नन्वीश्वरज्ञानस्योक्तप्रकारं भूत्वाभवनं कुतः सिद्धम् । येन जीवस्य तथाभावसम्भावनायोदाह्रियत इत्यत आह– **तद्धीति** ।। 'तत्' ईश्वरज्ञानस्योक्तप्रकारं[1] भूत्वाभवनं **श्रुतिस्मृतिसिद्धं** हि इति सम्बन्धः ।। '**तदैक्षत**' इति भवनमुच्यते । देवदत्तोऽपश्यदितिवत् ।। '**देशतः**' इति वृद्धिह्रासादिराहित्यम् ।।

**भाष्यम् —कुतः? अजादिलक्षणेश्वरसरूपत्वात् । शाश्वतः सदैकरूपः । पुरं देहम् अणतीति पुराणः[2]। तथाऽपि न हन्यते हन्यमानेऽपि देहे ।। २० ।।**

## प्रमेयदीपिका

नन्वीश्वरवदिति[3] कस्मान्नोक्तम्? नैवं शङ्क्यम् । लोकदर्शनस्याधिकस्य तत्रोत्पादात्।'**अजो नित्यः**' इति पुनरुक्तमित्याशङ्क्य तन्निवर्त्यामाशङ्कामुक्त्वा अन्यथा व्याचष्टे– कुत इति ।। '**न जायते म्रियते**' इत्येतत् कस्मात् कारणादित्यर्थः । 'अजादि' इत्यनेन '**अजो नित्यः शाश्वतः**' इति व्याख्यातम् । '**शाश्वतः**' इत्येतत् '**नित्यः**' इत्यनेन गतार्थमित्यतोऽन्यथा[4] व्याचष्टे– **शाश्वत** इति ।। तथाच '**अजो नित्यः**' इत्याभ्यां बिम्बोत्पत्तिनाशनिमित्तौ, '**शाश्वतः**' इत्यनेनोपाधिबिम्बसन्निधिजनननाशनिमित्तौ जन्मनाशौ न स्त इत्युक्तं भवति ।। तथाऽपि '**अजः**' इत्युक्तत्वात् '**पुराणः**' इति पुनरुक्तिरिति चेत् - न । '**भूत्वा भविता वा न**' इत्युक्तम् । तत्कुतः? किन्निमित्तश्च तर्हि जननव्यवहारः? इत्याशङ्क्य देहाद् देहान्तरप्राप्तिरस्यास्तीत्यनेनोच्यत इत्याह– पुरमिति ।।

एवमपि '**न हन्यते**' इति पुनरुक्तिरिति चेन्न । यदि पुराणस्तर्हि उपाधिभूतदेहनाशाद्

१ 'उक्तप्रकारेण'इति गुज,वे-ग्रं पाठः । मातृकायां द्वितीयान्त एव ।

२. अत्र पद्मनाभतीर्थीये प्रकारान्तरेण भाष्यव्याख्या कृता । 'कुतोयं न जननमरणशून्यः, कुतो वा नेश्वरसम इत्याशङ्क्याह कुत इति। विम्वत्वादेव नेशसाम्यमित्यर्थः। अनादिनित्यस्य ईशसाम्याभावे विकारो न कारणमित्याह-शाश्वत इति । किं तर्हीश्वरवैलक्षण्यमित्यत आह-पुरमिति'।

३. भावदीपानुगुणः पाठः । क्वचित् ईश्वरवदित्येव इति पठ्यते ।

४. '-मित्यन्यथा' इति वे-ग्रं, गुज पाठः ।

दर्पणनाशात् प्रतिबिम्बनाशवदात्मनाशः स्यादित्याशङ्का अत्र पूर्वाभिप्रायेण परिह्रियत इति भावेनाऽह– **तथापीति** ।। पुराणत्वेऽपि ।। २० ।।

**भावदीपः**

**ईश्वरवदिति[१] कस्मान्नोक्तमिति।।** ईश्वरवद् भूत्वा भविता न भवति जीव इति कस्मान्नोक्तमित्यर्थः ।। **लोकदर्शनस्येति** ।। लोककर्तृकदर्शनस्येत्यर्थः ।। सदा विद्यमानस्यापि रामकृष्णादेः जनदृग्विषयत्वरूपस्य जन्मनो जातादिव्यवहारालम्बनस्य भूत्वाभवनादधिकस्य तत्र सत्वेन अचिन्त्यशक्त्या तत्र जन्मनो निर्वाह्यत्वात् तथा नोक्तमित्यर्थः ।। **न हन्यत इति पुनरुक्तिरिति चेदिति** ।। पूर्वार्धे **'न म्रियते'** इति श्रवणादिति भावः ।। **पूर्वाभिप्रायेणेति** ।। **'अन्तवन्त इमे देहाः'** इत्यत्र **'इमे'** इत्युक्तिसूचितेन **'नित्योपाधिः कश्चिदस्ति'** इत्यादिनोक्त-नित्योपाध्यभिप्रायेणेत्यर्थः ।। **'तथाऽपि'** इत्यस्यार्थः - **पुराणत्वेऽपीति**।। अनेकदेहप्राप्ति-मत्वेऽपीत्यर्थः।। २० ।।

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ।। २१ ।।[२]**

**भाष्यम्** — अतो **यः** एवं **वेद सः कथं कं घातयति हन्ति** वा । **अविनाशिनं** नैमित्तिकनाश[३]रहितम् । **नित्यं** स्वाभाविकनाशरहितम् ।। अथवा **अविनाशिनं** दोषयोगरहितम् **नित्यं** सदा भाविनम् इति सर्वत्र विवेकः । [४]दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात्[५] ।। २१ ।।

**प्रमेयदीपिका**

**'वेदाविनाशिनम्'** इति पुनरात्मनोऽविनाशित्वादिकं किमर्थमुच्यते? इत्यतोऽस्य तात्पर्य-माह– अत इति ।। उक्तैः प्रमाणैः । **'एवम्'** अविनाशित्वादिरूपम् । **कं कथं घातयति हन्ति**

१. सो पाठः । व्याख्यानानुगुणः । मातृकाद्वये ईश्वरवदित्येव इत्येवकारः पठ्यते ।
२. 'देहापेक्षमनित्यत्वं जीवानां जननं तथा । स्वतस्त्वजाश्च नित्याश्च '...जीवतत्वे ।(भाग.ता.११.१.१९)
३. 'विनाश' इति गुज. वे-ग्रं।
४. 'दुष्टे नष्टपदप्रयोगान्नाशशब्दो दोषवाची' इति गीताभाष्यमनुरुन्धानो व्याचष्टे- निर्दोषत्वादिति' इति वि.त.नि.टी.व्यास.टिप्पण्यां ७०६ पृष्टे एकं वाक्यं गीताभाष्यस्थत्वेन पठ्यते । अयं न लभ्यते।
५. 'प्रयोगदर्शनात्' इति मातृकायाम् ।

**वा** इत्येवं भावं[१] न करोतीत्यर्थः । जीवस्यानित्यत्वादिकं मन्यमानो न जानातीत्युक्तम् । इदानीं तु ज्ञानी नैवं मन्यत इत्युच्यत इति । '**अविनाशिनम्**','**नित्यम्**' इति पुनरुक्तिमाशङ्क्य द्वेधाऽर्थभेदमाह– **अविनाशिनमिति** ।। **नैमित्तिकः** बिम्बनाशादिनिमित्तकः। **स्वाभाविकः** कालकृतः । '**दोषयोगरहितम्**' इत्यनेन '**मात्रास्पर्शाः**' इत्यत्र यदुक्तम् 'आभिमानिकमेवात्मनो दुःखादिकं न तु स्वगतम्' इति तस्यानुवादः क्रियते ।।एवं व्याख्यानप्रकारमन्यत्राप्यतिदिशति– **इति सर्वत्रेति** ।। '**विवेकः**' शब्दार्थयोः। '**अविनाशिनं दोषयोगरहितम्**' इति कुतो लभ्यते? इत्यत आह– **दोषेति**।।[२]।। अनेकार्थत्वाद् धातूनामिति भावः।। २१ ।।

भावदीपः

'**अतः**'इत्यस्यार्थः - **उक्तैः प्रमाणैरिति** ।। 'एवम्' इत्यस्यार्थः- **अविनाशित्वादिरूपमिति** ।। गीतोक्तनित्यत्वाजत्वादिरादिपदार्थः । भाष्यानुवादपूर्वं शेषमाह- **कं घातयति हन्ति वेत्येवं भावं न करोतीत्यर्थ इति** ।। '**कम्**' इत्याक्षेपे । 'एनमयं घातयति एनमयं हन्तीति भावं न करोति' इति फलितार्थः ।। श्लोकतात्पर्यं निष्कृष्य दर्शयति– **जीवस्येत्यादिना**।। प्रागप्रकृतस्य कथमनुवादः? इत्यत आह–**दोषयोगरहितमित्यनेनेति** ।। **आभिमानिकम्** अभिमानकृतम्।।

( देहात्मविवेकानुभवे दृष्टान्तः )

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही ।। २२ ।।**

**भाष्यम् — देहात्मविवेकानुभवार्थं दृष्टान्तमाह– वासांसीति** ।। २२ ।।

**प्रमेयदीपिका**

[३]देहानामपगमोपगमयोरप्येक एवायमात्मेत्येतत् '**देहिनोऽस्मिन्**'(२.१३) इत्यत्रैव सदृष्टान्तमुक्तम् । अतो '**वासांसि**' इति व्यर्थोऽयं श्लोक इत्यत आह– **देहेति** ।। कौमारादिदेहाना

१. मातृकायां भावम् इत्यतः परं न शब्दोऽधिकः पठ्यते । भावदीपानुसारी ।
२. 'दोषाः छेदादयः' इति पद्मनाभतीर्थीये ।
३. 'देहानामागमापगमयोः' इति काचित्कपाठो न टिप्पणीष्वादृतः । मातृकायाम् 'आगम' इति पठ्यते ।

[1]मतिभिन्नत्वाभावान्न तेन देहात्मनोर्विवेको विनाशित्वाविनाशित्वादि-लक्षणः स्पष्टमनुभवारूढो भवतीति भावः । **दृष्टान्तं** 'पूर्वोक्ताद्विलक्षणम्' इति शेषः । **दृष्टान्त**मित्युपलक्षणम् । दार्ष्टान्तिकस्यापि कथितत्वात् ।। २२ ।।

## ( पाङ्गीआचार्यव्याख्या )

अत्र जीर्णदेहविसर्जनानन्तरं नवदेहप्राप्तिः वासोदृष्टान्तेनोक्ता । भागवतेतु देहान्तरमनुप्राप्य प्राक्तनं त्यज्यते वपुः' इत्यनेन नवदेहप्राप्त्यनन्तरं जीर्णदेहविसर्जनमुक्तम् । अतो विरोधः । वासोदृष्टान्तोप्यत्र न युज्यते । तथाप्रतीत्यभावात् । नहि कश्चित् पूर्वं जीर्णं विसृज्य नवग्रहणे प्रवर्तते । अतो विरोधान्तरं च ।।

अत्र केचित् समादधुः । 'अविहाय' इति पदप्रश्लेषेण दृष्टान्ते न विरोध इति । दार्ष्टान्तिके अकारप्रश्लेषासम्भवेन साम्यानुपपत्तेः । नरः जानुकञ्चुकवान् मनुष्यः, अपराणि नव जीर्णेतराणि कौपीनादीनि धृत्वैवेति शेषः । जीर्णानि पूर्वधृतानि जानुकञ्चुकादीनि, विहाय त्यक्त्वा नवानि तदाख्यानि वासांसि गृण्हाति यथा । अपरशब्देन कौपीनादेः, तथा धृत्वैवेति शेषस्य चाग्रहणे, जीर्णनवकञ्चुकहान-ग्रहणानुपपत्तेः । अभयोर्नवजीर्णशब्दयोर्ग्रहणेनैव चारितार्थ्ये अपराणि इति पदस्य वैयर्थ्यापत्तेश्च । तथा- अन्यानि नवजीर्णेतरलिङ्गानि, अधिष्ठायैव, जीर्णानि विहाय, नवानि संयाति प्राप्नोति । अत्रापि अन्यशब्देन लिङ्गशरीरादेः, तथा अधिष्ठायैव इति शेषस्य चानङ्गीकारे जीर्णदेहत्यागनव-देहप्राप्त्योरनुपपत्तेः । नहि जीर्णदेहं विहाय अनावृत एव देहान्तरं गच्छेत् । लिङ्गानावरणे मोक्षसिद्धिप्रसङ्गात् । अन्यपदस्य च वैयर्थ्यापत्तिः । जीर्णान्नवस्य स्वत एवान्यत्वसिद्धेः । तस्मादुक्तार्थस्य युक्तत्वेन नोक्तविरोधापत्तिरिति भावः ।।

श्रीमन्नारदशिष्येण श्रीनिवासेन लेशतः ।
वासांसीत्यादिपद्यं तु विवृतं श्रीशतुष्टये ।। २२ ।।

---

१. गुज,वेग्रं पुस्तकेषु '-मनतिभिन्नत्वात्- पाठः । सः भा.र.कोशाननुगुणः।

( विशेषनिमित्तैरपि जीवो न विनश्यति )

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥**

**भाष्यम्** —स्वतः प्रायोनिमित्तैश्चाविनाशिनोऽपि केनचिन्निमित्तविशेषेण स्यात्, ककच्छेदवत् इत्यतो विशेषनिमित्तानि निषेधति– **नैनमिति** ॥ २३ ॥

**प्रमेयदीपिका**

नैमित्तिकनाशस्य प्राङ्निरस्तत्वात् किं **'नैनम्'** इति श्लोकेन? इत्यतः तन्निवर्त्याशङ्का-प्रदर्शनपूर्वकं तात्पर्यमाह– **स्वत** इति।। **स्वतः** कालतः । **प्रायः** बाहुल्येन । शङ्क्यमाननिमित्त-व्यावृत्त्यर्थमेतदव्ययम् । **'केनचित्'** शस्त्रादिना । **स्यात्** 'विनाशः' इति शेषः । असम्भावितशङ्काया न पर्यवसानमित्यतो दृष्टान्तमाह– **ककच्छेदवदिति** ।। यथा दक्षस्य प्रजापतेः शिरच्छेदो न स्वतो जातः, नापि वीरभद्रस्यायुधेन[1] निमित्तेन, किन्तु यज्ञपशुभावनाख्येन निमित्तविशेषेण तथेत्यर्थः । **इत्यतः** = एवं शङ्कितत्वात् । विशिष्यन्त इति विशेषाः । विशिष्टनिमित्तानि विनाशस्य ।। २३ ।।

**भावदीपः**

**प्राङ्निरस्तत्वादिति** ।। **'अन्तवन्त इमे'** (२.१८) इति श्लोके बिम्बोपाधितत्सन्निधीनां नाशनिमित्तकनाशस्य निरस्तत्वादित्यर्थः ।। 'प्रायः' इत्यनुवादः, **'बाहुल्येन'** इति व्याख्या। तस्य कृत्योक्तिः- **शङ्क्यमाननिमित्तव्यावृत्त्यर्थमेतदव्ययमिति** ।। **'नैनम्'** इति श्लोके नाशहेतुतया यच्छस्त्रपावकादिकं शङ्क्यते तद्व्यावृत्तबिम्बनाशादिनिमित्तग्रहणायैतद्विशेषणम् ।। **अव्ययमिति** **स्वरूपकीर्तनम्** ।। **यज्ञपशुभावनयेति** ।। उक्तं हि चतुर्थस्कन्धे–

**दृष्ट्वा सञ्ज्ञपने योगं पशूनां स पतिर्मखे ।**
**यजमानपशोः कस्य कायात् तेनाहरच्छिरः** ।।[2] इति ।। २३ ।।

---

१. **'आयुधनिमित्तेन'** इति मातृकायां पाठान्तरम् ।

२. 'मखे यज्ञे सञ्ज्ञपने याज्ञीयपशुहिंसया । योगमुपायम् । स्वयज्ञभङ्गात् कुपितो हरिरिमं च्छेत्तुं न मुञ्चति तस्मादिममेव यज्ञपशुं कृत्वैव तच्छिर एव विच्छिद्य भगवदाहुतित्वेनाग्नौ जुहोमीति सङ्कल्पाख्यमुपायं दृष्ट्वेति भावः इति **सुरोत्तमतीर्थाः युक्तिमल्लिकाव्याख्याने** ।

( आत्मनो छेदादियैग्यतैव नास्ति )

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतः [1]स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

**भाष्यम् —** वर्तमाननिषेधात् स्यादुत्तरत्रेत्यत आह– **अच्छेद्य इति** ॥ वर्तमानादर्शनाद् युक्तमयोग्यत्वमिति सूचयति वर्तमानापदेशेन । कुतोऽयोग्यता? नित्यसर्वगतादिविशेषणेश्वरसरूपत्वात् ॥

**प्रमेयदीपिका**

तर्हि '**अच्छेद्योऽयम्**' इत्यादि पुनरुक्तमित्यत आह– **वर्तमानेति** ॥ लट्प्रयोगेण **वर्तमानस्यैव छेदादेर्निषेधात्**, इदानीं दृश्यमानत्वेन आत्मनः प्राग्विनाशाभावेऽपि **उत्तरत्र** शस्त्रादिना विनाशः **स्यादिति** शङ्कायां, छेदादियोग्यतैव आत्मनो नास्तीति प्रतिपादनायैतदुदितम्[2] । 'अर्हे कृत्यतृचश्च' (**पा.सू.३.३.१६९**)इति कृत्यस्यार्हार्थत्वस्मरणादिति भावः । तर्हि तेनैवालम् । किमाद्येन श्लोकेन? इत्यत आह- **वर्तमानेति** ॥ '**प्रवृत्ते शस्त्रसम्पाते**' (**१.२०**) इति वचनात् प्रसक्तौ सत्यामपि वर्तमानस्य छेदादेः **अदर्शनात्** छेदाद्ययोग्यत्वमात्मनो **युक्तमिति** दर्शयति प्रथमश्लोकेन । एवं तर्हि,औत्तराधर्यप्रसङ्ग इति चेन्न । उपोद्घाताभिप्रायेण भगवतोक्तेरभिप्रायमजानानस्य शङ्कामनूद्यावतारस्य कृतत्वात् । स्वाभिप्रायेण तूपोद्घातमुक्त्वा साध्यमाहेत्यवतारः कर्तव्यः ॥

'**नित्यः सर्वगतः**' इत्यादिकं जीवेऽसम्भावितमित्याशङ्क्य तन्निवर्त्याशङ्काप्रदर्शनपूर्वकं व्याचष्टे– **कुत** इति ॥ वर्तमानच्छेदाद्यदर्शनमात्मनः छेदाद्ययोग्यतायां किं निश्चययुक्तिरुत सम्भावनायुक्तिः? नाद्यः । कदाचिदद्दृष्टस्यापि पश्चाद्दर्शनात् । द्वितीये कुतोऽयोग्यतानिश्चय इति शङ्कार्थः । '**नित्यःसर्वगतः**' इति भावप्रधानो निर्देशः । ईश्वरस्य तावच्छेदाद्ययोग्यत्वं सिद्धम् । नित्यसर्वगतत्वादिविशेषणवत्वात् । नह्येवम्भूतस्य छेदादिकं सम्भवति । अतस्तत्प्रतिबिम्बस्यापि जीवस्य तदयोग्यत्वमिति भावः ॥

---

१ '**सर्वगतस्थाणुः**' इति गीतातात्पर्यरीत्या पाठः ।

२. 'प्रतिपादनायेदमुदितम्' इति गुज,श-मा३ -पाठौ ।

### भावदीपः

**इदमुदितमिति** ।। **'अच्छेद्योऽयम्'** इत्यादिकमुदितमित्यर्थः । **कृत्यस्य चेति**[1]।। तृतीयस्य आद्यपादे 'कृत्याः'(पा.सू.३.१.९५) इति, 'प्राङ् ण्वुलः' इति (पा.सू.३.१.१०५)सूत्रेण 'ण्वुल् तृचौ' (पा.सू.३.१.१३३) इत्यतः प्राक् 'तव्यत्तव्यानीयरः'(पा.सू.३.१.९६) इत्यारभ्य विहितप्रत्ययानां कृत्यसञ्ज्ञोक्तेः, तन्मध्ये विहितस्य 'ॠहलोर्ण्यत्' (पा.सू.३.१.१२४) इति विहितण्यत्प्रत्ययस्य कृत्यसञ्ज्ञकस्य 'अर्हे कृत्यतृचश्च' (पा.सू.३.३.१६९) इति सूत्रेण कृत्यसञ्ज्ञकण्यत्प्रत्ययस्यार्हार्थे स्मरणादित्यर्थः ।। श्लोकयोः पौर्वापर्यव्यत्यासः स्यादिति शङ्क्ते– **एवं तर्हीति** ।। 'वर्तमान' इत्यादि भाष्योक्तावतारिकापक्षे श्लोकयोरुत्तराधरभावः । **'अच्छेद्यः'** इत्यस्य पूर्वत्वं **'नैनम्'** इत्यस्य पश्चात्तनत्वं स्यादित्यर्थः । **'अच्छेद्यः'** इति श्लोकोक्तार्थे **'नैनम्'** इति श्लोकार्थस्य हेतुत्वादिति भावः ।। **शङ्कामनूद्येति** ।। **'वर्तमान-निषेधादित्यादिना'** इति भावः ।। **स्वाभिप्रायेणेति** ।। छेदादियोग्यतैव नेति वक्ष्याम इति कृष्णाभिप्रायेणेत्यर्थः ।। **भावप्रधान इति** ।। 'भाष्ये' इति ज्ञेयम् ।।

**भाष्यम् — 'शाश्वतः' इत्येकरूपत्वमात्रमुक्तम् । स्थाणुशब्देन नैमित्तिकमन्यथात्वं निवारयति । नित्यत्वं सर्वगतत्वविशेषणम् । अन्यथा पुनरुक्तेः ।।**

### प्रमेयदीपिका

मन्त्रवर्णे **'शाश्वतः'** इति ईश्वरविशेषणमुक्तम् । अत्र **'स्थाणुः'** इति । तयोर्भेदमाह– **शाश्वत इति** ।। **एकरूपत्वमात्रं** सामान्येनान्यथात्वाभावः । तस्य सामान्यप्रकरणत्वात्। **'स्थाणुः'** इत्यस्य नैमित्तिकनिषेधप्रकरणत्वात् । अस्यार्थभेदकथनस्योत्तरत्रोपयोगं वक्ष्यामः । 'नित्यः' इतीश्वरविशेषणं प्रतिभाति[2] । तदन्यथा व्याचष्टे– **नित्यत्वमिति** ।। भिन्नपदोक्तमपि विशिष्टस्य विशेषणं विशेषणमुपसङ्क्रामति । सन्निधानाच्च सर्वगतत्वमिति भावः । द्वयं पृथगीश्वरविशेषणं किं न स्यात्? इत्यत आह– **अन्यथेति** ।। **'अजो नित्यः'** इति नित्यत्वमीश्वरस्य प्रागुक्तम्। **'अप्रमेयस्य'** इति सर्वगतत्वं च । अतस्ताभ्यां पुनरुक्तेरित्यर्थः। अस्याप्युत्तरत्रोपयोगः ।।

---

१. वि.त.नि.भावदीपे-(पृ-७४६) 'कृत्याः प्राङ् ण्वुलः' इति तृतीयाध्यायाद्यपादीयसूत्रेण 'ण्वुल् तृचौ' इति सूत्रात् प्राक् ये प्रत्ययास्ते सर्वे कृत्यसञ्ज्ञका भवन्ति'इत्युक्तत्वात् तन्मध्ये 'तव्यत्तव्यानीयरः' इति सूत्रोक्ततव्यप्रत्ययस्यापि कृत्यसञ्ज्ञकत्वात्' ।।

२ रामानुजभाष्ये-भाग-१.पृ-१३७ ।

## भावदीपः

**मन्त्रवर्ण इति** ।। **'अजो नित्यः'** इति प्रागुक्तमन्त्रवर्णे । 'रूपपदस्य भगवद्रूपपरत्वे प्रकृतासङ्गतत्वम् असम्भवदुक्तिकत्वं चेत्यतो भाष्यमनूद्यार्थमाह–**एकरूपत्वेति** ।। **नैमित्तिकेति** ।। शस्त्रादिनैमित्तिकेत्यर्थः ।। **उत्तरत्रेति** ।। **'ऐक्योक्तावपि'** इत्युत्तरवाक्यव्याख्यावसरे **'इत्यादिकः प्राचीनो ग्रन्थः'** इत्यादिनेति भावः । **'अस्याप्युत्तरत्रोपयोगः'** इत्येतदपि तत्रैव बोध्यम् । **विशिष्टस्येति** ।। सर्वगतोऽयं नित्य इति सर्वगतत्वविशेषणयुक्तस्य यन्नित्यत्वविशेषणं तत् **'अजो नित्यः'** इत्यत्र **'नित्यः'** इत्यनेन पौनरुक्त्येन विशेष्येणान्वितं सत् सन्निहित-सर्वगतत्वविशेषणमेवोपसङ्क्रामति नित्यसर्वगतत्ववान् इतीत्यर्थः । विशेष्यानन्वयमेव दर्शयति–**द्वयमित्यादिना** ।।

**भाष्यम् — ऐक्योक्तावप्यनुक्तविशेषणोपादानान्नेश्वरैक्ये पुनरुक्तिः ।**

## प्रमेयदीपिका

ननु जीवस्येश्वरप्रतिबिम्बत्वमत्र बहुवारमुक्तम् । अतः पुनरुक्तिदोष इत्यत आह–**ऐक्येति** ।। जीवस्येश्वरैक्यविषये **न पुनरुक्तिः** दोषः । कुतः? ऐक्यमात्रस्य पुनः पुनरुक्तावपि पूर्वपूर्वानुक्तानां तत्र तत्रोपयुक्तानामीश्वर्गविशेषणानामुत्तरत्रोपादानादिति । ऐक्यमत्र गौणं विवक्षितम् । विशेषणभेदाद्विशिष्टभेद इति भावः । नन्वेतदपि नास्ति । **'शाश्वतः'** इत्युक्तस्यैव स्थाणुशब्देन ग्रहणादित्याशङ्कानिरासाय **'शाश्वत इत्येकरूपत्वमात्रम्'** इत्यादिकः प्राचीनो ग्रन्थः ।।

ननु प्रतिबिम्बत्वं तत्तत्साध्यसिद्धये हेतुत्वेनोक्तम् । नचैकस्यैव हेतोरनेकसाध्यसिद्ध्यर्थं पुनः पुनरुपन्यासे दोषोऽस्ति । तत्कस्य हेतोः? प्रमेयभेदात् । अतः कथमियं शङ्का? इति। उच्यते । एकत्रोक्तमीश्वरप्रतिबिम्बत्वमन्यत्रापि हेतुत्वेन शिष्यैरेव ज्ञायताम् । किं स्वयं वचनेन? इति शङ्कितुरभिप्रायः । ईश्वरप्रतिबिम्बत्वमात्रस्य तत्तद्विशिष्टशङ्कानिरासा-सामर्थ्यात् तत्तदौपयिक-विशेषणप्रदर्शनार्थं स्वयमुपादानमिति परिहाराभिप्रायः ।।

## भावदीपः

**वहुवारमिति** ।। **'अनाशिनोऽप्रमेयस्य'** इत्यत्र **'अजो नित्यः'** इत्यत्र **'नित्य**

१. राघवेन्द्रतीर्थीयत्वेन भा.र.को.उदाहृतमिदं पूर्णं वाक्यं मातृकात्रयेपि न लभ्यते ।

**सर्वगतः'** इत्यत्र चोक्तेरिति भावः ।। **ईश्वरैक्यविषय इति** ।। ईश्वरसारूप्यरूपगौणैक्यविषय इत्यर्थः ।। **ऐक्यमात्रस्येति** ।। सारूप्यरूपगौणैक्यमात्रस्येत्यर्थः ।। **विशिष्टभेद इति**।। भिन्न-भिन्नविशेषणोपपत्ते[1]रीश्वरप्रतिबिम्बत्वोक्तेर्न पुनरुक्तिरित्यर्थः ।। **इत्यादिक इति** ।। शाश्वत-स्थाणुपदयोरर्थभेदोक्तिपरः नित्यपदस्य सर्वगतत्वविशेषणोक्तिपरो भाष्यग्रन्थ इत्यर्थः ।।

**तत्तत्साध्यसिद्धय इति** ।। **'अनाशिनोऽप्रमेयस्य'** इत्यत्र सर्वगतेश्वरप्रतिबिम्ब-त्वात् न बिम्बोपाधिसन्निधिनाशान्नाश इति; **'अजो नित्यः'** इत्यत्र बिम्बोत्पत्तिनाश-निमित्तोत्पत्तिनाशौ न स्तः, **'अजम्'** इति नित्येश्वरप्रतिबिम्बत्वादिति; **'नित्यः सर्वगतः'** इत्यत्र तु सर्वगतत्वस्य हरेरनित्यत्वे बिम्बोपाधिसन्निधिनाशाच्छेददाहादिकत्ववत् तन्नाशो जीवस्य [2]इति नास्ति, नित्यसर्वगतत्वविशिष्टेश्वरप्रतिबिम्बत्वादिति भिन्नभिन्नसाध्यसिद्धय इत्यर्थः ।। **तदिति** ।। पुनः पुनरुपन्यासे दोषो नास्तीत्येतत् ।। **कस्य हेतोरिति** प्रश्नस्योत्तरमाह– **प्रमेयभेदादिति** ।। **अतः** दोषाभावादित्यर्थः[3] ।।

**भाष्यम् — युक्ताश्च बिम्बधर्माः प्रतिबिम्बेऽविरोधे ।।**

## प्रमेयदीपिका

नन्वीश्वरस्य नित्यसर्वगतत्वादिविशेषणवत्त्वादस्त्वच्छेद्यत्वादिकम् । जीवस्य तु कुतः? तथाविधेश्वरप्रतिबिम्बत्वादिति चेन्न । यो [4]यत्प्रतिबिम्बः स तद्धर्मेति नियमाभावादित्यत आह– **युक्ताश्चेति** ।। **बिम्बधर्माः** बिम्बसमानधर्माः । यो यत्प्रतिबिम्बः सोऽसति विरोधे तद्धर्मेति व्याप्तिरत्राभिप्रेतेति भावः ।।[5]

## ( जीवस्येश्वरप्रतिबिम्बत्वसमर्थनम् )

**भाष्यम् —तत्ता च -**

---

१. 'विशेषणोपेतेश्वरप्रति..' इति सो-पाठः ।

२. अयं सो पाठ एव । नान्यमातृकासु ।

३ 'अत इति । दोषाभावादित्यर्थः' इति कापाठः ।

४. 'यत्प्रतिबिम्बः' इति समस्तपदं मातृकाद्वये । 'यस्य प्रतिबिम्बः' इति सो ।

५. **ब्र.सू.भा.२.३.३०.त.प्रका-** नित्य एव जीवः । प्रतिविम्वस्य विम्बोपाधितत्सन्निधिनाशं विना नाशानुपपत्तेः। विम्वस्य परमात्मनो अनाद्यनन्तत्वात् । उपाधेश्च यावत्परमात्मभावित्वात् । सर्वगत - विम्वस्योपाधिसन्निधेश्च नित्यत्वात् ।।

'रूपं रूपं प्रतिरूपो बभूव'[१](ऋ.६.४७.१८)।

'आभास एव च'[२] ( ब्र.सू.२.३.५०)

इत्यादि श्रुतिस्मृतिसिद्धा ।

नचांशत्वविरोधः । तस्यैवांशत्वात् ।। नचैकरूपैवांशता । प्रमाणं चोभयविध-वचनमेव ।।

**प्रमेयदीपिका**

स्यादिदं व्याख्यानं यदि जीवस्येश्वरप्रतिबिम्बता स्यात् । सैव कुतस्सिद्धा? इत्यत आह– तत्ता चेति।।

ननु जीवस्येश्वरप्रतिबिम्बत्वाङ्गीकारे 'अंशो नानाव्यपदेशात्'[३] (ब्र.सू.२.३.४३)

---

१. (अ)'रूपं रूपं ..हरयः शता दश इति ऋङ्मन्त्रस्यायमर्थः ।-'भृण्वे वीरः'(ऋ.६.४७.१६) इत्यादिना प्रकृतः त्रिविधजीवसमुदायः अस्य परमेश्वरस्य रूपं रूपं प्रति प्रतिरूपः प्रतिबिम्बः बभूव प्रतिबिम्बो भूत्वा वर्तते । तद्बिम्बरूपमस्य प्रतिबिम्बत्वेनोक्तस्य योग्यजीवस्य मुक्त्यर्थं प्रतिचक्षणाय साक्षात्काराय भवति तद्विषयो भवति ।'-ब्र.सू.भा.दीपिकायाम्-२.३.५० ।

(आ) जीवस्य भगवत्प्रतिबिम्बत्वविषये काठकेपि इयं श्रूयते -

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।

एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ।। २.२.९

वायुर्यथैको भुवनं प्रविष्टारूपं रूपं प्रतिरूपो बभूव ।

एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ।। २.२.१० इति ।।

२. 'इतश्चैवमित्याह- 'आभास एव च' । ज्ञः आभास एव ईशप्रतिबिम्ब एव । मत्स्यादिस्तु न तथा । अतश्चाल्पिकर इति योज्यम् । योगविभागः प्रथमानिर्देशश्चोत्तरार्थः' इति तन्त्रदीपिकायाम् ।

३. 'अंशो नानाव्यपदेशादन्यथा चापि दाशाकितवादित्वमधीयत एके'इति सूत्रपाठः ।

'अत्र ज्ञस्येशांशत्वानशत्वश्रुत्यविरोध उच्यते । ज्ञ इत्यस्ति । परस्येत्यनुषङ्गः । अन्यथा चेति पूर्वत्रोत्तरत्र चान्वेति । अपिरादित्वमपीत्यन्वेति । ज्ञो जीवः परस्यांशः तद्गर्भवासित्वेन तदन्तर्भूतत्वात् । अंश इवांशः पितापुत्रादिसम्बन्धैः केवलं तदुपजीवकत्वेन तच्छेषभूत इत्यर्थः।। यद्वा ततो न्यूनत्वे सति किञ्चित् तत्सदृशरूपांश इत्यर्थः । कुतः- नानाव्यपदेशादन्यथा च व्यपदेशादित्यन्वयः ।।

नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति च-इति श्रुतौ पितापुत्रत्वादि नानाप्रकारेण सम्बन्धव्यपदेशात् । नासावस्य कुतश्चन इति नैवांशो न सम्बन्ध इति चान्यथा च सम्बन्धाभावेन च व्यपदेशादित्यर्थः । तदुभयबलाज्जीवः केवलं परेणोपकार्य एव न कदाचिच् तस्योपकर्तेति तदुपजीवकरूपांश

'**ममैवांशः**'[१](१५.७) इत्यादिवाक्यसिद्धेन तदंशत्वेन विरोधः स्यात् । प्रतिबिम्बो हि बिम्बादत्यन्ताभिन्न इति केषाञ्चिन्मतम् । अत्यन्तभिन्न इत्यपरेषाम् । अंशस्तु तदेकदेशस्तेन भिन्नाभिन्नः । यथा पटांशस्तन्तुः पटेन । ततः पक्षद्वयेऽपि कथं न विरोधः? इत्यत आह– **नचेति** ।। जीवस्येश्वरप्रतिबिम्बत्वाङ्गीकारेऽपि न तदंशत्वविरोधः । कुतः? इत्यत आह– **तस्यैवेति** ।। प्रतिबिम्बत्वस्यैवांशशब्दप्रवृत्तिनिमित्तत्वात् ।।

( अंशशब्दार्थः )

अयं भावः । अत्यन्तभिन्नस्य जीवस्य यदीश्वराधीनतत्सादृश्योपेतत्वं तत्प्रतिबिम्बत्वमुच्यते । अभेदमतस्य निराकरिष्यमाणत्वात् । तदेव तदंशत्वमिति कुतो विरोध इति ।।

नन्वंशत्वं तदेकदेशत्वम् । तत्कथमुच्यते प्रतिबिम्बत्वमेवांशत्वमिति? तत्राह– **नचेति**।। **अंशता** अंशशब्दप्रवृत्तिनिमित्तम् । न केवलमेकदेशत्वमंशशब्दप्रवृत्तिनिमित्तम् । अपि तु प्रतिबिम्बताऽपीति भावः ।। अस्तु नाम अनेकार्थत्वमंशशब्दस्य । तथाऽपि '**अंशो नाना**' इत्यादौ प्रतिबिम्बत्वमेवांशत्वमित्यत्र किं प्रमाणम् । तदेकदेशत्वं किं न स्यात्?इत्यत आह– **प्रमाणं चेति** ।। जीवस्येश्वरप्रतिबिम्बत्वं तदंशत्वं च तावदुच्यते । नच परस्परविरुद्धः शास्त्रार्थो भवितुं युक्तः । तत्रानेकार्थस्यांशशब्दस्य विरुद्धार्थं परित्यज्यार्थान्तरं गृह्यत इत्यर्थापत्तिरेवात्र **प्रमाणमिति** भावः ।।

### भावदीपः

**निराकरिष्यमाणत्वादिति** ।। '**नित्यः सर्वगतः**' इत्यत्र[२] '**बुद्धियुक्तः**' इति श्लोकव्याख्यानावसर इति भावः ।। **ईश्वरप्रतिबिम्बत्वं तदंशत्वं चेति** ।। '**रूपं रूपम्**' इति

---

इति ज्ञायते। उपकार्यत्वेन सम्बन्धव्यपदेशस्योरकर्तृत्वाभावेन सम्बन्धाभावस्य चोपपत्तेरिति भावः । अयं च हेतुरावेर्थे। अन्त्ये त्वन्यथा च दाशकितवादित्वमधीयत इति एके शाखिनः । ज्ञस्य जीवस्य 'ब्रह्म दाशा ब्रह्म कितवा ब्रह्मैवेमे दाशाः' इति ब्रह्माभेदमधीयते । अन्यथा च अनयः परः अन्यो जीव इति भेदं चाधीयत एके यतोत इति योज्यम् । ईशजीवयोर्भेदाभेदोक्त्यन्यथानुपपत्त्या भेदमुपेत्याभेदस्थाने तन्न्यूनत्वे सति किञ्चित् तत्सदृशरूपांशत्वं निवेश्यते । अभेदस्य बाधादिति भावः । टीकायामन्यथेति पदमुत्तरेण योजितम् । तत्त्वप्रदीपे तु पूर्वेण । पक्षद्वयेपि भाष्ये स्वारस्यदर्शनाच्चन्द्रिकायामुभयत्र योजितम्। यद्वा टीकारीत्या नानाव्यपदेशादित्येवावेर्थे हेतुः'- इति तन्त्रदीपिकायाम् ।

१. 'ममैवांशो जीवलोके जीवभूतः' इति ज्ञः परस्यांश इति स्मर्यते' इति तन्त्रदीपिकायाम् ।

२. इतः वाक्यद्वयं काणियूरुपाठे नास्ति । सो-पाठे मं-पाठे वर्तते ।

**'ममैवांशः'** इति श्रुतिस्मृत्योः, तथा **'अंशो नाना'**(**ब्र.सू.**)इति, **'आभास एव'** (**ब्र.सू.**) इति सूत्रयोश्चेति भावः ।।

**( अंशशब्दप्रवृत्तिनिमित्तविचारः )**

**भाष्यम् — न चांशस्य प्रतिबिम्बत्वं कल्प्यम् । गाध्यादिष्वप्यंशबाहुरूप्यदृष्टेः। इतरत्रादृष्टेः ।।**

**प्रमेयदीपिका**

स्यादेतत् । यथा प्रतिबिम्बत्वमेव तत्त्वम्, अंशशब्दस्यापि तदेव प्रवृत्तिनिमित्तमिति वचनद्वयविरोधशान्त्यर्थं कल्प्यते, तथैकदेशत्वमेव तत्त्वम्, प्रतिबिम्बशब्दस्यापि तदेव प्रवृत्तिनिमित्तमिति कुतो न कल्प्यम् । वचनद्वयविरोधस्यैवमपि शान्तेरित्यत आह– **नचेति** ।। **अंशस्य** = अंश[1]शब्दस्यैकदेशत्वस्य । **प्रतिबिम्बत्वं** = प्रतिबिम्बशब्दप्रवृत्तिनिमित्तत्वं **न कल्प्यम्** । कुतः? इत्यत आह– **गाध्यादिष्विति** ।। **गाध्यादिषु** अंशशब्दाभिधेयेष्वंशत्वस्य **बाहुरूप्यदृष्टेः** । **इतरत्र** प्रतिबिम्बशब्दाभिधेयेषु सूर्यकादिषु प्रतिबिम्बत्वस्यानेकरूपत्वा**दृष्टेः** ।।

इदमुक्तं भवति– इन्द्रांशो गाधीत्युच्यते । तत्र विशेष एवांशशब्दस्य प्रवृत्तिनिमित्तम्। भेदाभेदादेः प्रमाणबाधितत्वात् । पटांशस्तन्तुरित्यत्रैकदेशत्वम् । 'सूर्यांशश्चक्षुः' इत्यत्र अत्यन्तभिन्नस्य तदधीनसादृश्यम् । एवमंशशब्दोऽनेकार्थः प्रयोगेषु दृश्यते । तथाचोक्तम्

'द्विरूपावंशकौ तस्य'[2]

इत्यादि । नचैवं प्रतिबिम्बशब्दस्यानेकं प्रवृत्तिनिमित्तं दृश्यते । तथाच सावकाशस्यांशशब्दस्य निरवकाशेन प्रतिबिम्बशब्देन बाधो युक्तः । नतु वैपरीत्यमिति ।।

**भावदीपः**

बाहुरूप्येति ।। अनेकविधत्वदृष्टेरित्यर्थः ।। **तथा चोक्तमिति** ।। **'आभास एव च'** (**ब्र.सू.**) इति सूत्रभाष्ये अंशशब्दस्य नानार्थत्वमुक्तमित्यर्थः ।। आदिपदेन

'..........परमस्य हरेर्विभोः ।

१. अंशत्वस्य इत्यधिकं मातृकाद्वये ।

२. अंशाधिकरणोदाहृतवराहपुराणवचनम् ।

प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च ।
प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः' 'इत्यस्य ग्रहः ।।

(भगवति कर्तृत्वस्थाणुत्वयोरविरोधसमर्थनम्)

**भाष्यम्** — स्थाणुत्वेऽपि 'ऐक्षत'[२](छां.उ.६.२.३)इत्याद्यविरुद्धमीश्वरस्य । उभयविधवाक्यात् । अचिन्त्यशक्तेश्च ।।
नच माययैकम् ।

'त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते'[३](भाग.१०.४.१९)
'न योगित्वादीश्वरत्वात्'[४] (बृ.उ.भा.५.८.१२.उ. वाराहवचनम् ।)
'चित्रं न चैतत् त्वयि कार्यकारणे'[५] (भाग. ५.१८.५.)
इत्याद्यैश्वर्येणैव विरुद्धधर्माविरोधोक्तेः ।

## प्रमेयदीपिका

नन्वीश्वरस्य स्थाणुत्वं न युज्यते? 'तदैक्षत', 'सोऽकामयत'(तै.ब्रह्मवल्ली) इत्यादि कर्तृत्वविरोधादित्यत आह– **स्थाणुत्वेऽपीति** ।। कुतः? इति चेत् किं द्वयोः परस्परपरिहारेण वृत्तिदर्शनाद्विरोधश्चोच्यते । उत सहादर्शनात् । नाद्यः कर्तृत्वरहितस्य कस्याप्यदर्शनात् । न

१. इतः परमर्धपादः भाष्ये 'प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु ' इति ।।
श्लोकार्थः **भाष्यदीपिकायाम्** - वाराहे चेति ।। अंश एवांशक इति स्वार्थे कप्रत्ययः । एवमुत्तरत्रापि । 'परे' स्वरूपांशाः 'प्रादुर्भावाः' मत्स्याद्यवतारा इत्यर्थः । ननु जीवानां प्रतिबिम्बांशत्वं मत्स्यादीनां तु स्वरूपांशत्वमिति कुतः, उभयोः स्वरूपांशत्वं किं न स्यादित्यत आह - प्रतिबिम्बेष्विति ।। यत इति शेषः । सर्वसाम्ये स्वरूपत्वमेव स्यादतोऽल्पेत्युक्तम् । 'स्वरूपाणि' स्वरूपांशरूपाणि प्रादुर्भावात्मकानि मत्स्यादीनि 'इतराणि' अल्पसाम्यवद्भिन्नानि यावत्साम्यवन्तीत्यर्थः । तुशब्दोऽवधारणे । इति वाराह इत्यन्वयः । सूत्रार्थ उक्त इति शेषः ।' इति ।।
२. 'तत् सच्छब्दितं ब्रह्म ऐक्षत व्यचारयत्' इति खण्डार्थे ।
३. 'ननु कर्तुः अक्लेशत्वादिकं लोके केनापि नालोकि इति असम्भावितमिदमित्यत आह-त्वयीति । ईश्वरे ब्रह्मणि इति पदद्वयं हेतुगर्भम् ।उक्तं च ब्राह्मे- अनीहोक्लिष्टकारित्वात् तथाविकृत एव सन् । सर्वं कृणोषि तद्युक्तमैश्वर्यात् पूर्णशक्तितः इति ।। इति विजयध्वजीये ।
४. अयं श्लोकः टीकायां २.७२ श्लोके व्याख्यातः ।
५. 'युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मके व्यतिरिक्ते च वस्तुनि' इति भागवते पाठः ५.१८.५.

द्वितीय इत्याह– **उभयेति** ।। अन्यत्र सहादृष्टं स्थाणुत्वं कर्तृत्वं च कुतो भगवतीत्यत आह- **अचिन्त्येति** ।।

मायावादी तु कर्तृत्वस्थाणुत्वयोरेकं कर्तृत्वं मायामयम् । स्थाणुत्वं च पारमार्थिकम्। काल्पनिकपारमार्थिकयोश्च गगने नीलत्वनीरूपत्वयोरिव न विरोध इति विरोधसमाधानं मन्यते । तदसदित्याह– **नचेति** ।। कुतः? इत्यत आह– **त्वयीति** ।। **'ब्रह्मणि ईश्वरे'** इति सम्पूर्णैश्वर्ये । **न योगित्वात्** । किन्त्वीश्वरत्वात् । **कार्यकारणे** सकलकार्योत्पादन-सामर्थ्योपेते । **'इत्यादि'** इति क्रियाविशेषणम् । विरुद्धानामन्यत्र सहानवस्थितानां धर्माणां भगवत्यविरोधस्य सहावस्थानस्योक्तेः । तथाच बादरायणीयं मतमवलम्बमानस्यैवं विरोध-समाधानमसाम्प्रदायिकमिति भावः ।।

**( सर्ववेदानां भगवद्गुणोत्कर्षे महातात्पर्यम् )**

**भाष्यम् —महातात्पर्याच्च**[१] ।।

**प्रमेयदीपिका**

इतश्च तदयुक्तमित्याह–**महातात्पर्याच्चेति**।। सकलवेदानां परमेश्वरगुणोत्कर्षे महातात्पर्यम्। तत्रेक्षितृत्वादीनां मिथ्यात्वकल्पने तद्विरोधः स्यादित्यर्थः।।

**भावदीपः**

'ब्रह्मणि' 'ईश्वरे' इत्यनयोरपौनरुक्त्यायावैय्यर्थ्याय वा द्वयोर्यौगिकत्वमुपेत्य **'नो विरुद्ध्यते'** इत्यत्र हेतुगर्भविशेषणमिति भावेनाऽह–**सम्पूर्णेति** ।। ऐश्वर्यविशेषणयुक्ते अन्वीयमानं **'ब्रह्मणि'** इति विशेषणं **'त्वयि'** इति विशेष्यान्वयेऽतिशयाभावात्, नित्यत्ववद्विशेषण एवान्वेतीति भावः ।। **एवं विरोधसमाधानं** = कर्तृत्वस्य मायिकत्वेन समाधानमित्यर्थः ।।

**( मोक्षः महापुरुषार्थः )**

**भाष्यम् — मोक्षो हि महापुरुषार्थः**[२] । **'तत्रापि मोक्ष एवार्थः'** ।

---

१. वि.त.नि.प्र.प.'सर्वज्ञं सर्वकर्तारं नारायणमनामयम् । सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि । सर्वेषामपि वेदानामितिहासपुराणयोः । प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते' इति नारदीये ।

२. 'युक्तं च विष्णोः सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् । मोक्षो हि सर्वपुरुषार्थोत्तमः'

वि.त.नि, प्र.परि ।

## प्रमेयदीपिका

समस्तवेदानां भगवद्गुणोत्कर्षे महातात्पर्यमित्येतदेव कुतः? इति चेत् । उच्यते । [1]''यस्य हि शास्त्रस्य यत् प्रयोजनं तद् [2]यज्ज्ञानाद्भवति स तस्य विषयः' इति नियमः । अन्यथा विषयप्रयोजनयोः सम्बन्धो न स्यात् । तथाच तत्र प्रेक्षावतां प्रवृत्तिर्न भवेत् । वेदस्य च मोक्षः प्रयोजनम् । स च [3]भगवद्गुणोत्कर्षज्ञानादेव भवतीति तत्रैव तस्य महातात्पर्यं युक्तमिति प्रतिपादयिष्यन् 'सर्ववेदानां मोक्षः प्रयोजनमित्येवासिद्धम् । न स्वर्गादिः फलान्तरम्' इति कैश्चिदङ्गीकृतत्वादित्यतः तत्तावत् साधयति– **मोक्षो हीति**।। वेदो हि महच्छास्त्रम्। **'वेदशास्त्रात् परं नास्ति'**[4] इति वचनात् । तस्य च महापुरुषार्थेनैव प्रयोजनेन भवितुं युक्तम् । मोक्षश्च महापुरुषार्थः । अतः स एव तस्य प्रयोजनमिति भावः । मोक्षस्य महापुरुषार्थत्वं कुतः? इत्यत आह– **तत्रापीति** ।। पुरुषार्थेष्वपि । अत्र 'एव' इति निर्धारणेन महत्त्वं गम्यते ।।

## भावदीपः

**न स्वर्गादिरिति** ।। स्वर्गे ऐहिकफलातिरेकेण फलान्तरं नेत्यर्थः ।। **अत्रेति** ।। **'तत्रापीति'** वचन इत्यर्थः।।

**भाष्यम् — 'अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।**
**अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्तयोः**[5] **।।'** (म.भा.१२.३१७.३४)
**'पुण्यचितो लोकः क्षीयते'** (छां.उ.)
**इत्यादि श्रुतिस्मृतिभ्यः ।**

---

१. **न-प्रयोजनाधिकरणसुधा-** 'एतदुक्तं भवति । शास्त्रं हि साध्यसाधनभाववद्विषयप्रयोजनवत्तया व्याप्तम् । तत्र श्रुतीनां मोक्ष एव प्रयोजनम् , तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इति वचनात् । मोक्षादन्यत्रान्यन्तिकदुःखप्रहाणायोगात् । स्वर्गादिप्रयोजनं भवदप्यवान्तमेव न प्रधानम् । विषयस्तु परमेश्वर एव । सर्वे वेदा यत्पदमामनन्ति इत्यादि वचनात् । धर्मादिकं त्ववान्तरप्रतिपाद्यम्। अभिप्रेतप्रयोजनसाधनं च विषयतामश्नुते । नच धर्मादिकं मोक्षसाधनम् । 'पुण्यचितो लोकः क्षीयते' इति श्रुतेः । अतो भगवत्येव मोक्षसाधनत्वात् सर्वश्रुतीनां महातात्पर्यम् '।।
(सुधा -सम्पुटम्-१३. पत्रम् ६३४३)

२. 'यस्य ज्ञानात्' इति गुजपाठः । मातृकायां समस्तपदम् ।

३. 'भगवत्' इति गुज नास्ति । मातृकायां वर्तते ।

४. 'न दैवं केशवात् परम्' इति उत्तरार्धम् ।

५. 'मन्तरमेतयोः'-इति महाभारते उपलभ्यमानपाठः ।

( मोक्षः विष्णुप्रसादैकसाध्यः )

स च विष्णुप्रसादादेव सिद्ध्यति[१] ।

'वासुदेवमनाराध्य को मोक्षं समवाप्नुयात्'

'तुष्टे तु तत्र किमलभ्यमनन्त ईशे'[२] (भाग.७.६.२५)

'तत्प्रसादादवाप्नोति परां सिद्धिं न संशयः'

'येषां स एव भगवान् दययेदनन्तः
सर्वात्मनाऽऽश्रितपदो यदि निर्व्यलीकम् ।
ते वै विदन्त्यतितरन्ति च देवमायां
नैषां ममाहमिति धीः श्वसृगालभक्ष्ये'[३] (भाग.२. ७ .४२)

'तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते'

'ऋते यदस्मिन् भव ईश जीवाः तापत्रयेणोपहता न शर्म ।
आत्मन् लभन्ते भगवन् तवाङ्घ्रिच्छायांशविद्यामत आश्रयेम'[४]
(भाग.३.६.१८)

---

१. 'प्रीतिश्च गुणोत्कर्षज्ञानादेव विशेषतो दृष्टा' वि.त.नि.प्र.प.

२. 'तुष्टे च तत्र किमलभ्यमनन्त आद्ये' इति उपलभ्यमानभागवतपाठः । 'भगवत्तुष्ट्या किं प्रयोजनमिति। तत्राह-तुष्ट इति ।।'इति विजयध्वजतीर्थाः ।

३. (अ)वि.त.नि.टीकाभावदीपे-(मा.रा.सं.स.प्रकाशनम्) ७८८पत्रे इमान्येव टीकावाक्यान्युदाहृतानि ।
(आ)'नन्वेवं चेत् न कस्यापि ज्ञानाभावेन पुरुषार्थप्राप्तिरित्याशङ्क्य तत्प्रसादेन सर्वं सुलभमित्याह-येषामिति ।। सो अनन्तो भगवान् स्वयमेव येषां दययेत् दयां करोति ते देवस्य मायां स्वरूपशक्तिं विन्दन्ति । संसारहेतुं शैवलीं मायामतितरन्ति च । तत्साधनमन्तरेण दययेच्चेत् तस्य वैषम्यं नैर्घृण्यं च स्यातामित्यत्राह-सर्वात्मनेति । तत्रेत्थम्भावमाह-नैषामिति । एषां सेवकानां श्वसृगालभक्षणयोग्ये देहे ममाहमिति धीः नास्ति । देहाद्यभिमानशून्यत्वेन भाव्यमिति भावः । तत्तद्योग्यतानुसारेण तत्प्रसादोपि वहुविध इत्यस्मिन्नर्थे वैशब्दः' इति विजयध्वजतीर्थाः ।।

४. 'ईश अणिमादिपूर्णैश्वर्यमूर्ते । अस्मिन् भवे संसारे जीवाः वन्धमोक्षोपायभूतपादारविन्दमृते तत्सेवां विना आत्मन् आत्मनि शर्म न लभन्ते यदतो भगवन् तवाङ्घ्रिच्छायायाः ब्रह्मविद्यायाः अंशविद्यामेकदेशविद्याम् आश्रयेम । अनेन ...। व्यतिरेकन्यायो दर्शितः' इति विजयध्वजीये ।।

**'ऋते भवत्प्रसादाद्धि कस्य मोक्षो भवेदिह ।'[१]**

**'तमेवं विद्वान्'** (नृ.पू.उ.१.६)

इत्यादि श्रुतिस्मृतिभ्यः ।

### प्रमेयदीपिका

**अन्तेषु** धर्ममोक्षेषु । **मध्येषु** अर्थकामेषु ।अन्तयोरन्तरं मध्यम् ।। नैतावता धर्मो मोक्षसमः । क्षयिफलत्वादित्याह– **पुण्येति** ।। **चितः** प्राप्तः ।।

अस्त्वेवम् । ततः किम्? इत्यत आह– **स चेति** ।। मोक्षस्य भगवत्प्रसादसाध्यत्वम् अन्यसाध्यत्वाभावश्चेति द्वे एते प्रमेये । तत्र यथायोग्यं[२] वाक्यान्येतानि ज्ञातव्यानि । **निर्व्यलीकं** छद्मना विना । **सर्वात्मना** [३]सर्वप्रकारेण । **आश्रितपदः भगवान्** येषां **दययेत्** दयां कुर्यात् । तर्हि **एषां श्वसृगालभक्ष्ये** देहे **ममाहमिति** धीर्न भवति । ते **देवमायां** देवमहिमानं **विदन्ति,अतितरन्ति च** संसारमित्यर्थः।।

**ऋते** =सत्ये, **यत्** =यस्मात् । **ईश** इति सम्बुद्धिः । अतः तवाङ्घ्रि[४]च्छायामाश्रयेमेति सम्बन्धः ।। ज्ञानं प्रसादसाधनमित्यनुपदं वक्ष्यते । अतः **'तमेवम्'** इत्याद्युदाहरणम्।।

### भावदीपः

**अन्यसाध्यत्वाभावश्चेति**।। 'प्रसादादेव' इति एवकारणेन तल्लाभादिति भावः। **यथायोग्यमिति**।। 'वासुदेवम्' इति **'अल्पकास्ते'** इति **'ऋते भवत्'** इति वा अन्यसाध्यत्वाभावे, अन्यानि तु प्रसादसाध्यत्व इति ज्ञेयमित्यर्थः।। देवमायापदस्यार्थद्वयमुपेत्याह– **महिमानं संसारमिति च** ।। तत्प्रसादसाध्यत्वोक्तिप्रस्तावे ज्ञानसाध्यत्वार्थकवाक्योक्तिरयुक्तेत्यत आह– **ज्ञानमिति** ।। **'तमेव'** इत्यस्यापि ज्ञानजन्य[५]प्रसादसाध्यत्वोक्तिपरत्वादिति भावः ।।

---

१ **'मोक्षश्च विष्णुप्रसादेन विना न लभ्यते'** वि.त.नि.प्र.प ।

२ **अत्र यथायोगमिति वे-ग्रं, गुज,पाठः । यथायोग्यमिति टिप्पण्यनुसारेण मूलपाठो आदृतः । भावदीपे सो-मातृकायां यथायोगमिति पाठोपि वर्तते ।**

३. मातृकायाम् । 'सर्वेण प्रकारेण' इति वे-ग्रं, गुज,पाठौ ।

४. 'तवाङ्घ्रेः छायाम् ' इति गुज, वे-ग्रं पाठः।

५. सो-मातृकामात्रे प्रसाद इति उपलभ्यते, नान्यत्र ।

## ( सर्वागमानां भगवद्गुणोत्कर्षे महातात्पर्यम् )

**भाष्यम् — 'स चोत्कर्षज्ञानादेव भवति । लोकप्रसिद्धेः । लोकसिद्धमविरुद्धम् अत्राप्यङ्गीकार्यम् ।।**

### प्रमेयदीपिका

ततोऽपि किम्? इत्यत आह– **स** चेति ।। विष्णुप्रसादश्च । लोके सत्पुरुषप्रसादो गुणोत्कर्षज्ञानसाध्यः प्रसिद्धः । तद्दृष्टान्तेनानुमानादित्यर्थः । नन्वीश्वरस्यानुमानाविषय-त्वात् कथं तत्र लोकप्रसिद्धमङ्गीकार्यम् । अन्यथाऽज्ञानादिकमङ्गीकार्यं स्यादित्यत आह– **लोके**ति ।। अन्यथा मीमांसारम्भानुपपत्तिरिति भावः ।।

### भावदीपः

**अनुमानादिति** ।। 'ईश्वरप्रसादो गुणोत्कर्षज्ञानसाध्यः सत्पुरुषप्रसादत्वात्, राजप्रसादवत्' इत्यनुमानादित्यर्थः ।। **अन्यथेति** ।। सर्वात्मनाऽनुमानागम्यत्वे युक्त्यनुसन्धानरूपमीमांसा-रम्भानुपपत्तेरित्यर्थः।।

**भाष्यम् —अहल्याजारत्वाद्यपि दोषकृतोऽपि ते[२] वहुतरो लेप नासीदित्युत्कर्षमेव वक्ति । वहुनरकफलो ह्यसौ ।**

**'तस्य न लोम च न क्षीयते(मीयते)'[३] (कौ.उ.३.२)**

**इति श्रुत्यन्तराच्च ।।[४]**

---

१. वि.त.नि प्रथमपरिच्छेदे-

२. 'ते न वहुतरो लेप आसीत्' इति वे-ग्रं,गुज पाठः टीकाटिप्पण्यननुगुणः ।

३. तस्य न लोम च मीयत' इति नरहरितीर्थीयानुगुणः ।

४. (अ)इदं प्रकरणं रामायणोत्तरकाण्डे ३०सर्गे४७ श्लो. व्याख्याने सत्यधर्मीये उदाहृतम् । तथाहि-'ननु 'अहल्याजारत्वाद्यपि...श्रुत्यन्तराच्च' इति गीताभाष्योक्तेः कथं विधिनेन्द्रस्य पदभ्रंश इव अरिकरपरि-ग्रहादिर्गौतमशापनिमित्त इति कथितमिति चेन्न । पारत्रिकानन्दहासादिर्यथा सोदरदारपरिग्रहे सुग्रीवादेः तथा नास्ति भाव्यानन्दहासादिरिति 'वहुनरकफलो ह्यसौ' इति वदतो भाष्यकृतः अनुमत ऐहिको अनर्थ इत्यविरोध इति कात्र कथन्ता' इति ।।

(आ) अत्र विशेषः म.भा.ता.नि.४.१० वादिराजीयभावप्रकाशिकायां द्रष्टव्या ।

### ( निन्दायाः प्रसादहेतुत्वनिराकरणम् )

### प्रमेयदीपिका

नन्विन्द्रप्रसादकामः 'अहल्यायै जार'(तै.आरण्यक.१.१२.३) इति तन्निन्दामेव करोति। ततो भग्नव्याप्तिकमिदमनुमानमित्यत आह– **अहल्येति** ।। **अहल्याजारत्वादिप्रतिपादकं वाक्यमपि उत्कर्षमेव वक्ति** । कथम् । **दोषकृतोऽपि ते यः तत्फलं बहुतरो लेपः स नासीत्** इत्यस्यार्थस्यानेन व्यञ्जनादित्यर्थः । कुत एतत्? अत्यन्तालौकिककल्पनादेवं कल्पनस्य ज्यायस्त्वात् । तत्फलं बहुतरो लेप इत्येतत् कुतः? इत्यत आह– **बहुनरकेति**।। **असौ** परनारीधर्षणदोषः । **हीति** सकलधर्मशास्त्रप्रसिद्धिं द्योतयति । स लेपस्तस्य नासीदित्येतत्कुतः? इत्यत आह– **तस्येति**।। अहल्याधर्षणेन **तस्य** इन्द्रस्य **लोमाऽपि न क्षीयत**(मीयते) इत्यर्थः ।।

### भावदीपः

**'बहुतरो लेप नासीत्'** इत्युक्त्या अल्पलेप आसीदिति भ्रमनिरासायान्यथा योजयति– **यस्तत्फलमित्यादि** ।। **अत्यन्तालौकिकेति** ।। निन्दायाः प्रसादहेतुत्वस्य लोकविलक्षणत्वादिति भावः ।।

**भाष्यम् — 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्'** (१५.१९)

**इति तदुक्तेश्च ।**

### प्रमेयदीपिका

भगवत्प्रसादस्तद्गुणोत्कर्षज्ञानसाध्य इत्येतन्न केवलमनुमानात् सिद्धम् । किं तर्हि भगवद्वचनाच्चेत्याह– **यो मामिति** ।। अत्र **'स सर्ववित्'** इत्यादिस्तुत्या प्रसादो अवगम्यते । तदेवं भगवद्गुणोत्कर्षे महातात्पर्यं सर्वागमानामिति प्रमितम् ।।

**भाष्यम् — 'सत्यं सत्यं पुनस्सत्यं शपथैश्चापि कोटिभिः ।**
**विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ।।**
**पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।**
**नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः ।।' इति नारदीये[१] ।।**

१. 'वा नामधेयस्य वृद्धसंज्ञा' इति नारदशब्दस्य वृद्धसंज्ञायां वृद्धाच्छः इति छप्रत्यय इति भावः-' वि.त.नि.व्या.टि .

### प्रमेयदीपिका

ननु ब्रह्मरुद्रादीनां सर्वोत्कृष्टत्वप्रसिद्धेर्विष्णोः सर्वोत्कर्ष एव नास्ति । कुतस्तत्र सर्वागमानां महातात्पर्यम्? इति चेन्न । तत्प्रसिद्धेर्भ्रान्तित्वात् । तत्कुतः? इत्यत आह– **सत्यमिति** ।। **सत्यं** वक्षमाणम् । 'तस्य लेशस्य' इति सर्वत्र [१]सम्बद्ध्यते ।।

### भावदीपः

**इति सर्वत्र सम्बद्ध्यत इति** ।। विष्णुमाहात्म्यलेशस्य कोटिधा विभक्तो यो लेशः, तस्य लेशस्य पुनश्चाप्यनन्तधा विभक्तो यो लेशस्तस्य लेशस्य, [२]पुनश्चप्यानन्तधा विभक्तो यो लेशः, तस्य लेशस्य एकांशसममाहात्म्या न हि इत्येवं सम्बद्धचत इत्यर्थः ।।

### ( महाभारतस्य पुराणबाधकत्वम् )

**भाष्यम् —** अन्योत्कर्ष ऐक्यं च -

तथैव सर्वशास्त्रेषु महाभारतमुत्तमम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ।।' (वि.पु.३.४.५)

इत्यादि ग्रन्थान्तरसिद्धोत्कर्षमहाभारतविरुद्धम् ।। तत्र हि -

'नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ।।' (म.भा.१.१.१८)
'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ।'[३] (म.भा.१२.३४१.१२)
'न त्वत्समोऽस्त्यभ्यधिकः'[४] (११.४३)

इत्यादिषु साधारणप्रश्नावसर एव महान्तमुत्कर्षं विष्णोर्वक्ति ।।

---

१. भावदीपानुगुणपाठः । सम्वन्ध इति मु.वे-ग्रं, गुज-पाठः ।
२. सो मातृकामात्रे अयं भाग उपलभ्यते ।
३. अस्याःस्मृतेर्मूलभूता श्रुतिः -'स रुष्ट स प्रसन्नो यद्रुष्टो यत्प्रसन्नस्तस्माद् रुद्रसम्प्रसादावभूताम्' इति। अधिकविचारः द्रं-न्यायसुधा-शे.वा.चं (२.२.३७) ।
४. कुम्भकोणपाठः ।'अभ्यधिकः इति प्रभ-पाठे नास्ति ।

### प्रमेयदीपिका

ननु (पुराण)प्रमाणविरोधाल्लौकिकी प्रतीतिरस्तु भ्रान्तिः । पुराणेष्वेवान्येषां सर्वोत्कर्षो भगवदैक्यं चोच्यते । तत्कथम्? न हि पुराणस्य पुराणं बाधकम् । साम्यादित्यत आह– **अन्येति** ।। **अन्योत्कर्ष ऐक्यं च** पुराणेषु प्रतीतमपि महाभारतविरुद्धम् । अतो न ग्राह्यमित्यर्थः। अत्रैक्यं प्रसङ्गादुक्तम् ।।

महाभारतस्य पुराणबाधकत्वं कुतः? इत्यत उक्तम्– **तथैवेति** ।। इत्यादिना ग्रन्थान्तरेण सिद्धः प्रमित उत्कर्षः सर्वशास्त्रोत्तमत्वं यस्य तत् तथोक्तम् । कथं महाभारतविरुद्धत्वम्? इत्यत आह– **तत्र हीति** ।। **तत्र** महाभारते । **इत्यादिवाक्येषु वक्ति** भगवान् व्यासः । इतोऽपि महाभारतस्य पुराणबाधकत्वं युक्तमित्युक्तम्– **साधारणेति** ।। कः सर्वोत्कृष्टः? इति **साधारणप्रश्नरूपेऽवसरे** विष्णुप्रशंसामनुपक्रम्य स्वरूपकथनावसर इति यावत् ।।

**भाष्यम् — अन्यत्र यत्किञ्चिदुक्तावप्यसाधारण एवावसरे । तद्ध्यग्न्यादेरपि वेदादावस्ति-**

**'त्वमग्न इन्द्रो वृषभःसतामसि त्वं विष्णुरुरुगायो नमस्यः'** (ऋ.२.१.३)

**'विश्वस्माद् इन्द्र उत्तरः'**(ऋ.१०.८६.१) **इत्यादिषु ।**

**तद्ग्रन्थविरोधाच्च ।**

### प्रमेयदीपिका

पुराणेऽप्येवमेवान्योत्कर्षाद्युक्तौ साम्यमेवेत्यत आह– **अन्यत्रेति** ।।**अन्यत्र** पुराणे। **यत्किञ्चिदुक्तावपि** अन्योत्कर्षाद्युक्तावपि । **असाधारण एवावसरे** तत्स्तुतिप्रसङ्गे । 'तदुक्तम्' इति शेषः । असाधारणावसरोक्तमपि रुद्रादेरुत्कृष्टत्वादि कुतो दुर्बलम्?इत्यत आह– **तद्धीति** ।। **तत्** स्तुतिप्रस्तावोक्तं सर्वोत्कृष्टत्वम् । **वेदादावग्न्यादेरप्यस्ति** । तस्यापि ग्राह्यत्वं स्यादित्यर्थः।। इतश्च न पुराणोक्तं रुद्रादेरुत्कृष्टत्वं ग्राह्यमित्याह– **तद्ग्रन्थेति** ।। **तद्ग्रन्थः**[1] शैवपुराणम् ।।

**(भगवतो इन्द्रादीनां च विद्यमानान्तर्यवर्णनम्)**

**भाष्यम् — तथा हि स्कान्दे शैवे ।**

---

१. इतः परं 'तत्स्तुतिग्रन्थः' इति क्वचिदधिकपाठः ।

[1]''यदन्तरं व्याघ्रहरीन्द्रयोर्वने यदन्तरं मेरुगिरीन्द्रविन्ध्ययोः ।
यदन्तरं [2]सूर्यसुरेड्यविम्वयोस्तदन्तरं रुद्रमहेन्द्रयोरपि ।।
यदन्तरं सिंहगजेन्द्रयोर्वने यदन्तरं सूर्यशशाङ्कयोर्दिवि[3] ।
यदन्तरं जाह्नविसूर्यकन्ययोस्तदन्तरं ब्रह्मगिरीशयोरपि ।।
यदन्तरं प्रलयजवारिविप्रुषोर्यदन्तरं स्तम्बहिरण्यगर्भयोः ।
स्फुलिङ्गसंवर्तकयोर्यदन्तरं तदन्तरं विष्णुहिरण्यगर्भयोः ।।
अनन्तत्वान्महाविष्णोस्तदन्तरमनन्तकम् ।
माहात्म्यसूचनार्थाय ह्युदारणमीरितम् ।।'

'तत्समो ह्यधिको वापि नास्ति कश्चित् कदाचन ।
एतेन सत्यवाक्येन तमेव प्रविशाम्यहम् ।।' इत्याद्याह ।।

### प्रमेयदीपिका

तत्कथम्? इत्यत आह– तथा हीति ।। 'तद्ग्रन्थ'इत्युक्तप्रदर्शनाय **'शैवे'** इत्युक्तम् । 'ङ्यापोः सञ्ज्ञाच्छन्दसोर्बहुलम्' (पा.सू.६.३.६३) इति जाह्नवि इति ह्रस्वः।।

### भावदीपः

ङ्यापोरिति ।। ङीबन्तस्य आबन्तस्य च ह्रस्वो भवति । सञ्ज्ञाछन्दसो विषय इति षष्ठतृतीयपादीयसूत्रार्थः ।। 'रेवतिपुत्रः' इत्यादाविव **जाह्नविसूर्यकन्ययोरिति** ह्रस्व इत्यर्थः ।।

**भाष्यम् —** तत्रैव शिवं प्रति मार्कण्डेयवचनम् -

'संसारार्णवनिर्मग्न इदानीं मुक्तिमेष्यसि' इत्यादि ।

पाद्मे शैवे मार्कण्डेयकथाप्रवन्धे शिवान्निषिद्ध्य विष्णोरेव मुक्तिमाह -

'अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दनः' इत्यादि ।

---

१. इमे श्लोकाः श्रुतिव्याख्यानरूपा इति श्रो.वा.चन्द्रिकायाम् (२.२.३७) । तत्र 'सूर्यशशाङ्कयोर्दिवि' इति स्थाने 'सूर्यशशाङ्कयोरपि' इति पठ्यते । उपक्रमानुसारात् तदेव साधु इति भाति । पाठान्तरं वा स्यात् ।।
२. 'रविगुरुविम्वयोः, न तु तयोः । अधिकत्वाद् गुरोः' इति नरहरितीर्थीये ।
३. 'दिवि प्रकाशे, नतु सर्वगुणेषु, द्वयोः साम्यात् ' इति पद्मनाभतीर्थीये ।

**समग्राह्यविरोधाच्च ।**

**प्रमेयदीपिका**

**तत्रैव** स्कान्द एव । **शिवात्** मुक्तिं **निषिध्य** । इतश्च न पुराणोक्तं शिवादेरुत्कृष्टत्वं ग्राह्यमित्यत आह– **समेति** ।। समं शैववैष्णवपक्षयोः ।। **'नाहं न च शिवोऽन्ये च'**[१] **इत्यादि** तद्वचनम् ।।

**( वेदव्याख्या इतिहासानुरोधेन कर्तव्या )**

**भाष्यम् — वेदश्चेतिहासाद्यविरोधेन योज्यः । 'यदि विद्यात्' इति वचनात् । अनिर्णयाच्चेन्द्रादिशङ्कयाऽन्यथा । तत्रापीष्टसिद्धिः । नामवैशेष्यात् । अतो भगवदुत्कर्ष एव सर्वागमानां महातात्पर्यम् ।**

**प्रमेयदीपिका**

अस्तु लौकिकी प्रतीतिर्भ्रान्तिः । पुराणं च विप्रलम्भमूलं व्यामोहनार्थम् । तथाऽपि 'विश्वाधिको रुद्रः'[२] इत्यादिवेदविरोध इत्यत आह– **वेदश्चेति** ।। सङ्कुचिताद्यर्थो व्याख्यातव्यः । कुतः? इत्यत आह– **यदीति** ।। इतिहासाद्यननुरुद्ध्य यथाश्रुतवेदव्याख्यानेऽनिष्टमाह– **अनिर्णयाच्चेति** ।। न केवलं **'विश्वाधिको रुद्रः'** इत्यादि वेदो विष्णोः सर्वोत्कर्षस्याविरोधी । किन्तु प्रत्युत तत्र वेदेऽस्मदिष्टस्य विष्णुसर्वोत्कर्षस्य सिद्धिरपीत्याह– **तत्रापीति** ।। कुतः? इत्यत आह– **नामेति** ।। विष्णोर्नामभिर्वैशेष्यात् विशिष्टत्वात् । रुद्रादिसर्वनामवत्वादित्यर्थः । 'महातात्पर्याच्च' इत्यादिनोक्तमर्थमुपसंहरति– **अत इति** ।।[३]प्रमाणाविरुद्धत्वाच्चेत्यर्थः ।।

**भावदीपः**

**सङ्कुचिताद्यर्थ इति** ।। विश्वशब्दस्येन्द्रादिजगत्परत्वेन [४](इन्द्रान्तर्यामिपरत्वेन वा) व्याख्येय-मित्यर्थः ।।

---

१. **'तच्छक्त्येकांशभागिनः। बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः' इति पूर्णपाठः।**
( ब्र.सू.भा.१-१-१ उ.ब्राह्म.वचनम्)

२. रुद्रः इति वे-ग्रं,गुज,पाठेषु नास्ति । क्वचित् मातृकायां वर्तते ।

३. **प्रामाणिकत्वात् इति क्वचित् पाठः । भाष्ये अयं शब्दः नास्ति ।**

४. रुद्रान्तर्यामित्वेति का.मातृकायाम्। सो-मातृकायां कंसान्तर्गतभागः नास्ति ।

**भाष्यम् — तथाऽपि स्वतः प्रामाण्यात् सन्नेवोच्यते । अविरोधात् । नच प्रमाण-सिद्ध(दृष्ट)स्यान्यत्रादृष्ट्याऽपह्नवो युक्तः । धर्मवैचित्र्यादर्थानाम् । स्वतः प्रामाण्यानङ्गीकारे मानोक्तावप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः ।।**

### प्रमेयदीपिका

अस्त्वेवम् । तथापीक्षितृत्वादेर्न मायामयत्वे तद्विरोधः । गुणोत्कर्षस्य सत्त्वे हि स स्यात् । नच वेदतात्पर्यविषयत्वमात्रेण सत्यता । मोक्षापेक्षयेश्वरं प्रसादयितुमुक्तस्य राजाद्युत्कर्षस्येवासत्त्वसम्भवात् । संवादाभावेन सत्त्वनिश्चयायोगादित्यत आह– **तथापीति** ।।

फलापेक्षयेश्वरं प्रसादयितुं प्रतिपादितत्वेऽपि । **'स्वतः प्रामाण्यात्'** संवादमनपेक्ष्य ज्ञानग्राहकेणैव प्रामाण्यस्य निश्चितत्वात् । न हि प्रामाण्यनिश्चये विषयासत्त्वशङ्का सम्भवति। एवं सति बौद्धाद्यागमविषयस्यापि सत्त्वं स्यादिति चेन्न । प्रसक्तस्यापि तत्प्रामाण्यग्रहणस्य बलवद्विरोधेनापोदितत्वात् । नच तथा प्रकृतेऽपीत्याह– **अविरोधादिति** ।।

नन्वन्यत्र पुरुषे सर्वोत्कर्षस्यादर्शनात्तद्दृष्टान्तेनेश्वरेऽपि तदभावस्य साधयितुं शक्यत्वाद् अनुमानविरोधोऽस्तीत्यत आह– **न चेति** ।। कालातीतमनुमानमिति भावः । प्रमाण-विरुद्धस्याप्यनुमानत्वेऽतिप्रसङ्गं सूचयति– **धर्मेति** ।। धर्मैर्वैचित्र्यं **धर्मवैचित्र्यम्** । एवमनुमाने **अर्थानां** धर्मवैचित्र्यं **न** स्यादिति भावः ।।

यद्वाऽनेन ग्रन्थेनासम्भावनाविरोधं परिहर्तुं सम्भावनां दर्शयति । भवेदेवं यदि स्वत एव प्रामाण्यग्रहः स्यात् । तदनङ्गीकारे किमुत्तरम्? इत्यत आह– **स्वत** इति ।। संवादाधीनः प्रामाण्यग्रह इत्यङ्गीकारे तु प्रामाण्यनिश्चयाय संवादक**मानोक्तौ** तस्या**पि अदोषत्वं** प्रामाण्यम् अन्यसंवादेन **साधयेत्** इत्यनवस्थालक्षणो **अतिप्रसङ्ग** इत्यर्थः ।।

### भावदीपः

**अस्त्वेवमिति** ।। प्रामाणिकत्वप्रमाणाविरुद्धत्वोक्तिप्रकारेण महातात्पर्यविषयत्वं गुणोत्कर्ष-स्यास्त्वित्यर्थः ।। **राजादीति** ।। राजादितो[१] ग्रामद्रव्यादिफलं प्राप्तुं त्वमिन्द्रश्चन्द्र इत्यादिरूपेण प्रतिपाद्यमानोत्कर्षस्येवेत्यर्थः ।। **अनेनेति** ।। **'धर्मवैचित्र्यात्'** इति ग्रन्थेनेत्यर्थः।।

**भाष्यम् — अनन्यापेक्षया च तत्परत्वं सिद्धमागमानाम् ।**

---

१. 'राजादिना' इति मं-सो मातृकयोः।

'नारायणपरा वेदाः'[१] (भाग.२.५.१५)।
'सर्वे वेदा यत्पदमामनन्ति'[२] (कठ.२.१५)
'वासुदेवपरा वेदाः'[३] (भाग.१.२.२९) इति ।।

**न चैतद्विरुद्धम् । ईश्वरनियमात् । अनादौ च तत्सिद्धं**
**'द्रव्यं कर्म च कालश्च'[४] (भाग.२.१०.१२) इत्यादौ ।**

**प्रयोजकत्वं तु पूर्वोक्तन्यायेन । अतः सिद्धमेतत् ।।**

**प्रमेयदीपिका**

इतोऽपि न वेदतात्पर्यगोचरस्य भगवद्गुणोत्कर्षस्यासत्त्वं शङ्कनीयमित्याह– **अनन्येति** ।। प्रयोजनानपेक्षया **चे**त्यर्थः। तर्हि **तत्परत्वमेव** न सिद्ध्येत् । प्रयोजनपर्यालोचनया हि तत्प्राक् साधितमित्यत आह– **सिद्धमिति** ।। कथम्? इत्यत आह– **नारायणे**ति।। प्रयोजनापेक्षया भगवद्गुणोत्कर्षपरत्वपक्षे प्रयोजनेन तत्साधनं कृतम् । प्रयोजनानपेक्षापक्षे तु आगमैरेव तत्सिद्धम् । पक्षद्वयं च 'सर्वे वेदास्तु देवार्थाः' इत्यादिवक्ष्यमाणप्रमाण(प्र)सिद्धम् ।।

एकस्यैव वाक्यस्य प्रयोजनसापेक्षत्वमनपेक्षत्वं च विरुद्धमित्यत आह– **नचेति** ।। प्रतिपत्तृभेदादिति भावः ।।

१. भागवते ब्रह्मवचनमिदम् ।। 'ननु हिरण्यगर्भः समवर्तताग्रे..भुवनस्य गोप्ता' इत्यादिश्रुतयस्त्वद्गुण - प्रतिपादनपराः कथमन्यविषयाः स्युरित्याशङ्क्य मदन्तस्य मन्त्राम्नो हरेः गुणप्रतिपादका इत्याशयेनाह- नारायणपरा इति । स्वप्रतिपाद्येषु वस्तुषु नारायण एव परो अधिको येषां ते तथोक्ताः' इति विजयध्वजतीर्थाः।
२. ब्र.सू.भा.१.१.५ त.प्र.टीका -'तपांसि यत् प्रति वदन्ति वेदाः' ।
३. 'सकलशास्त्रतात्पर्यपर्यालोचनया सकलैरवश्यं सेव्यः नारायण इत्याह-वासुदेवपरा इति । अत्र वेदा वासुदेवपरा इत्यादि प्रतिपादमन्वेतव्यम् । वासुदेवगुणोत्कर्षप्रतिपादनतात्पर्यवन्तः' इति विजयध्वजीये ।
४. (अ) ब्र.सू.२.१.३७. भाष्ये- 'द्रव्यं ..'इत्यादिना कर्मादीनां सत्वस्यापि तदधीनत्वात्' - ।।
(आ) ब्र.सू.२.२.५.भाष्ये 'द्रव्यं कर्म च कालश्च इत्यादि च । चशब्देन प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतम्'।।
(इ) न्यायसुधायाम्.१.१.१'अनेन सर्वोत्पत्तिमदुपादानिमित्तानां सत्ताऽपि परमेश्वराधीनेत्युच्यते'।
(ई) ब्र.सू.न्यायविवरणे -४.२.६-'द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः ।
प्रकृतिः पुरुषश्चैव न सन्ति यदुपेक्षया ।। इत्यादिश्रुतेश्च' इति श्रुतिरुदाहृता ।।
(उ)'हरेरियं सृष्टिः स्वाधीनसाधनान्तरसहकृतेत्याशयेनाह-द्रव्यमिति । द्रव्यं पृथिव्यादि।'
इति विजयध्वजीये।

ननु जडस्य वेदस्य 'एतान् प्रत्येवं प्रतिपादयिष्यामि,एतान् प्रत्येवम्' इति कथं चेतनवत् प्रवृत्तिः? इत्यत आह– **ईश्वरेति** ।।

अनादिर्वेद इत्युक्तम् । तत्र कथमीश्वरस्य नियमनम्? इत्यत आह– **अनादौ** चेति।। अनादिपदार्थविषये । नियामकत्वमन्यत्रादृष्टं कथमीश्वरस्य? इत्यत आह– **प्रयोजकत्वं** त्विति ।। अनादे[१]र्नियामकत्वं त्वीश्वरस्याचिन्त्यशक्त्या युक्तम् । **'अनन्यापेक्षया च'** इत्यादिनोक्तमुपसंहरति– **अत** इति ।। तथाच पक्षद्वयेऽपि महातात्पर्यविरोधान्नेश्वरस्य ईक्षितृत्वादिकं मायामयमिति भावः ।।

**भावदीपः**

**इतोऽपीति** ।। न केवलं स्वतःप्रामाण्यात् किन्तु वक्ष्यमाणमोक्षाख्यप्रयोजननैरपेक्ष्येणैव उत्कर्षप्रतिपादनादपीत्यर्थः[२] । **प्राक् साधितमिति** ।। **'मोक्षो हि'** इत्यादिना ग्रन्थेनेत्यर्थः ।। इत्यादि **वक्ष्यमाणेति** ।। सप्तमभाष्यान्त्यभागे । **प्रतिपत्तृभेदादिति** ।। ब्रह्मादिप्रतिपत्त्रपेक्षया प्रयोजनानपेक्षत्वस्य तदितरप्रतिपत्त्रपेक्षया तत्सापेक्षत्वोपपत्तेरिति भावः ।।

**भाष्यम् — तच्चानन्यापेक्षा अचिन्त्यशक्तित्व एव युक्तम् । अतो न मायामयमेकम् ।।**

**प्रमेयदीपिका**

अप्रामाणिकं च तन्मायामयत्वम् । तथाहि किं स्थाणुत्वेक्षितृत्वान्यथाऽनुपपत्त्या एतत् कल्प्यत उत प्रमाणान्तराभावात् । नाद्यः । अन्यथैवोपपत्तेरुक्तत्वादित्याह– **तच्चेति** ।। स्थाणोरपीक्षितृत्वम् । **अनन्यापेक्षा** स्वतन्त्रा । न द्वितीयः । तददर्शनादिति भावेनोपसंहरति– अत इति ।।

**भाष्यम् — अचलत्वं तु**

**'अप्रहर्षमनानन्दम्' 'अदुःखमसुखम्'**

**'(न)अप्रज्ञम्' (माण्डूक-२.१) 'असद्वा' (तै.उ.२.७) इत्यादिवत् ।**

---

१. 'र्नियोजकत्वं' इति वे-ग्रं, गुज, श.मा.१। मूले पूर्ववाक्यानुगुण्यात् मातृका(३)पाठः आदृतः।

२. 'प्रतिपादनादस्तीत्यर्थः'-इति कमातृकायाम्।

### प्रमेयदीपिका

प्रकृतमनुसरन् 'अचलः' इत्येतत्पदं यदन्यैः 'परिस्पन्दरहितः' इति व्याख्यातं[1] तदसदिति भावेनाऽह– **अचलत्वं** त्विति ।। इत्यादिवत् 'व्याख्येयम्' इति शेषः । सत्यज्ञानानन्दस्वरूपं ब्रह्माभ्युपगच्छता यथैतानि वाक्यानि व्याख्यायन्ते 'लौकिक-सत्तादिरहितम्' इति तथा 'अचलः' इत्येतदपि लौकिकक्रियाप्रतिषेधपरं व्याख्येयम्। सर्वथा परिस्पन्दाभावार्थत्वे '**अप्रहर्षम्**' इत्यादेरपि 'सर्वथाऽनानन्दत्वादिकम्' अर्थः स्यात् । अविशेषादिति भावः ।।

**भाष्यम् — क्रियादृष्टेः ।**

**'तपो मे हृदयं [2]ब्रह्म तनुर्विद्या क्रिया कृतिः'[3]** (भाग.६.४.४६)

**इत्याद्युक्तेः । अतश्च न मायामयं सर्वम् ।**

### प्रमेयदीपिका

ननु विषमोऽयमुपन्यासः । '**विज्ञानमानन्दं ब्रह्म**' (बृ.उ.३.९.२८) '**सत्यं ज्ञानम्**' (तै.उ.२.१) इत्यादिभिरानन्दरूपत्वादेः प्रमितत्वेन तथा व्याख्यानोपपत्तेरिति चेत् समं प्रकृतेऽपीत्याह– **क्रिये**ति ।।

कुतः क्रियादृष्टिः? इत्यत आह– **तप** इति ।। **तपः** आलोचनम् ।। 'विज्ञानमानन्दम्' इत्यादीनि निरवकाशानि । क्रियावाक्यानि सावकाशानि । सर्वस्य ब्रह्मधर्मस्य मायामयत्वात्। अतः पुनर्वैषम्यमित्यत आह– **अतश्चे**ति ।। 'अत एव' महातात्पर्यविरोधादेव ।।

**( ईश्वरधर्माः न मायामयाः )**

**भाष्यम् —ऐश्वर्यादिवाचिभगशब्देनैव सम्वोधनाच्च**

---

१. रामानुजीये-१भागे.१३७-पृ, द्रं-तद्भाष्यटीका ।

२. भागवते 'ब्रह्म' इति स्थाने 'साक्षात्' इति पठ्यते । कुम्भकोणादिपुस्तकेषु साक्षात्पदमेव पठ्यते । परंतु व्याख्यातृभिः नादृतोयं पाठः ।

३. 'ब्रह्म पूर्णं तपः मे हृदयं प्रियम् । कुतः? तपोऽभिमानी रुद्रः मम हृदयाज्जातः तदाश्रितश्चेत्येवं व्याख्येयम्। विद्या मम तनुः स्वरूपम् । विद्याभिमानिन्युमा तनोर्जाता । क्रियाभिमानी त्विन्द्रो हरेराकृतिः शृङ्गाराद्याकाराज्जातस्तदाश्रितश्च ।' इति विजयध्वजतीर्थाः।।

'ब्रह्म पूर्णं । पञ्चभिः पञ्चभिर्ब्रह्म इत्यत्र पूर्णमिति व्याख्यानात् । बृहद् ब्रह्मलमहचेति शब्दाः पर्यायवाचका इति मोक्षधर्मोक्तेश्च' इति सत्यधर्मतीर्थाः ।

'तं त्वा भग'[१] ( तै. उ.१.११) इत्यादौ । स्वरूपत्वान्न मायामयत्वं युक्तम् ।

'विज्ञानशक्तिरहमासमनन्तशक्तेः'[२] ( भाग.३.१०.२४)

'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'[३] (भाग.६.४.४८) ।

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'[४]

(श्वे.उ.६.८) इत्यादि वचनात् ।। २४ ।।

## प्रमेयदीपिका

इतश्च नेश्वरधर्माणां मायामयत्वमित्याह– ऐश्वर्यादीति ।। **सम्बोधनात्** ईश्वरस्य । अर्श आद्यजन्तोऽयं शब्द इत्येवकारेण व्यवच्छिनत्ति । नियामकाभावेनाश्रुतप्रत्ययकल्पनायोगात् । एवं सम्बोधने तत्स्वरूपत्वमेवैश्वर्यादीनां स्यात्, नत्वमायामयत्वमित्यत आह– **स्वरूपत्वा-**

---

१. 'ऐश्वर्यस्य ..इतीरणा' इति वचनात् भगशब्देन षड्गुणा उच्यन्ते । तैः पूर्णत्वात् इत्यनेन अर्श आद्यजन्ततया भगशब्दो भगवद्वाचक इत्युक्तं भवति । अर्श आद्यजन्तत्वमनङ्गीकृत्य 'ऐश्वर्यवाचि भगशब्देनैव विशेषणात् तं त्वा भग इत्यादौ' इति गीताभाष्योक्तं तु व्याख्यानान्तरमित्यविरोधः' इति तै.उ.भा.श्री.टिप्पण्याम् ।

२. (अ) 'इहाम्भसि सतो अनन्तशक्तेर्यस्य पुंसो नाभिहदाद् विज्ञाने शक्तिर्यस्य महत्तत्त्वस्य तदभिमान्यहमासम्' इति यादुपत्यम्। विजयध्वजीये एतत्पादार्थः नास्ति ।

(आ) आथर्वणोपनिषद्भाष्ये ४-२उदाहृतम् । 'अहमम्भसि लयकालीने उदके सतो विद्यमानस्य अनन्तशक्तेर्यस्य पुंसो नाभिहदाद् विज्ञानशक्तिः विज्ञानशब्दवाच्यमहत्तत्त्वप्रेरणे शक्तिर्यस्यासौ विज्ञानशक्तिरहमासम्'-मङ्गलीये ।'विशिष्टं ज्ञानं शक्तिश्च स्वरूपं यस्योति विज्ञानशक्तिर्ब्रह्मा' - इति वामनतीर्थाः ।

(आ) गीताभाष्ये (२-२४) ; (२-७१) अयमुदाहृतः।

३. 'यदासीत्तत एवाद्यः स्वयम्भूःसमभूदजः' इति पूर्णपाठः ।। 'लयमुक्त्वा सृष्टिमाह-मयीति ।। मयि मत्सम्बन्धिनावेः यत् पद्ममासीत् ततः पद्मादेव स्वयम्भूः समभूदित्यन्वयः । कोऽसौ स्वयम्भूरित्यत उक्तम्- अज इति ।। 'अजा विष्णुहरच्छागाः' इत्यतः कथं निर्णय इत्यत उक्तम्-आद्य इति । जगदादौ भूतः चतुर्मुख एवेत्यर्थः ।। कीदृशे मयि अनन्तगुणे । असङ्ख्यातज्ञानादिगुणे । गुणतो अनन्ते प्रत्येकशोप्यसङ्ख्याते । अनन्तविग्रहे असङ्ख्यातरूपे ।।' इति विजयध्वजतीर्थाः ।।

(आ) गीताभाष्ये २-२४ (२-७१ ); (९-८) अयमुदाहृतः।

४. (अ)तत्त्वोद्योते श्रुतिरियमेवं व्याख्यता- 'श्रुतीनामपि भगवद्राद्धान्ताविरोधेनैव व्याख्येयत्वाच्छ्रुतिष्वेव स्पष्टं निरवकाशतया ब्रह्मणः सगुणत्वावगमाच्च न श्रुतीनामखण्डार्थनिष्ठत्वमित्यभिप्रायेणाह- 'पराऽस्य शक्तिः- इत्यादि श्रुतिः' । एतेनाविद्याकल्पितविशेषैः सविशेषं स्वतस्त्वविशेषमिति निरस्तम् । स्वाभाविकी इति श्रवणात्' इति ।। (आ) गीताभाष्ये (२-७१ ) ; (९-८) इयं श्रुतिरुदाहृता ।

दिति ।। अनन्तत्वस्वाभाविकत्वादिवचनाच्च **न** ईश्वरशक्त्यादीनां **मायामयत्वम्** । मायामयस्यानन्तत्वाद्यनुपपत्तेरित्याह– **विज्ञानेति** ।। २४ ।।

**भावदीपः**

'अर्श आदिभ्योऽच्' इति मत्वर्थे अच् प्रत्यये 'यस्येति च' ( पा.सू. ६.४.१४८) इति लोपे च सति भगवन् इत्यर्थे भग इति रूपं कुतो न भवति? येन **भगशब्देनैवेति** एवकारेण तद्व्यवच्छेदः कृतो भाष्य इत्यत आह–**नियामकेति** ।। २४ ।।

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ।। २५ ।।**

**भाष्यम् — अत एवाव्यक्तादिरूपः ।। २५ ।।**

**प्रमेयदीपिका**

ननु भगवान् ज्ञानिभिर्दृश्यते[1] चिन्त्यते च । तत् कथमुच्यते '**अव्यक्तोऽयमचिन्त्योऽयम्**' इति? तत्राह– **अत एवेति** ।। अचिन्त्यशक्तित्वादेव । यथोक्तम् -

**'अतोऽनन्तेन तथा हि लिङ्गम्'** ( ब्र.सू.३.२.२७) इति ।। २५ ।।

**भावदीपः**

**यथोक्तमिति** ।। भक्तिपादे सूत्रकृतोक्तमित्यर्थः । **अतः** अव्यक्तत्वे प्रत्यक्षत्वे च प्रमाणसत्वात् **अनन्तेन** अपरिच्छिन्नशक्तिकेनेशेन, तत्प्रसादेनेति यावत् । प्रकाशः अव्यक्तस्यापि भवति ।

**'तस्याभिध्यानात्'** (श्वेत.उ.१.१०)

इत्युक्तेशप्रसादसाध्यबन्धनिवृत्तिरूपं **लिङ्गं** च प्रसादहेतुप्रकाशज्ञापकं हि यतो अतः अव्यक्तस्याप्यस्ति प्रकाश इति ज्ञायते' इति सूत्रार्थः ।। २५ ।।

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथाऽपि त्वं महाबाहो[2] नैवं शोचितुमर्हसि ।। २६ ।।**

---

१. 'ज्ञानिभिः भगवान् दृश्यते' इति वाक्यरीतिः क्वचित् मातृकायाम् ।

२. **'धर्मापरिपन्थिनो बाधते इति बाहुः । महांश्चासौ बाहुरस्य स तथा । तस्य सम्बोधनम्-महाबाहो'** इति (भाग.४.८.१) विजयध्वजतीर्थाः।

**भाष्यम् — अस्त्वेवमात्मनो नित्यत्वम् । तथाऽपि देहसंयोगवियोगात्मकजनि मृती स्त एवेत्यत आह– अथ चेति ।। २६ ।।**

## प्रमेयदीपिका

ननु सर्वशङ्कोद्धारेणात्मनित्यत्वं प्रतिपाद्य 'तस्मादेवम्' इत्युपसंहृतम् । तत्किम् '**अथ च**' इति पुनरुच्यते? इत्यतोऽङ्गीकृत्याऽत्मनित्यत्वं प्रकारान्तरेण शोकशङ्केयम् इत्याशयवानाह[१] - **अस्त्वेवमिति** ।। 'युद्धे च मृतिर्नियता । जनिमृतिनिमित्तं च दुःखं मदीयानां भविष्यतीति मे[२] शोकः' इति शङ्काशेषः । अनेन पूर्वार्धोऽपि व्याख्यातः । अत एव **देहसंयोगवियोगात्मक-जनिमृती** इत्युक्तम् । अन्यथा देहसंयोगवियोगावित्येव वा जनिमृती इत्येव वा ब्रूयात् । '**स्त एव**' इत्यनेन नित्यशब्दोऽवधारणार्थ इत्युक्तम् ।।

'अस्त्वेवमात्मनो नित्यत्वम्' इति वदता 'आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते'[३] इति मायावादिनोऽपव्याख्यानं[४] निरस्तं भवति । '**ध्रुवं जन्म मृतस्य**'(२.२७) इत्युत्तर-वाक्यविरोधात् । '**अव्यक्तादीनि**'(२.२८) इत्यनेनापि विरोधात् ।। २६ ।।

## भावदीपः

**पूर्वार्ध इति** ।। 'अथ चैनम्' इति पूर्वार्ध इत्यर्थः ।। **अन्यथेति** ।। जातमृतपद-व्याख्यापरत्वाभाव इत्यर्थः ।। २६ ।।

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ।। २७ ।।**

**भाष्यम् — कुतोऽशोकः? नियतत्वादित्याह– जातस्येति ।। २७ ।।**

## प्रमेयदीपिका

अनेनैवाभिप्रायेणैतदेकवाक्यतयोत्तरं श्लोकद्वयं क्रमेणावतारयति– **कुत इति** ।। शङ्कामनूद्य 'तथाऽपि त्वं[५] न शोचितुमर्हसि' इत्युक्तम् । तत्र को हेतुरित्यर्थः ।। २७ ।।

---

१. मातृकायाम् पाठान्तरम्। '-शयेनाह'-वेग्रं, गुज.श.मा-३पाठे च ।

२. 'ममैव' इति गुज, वे-ग्रं, श.मा-१।

३. शाङ्करभाष्ये प्रथमभागे-पृ-१४५।  ४.'व्याख्यानम्' इति-गुज, वे-ग्रं।

५. वे-ग्रं, गुज 'त्वम्' इति नास्ति । श-मा.२ मातृकायां वर्तते ।

**भावदीपः**

**शङ्कामनूद्येति।।** **'अथ चैनम्'** (२-२६) इति पूर्वार्धेनेति योज्यम् ।। इत्युक्तमिति।। उत्तरार्धेनोक्तमित्यर्थः ।। २७ ।।

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**व्यक्तनिधनान्येव तत्र का परिदेवना ।। २८ ।।**

**भाष्यम् —** तदेव स्पष्टयति– **अव्यक्तादीनीति** ।। २८ ।।

**प्रमेयदीपिका**

स्पष्टनं च जन्ममरणस्वरूपनिरूपणेन ।। २८ ।।

**भावदीपः**

**जन्ममरणस्वरूपनिरूपणेनेति** ।। अव्यक्तं प्रधानमादिः उत्पत्तेः पूर्वरूपं येषां तानि **अव्यक्तादीनि** । **भूतानि** जीवशरीराणि । अव्यक्ते निधनं नाशो[१](लयो)येषां तानि **अव्यक्तनिधनानी**त्येवं रूपेणेत्यर्थः ।। २८ ।।

**आश्चर्यवत् पश्यति कश्चिदेनम्**
**आश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति**
**श्रुत्वाऽप्येनं वेद न चैव कश्चित् ।। २९ ।।**
**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ।। ३० ।।**

**भाष्यम् —** देहयोगवियोगस्य नियतत्वादात्मनश्चेश्वरसरूपत्वात् सर्वथा अनाशान्न शोकः कार्य इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति–**आश्चर्यवदिति** ।। दुर्लभत्वेनेत्यर्थः । तद्धि आश्चर्यं लोके । दुर्लभोऽपीश्वरसरूपत्वात् सूक्ष्मत्वाच्चात्मनः तद्द्रष्टा ।। २९ ।। ३० ।।

---

१. 'नाशः ' इति सो.मं । 'लय ' इति कामानुकायामेव ष

## प्रमेयदीपिका

**'आश्चर्यवत्'**इति श्लोकस्यं न प्रकृतसङ्गतिर्दृश्यते । तदुत्तर[१](श्लोक)श्च पुनरुक्त इत्यत आह– **देहयोगेति** ।। द्वन्द्वैकवद्भावोऽयम् । **सर्वथेति** ।। बिम्बनाशाभावादिभिः सर्वैः प्रकारैः। इत्युपसंहर्तुम् उत्तरेण श्लोकेन। ईश्वरसरूपत्वेऽपि कथमनाश इत्याशङ्कापरिहारहेतुत्वात् **'उपसंहर्तुम्'** इत्युक्तम् । **'अप्रमेयस्य'** इत्यादिना प्रागुक्तत्वात् **'पुनर्'** इति । 'एनं यः कश्चित् पश्यति स आश्चर्यवत्' इत्याद्युक्त्वा चतुर्थपादेन तदुपपादनं क्रियते । तं व्याचष्टे– **दुर्लभत्वेनेति**।। दुर्लभत्वमाश्चर्यशब्दप्रवृत्तौ निमित्तमित्यर्थः । तत्कथम्? इत्यत आह– **तद्धीति**।।

'आश्चर्यमनित्ये' **(पा.सू.६.१.१४७)** इत्यादि स्मृतिं हिशब्देन सूचयति। सर्वेषाम् आत्मद्रष्टृत्वात् कथमात्मद्रष्टा दुर्लभोऽपि येनाश्चर्यवत्[२] इत्युच्यते? इत्यत आह– **दुर्लभोऽपीति**।। ईश्वरसरूपत्वादिनाऽत्मद्रष्टा दुर्लभ इति भावः । अनेनाश्चर्य एवाश्चर्यवत् (इत्युच्यते)[३] इत्युक्तं भवति । यत्प्रतिबिम्बस्य जीवस्य द्रष्टाऽपि दुर्लभः किं तत्सामर्थ्यं वर्णनीयम्? इतीश्वरसामर्थ्यप्रदर्शनम् ।। २९ ।।

**'देहयोगवियोगस्य'** इत्यादिना **'देही नित्यम्'** इति [४](उत्तर)श्लोको(अपि) व्याख्यातः ।। ३० ।।

## भावदीपः

**तदुत्तरः** चतुर्थः पादः ।। ननु 'सर्वथा नाशाभावान्न शोकः कार्यः' इत्युपसंहारे ईश्वर-[५]सरूपत्वाख्यप्रतिबिम्बत्वमात्रमेव वाच्यम् । ईश्वरसामर्थ्योक्तेः क्वोपयोगः? इत्यतः शङ्का-निवर्तकत्वेनोपयोगमाह– **ईश्वरसरूपत्वेऽपीति** ।। इति शङ्कापरिहारहेतुत्वादीश्वर-सामर्थ्योक्तेरिति योज्यम् ।। **आश्चर्यमनित्य इत्यादि स्मृतिमिति** ।। पूर्वमदृष्टत्वेनोत्तरत्र भावित्वेन हेतुना अनित्यशब्दलक्षिते अद्भुतेऽर्थे[६] आश्चर्यशब्दो निपात्यत इति षष्ठाद्य-पादीयपाणिनिसूत्रार्थः ।।

---

१. 'श्लोकः' इति मातृकासु न पठ्यते । मुद्रितपुस्तकेष्वेव ।

२. **'येनाश्चर्यमुच्यते'** इति वे-ग्रं,गुजपाठः। **'आश्चर्यवत्' इत्युच्यते'** इति मातृकासु ।

३. कंसान्तर्गतभागः मातृकासु नोपलभ्यते ।

४. **कंसान्तर्गतः गुज पुस्तके एव** । नान्यत्र मुद्रितेषु, मातृकासु च।

५. 'स्वरूपाख्य' इति सो मातृकापाठः ।

६. इतः परं पङ्क्तित्रयं सोमातृकायां नास्ति । 'आश्चर्य एव' इत्युत्तरवाक्यारम्भः ।

आङ्पूर्वाच्चरेः यत्प्रत्ययः, सुडागमश्चेत्युक्तं वृत्तौ[1] ।। **अनेनेति** ।। **'श्रुत्वाऽप्येनम्'** इत्युपपादनेनेत्यर्थः । एनं जीवम् ईश्वरसरूपत्वादिना यः पश्यति वदति शृणोति स आश्चर्यवद् आश्चर्य एव दुर्लभ इत्यर्थ इत्युक्तं भवति । कथमनेनेश्वरसामर्थ्यं दर्शितम्? इत्यत आह– **यत्प्रतिबिम्बस्येति** ।। 'द्रष्टाऽपि' इत्युपलक्षणम् । वक्ता श्रोत्रा चेत्यपि ग्राह्यम्[2]।। २९ ।। ३० ।।

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ।। ३१ ।।**
**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ।। ३२ ।।**
**अथ चेत् [3]त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ।। ३३ ।।**
**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ।। ३४ ।।**
**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ।। ३५ ।।**
**अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ।। ३६ ।।**
**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**[4]

---

१. 'अनित्यतया विषयीभूतया अद्भुतत्वमिह लक्ष्यते, तस्मिन्नाश्चर्यं निपात्यते । 'चरेराङि चागुरौ' इति यत्प्रत्यये कृत् निपातनात् सुट् ।आश्चर्यं यदि स भुञ्जीत' इति वृत्तिकारवचनम् ।

२. **'ध्येयम्'**- भा.र.को.उ-पां । सो-मातृकायां च।

३. 'चेत्त्वं धर्म्यमिमम्' इति ब्रह्मानन्दीपाठः ।

४ अत्र स्वर्गशब्दार्थः वीरस्वर्गः। तथाहि रामायणयुद्धकाण्डव्याख्याने सत्यधर्मीये-'ब्रह्मलोकं वीरस्वर्ग-संज्ञम्।एतेन 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति गीता चैतदुक्तार्थमेवार्थं वदतीति सूचितम्' इति।।

**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

**प्रमेयदीपिका**

**'स्वधर्मम्'** इत्यादयः श्लोका अतिरोहितार्थत्वान्न व्याख्याताः । एवमुत्तरत्रापि ॥

**भावदीपः**

एवमुत्तरत्रापीति ॥ स्पष्टार्था न व्याख्यायन्त इत्यर्थः ॥ ३१-३८ ॥ छ ॥

( साङ्ख्य-योगशब्दार्थः )

**एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥**

भाष्यम् — साङ्ख्यं ज्ञानम् ।

'शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयते'

इति भगवद्वचनाद् व्यासस्मृतौ ।

योगः उपायः[१]।

'दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये'[२] (भाग.४.१८.३)

इति प्रयोगात् भागवते ।

नेतरौ साङ्ख्ययोगावुपादेयत्वेन विवक्षितौ कुत्रचित् सामस्त्येन ।

**प्रमेयदीपिका**

पूर्वप्रकरणोपसंहारपूर्वकं तत्सङ्गतत्वेनोत्तरप्रकरणारम्भप्रतिज्ञार्थं **'एषा तेऽभिहिता'**

१. 'ज्ञानं तु योग उद्दिष्टं युज्यतेनेन यत् सुखम् ।
कचिद् योग उपायः स्यात् कचिच्चित्तनिरोधनम्' इति दत्तात्रेययोगे (भा.ता.नि.उ.वचनम्)।

२. 'लोके कृष्यादिसिद्धये वीजायार्जनोपायाः, अमुष्मिन् स्वर्गादौ यागादियोगाः तत्वदर्शिभिर्मुनिभिः दृष्टाः,प्रयुक्ताश्चेत्यन्वयः' इति विजयध्वजतीर्थाः ॥

इत्युक्तम् । तत्र साङ्ख्ययोगशब्दौ कापिलपातञ्जलवचनाविति प्रतीतिनिरासाय व्याचष्टे - **साङ्ख्यमिति** ।। प्रतीतार्थावेव 'किं न स्याताम्? इत्यत आह– **नेतराविति** ।। **'इतरौ'** शास्त्रलक्षणौ । **'कुत्रचित्'** आगमे । एतौ तूपादेयौ । **'बुद्ध्या युक्तः'** (२.३९) इत्यादि वचनात्। 'अतो न तावत्र विवक्षितौ' इति वाक्यशेषः । प्रकृतिपुरुषविवेकादेः तदुक्तस्योपादेयत्वात् कथमेतत्? इत्यत उक्तम्– **सामस्त्येनेति** ।। एकदेशस्योपादेयतया तदुपादेयत्वे सौगतादेरपि तत्प्रसङ्ग इति भावः ।।

### भावदीपः

साङ्ख्यशब्दितजीवतत्त्वोक्तिः- एतौ त्विति[२] ।। ज्ञानोपायशब्दितौ साङ्ख्ययोगौ 'बुद्ध्या युक्तो यया' इति वाक्यशेषे कर्मबन्धहानिहेतुत्वोक्तेरुपादेयावित्यर्थः ।।

**भाष्यम् — 'कर्मयोगः' इत्यादि प्रयोगाच्च । निन्दितत्वाच्चेतरयोर्मोक्षधर्मेषु भिन्नमतत्त्वमुक्त्वा पञ्चरात्रस्तुत्या । वेदानां त्वेकार्थत्वान्न विरोधः । पार्थक्यं तु साङ्ख्याद्यपेक्षया युक्तम् ।। ३९ ।।**

### प्रमेयदीपिका

इतोऽपि न योगः पातञ्जलशास्त्रमित्याह– **कर्मेति** ।। अस्मिन्नेव योगे **'कर्मयोगो विशिष्यते'**इत्यादिप्रयोगाच्च । न हि शास्त्रे कर्मयोगशब्दोऽस्तीति । न केवलमुपादेयत्वाभावात् **नेतरौ** इह **विवक्षितौ** । किन्तु? इत्यत आह– **निन्दितत्वाच्चेति** ।। कथं निन्दितत्वम्? इत्यत आह– **भिन्नेति** ।।

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा...'[३]

---

१. 'कुतो न स्यात् ' इति गुज,वे-ग्रं.।

२. सो मातृकायाम् 'एताविति'इति प्रतीकग्रहणम्। तुर्नास्ति।

३. (अ)इमानि वाक्यानि उत्पत्त्यधिकरणचन्द्रिकायामपि पञ्चरात्रप्रामाण्यसमर्थनार्थमुदाहृतानि ।
(आ) इमानि वाक्यान्यनुव्याख्याने उदाहृतानि । सुधायां व्याख्यातानि च (२.२.१२.४५) (उत्तरादिमठप्रकाशनम्-पृ-४०८२) । तथाहि-'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नान्युताहो नेति चोच्यताम्' इति ज्ञानकरणत्वात् ज्ञानशब्दवाच्यानि साङ्ख्यादीनि शास्त्राणि

इति साङ्ख्यादीनां [1]भिन्नमतत्वमुक्त्वा,

**पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।**

**ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते ।।'**

इति पञ्चरात्रस्तुत्या विरुद्धानाम् एकस्तुतिः परनिन्दां गमयतीति प्रसिद्धमेवेति भावः। एवं तर्हि वेदारण्यकस्यापि निन्दा स्यादित्यत आह– **वेदानां त्विति** ।। **एकार्थत्वात्** पञ्चरात्रेण । **'ज्ञानान्येतानि भिन्नानि'** इति पार्थक्योक्तेः कथमेकार्थत्वम्? इत्यत आह– **पार्थक्यं त्विति** ।। **'युक्तम्'** इत्यनेन तेषामेव प्रकृतत्वादित्यभिप्रैति । तथाच आद्यवाक्ये वेदारण्यकपदेन पञ्चरात्रमुत्तरवाक्ये च पञ्चरात्रपदेन वेदारण्यकमुपलक्ष्यत इति भावः ।। वेदपञ्चरात्रयोरेकार्थत्वं कुतः? इति चेत् । उदाहृतमोक्षधर्मवाक्यार्थान्यथानुपपत्त्या (इति)[2] तावत् ।।

**भावदीपः**

**ज्ञानान्येतानि** इति करणे ल्युट् । ज्ञानसाधनानीत्यर्थः ।। **ज्ञानेषु** ज्ञानसाधनेषु ।। **एतत्** पञ्चरात्रमित्यर्थः ।। **आद्यवाक्ये 'वेदारण्यकमेव च'** इति वाक्ये ।। **उत्तरेति ।। 'पञ्चरात्रस्य'** इति वाक्ये ।। **वाक्यार्थान्यथानुपपत्त्येति** ।।**'साङ्ख्यं योगः'** इति वाक्ये अनिर्दिष्टपञ्चरात्रस्य **'ज्ञानेष्वेतेषु एतद्विशिष्यते'** इत्याधिक्यकथनं साङ्ख्यादित्रयेणैकार्थ्येन वा वेदारण्यकेनैकार्थ्येन वा निर्वाह्यम् । अन्यथाऽसङ्गतेः । तत्राद्ये साङ्ख्यादेर्वेदादाधिक्यमुक्तं स्यात् । नच तद्युक्तम् । वेदविरोधेनालब्धप्रामाण्यस्य तस्य वेदादाधिक्यासिद्धेः । वेदारण्यकैकार्थ्यपक्षे तु तदाधिक्यकथनं सङ्गतमिति पञ्चरात्राधिक्यरूपवाक्यार्थान्यथानुपपत्त्येत्यर्थः ।।

**( साङ्ख्ययोगशब्दौ ज्ञानोपायवाचिनौ )**

**भाष्यम् — तत्रैव चित्रशिखण्डिशास्त्रे पञ्चरात्रमूले वेदैक्योक्तेश्च ।। एवमेव सर्वत्र**

अन्योन्यविरुद्धान्युताविरुद्धानीति प्रश्नस्य 'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा' इति परिहारो अभिहितः ।। ततः पुनर्वस्तुविकल्पानुपपत्तेः परस्परविरुद्धानां सर्वेषां प्रामाण्यायोगादेतेषु किं प्रमाणमिति जिज्ञासायां, 'साङ्ख्यस्य वक्ता कपिलः' इत्यादिना साङ्ख्यादीनामनाप्तकर्तृकत्वमभिधाय प्राग् वेदारण्यकपदोपलक्षितस्य पञ्चरात्रस्य परमाप्ततमेन नारायणेन प्रणीतत्वात्प्रामाण्यमित्यनेनोच्यते ।।....' इति ।।

१. 'विरुद्धमतत्वम्' इति मातृकायां क्वचित् पाठान्तरम् ।

२. अत्र मातृकाद्वये इतिशब्दः अधिकः पठ्यते ।

**साङ्ख्ययोगशब्द उपायवाचको वर्णनीयः ।। युक्तेश्च । ज्ञानं हि जैवम् उक्तम् । उपायश्च वक्ष्यते । बुद्ध्यतेऽनयेति बुद्धिः । साङ्ख्यविषयो यया वाचा बुद्ध्यते सा वागभिहितेत्यर्थः ।।**

**प्रमेयदीपिका**

अपरं च प्रमाणमाह– **तत्रैवेति** ।। मोक्षधर्म एव ।

**'ये हि ते यतयः ख्याताः [१]सप्त चित्रशिखण्डिनः ।**
**तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ।**
**वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।।'** (म.भा.शान्ति.३३५-२७,२८)

इत्यादिना चित्रशिखण्डिशास्त्रस्य वेदैक्योक्तेश्च । असङ्गतमेतदित्यत आह– **पञ्च-रात्रेति**।। पञ्चरात्रमूलकस्येत्यर्थः । एतच्च वैखानससंहितोपक्रम एव प्रसिद्धम् ।।

एतद्व्याख्यानं **'ज्ञानयोगेन साङ्ख्यानाम्'**(३.३),

**'साङ्ख्ययोगौ पृथग्बालाः'**(५.४)

इत्यादावप्यतिदिशति – **एवमेवेति** ।। **शब्द** इति जात्यभिप्रायक[२]मेकवचनम् ।

इतोऽप्यत्र साङ्ख्ययोगशब्दौ ज्ञानोपायवाचिनावित्याह– **युक्तेश्चेति**।। तामेव युक्तिं दर्शयति– **ज्ञानं हीति** ।। अत्रोक्तवक्ष्यमाणयोरर्थयोः साङ्ख्ययोगशब्दौ प्रयुक्तौ । उक्तवक्ष्यमाणार्थौ च ज्ञानोपायावेवेति तदर्थावेतौ युक्ताविति– **जैवं ज्ञानमिति** ।। जीवस्य तत्त्वमित्यर्थः । यद्यपीश्वरतत्वं चोक्तम् । तथाऽपि तादर्थ्येनेत्यदोषः ।।

ननु बुद्धिर्ज्ञानं तदुत्पाद्यत एव । न त्वभिहितम् । नापि श्राव्यते । तत्कथमुच्यते 'साङ्ख्ये बुद्धिरभिहिता, योगे त्विमां शृणु' इति । तत्राह– **बुद्ध्यत** इति।। 'वाक्' इति शेषः । ननु साङ्ख्यं न वाचोऽधिकरणम् । तत् कथं सप्तमी? किमर्थं च प्रसिद्ध-वाक्च्छब्दपरित्यागेनाप्रसिद्धबुद्धिशब्दोपादनमित्यत आह– **साङ्ख्येति**।। साङ्ख्यं चासौ विषयश्च। अनेन विषयसप्तमीयमित्याह । नाविशदं वाङ्मात्रमुक्तम् । किन्तु तव बोधो यथोत्पद्यते तथेत्यप्रसिद्धपदोपादाने प्रयोजनमित्युक्तं भवति ।। ३९ ।।

१. **'सत्यचित्र'** इति वे-ग्रं,गुज,पाठे।
२. मातृकासु कप्रत्ययः पठ्यते । न मुद्रितेषु ।

**भावदीपः**

सप्तम्यन्तं षष्ठ्यर्थतया व्याचष्टे– **चित्रशिखण्डिशास्त्रस्येति**।। [1](इति **श्लोक** इति विभागः।।) **तादर्थ्येनेति** ।। जीवनित्यत्वनिर्वाहकप्रतिबिम्बत्वसिद्ध्यर्थत्वेनेत्यर्थः।।३९ ।।

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ।। ४० ।।**
**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ।। ४१ ।।**

**भाष्यम् — 'योगे इमां बुद्धिं शृणु'** इत्युक्तम् । **बह्व्यो हि बुद्धयः, मतभेदात्।** तत् **कथमेकत्र** निष्ठां **करोमि**? इत्यत आह– **व्यवसायात्मिकेति** ।। सम्यग्युक्तिनिर्णीतानां मतानामैक्यमेवेत्यर्थः ।। ४१ ।।

**प्रमेयदीपिका**

ननु '**व्यवसायात्मिका**' इति श्लोके न प्रतिज्ञातो योग उच्यते[2] । नापि '**बुद्ध्या युक्तः**' (२.३९) इत्यादिवत्तत्प्रशंसा । तत् किमर्थोऽयम्? इत्यत आह– **योग** इति ।। ज्ञानोपायविषयाम् **इमां** वक्ष्यमाणां वाचं **शृणु** श्रुत्वा तत्र निष्ठां कुरु इत्युक्तमित्यर्थः। श्रवणमात्रस्य विधिना विनाऽपि सम्भवात् ।।

**बह्व्यो हि बुद्धयः** ज्ञानोपायविषया वाचः परस्परविरुद्धाः सन्ति । कथम्? **मतभेदात्** । एकं मतमवलम्बमानाः किञ्चिज्ज्ञानसाधनमाचक्षते । अपरं मतमाश्रिताः तत्प्रतिषेधेनान्यदाहुः । तत्र चेदमेव तत्वं नेदमिति विनिगमकं नास्ति । तत् तस्मात् **कथमेकत्र** त्वदीयायामेव वाचि **निष्ठां** विश्वासं **करोमि** ।।

ननु सर्वाण्यपि मतानि व्यवसायात्मकान्येव । स्वे[3] स्वेऽर्थे सर्वेषां सन्देहाभावात्। अतः

---

१. मातृकात्रयेपि इदं वाक्यमत्रैव पठ्यते । परमुत्तरश्लोकसम्बन्ध्ययम् ।। कथं वा लेखकप्रमादः स्यादिति न स्पष्टम् ।।

२. 'श्लोकेन प्रतिज्ञातो योगो नोच्यते' इति मातृकायां क्वचित् पठ्यते । भावदीपासम्मतपाठोऽयम् ।

३. 'स्वे स्व इति ।'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पात् ङेः स्मिन्नभावः'- **वि.त.नि.व्या.टि ।**

कथमुच्यते 'व्यवसायात्मिका एका[१]ऽव्यवसायिनां बुद्धयः'? इति । तत्राह– **सम्यगिति** ।। **'युक्तिः'** इति प्रमाणसामान्यमुच्यते । [२]प्रमाणत्वेन निर्णीतत्वमेवात्र व्यवसायशब्दार्थो न निश्चयमात्रमित्यर्थः । प्रामाणिकमेव [३]हि मतं ग्राह्यम् । तत्रच न काचिद्[४] विप्रतिपत्तिः । यतः तवैकत्र **निष्ठा**भावः,अप्रामाणिकेषु विद्यमानाऽपि विप्रतिपत्तिः किं करिष्यति? इति भावः।।

### भावदीपः

**इति श्लोक** इति विभागः ।। गीतायां भाष्ये च 'शृणु' इत्येवोक्तावपि तत्तात्पर्यार्थमाह–**श्रुत्वा तत्र निष्ठां कुर्वित्युक्तमिति** ।। [५]एवमर्थोक्तौ हेतुमाह –**श्रवणमात्रस्येति** ।। निष्ठाहीनश्रवणस्य **शृणु**, **श्रवणं कुरु** इति विधिं प्रेरणां विनाऽपि सम्भवात् 'शृणु' इति विधिबलादेवमर्थो ज्ञायत इति भावः ।। **'बुद्धयः'** इत्यादिरनुवादः **'ज्ञान'** इत्यादिर्व्याख्या ।। ४१ ।।

(यामिमाम् इत्यादि श्लोकत्रयाभिप्रायः)

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ।। ४२ ।।**[६]

**भाष्यम् — स्युरवैदिकानि मतान्यव्यवसायात्मकानि । नतु वैदिकानि । तेऽपि हि केचित् कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह– यामिमामिति** ।। यामाहुस्तये-त्यन्वयः । **मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां वाचं प्रवदन्ति** ।।

### प्रमेयदीपिका

**'यामिमाम्'** इति श्लोकत्रयस्य प्रकृतोपयोगादर्शनात् सङ्गतिमाह– **स्युरिति** ।। **न तु वैदिकानि अव्यवसायात्मकानि** । ततः किं प्रकृते? इत्यत उक्तम्– **तेऽपीति** ।। व्यवसायात्मकं मतं वैदिकमवलम्बमाना अपि केचिद् वैदिकान्यपि सर्वाण्येव कर्माणि स्वर्गादिफला-

---

१. 'एका' इति एकस्यां मातृकायां न पठ्यते ।
२. 'प्रमाणेन निर्णीतत्वम्' इति कचित् मातृकायाम् ।
३. मातृकाद्वये हिः पठ्यते । बे,वे-ग्रं,गुज नास्ति ।
४. 'कदाचित्'-बे, श.मा-३ ।
५.इदं वाक्यं का-नास्ति ।
६.**'पुष्पं स्वर्गादयः प्रोक्ताः फलं मोक्ष** उदाहृतम्'अधिकविचारः द्रं भा.ता.४.२.२६;११.२१.२६,;२९ ।

न्याहुः । भवांस्तु 'काम्यार्थान्येव (कर्माणि) स्वर्गादिफलकानि । निष्कामानीश्वरार्पणबुद्ध्या अनुष्ठितानि तु ज्ञानार्थानीत्यभिप्रैति । तथाच त्वद्वचने निष्ठाऽनुपपत्तिस्तदवस्थेति भावः। आह । 'तेषां वैदिकाभासताप्रदर्शनाय निन्दाम्' इति शेषः ।।

भोगैश्वर्यगतेरपि [2]प्रकृतत्वात् 'तया' इति तत्परामर्शभ्रान्तिं वारयति– **यामिति** ।। अन्यथा यच्छब्दः साकाङ्क्षोऽनन्वितः स्यादिति भावः ।।

वाचः पुष्पितत्वं कथम्? इत्यत आह– **मोक्षेति** ।। अत्यल्पत्वेनोपमा ।।

**भावदीपः**

**इत्यभिप्रैतीति** ।। **'बुद्ध्या युक्तो यया'**(२-३९) इत्यर्धे कर्मयोगस्य ज्ञानद्वारा कर्मबन्धहानिरूपमोक्षहेतुत्वोक्तेरिति भावः । स्वर्गादेः पुष्पत्वोक्तिं घटयति– **अत्यल्पत्वेनेति** ।। फलापेक्षया पुष्पस्यात्यल्पत्वादिति भावः ।।

**भाष्यम् — वेदवादरताः कर्मादिवाचकवेदवादरताः । वेदैर्यन्मुखत उच्यते तत्रैव रताः । नान्यदस्तीति वादिनः ।।**

**'परोक्षविषया वेदाः'**
**'परोक्षप्रिया इव हि देवाः'** (बृ.उ.६.२.२)[3] ।
**'मां विधत्तेऽभिधत्ते माम्'** (भाग.११.२१.४३)

**इत्यादिभिः पारोक्ष्येण प्रायो भगवन्तं वदन्ति ।। ४२ ।।**

**प्रमेयदीपिका**

**'वेदवादरताः'** इत्येतत् कथं निन्दावचनम्? इत्यत आह– **वेदेति** ।। कथमेतदस्मात् पदाल्लभ्यते? कथं चैषाऽपि निन्दा? इत्यत आह– **वेदैरिति** ।। वादशब्दोऽत्राऽपाततः प्रतिपादने वर्तते । वक्ष्यते चात्राभिधानम् । आपाततः प्रतिपाद्यं च कर्मादि । सावधारणं चैतत्।

---

१. 'काम्यान्येव स्वर्गादिफलकानि' इति गुज, वे-ग्रं, मातृकाद्वये च । 'कर्माणि' इति क्वचिदेव ।

२. 'भोगैश्वर्यगतेरपि स्त्रीलिङ्गेन प्रकृतत्वात्' इति पद्मनाभतीर्थाः।

३. (अ) शत.ब्रा.१४.५.६-२.। ऐत.३.१४।

(आ)' हि यस्मात् देवाः परोक्षप्रियाः अप्रसिद्धनाम्नैव भगवदुपदेशप्रियाः' इति रा.खण्डार्थे ।

[1]अब्भक्षो वायुभक्ष इति यथेत्यर्थः । सावधारणत्वं कुतः? इति चेत्, उत्तरपदबलादिति तानि पठति- **नान्यदिति** ।। आपाततः प्रतीतार्थादन्यस्य सद्भावे भवेदेषा निन्दा । कोऽसौ कुतश्च? इत्यत आह– **परोक्षेति** ।। कचित् प्रकटवचनात् 'इव' इत्युक्तम् । अत एव '**प्रायः**' इत्याह । **देवाः** वेदाभिमानिनः । तत्प्रकारसूचनार्थं '**मां विधत्ते**' इत्याद्युदाहृतम्[2]। **वदन्ति** वेदाः ।।४२।।

## भावदीपः

**वक्ष्यत इति** ।। 'वादो विषयकत्वं च' इत्यादिना समीप एव वक्ष्यत इत्यर्थः।। **सावधारणं चेति** ।। वेदवाद एव रता इत्येवमर्थ इत्यर्थः ।। **तत्प्रकारेति** ।। वेदानां परोक्षार्थोक्तिप्रकारसूचनार्थमित्यर्थः । '**मां विधत्ते**' इत्यस्यार्थस्तु समन्वयसूत्रटीकायां व्यक्तः[3] । '**वदन्ति**' इत्यनूद्य शेषमाह– वदन्ति वेदा इति ।। ४२ ।।

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ।। ४३ ।।**

**भाष्यम् — भोगैश्वर्यगतिं प्रति** तत्प्राप्तिं प्रति । तत्प्राप्तिफला एव वेदा इति वदन्तीत्यर्थः ।। ४३ ।।

## प्रमेयदीपिका

गतिशब्दस्यावगतिरप्यर्थः प्रतीयते[4]। अत आह– **भोगेति**।। अन्यथाऽसदनुवादप्रसङ्गादिति भावः । एषाऽपि कथं निन्दा? इत्यत आह– **तत्प्राप्तीति** ।। मोक्षं वेदफलं न मन्यन्त इत्यर्थः।।

---

१. (अ)यथा भागवते ९.६.८२ अम्बरीशकथायां 'राजाब्भक्षो बभूव ह' इति प्रयोगः ।
(आ)'अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः' इति म.भा.१२.३६३.२ प्रयोगः ।

२. 'मुख्यप्राणोपि मत्प्रसादादेव वेदार्थं जानाति मुख्यतः सर्ववेदार्थतत्वमहमेव जानामीत्याशयवानाह-' .......' इत्यादि विजयध्वजीये। अत्र विशेषः भा.तात्पर्ये ११.२१.४३ द्रष्टव्यः ।

३. (अ)'ननु कर्मविधानादिरूपत्वाच्छास्त्रस्य कथं ब्रह्मपरता इत्यादिशङ्कां भगवद्वाक्येन परिहरति– मामिति । कर्मविधात्री श्रुतिः मां प्रत्येव तद्विधत्ते । इन्द्राद्यभिधात्री च मामभिदत्ते ।'चत्वारि वाक्' इत्यादिश्रुत्याऽहं विविधरूपत्वेन कल्प्यः । न सुरां पिबेत् इत्यादि श्रुत्याऽहमेवापोह्यः । एवम्भूताया अस्याः श्रुतेरित्यभिप्रायमहमेव वेद । न मत्तोऽन्यः इत्यर्थः' इति समन्वयसूत्रे तत्त्वप्रकाशिका । १.१.४

४. शाङ्करभाष्ये-प्रथमभागे-पृ-१७८।

**भावदीपः**

अन्यथेति ।। ज्ञानार्थत्व इत्यर्थः । तैस्तथाऽनुक्तेरिति भावः ।। ४३ ।।

**भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ।। ४४ ।।**

**भाष्यम्** — तेषां सम्यग्युक्तिनिर्णयात्मिका **बुद्धिः समाधौ** समाध्यर्थे **न विधीयते** । सम्यङ्निर्णीतार्थानां हीश्वरे मनस्समाधानं सम्यग्भवति । तद्धि मोक्षसाधनम् । उक्तं चैतदन्यत्र ।।

'न तस्य तत्त्वग्रहणाय साक्षाद्
वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमेधसौख्यं
न तस्य हेयानुमितं स्वयं स्यात्'[१] (भाग.५.११.३) इति ।।४४।।

**प्रमेयदीपिका**

'**तयाऽपहृत**' इत्यादेरप्रतीतिनिरासायार्थमाह– तेषामिति ।। तेषां **बुद्धिः** मनोवृत्तिः **व्यवसायात्मिका** सम्यग्युक्तिनिर्णयात्मिका न भवति । तत एव **ईश्वरे सम्यक्** समाधानार्थं **न विधीयते** इत्यर्थः। सम्यग्युक्तिनिर्णयात्मकत्वाभावे कुतः समाध्यभावः? इत्यत आह– सम्यगिति ।। अनेन समाधिशब्दार्थोऽपि विवृतो भवति ।।

किमीश्वरे मनस्समाधानेन? येन तदभावो निन्दा स्यादित्यत आह– तद्धीति ।। मोक्षाभावश्च

---

१. (अ)'नन्वपौरुषेयवेदवाचां सर्वान् प्रत्यविशिष्टत्वेन केषाञ्चित् शुद्धतत्वप्रकाशकत्वं केषाञ्चिन्नेत्यत्र किं कारणमित्यत आह- न तस्येति । वरीयसीरपि वरीयस्योपि । अपौरुषेयतया निर्दोषतया साक्षात् परब्रह्मप्रतिपादकतया प्रशस्ता अपीति यावत् । वाचो वेदवाचः तस्य जडमतेः साक्षात् तत्वग्रहणाय परमपुरुषार्थप्रदब्रह्मज्ञानाय न समासन् न सम्यगभवन् । तस्येत्युक्तं विविच्याह - स्वप्ने निरुक्त्येति । यस्य पुरुषस्य गृहमेधिसौख्यं गृहसम्बन्धियज्ञादिकर्मजन्य-सुखं स्वप्ने निरुक्त्या स्वप्नप्रतीतवनितायर्थदृष्टान्तेन स्वयमेव स्वबुद्ध्यैव हेयानुमितं 'जाग्रत्कालीनं गृहमेधिसौख्यं हेयम् आशुतरविनाशित्वात् स्वप्नप्रतीतार्थवत्' इति हेयत्वेनानुमितं न स्यादित्यर्थः। अनेन विषयराग एव वेदोक्ततत्वज्ञानानुदये कारणमित्युक्तं भवति' इति विजयध्वजतीर्थाः।। (आ)एतच्छ्लोकपाठान्तराणि ३.४ श्लोके द्रं।

महानिन्देति वक्ष्यति ।।

**'सम्यङ् निर्णीतार्थानाम्'** इत्युक्तं केवलमानुभाविकम् । किन्तु पुराणेऽप्युक्तमित्याह– **उक्तं चेति** ।। **वरीयसीः** वरीयस्यः । **'सुपां सुलुक्'** **(पा.सू.७.१.३९)** इत्यादिना जसः पूर्वसवर्णः। **वाचः** वेदवाचः । **स्वप्ने निरुक्त्या** स्वप्नप्रतीतार्थदृष्टान्तेन । **हेयानुमितं** हेयत्वेनानुमितम् । इदमेव हि सम्यङ्निर्णीतार्थत्वं यद् हेयोपादेयविवेकेन हेयहानम् उपादेयोपादानं च । **'तद्धि मोक्षसाधनम्'** इत्येतत्तु श्रुत्यादिप्रसिद्धमेव ।। ४४ ।।

### भावदीपः

**वक्ष्यतीति** ।। मोक्षस्य सर्वातिशयित[1]सुखरूपत्वोक्त्या **'मग्नस्य हि परेऽज्ञाने'** इत्याद्युक्त्या **'अशान्तस्य कुतः सुखम्'** इत्यनेनेति भावः । सम्यङ्निर्णीतार्थानां **'हि'** इत्याद्यर्थे प्रमाणोक्तिरिव **'तद्धि मोक्षसाधनम्'** इत्युक्तेऽर्थे कुतो न प्रमाणोक्तिः? इत्यत आह– **तद्धि मोक्षेत्यादि** ।। ईश्वरे मनस्ससमाधानं तच्छब्दार्थः ।

**'तस्याभिध्यानाद्योजनात्'** **(श्वेत.उ.१.१०)**

इत्यादि श्रुतिस्मृतिप्रसिद्धमेव । अतो न तत्र प्रमाणोक्तिरिति भावः।।४४ ।।

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**

**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ।। ४५ ।।**

**भाष्यम् — तां योगबुद्धिमाह – 'त्रैगुण्यविषयाः'** इत्यादिना । इतरदपोद्य ।।

### प्रमेयदीपिका

'यथैषा चतुश्लोकी न प्रतिज्ञातं योगमाह तथा **'त्रैगुण्य'** इत्येतदपि' इति प्रतीतिनिरासायाह– **तामिति** ।। प्रतिज्ञाताम् । **आदिग्रहणे**नाषष्ठसमाप्तेरिति सूचयति । सप्तमोपक्रमे पुनः प्रतिज्ञानात् । तर्हि प्रतिज्ञानन्तरमेव कुतो नावोचत्? इति मन्दाशङ्का-निरासायोक्तम्– **इतरदिति** ।। स्वोक्तौ निष्ठाऽभावे कारणमेवमपोद्येदानीं प्रतिज्ञात**माह** । अन्यथा तत्प्रतिबन्धेनास्यावसराभावा[2]दिति भावः । अथवा– वक्ष्यमाणानां वाक्यानां द्वेधा वृत्तिमनेनाचष्टे । 'कैश्चिद्वाक्यैः **इतरत्** योगविरुद्धम् **अपोद्य** कैश्चिद् योगमाह' इति ।।

---

१. 'वस्तुस्वरूपोक्त्या' इति ख कोशे ।

२. 'अस्यानवसरात्' इति मातृकायां पठ्यते ।

यद्वा– **'बहूनि मे व्यतीतानि'**(४.५) इत्यादि प्रासङ्गिकं विहायान्यद्योगविषयं ज्ञातव्यमित्यर्थः । तथाच वक्ष्यति **'साधनं प्राधान्येनोक्तम्'**(७.१) इति ।।

**भावदीपः**

**चतुःश्लोकीति** ।। भाष्यकृद्व्याख्यात **'व्यवसायात्मिका'** इत्यादि चतुःश्लोकीत्यर्थः । अन्यथा **'नेह'** इत्यारभ्य पञ्चश्लोकीति वाक्यं[१] स्यात् ।। **इति मन्दाशङ्केति**।। **'योगे त्विमां शृणु'**(२.३९)इति प्रतिज्ञातनिवृत्तकर्माख्यज्ञानोपाये निष्ठाजननाय **'नेह'** इति श्लोकेन तत्प्रशंसाकरणस्य[२] च **'व्यवसाया'** इत्यादि श्लोकचतुष्टयेन मतान्तरनिन्दाकारणस्य निष्ठाहेतोः पूर्वभावित्वावश्यम्भावस्य स्फुटत्वात् **न मन्दाशङ्का** इत्युक्तम् ।। तदेवाह–**स्वोक्ताविति** ।। **'योगे त्विमां शृणु'** (२.३९) इति स्वोक्तावित्यर्थः ।। एवं **'व्यवसाय'** इत्यादिश्लोकोक्त-प्रकारेणेत्यर्थः।। **योगविरुद्धमिति** ।। निवृत्तकर्माख्यज्ञानोपायविरुद्धमित्यर्थः ।। **वक्ष्यतीति** ।। 'सप्तमाध्याये' इति योज्यम् ।। **'प्राधान्येन'** इत्युक्त्या अन्यस्याप्यप्रधान[३]स्योक्तेः सूचनादिति भावः।।

( वेदानां प्रातीतिकार्थे भ्रान्तिर्न कार्या )

**भाष्यम् — वेदानां परोक्षार्थत्वात् त्रिगुणसम्बन्धि स्वर्गादि प्रतीतितोऽर्थ इव भाति । 'परोक्षवादी वेदोऽयम्' इति ह्युक्तम् । अतः प्रातीतिकेऽर्थे भ्रान्तिं मा कुर्वित्यर्थः ।**

**प्रमेयदीपिका**

'वेदाः त्रैगुण्यविषयाः, त्वं तु निस्त्रैगुण्यो भव' इत्यनेन वेदपरित्यागो विधीयत इत्यन्यथाप्रतीति[४]निरासाय व्याचष्टे– **वेदानामिति** ।। **'त्रिगुणसम्बन्धि'** इत्यनेन तस्येदम् इत्यर्थे तद्धितोऽयं (ष्यञ्)। 'विचित्रा हि तद्धितगतिः' इति वचनादिति सूचयति । **'सम्बन्धि'** कार्यम् । **प्रतीततः** आपातप्रतीतितः । **अर्थः** प्रतिपाद्यं, प्रयोजनं च । वेदानां परोक्षार्थत्वं

---

१. 'वाच्यं स्यात्' इति सो मातृकायां पाठः ।
२. 'तत्प्रसादकरणस्य' इति सो मातृकायां पाठः ।
३. 'अप्राधान्यस्योक्तेः' इति सो मातृकायां पाठः ।
४. रामानुजभाष्ये -पृ-१८५।

कुतः? इत्यत आह– **परोक्षेति** ।। यत एवं भ्रान्तिरतः प्राप्तिसद्भावात् प्रसक्तां **भ्रान्तिं मा कार्षीः** ।।

**भावदीपः**

**तद्धितोऽयमिति** ।। तद्धितोऽयं ष्यञ्प्रत्ययरूप[1] इत्यर्थः ।। ननु तस्येदमित्यर्थे अण्प्रत्ययेन भाव्यमित्यत आह– **विचित्रा हीति** ।। **'सम्बन्धि'** इत्यनूद्यार्थमाह– **सम्बन्धि कार्यमिति** ।। **'अर्थः'** इत्यनूद्य तस्यार्थद्वयमाह– **प्रतिपाद्यं प्रयोजनश्चेति** ।।

**भाष्यम् — 'वादो विषयकत्वं च मुखतो वचनं स्मृतम्' इत्यभिधानात् । न तु वेदपक्षो निषिध्यते ।**

**( भगवानेव सर्वत्र प्रतिपाद्यः )**

**'वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते'**[2] (हरिवंशवचनम् )
**'सर्वे वेदा यत्पदमामनन्ति'** ( कठ.२.१५),
**'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।**
**आचारश्चैव साधूनामात्मनो रुचिरेव च ।।'**[3] (मनु.२.६)

---

१ 'रूप' इति सो मातृकायां वर्तते । क-मातृकायां नास्ति ।

२. (अ) **त.प्र.टीका**-'श्रुतीनां विष्णुवाचकत्वे स्मृतिं चाह -वेदे इति' ।।

(आ) 'विष्णुरेव वेदे रामायणे च पुराणे तथा भारते, किं बहुना सर्वत्र सर्वग्रन्थेषु गीयते प्रतिपाद्यते। तेष्वपि न भागे, किन्त्वादौ मध्ये अन्ते च। कर्मादिकाण्डत्रयेपि, उपक्रमोपसंहारयोरवान्तरप्रकर-णेषु च, सर्वत्र प्रतिवाक्यं प्रतिपदं प्रत्यक्षरं च मुख्यतः प्रतिपाद्यत इत्यर्थः।।' **ब्र.सू.भाष्यदीपिका** ।

(इ) आथर्वणभाष्येऽप्युदाहृतमाचार्यैः । 'चतथाशब्दाः परस्परसमुच्चयार्थाः । एवशब्दस्य विष्णुरेवेत्यन्वयः। सर्वत्र इत्येतत्वेदादीनां चतुर्णामपि विशेषणम् ।।' इति उमर्जीये।।

३. (अ) 'आत्मनस्तुष्टिरेव च' इति पाठः टीकाननुगुणः । कुल्लूकभट्टः तुष्टिपदान्तपाठमेवादृतवान् ।

(आ) 'इदानीं धर्मप्रमाणान्याह- वेदोऽखिलो धर्ममूलमिति ।।वेदःऋग्यजुस्सामाथर्वलक्षणः स सर्वोऽपि विध्यर्थवादमन्त्रात्मा धर्मे मूलं प्रमाणम्। अर्थवादानामपि विध्येकवाक्यतया स्तावकत्वेन धर्मे प्रामाण्यात् । यदाह जैमिनिः-'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' । मन्त्रार्थवादानामपि विधिवाक्यैकवाक्यतयैव धर्मे प्रामाण्यम् । प्रयोगकाले चानुष्ठेयस्मारकत्वं, वेदस्य

'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः'[१] (भाग.६.१.४०)

इति वेदानां सर्वात्मना विष्णुपरत्वोक्तेः । तद्विहितस्य तद्विरुद्धस्य च धर्माधर्मत्वोक्तेश्च ।। ४५ ।।

## प्रमेयदीपिका

कथमेतदनेन लभ्यते? इत्यत आह– **वाद** इति ।। **वेदवादरताः** इत्यत्राप्येतदेव अभिधानम्। प्रतीत एवार्थोऽस्त्वित्यत आह– **न** त्विति ।। **पक्षः** परमसिद्धान्तः । उत्तानार्थो वेदो निषिध्यत एव योग[२]विरोधित्वादित्यत '**पक्षः**' इत्युक्तम् । कुतः? इत्यत आह– **वेद** इति ।। **धर्ममूलं** धर्मज्ञप्तेः कारणम् । **तद्विदां** वेदविदां मन्वादीनाम् ।।

**स्मृतिः** ग्रन्थः । **शीलं** मनोगतिः ।। **आचारः** धर्मबुद्ध्याऽनुष्ठानम् । **आत्मनः** मनसः **रुचिः** विकल्पविषये ।। **प्रणिहितः** विहितः । **तद्विपर्ययः** प्रतिषिद्धः । विवक्षितयोगविरोधे हि वेदसिद्धान्तो निषेध्यः स्यात् । न चैवम् । प्रत्युत तदनुगुण एवेति भावः । **धर्म**शब्दोऽत्र निवृत्तिधर्मपरः।। ४५ ।।

## भावदीपः

**प्रतीत एवार्थोऽस्त्वितीति**।। प्रागवतारिकोक्तरीत्या प्रतीत इत्यर्थः ।। **पक्ष इत्युक्तमिति** ।।

---

च धर्मे प्रामाण्यं यथानुभवकरणत्वरूपं न्यायसिद्धम् । स्मृत्यादीनामपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थमनूद्यते । मन्वादीनां च वेदविदां स्मृतिर्धर्मे प्रमाणम्। वेदविदामिति विशेषणोपादानाद्वेदमूलत्वेनैव स्मृत्यादीनां प्रामाण्यमभिमतम् । शीलं ब्रह्मण्यतादिरूपम् । तदाह हारीतः 'ब्रह्मण्यता देवपितृभक्तता सौम्यता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदश विधं शीलम्' । गोविन्दराजस्तु शीलं रागद्वेषपरित्याग इत्याह । आचारः कम्बलवल्कलाद्याचरणरूपः । साधूनां धार्मिकाणां स आत्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्मे प्रमाणम्। तदाह-गर्गः-'वैकल्पिके आत्मतुष्टिः प्रमाणम्'।। इति कुल्लूकभट्टव्याख्या ।।

१. 'यद्माधर्मस्य लक्षणम्' इत्यत्राहुरित्याह- वेदेति । वेद एव धर्माधर्मौ मिथो व्यावर्त्य वक्तीत्यनेन प्रमाणं चोक्तम् । धर्मस्य तत्वं ब्रूतेत्यत्रोत्तरमाहुरित्याह- वेदेति । वेदो नारायणवक्तृकः । तपःशक्त्या दृष्टवेदवक्तृमुनिव्यावृत्त्यर्थं साक्षादिति ।....अनेन नारायणवक्तृत्वे पौरुषेयत्वेनानारोपितरूपत्वाभावेन तदुक्तधर्माधर्मनिश्चयायोग इत्याशङ्का परिहता । तेषां स्वयम्भूत्वेनाभिव्यक्तिरेव हरेर्नतु पुराणादिवदन्यथा रचितत्वम्। 'यावद्ब्रह्म विष्ठितं तावती वाक्' इति श्रुतेः' इति विजयध्वजीये ।।

२. 'विरुद्धत्वात्' मातृकायां क्वचित् ।

परमसिद्धान्त इत्युक्तमित्यर्थः ।। **विकल्पविषय इति** ।।

**'आसूर्यदर्शनात्तिष्ठेत्ततस्तूपविशेत वा'**(स्मृतिः)

इत्यादावुपदेशेनोत्थानादिवैकल्पिकाचारविषय इत्यर्थः । एतावता वेदपक्षः कुतो न निषिद्धः[1]? इत्यस्य किमुत्तरम्? इमत्यत आह– **विवक्षितेति** ।। भगवदाराधनार्थकर्मत्वरूप-ज्ञानोपायविरोधे हीत्यर्थः ।। ४५ ।।

( ज्ञानफलकथने उपयोगः )

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।। ४६ ।।**[2]

**भाष्यम् — तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्यत आह– यावानर्थ इति ।। यावानर्थः प्रयोजनम् उदपाने कूपे भवति तावान् सर्वतः संप्लुतोदके अन्तर्भवत्येवैवं सर्वेषु वेदेषु यत् फलं तद् विजानतोऽपि ज्ञानिनो ब्राह्मणस्य फलेऽन्तर्भवति ।।**

**प्रमेयदीपिका**

योगोपदेशप्रसङ्गे ज्ञानफलकथनस्य क उपयोगः? इत्यत आह– **तथापीति** ।। **'यामिमाम्'**(२.४२) इत्यत्र काम्यकर्मिणां निन्दा कृता । **'निस्त्रैगुण्यो भव'**(२.४५) इति च तत्त्यागो विहितः । तत्र प्रष्टव्यं किन्निमित्तमेतदिति? ननूक्तं काम्यकर्मिणां समाध्यभावेन ज्ञानाभावान्मोक्षो न भवतीति । अत्रेदमुच्यते । यद्यपि ज्ञानफलं काम्यकर्मिणां न भवति । तथाऽपि तन्निन्दादिकं नोपपद्यते । कुतः[3](यतः) काम्यकर्मिणां फलं स्वर्गादिकं

---

१. 'निषिद्ध्यते' इति सो मातृकायां पाठः ।

२. सनत्सुजातीये समानार्थकश्लोकः धृतराष्ट्रं प्रत्युपदिष्टः । यथोदपाने महति सर्वतः सम्प्लुतोदके । एवं सर्वेषु भूतेषु ब्राह्मणस्य विजानतः ।। इति । 'यथा तृषितस्य उदपाने कूपे तृषानिवृत्तिरूपं यत् प्रयोजनं भवति सर्वतः सम्प्लुतोदके महति ततः अधिकं प्रयोजनं भवति, एवं सर्वभूतेषु ब्रह्म विजानतो ब्राह्मणस्य काम्यकर्मादिना जायमानं स्वर्गादिफलं ततोप्यधिकं मोक्षादिफलं भवतीत्यर्थः ।। अनेन स्वर्गादिसर्वफल-साधनज्ञानविषयत्वस्मं भगवन्माहात्म्यमुक्तं भवति' इति श्रीवादिराजस्वामिनः ।।

३. मातृकायामेव 'कुतः' इति पठ्यते । यतः इति मुद्रितपुस्तकेषु ।

ज्ञानिनां न भवतीति ज्ञानकर्ममार्गयोः[१] साम्यमेवेति योगानुष्ठाननियमाक्षेपे सत्याहेत्यर्थः ।।

[२]केचिदस्य श्लोकस्य कर्ममात्रत्यागे तात्पर्यमाहुः। [३]अपरे तु यत्कर्मसमुच्चित्तं ज्ञानं मोक्षसाधनं तत्कर्मपर एव वेदभागोऽधिगन्तव्यः । न तु समस्तवेदाभ्यासेनायुः समापनीयमत्यत्र[४]। तन्निरासाय व्याचष्टे– **यथेति** ।। [५]सामर्थ्यात् **'यथा' 'एवं'** शब्दयोरध्याहारः । 'यावान्' 'तावान्' इत्येतयोरावृत्तिश्च ।। **सर्वेषु वेदेष्विति** ।। तदुक्तकाम्यकर्मिणामित्यर्थः । ।

## भावदीपः

**किं निमित्तमेतदिति**।। निन्दाकरणं त्यागविधानं चेत्येतदुभय[६]मित्यर्थः ।। इत्यत्रेति ।। 'तात्पर्यमाहुः' इत्यनुषङ्गः । **सामर्थ्यादिति** ।। अन्वययोग्यताबलादित्यर्थः । अन्यथा अनन्वयापत्तेरित्यर्थः ।।

### ( ब्राह्मणशब्दार्थः )

**भाष्यम् — ब्रह्म अणतीति ब्राह्मणोऽपरोक्षज्ञानी । स हि ब्रह्म गच्छति । 'विजानतः'** इति ज्ञानफलत्वं तस्य दर्शयति ।। ४६ ।।

## प्रमेयदीपिका

**'ब्राह्मणस्य'** इति न क्षत्रियादिव्यावृत्तिः [७]शङ्क्येति भावेनाऽह– **ब्रह्मेति** ।। वर्णविपर्ययो निरुक्तत्वात् । एवं तर्हि ब्राह्मणशब्दो मुक्तवाची इति स्यात् । नच मुक्तस्य फलमस्तीत्यत आह– **अपरोक्षेति** ।। तदुपपादयति– **स हीति**।। तर्हि **'विजानतः'** इति पुनरुक्तिरिति चेत् न । **तस्य** परोक्षज्ञानिवाचित्वात् । उभयग्रहणमनुपपन्नमित्यत आह– **विजानत** इति ।। [८]**तस्य** अपरोक्षज्ञानस्य परोक्ष**ज्ञानफलत्वम्** । एतच्च स्वरूपकथनम् ।।

---

१. 'कर्मणोः' इति मातृकाद्वये पठ्यते ।
२. शाङ्करभाष्ये भाग-१, पृ-१८४ ।
३. रामानुजभाष्ये भाग१, पृ-१८६ ।
४. भावदीपानुगुणः ।'अत्र' इति गुज, वे-ग्रं पुस्तकेषु नास्ति ।
५. गीतायाः अवतारिकेयम् ।
६. 'चेत्युभयम्' इति सामातृकायाम् । 'एतत्' इति नास्ति ।
७. मातृकायां 'शङ्क्या' इति न पठ्यते ।
८. **'अस्य अपरोक्षज्ञानस्य' इति पद्मनाभतीर्थीयानुसाराद् भाष्ये तस्य इति स्थाने अस्य इति पाठान्तरमनुमीयते।**

यद्यपि ज्ञानिनः कर्मिणश्चान्योन्यफलाभावः । तथाऽपि ज्ञानिनः फलं[१] महासमुद्रोदकमिव महत् । कर्मिफलं तु कूपोदकमिवात्यन्ताल्पम्[२]। अतः कुतस्तयोः साम्यम्? तथा चाल्पास्थिरफलकर्म[३] निन्दया महानन्तफलज्ञानसाधने योगे प्रेरणं युक्तमेवेति भावः।।

**भावदीपः**

**वर्णविपर्ययः** दीर्घव्यत्यासः ।। **उभयग्रहणमनुपपन्नमिति** ।। परोक्षापरोक्षयोर्द्वयोरपि समकक्ष्यतया साक्षान्महाफलहेतुत्वायोगादिति भावः । 'ज्ञानकर्ममार्गयोः साम्यमेव' इति कृतचोद्यस्य **'यावान्'** इत्यनेनोक्तं परिहारं व्यनक्ति–**यद्यपि ज्ञानिन इत्यादिना** ।।

**प्रमेयदीपिका**

अपव्याख्यानं तूक्तवक्ष्यमाणन्यायनिरस्तम् ।। ४६ ।।

**भावदीपः**

**अपव्याख्यानं त्विति** ।। 'केचित्' इत्यादिना उक्तमिति भावः । तत्राद्यम् **'अथ चेत्त्वमिमं धर्म्यम्'**(२-३३) इत्यादिना **'ततो युद्धाय युज्यस्व'**(२-३८) इत्यन्तेनोक्तयुद्ध-कर्मप्रेरणारूपन्यायेन **'कर्मण्येवाधिकारस्ते'**(२-४७) इत्यादि वक्ष्यमाणन्यायेन; द्वितीयं **'त्रैगुण्यविषयाः'**(२-४५) इत्येतद्भाष्ये सर्वस्य ब्रह्मपरत्वोक्तन्यायेन; तथा **'स हि धर्मः सुपर्याप्तः'** इति समुच्चयनिरासकभाष्योक्तन्यायेन -

**'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानि'**

इत्यष्टादशेऽध्याये वक्ष्यमाणन्यायेन निरस्तमित्यर्थः ।। ४६ ।।

( ज्ञानिनोपि कर्मण्येवाधिकारयोग्यता )

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।। ४७ ।।**

**भाष्यम् —** कामात्मनां निन्दा कृता । कथम्? एषां 'स्वर्गकामो यजेत' इत्यादौ कामस्यापि विहितत्वादित्यत आह– **कर्मण्येवेति** ।।

१. 'ज्ञानिफलम्'इति समस्तपदम् त्रे-ग्रं ।
२. 'अत्यन्त' इति मातृकायां न पठ्यते । 'इवाल्पम्' इत्येव ।
३. 'अस्थिरकर्मफलनिन्दया' इति क्वचित् मातृकायां पठ्यते ।

### प्रमेयदीपिका

'ज्ञानिनां कर्माभावमुक्त्वा इदानीमज्ञानिनः कर्मोच्यते' इत्यन्यथाव्याख्यान निरासायाऽह– **कामात्मनामिति** ।। **एषां** कर्मिणाम् । सकामतया कर्मकुर्वतां या **निन्दा कृता 'यामिमाम्'**(२.४२) इत्यादिना सा न युक्तेत्यर्थः । कुतः? **'स्वर्गकामो यजेत'** इत्यादौ यजनवत् स्वर्गकामस्यापि विहितत्वात् । न हि विहितं कुर्वतां निन्द्यत्वम् । तथात्वे यजनस्यापि निन्द्यत्वप्रसङ्गादिति वदन् विशिष्टविधित्वं मन्यते पूर्वपक्षी ।।

### भावदीपः

ननु यागकर्मयो[1]र्द्वयोरपि विधौ वाक्यभेद इत्यत आह– **विशिष्टविधित्वमिति** ।। स्वर्गकामविशिष्टो यागः कार्य इति विशिष्टविधित्वमित्यर्थः ।।

### ( ज्ञानिनापि फलकामना न कर्तव्या )

**भाष्यम् — 'ते' इत्युपलक्षणार्थम् । तव ज्ञानिनोऽपि न फलकामकर्तव्यता । किम्वन्येषाम् । नन्वस्ति केषाञ्चित्, न तेऽस्तीति ।।**

### प्रमेयदीपिका

**'ते'** इत्येतदर्जुनमात्रविषयमित्यन्यथाप्रतीति[2]निरासायाऽह– **त इति** ।। सर्ववर्णाश्रमोपलक्षणमर्थः प्रयोजनमस्येति तथोक्तम् । वक्त्रर्यायत्ते शब्दप्रयोगे वाचकमेव प्रयुज्यताम्। किं लक्षणया? इत्यत आह– **तवेति** ।। फलकामः कर्तव्यो यस्य असौ तथोक्तः । तस्य भावस्तत्ता । फलकामस्य कर्तव्यता **तव** कर्तुरिति वा । कृतोऽपि फलकामो न ज्ञानिनोऽत्यन्तबाधकः । तत्प्रतिबन्धनीयस्य ज्ञानस्याल्पत्वात् । मोक्षस्य च नियतत्वात् । तथाऽपि मोक्षविलम्बहेतुत्वात्तस्यापि न कर्तव्यः । **किम्वन्येषाम्** अज्ञानिनामिति प्रदर्शनायोपलक्षकपदप्रयोग इति भावः ।।

ननु 'कर्मण्येवाधिकारो मा फलेषु' इति द्वयमुक्तम् । तत्कथं न फलकामकर्तव्यतेत्येकस्यैव ग्रहणम्? उच्यते । फलकामकर्तव्यतानिषेधस्यैवात्र प्राधान्यात् । **'कर्मण्येवाधिकारः'** इति हि

---

१. 'यागकामयोः' इति सो मातृकायां पाठः ।

२. शां.भा.प्रथमभागे-पृ.१९१.; रामानुजीयेऽपि प्रथमभागे-पृ-१९१।

तदर्थानुवादः । तथाऽपि न फलकामाधिकार इति वक्तव्यम् । मैवम् । अधिकारभावाभावयोः कर्तव्यत्वाकर्तव्यत्वसमर्थनार्थमुक्तत्वेन साध्यस्यैवोपादानात् । तथा च वक्ष्यति । '**त इत्युपलक्षणार्थम्**' इत्युक्तस्य व्यावर्त्यमाह– **न त्विति** ।। **केषाञ्चित्** फलकामकर्तव्यताऽस्ति, केवलं **ते नास्ति** इत्यर्थस्तु **न** इत्यर्थः । 'कामान् यः कामयते' इत्यादौ सर्वेषां निषेधादिति भावः ।।

**भावदीपः**

तत्पुरुषमुपेत्याऽह– **फलकामस्येति** ।। 'तव' इति पदं कर्तृमात्रपरमिति मत्वाऽऽह– **तव कर्तुरिति** ।। कर्मानुष्ठातुरित्यर्थः । एतावता लाक्षणिकोक्तेः किं प्रयोजनमुक्तं स्यादित्यत आह– **कृतोऽपीति** ।। **नियतत्वादिति** ।।

'**अनियमः सर्वेषाम्**'[1] (ब्र.सू.३.३.३२)

इत्युक्तेरिति भावः ।। **इति वक्तव्यमिति** ।। '**अधिकारः**' इति प्रक्रमात् '**फलेषु**' इत्यस्य फलकामोपलक्षकत्वेऽपि फलकामेष्वधिकारो नेति वक्तव्यम् । नत्वकर्तव्यत्वमित्यर्थः ।। **तथाच वक्ष्यतीति** ।। अधिकारभावाभावौ कर्तव्यत्वाकर्तव्यत्वहेतू इत्येतदस्मदुक्तदिशा[2] वक्ष्यति च । '**अतः कर्मण्येवाधिकारः, अतस्तदेव कार्यम्**'(गी.भा.) इत्यादिना अनु-पदमेवेति भावः ।। इत्यादाविति ।।

'**स कामभिर्जायते तत्र तत्र**'

इति वाक्यशेषे जन्माख्यक्लेशोक्त्या सर्वेषां कामनिषेधावगमादित्यर्थः ।।

---

१. 'अनियमः सर्वेषामविरोधाच्छब्दानुमाभ्याम् ' इति पूर्णपाठः । 'अत्र ब्रह्मदर्शिनां मोक्षनैयत्यं साध्यते। गतेरित्यस्ति । सर्वेषां ब्रह्मदर्शिनां गतेर्मुक्तेरनियमः । केषाञ्चिदस्ति, केषाञ्चिन्नेति उपासनावत् मुक्तेनियमो व्यवस्था नास्ति । किन्त्वनियम एव । कुतः? अविरोधात् । 'सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैः' इति तत्र श्रुतिविरोधवदिह तद्विरोधाभावात् । अविरोधेऽप्युक्तार्थे मानं किमित्यत उक्तम्- शब्देति । 'न कश्चित् ब्रह्मवित् सृतिमनुभवति मुक्तो ह्येव भवति' इत शब्दात्, 'विमता ज्ञानिनो नियतमोक्षाः ज्ञानित्वात् सम्मतवत्' इत्यनुमानाच्चेत्यर्थः । उपसंहारानुमानतौल्यनिरासाय अस्य बाधकशून्यत्वश्रुतिमूले वक्तुं पश्चादुक्तिः । बाधकाभावसाधकयोः द्वयोरप्युक्तिः ज्ञानिनामपि केषाञ्चित् जिज्ञासूनामुपसंहार इवायोग्यत्वं न शङ्क्यम्, ताभ्यां तदभावनिश्चयादिति सूचयितुम् । उपसंहारवैषम्यं वक्तुमेवानियम इत्युक्तिः । अन्यथा नियम इत्यवक्ष्यत्' इति तन्त्रदीपिकायाम् ।

२. 'इत्येतत् तस्मात् अस्मदुक्त' इति सो मातृकायां 'तस्मात्' इति अनन्वितं पठ्यते ।

( इन्द्रावतारस्य ज्ञानिनो अर्जुनस्य मोहकारणम् )

**भाष्यम् — स हि ज्ञानी नरांश इन्द्रश्च । मोहादिस्त्वभिभवादेः । यदि तेषां शुद्धसत्त्वानां न स्यात् ज्ञानं क्वान्येषाम् । उपदेशादेश्च सिद्धं ज्ञानं तेषाम् ।**

**'पार्थार्ष्टिषेण'(भाग.२.७.४५) इत्यादि ज्ञानिगणनाच्च ।।**

### प्रमेयदीपिका

नन्वर्जुनस्य ज्ञानित्वे स्यादिदम् । तदेव कुतः? इत्यत आह– **स हीति** ।। हिशब्दसूचितां प्रमाणप्रसिद्धिमेव दर्शयति– **नरांश** इति ।। कथं तर्हि **'यज्ज्ञात्वा न पुनर्मोहम्'**(४.३५) इत्यर्जुनस्य मोह उच्यते? कथं च प्रश्नकरणम्? इत्यत आह– **मोहादिस्त्विति** ।। बलवता प्रारब्धकर्मादिना ज्ञानस्याभिभवान्मोहः विशेषज्ञानाद्यर्थः प्रश्न इति भावः[१] । नन्विन्द्रादीनामेव कुतो ज्ञानित्वम्? इत्यत आह– **यदीति** ।।

सत्वं हि ज्ञानकारणम् । **'सत्वात् सञ्जायते ज्ञानम्'**(१४.१७) इति वचनात् । देवाश्च शुद्धसत्वाः । अतः कारणसद्भावाद्युक्तं **तेषां ज्ञानम्** । अन्यथा न कस्यापि **स्यात्** ।।

इतश्चेन्द्रादयो ज्ञानिन इत्याह– **उपदेशेति** ।।

'एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच'

इत्यादिरुपदेशः । **आदिपदेन** प्रजापतौ ब्रह्मचर्यम् ।।

अर्जुनस्य ज्ञानित्वे प्रमाणान्तरमाह– **पार्थेति** ।। ज्ञानिषु गणनात्[२]।।

एतेनापव्याख्यानमपि निरस्तम् ।।

### भावदीपः

**ब्रह्मचर्यमिति** ।। ब्रह्मज्ञानाय चरणं ग्राह्यमित्यर्थः । एतच्च छान्दोग्याष्टमाध्याये व्यक्तम् । **ज्ञानिषु गणनादिति** ।। द्वितीयस्कन्धे सप्तमाध्याये 'वेदाहमङ्ग' इत्युपक्रम्य

**'पार्थार्ष्टिषेणविदुरश्रुतसेनभूपाः । ते वै विदन्ति'** (भाग.२.७.४५)

इति ग्रन्थेन गणनादित्यर्थः ।। **अपव्याख्यानमिति** ।। **'यावानर्थः'**(२.४६) इति

---

१. 'इत्यर्थः' इति मातृकायां पाठान्तरम् ।

२. अत्र 'गणितत्वात्' इति मातृकायां हंसपादेन सूचितम् ।

श्लोके ज्ञानिनः कर्माभावमुक्त्वा, इदानीमज्ञानिनः कर्मोच्यते' इत्येतदपव्याख्यानम् **'एतेन'** इत्युक्तार्जुनस्य ज्ञानित्वकथनेन निरस्तमित्यर्थः[१] । न केवलं कैमुत्यसूचनमित्यपेरर्थः ।।

**भाष्यम् — कामनिषेध एवात्र । फलानि ह्यस्वातन्त्र्येण भवन्ति । न हि कर्मफलानि कर्माभावे यत्नतो भवन्ति । भवन्ति च काम्यकर्मिणो विपर्ययप्रयत्नेऽप्यविरोधे ।।**

### प्रमेयदीपिका

नन्वत्र **'मा फलेषु'**इति फलविषयो निषेधः कृतः । तत्कथमुक्तं **'फलकाम'** इति? तत्राह– **कामेति** ।। फलशब्देन तद्विषयकं काममुपलक्ष्य तद्विषयो निषेधोऽत्र क्रियते । न फलविषय इत्यर्थः । कुतो लक्षणाश्रयणम्? इत्यत आह– **फलानि हीति** ।। यत्र हि पुरुषस्य कतुमकर्तुं वा स्वातन्त्र्यं तत्रैव निषेधो नान्यत्र । प्रसक्तेरभावात्। न च फलेषु स्वातन्त्र्यमस्ति । अतो मुख्ये बाधकाल्लक्षणाश्रयणमित्यर्थः । कथम् अस्वातन्त्र्यम्? इत्यतः करणे तावदाह– **न हीति** ।। अकरणेऽपि तदाह– **भवन्ति चेति** ।। चोऽवधारणे । **अविरोधे** ब्रह्मदर्शनादितद्विरोध्यभावे । तदनेन **'ते'** इति **'फलेषु'** इति च पदद्वयं व्याख्यातम् ।।

### भावदीपः

**नच फलेषु स्वातन्त्र्यमिति** ।। 'कर्तुमकर्तुं च' इत्यनुषङ्गः । **कथमस्वातन्त्र्यम्** इत्यत्रापि 'फलेषु कर्तुमकर्तुं च' इत्यनुषङ्गः ।। [२]**करणे इति** ।। फलनिष्पादने इत्यर्थः ।। **अकरणेऽपीति**।। फलानिष्पादनेऽपीत्यर्थः ।। **तदनेनेति** ।। **'त इत्युपलक्षणम्'** इत्यादिना **'विरोधः'** इत्यन्तेनेत्यर्थः।।

( कर्माकरणे प्रत्यवायो विद्यते )

**भाष्यम् — अतः कर्माकरण एव प्रत्यवायो न तु ज्ञानादिना वाऽकामनया फलाप्राप्तौ । अतः कर्मण्येवाधिकारः । अतस्तदेव कार्यम् । न तु कामेन ज्ञानादिनिषेधेन वा फलप्राप्तिः ।।**

---

१. '-मिति तदर्थः' इति सो मातृकायाम् ।'एतेन' इत्यतः पूर्वं 'अतः' इत्यपि पठ्यते ।

२. इदं वाक्यं सो मातृकायामेव, नान्यत्र । 'अकरणे' इत्युपरितनवाक्यं सो-नास्ति । उभयमप्यवश्यम् ।

## प्रमेयदीपिका

स्यादेतत् । 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कर्त० यतया उच्यते । अतो न कामात्मनां निन्दोचितेति शङ्कायां, किमेतत् **'कर्मण्येवाधिकारः'** इत्याद्यसङ्गतमुच्यते? यश्च कर्मवत् कामनाया अपि कार्यतां मन्यते, कुतस्तस्य फलकामनायामधिकाराभावः सिद्धः । **'फलेषु'** इति लाक्षणिकपदप्रयोगे च किं निमित्तम्[1]? इत्याशङ्क्य पूर्वार्धं व्याचष्टे– **अत** इति ।। 'अतः' इत्यस्य वक्ष्यमाणेन **'भूत्वा'** इत्यतःपरेण **'इत्यर्थः'**इत्यनेनान्वयः । **अतः** उक्तन्यायेन पदद्वयस्य लाक्षणिकत्वे सतीत्यर्थः ।'श्लोकार्धः सम्पद्यते' इति शेषः ।।[2]

तत्र तावत् कर्मण्येवाधिकारः सर्ववर्णाश्रमिणां न फलकामनायाम् इत्युक्तेऽर्थद्वये हेतुद्वयमाह– **कर्माकरण** एवेति ।।

**'कुर्वन्नेवेह कर्माणि'**(ईशा.२) इत्युक्त्वा

**'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'**[3](ईशा.२)

इत्युक्तत्वात् कर्माकरण एव प्रत्यवायोऽनिष्टप्राप्तीष्टाप्राप्तिलक्षणः[4] । नत्वकामनया प्रत्यवायः। प्रमाणाभावात् ।।

ननु कामाभावे तत्फलानवाप्तेः कथं प्रत्यवायाभावः? इत्यत उक्तम्– **फलाप्राप्ताविति**।।

---

१. 'प्रयोजनम्' -गुज, वे-ग्रं ,मातृकायां च ।

२. 'एतस्मिन्नित्यतः समप्यन्तात्तसिः' इति एकं वाक्यं मातृकायामधिकं पठ्यते ।

३. 'तृष्णाविच्छेदवत् स्वोचितकर्मानुष्ठानमपि ज्ञानार्थिनामावश्यकमित्याह-कुर्वन्नेवेति । शतं समाः शतं वर्षाणि । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । इह मानुषादिजन्मनि यावज्जिजीविषेत् जीवितुमिच्छेत् तावत् कर्माणि कुर्वन्नेव आमरणं भगवत्पूजात्मकानि असङ्कल्पितानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुतः। एवं कर्माणि कुर्वति नरे मनुष्यमात्रेपि त्वयि कर्म पापं न लिप्यते । स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि न प्रागुत्तराणि पापनि बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । इतः कर्मकरणात् अन्यथा अकरणे कर्म पापं न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । ततश्चासौ ज्ञाने नाधिक्रियते । अतश्च कर्माणि कुर्यादिति । पुरुषार्थनये 'नियमाच्च' इति सूत्रभाष्यादौ नरे ज्ञानिन्यपि त्वयि कर्म न लिप्यत इति नास्त्यपरोक्षनानिनोपि कर्माकरणे मुक्तावानन्दह्रासरूप-पापकर्मलेपोस्त्येवेति ज्ञानिपरतया मन्त्रो व्याख्यातः' ई.ख.राघवेन्द्रीये।

४. मातृकायाम् । '-ष्टानवाप्तिलक्षण'-वे-ग्रं, गुज ।

काम्यफलाप्राप्तावपि न प्रत्यवाय इत्येतदुपपादनायोक्तम्- **ज्ञानादिना वेति**।। वाशब्द उपमायाम् । यथा **ज्ञानादिना** साधनेन मोक्षं गच्छतः स्वर्गाद्यलाभो न खेदहेतुः । महा-फल लाभेऽल्पहानेरकिञ्चित्करत्वात् । तथा **अकामनया फलाप्राप्तौ** अपि न खेदः । निष्कामेन कर्मणा महाफलस्यज्ञानादेर्लाभादिति भावः ।। ततः किम्? इत्यत उक्तस्य हेतुद्वयस्य गीतोक्तं साध्यद्वयमाह- **अत** इति ।। 'न तु फलकामनायाम्' इति च वक्तव्यम् । यत एवं कर्माकरणे प्रत्यवायः **अतः कर्मण्येवाधिकारः** । यतः कामाकरणे न प्रत्यवायोऽतो न कामेऽधिकार इत्यर्थः । ततः किं प्रकृते? इत्यतः परमसाध्यद्वयमाह- **अत** इति ।। यतः कर्मण्येवाधिकारः, **अतस्तदेव कार्यम्** । विधिविषय इत्यर्थः । यतः कामे नाधिकारोऽतः **कामेन न फलप्राप्तिः** फलप्राप्तये काम न कार्यः इति यावत् । तत्र दृष्टान्तः-**ज्ञानादिनिषेधेन वेति** ।। अत्रापि **वाशब्द** उपमायाम् । यथा प्रेक्षावता ज्ञानादिकं परित्यज्य **फलप्राप्तिर्न** क्रियते तथेत्यर्थः । पूर्वोक्त एवाभिप्रायः ।।

## भावदीपः

**हेतुद्वयमिति** ।। 'प्रत्यवाय' इत्यन्तेनैको हेतुः । नत्वकामनया फलाप्राप्तौ' इत्यनेनापर इति क्रमेणार्थद्वये हेतुद्वयमिति भावेन आद्यं तावद्व्यनक्ति – **कुर्वन्नेवेति** ।। **इह** मानुषादि जन्मनि ।। **इत्युक्त्वेति** ।। ईशावास्ये । एवं कर्माणि कुर्वन् इति **नरे** मनुष्यमात्रेऽपि **त्वयि कर्म** पापं **न लिप्यते** । इतोऽन्यथा कर्माकरणे पापं कर्म न लिप्यत इति नास्तीति भगवत्पूजात्मककर्माकरणे अनर्थस्योक्तत्वादित्यर्थः।। प्रत्यवायपदानुषङ्गेण अन्तिमहेतुं व्यनक्ति- **नत्विति** ।।

वापदं भिन्नक्रममुपेत्य आह- **ज्ञानादिना वेति** ।। [1]तावता नन्वित्यादिना कृतचोद्यस्य कः परिहारः? इत्यतोऽभिप्रायं व्यनक्ति- **यथेति** ।। **साध्यद्वयमाहे**त्युक्तं भाष्ये । द्वितीयसाध्याप्रतीतेरित्यत आह- **नतु फलकामनायामिति च वक्तव्य-मिति** ।। अधिकारपदानन्तरमिति भावः । **अतः**पदस्य उभयत्रान्वयमुपेत्य यथायोगमर्थमाह- **यत एवमिति** ।। 'स्वर्गकामो यजेत' इति वाक्यस्य विशिष्टविधित्व भ्रान्तिनिरासेन यथावदर्थकत्वोक्तिपरत्वात् । पूर्वार्धस्य तदनुगुणतया कार्यपदस्यार्थमाह- **विधिविषय इत्यर्थ इति** ।। 'यतः' **'कामे'** इति **'नाधिकारः'** इति पदविभागः ।। **न कार्य इति** ।।

---

१. इतः परं त्रयः पङ्क्तयः का नास्ति ।

'यजेत' इति विधिविषयः स्वर्गकामो नेत्यर्थः । **फलप्राप्तिः** स्वर्गाद्यल्पफलप्राप्तिः इत्यर्थः ।। **पूर्वोक्त एवेति** ।। महाफलज्ञानादिलाभे अल्पफलस्वर्गादिहानेः अकिञ्चित्करत्वात् इत्युक्त एवेत्यर्थः ।।

( फलश्रुतिवचनानां तात्पर्यम् )

**भाष्यम् —** कामवचनानां तु तात्पर्यं भगवतैवोक्तं

'रोचनार्थं फलश्रुतिः' ( भाग.११.३.४७)[1]।

'यथा भैषज्यरोचनम्'(भाग.११.२१.२३)[2] इति भागवते ।

अत एव कामी यजेतेत्यर्थः । न तु कामी भूत्वेत्यर्थः ।।

**प्रमेयदीपिका**

---

१. 'अल्पबुद्धेर्बहिर्मुखस्य योग्यस्य व्युत्पिपादयिषुर्दयालुरिव तस्मिन् बुद्ध्यवतारार्थं गुडजिह्विकान्यायमनुसन्दधानो मधुरं मुक्तिफलं गर्भीकृत्य स्वर्गादिपुष्पं मधुररसमिव प्रकाश्य तदर्थे कर्म विदधानः, अधीतश्रुतवेदार्थस्य समुत्पन्नजिज्ञासस्य क्षणभङ्गुरफलत्वात् स्वर्गादौ वैराग्यमुत्पाद्य श्रीनारायणचरणारविन्दभक्तिमुत्पाद्य तदुपासनासंभूतसंवित्सञ्जातप्रसादसुलभापवर्गे तात्पर्यपर्यवसायिनी फलश्रुतिः सङ्गता भवतीति' इति विजयध्वजीये ।

२. 'श्रुतिविहितत्वात् स्वर्गादिविषयेच्छा सतां स्यादित्याशङ्क्य एतद्विषयदृष्टान्तेन स्वर्गादिविषयस्य अनित्यसुखहेतुत्वेन न तत्रेच्छा कार्या, श्रुतिर्भैषज्यरोचनार्थमिक्षुदण्डदानवत् स्वर्गादिवादिनी मुख्यतो मुक्तिपरेत्याह- फलश्रुतिरिति ।। इयं फलश्रुतिः मोक्षफलश्रवणेन चरितार्थत्वात् न स्वर्गादिकुसुमश्रुतिः । तथात्वे वेदस्यानर्थहेतुत्वं स्यात् । न तद्युक्तम् । 'स्वर्गादिकामनायुक्तस्तु ऐहिकेष्वपि सज्जते । तत्रापि देवकामेभ्यो विशेषं चाभिवाञ्छति ।। ततस्तमसि पातः स्यादतो वेदः कथं हि तान् । काम्यत्वेनाभिचक्षीत सर्वं जानन् स्वयं सदा' इति वचनात् । तदुपपादयति- न इति । नः अस्माकं सकाशात् श्रेयो मोक्षाख्यं तदेव रोचयति कामयति, स्वर्गादेरनित्यतादिदोषज्ञानात् मोक्षस्यादोषताज्ञानाच्चेति । भैषज्यरोचनं प्रति इक्षुदण्डं प्रति ददातीति यथा तथा ईषदुत्तमस्य मन्दाधिकारिणः श्रोतुर्विवक्षया अभिमुखीकरणाय प्रोक्तं नतु तात्पर्यविवक्षया ।।

'मन्दाधिकारिणां नित्यं तपसैव प्रतीक्षितुम् । मोक्षो न शक्यते अधैर्यात् ततः स्वर्गादिकं वदेत् ।।
स्वर्गादिष्वल्पफलतां ज्ञापयित्वा विमोक्षदम् । वेदं वक्तुं तूत्तमानां नित्यो वेदः प्रवर्तते ।।
इक्षुदण्डं ददानीति यथा भैषज्यरोचनम् । एवं मन्देषूत्तमेषु मोक्षमाहात्म्यमुच्यते ।।
न ह्यल्पफलभाग् वेदो वासुदेवैकसंश्रयः।।' इति वचनात्' इति विजयध्वजतीर्थाः ।।

## ( स्वर्गकामो यजेत इति श्रुत्यभिप्रायवर्णनम् )

यदि कर्मैव विधिविषयो न कामः, तर्हि **'स्वर्गकामो यजेत'**(आप.श्रौ.१०.१.२.१) इत्यादिवाक्यानां किं तात्पर्यम्? इत्यत आह– **कामवचनानां त्विति** ।।

अनादिविषयवासनावासितान्तःकरणाः न सहसा ज्ञानसाधने कर्मणि प्रवर्तयितुं शक्यन्ते । अतस्तेषां कर्मण्यभिरुचिजननार्थं **'स्वर्गकामः'** इत्यादि फलश्रुतिः प्रवृत्ता । कर्मणि प्रवृत्तांस्तु शनैः कामं त्याजयिष्यामीत्यभिप्रायवती । यथा फलेन प्रलोभ्य बालानां भैषज्यरोचनं क्रियते तथेत्यर्थः । अस्त्वेवं तात्पर्यम्; योजना तु कथम्? इत्यत आह– **अत एवेति** ।। यत एवं न्यायेन **कर्मणः** एव कार्यत्वं न कामस्येति प्राप्तमतः **'कामी यजेत'** इत्येव[१] श्रुतेरर्थः । कामानुवादेन यजनं विधीयत इति यावत् । एवशब्दव्यावर्त्यमाह– **न त्विति** ।। कामविशिष्टयजनविधानं तु नेत्यर्थः ।।

एतदुक्तं भवति । विशिष्टविधानशङ्कायां नेदं विशिष्टविधानम्, किन्तु कामानुवादेन यजनस्यैवेति परमसाध्यमत्राध्याहार्यम् । तत्कुतः? इत्यपेक्षायां कर्मण एव कार्यत्वात्, कामस्य तदभावादिति हेतुवचनं चोपस्कर्तव्यम् । तदपि कुतः? इत्यपेक्षायां कर्मण्येवाधिकारो न फलकाम इति गीतोक्तयोः हेत्वोरुपस्थानम् । एतदपि कुतः? इत्यपेक्षायां कर्मकामकरणाकरणयोः प्रत्यवायभावाभावयोः हेत्वोरध्याहारः । एतदुपपादनाय लाक्षणिकफलशब्दोपादानमिति ।।

### भावदीपः

**इत्यभिप्रायवती इति** ।। श्रुतिरिति योज्यम् ।। **तात्पर्यमिति**[२]।। 'स्वर्गकामो यजेत' इति वाक्यस्येति योज्यम् ।। **यत एवं न्यायेनेति** ।। कर्मकामविषयकरणाकरणयोः प्रत्यवाय-भावाभावहेतुभ्यां कर्मकामयोरधिकारभावाभाव इत्युक्तन्यायेनेत्यर्थः ।। **कार्यत्वं** विधि-विषयत्वमित्यर्थः ।। **कर्मण्येवेति** ।। पूर्वार्धं स्वर्गकामवाक्यस्य व्याख्यानपरमित्येतत् । **'अतः कर्म'** इत्यादिना 'स्वर्गकामश्रुतेरित्यर्थः' इति पूर्वार्धस्यार्थः । **'सम्पाद्यते'** इत्यन्तेन भाष्येणोक्तमर्थं हृद्यारोहाय स्पष्टमाह– **'एतदुक्तम्'** इत्यादिना **'अध्याहारः'** इत्यन्तेन (इति)[३]।। **अत्रेति** ।। **'कर्मण्येव'** इत्यर्धश्लोके ।। **'फलेषु'** इत्यस्य कामोपलक्षकत्वात् **'न**

---

१. 'इत्येवं श्रुत्यर्थः'-वे-ग्रं ।'श्रुतेरर्थः' इति मातृकायाम् ।

२. इदं वाक्यं सो मातृकायामेव पठ्यते । का -नास्ति ।

३. इतिः सो मातृकायां काणियूरुमातृकायां च नास्ति । मं-पठ्यते ।

**फलकाम इति गीतोक्त'** इत्युक्तम् ।। **एतदुपपादनायेति** ।। कर्मकामविषयककरणाकरणयोः प्रत्यवायभावाभावहेतुक-कर्माधिकारकामनाधिकार-साधनक, कर्मकामकार्यत्वाकार्यत्वनिमित्तक-यजनविधान-कामाविधान इत्येतत्प्रणाड्युपपादनायेत्यर्थः ।।

एतेन लाक्षणिकशब्दप्रयोगेन किं प्रयोजनमिति चोद्यं समाहितं ध्येयम् ।।

भाष्यम् — **'निष्कामं ज्ञानपूर्वं च'**(३.४) **इति वचनात् । वक्ष्यमाणेभ्यश्च ।**

**'वसन्ते वसन्ते ज्योतिषा यजेत'**[१]

**इत्यादिभ्यश्च ।**

**अतो मा कर्मफलहेतुर्भूः । कर्मफलं तत्कृतौ हेतुर्यस्य स कर्मफलहेतुः । स मा भूः ।।**

## प्रमेयदीपिका

### ( कर्माचरणविषये भास्कराभिप्रायविमर्शः )

भास्करस्त्वाह । नित्यनैमित्तिकान्येव कर्माणि मुमुक्षुणा निष्कामतया कर्तव्यानि । न तु ज्योतिष्टोमादीनि कामाधिकारविहितानि[२] । तेषां निष्कामतया करणे प्रमाणाभावात् । अतोऽसदिदं व्याख्यानमिति । तत्राह – **निष्काममिति** ।। यज्ञादिकमेव प्रक्रम्य तस्य निष्कामतयाऽनुष्ठानवचनाद्युक्तमिदं व्याख्यानम् । **'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा'** (१८.६) इत्यादि **वक्ष्यमाणवचनेभ्यश्च** । न चैतानि नित्यनैमित्तिकविषयाणि । तत्र कामप्रसक्त्यभावेन तत्प्रतिषेधानुपपत्तेः ।।

किञ्च नित्यनैमित्तिकातिरिक्तस्य ज्योतिर्नामकस्य यज्ञस्य फलकामनया विना अविधानाच्च । ज्योतिष्टोमस्यैवायं गुणविधानायानुवाद इति तु न सम्मतम्। आदिपदेन **'विश्वजिता यजेत'** इत्यादेर्ग्रहणम् । तत्रापि स्वर्गकामपदाध्याहारो निर्णीत इति चेत् - सत्यम् । कामिनां तु तथा । स्ववचनेनानुक्तौ तु कारणमिहोक्तमिति ।।

१. **ज्योतिष्टोमाधिकरण.ब्र.सू.भाष्यदीपिकायाम् - तत्र वसन्तशब्दः कालविशेषवाची । सुधारीत्या तत्रैव विधेस्तात्पर्यम् । ज्योतिश्शब्दो ज्योतिष्टोमशब्दश्च कर्मवाची । तत्राऽद्यः समस्तशब्दोपलक्षकः। तद्वारा ज्योतिर्नामकस्तोत्रसमूहवतो यागस्य लक्षितलक्षणया वोधकः । स्वयं तु शक्यार्थः । वसन्तवाक्यस्य ज्योतिष्टोमानुवादेन गुणविधायकत्वं तु गीताभाष्यप्रमेयदीपकृद्भ्यां नाङ्गीकृतम् । कर्मान्तरविधित्वमिति तयोराशयः।' इति ।।**

२. 'कामाधिकारे विहितानि' इति भिन्नपदतया क्वचिन्मातृकायाम् ।

ननु पूर्वार्धेनैव शङ्काया [1]निरस्तत्वात् किमुत्तरार्धेन? इत्यतः क्रमेण पादद्वयोपयोगमाह– **अत इति** ।। फलकामस्याकर्तव्यत्वात् । कर्मफलहेतुत्वमप्रसक्तं किमिति [2]निषिध्यते? इत्यत आह– **कर्मफलमिति** ।। शाकपार्थिवादिवत् तत्कृतिपदलोपोऽत्रेति भावः ।।

## भावदीपः

**'कामाधिकारे'** इति विषयसप्तमी ।। **वक्ष्यमाणेति**।। अष्टादशे वक्ष्यमाण इत्यर्थः ।। **तत्प्रतिषेधेति** ।। **'सङ्गं त्यक्त्वा फलानि च'** इति प्रतिषेधस्य नित्यनैमित्तकयोः काम-प्रसक्त्यभावेनानुपपत्तेरित्यर्थः । 'वसन्ते' इत्यादि भाष्यार्थमाह– **किश्चेति** ।। **ज्योतिष्टोमस्यैवेति** ।। ज्योतिषा = ज्योतिष्टोमेन यजेतेति यत् तत् वसन्त इति गुणशब्दितवसन्तकालस्य[3] अङ्गविधिरेवायम् । तथा च कामाधिकारकमेवेदमपि कर्मेति भावः ।। **न सम्मतमिति** ।। तथात्वे वीप्सा न स्यादिति भावः ।। **निर्णीत इति** ।। पूर्वतन्त्रीय-चतुर्थाध्यायतृतीयपादे

**'सः स्वर्गः सर्वान् प्रत्यविशिष्टत्वात्'**[4] **(जै.सू.४.३.१९.)**

इति जैमिनिसूत्रे निर्णीत इत्यर्थः ।। **तथेति** ।। अध्याहारेण कामाधिकारत्वनिर्णय इत्यर्थः ।। **स्ववचनेनेति** ।। 'ज्योतिष्टोमेन स्वर्गकामः' इत्यादाविव 'विश्वजिता स्वर्गकामो यजेत' इति साक्षादनुक्तौ निष्कामनया भगवत्पूजात्वेनानुष्ठानरूपं **कारणमिह** ग्रन्थे **उक्तमित्यर्थः** ।। **शाक-पार्थिवादिवदिति** ।। शाकप्रियः पार्थिवः शाकपार्थिवः इत्यादौ यथा मध्यमपदलोपस्तथेत्यर्थः।।

---

१. 'निवृत्तत्वात्-' इति मातृकाद्वये।

२. 'प्रतिषिध्यते' वे-ग्रं,गुज , मातृकायां च।

३. 'कालाख्याङ्गविधिः ' इति सो पाठः ।

४. **'एकं यत्किञ्चिदथवा नियतं न नियामकम् । तस्मादायः सर्वपुंसामिष्टत्वात् स्वर्ग एव तत् '।।**

**(जैमिनीयन्यायमाला)**

**'एकं फलमित्युक्तम् । तदेकं किमिति न ज्ञायत् । अतः पुनरपि सर्वार्थत्वमप्रामाण्यं वानध्यवसायात् प्राप्तेति । तदुच्यते - 'स्वर्गोनतिशयप्रीतिरूपो दुःखविवर्जितः । भूयांसोभिलषन्त्येनम् अल्पे त्वल्पसुखं नराः ।।' सति सम्भवे शास्त्रस्य भूयोविषयत्वं न्याय्यमविशेषप्रवृत्तस्यातिसङ्कोचपरिहारात् । स्वर्गश्च दुःखासंयुक्तनिरतिशयसुखात्मकः सर्वेषामभिमतः । पश्वादिसुखं तु दुःखानुषक्तमल्पं च केचिदेव प्रार्थयन्ते । प्रत्यवायपरिहारस्तु सर्वाभिलषितोपि प्रत्यवायापेक्षया कियतापि विलम्बेन हृदयमागच्छति । ततस्तु सुकरं ज्ञानं सुखमेव परं फलम् । तच्चानतिशयत्वेन स्वर्गात्मकमिति स्थितम् ।। '**

**इति शास्त्रदीपिकायां पार्थसारथिमिश्रः ।**

( कर्माचरणेन भगवत्परितोषणं भवति )

**भाष्यम् —** तर्हि न करोमीत्यत आह– **मा त इति** ।। कर्माकरणे स्नेहो मास्तु इत्यर्थः । अन्य[1]फलाभावेऽपि मत्प्रसादाख्यफलभावात् । इच्छा च तस्य युक्ता ।

'वृणीमहे ते परितोषणाय' (भाग.४.३०.४०)[2]

इति महदाचारात् ।

अनिन्दनाद्विशेषत इतरनिन्दनाच्च । सामान्यं विशेषो बाधत इति च प्रसिद्धम्, 'सर्वानानय नैकं मैत्रम्' इत्यादौ ।।

**प्रमेयदीपिका**

**तर्हीति** ।। यदि फलं नाकाङ्क्ष्यमित्यर्थः । न करोमि स्वयं क्लेशरूपत्वादिति भावः । अकर्मशब्दस्य[3] निषिद्धेऽपि प्रवृत्तेः सङ्गशब्दस्य चानेकार्थत्वात् प्रकृतोपयुक्ततया व्याचष्टे– **कर्मेति** ।। सोपपत्तिकमाक्षिप्ते कथमिदमुत्तरम्? इत्यतो भगवदभिप्रायमाह– **अन्येति** ।। प्रसादशब्देन भक्तिज्ञानादिकमप्युपलक्ष्यते।।

एवं तर्हि भगवत्प्रसादादीच्छया कर्म कर्तव्यमित्युक्तं स्यात् । न च तद्युक्तम् । कामस्य निन्दितत्वात् । अन्यथा स्वर्गादिकामनाया अप्यनिषिद्धत्वप्रसङ्गात् । अतो नेदं भगवदभिप्रायवर्णनं युक्तमित्यत आह– **इच्छा चेति** ।। 'ते तव **परितोषणाय** सकलं **कर्म वृणीमहे**' इति महदाचारेण भगवत्परितोषणस्य कर्तव्यतावगमात् ।।

[4]नन्वकर्तव्यतायामपि कामनिन्दावचनं प्रमाणमस्तीत्युक्तमित्यत आह– **अनिन्दनाद् विशेषत इति** ।। यथा महदाचारो विशेषविषयो न तथा कामनिन्दावचनम् । किन्तु सामान्यविषयमेव । अतो महदाचारेण बाध्यत इति भावः । तर्हि तद्वत् स्वर्गादिकामनाऽपि कार्येति यदुक्तं तत्राह– **विशेषत इति** ।। **च**शब्देन प्रमाणाभावं समुच्चिनोति । अस्त्वाचारो विशेषविषयः । कामनिन्दावचनं च सामान्यविषयम् । तथाऽपि कुतो बाध्यबाधकभावः? इत्यत आह– **सामान्यमिति** ।। **सामान्यविशेष**शब्दौ तद्विषयप्रमाणपरौ । चशब्दाद्विरोधे सति ।।

१. 'अन्यथा फलाभावे' इति गुज । टीकाननुगुण इति भाति ।

२. प्रचेतसां वचनमिदम् ।

३. 'पदस्य'-वे-ग्रं, गुज, मातृकायां च पाठान्तरम् ।

४. 'ननु तदकर्तव्यतायामपि कामनानिन्दा' इति गुज,वे-ग्रं, मातृकायां च पाठान्तरम् ।

### भावदीपः

**सोपपत्तिकमिति** ।। क्लेशरूपत्वाख्योपपत्तिसहितं यथा भवति तथेत्यर्थः । 'केचिद् भक्तिमन्विच्छन्तः' इति वक्ष्यमाणानुरोधात् 'ज्ञानभक्ती हरेस्तृप्तिं विना विष्णोरपि क्वचित् । नाकाङ्क्ष्या' इत्युक्त्यनुरोधाच्च आह- **भक्तिज्ञानादिकमपीति** ।। वैराग्यमादि-पदार्थः ।। **इति महदाचारेणेति** ।।

**'यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु।**
**सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे'**
**(यन्नः स्वधीतं गुरवः प्रसादिताः विप्राश्च वृद्धाश्च सदाऽनुवृत्त्या ।**
**आर्या अनाथाः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनुसूययैव ।।)**[१]

इति चतुर्थस्कन्धे एकोनत्रिंशेऽध्याये[२] महतां प्रचेतसामाचारादित्यर्थः ।।

**भाष्यम् — अतः -**

**'नैकात्म्यतां मे स्पृहयन्ति केचित्'** (भाग.३.२६.३४)[३]
**'भक्तिमन्विच्छन्तः'**, **'ब्रह्मजिज्ञासा'** (ब्र.सू.१.१.१),
**'विज्ञाय प्रज्ञाम्'**[४] (बृ.उ.६.४.२१),
**'द्रष्टव्यः'** (बृ.उ.६.५.६) **इत्यादि वचनेभ्यः ।**

**स्वार्थसेवकं प्रति न तथा स्नेहः । किं ददामीत्युक्ते सेवादियाचकं प्रति वहुतरस्नेह इति लोकसिद्धन्यायाच्च भक्तिज्ञानादिकामना कार्येति सिद्धम् ।। ४७ ।।**

### प्रमेयदीपिका

उक्तं प्रमाणमुपसंहरन् प्रमाणान्तराण्यप्यत्राह- **अत** इति ।। एकात्म्यतां सायुज्यम् ।

---

१. कंसान्तर्गतभागः सो पाठे नास्ति।

२. इदानीन्तनपाठे अयं श्लोकः त्रिंशे अध्याये उपलभ्यते । मातृकात्रये लिपिकृत्प्रमादो वा, इन्दानीन्तनपाठे अध्यायविभागव्यत्यासो वा स्यात् । एकस्यां मातृकायाम् 'एकोनविंशे' इति पाठश्च ।

३. अस्य श्लोकस्य व्याख्या ५२श्लोके कृता टीकाकारैः । तत्रैव विजयध्वजीयमपि द्रष्टव्यम् ।

४. 'तमेव परोक्षतो विज्ञाय । प्रज्ञां साक्षात्कारम् । कुर्वीत सम्पादयेत्' इति खण्डार्थे ।

अस्यैव [1]विशेषोऽयं **'भक्तिमन्विच्छन्तः'** इति ॥

**( जिज्ञासाशब्दस्य अर्थविमर्शः )**

ननु ब्रह्मजिज्ञासाशब्दो न ज्ञानेच्छापरः । किन्तु विचारस्योपलक्षकः । सत्यम् । तथाऽपि तत्पूर्वको विचारो लक्ष्यते[2] । अन्यथा सम्बन्धाभावात् । **लोकसिद्धन्यायात्** लोकसिद्धव्याप्तिकानुमानात् ॥ ४७ ॥

**भावदीपः**

**'नैकात्म्यताम्'** इत्यस्य प्रकृतोपयोगमाह– **अस्यैव विशेषोऽयमिति** ॥ तथाच विशेषेण 'न स्पृहयन्ति' इति सामान्यं बाध्यत इति भावः ॥ नेदं ज्ञानकामकर्तव्यतायां प्रमाणमित्याशङ्क्य समाधत्ते– **नन्वित्यादिना** ॥ **अन्यथेति** ॥ ज्ञानेच्छारूपमुख्यार्था-प्रतीतौ मुख्यार्थसम्बन्धा-भावाज्ज्ञानहेतुविचारलक्षणैव न स्यादित्यर्थः ॥ ४७ ॥

**( कर्माचरणसमये अनुसन्धानम् )**

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥**

**भाष्यम् — पूर्वश्लोकोक्तं स्पष्टयति– योगस्थ इति ॥ योगस्थः** उपायस्थः ।

१. 'अस्यैव शेषोऽयम्' इति क्वचित् पाठः, सो मातृकायां च । अत्र विशेषः भावरत्नकोशे द्रं ।

२. **जिज्ञासाधिकरणचन्द्रिकायां** 'नन्विच्छायामपि जिज्ञासापदप्रयोगादिच्छात्रजिज्ञासाशब्दार्थः किं न स्यादित्यत्राह॥ इच्छाया अविधेयत्वादिति ॥ सुधायां तु ज्ञानेच्छांतर्णीतो विचारो जिज्ञासापदेन लक्ष्यत इति परमतमुक्त्वा यदि च जिज्ञासाशब्दो मीमांसाशब्दवद्विचार एवोपसंख्यायत इति स्वमतमुक्तम् ॥ यद्वा सुधायां पक्षद्वयेपि जिज्ञासाशब्दस्य विचारपरत्वाविशेषादन्यतरनिर्धारणस्याप्रयोजनत्वात् पक्षद्वयोक्तिः । तदनुसारेणात्राप्यसन्वाच्यत्वेपि लक्षणया विचारेपि तत्प्रयोगान्मुख्यार्थस्य चेच्छाया अविधेयत्वादित्यपि योज्यम् ॥ **प्रकाशः** ननु नानेन वाक्येन जिज्ञासाशव्दस्य तत्र शक्तताभिप्रायोऽवगन्तुं शक्यते विचारस्य सन्नंतावाच्यत्वेपि लक्षणया विचारेपि जिज्ञासितमित्यादिप्रयोगवदुपपत्तेरित्युत्तरवाक्यार्थसम्भवात् । अत एवेच्छाया अविधेयत्वादिति मुख्यार्थे विध्यनुपपत्तिर्लक्षणा बीजमाहेत्याशङ्क्य नेदं लक्षणाबीजोपपादनार्थं प्रवृत्तं येन पूर्वतनं परिहारवाक्यं लक्षणाभिप्रायेण वर्ण्येतेति भावेन प्रकारांतरेणावतारयति ॥ नन्विति । सुधाविरोधमाशंक्याह ॥ सुधायां त्विति ॥ एवं च तद्वाक्यद्वयं स्वपरमतत्वेन योज्यमित्युक्तं भवति ॥ तथाच न विरोध इत्याशयः । नन्वेवं योजनायां न ज्ञापकमस्ति । अत एव प्रमेयदीपिकायां 'मा कर्मफलहेतुर्भूर्माते सङ्गोऽस्त्वकर्मणि' इति वाक्यभाष्यव्याख्यावसरे "ज्ञानेच्छापूर्वको विचारो लक्ष्यत" इति विचारे लक्षणा कण्ठोक्तेत्यत आह ॥ यद्वेति ॥

**सङ्गं** फलस्नेहं **त्यक्त्वा** । तत एव **सिद्ध्यसिद्ध्योः समो भूत्वा** । **स** एव च मयोक्तो **योगः** ।। ४८ ।।

### प्रमेयदीपिका

**'कर्मण्येव'** इत्यनेन **'योगस्थः'** इत्यस्य गतार्थतापरिहारार्थमाह – **पूर्वेति** ।। निष्कामतादिविशिष्टानि कर्माण्येव योगः । अतो **'योगस्थः'** इत्यनेनैव लब्धं पुनः **'कुरु कर्माणि'** इति किमर्थमुच्यते? इत्यत आह– **योगस्थ** इति ।। ज्ञानोपायमनुतिष्ठन् इत्यर्थः ।। 'कर्मसम्बन्धं त्यक्त्वा कर्माणि कुरु' इत्येव्याहतमित्यत आह– **सङ्गमिति** ।।

'ईश्वरो मे प्रसीदतु' इत्यभिसन्धिमपि 'त्यक्त्वा' इति व्याख्यानं[1] पूर्वेणैव[2] निरस्तम् । **'तत एव'** इति परामर्शसौकर्याय **'त्यक्त्वा'** इत्यनुवादः कृतः ।**'सङ्गं त्यक्त्वा'**, **'सिद्ध्यसिद्ध्योः समो भूत्वा'** इति द्वयमुक्त्वा **'समत्वं योग उच्यते'**इत्येकस्यैव ग्रहणमयुक्तम् । तथा सति सङ्ग-त्यागस्यायोगत्वप्रसङ्गादित्यत आह– **तत एवेति** ।। सङ्गत्यागादेव । एतयोः कार्यकारणभावात् कार्ये गृहीते कारणमर्थाद् गृहीतमेवेति[3] भावः । ननु समत्वयोगयोर्भेदः केन शङ्कितः? येन **'समत्वं योग उच्यते'** इति तयोरैक्यमुच्यत इत्यत आह– **स एवेति** ।। **'योगस्थः'** इत्युक्ते को योगः? इत्यपेक्षायां भगवता **'सङ्गं त्यक्त्वा'**, **'सिद्ध्यसिद्ध्योः समो भूत्वा'** इति योगो व्याख्यातः । [4]मन्दास्तु पृथगेव एते[5] विशेषणे कल्पयिष्यन्तीति तदनुजिघृक्षयेदमुदितमिति भावः । **स एव** 'यत् समत्वम्' इति शेषः । योगैकदेशे योगशब्दः ।। ४८ ।।

### भावदीपः

**पूर्वेणैवेति** ।। **'इच्छा च तस्य युक्ता'** इत्यादिग्रन्थेनैवेत्यर्थः ।**'यतः'** इत्याद्यागमसत्वेपि तस्य प्रत्येकमेव योगविशेषणे व्यावर्तके इत्यर्थः । **इदमिति** ।। **'समत्वं योगः'** इत्येतदित्यर्थः ।। यद्वा– कर्म कुर्वतो योगस्थत्वमिव सङ्गत्यागसमत्वेऽपि तस्य विशेषणे एव, नतु योगशब्दार्थोक्तिपरे इति कल्पयिष्यन्तीति मन्दानुग्रहेच्छायेदमुक्तमित्यर्थः ।। तर्हि सङ्गत्यागविशिष्टं समत्वमिति वाच्यमित्यत आह– **योगैकदेश इति** ।। यद्वा– निवृत्तकर्मण एव ज्ञानोपायत्वेन योगत्वात्

---

१. 'ईश्वरो मे तुष्यत इति सङ्गं त्यक्त्वा' इति शाङ्करभाष्यमूले । प्र.भागे-पृ-१९५ ।
२. भावदीपानुगुणपाठः । मातृकायां 'पूर्वमेव'-इति पां ।
३. एवशब्दः वे-ग्रं, गुजपाठे नास्ति । मातृकाद्वये वर्तते । भावदीपानुगुणः ।
४. रामानुजभाष्ये, शाङ्करभाष्ये च -पृ-१९५।
५. मातृकायां,भा.र.को.पाठे च । 'ते' इति श्रीनि पाठः ।

त्यागसमत्वयोः तदेकदेशत्वात् कथं समत्वम्? अर्थाद् गृहीत(सङ्ग[1])त्यागत्वयोग इत्युक्तिरित्यतो वा भगवद्भक्तेरपि योगत्वाद्वा आह– **योगैकदेश इति**।। ४८ ।।

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ।। ४९ ।।**

**भाष्यम्** — इतश्च योगाय युज्यस्वेत्याह– **दूरेणेति** ।। **बुद्धियोगात्** ज्ञानलक्षणादुपायात्। **दूरेण** अतीव । अतो **बुद्धौ शरणं** ज्ञाने स्थितिम् । फलं कर्मकृतौ हेतुर्येषां ते **फलहेतवः** ।। ४९ ।।

### प्रमेयदीपिका

ननु योगोपदेशमुपक्रम्य कर्मणो बुद्धियोगादवरत्वं किमर्थमुच्यते? इत्यत आह– **इतश्चेति**।। **युज्यस्व** [2]प्रयतस्व । '**यावानर्थः**' इति कर्मफलस्य ज्ञानफलापेक्षयाऽल्पत्वात् '**योगाय युज्यस्व**' इत्युक्तम् । अत्र तु तत्रैव हेत्वन्तरमुच्यते ।'बुद्धियोगात्' इति षष्ठीसमासप्रतीतिनिरासाय आह– **बुद्धियोगादिति** ।। **लक्षणशब्दः** स्वरूपार्थः । पुरुषार्थसम्बन्धिना कर्मणा सह निर्देशे तथाभूतस्य ज्ञानस्यैव ग्रहणं युक्तमिति भावः । **उपायात्** पुरुषार्थस्य । दूरशब्दो विप्रकर्षवाची । तस्यात्र कथमन्वयः? इत्यत आह– **दूरेणेति** ।। उक्तं कर्मणो ज्ञानादतीवावरत्वमिदानीमुपपादनीयम् । तद्विहाय किमिदं तृतीयपादेनोच्यत इत्यतः साध्यनिर्देशोऽयमिति सूचयन् व्याचष्टे– **अत** इति ।। **ज्ञाने स्थितिं** तदुपाययोगानुष्ठानलक्षणम् ।। फलहेतूनां कृपणत्ववर्णनमनुपयुक्तमित्यत आह– **फलमिति** ।। ४९ ।।

### भावदीपः

**योगाय युज्यस्व** इत्युक्तमिति ।। ज्ञानोपायाय प्रयतस्वेत्युक्तमित्यर्थः ।। **अत्र तु** 'दूरेण' इति श्लोके **तत्रैव** ज्ञानोपायाय प्रयतस्व इत्युक्तार्थ एव । काम्यकर्मतो शेषरूपं[3] काम्यस्य निन्दारूपं वा हेत्वन्तरमित्यर्थः ।। षष्ठीसमास एव कुतो न? इत्यत आह– **पुरुषार्थसम्बन्धिनेति** ।। **'उपायात्'** इत्यत्राकाङ्क्षां पूरयति– **पुरुषार्थस्येति** ।। तदुपाययोगेति ।। निष्कामकर्मानुष्ठानेत्यर्थः ।। ४९ ।।

१. 'सङ्ग' इति सो मातृकायां नास्ति ।
२. भावदीपानुगुणः। 'प्र' इति प्रचलितपाठे, श-१ मातृकायां च नास्ति ।
३. 'श्रेष्ठरूपम्' इति सो-पाठे ।

( ज्ञानफलम् )

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥**

**भाष्यम् —** ज्ञानफलमाह– **बुद्धियुक्त** इति ॥ सुकृतमप्यप्रियम् । मानुष्यादिफलं जहाति । न बृहत्फलमुपासनादिजनितम्[१] ।

'न हास्य कर्म क्षीयते' [२](बृ.उ.३.८.९.अव्याकृतब्राह्मणम्)
'अविदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते
बहूनि वर्षसहस्राण्यन्तदेवास्य तद्भवति'[३]

इत्यादि श्रुतिभ्यः ॥

## प्रमेयदीपिका

'बुद्धियुक्तः प्रेक्षावान् काम्यं सुकृतं दुष्कृतं च जह्यात्'[४] इति योगस्वरूपनिरूपणपरतां निराकर्तुमाह– ज्ञानेति ॥ कथं कर्मणो ज्ञानादतीवावरत्वम्? इत्यतः काम्यकर्मिणः कृपणा दीनाः **'इमं लोकं हीनतरं वा विशन्ति'**(मु.१.२.१०) इत्युक्तम् । तथाऽपि कथं दूरेणावरम्? इत्यपेक्षायां कर्मफलाद्विलक्षणं **ज्ञानफलमाहे**त्यर्थः । प्रतीतार्थेऽनुपपत्तिं तूत्तरत्र दर्शयिष्यति ॥ अत्र दुष्कृतवत् सुकृतस्यापि सर्वात्मना हानं प्रतीयते[५] । तत् सङ्कोचेन व्याचष्टे– **सुकृतमपी**ति ॥ अप्रियं सुकृतं कीदृशम्? इत्यत आह– **मानुष्यादी**ति ॥ व्यावर्त्यमाह– **ने**ति ॥ बृहत् प्राङ् मुक्तेः ज्ञानादिगुणविवृद्धिलक्षणं तदनन्तरं चानन्दवृद्धिरूपं फलं यस्य तद् **बृहत्फलम्** । तथाभूतं सुकृतमेव नास्ति । कारणाभावादित्यत आह– **उपासने**ति ॥ **आदि**पदेन निवृत्तं कर्म । कुतः सङ्कोचः? इत्यत आह– **न हास्ये**ति ॥

---

१. 'निमित्तम्' इति वे-ग्रं पाठः उत्तरटीकाननुगुणः ।

२. 'अस्योपासकस्य ज्ञानानन्तरभावि कर्म न क्षयिष्णुफलकं भवति' इति खण्डार्थे ।

३. 'यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो भुनक्ति यथ वेदो वाननूक्तोन्यद्वा कर्माकृतं यदि हवा अप्यनेवंवित् महत्पुण्यं कर्म करोति तद्धास्यान्तः क्षीयत एव । आत्मानं लोकमुपासीत' इति (बृ.उ.३.८.९.अव्याकृतब्राह्मणम्)।

४. शाङ्करभाष्ये ।

५. 'उभे सुकृतदुष्कृते पुण्यपापे' इति सङ्ग्रभाष्ये ।

यजते ददाति । **तप्यते** 'अनेन' [१]इति शेषः । अत्रापि **'अविदित्वा'** इति विशेषणाज्ज्ञानिनः सुकृतात् क्षयः प्रतीयते । उत्तरत्र चास्या श्रुतेरुपयोगः।।

**भावदीपः**

**'फलहेतवः'** इति पदलब्धमाह– **काम्यकर्मण इति ।। 'कृपणाः'** इत्यनूद्य **'दीनाः'** इति व्याख्या कृता । तस्य तात्पर्यम् **'इमं लोकम्'** इत्यादीत्युक्तमिति । एतेन **'कृपणाः'** इति [२]पदस्यावरत्वोपपादकत्वं विवृतं ध्येयम् ।।

**'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।**
**नाकस्य पृष्ठे सुकृते तेऽनुभूत्वेमं लोकम्'**[३]

इति श्रुत्यन्तरोक्त एव **'कृपणाः'** इत्यस्यार्थ इति भावेन **'इमं लोकम्'** इत्याद्युक्तम्।। **उत्तरत्र दर्शयिष्यतीति** ।। **'न हीष्टपुण्यक्षये'** इत्यादिनेति भावः ।। यद्वा **'अतो योगाय युज्यस्व'** इति तृतीयपादसङ्गत्युक्त्यवसरे [४]प्रतीतार्थे तृतीयपादासङ्गतिरूपानुपपत्तिं दर्शयिष्यतीत्यर्थः ।। 'जुहोति' इत्यनेनापौनरुक्त्यायाह– **यजतेति** ।। 'यज देवपूजासङ्गतिकरणदानेषु' (**पा.धा.१००२**) इति धातोरिति भावः । **'तप्यते'** इत्यत्र कर्तारमाह– **अनेनेति ।। उत्तरत्र चेति** ।। 'अतः' इति वाक्ये **'उभयक्षय'** इति वाक्येऽपीत्यर्थः ।।

**( कर्मक्षयश्रुतिः अज्ञानिविषया )**

**भाष्यम् —**अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र । उभयक्षयश्रुतिरप्यनिष्टविषया । नहीष्टपुण्यक्षये किञ्चित् प्रयोजनम् । नचेष्टनाशो ज्ञानिनो युक्तः । इष्टाश्च केचिद्विषयाः ।

१. मातृकात्रये 'इति शेषः' इति नास्ति । मुद्रितपुस्तकेष्वेव ।

२. 'पादस्य' इति सो मातृकायां पाठः ।

३. 'इष्टं च पूर्तं च इष्टापूर्तं, द्वन्द्वैकवद्भावः, अन्येभ्योपि दृश्यते इति दीर्घः । इष्टं यजनं पूर्तमन्नदानादि । वरिष्ठं परमश्रेयस्साधनं मन्यमानाः अन्यत्र भगवद्भगवल्लक्षणं श्रेयः प्रशस्तं वस्तु न वेदयन्ते न सम्यग् जानन्तीत्यर्थः । ते भगवतः किञ्चिदुत्तमत्वज्ञानपूर्वकं कर्मानुष्ठातारः सुकृते सुकृतसाध्ये नाकस्य स्वर्गस्य पृष्ठे विस्तीर्णस्थलविशेषे अनुभूत्वा कामाननुभूय इमं लोकं भूलोकं मानुषभावमिति यावत् विशन्ति प्राप्नुवन्ति । ते हरेः समत्वहीनत्वज्ञानपूर्वं कर्मकृतस्तु हीनतरं लोकम् अन्धन्तमो विशन्ति । वाशब्दो व्यवस्थितविकल्पार्थः। .''..इत्यादि **रा.खण्डार्थे** ।

४. 'प्रतीतार्थे' इति भा.र.को उदाहृतपाठे पठ्यते। मातृकात्रयेपि 'प्रतीतार्थे' इति नास्ति ।

'स यदि पितृलोककामो भवति
सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति (छां.उ.५.२.१),
'प्रजापतेस्सभां वेश्म प्रपद्ये
यशोऽहं भवानि ब्राह्मणानाम्'[१] (छां.उ.८.१४.१),
'स्त्रीभिर्वा यानैर्वा'[२] (छां.उ.८.१२.३),
'अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते'[३] (बृ.उ.१.१४.१५)
'कामान्नी कामरूप्यनुसञ्चरन्'[४] (तै.उ.३.१०),
'स एकधा भवति' (ब्र.सू.भा.२.३.२७ उदा.गौपवनश्रुतिः)
इत्यादिश्रुतिभ्यः ।।

## प्रमेयदीपिका

ननु **'नास्त्यकृतः कृतेन'(मु.३.२.१)**इत्यादि[५] श्रवणात् सत्प्रतिपक्षा एताः श्रुतय इत्यत आह– **अत** इति ।। विशेषश्रुतेर्बलवत्वादिति भावः । **श्रुतिः** श्रवणम् । **'क्षीयन्ते चास्य कर्माणि'(२.२.८)** इति ज्ञानिनोऽपि कर्मक्षयः प्रतीयते[६] इति चेन्न । निरवकाशश्रुतिविरोधेनास्य दुष्कृतविषयत्वात् । 'तदा विद्वान् पुण्यपापे विधूय' इति ज्ञानिनोऽप्युभयक्षयश्रुतिरस्तीति आह– **उभयेति** ।। उक्तैव युक्तिः ।।

( ज्ञानिनः सर्वसुकृतहानिर्नास्ति )

युक्तिविरुद्धं च ज्ञानिनः सर्वसुकृतहानम् । तथाहि- उपसनादिजनितं सुकृतं ज्ञानिनः

---

१. 'तत्प्रार्थनाप्रकारमाह- प्रजापतेरिति । भगवतः सभां वेश्म च प्रपद्ये । ब्राह्मणानां मध्ये यशः यशस्वी भवामि' इति राघवेन्द्रीयखण्डार्थे ।

२. इयं श्रुतिः उपरि पूर्णा उदाहृता व्याख्याता च ।

३. (अ) 'स मुक्तो यद्यत् कामयते तत्तत् परमात्प्रसादद्वारा कर्म सृजति'- त.प्र ।
(आ) 'स मुक्तो यद्यत् कामयते तत्तत् कर्म अस्माद्ध्येवात्मनः अस्यात्मनः प्रसादेन सृजति'
न्यायसुधायाम्।

४ 'कामान्नी कामभोगवान् कामरूपी इच्छाधीनरूपवान् इमान् लोकान् अनुसञ्चरन्' रा.खण्डार्थे।

५. आदिशब्दः मातृकास्वेव । न मुद्रितेषु ।

६. 'श्रूयते' इति क-मातृकायाम् ।

किमिष्टमुतानिष्टम्?, आद्ये किं तदिच्छया क्षीयते? उत ज्ञानस्वभावात्? आद्यं दूषयति– **न हीति** ।। 'येन ज्ञानी तत्क्षयमिच्छेत्' इति शेषः । द्वितीयं निराकरोति– **नचेति**।। ज्ञानस्या पुरुषार्थताप्रसङ्गादिति भावः । नान्त्यः । अनिष्टत्वे कारणाभावात् । निष्फलत्वादनिष्टमित्यत आह– **इष्टाश्चेति** ।। **केचित्** इत्यलौकिकाः । मुक्तावलौकिका [१]विषया इष्टा भवन्ति । तत्प्राप्तिः सुकृतफलमिति भावः ।।

मुक्तो विषयानिच्छतीत्येतत् कुतः? इत्यत आह– **स यदीति** ।। **यशः** यशस्वी । **ब्राह्मणानां** सकाशात् । मुक्तो **यद्यत् कामयते** तत्तत्कर्म **अस्मात्** परमात्मनः **सृजते** । इष्टविषय[२]प्राप्तिः सुकृतफलमित्येतदप्यनया श्रुत्योच्यते ।। उपासनादिकमेव ज्ञानी न करोति। कृतेन वा सुकृतं न जायत इत्येतदप्यनया निराकृतम् ।।

## भावदीपः

**ज्ञानिनोऽपीति** ।। **'तस्मिन् दृष्टे परावरे'** इति वाक्यशेषादिति भावः ।। **निरवकाशेति**।। **'अविदित्वा'**[३] इति प्रागुक्तश्रुतिविरोधेनेत्यर्थः । यद्वा **'न हास्य'** इति श्रुतीत्यर्थः ।। **उक्तैवेति** ।। **युक्तीति** ।। निरवकाशश्रुतिविरोधरूपायुक्तिरित्यर्थः ।।

## ( आत्मनो द्विविधआवरणविचारः )

## प्रमेयदीपिका

ननु मुक्तः किमर्थं विषयानिच्छेत्? न तावत् सुखार्थम् । ज्ञानेनावरणरूपाविद्या-निवृत्तावात्मस्वरूपस्य व्यक्तत्वात् । पृथक् सुखस्यानङ्गीकारात् । नापि दुःखनिवृत्त्यर्थम्। अविद्यानिवृत्त्यैव तत्सिद्धेरिति । मैवम् । नाविद्यैवात्मनः स्वरूपावरणम् । किन्त्वीश्वरेच्छाऽपि[४]। तथा च वक्ष्यति । तथा च ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखं

---

१. 'अलौकिकविषयाः' इति समस्तपदं सो मातृकायाम् ।

२. 'इष्टफलप्राप्तिः' इति पाठान्तरं मातृकायाम् ।

३. भाष्यस्थपदम् ।

४. **'ननु चानन्दः स्वरूपमेव । स चाविद्यावृतो अविद्यानिवृत्तौ स्वतः सिद्ध एव । अनुभवोप्येवमेव। विषयित्वमप्यनुभवस्वभावो न त्वागन्तुको धर्मः । ततो मोक्षदानात्कथं पृथगानन्दादिदानम् । उच्यते । परमेश्वरशक्तिरेव जीवस्वरूपावरणं मुख्यम् । अविद्या तु निमित्तमात्रम् । ततो अविद्यायां निवृत्तायामपि नाशेषानन्दाभिव्यक्तिर्यावदीश्वर एव स्वकीयां बन्धकशक्तिं न ततो व्यावर्तयति।' (न्यायसुधा १.१.१)**

च बहुतरं व्यज्यते । न तु सर्वम् । [1]ज्ञानोत्तरमनुष्ठितेन निवृत्तकर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन [2]ज्ञानाभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोति ।।

अत्र च भाष्यकृतैव तत्र तत्र प्रमाणान्युक्तानि । अनेनैवाभिप्रायेण श्रुत्यादिषु मुक्तेर्ज्ञानमात्रसाध्यत्वं ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यते ।।

**भावदीपः**

**तथा च वक्ष्यतीति** ।। सप्तमे -

**'नाहं प्रकाशः सर्वस्य योगमाया समावृतः ।**

**मूढोऽयं नाभिजानाति'** (७.२५)

इति श्लोकव्याख्यानावसरे **'सामर्थ्योपायेन'** इत्यादिना भाष्यकृद्[3] वक्ष्यतीत्यर्थः ।। **तत्र तत्र प्रमाणानीति** ।। श्रुतिगीतातात्पर्यसूत्रभाष्यादौ तत्रतत्रेत्यर्थः ।। **अनेनैवाभिप्रायेणेति** ।। ज्ञानादेवाविद्याद्यशेषक्लेशनिवृत्तिविशिष्टबहुतरस्वरूपसुखाभिव्यक्तिरूप मोक्षो भवतीत्यभि-प्रायेण

**'तमेवं विद्वान्'**, **'दृष्ट्वैव तं मुच्यते'** इत्यादि श्रुतिषु,

**'कर्मणा बद्ध्यते जन्तुर्विद्यया च विमुच्यते'** (म.भा.१२.२४१.७)

इत्यादि स्मृतिषु

**'विद्यैव'**[4] (ब्र.सू.३.३.४८)

---

१. अत्र मुद्रितप्रमाणपद्धतिटिप्पण्यां विठ्ठलभट्टीये वाक्यरीतिरेवं दृष्यते -'तदुक्तं च गीताभाष्यटीकायां ......स्वरूपसुखं च बहुतरमभिव्यज्यते । नच सर्वज्ञानोत्तरमनुष्ठितं न निवृत्तकर्मणां प्रसङ्गः । परमेश्वरे मुक्तौ विषयानुत्पाद्य तद्भोगज्ञानानभिव्यङ्ग्यमपि स्वरूपसुखं व्यक्तीकरोतीति ।।' अत्र त्रुटिः स्यात् ।।

२. 'ज्ञानेनाभिव्यक्तम्' इति मातृकाद्वये पठ्यते ।

३. 'भाष्ये' इति पाठान्तरं सो-मातृकायाम्।

४. 'अत्र ज्ञानमेव मुक्तिहेतुरित्युच्यते । मुक्तिसाधनमिति प्रकरणादन्वेति । ब्रह्मज्ञानमेव मुक्तिसाधनं, न कर्म । कुतः ? निर्धारणात् । 'नान्यः पन्था अयनाय विद्यते' इत्यन्यनिरासेन ज्ञानस्यैव मुक्तिहेतुत्व-निर्धारणादित्यर्थः । 'कर्मणैव हि संसिद्धिम्' इत्यतोऽपि 'नान्यः पन्था' इत्यस्य प्राबल्यसूचकस्तुशब्दः। विद्यैवेत्युक्तिः विद्या कर्म वा इत्यनिर्णय इति न शङ्क्यमिति द्योतयितुम् । तेन 'भाक्तं वा' इत्युक्तावपि 'कर्मणैव' इत्युक्त्या प्राप्तविशेषशङ्कानिरासार्थत्वादस्यापौनरुक्त्यं ध्येयम् । एवेत्युक्त्यैव वाद्यन्तरोक्त-सर्वमुक्तिहेतूनां व्युदासो बोध्यः । स च विस्तृतोऽनुव्याख्याने ' तन्त्रदीपिकायाम् ।

इत्यादि सूत्रे च ज्ञानैकसाध्यत्वं, विमुक्ति[1]गतज्ञानानभिव्यक्तसुखविशेषस्य पूर्वकृत-कर्मसाध्यत्वाभिप्रायेण

'एतमात्मानमभिपश्य शान्तो भवेद् दान्तो
भवेद् अनुकूलो भवेद् आचार्यं परिचरेत्'

इत्यादिश्रुतिषु विहितत्वाच्च (आश्रमकर्मापि)[2] इत्यादि सूत्रादौ च ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यत इत्यर्थः ।।

( मुक्तस्य विषयानुभवशक्तिः ईश्वरप्रसादात् )

**भाष्यम्** — बहुत्वेऽप्यात्मसुखस्य पुनरिष्टत्वात् कर्मसुखे न विरोधः । अनुभव-शक्तिश्चेश्वरप्रसादात्[3] । श्रुतेश्च । नच शरीरपातात् पूर्वमेव तत्।।

'तत्र पर्येति' (छां.उ.८.१२.३),

'एतमानन्दमयमात्मानमुपसङ्क्रम्य' (तै.उ.३.१०)

इत्याद्युत्तरत्र श्रवणात् ।।

---

१. 'मुक्तिगत' इति सो मातृकायाम् ।

२. कंसान्तर्गतभागः अस्पष्टः मातृकायाम् ।

३. अत्र ब्र.सू भाष्ये विषयानुभवप्रकारो दर्शितः- विवृतं च भाष्यदीपिकायाम् ।

'नारायणाध्यात्मे च - मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः । चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ।। तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् । कुर्वन्ति भुञ्जते भोगांस्तदन्तर्बहिरेव वा ।। यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः' इति ।।

**भाष्यदीपिका-** ननु देहभावाभावयोर्विरोधस्य कः परिहारो जात इत्यतो जैमिनिम्रतं जड-देहाभावविषयम्, औडुलोमिमतं तु चितिमात्रदेहविषयमतो न विरोध इत्याशयेन अविरोधप्रकारं अपिशब्दसूचितस्मृत्या दर्शयति – नारायणेति।। 'मर्त्यं' विनाशिनं 'चितिमात्रात्मदेहिनः' केवलचिदात्मकस्वरूपदेहयुक्ताः ।। चः समुच्चये । नत्वदेहिनो चिदेहिनोऽनिन्द्रियाश्चेत्येवार्थः । अव्ययं विष्णुं प्रविष्टा इति सायुज्यभाज उच्यन्ते । अत एव 'तदङ्गानुगृहीतैः' भगवदङ्गानुगृहीतैरित्याद्युक्तिः। 'स्वाङ्गैः स्वरूपकरचरणादिभिः । नतु भिन्नैः विष्ण्वीयैर्वेत्येवार्थः । 'प्रवर्तनं' व्यापारं भुञ्जते चेति सम्बन्धः 'भोगान्' भोग्यान् 'तदन्तः' विष्णुदेहस्यान्तः बहिश्चेति सम्बन्धः । यथेष्टमेवेत्यन्वयः। 'परिवर्तन्ते' सञ्चरन्ति 'तस्य' विष्णोः 'अनुग्रहेरिताः' प्रसादेन प्रेरिताः तदिच्छया विषयीकृता इत्यर्थः । अनुग्रहैधिता इति पाठे तदभिवर्धिता इत्यर्थः । तस्यैवानुग्रहेरिता इत्यनेन ब्राह्मेणेति सूत्रखण्डस्य ब्रह्मणः प्रसादेनेत्यप्यर्थः सूचितः, अत एव प्रमेयदीपे अनुभवशक्तिस्त्वीश्वरप्रसादादित्यत्र ब्राह्मेणेति सूत्रं प्रमाणीकृतम् ।।

## प्रमेयदीपिका

ननु ज्ञानमात्रसाध्यं यत्स्वरूपसुखं तदेव बहुतरमस्ति । अतः कर्मसाध्यविषयभोगाभिव्यङ्ग्यसुखाङ्गीकारः किमर्थम्? इत्यत आह– **बहुत्वेऽपीति** ।।

**कर्मसुखे 'अङ्गीकृते'** इति शेषः । शरीरेन्द्रियरहितस्य मुक्तस्य कथं विषयानुभवे शक्तिः? इत्यत आह– **अनुभवेति** ।। तदुक्तम्-

**'ब्राह्मेण जैमिनिः'**[४] **(ब्र.सू.४.४.५)**इति।।

किञ्च **'कामरूप्यनुसञ्चरन्'(तै.उ.३.१०)** इत्यादि लीलाविग्रहग्रहणश्रुतेश्च मुक्तस्य विषयानुभवो युज्यत इत्याह– **श्रुतेश्चेति** ।। ननु यदेतदुदाहृतासु श्रुतिषु विषयेच्छादिकं श्रूयते तच्चरमशरीरपातात् पूर्वकालीनं किं न स्यात्? इत्यत आह– **नचेति** ।।

**'अस्माच्छरीरात् समुत्थाय...स तत्र पर्येति'**[५]**(छां.उ.८.१२.३),**

**'अस्माल्लोकात् प्रेत्य । ..एतमानन्दमयम्'**[६] **(तै.उ.३.१०)** इत्याद्युत्तरत्र श्रवणात् । **'इत्यादि'** इति क्रियाविशेषणम् ।।

---

४. 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति पूर्णपाठः ।। 'अत्र मुक्तस्य देहाभावप्रयुक्ताभोक्तृत्वं निरस्य भोक्तृत्वं साध्यते । मुक्तस्य स्वदेहाभावेऽपीशप्रविष्टस्य ब्रह्मसम्बन्धिना देहेन ग्रहवद्भोगोऽस्तीति जैमिनिर्मन्यते । कुतः ? 'ब्रह्मणा पश्यति ब्रह्मणा शृणोति' इति श्रुतौ तथोपन्यासात् । आदिपदस्य 'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति' इत्यादिस्मृतेः, 'गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् । इत्यादिपूर्वस्मरण ान्मुक्तस्यैतद्भविष्यति' इति स्मृत्युक्तयुक्तेश्चेत्यर्थः । श्रुतौ ब्राह्मदेहानुक्तेः स्मृत्युक्तिः । स्वयं देहहीनस्य कथमन्यदेहेन भोग इत्यतो युक्त्युक्तिः ।'' इति **तन्त्रदीपिकायाम्** ।

५. 'एवमेवैष ज्ञानी जीवः सम्प्रसादः सम्यक् भगवत्प्रसादयुक्तः अस्मात् शरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेण निजानन्दानुभवरूपेणाभिनिष्पद्यते । उक्तवैलक्षण्यमाह-स इति । यं प्राप्य मुक्तः अभूत् स परञ्ज्योतिशब्दोक्त उत्तमः पुरुषः । मुक्तो जीवः तत्र भगवल्लोके पर्येति परितः सञ्चरति' इति **छा.खण्डार्थे** ।

६. सः ब्रह्मा असमाल्लोकात् चरमत्वेन प्रसिद्धादेहात् प्रेत्य मुक्तः सन् इत्यर्थः ।..आनन्दमयमात्मानं नारायणम्, .. उपसङ्क्रम्य प्राप्य, कामान्नी अन्नाद्युपलक्षितकामितसमस्तभोगवान् कामरूपी कामितसमस्तरूपी भूत्वा इमान् प्रमाणप्रसिद्धान् लोकान् । लुक् प्रकाश इति धातोः प्रकाशरूपत्वान् मुक्ताः लोकशब्देनोच्यन्ते । यथोक्तमनुव्याख्याने- 'लोकाभिधाश्चापि यतो मुक्ताः प्रकाशरूपाः सततं च सर्वे' इति । तान् अनुतत्तद्योग्यतानुसारेण सम्यक् चरन् । णिजन्तमेतत् । चारयन् । चरगतिभक्षणयोः। गमयन् नियामयन्निति यावत् । यथोक्तमनुव्याख्याने-' मुक्त-स्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरस्सराणाम्' इति । इमान् लोकान् प्रसिद्धान् भूरादीन् अनुसञ्चरन् अप्रत्यक्षतया तत्र सञ्चारं कुर्वन् सन्नित्यप्यर्थमाहुः'- **श्रीनि.खण्डार्थे** ।

## भावदीपः

**तदुक्तमिति** ।। सूत्रकृतेत्यर्थः ।। सूत्रं पठति – **ब्राह्मेणेति** ।। ब्रह्मशरीरेणानुभवति मुक्त इत्यर्थः । **'उत्तरत्र श्रवणात्'** इत्यत्र 'कस्मात्' इत्यवध्यपेक्षायां देहत्यागादुत्तरत्रेति भावेन पूर्ववाक्योक्तिपूर्वं तद्वाक्यमाह– **अस्माच्छरीरादित्यादि** ।। छ ।।

**( महाभारते ऐक्योपदेशः नास्ति )**

**भाष्यम् — न चैकीभूत एव ब्रह्मणा सः ।**

**'मग्नस्य हि परेऽज्ञाने किन्न दुःखतरं भवेत्'**[१] (म.भा.१२.३०१.८३)

इत्यादिनिन्दनान्मोक्षधर्मे[२]।

---

१. (अ) **वि.त.नि.टीकायाम्** -'दर्शनादिभोगो अपि मोक्षे प्रमित इति भावेनाऽह - मग्नस्येति । परे अज्ञाने मग्नस्य सर्वथा रूपादिज्ञानशून्यस्य मुक्तस्य ज्ञानाभावाङ्गीकारे इति यावत् । दुःखतरं दुःखातिशयो न भवेत् किम् । भवेदेव । अन्धादौ दर्शनात् । नच दुःखं युक्तम् । अतो अस्त्येव रूपादिज्ञानमित्यर्थः ।।' ।। **अत्र भावदीपः** -'मोक्षे प्रमित इति ।। विपर्यये पर्यवसानेन तस्य प्रमितत्वावगमादिति भावः । द्वितीये गीताभाष्यटीकायां तु -' इत्युक्त्वा गीताभाष्यटीकावचनान्युदाहृतानि ।।

(आ) 'प्रवृत्तिधर्ममेवाहं मन्ये भरतसत्तम' इति भा.ता.४.२१.२७ पूर्णवचनमुदाहृतम् ।।

२. (अ) ब्रह्मपुराणे २४४ अध्याये अयं भाग उपलभ्यते ।

(आ) अत्र नरहरितीर्थीये शान्तिपर्वस्थसमग्रप्रकरणमुदाहृतम्। (३०१ अध्यायः)

सत्त्वं वहति शुद्धात्मन् परं नारायणं प्रभुम् । प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ।।

परमात्मानमसाद्य तद्भूता यतयोमलाः(तद्भूतायतना)।

अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभितः,(वा विभो)।।

परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् । इति ...तथाहि तद्वाक्यम्(युधिष्ठिरवाक्यमिति यावत्)

मोक्षे दोषो महानेषः प्राप्य सिद्धिं गतानृषीन् । यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ।।

प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप । मग्नस्य हि परेज्ञाने किं न दुःखतरं भवेत् ।। इति भीष्मवचनम्-

तथाऽपि तत्त्वं परमं शृणु सम्यङ्मयेरितम् । बुद्धिं च परमां यत्र कापिलानां महात्मनाम् ।।

इन्द्रियाण्यपि बुद्ध्यन्ते स्वदेहं देहिनो नृप । करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः।।... इति

आत्मना विप्रहीणानि काष्ठरूप्यसमानि तु । विनश्यन्ति न सन्देहः फेना इव महार्णवे ।।

इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन। सूक्ष्मश्चरति सर्वत्र नभसीव समीरणः।।

स पश्यति यथान्यायं स्पर्शात् स्पृशति चाभिभो । बुद्ध्यमानो यथा पूर्वमखिलेनेह भारत।।.. इति

परिहारे पृथग् भोगाभिधानाच्च ।।

## प्रमेयदीपिका

**अद्वैतवादिनस्त्वाहुः** । ब्रह्मैकमेव तत्वम् । तदेवोपाधिभेदभिन्नं जीवभावं प्रतिपद्यते। गगनमिव घटाद्युपाधिभिन्नं घटाकाशादित्वम् । तत्र यस्य जीवस्य ज्ञानमुत्पन्नं स ब्रह्मणैकीभवति । घटनाशे घटाकाश इव महाकाशेनेति । तत्रैके जीवब्रह्मभेदस्योपाधेश्च मिथ्यात्वं मन्यन्ते । अन्ये च सत्यत्वम् । यदा च स ज्ञानी ब्रह्मणैकीभूतः तदा सकलस्य क्रियाकारकफललक्षण[1]भेदस्य प्रविलयात् कुतो विषयभोगः? यदर्थं सुकृतस्यावस्थानमिति ।।

तद्दूषयति– **न** चेति ।। एवशब्देन भेदाभेदौ निराकरोति ।।

**'परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।**

**अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभिभोः ।'**

इति भीष्मेण तस्मिन् भूताः तद्भूता इत्यभिप्रायेणोक्ते मुक्तास्तद्ब्रह्मैव भूता इत्यर्थान्तरमाशङ्क्य युधिष्ठिरेण–

**'आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ'(म.भा.)**

इति विकल्प्य पृष्टम् । यदि ज्ञानिनो मुक्तौ ब्रह्मणैकीभवन्ति तदैवं वाच्यम् । किं ते संसारेऽनुभूतं दुःखं स्मरन्त्युत नेति । आद्यस्य दूषणमुक्तम् –

इन्द्रियाणीह सर्वाणि स्वे स्वेस्थाने यथाविधि। अनीशत्वात् प्रलीयन्ते सर्पाहतविषा इव।।
इन्द्रियाणां हि सर्वेषां स्वस्थानेष्वेव सर्वशः। आक्रम्य गतयः सूक्ष्मश्चरत्यात्मा न संशयः।।
सत्वस्य च गुणान् कृत्स्नान् रजसश्च गुणान् पुनः। गुणांश्च तमसः सर्वान् गुणान् बुद्धेश्च भारत।।
गुणांश्च मनसस्तद्वन्नभसश्च गुणांस्तथा । गुणान् वायोस्तु धर्मात्मन् तेजसश्च गुणान् पुनः।।
अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि । सर्वात्मना गुणैर्व्याप्य क्षेत्रज्ञः स युधिष्ठिर।।.. इति
आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे । शिष्या इव महात्मानमिन्द्रियाणि च तं विभो ।।..
प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् । परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम् ।।..इति
विमुक्तः पुण्यपापेभ्यः प्रविष्टं तमनामयम् । परमात्मानमगुणं न निवर्तति भारत ।।..इति
शिष्टं तत्र मनस्तात इन्द्रियाणि च भारत ।आगच्छन्ति यथाकालं गुरोः सन्देशकारिणः।।

इत्यादि।।

१. 'लक्षणभेदस्य' इति वे-ग्रं पाठः मातृकाद्वयेपि। ' लक्षणस्य भेदस्य' इति प्रचलितः ।

**'मोक्षे दोषो महानेषः प्राप्य सिद्धिं गतानृषीन् ।**
**यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ।।'** (म.भा.)इति ।

पूर्वं[१] **सिद्धिं** गतान् ऋषीन् प्राप्य **परेऽपि यतयः यदि तत्र** मुक्तौ, विज्ञाने विज्ञानेन प्रागनुभूतदुःखस्मरणेन युक्ता वर्तन्ते तर्हि मोक्षे महानेष प्रसिद्धो **दोषः** इति[२] । दोषं च भाष्यकार एव[३] स्फुटीकरिष्यति । द्वितीयोऽपि दूषितः– **मग्नस्य हीति** ।। पूर्वानुभूतस्मरणाभावे[४] **परेऽज्ञाने मग्नस्य तस्य**[५] चेतनस्य दुःखतरं दुःखातिशयो न भवेत् **किं**? भवेदेवेति । तदेवं मोक्षधर्मेऽस्य पक्षस्य निन्दितत्वात् न ज्ञानी **ब्रह्मणैकीभूतः** इत्यर्थः ।।

**( जीवस्य सूक्ष्मेन्द्रियैः भोगः )**

ननु पूर्वपक्षस्थेन युधिष्ठिरेण निन्दितत्वेऽपि कथं भीष्मेणोक्तमसत् स्यात्? परिहारे तदुक्त दोषस्योद्धारसम्भवादित्यत आह– **परिहार** इति।। न मयैतदुक्तम् । किन्तु त्वमन्यथा गृहीत्वा दूषितवानसीत्याशयेन परिहारे भीष्मेण परमात्मनः पृथक्त्वेन मुक्तानां भोगाभिधानाच्च न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः । तथा हि भीष्मवचनम् –

**'तथाऽपि तत्त्वं परमं शृणु सम्यङ् मयेरितम् ।**
**इन्द्रियाणि च बुद्ध्यन्ते स्वदेहं देहिनो नृप ।**
**करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः'** (म.भा.) इति।।

यद्यपीदं दुर्बोधम्, तथाऽपि, स्वः स्वरूपभूतो देहः यस्य तं **स्वदेहं** परमात्मानं, **मुक्तान्** अन्यान् **देहिनः** विषयांश्च मुक्तस्येन्द्रियाणि **बुद्ध्यन्ते** । किं तानि कर्तॄणि? नेत्याह– **करणानीति**। कस्तर्हि पूर्वार्धस्यार्थः? इत्यत आह **'सूक्ष्मः'** इति ।।[६]

---

१. 'पूर्वे' इत्यपि पाठः क्वचित् मातृकायाम् । भावदीपे पूर्वं, पूर्वे इति द्वयमपि पठ्यते ।
२. इतिः मातृकाद्वये पठ्यते ।
३. एवकारः मातृकाद्वये, वे-ग्रं पाठे च न पठ्यते । एकस्यां मातृकायामेव ।
४. 'स्मरणाद्यभावे'-वे-ग्रं,मातृकायां च ।
५. तस्य इति मातृकास्वेव । प्रचलितपाठे नास्ति ।
६. अत्र 'सूक्ष्मो जीवस्तैस्तैरिन्द्रियैः पश्यतीति भोगोक्त्या प्रमितो भोग इत्युक्तम्' इति इदं वाक्यमुदाहृतं च **वि.त.नि.राघवेन्द्रीये** (मा.रा.सं.स.प्रकाशनम्-पृ-६९९) ।

## भावदीपः

**उपाधिभेदेति** ।। अविद्याभेदेति वा अन्तःकरणभेदेति वा अर्थः ।। **'इति पृष्टम्'** इत्युक्तं प्रश्नवाक्यार्थं[1] व्यनक्ति– **यदीति** ।। **'मोक्ष'** इत्यादि श्लोकार्थमाह – **पूर्वे (पूर्वं) सिद्ध-मित्यादिना** ।। **दोषं च भाष्यकार इति** ।। 'आसं दुःखी नासम्' इत्यादिनाऽनुपदमेव स्फुटीकरिष्यतीत्यर्थः ।। **'तथाऽपि'** इति श्लोकार्थमाह– **यद्यपीत्यादिना** ।। [2]इदं तद्भूता यत्र यत्र यतय इति मयोक्तमित्यर्थः ।। **'स्वदेहम्'** इत्युपलक्षणं मत्वाऽऽह- **मुक्तानन्यानिति** ।। **'देहिनः'** इत्युपलक्षणमित्युपेत्योक्तम् – **विषयांश्चेति** ।। **कस्तर्हीति** ।। इन्द्रियाणामात्मनः कारणत्वे **'इन्द्रियाणि च'** इति पूर्वार्धस्य कोऽर्थः? इत्यत उक्तमित्यर्थः ।। स सूक्ष्म आत्मा तैरिन्द्रियैः पश्यतीत्यर्थ इत्यर्थः ।।

### ( ज्ञानिनो न ब्रह्मैक्यम् )

**भाष्यम् — शुकादीनां पृथग्दृष्टेश्च ।**

**'जगद्व्यापारवर्जम्'**[3] **(ब्र.सू.४.४.१७)**

**इत्यैश्वर्यमर्यादोक्तेश्च ।**

**'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'** (१४.२) **इति च ।**

**उपाधिनाशे नाशाच्च प्रतिबिम्बस्य ।।**

## प्रमेयदीपिका

इतश्च न ज्ञानिनो ब्रह्मैक्यमित्याह– **शुकादीनामिति** ।। अनेन वाक्यत्रयेण मुक्तानां ब्रह्मभेदे क्रमेण प्रत्यक्षानुमानागमा उपन्यस्ताः । तत्र प्रत्यक्षं न बाधकम् । शुकादयोऽपि यद्यपि ज्ञानिनः । तथाऽपीदानीमविनष्टोपाधित्वात् तन्निमित्तभेदवत्तया दृश्यन्ते । प्रारब्धकर्मक्षयादुपाधि-नाशे ब्रह्मैव संवृत्ता भूताः[4] न पृथग् दृश्यन्त इत्यत आह– **उपाधीति** ।। जीवास्तावद्

---

१. अत्र समस्तपदं मन्त्रालयमातृकायाम् ।

२. अस्पष्टम् । मातृकात्रयेऽप्येवमेव । 'यत्र यत्र' इति च सो मातृकायामेव ।

३. 'अत्र मुक्तस्य भोगेयत्ता साध्यते । सृष्ट्यादिजगद्व्यापारवर्जं कामं मुक्त आप्नोति । ननु 'सर्वान् कामान् आप्त्वा अमृतः' इति श्रुत्या सृष्ट्यादिकामानपीत्यर्थः ।' इति **तन्त्रदीपिकायाम् ।**

४ . 'भूताः' इति एकस्यां मातृकायामेव पठ्यते, नान्यत्र ।

ब्रह्मणः प्रतिबिम्बा इति समर्थितम् । तत्र यदि तदीयस्योपाधेर्नाशोऽङ्गीक्रियते तदा तेषां नाशः प्रसज्यते । दर्पणाद्युपाधिनाशे मुखादिप्रतिबिम्बनाशदर्शनादित्यर्थः ।।

### भावदीपः

**वाक्यत्रयेणेति** ।। **'शुकादीनाम्'** इत्याद्युपरितनवाक्यत्रयेणेत्यर्थः । **'जगद्व्यापारवर्जम्'** इति सूत्रे ऐश्वर्यमर्यादोक्त्या मुक्तानां न नियमादैश्वर्येणेश्वरेणैकीभाव इत्यर्थः । विरुद्धधर्मवत्त्वरूपानुमानमनेनोक्तं भवति ।। **संवृत्ता इति** ।। सम्पन्ना इत्यर्थः । **समर्थितमिति** ।।

**'युक्ताश्च बिम्बधर्माः प्रतिबिम्बेऽविरोधे । तत्ता च रूपं रूपम्'** (२.२४) इत्यादि ग्रन्थेनेति भावः ।।

**भाष्यम् — न चैकीभूतस्य पृथग्ज्ञाने मानं पश्यामः । आसं दुःखी नासमिति ज्ञानविरोधाच्चेश्वरस्य । अनेन रूपेणेति च । भेदाभावात् ।**

### प्रमेयदीपिका

यच्चोक्तं शुकादयोऽविनष्टोपाधित्वाद् ब्रह्मणः पृथग् दृश्यन्त इति । तदप्यसदित्याह– **न चेति** ।। वस्तुत **एकीभूतस्य** उपाधिनापि **पृथग्ज्ञाने न मानं पश्यामः** । गगनादिदृष्टान्तस्यासम्मतत्वात् सत्योपाधिभेदमतस्य चेदं दूषणम् ।।

किञ्च, औपाधिक एव जीवब्रह्मणोर्भेदो वास्तवं त्वैक्यमिति वदन् प्रष्टव्यः । किं ब्रह्म निर्दुःखं स्वरूपमेवानुसन्धत्ते न जीवगतं दुःखम्, तत्तु जीव एवानुसन्धत्त इति पक्षः[1]? उत तदपीति। आद्यं दूषयति– **न चैकीभूतस्येति** ।। हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वदर्शनादिति भावः । द्वितीयं निराकरोति– **आसमिति** ।। लङत्र सर्वकालोपलक्षणार्थः । जीवरूपेण दुःख्यासं स्वरूपेण तु नेति व्यवस्थयाऽनुसन्धानान्न विरोध इत्यत आह– **अनेनेति** ।। **इति च** 'न युक्तम्' इति शेषः । कुतः? इत्यत आह– **भेदेति** ।। उपाधेरभेदकत्वस्योक्तत्वादिति भावः ।।[2]

**अपरे** तु ब्रह्मणैक्यमापन्नस्य मुक्तस्य पूर्वदुःखानुस्मरणमस्ति न वा? नेति पक्षे **'मग्नस्य हि '** इत्युक्तो दोषः । आद्ये किमसौ पृथक् स्मरत्युत ब्रह्मात्मक एव? प्रथमस्य दूषणम्– **न**

---

१. 'पक्षः' इति एकस्यां मातृकायां, मुद्रिते च पठ्यते । मातृकाद्वये प्राचीनमुद्रिते च नास्ति ।

२. उपाधिखण्डने उपाधेः केवलज्ञापकत्वमेव न कारकत्वमस्तीति विवृतम् ।

**चैकीभूतस्येति** ।। द्वितीयस्य 'आसम्' इत्यादीति व्याचक्षते । अनेन 'मोक्षो दोषो महानेषः' इत्युक्तो दोषः प्रदर्शितो भवति ।।

### भावदीपः

**असम्मतत्वादिति** ।। तत्राप्युपाधिज्ञाप्यस्वाभाविकांशानामङ्गीकारादिति भावः । वक्ष्यमाणदूषणघटनायाऽह–**सत्योपाधीति** ।। **तदपीति** ।। 'अनुसन्धत्ते' इत्यनुषङ्गः । **उक्तत्वादिति** ।। 'नचैकीभूतस्य पृथग् ज्ञाने मानम्' इत्यत्रोक्तत्वादित्यर्थः ।। **अनेनेति** ।। 'आसं दुःखी नासम् ' इत्यनेनेत्यर्थः ।।

### ( बिम्ब-प्रतिबिम्बयोरैक्यं नास्ति )

**भाष्यम् — नच प्रतिविम्बस्य विम्बैक्यं लोके पश्यामः । उपाधिनाशे मानं वा ।**
**'मग्नस्य हि परेऽज्ञाने' इति दुःखात्मकत्वोक्तेश्च**

**'यावदात्मभावित्वात्'**[१] **(ब्र.सू.२.३.३०)**

**इत्युपाधिनित्यताऽभिधानाच्च ।**

**अतोऽन्यवचनं प्रतीयमानमप्यौपचारिकम् ।।**

### प्रमेयदीपिका

ननु 'उपाधिनाशे नाशाच्च प्रतिबिम्बस्य' इति यदुक्तं तदसत् । भेदे हि बिम्बप्रतिबिम्बयोरेतत्स्यात् । नचैवम् । किन्तु बिम्बमेव प्रतिबिम्बम् । तदेवेदमिति प्रत्यभिज्ञानात्।

'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्।।'

---

१. 'अत्र जीवस्वरूपानुत्पत्तितदुपाध्युत्पत्तिश्रुत्योरुपाध्युत्पत्तौ जीवानुत्पत्त्ययोगादिति प्राप्तविरोधो निरस्यते । चः समुच्चये । दर्शनाच्चेत्यन्वेति । उपाधेश्चेति वा । ज्ञस्येत्यस्ति । चः समुच्चये । दर्शनाच्चेत्यन्वेति । उपाधेश्चेति वा । ज्ञस्येत्यस्ति । आत्मेति ब्रह्मोच्यते । ज्ञस्य जीवस्य तदुपाधेश्च यावदात्मभवित्वात् यावत्परमात्मभावित्वान्न दोषः । 'सोऽनादिना पुण्येन पापेनानुबद्धः' इत्यादिना अनादिपुण्यादिसम्बन्धबोधकश्रुत्यप्रामाण्यदोषो नेत्यर्थः । कुतः? तद्दर्शनात् स्मरणाच्च । 'नित्यः परो नित्यो जीवः' इति श्रुतिः, 'आत्मा नित्यः सुखःदुःखे त्वनित्ये' इति स्मृतेश्चेत्यर्थः । 'अविनष्टा एवोत्पद्यन्ते' इति उपाध्युत्पत्तिवचनं तु बाह्योपाधिविषयमिति भावः । 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च' इति स्मृतेः ।' **तन्त्रदीपिकायां राघवेन्द्रतीर्थाः ।**

इति स्मृतावुद्यदादाविव वारिस्थप्रतिबिम्बेऽप्यादित्यशब्दप्रयोगात् । भेदस्तु दर्पणाद्युपाधिकृतः । तथाचोपाधिनाशे भेद एव नश्यति । प्रतिबिम्बस्य कुतो नाशः? एवं जीवस्यापीत्याशङ्क्य प्रत्यभिज्ञानं तावदसिद्धमित्याह– **न** चेति ।। **न पश्यामः** न प्रत्यभिजानीमः । प्रत्युत [1]प्रत्यक्पराग्भावादिना तयोर्भेदमेव पश्यामः इति चार्थः।।

यच्चोक्तं जीवब्रह्मणोः बिम्बप्रतिबिम्बयोरौपाधिको भेद इति तन्नास्माकमनिष्टम् । किन्तु परस्यैव । जीवोपाधिनाशे प्रमाणाभावेन नित्यत्वात् । तन्निमित्तस्यापि भेदस्य मुक्तौ स्थितेरित्याशयवानाह– **उपाधीति** ।। 'न पश्यामः' इत्यनुवर्तते । न केवलमुपाधिनाशे प्रमाणाभावः । किन्तु तन्नाशाङ्गीकारे बाधकं चास्तीत्याह– **मग्नस्येति** ।। उपाध्यभावे स्मरणादिविलोपात् । न केवलमेतावत् । उपाधिनित्यत्वे प्रमाणं चास्तीत्याह– **यावदिति** ।।

अस्तु तर्ह्युदाहृतं स्मृतिवाक्यं बिम्बप्रतिबिम्बयोरैक्ये प्रमाणमित्यत आह– **अत** इति ।। प्रत्यक्षेण भेदस्य प्रतीयमानत्वात् । **'प्रतीयमानमपि'** इत्यनेन प्रत्यभिज्ञायामिव वचनस्वरूपे न विवादोऽस्तीत्याह । **'वारिस्थम्'** इति वचनं न परस्य मुख्यं सम्भवति । अनौपचारिकैः सहपाठेऽपि बाधकवशादौपचारिकत्वं **'ब्रह्मज्ञानेन वा मुक्तिः'** इत्यादौ दृष्टमिति ।।

**भावदीपः**

**स्मृतिवाक्यमिति** ।। **'नेक्षेत'** इति स्मृतिवाक्यमित्यर्थः । 'अतः' शब्दार्थः– **प्रत्यक्षेणेत्यादि** ।। अपिपदं भिन्नक्रममुपेत्योक्तम् – **प्रतीयमानमपीति** ।। **न परस्य मुख्यमिति** ।। **'विम्वभूतात्'** इत्यस्य साक्षाद्वारिस्थत्वाभावादित्यर्थः । वारिस्थस्यैव औपचारिकत्वोक्त्या 'उद्यदादित्याद्यनौपचारिकात्' इत्यस्येह [2]सहपाठविरोध इत्यत आह– **अनौपचारिकैरिति** ।। भेद-प्रत्यक्षरूपबाधकवशादित्यर्थः ।। **इत्यादाविति** ।। **'प्रयागमरणेन** वा । **अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ'** इत्यत्रेत्यर्थः । विवरिष्यते चैतदुत्तराध्याये ।।

**( मुक्तभेदे प्रत्यक्षप्रमाणम् )**

**भाष्यम् —** दृष्टाश्च ते भगवतो भिन्ना नारदेन । प्रतिशाखं च 'स एकधा' इत्यादिषु भेदेन प्रतीयन्ते । विरोधे तु युक्तिमतामेव बलवत्त्वम् । युक्तयश्चात्रोक्ता

---

१. 'प्रत्यग्भावादिना' इत्येव कचिन्मातृकायाम् ।

२. 'वारिस्थत्वस्यौपचारिकत्वोक्तौ उद्यदादित्यादित्याद्यनौपचारिकादित्यनेन सहपाठविरोध' इति सो पाठः ।

**'मग्नस्य हि'** इत्यादयः । अतो जले जलैकीभाववदेकीभावः ।।

**प्रमेयदीपिका**

एवं **'शुकादीनाम्'** इत्युक्तं प्रत्यक्षमुपपादितम् । अधुना आस्तां तावदुपपादनसापेक्षं प्रत्यक्षम् । तन्निरपेक्षं चास्तीत्याह– **दृष्टाश्चेति** ।। **'ते'** निवृत्तसकलकर्माणो मुक्ताः । एतच्च मोक्षधर्मे स्पष्टमुक्तम् । प्राक् मुक्तेश्वरभेदे स्मृतिरुदाहृता । श्रुतिं चोदाहरति– **प्रतिशाखं चेति** ।।

ननु भेद इवाभेदेऽपि **'परेऽव्यये सर्व एकीभवन्ति'** इत्यादिवाक्यानि सन्ति । तत्कथं निर्णयः? इत्यतः सामान्यन्यायं तावदाह– **विरोधे त्विति** ।। बलवद्विरोधेन दुर्बलं बाध्यत इति भावः । ततः किं प्रकृते? इत्यत आह– **युक्तयश्चेति** ।। **अत्र** भेदपक्षे । उपलक्षण-मेतत्। प्रत्यक्षानुकूल्यं च भेदवाक्यानां प्राबल्याय ग्राह्यम् । तर्हि **'एकीभवन्ति'** इत्यस्य का गतिः? इत्यत आह– **अत** इति ।। उभयत्र एकीभावशब्देन तद्वादिवाक्यं गृह्यते । स्थानैक्य-विषयमैक्यवाक्यमित्यर्थः । इयं च रूढलक्षणेति न प्रयोजनमन्वेषणीयमिति दृष्टान्तोक्तिः ।।

**भावदीपः**

**उपपादनेति** ।। 'उपाधिनाशे नाशाच्च' इत्यादिनोक्तरीत्येति भावः ।। **स्मृतिरिति**।। 'इदं ज्ञानम्' (१४.२) इति स्मृतिरुदाहृतेत्यर्थः ।। **उभयत्रेति** ।। दृष्टान्ते दार्ष्टान्तिके चेत्यर्थः ।। **'एवं मुनेर्विजानत आत्मा भवति गौतम'** इति तादृगेवेति भाष्योक्तवाक्यस्य शेषः[1] । **'यथा नद्यः'** इत्यस्य तु **'समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति । स समुद्र एव भवति'** इति शेषः ।।

**भाष्यम् —** उक्तं च - **'यथोदकं शुद्धे शुद्धम्'** (कठ.४.१५),

**'यथा नद्यः'** (आथ.३.४.८) इत्यादौ ।

**तत्राप्यन्योन्यात्मकत्वे वृद्ध्यसम्भवः । अस्ति चेषत् समुद्रेऽपि द्वारि । महत्त्वाद् अन्यत्रादृष्टिः ।**

**'ता एवापो ददौ तस्य स ऋषिः शंसितव्रतः'**

**इति महाकौर्मे समर्थानां भेदज्ञानाच्च ।।**

---

१. 'वाक्यशेषः' इति पाठान्तरम् ।

**प्रमेयदीपिका**

न केवलमियं गतिर्न्यायप्राप्ता । किन्तु श्रौती चेत्याह– **उक्तं चेति** ।। उदकेऽप्यैक्यादसम्मतो दृष्टान्त इत्यत आह– **तत्रापीति** ।। नास्त्येव समुद्रे वृद्धिः। अनुपलम्भादित्यत आह- **अस्ति चेति** ।। **समुद्रेऽपि** 'वृद्धिः' इति शेषः । अनुपलम्भस्यासिद्धिमाह– **द्वारीति** ।। नदीनां द्वारि 'दृश्यते च' इति शेषः । अन्यत्र कुतो न दृश्यते? इत्यत आह– **महत्त्वादिति**।। समुद्रोदकस्य **महत्त्वात्** ।।

न केवलं वृद्धि[1]लिङ्गकादनुमानादुदके भेदसिद्धिः[2] । किं तर्हि? प्रत्यक्षादपीत्याह– **ता एवेति** ।। 'या इन्द्रकमण्डलोरादाय स्वकमण्डलूदके क्षिप्ताः **ता एवापस्तस्य** इन्द्रस्य ददौ वसिष्ठः' इति महाकौर्मवचनात् समर्थानां वसिष्ठादीनां जले भेददर्शनाच्च । भेदादर्शने विभज्य कथं दद्यात्? इति ।।

**भाष्यम् — 'नैव तत् प्राप्नुवन्त्येते ब्रह्मेशानादयः सुराः ।**
**यत् ते पदं हि कैवल्यम् ।।'[3]**

**इति निषेधाच्च नारदीये ।**

**सविचारश्च निर्णयः कृतो मोक्षधर्मेषु । बलवांश्च सविचारो निर्णयो वाक्यमात्रात्। अतो**

**'यत्र नान्यत् पश्यति'[4] (छां.उ.७.२४.१)**

**इत्याद्यपि तदधीनसत्तादिवाचि । अन्यथा कथमैश्वर्यादि स्यात्? न च तन्मायामयमित्युक्तम् । अन्यथा कथं तत्रैव 'स एकधा' इत्यादि ब्रूयात् ।।**

१. 'लिङ्गादनुमानात्'-वे-ग्रं ।

२. 'उदकभेदः सिद्धः'- इति मातृकायाम् ।

३. (अ) ब्रह्मेशानादिशब्देन मुक्तामुक्ता गृह्यन्ते । सङ्कोचे कारणाभावात् । यत्कैवल्यं सर्वोत्तमत्वम्' तत्त्वोद्योतटीकायाम् ।

(आ) 'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते । तद्यत् स्वभावः कैवल्यं स भवान् केवलो हरे' इति ब्र.सू.भाष्ये, तत्त्वोद्योते , वि.त.निर्णयेऽपि उ. स्कान्दवचनम् ।।

४. 'भूम्नो महिमानमाह-यत्रेति । यस्मिन् वस्तुनि ज्ञाते अनयत्र अन्यद् वस्तु स्वातन्त्र्येण न पश्यति' इति खण्डार्थे राघवेन्द्रीये.

### प्रमेयदीपिका

इतश्च मुक्तभेदवाक्यमेव प्रबलम् । अभेदनिषेधात्मकत्वादित्याह– **नैवेति**।। **कैवल्यं** सर्वोत्तमत्वम् । इतोऽपि भेदपक्षो बलवानिति वक्तुमाह– **सविचारश्चेति** ।। पूर्वोत्तर-पक्षबलाबलचिन्ता विचारः । **निर्णयः** जीवेशभेदावधारणम् । **'वहवः पुरुषा ब्रह्मन्'** इत्यादिनेति शेषः । न हि भिन्नयोर्मुक्तावभेदः सम्भवतीति भावः । ततः किम्? इत्यत आह– **वलवांश्चेति** ।। 'निर्णयश्च' इति सम्बन्धः । वाक्यमात्रात् 'एकीभवन्ति' इत्यादेः । कथं तर्हि **'यत्र'** इत्यादि भूमलक्षणमुच्यते? इत्यत आह– **अत** इति ।। सविचारनिर्णयविरोधादेव विद्यमानस्याप्यन्यस्य भगवदधीनसत्तादि वाचि ।।

इतश्चैवमित्याह– **अन्यथेति** ।। यद्यन्यदेव न स्यात् तर्हि **कथमीश्वरस्य** सर्वेश्वरत्वसार्वज्ञादिकं श्रुत्यादिसिद्धं स्यात् । मायामयमेव तत् श्रुत्यादावुच्यत इत्यत आह– **न चेति** ।। बाधकान्तरमाह– **अन्यथेति** ।। यदि भूमाऽद्वितीयः स्यात् तर्हि कथं तज्ज्ञानान्मुक्तस्य **'स एकधा'** इत्यादि भेदेनावस्थानं श्रुतिर्ब्रूयात्? न तद् भूमज्ञानफलम्[1]। किन्तु सगुणविद्योपासनफलमित्यत उक्तम् – **तत्रैवेति** ।। भूमप्रकरण एव ।।

### भावदीपः

**'वहवः पुरुषाः'** इति सविचारनिर्णयेन संसारभेदसिद्धावपि मुक्तौ किमायातम्? इत्यत आह– **नहि भिन्नयोरिति** ।। **'यो वै भूमा तत् सुखम्'** इति पूर्वशेषे प्रकृतत्वादाह– **यत्रेत्यादि भूमलक्षणमिति** ।।

( मुक्तशरीरविचारः )

**भाष्यम् — नच - 'न ह वै सशरीरस्य'**[2] **(छा.उ.८.१२.१)**

**इत्यादिविरोधः ।**

**वैलक्षण्यात् तच्छरीराणाम् । अभौतिकानि हि तानि नित्योपाधिविनिर्मितानि**

---

१. मातृकायामेव 'फलम्' इति पाठः । 'लक्षणम्' इति प्रचलितपाठः ।

२. श्रुतिरियं ४.४.१० ब्र.सू.भा.तत्वप्रकाशिकायां विस्तृतया विवृता ।। तथा,४-४-१५ टीकायां,-भावदीपे च विशेषः द्रष्टव्यः ।।

**ईश्वरशक्त्या[1] । तथा चोक्तम् -**

**'शरीरं जायते तेषां षोडश्या कलयैव तु'**

**इत्यादि नारायणाष्टाक्षरकल्पे ।**

**वदन्ति च लौकिकाद्वैलक्षण्येऽभावशब्दम् -**

**'अप्रहर्षमनानन्दम्' 'सुखदुःखबाह्यः'**

**इत्यादिषु ।।**

## प्रमेयदीपिका

ननु नारदेन ये श्वेतद्वीपे भगवतो भिन्ना दृष्टास्ते मुक्ता एव न भवन्ति । सशरीरत्वात्। सशरीराणामपि मुक्तत्वाङ्गीकारे– 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इत्यादि श्रुतिविरोध इत्यत आह– **नचेति** ।। कुतो न? इत्यत आह– **वैलक्षण्यादिति** ।। किं तदस्मदादिशरीरेभ्यस्तेषां वैलक्षण्यम्? इत्यत आह– **अभौतिकानीति** ।। अजडानीत्यर्थः। तर्हि किमात्मकानि? इत्यत आह– **नित्येति** ।। विकारित्वाद् विनाशस्स्यादित्यत उक्तम्– **ईश्वरशक्त्येति**।। कुत एतत्? इत्यत आह– **तथा चेति**।। नित्योपाधिरेव षोडशी कला।।

एतदुक्तं भवति । यच्छ्रुतौ सशरीरस्य दुःखानपहतिवचनं तत् कर्माधीनजडशरीराभिप्रायम् । श्वेतद्वीपे नारदेन दृष्टानि तु शरीराणि चिन्मयानि । जडान्यपि न कर्माधीनानि । अतो न दुःखकारणानि । तथाच न तेषां सशरीराणामपि मुक्तत्वे श्रुतिविरोध इति । यदि मुक्ताः सशरीरास्तर्हि कथं तेषु **'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः'** (ब्र.सू.भा.

---

१. **ब्र.सू.भाष्ये अत्र विशेष उक्तः -** ब्रह्मवैवर्ते च -'स्वप्नस्थानां यथा भोगो विना देहेन युज्यते । एवं मुक्तावपि भवेद् विना देहेन भोजनम् ।। स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवद् भुक्त्वा त्यागः कदाचन ।। इति ।। १४ ।। अत्र भाष्यदीपिकायां कश्चिद् विशेषः- बृहद्भाष्यरीत्या तु सूक्ष्मस्यैव स्वरूपदेहस्य मुक्तौ वृद्ध्यङ्गीकारेण भोगः । तदुक्तं बृहद्भाष्ये षष्ठाध्याये -अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तथापि सुमहत्तेजः करोति भगवान् महत् ।। अतो नवतरं चैतत् ब्रह्मादीनां करोत्यजः ।। इति ।। व्यासतीर्थैः अल्पं परिमाणवत् मुक्तौ रूपं सुमहत् तेजो महत् करोतीत्यर्थ इति । अत्र स्वरूपदेहस्य महत्त्वं च स्वस्वचरमशरीरसमत्वेन तूलपिण्डवत् प्रचय एव । नच प्रचयशब्दितविकाराङ्गीकारे अनित्यत्वापत्तिः । ईश्वरशक्त्या तदभावोपपत्तेः । उक्तं हि गीताभाष्ये 'शरीरं जायते तेषाम्' इति द्वितीयाध्यायव्याख्यानावसरे । प्रमेयदीपे तु विकारित्वाद् विनाशः स्यादित्यत उक्तम् – ईश्वरशक्त्येतीति ।।'

४.४.१०.उ.कौण्डरन्यश्रुतिः) इति शरीराभाववचनमित्यत आह– **वदन्ति चेति** ।। लौकिकाद्वैलक्षण्ये सति । 'तद्वदत्रापि' इति शेषः ।।

**भावदीपः**

**मुक्तत्वे श्रुतिविरोध इति** ।। 'न ह वै सशरीरस्य' इति श्रुतिविरोधो नेत्यर्थः ।।

**भाष्यम् — निरुक्त्यभावाच्च न तानि शरीराणि । तथाहि श्रुतेः ।**

**'अशारीर्ती तच्छरीरमभवत्'**

**इति । न हि तानि शीर्णानि भवन्ति ।**

**'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च'**(१४.२)

**इत्यादि वचनात् ।**

**साम्यात् प्रयोगः । प्रयोगाच्च–**

**'अनिन्द्रिया अनाहारा अनिष्पन्दास्सुगन्धिनः'**[१](म.भा.१२.३३९.१३)

**'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्'**[२](भाग.७.१.३४)

**इत्यादि दृष्टदेहेष्वेव ।।**

**प्रमेयदीपिका**

इतश्चाशरीरत्वोक्तिर्युक्तेत्याह– **निरुक्तीति** ।। निरुक्तिलभ्यार्थस्य तत्राभावादित्यर्थः । काऽसौ निरुक्तिः? इत्यतः प्रक्रियासंवादेन[३] गौरवपरिहाराय श्रुतिमेव तत्परां दर्शयति– **तथा हीति** ।। **'अशारि'** शीर्णमभवत् । **इति** हेतोः तच्छरीरशब्दमभवदित्यर्थः । कथं निरुक्तिलभ्योऽर्थः तेषु नास्ति? इत्यत आह– **नहीति** ।। एवं तर्हि कथं तेषु 'शरीरं जायते तेषाम्' इति शरीरशब्दप्रयोगः? इत्यत आह– **साम्यादिति**।। अस्मदादिशरीरैः करचरणादिमत्त्वसाम्याद्गौण इत्यर्थः ।।

---

१. महाभारते नारदवचनम् ।

२. **'देहाद्यभावश्च कुत्रत्यानामित्यत आह- वैकुण्ठेति ।। तेषां प्राकृतदेहाद्यभावेन'** इति विजयध्वजतीर्थाः ।

३. भावदीपानुगुणः । 'सम्प्रदान'-इति वे-ग्रं पाठः । 'सम्पादनगौरव' इति क्वचित् मातृकायाम् ।

कुतोऽयमशरीरशब्दस्याभिप्रायः? सर्वथा विग्रहराहित्यमेव किं न स्यात्? इत्यत आह– **प्रयोगाच्चेति** ।। नारदादिभिर्**दृष्टदेहेष्वेव** मुक्तेषु एतद्वाक्यद्वये देहाभावप्रयोगान्यथानुपपत्त्या अयमर्थः सिद्धो न केवलं सम्भावनामात्रेणेति **चार्थः** । **'इत्यादि'** इति क्रियाविशेषणं **'प्रयोगात्'** इत्यनेन सम्बध्यते ।।

**भावदीपः**

**काऽसौ निरुक्तिरिति** ।। निरुक्तिलभ्योऽर्थः क इत्यर्थः ।। **प्रक्रियासंवादेनेति** ।। 'शॄ हिंसायाम्' **(पा.धा.१४८८)** इत्यतः कर्मणि ईरन्प्रत्यये गुणे च शरीरमिति या व्याकरणप्रक्रिया, तत्संवादेन गौरवपरिहारायेत्यर्थः ।। तत्परं शरीरशब्दनिर्वचनपराम् इत्यर्थः ।। [1]श्रुत्युक्त्या प्रक्रियां स्वयमेवोदाहरिष्यतीति न व्याकरणोक्तप्रक्रियासंवादप्रदर्शनगौरवं नाश्रयणीयमित्यर्थः ।। **शरीरशब्दमिति** ।। बहुव्रीहिः । अनिन्द्रिया इति, देहेन्द्रियेति चेति भिन्नं वाक्यमिति भावेनोक्तम् – **एतद्वाक्यद्वय इति** ।। **प्रयोगाच्चेति** चशब्दार्थं व्यनक्ति– **देहाभाव इत्यादिना** ।।

**( नारददृष्टा मुक्तिः गौणी न )**

**भाष्यम् — नचैषाऽन्या गौणी मुक्तिः ।**

**'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।**
**योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः।।'[2]**

**इत्यादित्यपुराणे तदन्यमुक्तिनिषेधात् ।।**

**ये त्वत्रैव भगवन्तं (प्र)विशन्ति तेऽपि पश्चात्तत्रैव यान्ति ।**

**प्रमेयदीपिका**

सन्तु नारदेन दृष्टाः श्वेतद्वीपवासिनो मुक्ताः । तथाऽपि नास्माकं प्रत्यक्षविरोधः । यत एषा श्वेतद्वीपप्राप्तिरूपा निर्गुणमुक्तेरन्या **गौणी मुक्तिः** । निर्गुणायामेव तु मुक्तौ वयमैक्यं ब्रूम इत्यत आह– **न चेति** ।। श्वेतद्वीपप्राप्तिव्यतिरिक्तमुक्तिनिषेधादियमेव मुक्तिरित्यर्थः ।।

ननु शिशुपालादयः श्वेतद्वीपगमनेन विनाऽत्रैव भगवन्तं प्रविश्य मुच्यन्ते । तत्कथमेतदित्यत

१. 'श्रुत्युक्तप्रक्रियाम्' इति समस्तपदं स्पष्टमनुस्वारः सो पाठे दृश्यते ।

२. वराह.पु.चा.मा.– 'योगी तावन्न मुक्तस्स्याद्यावच्छ्वेतं न पश्यति ।
श्वेतद्वीपं तु दृष्ट्वैव वैकुण्ठादौ प्रमोदते'।। ....

आह- **ये त्विति** ।। **ते** 'न तदा मुच्यन्ते' इति शेषः । तर्हि कदा? इत्यत आह- **ते पीति** ।। 'ततो मुच्यन्ते' इति शेषः ।।

**भावदीपः**

**न तदा मुच्यन्त** इति पदविभागः ।।

( श्वेतद्वीपगन्तारः के )

**भाष्यम् — योग्यत्वं चात्र विवक्षितम् ।**

**प्रमेयदीपिका**

ननु - 'केचिदत्रैव मुच्यन्ते'(ब्र.सू.भा.४.४.१९)

इत्याद्युक्त्वा 'महाज्ञाना गच्छन्ति क्षीरसागरम्'[१]

---

१ ब्र.सू.भाष्ये ४.४.१९ उदाहृतवचनानीमानि । अध्ययनसौकर्याय भाष्यदीपिकासहितमिदं मुद्रितमत्र ।

'**आत्मेत्येव परं देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ।।**
**अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन । केचित् स्वर्गे महर्लोके जने तपसि चापरे ।।**
**केचित् सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।**'

ननु मुक्तानां देवानां मुक्तस्वावरनियामकत्वं मुक्तहिरण्यगर्भस्य त्वशेषमुक्तजीवनियामकत्वमित्येतत् कुत इत्यतः सौत्रोक्तिपदसूचितस्मृतिमुदाहरति – गारुडे चेति ।। चः समुच्चये । तथाच गारुडे पुराणेऽप्येषोऽर्थः कथित इत्यर्थः । पुराणवचनार्थस्तु – 'केचित्' एकगुणोपासनयोग्याः अत्यल्पा मानुषाः 'आत्मेति' आत्मत्वेनैव प्रकारेणाव्ययं परं देवं हरिमुपास्य अथ दृष्ट्वा प्रारब्धं कर्म भोगेन क्षपयित्वा 'अत्रैव' भूम्यादावेव देहबन्धान्मुच्यन्ते स्वरूपानन्दं चानुभवन्ति । ते कदाऽपि ब्रह्मनाड्या नाड्यन्तरेण वा नोत्क्रामन्ति किन्तु देहनाशपर्यन्तं देह एव स्थित्वा अथ मुक्तिं गच्छन्ति । 'तेषाम्' उत्क्रान्तिरहितानाम् 'अत्र' पृथिव्यादावेव निवासो भवतीति । 'तदोकः' इति वचनं तु -

केचित्तु मानुषाः मुक्तिमनुत्क्रम्यैव देहतः । देहपाते तु देहस्य दोषान् भुक्त्वैव सर्व्वशः ।।
मरणोच्छूनतादींस्तु स्वकीयारब्धकर्मजान् । देहे जीर्णे तु गच्छन्ति दृष्ट्वा विष्णुमनुज्ञया ।।
पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः ।।

इति बृहद्भाष्योक्तैकगुणोपासकातिरिक्तविषयमिति न तद्विरोधः । स्मृतौ केचिदत्यल्पाः मानुषाः अपरोक्षज्ञानिनो देहपाते प्रत्यासन्ने स्वीयारब्धकर्मजान् 'मरणोच्छूनतादीन्' मरणदेहोपचयादीन् देहस्य दोषान् 'सर्वशः' सर्वतो भुक्त्वैव स्थिताः, अथ देहे जीर्णे देहतो ब्रह्मनाड्या नाड्यन्तेण वा अनुत्क्रम्यैव देहनाशपर्यन्तं तत्रैव स्थिताः । अथ प्रळये मुक्तिं लिङ्गभङ्गरूपां 'गच्छन्ति' प्राप्नुवन्ति ।

तदनन्तरं सकृत् श्वेतद्वीपं गच्छन्ति । तत्र विष्णुं दृष्ट्वा तदनुज्ञया 'पुनरत्रैव' भूलोक एव नित्यानन्दैकभोगिनः 'सन्ति' तिष्ठन्तीति योजना ।

तत्वप्रदीपे तु नोत्क्रामन्तीत्यस्य सृष्टौ सकृत् श्वेतद्वीपगमनात् परम् अस्माद् देहदेशात् नोत्क्रामन्तीत्यर्थः । अन्यथा 'बहुनात्र' इति वचनविरोधात् । 'तदोकोऽग्रज्वलनम्' इत्यादिना ज्ञानिनो देहदेशान्निर्गमनस्योक्तत्वाच्चेत्युक्तम् । तस्य, 'परम्' अनन्तरम् अस्मान्नोर्ध्वं गच्छन्ति । 'अन्यथा' कदाऽपि श्वेतद्वीपगमनात् पूर्वमपि नोत्क्रामन्तीत्यर्थाभ्युपगमे । नोत्क्रामन्तीत्यस्य ब्रह्मनाड्युत्क्रमणाभावार्थत्वं किं न स्यादित्यत आह - तदोक इत्यादीत्यर्थः ।।

अस्मिन् पक्षे 'तदोकः' इति सूत्रमेकानेकगुणोपासकज्ञानिसामान्यपरम् । बृहद्भाष्यं तु श्वेतद्वीपगमनात् परम् अस्माद् देहदेशाद् अनुत्क्रम्यैव इत्यर्थकमिति ध्येयम् । केचित्तु- 'नोत्क्रामन्ति कदाचन' इत्यस्य इतरमुक्तवदेकवारं ब्रह्मनाड्योत्क्रमणेन मुक्तौ सत्यां पुनः स्वयोग्यस्थाने स्थित्यनन्तरं 'नोत्क्रामन्ति' नोर्ध्वं गच्छन्तीत्यर्थमाश्रित्य अत एव 'अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचन' इत्युक्तम् । अन्यथा लिङ्गशरीरभङ्गाभावान्मुक्तिरेव तेषां न स्यादिति तत्वप्रदीपरीत्यैवाऽर्थमाहुः । 'आत्मेत्येवोपास्व' इति वचनस्य 'आनन्दादयः प्रधानस्य' इत्युक्तिविरोधपरिहारस्तु तस्याश्चतुर्विधमोक्षार्थचतुर्गुणोपासकविषयत्वात्, अस्याश्च कतिपयमोक्षयोग्यैकगुणोपासकविषयत्वाद् भिन्नविषयत्वेन विरोधाभावादिति तत्रैव कृतः ।

केचित्तु - आत्मेत्युपलक्षणम् । आनन्दादयोऽपि ग्राह्याः । एकगुणोपासकविषयकल्पनया समाधानटीका तु 'अस्तु वा ज्ञातता' इत्यादिवत् प्रौढवादेनैव प्रवृत्ता नाभ्युपगमवादेनेत्याहुः । तन्न, आनन्दमालायाम् - अथ चतुर्गुणोपास्तेरशक्यत्वे आनन्दादीनां आत्मत्वगुणैकीकारेणापि कथञ्चिदुपास्तिरस्ति, तथाच सच्चिदानन्दो विष्णुरात्मेत्युपास्य इत्यन्वय इत्युक्तिविरोधात् । 'तेषु मोक्षोऽपि भवेन्मानुषाणां विशेषिणाम्' इति छान्दोग्यभाष्योक्तेरेकगुणोपासनाख्यविशेषवतां मनुष्याणां भूर्भुवस्स्वराख्यलोकप्राप्तिः सिद्धा ।।

तत्र भूलोकस्था उक्ताः । भुवस्स्वर्गस्थमुक्तानाह - अन्तरिक्षे त्वित्यादिना ।। तुशब्दोऽप्यर्थः । 'केचन' पूर्वोक्ता उत्तमा मनुष्याः । मुच्यन्त इत्यन्तमुभयत्राप्यनुषज्यते । नोत्क्रामन्तीत्येतत्तु पूर्वत्रैव योज्यम् ।।

एवं किमुशब्दैरुक्तानां मनुष्याणां स्थितिमुक्त्वा तेभ्योऽधिकानां स्थितिमाह - महरिति ।। 'जने' जनलोके 'तपसि' तपोलोके । चः समुच्चये । सत्ये सत्यलोके । सर्वत्र मुच्यन्त इत्यनुषज्यते। 'महाज्ञानाः' बहुकालं ब्रह्मदर्शिनः अप्रतीकालम्बनाख्याः बहुगुणोपासकास्तु 'क्षीरसागरं' तत्रत्यश्वेतद्वीपं गच्छन्तीत्यर्थः । उपलक्षणमेतत् । तिष्ठन्तीत्यपि द्रष्टव्यम् । नचात्रैव मुच्यन्ते, अत्रैव च स्थितिस्तेषाम्, महाज्ञाना गच्छन्ति क्षीरसागरम्' इत्युक्त्या महाज्ञानातिरिक्तानाम् एकगुणोपासकादीनां श्वेतद्वीपागमनप्राप्तेः ।।

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति । योगी तावन्न मुक्तः स्यात् ....... ।। इत्यत्र च सर्वेषां श्वेतद्वीपगमनोक्तेर्विरोध इति वाच्यम् । सर्वेषामपि सकृच्छ्वेतद्वीपगमनाभ्युपगमात् । तथाचाण्डलयकाले स्वोत्तमप्रवेशेनोर्ध्वं गताः भग्नलिङ्गाः सकृच्छ्वेतद्वीपं गत्वा पुनर्धरादिकमागत्य अनन्तरमत्रैव तिष्ठन्तीत्याशयेन 'अत्रैव च स्थितिः' इत्याद्युक्तिरित्युक्तं भवति । उक्तं हि छान्दोग्यभाष्ये - श्वेतद्वीपं ततो गत्वा दृष्ट्वा

इति महायोग्यतावतामेव श्वेतद्वीपगमनोक्तेः कथमयं नियमः? इत्यत आह– **योग्यत्वं चेति**।। अत्र 'निवासे' इति शेषः ।। अस्ति सर्वेषां श्वेतद्वीपप्राप्तिः । महाज्ञानत्वलक्षणं योग्यत्वं त्वत्र निवासे विवक्षितमित्यर्थः ।।

**( मुक्तानां बाह्यभोगानुभवविचारः )**

**भाष्यम् — युधिष्ठिरप्रश्ने इतरनिन्दनाच्च । सायुज्यं च ग्रहवत् ।**

**तदुक्तेश्च–**

**'भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः।[१]**

**तथा मुक्तावुत्तमायां बाह्यान् भोगांस्तु भुञ्जते।।'**

**इति नारायणाष्टाक्षरकल्पे ।।**

**अतोऽनिष्टस्यैव वियोगः ।**

**प्रमेयदीपिका**

नन्विदं वाक्यं श्वेतद्वीपप्राप्तिं विना सगुणमुक्तिः नास्तीत्येतत्परम् । निर्गुणमुक्तिस्त्वन्याऽस्तीत्यत आह– **युधिष्ठिरेति** ।। सायुज्यं तावत् प्रसिद्धम् । सैव निर्गुणमुक्तिः । तत्रात्मनो ब्रह्मणैकत्वमित्यत आह– **सायुज्यं चेति** ।। यथा ग्रहस्य पुरुषान्तरं प्रविश्य भोगस्तथा मुक्तस्येश्वरं प्रविश्य भोग एव सायुज्यम् । नत्वैक्यमित्यर्थः । कुत एतत्? सायुज्यशब्दसामर्थ्यादागमवाक्याच्चेत्याह– **तदुक्तेश्चेति** ।।

---

विष्णुं च तेन ते । अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु ।। इति ।

ननु गीताभाष्ये - ये त्वत्रैव भगवन्तं प्रविशन्ति तेऽपि पश्चात् तत्र यान्ति योग्यत्वं चात्र विवक्षितमित्युक्तेः सर्वेषां श्वेतद्वीपगमने तद्विरोधः स्यादिति चेन्न, तस्य क्षीराब्ध्यावस्थानाय योग्यत्वं विवक्षितमित्येतदर्थकत्वात् ।।

अत एव प्रमेयदीपिकायामत्रेत्यनन्तरं निवास इति शेषः कृतः । तथाच महाज्ञानित्वलक्षणयोग्यत्वं चात्र क्षीराब्धिगतश्वेतद्वीपे निवासे तदर्थं विवक्षितम्, नतु गतिमात्र इति तद्वाक्यार्थाभ्युपगमान्न विरोध इति ध्येयम् ।।'

१. 'चैव ग्रहादयः' इति प्रचलितपाठः । परं तु ब्र.सू.भा.टीकाभावदीपे चतुर्थाध्याये-पृ-११८ 'देवग्रहादयः' इति पाठः पठितः । तदनुसारेणात्र पाठः स्वीकृतः । 'चैव' इति पाठे स्वारस्याभावात्। देवाः ग्रहाश्च यथेत्यर्थः ।

उत्तमायां मुक्तौ सायुज्यलक्षणायाम् । 'ईश्वरं प्रविश्य' इति शेषः । ईश्वरानन्दादि[१] व्युदासाय– बाह्यानिति ।। बाह्येष्वपि विभागो वचनान्तरादवसेयः । 'सुकृतमप्यप्रियम्' इत्यादिनोक्तमर्थमुपसंहरति– अत इति ।।

### भावदीपः

गच्छन्ति क्षीरसागरमितीति ।। सूत्रभाष्योक्तगारुडवचनमिति योज्यम् ।। युधिष्ठिरे-तीति ।। 'मग्नस्य हि परेऽज्ञाने' इति पूर्वोक्तदिशा ब्रह्मैकीभावरूपमुक्तेः निन्दनाच्चेत्यर्थः । इति व्यक्तत्वान्न व्याख्या कृता । सायुज्यशब्देति ।। सयुजां भावः सायुज्यमिति भेदाक्षेपक-संयुक्तत्वार्थकशब्दशक्तिबलादित्यर्थः ।। वचनान्तरादिति ।।

'सयुजः परमात्मानं प्रविश्य च बहिर्गताः ।

तद्रूपान् प्राकृतांश्चापि विना भोगांस्तु कांश्चन ।

भुञ्जन्ते[२] (४.४.९.ब्र.सू.भा.उदागारुडवचनमिदम्)

इत्यादि वचनान्तरादित्यर्थः ।।

**भाष्यम् — सोऽस्त्येव सर्वात्मना ।**

**'अदुःखम्' , 'सर्वदुःखविवर्जिताः', 'अशोकमहिमम्' (बृ.उ.५.१०), 'यत्र गत्वा न शोचति'[३] इत्यादि(श्रुति)भ्यः ।**

**विशेषवचनाभावाच्च । येषां त्वीषद्दृश्यते ते न सायुज्यं प्राप्ताः । सामीप्याद्येव तेषाम् । अतः प्रारब्धकर्मशेषभावात् तद्भुक्त्वा सायुज्यं गच्छन्ति ।।**

### प्रमेयदीपिका

यथा सुकृतत्यागे सङ्कोचस्तथाऽनिष्टत्यागेऽप्यस्ति किम्? इति जिज्ञासायामाह– सोऽस्त्येवेति ।। प्राचुर्याभिप्रायाण्येतानि वाक्यानि[४] किं न स्युः? इत्यत आह– विशेषेति।।

१. मातृकाद्वयपाठः । आदिशब्दो वे-ग्रं, गुज पाठे नास्ति ।
२. 'मुक्तिरेवं ते विस्पष्टं समुदाहृता' इति समग्रवचनम् ।
३. 'यत्र गत्वा न म्रियते यत्र गत्वा न जायते । न हीयते यत्र गत्वा यत्र गत्वा न वर्धते ।। '
ब्र.सू.भा.४.४.२१ उ.मोक्षधर्मवचनम् ।।
४. मातृकाद्वये। 'वचनानि'-इति वे-ग्र ।

सङ्कर्षणादयः समष्टिजीवाः तावन्मुक्ताः । तेषां च बललक्ष्मणादिरूपेषु दुःखं दृश्यते । तदेव विशेषप्रमाणमित्यत आह– **येषां त्विति** ।। **न सायुज्यं प्राप्ताः** न मुक्ता इत्यर्थः । सायुज्ययोग्यानां तदभावे मुक्त्यभावात् । तेषां मुक्तत्वोक्तेस्तर्हि का गतिः? इत्यत आह– **सामीप्यादीति** ।। 'मुक्तत्वोक्तौ बीजम्' इति शेषः । कुतस्ते न मुक्ताः? इत्यत आह– **अत** इति ।। दुःखदर्शनात् तद्धेतुभूतप्रारब्धकर्मभावान्न ते मुक्ताः । कदा तर्हि ते मुच्यन्ते? इत्यत आह– **तद्भुक्त्वेति** ।।

**भाष्यम् — तच्चोक्तम् –**

**'सङ्कर्षणादयस्सर्वे स्वाधिकारादनन्तरम् ।**
**प्रविशन्ति परं देवं विष्णुं नास्त्यत्र संशयः'**

**इति व्यासयोगे ।**

**अतोऽनिष्टस्य सर्वात्मना वियोगः ।**

**'परब्रह्मत्वमिच्छामि परब्रह्मन् जनार्दन'**

**इत्यादिना ब्रह्मादिभिरपि प्रार्थितत्वात् ।।**

## प्रमेयदीपिका

अत्रागमसम्मतिं चाह– **तच्चेति** ।। **'सोऽस्त्येव'** इत्याद्युक्तमुपसंहरति– **अत** इति ।। तत्किमनिष्टनिवृत्तिमात्रं मुक्तिः? इत्यतोऽनुमानागमाभ्यां परमसुखं चेत्याह– **परब्रह्मत्व-मिति** ।। मुक्तत्वम् । **ब्रह्मादिभिः** दुःखहीनैरपि । मोक्षे [1]सक्तिस्तुत्यर्थमेतदित्यतो[2] न ब्रह्मण एकान्तित्वविरोधः ।।

## भावदीपः

**अनुमानेति** ।। निर्दुःखैरपि ब्रह्मादिभिः प्रार्थितत्वरूपानुमानेन अतिशयितसुख-रूपत्वसिद्धेरिति भावः ।। अपिपदार्थः **दुःखहीनैरपीति** ।। **मोक्षे सक्तिस्तुत्यर्थमिति** ।। एकान्तिकेतरेषामिति योज्यम् ।।

---

१. 'सक्तिः स्तुत्यर्थम्' इति सविसर्गान्तपाठः क्वचित् ।

२. '-मेतदिति न ब्रह्मणो' इत्येव । 'अतो' इति नास्ति वे-ग्रं ।

**भाष्यम् —** [1]**"न मोक्षसदृशं किञ्चिदधिकं वा सुखं क्वचित् ।**
**ऋते वैष्णवमानन्दं वाङ्मनोऽगोचरं महत्'**
**इत्यादेश्च ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धम् ।**

**अतो योगाय युज्यस्व । [2]ज्ञानोपायाय । तद्धि कर्मकौशलम् ।। ५० ।।**

## प्रमेयदीपिका

समासान्तविधेरनित्यत्वाद् **'वाङ्मनोऽगोचरम्'** इत्युक्तम् । **'महत्'** इत्येतत् **'सुखम्'** इत्यनेन सम्बद्ध्यते । **ब्रह्मादिपदादप्यधिकतममिति** ।। ब्रह्मणो ब्रह्मपदादप्यधिकं शेषस्य, शेषपदादप्यधिकमित्यादि ज्ञेयम् । एवं ज्ञानफलप्रदर्शनपरत्वेन पूर्वार्धो व्याख्यातः । उक्तविधया योगस्वरूपनिरूपणपरः किं न स्यात्? इत्यतो अस्मदुक्तेऽर्थे[3] तृतीयपादसङ्गतेरन्यथा तदसङ्गतेरित्यभिप्रेत्य तं पठति–**अत** इति।।

न दूरस्थहेतुपरामर्शोऽयमिति ज्ञापयितुं तस्मादिति पठितव्ये **'अतः'** इत्युक्तम् ।। ज्ञानस्य महाफलत्वात् **'योगाय युज्यस्व'** इति कथं हेतुहेतुमद्भावः? इत्यतः **'योगाय'** इत्येतद्व्याचष्टे–**ज्ञानेति** ।। ननु **'समत्वं योग उच्यते'**इति योगो व्याख्यातः । **'योगः कर्मसु कौशलम्'** इत्यादि[4] किमिति पुनर्व्याख्यायते? इत्यतः स्तुतिरियं योगस्य क्रियत इति भावेनाऽह–**तद्धीति**।। **तत्** 'योगः' इति शेषः ।। ५० ।।

## भावदीपः

ननु 'अचतुर-विचतुर-सुचतुर-स्त्री-पुंस-धेन्वनडुह्-ऋक्-सामावाङ्मनसा' **(पा.सू.५. ४. ७७)** इत्यादि सूत्रेण समासान्तेन निपातनात् वाङ्मनसगोचरमिति भाव्यमित्यत आह– **समासान्तेति** ।। 'द्वित्रिभ्यां पाद्दन् मूर्धसु'[5] **(पा.सू. ६.२.१९७)** इति निर्देशेनानित्यत्व-ज्ञापनात् । अन्यथा 'द्वित्रिभ्यां ष मूर्ध्नः' **(पा.सू. ५.४.११५)** इत्युक्तेः 'द्वित्रिभ्यां पद्दन् मूर्ध्रेषु' इति निर्दिश्येतेति

---

१. अनुव्या. **'न विष्णु सदृशं दैवं न मोक्षसदृशं सुखम्' इति ।।**

२. **शङ्करामानुजभाष्ययोः (-प्रथमभागे-पृ-१९९) 'योगाय' इत्यस्य 'बुद्धियोगाय' इत्यर्थः कृतः । तन्निरासाय 'ज्ञानोपायाय' इत्युक्तमिति भाति ।।**

३. मातृकात्रये अयं पाठः । 'अस्मदुक्तार्थे' इति वे-ग्रं, मुद्रितेषु ।

४. 'इति' इत्येव सो पाठे । आदिशब्दः न पठ्यते ।

५. 'बहुव्रीहौ' इत्यधिकं सो पाठे पठ्यते ।

भावः ।। **उक्तविधयेति** ।। 'बुद्धियुक्तः प्रेक्षावान्' इत्यादिना बुद्धियुक्तश्लोकावतारिकायामुक्त-विधयेत्यर्थः ।। **अत इत्युक्तमिति** ।। तेन पूर्वार्धोक्तस्य ज्ञानगतमहाफलकत्वस्य [1]हेतुतया परामर्शो लभ्यत इति भावः ।। ५० ।।

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ।। ५१ ।।**[2]

**भाष्यम् — तदुपायमाह– कर्मजमिति ।। कर्मजं फलं त्यक्त्वा । अकामनयेश्वराय समर्प्य ।।**

### प्रमेयदीपिका

ननु कर्मजमिति श्लोकः पूर्वोक्तत्वान्न विशिष्यत इत्यत आह– **तदुपायमिति**।। तस्य ज्ञानस्योपायं योगं, तज्ज्ञानमुपायो यस्य तं मोक्षं चाह विवृणोतीत्यर्थः । व्यवहितत्वाद् अन्वयमाह – **कर्मजमिति** ।। अप्राप्तस्य फलस्य कथं त्यागः? इत्यतो व्याचष्टे– **अकामनयेति** ।। प्रकृत्यादिभ्य उपसङ्ख्यानात् तृतीया । एतत् प्रागुक्तमित्यतः प्रकारान्तरेण व्याचष्टे – **ईश्वरायेति** ।।

### भावदीपः

आहेत्यनुवादः, विवृणोतीति व्याख्या ।। **'समत्वं योग उच्यते'** (२.४८) इत्यनेन **'यया पार्थ कर्मबन्धं प्रहास्यति'** (२.३९) इत्यनेन चापौनरुक्त्याय पूर्वार्धेन ज्ञानोपायम्, उत्तरार्धेन तत्फलं विवृणोतीत्यर्थः ।। [3]कर्तृत्वाद्यर्थे तृतीयानुपयोगादाह– **प्रकृत्यादिभ्य इति** ।। 'प्रकृत्या चारुः प्रायेण समः गोत्रेण गार्ग्यः' इत्यादाविव तृतीयेत्यर्थः ।। कामनाहीनं कर्मेत्यर्थः।। **एतत्प्रागुक्तमिति** ।। फलकामनाहीनकर्मानुष्टानं **'कर्मण्येव'**(२.४७) इति श्लोके तद्विवरणपरे **'योगस्थः'**(२.४८) इति श्लोके चोक्तमित्यर्थः ।। **प्रकारान्तरेणेति** ।। 'कर्मजं फलं त्यक्त्वा' इत्यस्य निष्कामकर्मकरणं नार्थः । किन्तु ईश्वरसमर्पणं तस्यार्थः । अतो न पौनरुक्त्यमिति भावः।।

१. 'फलकत्वहेतुतया' इति समस्तपदं सो मातृकायाम् ।
२. 'अज्ञानिकृतकर्मणां सफलत्वे 'कर्मजं बुद्धियुक्ता हि' इत्यादिकं प्रमाणमस्ति । उपलक्षणं चैतत् । अधिकारिणश्चैते विधिगोचराश्च इत्यपि द्रष्टव्यम्' । न्यायसुधा ३.४.४१(उ.म.प्रका.पृ-५२९७) ।
३. 'कर्तृत्वाद्यर्थकत्वायोगादाह' इति एकस्मिन् कोशे । सोमातृकायामियं पङ्क्तिरेव नास्ति ।

( योगः कर्मज्ञानसाधनम् )

**भाष्यम् — बुद्धियुक्ताः सम्यज्ज्ञानिनो भूत्वा पदं गच्छन्ति । स योगः कर्मज्ञानसाधनम् । तन्मोक्षसाधनमिति भावः ।। ५१ ।।**

**प्रमेयदीपिका**

**'बुद्धियुक्ताः' 'मनीषिणः'** इति पौनरुक्त्यपरिहाराय आह– **बुद्धियुक्ता** इति।। **सम्यज्ज्ञानिनः** शास्त्रजनिततत्वज्ञानिनः । अनेन **'मनीषिणः'** इत्यपरोक्षज्ञानिन इति सूचितम्। प्रशंसायां मत्वर्थीयस्य विधानात्।।

नन्विदमेकं वाक्यम्। कथं वाक्यार्थद्वयस्य विवरणम्? मोक्षस्वरूपविवरणेऽपि योगो न सम्यग् विवृतः। अङ्गिनः कर्मण एवानभिधानात्। अङ्गानां च सङ्कल्पत्यागादीनामित्यत आह– **स योगेति** ।। समस्ताङ्गसङ्ग्रहाय योगग्रहणम्। **'तत्'** ज्ञानम् । यद्यपि योजनावशादिदमेकं वाक्यम् । तथाप्यर्थवशाद् द्वे वेदितव्ये । योगश्च **'कर्मजं फलं त्यक्त्वा'** इत्यनेन समग्रो लक्षित इति भावः।। ५१ ।।

**भावदीपः**

कथं मनीषिपदेनापरोक्षज्ञानिलाभः? इत्यतो 'भूमनिन्दाप्रशंसासु[१] भवन्ति मतुबादयः' इत्युक्तेः प्रशंसायां मतुबर्थक'इनि'प्रत्यये मनीषि इति रूपसिद्धेः, प्रशस्ता मनीषिणो अपरोक्षज्ञानिन एवेति भावेन आह – **प्रशंसायां मत्वर्थीयस्य विधानादिति ।। योगग्रहणमिति ।।** सिद्ध्यसिद्ध्योः समत्वरूपयोगग्रहणम्, सङ्कल्पत्यागः[२], भगवदर्पणम्, भगवत्पूजात्वेनानुष्ठानम् इत्येवमादि समस्ताङ्गोपादानायेत्यर्थः । [३]तथाच पूर्वार्धे भगवदर्पणमात्रप्रतीतावपि समस्ताङ्गोपेतकर्मोपलक्षणम् ।।

तथा चायमर्थः । कर्मजं फलं त्यक्त्वा सर्वाङ्गोपेतकर्मानुष्ठानाय शुद्धान्तःकरणाः बुद्धियुक्ताः शास्त्रजन्यज्ञानवन्तो भवन्ति । ततश्च मनीषिणोऽपरोक्षज्ञानिनो भूत्वा पदं गच्छन्तीति ।।**'योगश्च'** इति ।। निवृत्तं कर्म चेत्यर्थः ।। ५१ ।।

---

१. 'नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायाम्' इति मध्ये पूरणीयम् ।

२. 'सङ्कल्पत्यागेन भगवदर्पणम्' इति मं-मातृकायाम् ।

३. इत आरभ्य पङ्क्तित्रयं सो नास्ति ।

( कर्माचरणस्य कियत्पर्यन्तत्वं )

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्ताऽसि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

**भाष्यम् —** कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीत्याह– **यदेति** ॥

**प्रमेयदीपिका**

**'यदा ते'** इति श्लोके योगसम्बन्धि न किमप्युच्यते? इत्यतस्तत्सङ्गतिमाह - **कियदिति**॥ एवं फलकामनादिवर्जितानीश्वराराधनरूपाणि ।इत्याकाङ्क्षायाम् **आहे**त्यर्थः॥

नन्वियमाकाङ्क्षैवानुपपन्ना । योगो हि ज्ञानसाधनतयोपदिष्टः । साधनं च साध्यप्राप्ति-पर्यन्तमनुष्ठेयमिति प्रसिद्धमेव । नियतपूर्वक्षणवृत्ति कारणमिति हि तल्लक्षणम् । उच्यते । योगो हि न साक्षाद् ज्ञानसाधनम् । किन्तु श्रवणादिकमेव । प्रमितेः प्रमाणफलत्वात् । योगस्त्वदृष्टद्वारा सत्वशुद्धिमुत्पाद्य श्रवणादीनामुपकरोति । उपकारस्य च द्वयी गतिर्दृष्टा । अतो युक्तैवेयमाकाङ्क्षेति । तथाऽपि 'जिज्ञासुना' इति वक्तव्यम् । सत्यम् । मोक्षसाधन-ज्ञानार्थिनेत्येतावतोऽर्थस्य ग्रहणाय **'मुमुक्षुणा'** इत्युक्तम् ॥

**भावदीपः**

'एवम्' इत्यनुवादः,'**फल**' इत्यादिव्याख्या ॥ **योगो हीति** ॥ निवृत्तं कर्मेत्यर्थः॥ **उपदिष्ट इति** ॥ **'बुद्धिर्योगे त्विमां शृणु'** (२.३९) इत्यादिग्रन्थेनेति भावः । कार्य-प्राप्त्युत्तरकालमपि कुतो नानुष्ठेयं कारणम्? इत्यतः कारणव्याघातादिति भावेनाऽह– **नियतपूर्वेति** ॥ **द्वयी गतिरिति** ॥ पूर्वमनुष्ठानं पश्चादनुष्ठानं[१] चेति द्वयी गतिरित्यर्थः । ज्योतिष्टोमादिप्रधानयागोपकारकाणां मध्ये केषाञ्चित् पूर्वमनुष्ठानस्य केषाञ्चित् पश्चाद् अनुष्ठानस्य दृष्टेरिति भावः ॥

( **निर्वेदशब्दार्थः** )

**भाष्यम् — निर्वेदं** नितरां लाभम् । प्रयोगात् –

**'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य**

१. इदं वाक्यं सो मातृकायां नास्ति ।

बाल्येन तिष्ठासेत्''[१](बृ.उ.५.५.१) इत्यादि ।

न हि तत्र वैराग्यमुपपद्यते । तथा सति 'पाण्डित्यात्' इति स्यात् ।।

**प्रमेयदीपिका**

'निर्वेदं वैराग्यम्' इत्यन्यथाप्रतीति[२]निरासायाऽह– **निर्वेदमिति** ।। ननु निष्पूर्वो विदिर्वैराग्ये रूढः । तत्कुतो लाभार्थता? इत्यत आह– **प्रयोगादिति** ।। अस्यामपि श्रुतौ वैराग्यार्थता किं न स्यात्? इत्यत आह– **नहीति** ।। कुतो नोपपद्यते? इत्यत आह– **तथा सतीति** ।। 'जुगुप्सा-

१ (अ)'द्वितीयो ब्राह्मणो ब्रह्माणितुं योग्यः । पाण्डित्यमागमजज्ञानम् । बाल्यं युक्तिसहितम् ।..निर्विद्य नितरां प्राप्य लब्ध्वा । विद्लृ लाभ इति धातोः ।' बृ.उ.भा. ।।

(आ) ब्र.सू.भा.स्तुत्यधिकरणे । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्यायेन स्यात्तेनेदृश एवेति' बृहदारण्यकवाक्यस्यायमर्थः- यस्मादपरोक्षज्ञानान्मोक्षः, तस्माद्यो 'ब्राह्मणो' ब्रह्म अणितुं प्राप्तुं योग्योऽसौ 'पाण्डित्यम्' आगमजन्यं श्रवणरूपज्ञानं सम्पादयेत् । पाण्डित्यं 'निर्विद्य' नितरां लब्ध्वा 'बाल्येन' युक्तिरूपबलसहितेन तज्जन्येन मननरूपज्ञानेन 'तिष्ठासेत्' स्थातुमिच्छेत् बाल्यं सम्पादयेदिति यावत् । 'अथ' तदुभयलाभानन्तरं 'मुनिः' ध्यानी भवति मौनममौनं च निर्विद्येत्यनुवादात् अथ मुनिरपरोक्ष ज्ञानी भवतीति लभ्यते । अत एव व्यासतीर्थीये 'अथ मुनिः' इत्यस्यानन्तरमध्याहृतस्य अमुनिरित्य-स्यार्थमाहेत्युक्तम् ।।

तथा च एवं 'मौनम्' उपासनारूपज्ञानम् 'अमौनम्' अपरोक्षज्ञानं च निर्विद्याथ ब्राह्मणो जीवन्मुक्तो भवति तथोच्यते 'सः' जीवन्मुक्तो येन केन सता वा स्यादसता वा स्यादस्ता वा प्रकारेण कर्माचरणेन 'स्यात्' वर्तेत, 'तेन' यथेष्टाचरणेन 'ईदृश एव' ज्ञानफलमोक्षं प्राप्त एव भवति । न तावता तस्य मोक्षहानिरिति ।।

यद्यपि बृहद्भाष्ये 'ब्राह्मणो' मुक्तो भवतीत्यर्थः । 'सः' मुक्तो येन केनापि वर्तयन् 'ईदृश एव' परमात्मनः सकाशादानन्दभिक्षुक एव, न कदाचित्स्वतन्त्रो भवतीति ब्राह्मणशब्दः परममुक्तपरतया येन केनेत्येतन्निमित्तपरतया च व्याख्यातः । तथाहि । तत्रैव -प्रथमब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते । अपरोक्षविन्मुक्तयोस्तु तार्तीयेनोभयोर्ग्रहः ।। इति प्रमाणोदाहरणेन अथ मुनिरित्यस्यानन्तरम् अध्याहारं विनैव ब्राह्मणपदानुषङ्गेण श्रुतिव्याख्यानायापरोक्षज्ञानिपरत्वस्याप्युक्तत्वादविरोधः ।।

न च प्रमेयदीपिकायां बलेन युतं बालं तस्य भावो बाल्यमित्याशयेन युक्तिबलोपेतत्वं बाल्यं, आगमज्ञत्वं पाण्डित्यं, 'अथ मुनिः' मननशीलो भवतीत्यर्थे विरोध इति वाच्यम् ।।

गीताभाष्ये 'मननशीलत्वम्' इत्यस्यार्थे अस्याः श्रुतेरुदाहृतत्वात् तदानुकूल्याय तथा व्याख्यानेऽप्यस्य प्रकारान्तरत्वसम्भवात्।।' (भाष्यदीपिकायाम्)

२. शाङ्करभाष्ये-प्रथमभाग-पृ-२०७, नीलकण्ठीये -२११ ।

विरामप्रमादार्थानामुपसङ्ख्यानम्' इति कात्यायनवचनात् पाण्डित्यस्य विरामार्थधातुयोगेन अपादानत्वप्राप्तावपादाने च पञ्चमी स्यान्न द्वितीयेत्यर्थः ।।

**इदमत्राभिप्रेतम्** । निरुपसर्गः सत्तार्थस्यैव विदेरर्थं बाधित्वा तं वैराग्यार्थं व्यवस्थापयति । निर्विद्यत इति कर्तरि प्रयोगदर्शनात् । लाभार्थस्य विदेरर्थं तु विशिनष्ट्येव केवलम् । निर्विन्दति निर्विन्दते[1] इति वैराग्ये तत्प्रयोगदर्शनादिति । अथवाऽस्तु सर्वत्र निरो धात्वर्थबाधकत्वम् । विशेषकत्वमपि क्वचित् किं न स्यात्? **'व्याददाति'** इत्यादावुभयदर्शनादिति।।

## भावदीपः

**कात्यायनेति** ।। वार्त्तिककारवचनादित्यर्थः । [2]प्रथमस्यान्त्यपादे 'ध्रुवमपायेऽपादानम्'[3] **(पा.सू.१.४.२४)** इत्यत्र वार्त्तिकमेतत् । पापाज्जुगुप्सते । पापाद् विरमते । धर्मात् प्रमाद्यति इत्यादाविव पञ्चमी स्यान्न द्वितीयाविभक्तिरित्यर्थः ।। लाभार्थस्य कर्मणि प्रयोग इति भ्रम-निरासायाऽह– **इति कर्तरि प्रयोगदर्शनादिति** ।। लाभार्थस्योभयपदित्वादाह– **निर्विन्दत इति** ।। निर्विन्दते निर्विदन्ति इति इत्यादावुभयेति दानार्थबाधेन मुखविदारणार्थकत्वविशेषेण आदानार्थत्वस्य च दर्शनादित्यर्थः ।।

### ( ज्ञानिकृतश्रवणादिलक्षणभक्तिस्वरूपम् )

**भाष्यम् — नच ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति ।**

**'आत्मारामा हि मुनयो निर्ग्रान्था अप्युरुक्रमे ।**
**कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः'**[4] **(भाग.१.७.१०)**

इति वचनात् ।

---

१ 'निर्विन्दति धातोः वैराग्यार्थत्व' इति अनन्वितपाठः क्वचित् मुद्रितेषु ।

२. सो-मं-मातृकासु 'द्वितीयस्य' इति पाठः पठ्यते ।

३. **काशिका-१** भागे,पृ-५३६।'अधर्माज्जुगुप्सते। अधर्माद्विरमति । धर्मात्प्रमाद्यति' इत्युदाहणानि ।।

४. 'चशब्दोऽप्यर्थे । आत्मारामाः स्वरूपसुख एव रममाणा अपि अत एव निर्ग्रान्थाः निरुपादेयाः मुनयः उत्तमाधिकारिणः उरुक्रमे उरवः क्रमाः पादविक्षेपाः यस्य सः तथा तस्मिन् अहैतुकीं प्रयोजनविधुराम् आनन्दरूपां भक्तिं कुर्वन्ति । किं पुनः बहुजन्मस्वपरोक्षीकृतपरतत्वाः ये भक्त्यादिसाधनातिशयेन मुक्तौ आनन्दातिशयमाकाङ्क्षमाणाः शुकादयः उरुक्रमे भक्तिं कुर्वन्तीति वर्णनीयमेत्येकान्वयः'

इति विजयध्वजीये ।

**अनुष्ठानाच्च शुकादीनाम् ।।**

### प्रमेयदीपिका

न केवलं गीतायां प्रयोगाल्लाभार्थता । किन्तु वैराग्यार्थानुपपत्तेश्चेत्याह– **न चेति** ।। अनेनान्तःकरणस्य मोहकलिलातिक्रमो नाम ज्ञानप्राप्तिरिति सूचितं भवति । आदिपदेन तदुपयुक्तं गृह्यते । कुतो न भवति? इत्यत आह– **आत्मेति** ।। **भक्तिं** श्रवणादिलक्षणां

**'कस्य वा बृहतीमेतामात्मारामः समभ्यसत्'**

इत्यस्योत्तरत्वात् ।

**अनुष्ठानाच्च** 'श्रवणादेः' इति शेषः।।

### भावदीपः

**न केवलं प्रयोगाद् गीतायां लाभार्थतेति** योजना ।। **अनेनेति** ।। 'ज्ञानिनाम्' इत्यादि कथनेनेत्यर्थः ।। **तदुपयुक्तमिति** ।। भगवन्महिमाश्रवणोपयुक्तगुरूपसत्ति-सद्धर्मानुष्ठानादिकमित्यर्थः। भगवन्महिमाश्रवणे विरक्तिर्नेत्यर्थे प्रमाणत्वघटनायाऽह– **भक्तिं श्रवणादिलक्षणामिति** ।। महिमाकथनादि[1]रादिपदार्थः । कुत 'एवं व्याख्या? इत्यत आह– **कस्येति** ।। प्रथमस्कन्धे सप्तमेऽध्याये आत्मारामः शुकाचार्यः (बृहतीं) महतीम् एतां[2] भागवतसंहितां कस्य वा हेतोः समभ्यसदिति शौनकप्रश्नो[3]त्तरत्वेन सूतपौराणिकैः **'आत्मारामा हि'** इत्यादेरुक्तत्वाद् भक्तिपदस्यायमर्थोऽवगम्यत इति भावः ।।

**भाष्यम् — नच तेषां फलं सुखं नास्ति । तस्यैव महत्सुखत्वात्तेषाम् ।।**

### प्रमेयदीपिका

ननु शुकादीनां श्रवणाद्यनुष्ठानेऽपि फलं नास्ति । तत्फलस्य ज्ञानस्य प्राप्तत्वात् । फलाभावानुसन्धानमेवात्र वैराग्यशब्देनाभिप्रेतम् । यथाऽह मायावादी– 'तदा श्रोतव्यं च श्रुतं च निष्फलं प्रतिपद्यत इत्यभिप्रायः' इति । अनुष्ठानं तु लोकसङ्ग्रहार्थं संस्काराद्वा इत्यत आह– **न चेति** ।। कुतो न? इत्यत आह– **तस्यैवेति** ।। **तस्यैव** श्रवणादेरेव ।।

---

१. 'कीर्तनादिः' इति सो -पाठः ।

२. 'एनाम्' इति सो -पाठः ।

३. 'प्रश्नस्योत्तरत्वेन' इति -पाठान्तरम् ।

## ( महत्सुखत्वादिति शब्दसाधुत्वविचारः )

स्थान्यादेशोक्तिव्यत्ययेन द्वन्द्वेऽल्पाच्तरस्य परनिपातेन च 'आन् महतः समानाधिकरणजातीययोः' (पा.सू.६.३.४६) इत्यस्य विधेरनित्यत्वज्ञापनात्,

'**महत्तत्वाद् विकुर्वाणात्**' (भाग.३.६.७)

इत्यादिप्रयोगदर्शनाच्च '**महत्सुखत्वात्**' इति युक्तम् । तथाऽपि श्रवणादिकमेव कथं सुखम्? उत्तरक्षण एव महासुखोदयादैक्योपचार इत्यदोषः । तिष्ठतु तावत्कालान्तरभाविफलमिति 'एव'शब्दः । नन्वस्मदादीनां श्रवणोत्तरक्षणे सुखं नोत्पद्यत इत्यत आह– **तेषामिति** ।। रसिकानामित्यर्थः । नहि पितृजीवनादिवार्ताश्रवणेनान्येषामिव पुत्रस्यापि न सुखेनोत्पत्तव्यमिति ।।

### भावदीपः

ननु 'आन् महतः समानाधिकरणजातीययोः'(पा.सू.६.३.४६) इति षष्ठतृतीयपादे 'समानाधिकरणे उत्तरपदे जातीयप्रत्यये च परतः महत आकारादेशो भवति' इत्युक्तेः 'महासुखत्वात्' इति भाव्यमित्यत आह– **स्थान्यादेशेति** ।। 'महत आत्' इति निर्देष्टव्ये स्थान्यादेशव्यत्यासेन तथा जातीयसमानाधिकरणयोरिति निर्देष्टव्यम् । 'अल्पाच्तरं पूर्वम्' (पा.सू.२.२.३४) इत्यल्पाच्तरत्वस्य पूर्वनिपात उक्तः । तथा अत्रापि 'सामानाधिकरणजातीययोः' इति निर्देशाच्च आत्त्वविधेरनित्यत्वज्ञापनात् ।।

तृतीयस्कन्धे षष्ठेऽध्याये

'**महत्तत्वाद्विकुर्वाणादहं तत्त्वमजायत**' (३.६.७)

इति प्रयोगाच्चेत्यर्थः । वैशेषिकनये सुधायां[१] महत्तत्वपदस्य सञ्ज्ञात्वात् 'बहुलं कृति' इति

---

१. **वैशेषिकनये** - न महत्तत्वगुणत एतावानिति हीश्वरः **इति अनु.व्या** । तत्र **सुधा**- महत्तत्त्वमिति द्रव्यविशेषस्य सञ्ज्ञा । तेन आन्महत इत्येषविधिर्न भवति । 'दृष्टानुगतिर्हि सञ्ज्ञाछन्दसोः इष्यते । यथाह -बहुलं तणीति ।।

**परिमलम्**- 'ननु कथं महत्तत्वमिति । महच्च तत् तत्वं चेति विग्रहे महातत्वमिति प्राप्नोति । महाह्रद इतिवत् । 'आन्महतः समानाधिकरणजातीययोः' इति सूत्रे समानाधिकरणशब्दे जातीयशब्दे च परतो महच्छब्दस्याकारान्तादेशो भवतीति तकारस्याकारविधानादित्यत आह- आन्महत इतीति। कुत इत्यत आह- दृष्टानुगतिर्हीति । सञ्ज्ञायां छन्दोविषये च यथा प्रयोगो दृष्टः तथैवानुगतिरनु-सरणमिष्यते

वाक्याद् आत्वं तत्र नेत्युक्तम् ।।

**भाष्यम् —** 'या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद् भवज्जनकथाश्रवणेन वा स्यात् ।
साऽऽब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किम्वन्तकासिलुलितात् पततां विमानात्'[१] (भाग.४.१०.१०)
इत्यादिवचनात् ।

तेषामप्युपासनादिफलस्य साधितत्वात् ।।

---

प्रामाणिकैरित्यर्थः । कुत एवमित्यतो वार्तिकसम्मतिमाह- यथाहेति ।। चतुर्थस्याद्यपादे स्त्रीप्रत्ययप्रकरणे 'अस्वाङ्गपूर्वपदाद्वा' इति सूत्रे बहुलं तणीति वक्तव्यम्' इति वार्तिकम् । तणिति सञ्ज्ञाछन्दसोः प्राचां संज्ञा । तणीति सप्तमी । संज्ञाछन्दसोर्विषये बहुलं कार्यं भवतीत्युक्तेरिह तकारस्यात्वं न भवतीत्यर्थः ।।

(द्रं -सुधा -सम्पुटम्-१९. पत्रे.७०१०)

(आ) **सुधा-महद्व्यारम्भकत्वादिति** ।। **परिमलम्**-'महद्द्रव्यारम्भकत्वादिति । 'आन्महतः समानाधिकरणजातीययोः' इत्यत्र महत आत् इति वक्तव्ये विधेयोद्देश्ययोर्व्यत्यासेन निर्देश आत्वविधेरनित्यत्वज्ञापनार्थमिति गीताभाष्यटीकायामुक्तत्वान्महद्व्येति साधु'।।

(द्रं.सुधा.सम्पुटम्-१९. पत्रे.७१९३)

१. 'या निर्वृतिः स्वमहिमनि अनन्याधारलक्षणस्वमाहात्म्यये ब्रह्मणि परब्रह्मणि स्थितस्य जीवस्यापि मा भूत् ध्यानादिकमन्तरेण न स्यात्, कुतः 'तद् यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । सहाप्राप्यैव देवानेतदभयं ददर्श । नाहं खल्वयमेवं संप्रत्यात्मानं जानत्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र पश्यामि' इति श्रुतौ सुप्तौ तत्स्थत्वेपि ध्यानाभावात् सुखानुभवाभावस्य दृष्टत्वातीममर्थमपिपदेन ध्वनयति । स्वमहिनि ब्रह्मणि सुखं नास्तीति योजना। 'अथ कस्मादुच्यते परं ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' 'एष ह्येवानन्दयाति' इत्यादिश्रुतिविरुद्धत्वेनोपेक्षणीया । यतः स्थितस्येत्यध्याहारो युक्तिसिद्धत्वादङ्गीक्रियते । ननु तर्हि स्वर्गाद्यैश्वर्यं तत्फलं किं नस्यात्? ज्ञानादेव सर्वे कामाः सम्पद्यन्ते इति श्रितेरित्यत आह- किम्विति । अन्तकस्य हरेः भ्रूविभ्रमलक्षणेनासिना विलुलितात् पर्यस्ताद् विमानात् पततां पुंसां सा विर्वृतिः न स्यादि किमु । एतदुक्तं भवति । कर्मसाध्यज्ञानात् स्वर्गादिलक्षणविमानं प्राप्य इतस्ततो नन्दनादिषु विहारार्थं पतता गच्छतां पुंसां सा निर्वृतिर्नास्तीति किमु वक्तव्यमिति । विनामाद्भ्रश्यतामित्यर्थाङ्गीकारे तत्र दुःखप्राचुर्यात् सा निर्वृतिः न स्यादिति वक्तुमयुक्तत्वादुक्त एवार्थः । अन्तकासिलुलुतत्वमनित्यत्वयोननायोक्तमिति ज्ञातव्यम् । कथाश्रवणं तत्साधनम् । श्रुतगुणानां पश्चादुपसंहारोपपत्तेरिति ज्ञातव्यम् । अधिकारिणामनन्तत्वात् तत्तयोग्यताविशेषादेवमुक्तमिति वा' इति विजयध्वजीये ।

### प्रमेयदीपिका

अस्तु सम्भावना । निश्चयस्तु कुतः? इत्यत आह– येति ।। भवतो भवज्जनानां च स्वमहिमनि आविर्भूतस्वरूपे । **आब्रह्मणि** अल्पमुक्तेऽपि । न केवलं तात्कालिकं सुखं तत्फलम् । किन्तु मुक्तावानन्दवृद्धिश्चेत्याह– **तेषामपीति** ।। ज्ञानिनामपि।।

### भावदीपः

**'आब्रह्मणि'** इत्यत्राङ्प्रश्लेषं कृत्वा तस्येषदर्थत्वं चोपेत्य,**अपिपदस्य** भिन्नक्रमेणार्थमाह– **आब्रह्मण्यल्पमुक्तेऽपीति** ।। जीवन्मुक्तेऽपीत्यर्थः । तत्र हेतुः- **आविर्भूतस्वरूप इति** ।। अपरोक्षिणोऽपि बहुतरस्वरूपाविर्भावस्य प्रागुक्तेः ।।

चतुर्थस्कन्धनवमाध्याय[1]टीकायां तु

**'परब्रह्मणि स्थितस्यापि ध्यानादिकं विना न भवति'**[2] **(भा.ता.४.१०.१०)**

---

१. इदानीमुपलभ्यमानभागवतपाठेषु अयं दशमाध्याये पठ्यते । अध्यायविभागव्यत्यासः स्यात् ।

२. **'सुप्तौ दृष्टत्वात् ' पूर्णः पाठः भा.ता.निर्णये ।**

**'नन्वेवमकामनां विहाय मोक्षकामनया त्वद्ध्यानाादिकं कुर्वतां मोक्षकामनामपि विहाय त्वत्प्रीत्यर्थमेव तत्कुर्वतां को विशेषो येन ते मोक्षाशामपि त्यजन्तीत्यपेक्षायां तेषां ध्यानादिना जीवन्मुक्तिदशायामेव मोक्षकामनां परममुक्तिगताभिव्यक्तपूर्णस्वरूपसुखापेक्षया अधिकस्वरूपसुखाभिव्यक्तिर्भवति । किमु परममुक्तिदशायामित्याह- या निर्वृतिरिति । अत्र सा ब्रह्मणि चतुर्मुखे नास्तीति प्रतीतिवारणाय स्थितस्येति पदमध्याहृत्य योजयति - परब्रह्मणीति । मुक्तस्यापीत्यर्थः ।। नन्विदमपि बाधितम् । मुक्तस्याधिकारिकदेवादेरभिव्यक्तिक्रमपूर्णसुखवत्त्वा-दित्यत उक्तम् -ध्यानादिकं विना परब्रह्मणि स्थितस्यापीति । ध्यानादिकं विना परब्रह्मणि स्थितस्यापि ज्ञानोत्तरबहुतरध्यानाद्यकरणेन मुक्तस्येत्यर्थः। अल्पमुक्तस्येति यावत् ।।**

**यद्यपि आ ब्रह्मणि इति विच्छिद्य अलपमुक्तेपीति व्याख्यातुं शक्यम् । तथापि तनुभृतामिति षष्ठ्यन्तस्य पूर्वम् उक्तत्वात् पततामिति वक्ष्यमाणत्वाच्चात्रापि 'स्थितस्य' इत्यध्याहृत्यैव योजितमित्यवगन्तव्यम् ।। 'न भवति' इत्यनेन मा भूदित्येतदुक्ततात्पर्यम् ।।**

**ननूत्तमाधिकारिणामप्यधिकस्वरूपसुखाभिव्यक्तौ परब्रह्मप्राप्तिरेव निमित्तं न ध्यानादिकमपि, येन अल्पमुक्तेस्तदभावेनाधिकसुखाभिव्यक्त्यभावः इत्यत उक्तम् - सुप्ताविति । 'प्राज्ञेनात्मना संपरिष्वक्तः' इत्यादिप्रमाणप्रसिद्धाया ब्रह्मप्राप्तेः सुप्तौ सत्येपि नाधिकसुखस्याविर्भावो दृष्टः। ध्यानाद्यभावात् । अतो ध्यानादिकमपि तत्र निमित्तं न ब्रह्मप्राप्तिमात्रमित्यर्थः।।ततश्चायं श्लोकार्थः - तनुभृतां विस्तृतब्रह्मोपासकानां मोक्षकामनामपि परित्यज्य भजतां रसिकानां तु तव पादपद्मध्यानाद् भवज्जन्मकथाश्रवणेन भवतो भवज्जनानां च कथायाः । वाशब्दो अधिकारिविशेषद्योतकः । श्रवणेन या निर्वृतिः यत्सुखं स्यात् सा**

इति तात्पर्यानुरोधेन 'स्वमहिम्नि स्वाधारे ब्रह्मणि 'स्थितस्य' इति शेषः । ध्यानादिकं विना सा निर्वृत्तिर्न भवति इति अन्तकासिलुलिताद्भगवद्भ्रूविजृम्भणाख्यखड्गविलोडिताद् विमानात् स्वर्गात् पततां सा निर्वृतिः मा भूत् न भवतीति किम्' इति व्याख्यातम् ।।

'अल्पमुक्ते' इत्यादि तु व्याख्यानान्तरम् ।।

'मा भूत्' इत्यत्र माङ्योगे सर्वलकारापवादतया 'माङि लुङ्'(पा.सू.३.३.१७५) इति लुङो विधानादत्र मा भूदित्यस्य न भवतीत्यर्थ उक्तः तात्पर्ये । 'परब्रह्मणीत्यादि तात्पर्योक्तेरभिप्रायवर्णनेन तदनुगुणमेवेदं व्याख्यानम्' इत्येके ।।

**भाष्यम् — तारतम्याधिगतेश्च । तथाहि- यदि तारतम्यं न स्यात्,**

**'नाऽत्यन्तिकं विगणयन्त्यपि ते प्रसादम्'**[१](भाग.३.१५.४८),

**'नैकात्म्यतां मे स्पृहयन्ति केचित्'**[२] (भाग.३.२६.३४),

**'एकत्वमप्युत दीयमानं न गृह्णन्ति'**

**इति मुक्तिमप्यनिच्छतां मोक्ष एव फलम्, तमिच्छतामपि स भवति सुप्रतीकादीनामिति कथमनिच्छतां स्तुतिरुपपन्ना स्यात् ।।**

---

निर्वृतिः स्वरूपसुखाभिव्यक्तिः स्वमहिम्नि अनन्याधीनमाहात्म्योपेते परब्रह्मणि स्थितस्याल्पमुक्तस्यापि मुक्त्यनन्तरभाविना ध्यानादिव्यञ्जकेन विना परब्रह्मप्राप्तिमात्रेण मा भूत् न भवति । सुप्तौ परब्रह्मप्राप्तावपि सुप्त्यनन्तरं परब्रह्मध्यानदर्शनाद्यभावेन मुक्तिसुखाभावस्य दृष्टत्वचात् । अन्तकस्य हरेसरिस्थानीयेन कालचक्रेण लुलितात् खण्डितात् विमानात् पततां स्वर्गादिनिवासिनां सा नास्तीति किमु वक्तव्यम् । तथाच मोक्षकामनामपि परित्यज्य भजतामुत्तमाधिकारिणां परममुक्तिदशायामधिकस्वरूपसुखाभिव्यक्तिर्भवतीति किं वाच्यमित्याशयः' इति यादुपत्यम् ।

१. 'आत्यन्तिकं प्रसादं भगवद्दर्शनमात्रेण लिङ्गशरीरात्ययसमये विद्यमानभक्तिपरिपाकाभावात् सम्यगनभिव्यक्तानन्दं मोक्षमपि न विगणयन्ति विशिष्टोऽयमिति न बहुमन्यन्ते' इति विजयध्वजीये।।

२. 'ये भागवताः अन्योन्यतः प्रसज्य मिलित्वा मम पौरुषाणि पराक्रमान् सम्भाजयन्ते सम्भाव्य वदन्ति शृण्वन्ति च ते मे मया दीयमानामप्यैकात्म्यतां मुक्तिं न स्पृहयन्ति नेच्छन्ति । यदि भक्तिसन्तुष्टो हरिः किमपि ददाति तदाज्ञात्वेनैव गृण्हन्ति न भक्तिफलत्वेन । 'दीयमानं बालोऽपि गृण्हाति, किमुत प्रेक्षावान्? अत इदं भगवता स्तूयते, नतु तत्वम्' इति मन्दाशङ्का- 'नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्यते । तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यति' इत्यनेन परिहृता'।। इति विजयध्वजतीर्थाः।।

**प्रमेयदीपिका**

ज्ञानोत्तरस्याप्यनुष्ठानस्य यदि फलं स्यात् तर्ह्यनुष्ठानस्य एकविध्यनियमासम्भवात् स्वर्गवदपवर्गेऽपि तारतम्यं प्रसज्येत । नच तद्युक्तम् । अप्रामाणिकत्वात् प्रमाण-विरुद्धत्वाच्चेत्यतो नेदमनिष्टमिति भावेनाऽह– **तारतम्येति** ।। प्रमाणविरोधाभावाच्चेति चार्थः । कुतः प्रमाणान्मुक्ततारतम्याधिगतिः? इत्यतोऽर्थापत्तिं तावदाह– **तथाहीति** ।। यदि मुक्तानां तारतम्यं न स्यात् तदा **मुक्तिमप्यनिच्छताम्** एकान्तिनां मोक्षमात्रं फलम् ।। तं मोक्षमिच्छताम् **अपि सुप्रतीकादीनां** स मोक्षो भवतीत्यङ्गीकार्यं स्यात् । तथा च **'नात्यन्तिकम्'** इति मोक्षमनिच्छतां **स्तुतिः** कथमुपपन्ना स्यात् । निमित्ताभावात् । अतः स्तुत्यन्यथाऽनुपपत्त्येच्छतां मुक्तेरनिच्छतां मुक्तिरधिकेति गम्यत इत्यर्थः । **आत्यन्तिकं** मुक्तिहेतुम् । **ऐकात्म्यतां** सायुज्यम् । एकत्वमपि तदेव ।।

( मुक्तौ भक्तिविशेषात् तारतम्यम् )

**भाष्यम् — वचनाच्च ।**

**'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।**
**तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ।**
**योगिनां भिन्नलिङ्गानामाविर्भूतस्वरूपिणाम् ।**
**प्राप्तानां परमानन्दं तारतम्यं सदैव हि ।। '** इति ।।
**'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन ।**
**मद्भक्तियोगाद् ज्ञानाच्च सर्वानतिशयिष्यसि ।।'** इति च।।

**साम्यवचनं तु प्राचुर्यविषयं दुःखाभावविषयं च[1] । तथा चोक्तम् -**

**'दुःखाभावः परानन्दो लिङ्गभेदस्समा मताः ।**
**तथाऽपि परमानन्दो ज्ञानभेदात्तु भिद्यते ।।'**

**इति नारायणाष्टाक्षरकल्पे ।**

---

१. **'दुःखाद्यभावसाम्यं च साम्यवाक्यार्थ ईयते'-अनु-३.४.१६ (पृ-५१३३)।**

**अतो न वैराग्यं श्रुतादावत्र विविक्षितम् ।।**

## प्रमेयदीपिका

आगमाच्च तारतम्याधिगतिरित्याह– **वचनाच्चेति** ।। **'आविर्भूतस्वरूपिणाम्'** इति कर्मधारयादतिशयार्थे इनिः । अनेन जीवन्मुक्तावैश्वर्यतारतम्येनार्थापत्तेरन्यथोपपत्तिः परिहृता । **'लिङ्गभेदने'**, **'भिन्नलिङ्गानाम्'** इत्याद्युक्तेः ।।

'परमं साम्यमुपैति' इत्यादि वचनविरुद्धं मुक्ततारतम्यमित्यत आह– **साम्येति** ।। **प्राचुर्यं** पूर्णत्वम् । कुत एतत्? उक्तप्रमाणविरोधात्, विशेषवचनाच्चेत्याह– **तथा चेति** ।। यद्यपि परानन्दोऽलम्बुद्धिगोचरत्वमात्रेण **समः, तथाऽपि** इत्यन्वयः । **'नच ज्ञानिनाम्'** इत्यादिनोक्तमर्थमुपसंहरति – **अत** इति ।।

## भावदीपः

'न कर्मधारयान्मत्वर्थीयः' इत्युक्तेराह– **अतिशयार्थे इनिरिति** ।। 'तथाऽपि' इत्यस्य अर्थाप्रतीतेराह– **यद्यपि परानन्द इति** ।। यद्वा **'समाः'** इति परानन्दस्य साम्यमुक्त्वा पुनर्भिद्यत इत्युक्तेः प्रतीतव्याहतिनिरासाय साम्यासाम्योक्तेर्भिन्नविषयत्वाभिप्रायेण आह– **यद्यपीति** ।।

**भाष्यम् — न च सङ्कोचे मानं किञ्चिद्विद्यमान इतरप्रयोगे । महद्भिः श्रवणीयस्य श्रुतस्य च वेदादेः फलं प्राप्स्यसीत्यर्थः ।। ५२ ।।**

## प्रमेयदीपिका

अस्तु तर्हि भगवन्महिमादिव्यतिरिक्तश्रुतादौ वैराग्यम् अत्र विवक्षितमित्यत आह– **न चेति**।। निर्वेदशब्दस्य वैराग्यैकार्थकत्वे निश्चिते तद्बलाच्छ्रोतव्यादिशब्दस्यार्थसङ्कोचः क्रियेतापि । इतरत्र नितरां लाभे तस्य श्रौतप्रयोगे विद्यमाने तु निर्मूलं सङ्कोचकल्पनम् इत्यर्थः ।। ननु लाभार्थतायामप्यसच्छास्त्रादिव्युदासाय सङ्कोचः कार्य एवेत्यत आह– **महद्भिरिति** ।। अयोग्यतयैव तन्निरासः, प्रकरणाद्वेति भावः ।। ५२ ।।

## भावदीपः

**निरासः** 'असच्छास्त्रस्य' इति योज्यम् ।। **प्रकरणाद्वेति** ।। 'बुद्धिर्योगे त्विमां शृणु' **(२.३९)** इति ज्ञानोपायश्रवणस्य प्रकरणादित्यर्थः।। ५२ ।।

( योगानुष्ठानावधिनिरूपणम् )

**श्रुतिविप्रतिपन्ना ते यथा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ।। ५३ ।।**

**भाष्यम्** — तदेव स्पष्टयति- **श्रुतिविप्रतिपन्नेति** ।। पूर्वं श्रुतिभिर्वेदैर्विप्रतिपन्ना विरुद्धा सती यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि **निश्चला भवति**। ततश्च **समाधावचला** ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानन्द-मग्नत्वात् । **तदा योगमवाप्स्यसि** उपायसिद्धो भवसीत्यर्थः ।। ५३ ।।

**प्रमेयदीपिका**

ननूत्तरश्लोकेऽपि योगानुष्ठानावधिरेवोच्यते । अतः पुनरुक्तिदोषः इत्यत आह– **तदेवेति**।। किं तन्मोहकलिलम्? कीदृशं च तदतितरणम्? इत्याशङ्कायां पुंसामधममध्यमोत्तमा-वस्थादिप्रदर्शनेन पूर्वश्लोकोक्तमेव योगानुष्ठानावधिमनेन स्पष्टं करोतीत्यर्थः ।।

नन्वत्र '**श्रुतिविप्रतिपन्ना**' इति श्रवणादितो वैराग्यमुच्यते । यथाह **भास्करः** 'वस्त्वन्तर-श्रवणाद्विरक्तः' इति । ततः पूर्वत्रापि वैराग्यमर्थस्स्यात् । '**निश्चला**', '**अचला**' इति पुनरुक्तिश्च । योगावाप्तेरुत्तरा चेयमवस्था । तत्कथमुच्यते 'तदा योगमवाप्स्यसि इति'? इति शङ्कायां श्लोकं व्याचष्टे– **पूर्वमिति** ।। पूर्वावस्थात उत्तरावस्थायाः सामर्थ्यलब्धं वैलक्षण्यं दर्शयितुमुक्तम् – **वेदार्थेति** ।। चलनप्रसक्तिं दर्शयति– **विपरीतवाग्भिरिति** ।। असच्छास्त्रैरित्यर्थः। अनेन परोक्षज्ञानकाष्ठा दर्शिता ।

परोक्षतत्वनिश्चयानुवृत्तिव्युदासायोक्तम्– **ब्रह्मेति** ।। अत्रापि चलनप्रसक्तिमाह– **भेरीति** ।। तत्कथम्? इत्यत आह– **परमेति** ।। एतेनापरोक्षज्ञानकाष्ठा दर्शिता । उपायेन सिद्धः प्राप्तफलः । **योग**शब्देन तत्फलमुपलक्ष्यत इति भावः । श्लोकद्वयेऽप्येतदवस्थाप्राप्तिः योगानुष्ठानावधिरिति तात्पर्यम् ।। ५३ ।।

**भावदीपः**

**योगेति** ।। ज्ञानोपायेत्यर्थः ।। **पुनरुक्तिरिति** ।। पूर्वश्लोकेनेति भावः ।। **श्लोकद्वयेऽपीति** ।। '**यदा**'(२.५२) इति '**श्रुति**'(२.५३) इति श्लोकद्वयेऽपीत्यर्थः ।। **एतदलस्थेति** ।। दुःशास्त्रै-

रचाल्यमान[1]परोक्षतत्त्वनिश्चयवत्त्वावस्थाप्राप्तिः । भेरीताडनादिनाप्यचलसमाध्यवस्था-प्राप्तिर्ज्ञानोपायरूपनिवृत्तकर्मलक्षणयोगानुष्ठानावधिरित्यर्थः ।। ५३ ।।

**( स्थितप्रज्ञलक्षणप्रश्नः )**

**अर्जुन उवाच -**

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**

**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ।। ५४ ।।**

**भाष्यम्** — **स्थिता प्रज्ञा ज्ञानं यस्य स स्थितप्रज्ञः । भाष्यतेऽनयेति भाषा । लक्षणमित्यर्थः ।। उक्तं लक्षणमनुवदति लक्षणान्तरं पृच्छामीति ज्ञापयितुम्– समाधिस्थस्येति ।।**

**प्रमेयदीपिका**

ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः पृच्छतीति [2]सङ्गतेः स्फुटत्वात्तामनुक्त्वा प्रज्ञाशब्दस्य बुद्धि-मात्रार्थत्वप्रतीतिनिरासाय स्थितप्रज्ञशब्दार्थमाह– **स्थितेति** ।। प्रतिष्ठां प्राप्ता । **ज्ञानम्** अपरोक्षम् । '**किं प्रभाषेत**' इत्यतः '**का भाषा**' इत्यस्यार्थान्तरमाह – **भाष्यत** इति ।। ज्ञानीति व्यवह्रियत इत्यर्थः । **भाषा** इति भाषाशब्दस्य स्त्रीलिङ्गत्वाद् '**अनया**' इत्युक्तम् । व्यवहारकारणानामनेकत्वात् कस्यायं प्रश्न इति न ज्ञायते । अत आह– **लक्षणमिति** ।। सास्नादिमत्त्वं लक्षणं दृष्ट्वा हि गौरिति व्यवह्रियते ।।

( ज्ञानिसामान्यलक्षणविचारः )

ज्ञानिमात्रव्युदासाय '**समाधिस्थस्य**' इति विशेषणमिति प्रतीयते । समाधिं कुर्वत इति । यथाह **सङ्करः** 'लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सयाऽर्जुन उवाच'[3] इति। तदसदिति भावेनाऽह– **उक्तमिति** ।। ज्ञानिसामान्यलक्षणविषय एवायं **प्रश्नः** । किमर्थं तर्हि '**समाधिस्थस्य**' इत्युक्तमिति चेत् '**समाधावचला बुद्धिः**' इत्यनेन **उक्तं** ज्ञानिसामान्य**लक्षणम्** अनेनानुवदतीति ब्रूमः ।

---

१. मं-कोशे, सो-पाठे च । 'अवगम्यमान'-इति काणियूरुपाठः ।

२. 'प्रसङ्गतः स्पष्टं ह्यनुक्त्वा' इति वे-ग्रं पाठे एव नान्यत्र, मातृकासु च ।

३. शाङ्करभाष्ये-प्रथमभागे-पृ-२११ ।

न हीदं न लक्षणम् । ज्ञानिमात्रनिष्ठधर्मत्वात् । किमर्थोऽनुवादः? इति चेत् तद् ज्ञातं मयेति ज्ञापनार्थमिति वदामः । एतज्ज्ञापनेऽपि[1] किं प्रयोजनम्? इति चेत्- **लक्षणान्तरं पृच्छामीति** ज्ञापयितुम् । अन्यथा सिद्धप्रश्नोऽयमित्युपेक्ष्यः प्रसज्येतेति भावः । लक्षणान्तरप्रश्नस्य चेदं प्रयोजनम् । अयावल्लक्ष्यभावित्वान्न तत् सम्यग्व्यवहारोपयोगि । यावल्लक्ष्यभावि तु सार्वत्रिक-व्यवहारोपयोगिज्ञास्यामीति । अत एव प्रसिद्धलक्षणपदपरित्यागेनाप्रसिद्धभाषापदोपदान-मिति ।।

## भावदीपः

**स्थितिपदार्थः- प्रतिष्ठां प्राप्तेति।।** भेरीताडनादिनाऽप्यचश्चलतां प्राप्तेत्यर्थः । लक्षणस्य व्यवहारहेतुत्वं व्यनक्ति- **सास्नादीति ।। अन्यथेति ।।** लक्षणान्तरप्रश्नज्ञापनाभाव इत्यर्थः । **न तदिति ।।** समाधिस्थत्वम् ।। **अत एवेति ।। 'अयावल्लक्ष्य'** इत्यादिनोक्तार्थ-ज्ञापनार्थत्वादेवेत्यर्थः ।।

## ( केशवशब्दार्थः)

**भाष्यम् — कं ब्रह्माणमीशं रुद्रं च वर्तयतीति केशवः ।**
**तथाहि निरुक्तिः कृता हरिवंशेषु रुद्रेण कैलासयात्रायाम् ।**
**'हिरण्यगर्भः कः प्रोक्त ईशश्शङ्कर एव च ।**
**सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान् ।।'**[2]
इति वचनान्तराच्च ।

**किमासीत किं प्रत्यासीत ।।**

---

१. मातृकायां वर्तते । अपिः वे-ग्रं नास्ति ।

२. (अ) सूर्यस्य तपतो लोकानग्नेः सोमस्य वाऽप्युत । अंशवो यत्प्रकाशन्ते ममैते केशसञ्ज्ञिताः ।।४८।। सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः । तेन केशवनामाऽहं ख्यातो लोके युगे युगे ।। ४९ ।।
म.भा. शान्ति. ३५.

(आ) वि.पु. - यतस्त्वयैव दुष्टात्मा हतः केशी जनार्दन ।
तस्मात् केशवनाम्ना त्वं लोके ख्यातिं गमिष्यसि ।। ५-१६-२३ ।।

(इ) मैत्रायणीसंहितायां च केशवशब्दस्य विष्णावेव प्रयोगः. कां २, प्र पा ९,मन्त्र ८.
तत् केशवाय विद्महे नारायणाय धीमहि । तन्नो विष्णुः प्रचोदयात् इति ।।

## प्रमेयदीपिका

'कश्च, अश्च, ईशश्च केशाः ब्रह्मविष्णुमहेश्वराः । ते यस्यावयवभूताः स केशवः परमात्मोच्यते' इति भास्करो निरुक्तवान् **'एतत् श्रुत्वा वचनं केशवस्य'** इत्यत्र । तदसदिति भावेनाऽह–**कमिति** ।। कुत इयं निरुक्तिः? इत्यत आह– **तथाहीति** ।।

**'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिषु ।**
**आवां तवाङ्गसम्भूतौ ततः केशवनामवान् ।।'**[1]

इति हरिवंशवचनम् ।।

**वचनान्तराच्चेयमेव** निरुक्तिः स्वीकार्येत्याह– **हिरण्यगर्भ** इति ।। अत इति लभ्यते । तेनैवशब्दस्यान्वयः । हिरण्यगर्भ एव नत्वन्यः । प्रजापतिः । शङ्कर एव नत्वन्यः समर्थ इति वा । अनेन केशयोः कर्मणोरुपपदयोरन्तर्णीतण्यर्थात् 'वृतु वर्तने'**(पा.धा.७५८)** इत्यस्माद्धातोः 'डोऽन्यत्रापि दृश्यते' इति डप्रत्यय इत्युक्तं भवति ।[2] आसेरकर्मकत्वात् कथं कर्मप्रश्नः? इत्यत आह– [3]**किमासीतेति** ।। अध्याहृतप्रतियोगनिमित्ता द्वितीया । न कर्मणीत्यर्थः ।।

## भावदीपः

एवशब्दान्वयं दर्शयन्नेव तद्व्यावर्त्यमाह– **हिरण्यगर्भ एवेत्यादिना** ।। **डप्रत्यय इति** ।। 'डित्यभस्यापि टेर्लोपः' इति टेर्लोपे केशव इति रूपमिति भावः ।। **आसेरिति** ।। 'आस उपवेशने'**(पा.धा.१०२१)** इत्यस्येत्यर्थः ।।

### ( ज्ञानिनां प्रश्नाभिप्रायः )

**भाष्यम् — न चार्जुनो न जानाति तल्लक्षणादिकम् ।**
**'जानन्ति पूर्वराजानो देवर्षयस्तथैव च ।**
**तथाऽपि धर्मान् पृच्छन्ति वार्तायै गुह्यवित्तये ।**
**न ते गुह्याः प्रतीयन्ते पुराणेष्वल्पबुद्धिनाम् ।।'**

**इति वचनात् ।। ५४ ।।**

---

१. 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गसम्भूतौ तस्मात् केशवनामवान्' इति अधुनोलभ्यमानहरिवंशवचनम् पर्व ३,अ.८८, श्लो.४८ ।।

२. अयं केशवशब्दनिर्वचनभागः भागवतव्याख्याने ६.४.२५ सत्यधर्मतीर्थैः उदाहृतः ।

३. 'किमिति' इति मातृकाद्वये पठ्यते ।

## ( अर्जुनस्याज्ञानित्वनिराकरणम् )

### प्रमेयदीपिका

प्रश्नकरणादर्जुनस्याज्ञत्वं प्रतीतम् । तन्निवारयति– **नचेति** ।। **तल्लक्षणादिकं** ज्ञानिलक्षणं तत्प्रवृत्त्यनुपपत्तिसमाधानं च । प्रश्नस्यान्यथोपपत्तेरिति भावः । कुतः? इत्यत आह– **जानन्तीति** ।। समासान्तो विधिरनित्यः [१]। अतः **'पूर्वराजानः'** इति साधु । [२]**देवर्षयश्च तथैव** जानन्त्येव । **'धर्मान्'** इत्युपलक्षणम् । **वार्तायै** गुरोरात्मनां च ख्यात्यै । लोकस्य **गुह्यार्थवित्तये** च । एतेषां प्रश्नकरणं [३]लोकानां कथं गुह्यार्थवित्तये भवति? इत्यतो व्यतिरेकमुखेन उपपादयति– **न त** इति ।। **'छन्दस्युभयथा'(पा.सू.३.४.११७)** इत्यतः 'अल्पबुद्धीनाम्'[४] इति दीर्घत्वाभावः । गुह्यास्तेऽर्थाः पुराणादिषु प्रश्नोत्तरनिबन्धनेन विनोक्तिमात्रेणाल्पबुद्धीनां व्यक्तं न प्रकाशन्ते । नच प्रश्नाकरणे तदुपनिबन्धनं सम्भवतीत्यर्थः । एतेन **'मोहादिस्त्वभिभवादेः'** इत्येतत् प्रपञ्चितं भवति ।। ५४ ।।

### भावदीपः

**अन्यथोपपत्तेरिति ।।** लोकानुग्रहाद्यर्थतयोपपत्तेरिति भावः ।। ननु 'राजाहः सखिभ्यष्टच्' **(पा.सू.५.४.९१)** समासान्ते सति 'पूर्वराजा' इति भाव्यमित्यत आह– **समासान्त इति** ।। 'ऋक्पूरब्धूःपथामानक्षे' **(पा.सू.५.४.७४)** इति निर्देशात् ज्ञापकादनित्य इति भावः ।। **धर्मानित्युपलक्षणमिति** ।। 'ज्ञानिलक्षणादिकस्य' इति योज्यम् । तेनोक्तार्थसंवादीद-मिति भावः।। ननु अङ्गपादे[५] ('ह्रस्वनद्यापो नुट्'[६] **(पा.सू.७.१.५४)**) 'नामि' **(पा.सू.६.४.३)** इति सूत्रेण दीर्घोक्तेः 'बुद्धीनाम्' इति भाव्यमित्यत आह– **छन्दस्युभयथा अपीति ।। इत्येतत्प्रपञ्चित-मिति** ।। 'मोहादिस्त्वभिभवादेः' इत्यत्र क्रमाद् आदिपदद्वयार्थ[७]प्रश्न लोकानुग्रहयोः प्रदर्शनेन प्रपञ्चितमित्यर्थः ।। ५४ ।।

---

१. ' - रनित्य इत्यतः पूर्वराजानः इति साधु' इति वाक्यरीतिः क्वचिन्मातृकायाम् ।

२. 'देवा ऋषयश्च' इति पाठान्तरं मातृकायामेकत्र पठ्यते ।

३. 'कथं लोकानाम्' इति वाक्यक्रमः मातृकाद्वये ।

४. 'अल्पबुद्धिनाम्' इति ह्रस्वान्तपाठः मातृकायां क्वचित् पठ्यते ।

५. सो मातृकायां, मं मातृकायां च।

६. कंसान्तर्गतभागः का-मातृकायाम् अधिकं पठ्यते । नामि इति सूत्रं न पठ्यते ।

७. 'मोहादिपदार्थ-' इति क-मातृकायाम् । 'आदिपदद्वयार्थतया' इति सो मातृकायां च पाठः ।

## ( स्थितप्रज्ञलक्षणम् )

**श्रीभगवानुवाच-**

**'प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

**भाष्यम् — गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका । मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यन् लक्षणं प्रथमत आह– प्रजहातीति ॥ एवं परमानन्दतृप्तः किमर्थमेवं प्रवृत्तिं करोति? इति प्रश्नाभिप्रायः । प्रारब्धकर्मणा ईषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धिपूर्विका प्रवृत्तिः सम्भवति इत्याशयवान् परिहरति ॥**

### प्रमेयदीपिका

लक्षणप्रश्नस्यैवोत्तरं प्रतीयते । न तु '**स्थितधीः**' इत्यादेः, इत्यतस्तदुत्तरस्थानं दर्शयन् अनन्तरप्रकरणार्थं दर्शयति– **गमनादीति** ॥ **अभिसन्धिः** प्रयोजनोद्देशः । ईषदभिसन्धिसूचनाय **अति**शब्दः । प्रवृत्तिमात्रमिहाभिप्रेतम् । न भाषणादिकमेवेति ज्ञापनाय 'भाषणादि' इति नोक्तम् । व्यवहाराय लक्षणप्रश्नो घटते । प्रवृत्त्युद्देश्यप्रश्नस्तु व्यर्थ एव । नच शक्यः प्रतिवक्तुम् । अनेकेषां प्रवृत्त्युद्देश्यस्यैकरूपस्याभावादित्यभिप्रायेण भगवतोपेक्षितोऽसाविति किं न स्यात्? किं तदुत्तरस्थानप्रदर्शनेन? अन्यथाऽल्पमप्युद्देश्यं वक्तव्यमित्यत आह– **एवमिति** ॥

एवं भेरीताडनादावपि '**अचला**' इत्युक्तप्रकारेण परमानन्दतृप्तश्चेत् किमर्थं प्रवृत्तिं करोति? न कुर्यात् । करोति च । तस्मादुक्तमसदित्युक्ताक्षेप एवात्राभिप्रेतः । प्रश्नस्तु मुखत एव । अतो नोपेक्षामर्हतीति भावः । एतच्चार्जुनस्य प्रेक्षावत्त्वाद् गम्यते। एवं चेत् '**गमनादिप्रवृत्तिः**' इत्युक्तः परिहारो न पूर्णः। प्रवृत्तिकारणानुक्तेरित्यत आह– **प्रारब्धेति** ॥ ईषत् तिरोहितं ब्रह्म यस्यासौ तथोक्तः । परिहरति 'द्वितीयं प्रश्नं '**या निशा**' इत्यादौ' इति शेषः ॥

---

१. **ब्र.सू.भा-४.१.१९** तत्त्वप्रकाशिकायां - नच वाच्यं पुनः पुनरिष्टकाम्यपुण्यापादनादमुक्तिरिति । 'प्रजहाति यदा कामान्' इत्यादेः तदापादनस्य कादाचित्कत्वात् ॥ भावदीपः-'प्रजहाति... तदोच्यते' इति गीतोक्तदिशा प्रायः सर्वकामप्रहाण एव ज्ञानोदयेन कादाचित्ककाम्येष्टापादनस्य भोगेन क्षयसम्भवादिति भावः ॥

## भावदीपः

**अनन्तरप्रकरणेति** ।। **'प्रजहाति'** इत्याद्यनेक[1]कार्यात्मकोत्तरप्रकरणार्थमित्यर्थः । भाष्ये अनौचित्यमाशङ्क्य निराह– **प्रवृत्तीति** ।। इहेति ।। **'स्थितधीः किं प्रभाषेत'** इत्यर्ध इत्यर्थः । शङ्कते– **व्यवहारायेति** ।। यद्युत्तरार्धे गमनप्रश्नमात्रमभिमतं तर्हि पूर्वार्धोक्तप्रश्न एव समाधानार्ह इति गमनप्रश्न एव समाधानार्ह इति बुद्ध्या भगवता **'प्रजहाति'** इत्यादिना परिहार उच्यते । उत्तरार्धोक्तप्रश्नस्तूपेक्ष्यत्वान्न परिहृतो भगवतेति किं न स्यादित्यर्थः ।। तत्र हेतुः– **प्रवृत्तीत्याद्यर्थ एवेति** ।। व्यवहारानुपयोगादिति भावः ।। **नचेति** ।। किञ्चेत्यर्थः ।। **अन्यथेति** ।। **'व्रजेत किम्'** इत्यस्यावश्यं परिहर्तव्यत्व इत्यर्थः । **उक्तमसदिति** ।। **'समाधावचला बुद्धिस्तदा योगमवाप्स्यसि'** इत्युक्तमसदित्यर्थः । **अत्रेति** ।। **'व्रजेत किम्'** इत्यत्रेत्यर्थः ।। **एतच्चेति** ।। आक्षेपाभिप्रायवत्त्वमित्यर्थः ।।

( आधिकारिकाणां ज्ञानाभिभवादौ कारणम् )

**भाष्यम् — प्रायः सर्वान् कामान् प्रजहाति । शुकादीनामपीषद्दर्शनात् ।**

**'त्वत्पादभक्तिमिच्छन्ति ज्ञानिनस्तत्त्वदर्शिनः'**

**इत्युक्तेः तामिच्छन्ति ।**

**यदा त्विन्द्रादीनामाग्रहो दृश्यते तदाभिभूतं तेषां ज्ञानम् ।**

**तच्चोक्तम्–**

**'आधिकारिकपुंसां तु बृहत्कर्मत्वकारणात् ।**

**उद्भवाभिभवौ ज्ञाने ततोऽन्येभ्यो विलक्षणा'[2] इति ।**

**अत एव वैलक्षण्यादनधिकारिणामाग्रहादि चेदस्ति न ते ज्ञानिन इत्यवगन्तव्यम् ।**

१. '-नेकार्थश्लोकात्मकोत्तर' इति पां ।

२. देवानां नाशुभाद् ह्रासः शुभात् काचित् सुखोन्नतिः । आधिकारिकजीवानामेवमन्येषु तद्द्वयम् ।।
अल्पाधिकारिणां तत्र ह्रासोपि भवति ध्रुवम् । अशुभाभावजोन्नाहो महाधीकारिणामपि ।
अशुभे कृते न भवति तारतम्याच्च स स्मृतः ।। प्रजापाश्च तथा देवाः महाधीकारिणः स्मृताः ।
ऋष्यशीतिस्तथा सप्त पितराप्सरसां शतम् । गन्धर्वाणां तथा राज्ञां विशदन्यासु जातिषु ।।
अल्पाधिकारिणः प्रोक्ताः अनधीकारिणः परे' इति ब्रह्मण्डवचनम् भा.ता. ५.६.५ ।।

## प्रमेयदीपिका

ननु '[1]सर्वकामप्रहाणिर्ज्ञानिलक्षणत्वेनोच्यते । तत्कथमल्पाभिसन्ध्यङ्गीकारः? इत्यत आह– **प्राय** इति ।। कुतस्सर्वशब्दसङ्कोचः? इत्यत आह– **शुकादीनामपीति** ।। 'विरुद्धकामस्य' इति शेषः । तच्च प्रवृत्तिलिङ्गेन आगमाच्चेति[2] ज्ञातव्यम् । अनुकूलकामस्तु सर्वथाऽस्त्येव । अतोऽपि सङ्कोच इत्यतह– **त्वत्पादेति** ।। **तां** भक्तिम् । उपलक्षणमेतत् । प्रायेण विरुद्धकामत्यागो ज्ञानिनो लक्षणं चेदिन्द्रादीनां ज्ञानित्वं न स्यात् । बहुतरविरुद्धकामदर्शनात् । तथाभूता अपि चेद् ज्ञानिनस्तर्हि देवदत्तादयोऽपि किं न स्युः? इत्यत आह– **यदा त्विति** ।। **आग्रहः** विरुद्धकामाभिनिवेशः ।।

एतत्प्रमाणेन स्थापयति– **तच्चेति**।। 'आधिकारिकाः' इति पुरुषविशेषसञ्ज्ञा ।'**प्रजापाश्च तथा देवाः**' (भा.ता.५.६.५) इत्यादि वचनात् [3]। देवदत्तादिप्रतिबन्दीं मोचयति– **अत एवेति** ।। एतदागमोक्तादेव । **आदि**पदेन विरुद्धक्रोधादिग्रहणम् । अनेन **काम**शब्दः क्रोधादीनामप्युपलक्षणार्थ इति सूचितं भवति ।।

## भावदीपः

**एतच्च प्रवृत्तिलिङ्गेनागमाच्चेति ज्ञातव्यमिति**।। सन्न्यासभिक्षाटनाद्युद्देश्यकप्रवृत्ति-लिङ्गेन '**यं प्रव्रजन्तम्**'(भाग.१.१.२) इत्याद्यागमाच्च ज्ञातव्यमित्यर्थः । भगवदेकचित्ततया [4]'परमानन्द-मग्नस्योक्तरूपप्रवृत्तिकामस्य विरुद्धत्वादित्याहुः ।। **उपलक्षणमेतदिति** ।।

**'परब्रह्मत्वमिच्छामि परब्रह्मन् जनार्दन'**

इति श्रुतसायुज्यादिमोक्षकामस्य, '**इच्छा च तस्य युक्ता**' इत्यादिना प्रागुक्तेश्वरप्रसाद-ज्ञानादिकामस्य च' इति योज्यम् । '**तथा देवाः' इत्यादिवचनादिति** ।। पञ्चमस्कन्धषष्ठाध्याय-तात्पर्ये -

**'प्रजापाश्च तथा देवाः महाधीकारिणः स्मृताः'**

---

१. 'सर्वकामप्रहाणम्' इति कचिन्मातृकायाम् ।

२. इतिशब्दः मातृकायां, भावदीपटीकाप्रतीकग्रहणे च पठ्यते। मुद्रितपुस्तकेषु इतिर्नास्ति ।

३. आधिकारिकशब्दः द्विविधः । यौगिको रूढश्चेति । तथाहि-ब्र.सू.भाष्यदीपिकायां 'प्रत्यक्षोपदेशात्' इति सूत्रव्याख्याने -'अत्राधिकारिकशब्दो यौगिको नतु आधिकारिका इति पुरुषविशेषसंज्ञा 'प्रजापाश्च तथा देवाः' इति वचनादिति प्रमेयदीपिकोक्तरीत्या रूढः' इत्युक्तम् ।।

४. 'परमात्मानन्दमानस्योक्त' इति सो मातृकायां, 'परमानन्दमयस्य' इति का मातृकायां च पठ्यते ।

इत्यादि ब्रह्माण्डवचनादित्यर्थः ।। **कामशब्द इति** ।। **'यदा कामान्'**इति श्लोकस्थकामशब्द इत्यर्थः ।।

**भाष्यम् — न चात्र समाधिं कुर्वतो लक्षणमुच्यते ।**

**'यः सर्वत्रानभिस्नेहः'**(२.५७) **इत्यादि स्नेहनिषेधात् ।**

**नहि समाधिं कुर्वतस्तस्य शुभाशुभप्राप्तिरस्ति । असम्प्रज्ञातसमाधेः । सम्प्रज्ञाते त्वविरोधः ।।**

## प्रमेयदीपिका

ननु समाधिं कुर्वतो ज्ञानिनो लक्षणमेतदिति व्याक्रियताम् । तथा सति प्रश्नवाक्यस्थं **'समाधिस्थस्य'** इति पदं समञ्जसं स्यात् । सर्वशब्दश्चासङ्कुचितार्थः स्यात् । इन्द्रादि-विषयाक्षेपाप्रसक्तिश्चेत्यत आह– **न चेति** ।। **समाधिं कुर्वतः** स्नेहनिषेधोऽनुगुण एवेत्यत आह– **न हीति** ।। नात्र स्नेहनिषेधमात्रमुच्यते । किन्तु **'तत्तत्प्राप्य शुभाशुभम्'** इति शुभाशुभार्थप्राप्तिपूर्वकम् । नच तत्प्राप्तिः **समाधिं कुर्वतो** ज्ञानिनोऽस्ति । कुतः ? इत्यत उक्तम् – **असम्प्रज्ञातेति** ।। असम्प्रज्ञातः समाधिः यस्यासौ तथोक्तः । बाह्यार्थानुसन्धानं यत्र नास्ति सोऽसम्प्रज्ञातसमाधिः । इतरः [1]सम्प्रज्ञातसमाधिरिति योगशास्त्रे प्रसिद्धिः । तथा च लक्षणमसम्भवि प्रसज्येत । सावकाशेभ्यो बहुभ्यो निरवकाशस्यैकस्यैव बलवत्त्वमिति भावः । एवं तर्हि सम्प्रज्ञातसमाधिस्थस्यै[2]तल्लक्षणमस्तु । तत्रोक्तदोषाभावादित्यत आह– **सम्प्रज्ञाते त्विति** ।।

## भावदीपः

**नात्रेति** ।। लक्षणोक्तिप्रकरणे **'यः सर्वत्र'** (२-५७)इति तृतीयश्लोक इत्यर्थः ।। **शुभाशुभमितीति** ।। 'अनेन' इति शेषः ।। **प्राप्तिपूर्वकमित्यत्र** 'स्नेहनिषेधः[3]' इत्यनुषङ्गः ।। **असम्भवि प्रसज्येतेति** ।। 'समाधिं कुर्वतो ज्ञानिनो लक्षणत्वे' इत्यापादकं योज्यम् ।। ननु समाधिस्थपरत्वे **'प्रश्नवाक्यस्थम्'** इत्यादिना अनेकानुगुण्यमुक्तमित्यत आह– **सावकाशेभ्य**

---

१. 'सम्प्रज्ञातः' इति योगशास्त्रे प्रसिद्धः इति मातृकायां पठ्यते ।

२. 'समाधिस्थस्यैव एतल्लक्षणम्' इति कचिन्मातृकायाम् ।

३. 'निषेध' इति सो मातृकायां नास्ति ।

इति ।। प्रागुक्तदिशा अनुवादसङ्कोचविधानादिना[१] सावकाशेभ्यः समाधिस्थ-पदसर्वशब्द-... अनादिविषयाक्षेपेभ्यः[२] ....शुभाशुभप्राप्तिपूर्वकस्नेहनिषेधरूपनिरवकाश[३]रूपस्य एकस्येत्यर्थः[४] ।।

**भाष्यम् — तथाऽपि न तत्रैवेति नियमः ।**

**'कामादयो न जायन्ते ह्यपि विक्षिप्तचेतसाम् ।**
**ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयात् ।।'**

**इति स्मृतेः ।।**

## प्रमेयदीपिका

यद्यपि सम्प्रज्ञातसमाधौ शुभाशुभप्राप्ति[५]सम्भवेनासम्भवित्वं नाम लक्षणविरोधो नास्ति । तथाऽपि कामादिहानं समाधिस्थ एव पुंसीति नियमो नास्ति । असमाधिस्थेऽपि ज्ञानिनि विद्यमानत्वात् । तथाचातिव्याप्तिः स्यादित्यर्थः । असमाधिस्थेऽपि ज्ञानिनि कामाद्यभावः कुतः? इत्यत आह– **कामादय** इति ।। तदर्थं 'सर्वथा' इति विशेषण-प्रक्षेपेऽपि पुरुषविशेषेऽतिव्याप्तिपरिहारो दुर्घट एव । नचास्मन्मतेऽप्यव्याप्तिदोषः । असम्प्रज्ञातसमाधिस्थव्यतिरिक्तविषयत्वात् । सम्भवतस्तु तद्विषयत्वादिति ।।

## भावदीपः

**तदर्थमिति ।।** ज्ञानिमात्रेऽनतिव्याप्त्यर्थम् । सर्वदा कामादयो न जायन्त इति 'सर्वदा' इति विशेषण इत्यर्थः । **पुरुषविशेष इति ।।** ब्रह्मादिपुरुषविशेष इत्यर्थः । तत्र कदाऽपि विरुद्धकामानुदयादिति भावः । **अव्याप्तिदोष इति ।।** 'तत्तत्प्राप्य[६]' इत्युक्तिलक्षणस्य असम्प्रज्ञातसमाधिस्थपुरुषविशेषेऽव्याप्तिरित्यर्थः । **सम्भवत इति ।।'प्रजहाति'** इत्यादिनोक्त-कामक्रोधादिराहित्यरूपस्येत्यर्थः ।।

---

१. सो मातृकायामपि 'सङ्कोच(विरोधादिना)तिरोधानादिना' इति पठ्यते । उपरि 'क्रियादिविषयाक्षेप' इति मं-मातृकायाम् ।
२. 'विषयाक्षेप इत्यर्थः' इति वाक्यं समाप्तं काणियूरुमातृकायाम् । मातृकात्रयेपि अस्पष्टता ।
३. 'निरवकाशभूतस्य'इति सो मातृकायां पठ्यते।
४. इदं वाक्यं न स्पष्टं मातृकायाम् ।
५. 'प्रतीति' इति प्रचलितपाठः ।'प्राप्ति' इति श्रीनि.टिप्पण्यनुगुणः ।
६. 'प्राप्त्या' इति सो मातृकायां पठ्यते ।

( कामाः मनोगताः )

**भाष्यम् — मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ युक्तं हानं तेषामिति दर्शयति– मनोगतानिति ।। विरोधश्चोच्यते -'रसोऽप्यस्य परं दृष्ट्वा निवर्तते'**(२.५९) इति । न चैतददृष्ट्याऽपलपनीयम् । पुरुषवैशेष्यात् ।।

**प्रमेयदीपिका**

कामानां मनोगतत्वाव्यभिचाराद्[१] व्यर्थं विशेषणमित्यतो नेदं विशेषणम् । किन्तु सर्वकामत्यागस्यासम्भवित्वमाशङ्क्य तदुपपादनाय युक्तिरियमुक्तेत्याह– **मनोगता हीति** ।। **तत्रैव** मनस्येव । कामज्ञानयोर्विरोधः कुतः? इत्यत आह– **विरोधश्चेति** ।। **'रसो रागः'** (२.५६) इति वक्ष्यति ।। ननु सर्वकामप्रहाणमस्मदादिषु न दृष्टम् । तद्दृष्टान्तेन ज्ञानिष्वपि तदभावानुमानाद् असम्भवित्वं लक्षणस्येत्यत आह– **न चेति** ।। कुतः? उदाहृतप्रमाणविरोधात्[२]। प्रमाणविरुद्धार्थानुमाने च पण्डितमूर्खादिपुरुषवैचित्र्यालापप्रसङ्गादित्याह– **पुरुषेति** ।।

**भावदीपः**

उदाहृतेति ।। 'कामादयः' इति प्रमाणेत्यर्थः ।। ५५ ।।

**भाष्यम् — आत्मना परमात्मना । परमात्मन्येव स्थितस्सन् । आत्माख्ये तस्मिन् स्थितस्य तत्प्रसादादेव तुष्टिर्भवति ।**

**'विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः ।**
**देवाद्भवति वै तुष्टिर्नान्यथा तु कथञ्चन ।।'**

**इत्युक्तं हि नारायणाष्टाक्षरकल्पे ।**

**अतो नात्मा जीवः ।। ५५ ।।**

**प्रमेयदीपिका**

''**आत्मनि' 'आत्मना'** इति पदद्वयेन जीव एवात्रोच्यते' इति **कश्चित्**[३] । 'तृतीयान्तेन

---

१. अयं भा.र.को सम्मतपाठः ।'मनोगतत्वात् व्यभिचारात् ' इति मातृकायां कचित् पाठः।

२. 'उदाहृतप्रमाणात्' इत्येव कचिन्मातृकापाठः ।

३. शाङ्करभाष्ये, प्रथमभाग, पृ-२१४ ।

मनः' इत्यपरः[१]। तदुभयमसदिति भावेनाऽह– **आत्मनेति** ।। **'स्थितस्सन्'** इति शेषोक्तिः । वाक्यार्थं वदन् स्वव्याख्यानोपपत्तौ परव्याख्यानानुपपत्तौ च युक्तिमाह– **आत्माख्य** इति ।। **तस्मिन् स्थितस्य** तदेकाग्रचित्तस्य । अत्र त्यक्तविषयस्यापि तुष्टिरुच्यते । सा च परमात्मपरिग्रहे सम्भवति । नान्यथेत्यर्थः ।। कुतः? इत्यत आह– **विषयांस्त्विति** ।। ततः किम्? इत्यत आह– **अत** इति ।। ५५ ।।

**( स्वाभाविकमुनिलक्षणम् )**

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ।। ५६ ।।**

**भाष्यम् — तदेव स्पष्टयत्युत्तरैस्त्रिभिः श्लोकैः । एतान्येव ज्ञानोपायानि । तच्चोक्तम्–**

**'तद्वै जिज्ञासुभिः साध्यं ज्ञानिनां यत्तु लक्षणम्' इति ।**

**शोभनाध्यासो रागः ।**

**'रसो रागस्तथा रक्तिः शोभनाध्यास उच्यते'**

**इत्यभिधानात् ।।**

**प्रमेयदीपिका**

ननु लक्षणस्यानेनैवोक्तत्वात् किं **'दुःखेषु'** इत्यादिना? इत्यत आह– **तदेवेति** ।। उक्तं लक्षणमेव । स्पष्टनं च कामशब्दोपलक्षितदोषान्तरत्यागकथनादिनेति ज्ञेयम्[२]।।

ननु कामत्यागादीनि ज्ञानसाधनतयोच्यन्ते **'अमानित्वम्'**(१३.८) इत्यादौ ।। ततो ज्ञानिलक्षणस्य जिज्ञासावतिव्याप्तिरित्यत आह– **एतान्येवेति** ।। उप समीपे आयः फललाभो येषां तान्युपायानि साधनानि । सत्यमेतत् । तथाऽपि जिज्ञासौ प्रयत्नसाध्यानि, ज्ञानिनि तु स्वभावसिद्धानीति न दोष इति भावः ।।

अत्र प्रमाणमाह– **तच्चेति**।। समुच्चयवादी त्वाह – 'यानीह स्थितप्रज्ञलक्षणान्युच्यन्ते

१. रामानुजभाष्ये, प्रथमभाग, पृ-२१४ ।
२. 'ज्ञातव्यम्' इति मातृकाद्वये पठ्यते ।

तान्येवापवर्गसाधनानि' इति । तद्वाऽनेन दूषयति । ज्ञानसाधनान्येव नापवर्गसाधनानि । यथोक्तं 'कामकारेण चैके'(ब्र.सू.३.४.१५) इति। आनन्दवृद्ध्यर्थता त्वङ्गीकृतैव । **'योगे त्विमां शृणु'** इत्युक्त्वा कथं योगादन्यदुच्यते? इत्यतो वेदमुदितमिति । विगतस्पृहपदेनैव **'वीतरागः'** इत्येतद् गतार्थमित्यत आह– **शोभनेति** ।। अशोभनेषु विषयेषु शोभनत्व-भ्रान्तिः। **रसः, रागः,** रक्तिः इत्येतैः काम उच्यते । तथा **शोभनाध्यासः** उच्यत इत्यर्थः ।। ५६ ।।

**भावदीपः**

इत्यादाविति ।। **'अमानित्वमदम्भित्वम्'** इति त्रयोदशेऽध्याये ।। नपुंसकत्व-निर्वाहायाऽह– **उप समीप** इत्यादि ।। **यथोक्तमिति** ।। कामात्यागेऽपि ज्ञानिनो मोक्षो नियत इत्येतद् ज्ञानपादे सूत्रकृतोक्तमित्यर्थः । 'कामकारेण च' = कामचारेणापि ज्ञानिनो मोक्षं 'कामचाराः कामभक्षाः' इत्येके शाखिनः पठन्तीत्यर्थः ।। **अङ्गीकृतैवेति** ।। **'शमदमाद्युपेतः स्यात् तथाऽपि तु'** इति सूत्रकृतैवोक्तेरिति भावः ।। **इदमुदितमिति** ।। 'एतान्येव' इत्यादिकमुदित-मित्यर्थः । **'रसवर्ज्यम्'** इति वक्ष्यमाणोपयोगायाऽह– **इत्यैतेः काम उच्यत इति** ।। अत्र **'तथा'** इत्यनन्तरम् 'अपि' इत्येतदनुषज्यते ।। ५६ ।।

**यः सर्वत्रानभिस्नेहः तत्तत् प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ।। ५७ ।।**
**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ।। ५८ ।।**

**भाष्यम् — सर्वत्र अनभिस्नेहाच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि।। ५७.५८।।**

**प्रमेयदीपिका**

**'वीतरागभयक्रोधः'**[१](२.५६) इत्युक्तत्वात् **'न द्वेष्टि'** इति पुनरुक्तिरित्यत आह– **सर्वत्रेति** ।। सकारणकं द्वेषवर्जन[२]मत्रोच्यत इत्यर्थः ।। ५७ ।। ५८ ।।

---

१. वे-ग्रं, मातृकाद्वये च । 'वीतक्रोध'-इति सर्वत्र प्रचलितः अपपाठः।

२. श्री.टि.पाठः ।'द्वेषवर्जितत्वमत्रोच्यते'-वे-ग्रं, मातृकाद्वये च ।

( इन्द्रियजयोपायः )

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

**भाष्यम् — नचैतल्लक्षणं ज्ञानमयत्नतो भवतीत्याहोत्तरैः श्लोकैः । निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति ॥**

**प्रमेयदीपिका**

**'विषया विनिवर्तन्ते'** इत्यादिश्लोकत्रयान्तेऽपि **'तस्य प्रज्ञा प्रतिष्ठिता'** इत्युक्तत्वादिदमपि लक्षणविवरणमिति भ्रान्तिस्स्यात् । [1]तन्निराकरणार्थमाह– **नचेति** ॥ एतल्लक्षणं यस्माद्भवति तदेतल्लक्षणम् । **'अयत्नतः'** अल्पयत्नतः । 'अनुदरा कन्या' इति यथा[2]। 'यद्येवं लक्षणकं ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत्साधयति । कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानशिरा इव बम्भ्रमीति । अतो नास्त्येवेदं ज्ञानिषु लक्षणमित्याशङ्कापरिहारार्थम्' इति शेषः ॥

'त्रिभिः' इत्यनुवर्तते । ज्ञानस्याल्पप्रयत्नासाध्यत्वमत्र न प्रतीयत इत्याशङ्क्योपोद्घातप्रक्रिययेन्द्रियजयस्य तावन्महाप्रयत्नसाध्यत्वमाद्येन श्लोकेनोच्यत इति भावेन तं व्याचष्टे– **निराहारत्वेनेति** ॥

एतेन **'रसवर्जम्'** इत्येतदन्तस्य वाक्यस्यार्थ उक्तः । एवशब्देन 'रसवर्जम्' इत्येतद्व्याचष्टे । तथाहि– **निराहारस्य देहिनः** । तेन निराहारत्वेनेति यावत् । **'विषयाः'** रूपादयः । तद्भोगसमर्थानीन्द्रियाण्यनेनोपलक्ष्यन्ते ।तानि **विनिवर्तन्ते** । **'रसवर्जं'** रसः रागः, तं वर्जयित्वा । विषयाभिलाषः चैतसिको निराहारत्वेन न विनिवर्तत इति ॥

**भावदीपः**

**एतदिति** ॥ सर्वकामप्रहाणादिरूपं लक्षणमित्यर्थः । 'षष्ठी शेषे' **(पा.सू.२.३.५०)** इति सूत्रभाष्योक्तमाह– **अनुदरा कन्येति यथेति** ॥ सूक्ष्ममध्यमायामनुदरा इति यथोच्यते तथेत्यर्थः॥ **एवंलक्षणमिति** बहुव्रीहिः । कामप्रहाणादिलक्षणसाधनं ज्ञानं यदीत्यर्थः ॥ न

१. 'तन्निरासार्थमाह' - वे-ग्रं।

२. **'सतोऽप्यविवक्षा भवति । यथा अनुदरा कन्या' इति व्याकरणमहाभाष्य(२.३.५०)वचनम् ।**

तदिति ।। ज्ञानमित्यर्थः ।। **बम्भ्रमीति** ।। पुनः पुनः भ्रमतीत्यर्थः । 'भ्रमु चलने'(पा.धा.८५०) इत्यस्य यङ्लुकि रूपम् ।। **उपोद्घातप्रक्रिययेति** ।। उपयुक्तं प्रागुक्त्वा पश्चात्तत्प्रधानोक्तिरिति न्यायेनेत्यर्थः ।। इन्द्रियजयस्य महाप्रयत्नसाध्यत्वोक्तिश्च ज्ञानस्य अल्पप्रयत्नासाध्यत्वोक्ता-वुपयुक्तेति[1] भावः ।।

**भाष्यम् —** इतरविषयाकाङ्क्षाभावो वा । **रसाकाङ्क्षादिर्न निवर्तते** । स त्वपरोक्षज्ञानादेव निवर्तत इत्याह– **विषया इति** ।।

**प्रमेयदीपिका**

अस्यैवार्थान्तरमाह– **इतरेति** ।। आकाङ्क्षाशब्देन भोगशक्तयोऽपि लक्ष्यन्ते । **'रसवर्जम्'** इत्यस्यार्थो- **रसाकाङ्क्षादिरिति** ।। ततश्चेयं योजना । निराहारत्वेन रसादितरे विषयाः तद्भोगशक्तयः,तदाकाङ्क्षाश्चेति यावत् । **विनिवर्तन्ते** रसं वर्जयित्वा । मनसो रसविषयाकाङ्क्षा रसनेन्द्रियस्य तद्भोगशक्तिश्च **न निवर्तते** इति । **'रसोऽपि'** इत्यस्यार्थमाह– **स त्विति** ।। आद्येऽर्थे **सः** रसः सर्वविषयविषयको रागः । द्वितीये **सः** रसः तद्भोगशक्तिः, तदाकाङ्क्षा च। उक्तमर्थं श्लोकारूढं करोति– **इत्याहेति** ।।

**भावदीपः**

**इयं योजनेति**।। 'गीतावाक्यस्य' इति योज्यम् ।। **तद्भोगशक्तय इति** ।। अत्र 'इन्द्रियाणाम्' इति 'तदाकाङ्क्षा' इत्यत्र च 'मनसः' इति योज्यम् ।। **द्वितीय इति**।। 'अर्थः' इत्यनुषज्यते ।।

**भाष्यम् — 'इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।**
**वर्जयित्वा च रसनामसौ रस्ये तु वर्धते ।।'**[2]
**इति वचनाद् भागवते (भाग.११.८.१९)।**

[3]**रसशब्दस्य रागवाचित्वाच्च** ।। ५९ ।।

---

१. सो मातृकायां 'महाप्रयत्नसात्वोक्तेश्च..... साध्यत्वोक्तावनुपयुक्तेति' इति पठ्यते ।

२. **'रसजयो दुश्शक इत्युपपादयति-इन्द्रियाणीति । रसनं रसनेन्द्रियम् । असौ रसना । रस्ये स्वविषये वर्धते'** इति विजयध्वजीये ।।

३. (अ)**'रसशब्दाच्च रागः'**(१.१.६) इति **शाण्डिल्यभक्तिसूत्रे** ।
(आ)**'रसो रागे विषे वीर्ये'** इति यादवः -**भा.विज.११-८-२०** ।

### प्रमेयदीपिका

द्वितीयार्थे प्रमाणमाह– **इन्द्रियाणीति** ।। **जयन्ति** भोगशक्तिक्षयेण रागक्षयेण च । **असौ** रसना तु । **रस्ये** विषये । प्रकारद्वयेन च **वर्धते** । आद्यमर्थमुपपादयति– **रसशब्दस्येति** ।। 'उक्तं युक्तम्' इत्युभयत्र शेषः ।। **रसशब्दस्य** रागवाचित्वं तूक्ताभिधानादवगन्तव्यम् । अचेतने चेतनवदुपचारात् **'रसः परं दृष्ट्वा निवर्तते'** इति युक्तम् ।।

### ( इन्द्रियजयः कथं करणीयः )

अयमर्थसङ्ग्रहः । यदा बाह्येन्द्रियाणि विषयैस्सन्निकृष्यन्ते तदा तद्द्वारा मनस्तत्र प्रवर्तते । प्रवृत्ते च मनसि रागो भवति । तत आत्मनः क्षोभ इत्येष इन्द्रियाणामविजयः । यो हि यं व्याकुलं करोति स तेन विजित इत्युच्यते । यदा तु बाह्येन्द्रियाणि विषयसन्निधानेऽपि न तैः सन्निकृष्यन्ते, सन्निकृष्टान्यपि न मनः तदाभिमुख्येनाहरति,आहृतेऽपि मनसि न विषयरागो जायते, तदा नात्मनः क्षोभो भवतीत्येष इन्द्रियजयः । सोऽयं सङ्ग्रहेण द्वेधा – बाह्येन्द्रियाणां शक्तिक्षयान्मनसो रागक्षयाच्च । एतद्द्वयं च पुरुषभेदेनोक्तप्रकारद्वयेन निराहारत्वब्रह्म-साक्षात्काराभ्यां भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति ।। ५९ ।।

### भावदीपः

[1]**द्वितीयार्थ** इति ।। रसनेन्द्रियविषयेतरविषयविषयीकरणः रागः तद्भोगशक्तिश्च निवर्तत इत्यर्थे प्रमाणमाहेत्यर्थः।। **प्रकारद्वयेनेति** ।। भोगशक्त्या रागेण चेति प्रकारद्वयेनेत्यर्थः । **उभयत्रेति** ।। 'इति वचनात्' इत्यत्र 'रागवाचित्वाच्च' इत्यत्र चेत्यर्थः ।। **सोऽयमिति** ।। इन्द्रियजय इत्यर्थः ।। **पुरुषभेदेनेति**।। जिज्ञासुज्ञानिरूपपुरुषभेदेन ।। **'उक्तप्रकारद्वयेन'** इत्येतत् व्यनक्ति– **निराहारत्वेति** ।। ५९ ।।

### ( इन्द्रियजयः न साधारणयत्नसाध्यः )

**यततो [2]ह्यपि कौन्तेय पुरुषस्य विजानतः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ।। ६० ।।**

**भाष्यम्** — अपरोक्षज्ञानरहितज्ञानिनोऽपि साधारणयत्नवतोऽपि **मनो** **हरन्ति**

१. मातृकात्रयेऽपि अत्र वाक्यद्वयं पूर्वापरीकृतम् । लेखकप्रमाद इति सम्भाव्यते ।
२. 'हिशब्देन प्रसिद्धमेतदजामिळादाविति सूचितम् । नोदाहरणं भाष्ये'इति नरहरितीर्थीये।

**इन्द्रियाणि । पुरुषस्य शरीराभिमानिनः । को दोषस्ततः । प्रमाथीनि प्रमथनशीलानि पुरुषस्य ।। ६० ।।**

### प्रमेयदीपिका

ननु यत्नज्ञानाभ्यामिन्द्रियजयमुक्त्वा '**यततो ह्यपि**' इति तद्विरुद्धं कथमुच्यते? इति चेत्- न । इन्द्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन? प्रत्याहारादिना साधारणेन प्रयत्नेन[१] तत्सम्भवात् । तथा किमपरोक्षज्ञानेन[२]? नित्यानित्यविवेकज्ञानेनापि तदुपपत्तेरित्याशङ्क्य तन्निषेधोऽत्र क्रियत इत्याशयवान् व्याचष्टे- **अपरोक्षेति**।।

ज्ञानस्य प्राधान्यसूचनाय '**विपश्चितोऽपि**' इत्येतत् पश्चादुक्तमपि '**अपरोक्ष**' इति, आदौ व्याख्यातम् । '**यततोऽपि**' इत्यस्यार्थः- **साधारणेति** ।।'**हरन्ति**' विषयसन्निकृष्टानि तदभिमुखं कृत्वा तद्रागीकुर्वन्तीत्यर्थः । 'पुरुषस्य' इति व्यर्थम् । स्त्रीणामप्येवम्भावादित्यत आह- **पुरुषस्येति** ।। एतच्चोक्तोपपादनार्थम् ।'**प्रमाथीनि**' इत्यस्य प्रयोजनं वक्तुमाह- **क इति**।। एतावता आत्मनस्तदविजयः[३] कथमित्याशयः? मनो हृतवन्ति पुरुषस्य क्षोभण**शीलानी**ति न तेन जितानीति भावः। '**पुरुषस्य**' इत्यनेन उभयत्रास्यान्वयं दर्शयति ।। ६० ।।

### भावदीपः

**तदुपपत्तेरिति** ।। रागक्षयोपपत्तेरित्यर्थः ।। **उक्तोपपादनायेति** ।। मनोहरन्ति इत्याद्युक्तोपपादनाय शरीराभिमानिन इत्यर्थः ।। **एकं** 'पुरुषस्य'इति पदमित्यर्थः ।। **उभयत्रेति** ।। 'पुरुषस्य मनो हरन्ति, पुरुषस्य प्रमाथीनि'इत्युभयत्रेत्यर्थः ।। ६० ।।

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**

**वशे हि[४] यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ।। ६१ ।।**

**भाष्यम् —** तर्ह्यशक्यान्येवेत्यत आह- **तानीति** ।। बहुयत्नवतः शक्यानि । अतो यत्नं कुर्यादित्याशयः ।।

१. 'साधारणप्रयत्नेन' इति मातृकाद्वयपाठः, वे-ग्रं पाठश्च।

२. 'परब्रह्मापरोक्षज्ञानेन' इति मातृकाद्वये पठ्यते ।

३. श्री.टि, भा.र.कोसम्मतपाठः ।'तदजयः' इति मातृकासु पठ्यते ।

४. 'एतदपि गङ्गाद्वारादौ यतमाने अजामिळादौ प्रसिद्धमिति हिशब्दसूचितत्वान्नात्राप्युदाहरणं भाष्ये' इति नरहरितीर्थीये।

### प्रमेयदीपिका

उपोद्घातस्य साध्ये वक्तव्ये **'तानि सर्वाणि'** इति किमुच्यते? इत्यतो अन्तरापतितां शङ्कां निवर्तयितुमेतदिति भावेनाऽह– **तर्हीति** ।। यदि साधारणयत्नविवेकज्ञानाभ्यां न जीयन्त इत्यर्थः। 'अशक्यान्येव जेतुम्' इति शेषः । निराहारस्य देहावस्थानासम्भवाद् ब्रह्मापरोक्ष-ज्ञानस्य चेन्द्रियजयसाध्यतयाऽभिप्रेतत्वेनेतरेतराश्रयप्रसङ्गादिति भावः । तथाच 'तज्जयस्य ज्ञानसाधनत्वं[१] यद्विवक्षितं तत्र सम्भवति' इति शङ्काशेषः । इन्द्रियसंयमोऽशक्य एवेति शङ्कायां **'तानि सर्वाणि संयम्यासीत'** इति किमेतदुच्यते? इत्यत आह– **बहुयत्नवत** इति ।। [२]यत्नं 'बहुम्' इति शेषः ।।

यद्यपि तज्जये परोक्तं साधनमस्मदुक्तं चाशक्यम्[३] । तथाऽपि तत्प्रतिनिधिना महाप्रयत्नेन जय्यानीत्यर्थः । एतदप्युपोद्घातत्वेनैवोक्तमिति ज्ञातव्यम् ।।

### भावदीपः

**उपोद्घातस्येति** ।। इन्द्रियजयस्य महाप्रयत्नसाध्यत्वरूपोपयुक्तप्रमेयस्य ज्ञानम् अल्पप्रयत्नसाध्यम् इत्येवंरूपे साध्ये वक्तव्य इत्यर्थः । **न परोक्तमिति** ।। प्रत्याहारादि-साधारणप्रयत्नरूपम् **अस्मदुक्तं चेति** ।। निराहारत्वरूपं देहावस्थानायोगेन **अशक्यम्** ।। 'यद्यपि' इत्यनुषङ्गः ।। **तत्प्रतिनिधिनेति** ।। अस्मदुक्तप्रतिनिधिना तत्कार्यकारिणा महा-प्रयत्नेनेत्यर्थः ।। एतेनान्योन्याश्रयोऽपि प्रत्युक्तः । ज्ञानस्येन्द्रियजयसाध्यत्वेऽपि तस्य महाप्रयत्नसाध्यत्वेन ज्ञानासाध्यत्वात् - **एतदपीति**।। **'तानि'**[४] इति श्लोके इन्द्रियजयस्य महाप्रयत्नसाध्यत्वकथनमपि ज्ञानस्याल्पप्रयत्नासाध्यत्वप्रमेयोपयोगित्वेनोक्तमित्यर्थः।।

### ( युक्तशब्दार्थः )

**भाष्यम् — युक्तः मयि मनोयुक्तः[५] (मनोयोगयुक्तः)। अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्परः । फलमाह – वशे हीति ।। ६१ ।।**

---

१. साध्यत्वं इति कचिन्मातृकायां पठ्यते ।

२. 'संशब्दार्थः बहिरिति' इति पद्मनाभतीर्थाः । गीतास्थसंशब्दार्थ इत्यर्थः ।

३. प्रचलितसर्वपाठेषु- 'न शक्यम्' इति पठ्यते । 'अशक्यम्' इति भावदीप,श्री.टि.भा.र.कोसम्मतपाठः ।

४. अत्र 'प्रजहाति' इति सो मातृकायां पठ्यते ।

५. भा.र.कोशानुसारी पाठः । कंसान्तर्गतः प्रचलितपाठः ।

### प्रमेयदीपिका

**'युक्तः'** इति नैतद्युजिरो रूपम् । येन प्रतिसम्बन्ध्याकाङ्क्षायां तदनुक्तिर्दोषः स्यात्, किन्तु समाध्यर्थस्य युजेरिति भावेनाऽऽह– **युक्त** इति ।। **'मत्परः'** इत्युत्तरत्र श्रवणात् **'मयि'** इत्युक्तम् । 'मत्परः' इत्यद्वैतज्ञानमिति[१] अन्यैर्व्याख्यातम्[२] । तन्नाक्षरानुसारीत्याशयवान् व्याचष्टे– **अहमेवे**ति।। भगवानेव सर्वस्मादुत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरं मनसो योजनमिन्द्रियजये परं साधनमिति भावः । निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति मन्तव्यम् ।।

यदर्थमयमुपोद्घात उक्तस्तत्प्रदर्शनपरतयोत्तरार्धतात्पर्यमाह– **फलमिति** ।। यद्येवं ततः किम्? इत्याकाङ्क्षायामिन्द्रियजयस्य ज्ञानं फलमाहेत्यर्थः । यत एवं ज्ञानं महायाससाध्येन्द्रियजयफलमत एवायासभीरुर्जनो न तत्साधयति । नतु ज्ञानस्योक्तलक्षण[३]साधनत्वाभावाद् इति श्लोकत्रयतात्पर्यार्थः ।। ६१ ।।

### भावदीपः

**वस्तुगतीति** ।। निराहारेणापीन्द्रियाणां भोगशक्तिक्षयः प्रमित इति भावेनैवोक्तं मुख्यं साधनं भगवति मनोयोग एवेत्यर्थः ।। ६१ ।।

( रागादिदोषकारणानि )

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ।। ६२ ।।**
**क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशाद् विनश्यति[४] ।। ६३ ।।**

**भाष्यम्** — रागादिदोषकारणमाह परिहाराय श्लोकद्वयेन । **सम्मोहः** अकार्येच्छा । तथाहि सम्मोहशब्दार्थ उक्त उपगीतासु-

---

१. वे-ग्रं, मातृकाद्वये च नास्ति । अत्र इतिशब्दः अवश्यः । एकस्यां मातृकायां पठ्यते।

२. शाङ्करभाष्ये -इति भा.र.को.काराः ।

३. 'साधन'इति अधिकं श्रीनि टिप्पण्याम् ।

४. गीताभाष्यरीत्या अयमेव पाठः । 'प्रणश्यति' इति गीताविवृतिरीत्या पाठः ।

'....सम्मोहसञ्ज्ञितम् ।
अधर्मलक्षणं चैव नियतं पापकर्मसु'(म.भा.अश्व.३६.८) इति ।

तथाचान्यत्र

'सम्मोहोऽधर्मकामिता' इति ।

**स्मृतिविभ्रमः** प्रतिषेधादिस्मृतिनाशः । **बुद्धिनाशः सर्वात्मना** दोषबुद्धिनाशः । **विनश्यति** नरकाद्यनर्थं प्राप्नोति । तथा ह्युक्तम्–

'अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा ।
दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते' इति ।। ६२,६३ ।।

**प्रमेयदीपिका**

'**ध्यायतः**' इत्यादिना प्रकृतानुपयुक्तं किमेतदुच्यते? इत्यत आह–**रागादीति** ।। रागादिदोषस्य कारणं **रागादिदोषकारणम्** । तथा रागादिदोषः कारणं यस्य तद् **रागादिदोषकारणम्** । **परिहाराय** रागादिदोषस्य । इदमुक्तं भवति । '**मत्परो युक्त आसीत**' इतीन्द्रियजयस्य परमसाधनमुक्तम् । [1]रागादिदोषपरिहारोऽप्यपरं साधनमिति वक्ष्यति । तत्र स एव कथं स्यात् ? इत्याकाङ्क्षायामुपोद्घातप्रक्रिययेदमुच्यत इति । सम्मोहो मूर्च्छाऽत्र न सङ्गच्छत इत्यतोऽन्यथा व्याचष्टे– **सम्मोह** इति ।। **अकार्येच्छा**[2] अधर्मेच्छा । कुतः? इत्यत आह– **तथा हीति** ।। संशब्दस्तु तस्यैव विशेषक इति भावः । अदृष्टरूपाधर्मविषयम्। तद्धेतुषु **पापकर्मसु च नियतं** कामनं **मोहसञ्ज्ञितमि**त्यर्थः ।।

स्पष्टं चात्र प्रमाणमाह– **तथा चेति** ।। यत्किञ्चिद्विषयस्य स्मृतिविभ्रमस्य प्रकृतानुपयोगात् सम्यग्व्याचष्टे– **स्मृतिविभ्रम** इति[3]।। **विभ्रमः** अनवस्थानम् । नाश इति यावत् । चेतनस्य कथं बुद्धिनाशः? इत्यत आह– **बुद्धीति** ।। स्मृतिविभ्रम एवायमित्यतः '**सर्वात्मना**' इत्युक्तम्। '**नित्य आत्मा**' इत्युक्तम् । तत्कथं विनश्यति? इत्यत आह– **विनश्यतीति** ।।

उक्तेऽर्थे प्रमाणमाह– **तथाहीति** ।। '**तदा' दोषादृष्टेः** । एतदुक्तं भवति । रागद्वेषयोः

१. 'रागद्वेषपरिहार' वे-ग्रं, मा१+२। अयमेवोचित इति भाति। 'रागद्वेषपरिहारस्य'इत्युपरितनटीकानुरोधात् ।
२. मातृकासु अयं शब्दः न पठ्यते ।
३. 'स्मृति' इति क्वचित् प्रतीकग्रहणं दृश्यते।

परम्परया नरकाद्यनर्थप्राप्तिः कार्यमिति ज्ञानेन तत्परिजिहीर्षायां विषयध्यानं परम्परया तत्कारणमिति ज्ञानेन तदकरणात् तयोरनुत्पादो भवतीति ।। ६२-६३ ।।

**भावदीपः**

गीतायां द्वयोरप्युक्तेः भाष्येऽप्यर्थद्वयमाह– **रागादीति** ।। **वक्ष्यतीति** ।। 'रागद्वेष'(२.६४) इत्यादाविति भावः ।। ६३ ।।

( इन्द्रियजयफलम् )

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ।। ६४ ।।**

**भाष्यम् — इन्द्रियजयफलमाहोत्तराभ्यां श्लोकाभ्याम् ।।**

**प्रमेयदीपिका**

**'रागद्वेष'**इति श्लोकद्वयस्य तात्पर्यमाह– इन्द्रियेति ।। इन्द्रियजयश्च तत्फलं च **इन्द्रियजयफलम्** । इन्द्रियजयस्य फलं **इन्द्रियजयफलम्** । अस्त्वेवं रागद्वेषपरिहारः । ततः किम् ? इत्याकाङ्क्षायां रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमाह । इन्द्रियजयेन किं भवति? ('वशे हि यस्येन्द्रियाणि' इति)[1] ज्ञानं भवतीत्युक्तमिति चेत् -सत्यम् । तत्किं साक्षादिन्द्रियजयफलम्? उत व्यवहितम्? इत्याकाङ्क्षायामिन्द्रियजयस्य फलं ज्ञानं यथा भवति तथाऽऽहेत्यर्थः[2]।।

**भावदीपः**

**'यदा'** इत्यस्य प्रतिसम्बुद्ध्युक्त्या[3] अर्थोक्तिस्तदा 'दोषादृष्टेः इति गीतायां पूर्वोत्तर-भागोक्तार्थानुरोधेन भाष्यस्यापि द्वेधाऽर्थमाह- **इन्द्रियजयश्च तदिति**।। कर्मधारयतत्पुरुषयोः तन्त्रेणायं निर्देशो भाष्य इति भावः ।। इन्द्रियजयाख्यफलोक्ताववसरसङ्गतिमाह – **अस्त्वेवमिति**।। उत्तरार्धे इन्द्रियजयस्य फलोक्तेरप्याकाङ्क्षालक्षणसङ्गतिमाह– **इन्द्रियजयेन किमिति** ।। 'फलम्'

---

१. कंसान्तर्गतभागः मातृकासु न पठ्यते ।

२. भावदीपानुगुणपाठः । श्रीनि, तथा 'यथा भवति तथा' इति वे-ग्रं,गुजपाठेपि । 'स्यात् तथा' इति प्र.पाठः।

३. 'प्रतिसम्बन्ध्युक्त्यर्थोक्तिः' इति मं मातृकायाम् ।

इत्यनुषङ्गः ।। किं फलं भवतीति पृष्टे **'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा'**(२.६१) इति प्रागुक्तज्ञानरूपफलमाशङ्क्य तदङ्गीकारेण स्वप्रश्नाभिप्रायं विविच्याऽह– **'वशे हि'** इत्यादिना 'इति' इत्यन्तेन ।। **यथेति** ।। येन प्रकारेण मनःप्रसादद्वारा **भवति तथाऽहे**त्यर्थः । तथा चेन्द्रियजयेन ज्ञानोदयप्रकारोक्तिपरत्वादस्य **'वशे हि'** इत्यनेन न गतार्थतेति भावः ।।

भाष्यम् — **विषयान् अनुभवन्नपि । विधेय आत्मा [1]मनो यस्य सः । जितात्मेत्यर्थः । प्रसादं मनःप्रसादम् ।। ६४ ।।**

## प्रमेयदीपिका

'रागद्वेषपरिहारवद् विषयचरणस्यापीन्द्रियजयसाधनत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासाय आह– **विषयानिति** ।। निराहारत्वमिन्द्रियजये कारणम् । तच्चाशक्यम् । अतः कथमिन्द्रियजयः ? इत्याशङ्क्य देहधारणमात्रोपयुक्तविषयानुभवो न दोषायेति तदभ्युपगममात्रमनेन क्रियत इति भावः । इन्द्रियजयवाचकं पदमत्र न श्रूयत इत्यतस्तद्व्याचष्टे– **विधेय** इति ।। **सः** 'विधेयात्मा' इति शेषः । किमनेनापि ? इत्यत आह– **जितात्मेति**[2]।।

अनेन पादत्रयेण रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमुक्तम् । यद्यप्यनुवादोऽयं प्रतीयते । तथाऽप्यप्राप्तत्वादन्यथावाक्यवृत्तिः । तथाहि- य उक्तविधया त्यक्तरागद्वेष सः **रागद्वेषवियुक्तैः** ताभ्यामप्रयुक्तैः केवलं शरीरधारणार्थं **विषयांश्चरति** । सः विधेयात्मा भवति । तत एव बाह्येन्द्रियाण्यपि तस्य वश्यानि भवन्तीति । अत एव क्रमेण वाक्यद्वयस्य पृथक् तात्पर्यं नोक्तम्। द्वितीयाकाङ्क्षोत्तरत्वेनेन्द्रियजयस्य ज्ञानं व्यवहितफलमिति दर्शयितुं साक्षात् फलमुक्तम् – **विधेयात्मा प्रसादमधिगच्छती**ति ।।

तत्र प्रसादो नाम आत्मधर्म[3] इति प्रतीयते । तन्निवृत्त्यर्थमाह– **प्रसादमिति** ।। **'प्रसन्नचेतसः'**(२.६५)इति वक्ष्यमाणत्वादिति भावः ।। ६४ ।।

## भावदीपः

**अनुवादोऽयमिति** ।। 'विधेयात्मा' इत्यन्तो ग्रन्थ इत्यर्थः ।। **अप्राप्तत्वादिति** ।। यथा 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां च' इत्यादौ यथा यच्छब्दाद्यनुवाद-

१. मनः इति वे-ग्रं, गुजपाठे नास्ति । प्रभ,विद्यापीठयोः वर्तते ।
२. बे। 'जितेति' इति प्र.पा ।
३. शाङ्करभाष्ये पृ-२२९ । प्रसादः-प्रसन्नता स्वास्थ्यम् इति ।

लिङ्गसत्वेऽप्यप्राप्तत्वादपूर्वकर्मविधिबोधकत्वं तथाऽत्र विधेयआत्मत्वादेः पूर्ववाक्यैर्मानान्तरेण वा प्राप्तत्वाभावात् । **अन्यथा** विधिपरत्वेन **वाक्यवृत्तिः** वाक्यस्य बोधकतेत्यर्थः ।। तं प्रकारं व्यनक्ति- **तथाहीत्यादिना** ।। **उक्तविधयेति** ।। 'एतदुक्तं भवति' इत्यादिनोक्तविधया इत्यर्थः ।। **अत एवेति** ।। हेतुहेतुमद्भावापन्नत्वादेव विधेयात्मपदतात्पर्योक्त्यैव **'इन्द्रियैः आत्मवश्यैः'** इत्यस्योक्ततात्पर्यकत्वादेवेत्यर्थः।। **द्वितीयाकाङ्क्षेति**।। **'किं साक्षाद् इन्द्रिय-जयफलम्'** इत्यादिनोक्तद्वितीयेत्यर्थः ।। ६४ ।।

**( मनःप्रसादे ब्रह्मापरोक्षज्ञानं भवति )**

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ।। ६५ ।।**

**भाष्यम् —** कथं प्रसादमात्रेण सर्वदुःखहानिः? **प्रसन्नचेतसो हि बुद्धिः पर्यवतिष्ठति । ब्रह्मापरोक्ष्येण सम्यक् स्थितिं करोति । प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः।। ६५ ।।**

**प्रमेयदीपिका**

प्रसादे सति किं स्यात्? इत्यत उक्तं- **प्रसाद** इति ।। तदाक्षिपति- **कथमिति** ।। **'तरति शोकमात्मवित्'** इत्यादिविरोधादिति भावः ।। किञ्च 'प्रसादे सति ज्ञानं भवति' इति वा व्यवधानान्तरं वा वक्तव्यम् । तन्नोक्तम् । सर्वदुःखहानिस्त्ववक्तव्यैवोक्ता' इति चाक्षेपशेषः। एतत्परिहारत्वेनोत्तरार्धं व्याख्याति- **प्रसन्नेति** ।।

एतेन प्रसादस्य फलद्वयमुच्यत इत्यपि प्रतीतिर्निरस्ता भवति । प्रसादे सति ब्रह्मापरोक्षज्ञानं भवति । तच्च व्यवधानेनेति भविष्यति । ततो भवन्ती सर्वदुःखहानिः प्रसादफलतयोक्तेति न वक्तव्यानुक्तिः । नाप्यवक्तव्योक्तिः । **'बुद्धियुक्तः'**(२.५१) इति श्लोके सुकृतदुष्कृतहानं ज्ञानफलमित्युक्तम् । तदयुक्तम् । अपुरुषार्थत्वादित्याशङ्कां परिहर्तुं प्रसङ्गादिदमुक्तमिति ।।

ननु यस्यानासायेनाभिलषितविषयोपनतिः तस्य मनोऽव्याकुलं प्रसन्नमित्युच्यते । ततः

कथं प्रसादस्येन्द्रियजयफलत्वं ज्ञानसाधनत्वं [1]चोच्यते? इत्यत आह– [2]**प्रसादो नामेति** ।। 'अत्र विवक्षिता' इति शेषः । **स्वतोऽपि** प्रयत्नं विनाऽपि । **विषयागतिः** विषयान् प्रति अप्रवृत्तिः ।। ६५ ।।

### भावदीपः

उत्तरश्लोकं स्वयमेवावतारयति- **प्रसादे सतीत्यादिना** ।। **तदिति** ।। 'प्रसाद' इत्यादि पूर्वार्धोक्तमाक्षिपतीत्यर्थः । तत्रापरोक्षज्ञानं चित्तनिरोधादिव्यवधानेन **'नास्ति बुद्धि[3]रयुक्तस्य'** इत्युत्तरश्लोके भविष्यतीत्यर्थः।। **ततः** अपरोक्षज्ञानादित्यर्थः ।। **नाप्यवक्तव्योक्तिरिति** ।। वक्तव्यज्ञानस्योक्ते[4]रिति भावः ।। व्यवधानेन भवतोऽप्यनिष्टनिवृत्तिरूपफलस्य वक्तव्यत्वादिति भावः ।। कुतः तस्य वक्तव्यता? इत्यत आह- **बुद्धीत्यादिना** ।। **ज्ञानसाधनत्वञ्चेति** ।। व्यवधानेनेति भावः ।। ६५ ।।

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**नचाभावयतः शान्तिरशान्तस्य कुतः सुखम् ।। ६६ ।।**

**भाष्यम् — प्रसादाभावे दोषमाहोत्तराभ्यां श्लोकाभ्याम् । न हि प्रसादाभावे युक्तिः चित्तनिरोधः । अयुक्तस्य च बुद्धिः सम्यज्ज्ञानं च नास्ति । तदेवोपपादयति– न चायुक्तस्येति ।।**

### प्रमेयदीपिका

वक्तव्यस्योक्तत्वात् **'नास्ति बुद्धिः'** इत्यादिकं किमर्थम्? इत्यत आह– **प्रसादेति**।। 'श्रवणमननाभ्यामुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन? यदर्थमिन्द्रियजयोऽपेक्षित इत्याशङ्क्य' इति शेषः । नन्वत्र प्रसादाभावे इदं स्यादिति नोच्यते । अतः कथमेतदुक्तमित्यतः प्रकरणप्राप्त[5]मध्याहरति– **न हीति** ।।

१. वे, मातृकायां च । फलकत्वं - इति प्र. पाठो टिप्पण्यननुगुणः । श्रीनि-टिप्पण्याम्-'अभिलषितविषयोपनतौ च तादृशप्रसादस्य ज्ञानसाधनत्वं विरुद्धम्' इत्युक्तेः ।
२. 'प्रसाद इति'- बे, मातृकायां च ।
३. 'अयुक्तस्य' इति सो नास्ति ।
४. शुद्धपाठः सो मातृकायाम् ।'उक्तिः' इति कां ।
५. 'प्रकरणात् प्राप्तम्'- इति श्रीनि- सम्मतपाठः ।

ननु प्रसादरहिता अनुमिमत इत्यत आह– **चित्तेति** ।। एकाग्रतेत्यर्थः । एवमध्याहारे सति **'नास्ति बुद्धिः'** इत्येतत्सम्बद्ध्यत इति भावेनाऽह– **अयुक्तस्येति** ।। ज्ञानमात्रं प्रकृतानुपयुक्तमयुक्तं चेत्यत आह– **सम्यगिति** ।। ब्रह्मापरोक्षज्ञानमित्यर्थः ।।

एतावता प्रसादाभावे दोष उक्तः । तत्किमर्थं **'न चायुक्तस्य'** इत्येतत्? इत्यत आह– **तदेवेति** ।। 'ध्यानेनैव ज्ञानोत्पादात् कथं **'नास्ति बुद्धिरयुक्तस्य'** इत्याशङ्क्य'इति शेषः । **भावना** ध्यानम् । अत एव 'न चाभावयतो ज्ञानम् । नचाज्ञानिनः शान्तिः' इति योज्यम् ।।

## भावदीपः

**उपकृतेनेति** ।।

**'तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिवन्धः फलम्'**[१] **(ब्र.सू.३.३.४३)**

इति सूत्रोक्तदिशा अज्ञानसंशयविपर्ययलक्षणप्रतिबन्धनिरासरूपोपकारवत्तयोपकृतेनेत्यर्थः ।। युक्तिरनुमेति मत्वा शङ्कते– **नन्विति** ।। **प्रकृतेति** ।। ब्रह्मापरोक्षज्ञानस्य **'स्थितप्रज्ञस्य'** इत्यादिना प्रकृतत्वादिति भावः ।। **अयुक्तमिति** ।। तस्य चित्त-निरोधापेक्षणादिह च तदुक्तेरिति

---

१. 'अत्र श्रवणमननोपास्तीनां तिसृणामपि कर्तव्यत्वं साध्यते । हिः श्रुतिसूचकः । फलमित्यावर्तते । तद्दृष्टेरित्यपि । तन्निर्धारणं- तदिति वेदवोध्यतत्त्वपरामर्शः । भावप्रधानं वा । इयदित्यादिना पूर्वप्रकृत-परापरतत्त्वपरामर्शो वा । अयमस्यार्थ इति तत्त्वनिश्चय इत्यर्थः । तेन सहितोऽर्थनियमः, अयमेव वेदार्थो नान्य इति निश्चयोऽर्थनियमः श्रवणमननफलरूपं, तद् द्वयमपि, तद्दृष्टेः सेति प्रस्तुतब्रह्मणो दर्शनात् ध्यानसाध्यात् पृथक् । अतः ताभ्यां दृष्ट्यसिद्धेः दृष्ट्यर्थं ध्यानं कार्यमिति भावः ।।

मुक्तिहेतुदृष्टेः ध्यानादेव सिद्धौ किं ताभ्यामित्यत उक्तम् - हीति । श्रोतव्य इति श्रुतौ दृष्ट्यर्थे त्रयस्यापि विहितत्वादित्यर्थः । विधानेऽपि कथं युक्तमित्यत उक्तम् — अप्रतिबन्धः फलम् । तद्दृष्टेः सन्देह-विपर्ययकृतप्रतिबन्धाभावः फलं श्रवणमननयोरित्यर्थः । साक्षाद् दृष्टिस्वरूपाजननेऽपि तत्प्रतिबन्ध-निरासद्वारा तत्र व्याप्रियेते इति युक्तं तादर्थ्यम् । 'श्रुत्वा मत्वा तथा ध्यात्वा' इत्यादेरिति भावः । प्रतिबन्धः प्रतिबन्धक इति संशयादिर्वा ।

तद्दृष्टेर्ह्यप्रतिबन्धः फलमित्युक्त्यैव दृष्ट्यर्थं ध्यानम् अप्रतिबन्धार्थं श्रुतिमती कार्ये इति सिद्धावपि शेषोक्तिः दृष्टिस्तयोः साक्षादेव फलं स्यात्, किं ध्यानेनेति शङ्कां व्युदसितुम् । तर्हि तेनैव दृष्टिसिद्धेः किं ताभ्यामिति शङ्कां व्युदसितुम् अप्रतिबन्ध इत्युक्तिः । अप्रतिबन्धस्य फलत्वकल्पकतया हीति दृष्ट्यर्थं विहितत्वाख्यहेतूक्तिः । तदुपपादकत्वेन चाप्रतिबन्धः फलमितीति सर्वमर्थवत् । श्रवणादेर्जनलोकाद्यर्थं कार्यत्वसिद्धावपि दृष्ट्यर्थं त्रितयकर्तव्यत्वमत्रोच्यत इति वोध्यम् ।।' इति

तन्त्रदीपिकायां राघवेन्द्रतीर्थाः ।।

भावः ।। **अत एवेति** ।। [1]भावनासाध्यापरोक्षज्ञानसाध्यतया मोक्षस्य साक्षाद्भावनासाध्यत्वाभावादेवेत्यर्थः ।।

**भाष्यम् —शान्तिः मुक्तिः ।**

**'शान्तिर्मोक्षोऽथ निर्वाणम्'**[2]

**इत्यभिधानात् ।। ६६ ।।**

**प्रमेयदीपिका**

ननु शान्तिः प्रसादः । तस्य ज्ञानसाधनत्वेनोक्तत्वात् कथं ज्ञानोत्तरत्वमुच्यते? इत्यत आह– शान्तिरिति ।। एतच्च न केवलं मुक्तौ सर्वदुःखहानिः । किन्तु संसारिभिरलभ्यं परमं सुखं चेति ज्ञापयितुं प्रसङ्गादुक्तम् । एतदेवापेक्ष्य भाष्यकृता **'ब्रह्मादिपदात्'** (२.५०) इत्याद्युक्तम् ।। ६६ ।।

**भावदीपः**

एतदेवेति ।। संसारदशायाम् अलभ्यं परमसुखं मुक्तावस्तीत्येतदेवापेक्ष्य ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धमित्युक्तमित्यर्थः ।। ६६ ।।

( मनःप्रसादाभावे दोषनिरूपणम् )

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ।। ६७ ।।**

**भाष्यम् — कथमयुक्तस्य भावना न भवति? आह– इन्द्रियाणामिति ।। अनुविधीयते क्रियते । ननु ईश्वरेण इन्द्रियाणाम् अनु बुद्धिर्ज्ञानमिति वक्ष्यमाणत्वात् । प्रज्ञां [3]प्रज्ञानम् । उत्पत्स्यदपि निवारयतीत्यर्थः । उत्पन्नस्याप्यभिभवो भवति ।। ६७ ।।**

---

१. 'धारणासाध्य' इति सो मातृकापाठः ।
२. (अ)'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः४.१३.९.भा.टी.विजयध्वजीये ।
(आ) 'मोक्षः शान्तिश्च शरणं निर्वाणं चाभिधीयते' इति का.वेदेशीये१.१.१८ मन्त्रव्याख्याने
३. अत्र 'ज्ञानम्'इति वे-ग्रं, गुज,प्र.पाठः । टीकायां 'यस्य प्रज्ञानम् इत्युक्तेरयं भाष्यपाठः सम्भाव्यते ।।

## प्रमेयदीपिका

एकेनैव श्लोकेन प्रमेयस्य मुद्रितत्वात् **'श्लोकाभ्याम्'** (२.६६.गी.भा.) इति किमर्थमुक्तम्? इत्यत आह– **कथमिति** ।। कृतश्रवणमननस्य ध्यानोपपत्तेरिति भावः । **न भवति** 'इत्याशङ्क्य' इति शेषः । अनुविधानं सदृशभवनम् । तदत्रासङ्गतम् । कर्ता चात्र जीव इति प्रतीयते[1]। अत आह– **अनुविधीयत** इति ।। विपूर्वो दधातिः करोतीत्यर्थे[2] वर्तते । कर्ता चात्रेश्वर एवेत्यर्थः । अत्रानुः पृष्ठभावित्वार्थो न लक्षणाद्यर्थ इति कर्मप्रवचनीयो न भवति ।।

'ननु' इति सम्प्रतिपत्तिरुक्ता । सा कुतः? इत्यत आह– **बुद्धिरिति** ।। ग्रहणशक्तिः प्रज्ञा । तद्ग्रहणमत्रायुक्तमित्यत आह– **प्रज्ञामिति** ।। परोक्षनिश्चयम् । यस्य प्रज्ञानं नोत्पन्नं तस्य युत्त्यभावः किं करिष्यति? विद्यमानस्य हि हरणमित्यत आह– **उत्पत्स्यदिति** ।। तर्ह्युत्पन्नापरोक्षज्ञानस्य युत्त्यभावोऽकिञ्चित्कर इत्यत आह– **उत्पन्नस्यापीति** ।। चित्तनिरोधरहितश्रवणमनने अपि न ध्यानोपयोगिनौ तत्त्वनिश्चयवेदार्थनियमौ कुरुत इति भावः ।। ६७ ।।

## भावदीपः

**मुद्रितत्वात्** पूर्णत्वादित्यर्थः ।। ननु 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रति पर्यनवः' **(पा.सू.१.४.९०)** इति सूत्रेण 'अनुर्लक्षणे'**(पा.सू.१.४.८६)** इति सूत्रेण वा लक्षणाद्यर्थस्यानुशब्दस्य कर्मप्रवचनीयसञ्ज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया'**(पा.सू.२.३.११)** इति सूत्रेण 'जपमनु प्रावर्षत्' इत्यादाविव 'इन्द्रियाण्यनु विधीयते' इति द्वितीयया भाव्यमित्यत आह– **अत्रानुरिति**।। 'ननु' इत्यव्ययशङ्कालिङ्गत्वधीनिरासायेश्वरेणेन्द्रियाणां पृष्ठभावितया मनः क्रियते । **'ननु'** इति अविप्रतिपत्तिरुक्तेत्यर्थः । प्रसिद्धिवाच्योऽत्र ननुशब्द इति भावः ।।

**बुद्धिरितीति** ।। **'बुद्धिर्ज्ञानमसम्मोहः'** इत्याद्युक्ताः **'मत्त एव भवन्ति'** इति भगवतैव [3]दशमाध्याये बुद्ध्यादेः सर्वस्य स्वाधीनत्वोक्तेरिति भावः ।। **युत्त्यभाव** इति।। चित्तनिरोधाभावः इत्यर्थः[4]।। **तन्निर्धारणार्थनियम** इति ।। सूत्रपदयोरेकदेशार्थकथनेनानुवादोऽयम् ।। **तत्वनिश्चयवेदार्थनियमाविति** ।। अयमस्य वाक्यस्यार्थ इति तत्वनिश्चयः। अयमेवास्यार्थो नान्य इति निश्चयो अर्थनियमः[5]। तावुभौ श्रवणमननफलत्वेन ध्यानोपयोगित्वेन सूत्रोक्तौ श्रवणमनने कुरुत इत्यर्थः ।। ६७ ।।

१. बे, वे-ग्रं, मातृकाद्वयं च । ' प्रतीयत इत्यत' इति प्र.पाठः ।
२. 'करोत्यर्थे-' वे-ग्रं । एकस्यां मातृकायां च । ३. 'दशमेऽध्याये' इति सो, मं मातृकापाठौ । ४. अगं सो मातृकायामेव । ५.'अर्थनियम' इति सो मातृकायां शुद्धपाठः । 'अर्थनिश्चय' इति कां, मं पाठे ।

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

**भाष्यम् —** तस्मात् सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानीति निगमयति– **तस्मादिति** ॥

**प्रमेयदीपिका**

अत्र परमं प्रमेयं ज्ञानिलक्षणं प्रकृतम् । तस्यासम्भवपरिहाराय ज्ञानस्य महाप्रयत्न-साध्येन्द्रियनिग्रहसाध्यत्वं च । तत्र कस्यायमुपसंहार इति न ज्ञायते । अत आह– **तस्मादिति**॥ **ज्ञानी** 'जायते' इति शेषः। यत एवं निगृहीतेन्द्रियस्यैव प्रसादः, प्रसादवत एव युक्तिः, युक्तिमत एव श्रवणमननाभ्यां तत्त्वज्ञानम्, तत्त्वज्ञानवत एवापरोक्षज्ञानसाधनं ध्यानम्, नान्यथा तस्मादित्यर्थः ॥ ६८ ॥

**भावदीपः**

अत्रेति॥ **'स्थितप्रज्ञस्य'** इत्यारभ्य **'प्रजहाति'** इत्यारभ्य वा **'या निशा'** इत्यन्तप्रकरण इत्यर्थः ॥ **परमं प्रमेयं** ज्ञानम् ॥ **तस्येति** ॥ सर्वकामप्रहाणादिरूप-लक्षणस्येत्यर्थः ॥ **साध्यत्वं** च इत्यत्र 'प्रकृतम्' इत्यनुषज्यते । **'विषया विनिवर्तन्ते'** इत्यादिनेति भावः ॥ **प्रसादः** मनःप्रसादः ॥ **युक्तिः** चित्तनिरोधः ॥ **तत्त्वज्ञानम्** अयमेव अस्यार्थ इति तत्त्वनिश्चयः ॥ ६८ ॥

( पिण्डीकृतज्ञानिलक्षणम् )

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

**भाष्यम् —** उक्तं[१] लक्षणं [२]पिण्डीकृत्याऽह– **या निशेति** ॥ **या सर्वभूतानां निशा** परमेश्वरस्वरूपलक्षणा । **यस्यां** सुप्तानीव न किञ्चिज्जानन्ति **तस्याम्** इन्द्रियसंयमयुक्तो ज्ञानी **जागर्ति** सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः।

१. टीका-टिप्पण्यनुसारेणायं भाष्यपाठः सम्भाव्यते । समस्तपदं प्रचलितपाठे ।
२. पिण्डीकृत्येति । बुद्ध्यारोहाय सङ्क्षिप्याहेत्यर्थः -वि.त.नि.भावदीपः।

**यस्यां विषयलक्षणायां भूतानि जाग्रति तस्यां निशायामिव सुप्तः प्रायो न जानाति। मत्तादिवद्गमनादिप्रवृत्तिः ।। तदुक्तम्–**

**'देहं तु तं न चरमम्'**[१] (भाग.३.२९.३६),

**'देहोऽपि दैववशगः'**[२] (भाग.३.२९.३७)

**इति श्लोकाभ्याम् ।**

**मननयुक्तो मुनिः । 'पश्यतः' इति अस्य साधनमाह ।। ६९ ।।**

**प्रमेयदीपिका**

'ज्ञानिनः सर्वकर्मपरित्यागप्रतिपादनार्थो **'या निशा'** इत्ययं श्लोकः' इति **कश्चित्**[३]। तन्न[४]। तत्प्रतिपादकाक्षराश्रवणात् प्रमाणविरोधाच्चेत्याशयेन तत्प्रतिपाद्यमाह– **[५]उक्तं लक्षणमिति** ।। चतुःश्लोक्यां विक्षिप्योक्तम् ।।

नन्वत्रोक्तं किमपि न प्रतीयते? इत्यत आह– **येति** ।। परमेश्वररूपस्य निशासाम्यमुपपादयति– **यस्यामिति** ।। विषयत्वमधिकरणत्वं चाविवक्षयित्वा कारकत्वमात्रविवक्षया साम्यमिदमुक्तम् । **'संयमी'** इत्यस्याक्षरार्थः– **इन्द्रियेति** ।। प्रकरणलभ्योऽर्थः **–ज्ञानीति** ।। उत्तरार्धार्थमाह **–यस्यामिति** ।। अत्रापि पूर्ववत् साम्यम् । यदि न किञ्चित् पश्यति कथं तर्हि तस्य गमनादिप्रवृत्तिः? इत्यत आह– **मत्तादिवदिति** ।। कुत एतत्? इत्यत आह– **तदुक्तमिति** ।।

'मुनेरित्युक्तत्वाच्चतुर्थाश्रमिण एव ज्ञानम्'[६] इति व्याख्यानम् असदिति भावेन आह– **मननेति** ।। याज्ञवल्क्यादीनामयतीनामपि ज्ञानश्रवणादिति भावः । मननस्य प्राङ्निवृत्तत्वात् **'पश्यतो मुनेः'** इति कथम्? इत्यत आह– **पश्यत इति** ।। दर्शनसाधनत्वेन मननमिहोक्तम् । न तु तत्समकालीनतयेत्यर्थः । एतच्च प्राङ्मननादेः स्पष्टं दर्शनसाधनत्वानुक्तेः प्रसङ्गादिहोक्तम् ।।

---

१ अत्र भागवते **'सिद्धो विपश्यति'** इति पाठो विजयध्वजीयादृतः। गी.भा.प्र.दी .श्रीनि.टिप्पण्यां तु **'सिद्धोऽभिपश्यति'** इति पाठः दृश्यते ।

२. अत्रापि **'देववशगः'** इत्यस्य स्थाने **'कर्मवशगः'** इति शब्दः कृष्णाचार्यटिप्पण्यां ,श्रीनि -टिप्पण्यां च दृश्यते । विजयध्वजीये नास्य प्रतीकः धृतः ।।

३. शाङ्करभाष्ये ।

४. 'तदसत्' इति कचित् पाठान्तरम् ।

५. वे, उक्तेति प्र. पाठः ।

६. शाङ्करभाष्ये ।

ननु '**स्थितधीः किं प्रभाषेत**' (२.५४)इत्यादेरुत्तरमयं श्लोक इति प्रागुक्तम् । तत्कथमिदानीं लक्षणपरतया व्याख्यातः? अन्यपरादपि तल्लाभ इत्याशयेनेति ब्रूमः । अन्यथा 'किं प्रभाषेत इत्यादेरुत्तरमाह' इत्यत्रैवावक्ष्यत् । किं तत्र स्थानप्रदर्शनादिना? इति ।। ६९ ।।

**भावदीपः**

**प्रमाणविरोधाच्चेति** ।। '**कुर्वन्नेवेह कर्माणि**' इत्यादि प्रमाणेनेति[1] भावः ।। **चतुःश्लोक्येति** ।। '**प्रजहाति**' इत्यादि '**विषयाः**' इत्यन्तचतुःश्लोक्येत्यर्थः ।। **द्विगोरिति** ङीप् ।। **पूर्ववत् साम्यमिति** ।। कारकत्वमात्रेण, न त्वधिकरणत्वमात्रेण [2]इत्यर्थः।। **तदुक्तमितीति** ।। इदं तृतीयस्कन्धे एकोनत्रिंशे अध्याये-

**देहं तु तं न चरमं स्थितमुज्झितं वा सिद्धोपि पश्यति यतोध्यगमदात्मरूपम् ।**
**देवादुपेतमथ दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्धः ।।** इति
**देहोपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रति समीक्ष्यत एव साधुः ।**
**तं सप्रपञ्चमधिरूढसमाधियोगः स्थानं पुनर्न लभते[3] प्रतिबुद्धवत् सः ।।**

इति श्लोकाभ्यामित्यर्थः।।

**याज्ञवल्क्येति** ।। प्रसिद्धमेतद् वाजसनेये।। इति **प्रागुक्तमिति** ।। '**गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका**' इति भाष्ये प्राधान्येन 'व्रजेत किम्' इत्यस्य मुखतः कीर्तने पि आदिपदेनोत्तरार्धोक्तभाषणादेरपि ग्रहणादेवमुक्तम् ।। **लक्षणेति** ।। 'का भाषा' इति भाष्यपदोक्तलक्षणेत्यर्थः।। **अन्यपरादपीति** ।। लक्षणोक्तिपरादपि '**किं प्रभाषेत**' इत्यादेरुत्तरलाभ इत्यर्थः ।। **अन्यथेति** ।। उत्तरार्धप्रश्नोत्तरमात्रपरत्व इत्यर्थः ।। **किं तत्रेति** ।। '**प्रजहाति**' इति श्लोकावतारिकायामित्यर्थः ।। '**आदिना**' इत्यादिपदेन '**प्रारब्धकर्म**' इत्यादि श्लोकतात्पर्योक्तिग्रहः।। ६९ ।।

( ज्ञानिनो विषयानुभवप्रकारः )

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रवहन्ति यद्वत् ।**

---

१. इत्यर्थः इति सो । २. अधिकरणकारकत्वेन' इति सो । ३.'भजते' इति सो मातृकायाम् ।

**तद्वत् कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ॥ ७० ॥**

**भाष्यम्** — तेन विषयानुभवप्रकारमाह– **आपूर्यमाणमिति** ॥ यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति नोत्सेकं प्राप्नोति नच प्रयत्नं करोति नच अभावे शुष्यति । न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्तवृद्धिशोषौ बहुतरौ प्राप्नोति । प्रयत्नं वा करोति । स मुक्तिं प्राप्नोतीत्यर्थः ॥ ७० ॥

### प्रमेयदीपिका

पृष्टस्य समस्तस्योत्तरमुक्तम् । तत् किम् 'आपूर्यमाणम्' इत्यनेन? इत्यत आह– **तेनेति** ॥ **'क्रियमाण'** इत्युपस्कर्तव्यम् । नित्यसापेक्षत्वादसामर्थ्याभावः । 'बाह्यानुसन्धानरहितस्य युज्येतापि कथञ्चिद्गमनादिकम् । विषयानुभवस्तु दृश्यमानः कथं स्यात्? तस्य नियतसाधनसाध्यस्य अनुसन्धानेन विनाऽनुदयादित्याशङ्कापरिहारार्थम्' इति शेषः । **'तद्वत्कामा यं प्रविशन्ति'** इति सङ्क्षेपेणोक्तम् । तद्विवृणोति– य इति ॥ **कामशब्दस्यार्थः विषयैरिति**। अन्यथा **'विहाय कामान्'** 'इत्युत्तरविरोधात् । **'अचलप्रतिष्ठम्'** इत्यस्यैव व्याख्यानं **नोत्सेकमित्यादि** ॥ कुत एषोऽर्थः? इत्यतः समुद्रदृष्टान्तोपादानसामर्थ्यादिति भावेनाऽह– **नहीति** ॥ **'स शान्तिमाप्नोति'** इत्यस्य अर्थमाह– **स इति**॥ ज्ञानिप्रशंसार्थमेतत् । एतद् दृष्ट्वा **केचित्**[२] 'ज्ञानिन एव मुक्तिरित्यनेनाह' इत्याहुः । तदसत् । गतार्थत्वात् ॥ ७० ॥

### भावदीपः

ननु **'क्रियमाण'** इत्युपस्कृतपदस्य अनुभवविशेषणतया समासो न युक्तः । 'साकाङ्क्षम् असमर्थम्' इति, 'तेन' इतिपदसाकाङ्क्षतया सामर्थ्याभावादित्यत आह- **नित्येति** ॥ देवदत्तस्य **गुरुकुलमिति**[३] यथेति भावः ॥ **कथञ्चिदिति** ॥ मत्तादिरिवेति भावः ॥ **अन्यथेति** ॥ कामपदस्येच्छार्थकत्वे सति, एतद्विवरणपरोत्तरश्लोके विषयार्थककामपदेन

---

१. बे । टीकामूले 'इत्युक्त इति'। परं तु श्रीनि-टिप्पण्याम् उत्तर इत्येव प्रतीकग्रहणम् ।
२. शाङ्करभाष्ये ।
३. 'इत्यादाविवेति भावः' इति सो मातृकायाम् ।

विरोधादित्यर्थः ।। तत्रापीच्छार्थत्व[1]सत्वादिति भावः ।। निस्पृहपदेन पुनरुक्तेः, त्रिपाद्यैव विषयानुभवप्रकारस्योक्तत्वाद् व्यर्थोऽयं चतुर्थपाद इत्यत आह- **ज्ञानिप्रशंसार्थमिति** ।। **गतार्थत्वादिति** ।। न चाभावयतो ज्ञानं, न चाज्ञानिनः शान्तिरिति योजनया तत्रैवासिद्धत्वादिति भावः।। ७० ।।

**विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ।। ७१ ।।**

**भाष्यम्** — तदेव प्रपञ्चयति– **विहायेति** ।। **कामान्** विषयान् । निस्पृहतया **विहाय यः चरति** भक्षयति । भक्षयामीत्यहङ्कारममकारवर्जितश्च । **स हि पुमान्** । **स एव च मुक्तिमधिगच्छतीत्यर्थः** ।। ७१ ।।

**प्रमेयदीपिका**

'**विहाय**' इत्यनेनापि[2] अयमेवार्थ उच्यते । अतः पुनरुक्तिरित्यत आह– **एतदेवेति** ।। यद्यत्र कामा इच्छाविशेषास्तर्हि '**निस्पृहः**' इति पुनरुक्तिः । यदि काम्यन्त इति विषयास्तदा चरतिर्यदि भक्षणार्थः तदा व्याघातः । अथ गत्यर्थस्तदा व्यर्थ इत्यतो व्याचष्टे– **कामान्** इति ।। 'निर्ममो निरहङ्कारः' इत्येतदसम्भवपरिहाराय व्याचष्टे– **भक्षयामीति** ।। कर्तृत्वाभिमान एवाहङ्कारः । स्वामित्वाभिमान एव ममता । नत्वहम्प्रत्ययादिमात्रमिति भावः । **स हि पुमान्** अन्यः पशुरित्यर्थः । कुत एतत्? इत्यत आह– **स एवेति**।। '**स हि पुमान्**'[3] इत्यनेनैवान्वयसमाप्तिं वदता[4] ज्ञानिन एव मुक्तिः इत्येषोऽर्थो नात्र प्रतिपाद्यत इति दर्शितम्। स्त्रीव्यावृत्त्यभावश्च ।। ७१ ।।

**भावदीपः**

**व्याघात इति** ।। '**विहाय कामान्**' इत्युक्त्वा विषयान् भक्षयतीत्युक्तेर्व्याहतिः इत्यर्थः ।। **व्यर्थ इति** ।। अतिशयालाभादिति भावः ।। **असम्भवेति** ।। ज्ञानिनोऽप्यहमिति

---

१. 'सत्वादिति भावः' इति सो मातृकायामेव वाक्यपूर्तिः । 'इच्छार्थत्व .. निस्पृहपदेन' इत्यन्यत्र ।
२ वे-ग्रं अपिशब्दो अधिकः।
३. (वे) अत्र एव शब्दः प्र.पाठे नास्ति ।
४. शाङ्करभाष्ये इयं व्याख्या ।।

[1]मम देह इति बुद्धेः सत्वादिति भावः ।। इति दर्शितमिति ।। अन्यथा गतार्थतापत्तेरिति 'स पुमान् ' इत्यनूद्य मुक्तिविधौ तु स्त्रीणां मुक्त्यभावः उक्तः स्यात् । स पुमान् अन्यः पशुः इत्युक्तौ स्तुत्यर्थत्वप्रतीत्या स्त्रीव्यावृत्त्यभावश्च दर्शित इत्यर्थः ।। ७१ ।।

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ।। ७२ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे (जीवेश्वरस्वरूपज्ञान, तदुपायभूत निवृत्तकर्मयोगो) नाम द्वितीयोऽध्यायः ।।

**भाष्यम् —** उपसंहरति – एषेति ।। **ब्राह्मी स्थितिः** ब्रह्मविषया **स्थितिः** लक्षणम् । **अन्तकालेऽप्यस्यां स्थित्वैव ब्रह्म** गच्छति । अन्यथा जन्मान्तरं प्राप्नोति ।

**'यं यं वाऽपि'** (८.६) इति वक्ष्यमाणत्वात् ।

ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम् ।

**'भोगेन त्वितरे'**[2] (ब्र.सू.४.१.१९) इति ह्युक्तम् ।

सन्ति हि बहुशरीरफलानि कर्माणि ।

**'सप्तजन्मनि विप्रः स्यात्'** इत्यादेः ।।

**प्रमेयदीपिका**

'ज्ञानी स्तूयते **'एषा'** इत्यनेन' इत्यसत् । प्रथमवाक्ये तददर्शनादिति भावेनाऽह– उपसंहरतीति ।। प्रकरणं समापयतीत्यर्थः । 'ब्रह्मधर्मभूतः' इति प्रतीतिनिरासायाह– ब्राह्मीति।

१. 'समदेह' इत्यन्यमातृकासु । सो मातृकायां शुद्धपाठः ।

२. **'तथापि ज्ञानिद्वेषिणोः प्रारब्धपुण्यपापसत्वात् न मुक्तितमसी स्यातमित्यत आह—**'भोगेन त्वितरे क्षपयित्वा अथ सम्पत्स्यते' इति । तुः ज्ञानिनः प्रारब्धभोगे उपमर्दं चेत्युक्तविशेषसूचकः । अथशब्दो नियमसूचकः । इतरे प्रस्तुतानारब्धादन्ये प्रारब्धपुण्यपापे भोगेन क्षपयित्वा, अथ प्रारब्धपुण्यपाप-क्षपणादन्वेव न तु ज्ञानोत्पत्त्यनन्तरमिव विलम्बः, सम्पत्स्यते=ब्रह्म वा तमो वा प्राप्नोतीत्यर्थः ।' इति **तन्त्रदीपिकायाम् ।**

स्थितिर्नोक्ता । तत्कथमेवमुच्यते? इत्यत आह– **लक्षणमिति** ।। **ब्रह्मविषयज्ञानवतो** लक्षण-मुक्तमित्यर्थः । **'किं प्रभाषेत'**(२.५४) इत्यादिप्रश्नपरिहारस्य अर्थादुक्तत्वादनुपसंहारः ।।

'अन्तकाले चरमे वयस्यपि यः परिव्रज्यास्यां स्थितौ तिष्ठति सोऽपि ब्रह्माप्नोति । किमु ब्रह्मचर्यादेव प्रव्रज्य'[१] इति व्याख्यानमसत् । अप्रकृतत्वादित्याशयवान् व्याचष्टे– **अन्तकालेऽपीति** ।। ज्ञानिनो ब्रह्मप्राप्तिरुक्ता । सा किं तद्देहपातानन्तरमेव? उतान्यथा? इत्यपेक्षायामिदमुच्यते । कुतोऽस्यार्थस्य भगवदभिप्रेतत्वम्? इत्यत आह– **यं यमिति**।।

ननु ज्ञानमेव मोक्षसाधनम् । कारणपौष्कल्ये च कार्यं भवत्येव । अतः कथं ज्ञानिनः शरीरान्तरप्राप्तिः? इत्यत आह– **ज्ञानिनामपीति**।। प्रारब्धकर्मसामग्र्याः प्रतिबन्धकम्। तदेवान्तकाले ब्रह्मानुसन्धानं प्रतिबध्नातीति भावः ।। ननु ज्ञानादेव सर्वं कर्म क्षीणमित्यत आह– **भोगेनेति** ।। अस्तु प्रारब्धकर्मणां भोगेन[२] क्षयः । स च ज्ञानं यच्छरीरे जातं तत्रैवाभूत् । अतः कथं शरीरान्तरारम्भः? इत्यत आह– **सन्ति हीति** ।। 'तानि कथमेकेनैव शरीरेण भुज्येरन्' इति शेषः । **'सप्तजन्मनि'** इति द्विगुः ।।

**भावदीपः**

हेतूक्तिपूर्वकत्वादेरभावादाह- **प्रकरणं समापयतीत्यर्थ इति**।। **'प्रजहाति'** इत्यादि प्रकरणमित्यर्थः ।। **अर्थादिति** ।। **'या निशा'** इति श्लोके 'अन्यपरादपि तल्लाभः' इत्युक्तेरिति भावः ।। **सामग्र्याः** मोक्षसामग्र्याः प्रारब्धकर्म प्रतिबन्धकमित्यर्थः ।। **भोगेनेति** ।। इतरे प्रारब्धपुण्यपापे भोगेन क्षपयित्वा विनश्य अथ [३]पश्चात् सम्पत्स्यते ब्रह्म इति सूत्रार्थः ।। [४]ननु सप्त च तानि जन्मानि चेति विग्रहे 'सप्तजन्मसु' इति स्यादित्यत आह- **इति द्विगुरिति** ।। 'सङ्ख्यापूर्वो द्विगुः' (पा.सू.२.१.५२) इति द्विगुसंज्ञायां[५] 'द्विगुरेकवचनम्' (पा.सू.२.४.१) इति सूत्रेणैकवचनमित्यर्थः[६]। विलुप्तशक्तिकं ज्ञानमिति शेषः।।

**भाष्यम् — दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः । तथा ह्युक्तम्–**

---

१. शाङ्करभाष्यानुवादः । भा.र.को ।।
२. भावदीपानुसारी पाठः । 'भोगादेव' इति 'भोगेनैव'इति कचिन्मातृकायां पठ्यते ।
३. सो मातृकायामेवायम् ।
४. सो मातृकायामेवायम् । का- नास्ति ।
५. मो मातृकायामेवायम् । अन्यत्र नास्ति ।
६. 'इति भावः' सो ।

'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रौद्रं पदं ततः ।
साङ्कर्षणं ततो मुक्तिमगाद् विष्णुप्रसादतः'[१] ।।

इति गारुडे ।

'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यते '

इति च नारदीये[२]।

निश्चितफलं च ज्ञानम् ।

'तस्य तावदेव चिरम्' (छां.उ.६.४.१२)

'यदु च नार्चिषमेवाभिसम्भवति' (छां.उ.४.१५.१५)

इत्यादिश्रुतिभ्यः ।

**प्रमेयदीपिका**

इतश्चैतदेवमित्याह– **दृष्टेश्चेति** ।। **'बहु'** इत्यनेकोपलक्षणम् ।। कथं ज्ञानिनां बहुशरीर-प्राप्तिर्दृश्यते? इत्यत आह– **तथा हीति**।। ननु ज्ञानिनोऽपि यदि शरीरान्तरप्राप्तिस्तर्हि गर्भवासादिदुःखैर्विलुप्तशक्तिकं ज्ञानं न मोक्षाय पर्याप्तं स्यादित्यत आह– **निश्चितेति** ।। **तस्य** ज्ञानिनः । **तावदेव चिरम्** । तावानेव विलम्बः । यावन्न विमोक्ष्ये न[३] विमोक्ष्यते । प्रारब्धेन कर्मणा । अथावसिते कर्मणि । ब्रह्म सम्पत्स्यत इत्यर्थः ।।[४]अवसितकर्मणि ज्ञानिनि विषये पुत्रादयो यदि शव्यं कर्म कुर्वन्ति यदु च यदि वा न न कुर्वन्ति । सर्वथा

---

१. (अ) **न्यायसुधायाम्**-(२.२.३७)अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे धनुरार्त्रिः । विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिवश्विना विरावत् इति श्रुतिमुपादत्ते । मीळ्हुषः सेचकस्य, एषस्य इच्छारूपस्य, अस्य विष्णोर्देवस्य, प्रभृथे प्रभरणे, पूजायामिति यावत् । हविर्भिः कृते सति बन्धको रुद्रो,रुद्रियं महित्वं रौद्रं पदं,विविदे लेभे ।। एतासां श्रुतीनामेतदर्थत्वोपपादनं त्वाचार्येणैवान्यत्रो-दाहृतेभ्यो वाक्येभ्यष्टीकातश्चावगन्तव्यम् ।। यादुपत्यम् - अस्य देवस्य इत्यर्थोपपादनं 'स्थितप्रज्ञो..प्रसादतः' इति गीताभाष्ये, 'यः स्थाणोः स्थाणुतां प्रादाद्भगवानव्ययो हरिः' इत्यादि भागवततात्पर्ये चाचार्येणोदाहृतवाक्यसंवादेनावगन्तव्यम् ।।

(आ)तदुक्तमनुव्यख्याने-४-१-..। शुश्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः ।....... ....इत्यादि ।।

२ ब्र.सू.भा.४.२.१.भावदीपानुसारेण 'इति च नारदीये' इति पाठः सम्भाव्यते ।द्रं-भावदीपे विशेषः।

३. 'न'इति प्र पाठे नास्ति । श्रीनि.टि.प्रतीकानुसारेण योजितोऽयम् ।

४. 'अथ यदु चैवास्मिंश्छव्यं कर्म कुर्वन्ति ' इति 'यदु नार्चिषम्' इत्यस्य पूर्ववाक्यम् ।।

**अर्चिषमभिसम्भवति** प्राप्नोत्येवेत्यर्थः । तदिदमुक्तम्– **नैनां प्राप्य विमुह्यतीति** ।। छ।।

**भावदीपः**

**इतश्चेति** ।। दर्शनरूपहेतोश्च ज्ञानिनः शरीरान्तरप्राप्ति[1]रित्येतदेव प्रारब्धकर्माभावे सतीत्याहे[2]त्यर्थः ।। **तदिदमुक्तमिति** ।। ज्ञानस्य चिरकालीनत्वेपि ज्ञानी मुक्तिमाप्नोत्येवेति तदुक्तं द्वितीयपादेनेत्यर्थः ।। 'उपमर्दं च' इति ज्ञानपादीयसूत्रादिति भावः।।

**भाष्यम् —** [3]**नच कायव्यूहापेक्षा ।**

**'तद्यथेषीकातूलम्'** (छां.उ.५.२४.३),

**'तद्यथा पुष्करपलाशे'** (छां.उ.४.१४),

**'ज्ञानाग्निस्सर्वकर्माणि'** (गी.४.३७)

**इत्यादि वचनेभ्यः ।**

**प्रारब्धे त्वविरोधः । प्रमाणाभावाच्च । नच तच्छास्त्रं प्रमाणम् ।**

**'अक्षपादकणादानां साङ्ख्ययोगजटाभृताम् ।**
**मतमालम्ब्य ये वेदं दूषयन्त्यल्पचेतसः ।।'**

**इति निन्दनात् ।**

**यत्र तु स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव न सत्यत्वम् । न हि तेषामपीतरग्रन्थविरुद्धार्थे प्रामाण्यम् ।**

**(पाशुपतादिमतीयकायव्यूहविमर्शः )**

**प्रमेयदीपिका**

पाशुपतवैशेषिकादयस्त्वाहुः-- अनियतकालविपाकान्यपि कर्माणि ज्ञानी योगसामर्थ्यात्

---

१. 'व्याप्तिः' इति अन्यत्र मातृकायाम् ।
२. 'इत्याह' इत्यर्थः इति सो मातृकायामेव ।
३. अस्य विवरणं ब्र.सू.भा.४.१.१३ तत्वप्रकाशिकायां ,भावदीपे च विवृतम् , तत एवावसेयम् ।

समाहृत्यानेकशरीरफलान्यपि कायव्यूहनिर्माणेन क्षपयित्वा [1]अपवृज्यते । तत्कुतोऽस्य देहान्तरमिति? तत्राह– **न चेति** ।। 'ज्ञानिनः कर्मक्षयार्थम्' इति शेषः । तथाहि- अप्रारब्धकर्मक्षयार्थं वा सा स्यात् । प्रारब्धक्षयार्थं वा? नाऽद्यः । तेषां ज्ञानेनैव क्षीणत्वादिति भावेनाऽह– **तद्यथेति** ।। द्वितीये तु यः कश्चिद् ज्ञानी तथा करोति सर्वो वा । आद्ये सम्प्रतिपत्तिमुत्तरमाह– **प्रारब्धे त्विति** ।। द्वितीयासम्भवे हेतुमाह– **प्रमाणेति** ।। चशब्दात् प्रागुदाहृतप्रमाणविरोधाच्च ।।

पाशुपतादिशास्त्रेषु तथोक्तत्वात् कथं प्रमाणाभावः? इत्यत आह– **नचेति** ।। तच्छिष्या अपि तच्छब्देनोच्यन्त इति बहुवचनम् ।।

**'उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणस्सुतः ।**

**उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ।।'**[2] (म.भा.१२.३४९.६७)

इत्यादौ तत्स्तुतिरपि दृश्यत इत्यत आह– **यत्र त्विति** ।। वैष्णवशास्त्रोक्तप्रकारेण **शिवभक्तानाम्** । 'लक्षणया' इति शेषः । **सत्यत्वं** 'तदुक्तार्थस्य' इति शेषः । उक्तनिन्दाविरोधादिति भावः । तर्हि शैवपुराणानि कायव्यूहनिर्माणनियमादौ प्रमाणानीत्यत आह– **न हीति** ।। **'तेषाम्'** इति बुद्धिस्थशैवपुराणपरामर्शः । **इतरग्रन्थाः** इति ।। उदाहृतगारुडादयः ।।

### भावदीपः

**प्रागुदाहृतेति** ।। **'स्थितप्रज्ञोपि'** इत्यादि प्रमाणेनेत्यर्थः ।। द्विवचनेन भाव्यमित्यत आह- **तच्छिष्या अपीति** ।। **वैष्णवशास्त्रेति**।। हरिदासत्वादिरूपेण शिवे भक्तिमतामित्यर्थः।। वचनवृत्त्या स्तुतेरप्रतीतेराह- **लक्षणयेति** ।। शिवो हि महानुभावः, अतः तद्भक्ता[3] अपि श्लाघ्या इत्येवं स्तुतिपरत्वमित्यर्थः।।

### ( भगवदाज्ञानुसारेण शिवेन पाशुपतमतनिर्माणम् )

**भाष्यम् —** तथा ह्युक्तम्–[4]

---

१. भा.र.को सम्मतपाठः । 'प्रवृज्यते' इति मातृकायां मुद्रिते च ।

२. 'उमापतिः भूतपतिः' इति अधुनोपलभ्यमानभारते पाठः ।

३. 'तद् ब्रह्म' इति मं, काणि मातृकयोः ।

४. **ब्र.सू.भा.** त.प्र.१.१.१. 'मुह्यते अनेन जन इति नटनं वञ्चनं वा । त्वं सृज, दधीच्यादिभिः कारय च । अविद्यमानमतथ्यम् । व्यधिकरणत्वेन विद्यमानं वितथ्यम् । आत्मानं मां च प्रति । प्रकाशं प्रसिद्धिम् ।।

'एषं मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु '–
( व.पु. ७०-३६) इति वाराहे [१]॥

---

भा.दी - नटनमिति । विद्यमानाकाराच्छादनेनाविद्यमानाकारप्रदर्शनं नटनम् । वञ्चनं त्वविद्यमानकथनम् । 'सृजामि' इत्यस्य विपरिणामेनान्वयमाह-सृजेति । गीताभाष्यटीकायां तु'कारय'इति स्वार्थे णिच् इत्युक्तं द्वितीये ॥..॥ विष्ण्वादौ विद्यमानं रुद्रादिनिष्ठतयोच्यमानं स्वातन्त्र्यादिकं वितथ्यम् ॥ आत्मानं मां च ॥ कर्मप्रवचनयुक्ते द्वितीया ॥ आत्मानं प्रति प्रकाशं प्रसिद्धिं कुरु । मां च प्रति अप्रकाशमप्रसिद्धिं कुरु ॥ आत्मप्रसिद्धिं ममाप्रसिद्धिं च कुर्वित्यर्थः ॥

तत्वप्रदीपिका - एष मोहं सृजामीति ॥ मोहकारणं सृजामीति ,जनानामनादिकर्मवासना-नुरूपमिति यावत् । अतथ्यानि लिङ्गमूलमार्गणादीनि । वितथ्यानि ततो विगतत्वे सति तथ्यानि स्रष्टृत्वादीनि ॥

१ (अ) एते श्लोकाः पाद्मे वा.स.नामस्तोत्रे -१.८,१.९ दृश्यन्ते ।

(आ) ब्र.सू.भाष्यदीपिकायां-श्लोकार्थ एवं विवृतः- 'कुत इत्यत तेषां मोहार्थं कृतत्वादिति हेत्वध्याहारमभिप्रेत्य तस्यासिद्धिं प्रमाणोदाहरणेन निराह - 'एष' इति ॥ रुद्रं प्रति विष्णुवाक्यमेतत् । मुह्यतेऽनेन जन इति 'मोहो' नटनं वञ्चनं वा। 'मोहः' मोहकारणमनादिकर्मवासनारूपमिति तत्त्व-प्रदीपोक्तेरप्ययमेवार्थः, मोहकशास्त्रमिति व्यास- तीर्थीयोक्तेः। न चास्य 'न मोहशास्त्रस्य वक्ता विष्णुराशङ्क्यः, 'अजस्यावक्रचेतसः'(क.उ.५.१.) इति हि श्रुतिः' इति तत्त्वप्रदीपविरोधः शङ्क्यः । असतामित्यभिप्रायात् । विद्यमानाकाराच्छादनेन अविद्यमानाकारप्रदर्शनं नटनम् । अविद्यमानकथनं वञ्चनम् । सृजामीत्युत्तम-पुरुषप्रयोगादहमिति कर्ता लभ्यते । चशब्दः क्रियाकर्तृसमुच्चये । 'पूर्वश्रुतस्यैतच्छब्दस्य पश्चाच्छ्रुतो यच्छब्दो विशेषणम्' इति न्यायदीपोक्तेः, य एष इति योजना । तथा चाहं 'मोहं सृजामि' करोमि । 'य एषः' मोहः 'जनान् मोहयिष्यति' अज्ञानमिथ्याज्ञानादिकं प्रापयिष्यति ॥ परबाधकत्वाद् बाहुः प्राण्यङ्गं, महान् बाहुर्यस्य सः, तस्य सम्बुद्धिः हे 'महाबाहो' शत्रुबाधकाङ्गयुक्त 'रुद्र' 'त्वं च' मोहं सृज 'मोहशास्त्राणि' च 'कारय' कुरु, दधीच्यादिभिश्च कारय । हे 'महाभुज' महाभक्षक महाकुटिलेति वा हे रुद्र! तेष्विति शेषः । तथा च - 'तेषु' मोहशास्त्रेषु 'अतथ्यानि' क्वाप्यविद्यमानानि लिङ्गमूलान्वेषणादीनि 'वितथ्यानि' व्यधिकरणत्वेन विद्यमानानि विष्णुनिष्ठानि वायुनिष्ठानि वा रुद्रादिनिष्ठतयोच्यमानानि सर्वोत्तमत्व-सर्वस्वातन्त्र्यविषभक्षणादीनि 'दर्शयस्व' प्रतिपादयेति यावत् । 'मामात्मानम्' इत्युद्देश्यद्वितीयान्तम् । परस्परसमुच्चये चशब्दौ । तथा च लोकेषु 'आत्मानं' स्वात्मानमुद्दिश्य 'प्रकाशं' प्रसिद्धिं 'कुरु' । न केवलमेतावत्, किन्तु 'माम्' उद्दिश्य 'अप्रकाशम्' अप्रसिद्धिं च कुर्वित्यर्थः । केचित्तु - प्रकाशोऽस्यास्तीति प्रकाशमिति अर्शआद्यजन्तत्वमाश्रित्य उद्देश्यद्वितीयानाश्रयणेन प्रकाशं प्रसिद्धमिति व्याचक्षते ।'

[1]'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः ।
चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः ।।
दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु ।
चक्रुर्वेदैश्च ब्राह्माणि वैष्णवान् विष्णुवेदतः ।।
पञ्चरात्रं भारतं च मूलरामायणं तथा ।
तथा पुराणं भागवतं विष्णुवेद इतीरितः ।
अतः शैवपुराणानि योज्यान्यन्याविरोधतः ।।'

इति नारदीये ।

**अतो ज्ञानिनां भवत्येव मुक्तिः ।।**

**प्रमेयदीपिका**

शैवपुराणानां गारुडादिवैष्णवग्रन्थानां च को विशेषः, येन बाध्यबाधकभावः? इत्याशङ्क्य दुर्जनव्यामोहनार्थं[2]प्रणीतपाशुपतादिमूलानि शैवपुराणानि, सम्यज्ज्ञानार्थप्रणीत-पञ्चरात्राद्यनुसारिणो गारुडादिग्रन्था इत्याशयवान् पाशुपतादिशास्त्राणां च मोहनार्थत्वे तावत् प्रमाणमाह– **तथा हीति**।। '**कारय**' इति स्वार्थे णिच् । **अतथ्यानि** सर्वथाऽपि अविद्यमानानि । **वितथ्यानि** व्यधिकरणानि च । तेषु **दर्शयस्व** । **प्रकाशं** प्रसिद्धम् ।।

इदानीं तन्मूलत्वं शैवपुराणानामितरेषां पञ्चरात्रादिमूलत्वम् इत्यत्र प्रमाणमाह– **कुत्सितानीति** ।। **तच्छास्त्रसमयेन** तच्छास्त्रसिद्धान्तमनुसृत्य । **वेदैरिति** ।। वेदानामापात-प्रतीतिमनुसृत्य । **भागवतं** भगवद्विषयम् । उक्तमुपसंहरति– **अत** इति।। ज्ञानिनां **मुक्तिः भवतीत्येव**[3] । नतु तद्देहपातानन्तरमिति नियम इत्युपसंहारार्थः[4]।।

---

१. **सुधा -१.१.२.** 'निर्निमित्तं प्राणिनां मोहमुत्पादयन्तः प्रत्यवायिनः प्रसज्येरन् । नच व्यामोहनेन किमपि महत्प्रयोजनमस्ति,यदाशया प्रत्यवायमपि न गणयेयुः । अतो नेदमुचितमित्यत उक्तम्-हरेराज्ञयेति ।। हरेराज्ञानुवर्तित्वान्न प्रत्यवायो अस्ति । किन्तु महाप्रयोजनावाप्तिश्चेति सुप्रसिद्धम् । नच हरेःप्रत्यवायः प्रयोजनापेक्षा वा । ईश्वरत्वादिति भावः ।। तदुक्तम्- कुत्सितानि ...समयेन तु इति' ।। **परिमलम्** - 'तदुक्तमिति । द्वितीये गीताभाष्ये उक्तमित्यर्थः।'

२. अत्र 'मोहनार्थं' इति, उपरि 'ज्ञानार्थ' इति च भिन्नपदत्वं मातृकायाम् ।

३. बे, मातृकाद्वये च। 'भवत्येव'इति प्र पाठः ।

४. 'उपसंहार इत्यर्थः' इति क्वचित् ।

### भावदीपः

**सर्वथाप्यविद्यमानानीति** ।। लिङ्गमूलान्वेषणादीनि ।। **व्यधिकरणानीति** ।। विष्ण्वादौ विद्यमानस्वातन्त्र्यादीनि रुद्रनिष्ठानीति दर्शयस्वेत्यर्थः ।। कर्मणि घञन्तत्वमुपेत्याह- **प्रकाशं प्रसिद्धमिति** ।।'**भागवतम्**' इति[१] पुराणविशेषणमिति भावेनाऽह- **भगवद्विषयमिति** ।।

**भाष्यम् — भीष्मादीनां तु[२] तत्क्षणे युक्त्यभावः । 'स्मरन् त्यजति'(८.६) इति वर्तमानापदेशो हि कृतः । तच्चोक्तम्–**

**[३]'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा ।**
**विष्णुमाया तदा तेषां मनो बाह्यं करोति हि '**

**इति गारुडे ।**

**न चान्येषां तदा स्मृतिर्भवति ।**

**'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम् ।**
**भजन्ति तत्स्मृतिं त्वन्ते देवो याति न चान्यथा '[४]**

**इति ब्रह्मवैवर्ते ।**

### प्रमेयदीपिका

ननु भीष्मादयो ज्ञानिनोऽन्तकाले ब्राह्म्यां स्थितौ स्थिताश्च न मुक्ताः । तत्कथमेतदुक्तम्? इत्यत आह– **भीष्मादीनां त्विति** ।। साक्षाद् देहत्यागक्षणे । युक्त्या परमेश्वरे मनोयोगेन भाव्यमित्येतत्[५] कुतः? इत्यत आह– **स्मरन्निति** ।। **'यं यं वाऽपि'**( ८.६) इत्यत्र । भीष्मादीनां तस्मिन् क्षणे युक्त्यभाव इत्येतत् कुतः? इत्यत आह– **तच्चेति** ।। ननु तत्क्षणे युक्त्या मुक्तिश्चेद् अज्ञानिनामपि तत्सम्भवेन मुक्तिप्रसक्तिरित्यत आह– **न चेति** ।। **भक्तिज्ञानेनेति** द्वन्द्वैकवद्भावः । भक्तिसहितं ज्ञानं भक्तिज्ञानमिति वा ।।

१. 'इत्येतत् पुराणमिति' इति सो मातृकायां पठ्यते ।
२. बे । भीष्मादीनाम् इति प्र.पाठः । टीकाप्रतीकानुसारात् तुर्योजितः।
३. ब्र,सू.भा.४-३-१८. त.प्र.– गत्यनुस्मृतिश्च कर्मावसानसमय एव । न मरणान्तरे ।- ज्ञानिनां...करोति हि इति स्मृतेः ।। भावदीपः - द्वितीये गीताभाष्योक्तगारुडस्मृतेरित्यर्थः । तत्र 'बाह्यम्' इत्यस्य 'ईश्वरानन्यविषयम्' इत्यर्थत्वेपि गतेरीश्वरपर्यन्तत्वाद् भवतीयमुक्तार्थसंवादिनीति भावः ।।
४. बे. इत्युक्तेः इति प्र पाठः।
५. बे. मत्येव इति प्र पाठः ।

भावदीपः

'कृतः' इत्यस्य कुत्रेत्याकाङ्क्षायामाह- यं यं वापीत्यत्रेति ।।

'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः' इत्यत्रेत्यर्थः।।

( निर्वाणशब्दार्थः )

**भाष्यम् — निर्वाणम्** अशरीरम् ।

'कायो बाणं शरीरं च' इत्यभिधानात् ।
'एतद् बाणमवष्टभ्य' इति प्रयोगाच्च ।

निर्वाणशब्दप्रतिपादनं 'अनिन्द्रियाः' इत्यादिवत् । कथमन्यथा सर्वपुराणादि-प्रसिद्धा [1]आकृतिर्भगवत उपपद्यते?

( सगुणं ब्रह्म सर्वोत्तमः भगवानेव )

न चान्यद्भगवत उत्तमं ब्रह्म ।

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'[2](भाग.१.२.११)
इति भागवते ।

'भगवन्तं परं ब्रह्म परं ब्रह्म जनार्दनः।'

'परमं यो महद्ब्रह्म' ( म.भा.१३.१४९.९),

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः'(१५.१६),

'योऽसावतीन्द्रियग्राह्यः'[3] (मनु.१.७),

---

१. अत्र कृतिरिति प्र.पाठः टीकाननुगुणः । उत्तरत्र– तानि सर्वाणि इति भाष्यटीकायाम् , आकृतिर्भगवत इत्युक्त्याकृतेश्च इत्युक्तेः ।

२. 'देशकालादिषु बृंहितत्वात् सर्वान्तर्यामित्वात् ऐश्वर्यादिगुणित्वात् ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति विजयध्वजीये ।

३. 'योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ'।।

**'नास्ति नारायणसमं न भूतो न भविष्यति'**(म.भा.१.१.१८) ,

**'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः'**(११.४३)

इत्यादिभ्यः ॥

## प्रमेयदीपिका

'ब्रह्मनिर्वाणं ब्रह्मस्वरूपानन्दम्'[१] इति व्याख्यानं सर्वप्रमाणविरुद्धमित्याशयवान् निर्वाणम् इति भिन्नं पदं व्याचष्टे–**निर्वाणमिति** ॥ कथमेतत्? इत्यत आह– **काय** इति ॥ कार्यब्रह्मव्यावृत्त्यर्थम् एतत् ॥ अनेन ब्रह्मणो निराकारत्वं प्राप्तम् । तत्प्रतिषेधार्थम् आह – **निर्वाणेति** ॥ **प्रतिपादनं** = व्याख्यानम् । **'इत्यादिवत्'** इत्यादेरिव । प्राकृतादिविग्रहराहित्यार्थत्वेनेत्यर्थः ॥

किमनेन व्याख्यानेन? निराकारमेव ब्रह्म किं न भवेत्? इत्यत आह– **कथमिति** ॥ भगवतो विष्णोः साकारत्वेऽपि ब्रह्मणो निराकारत्वमेव । नच भगवानेव ब्रह्म । तस्य तदुत्तमत्वेन ततोऽन्यत्वात् । अतो न पुराणादिविरोध इत्यत आह– **नचेति** ॥ 'महद् ब्रह्म' इत्यन्तानि[२] वाक्यानि भगवतो ब्रह्मत्वप्रतिपादकानि । **'यस्मात्'** इत्यादीनि तस्यैव सर्वोत्तमत्वेन तदुत्तमाभावप्रतिपादकानि ।

इन्द्रियग्राह्यमतिक्रान्तः तदुत्तमः । सर्वमेव योगीन्द्रियग्राह्यम् ॥

## भावदीपः

भिन्नपदत्वे 'निर्वाणम्' इति विशेषणं व्यर्थमित्यत आह- **कार्यब्रह्मेति** ॥ विरिञ्च-

---

इति पूर्णश्लोकः ॥ कुल्लूटभट्टटीका-'योऽसाविति । यः असौ इति सर्वनामद्वयेन सकललोकवेदपुराणेतिहासादिप्रसिद्धं परमात्मानं निर्दिशति । अतीन्द्रियग्राह्यः इन्द्रियमतीत्य वर्ततयतीन्द्रियं मनः, तद्ग्राह्य इत्यर्थः । यदाह व्यासः- नैवासौ चक्षुषा ग्राह्यो नच शिष्टैरपीन्द्रियैः । मनसा तु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिः' इति । सूक्ष्मः बहिरिन्द्रियागोचरः । अव्यक्तः व्यक्तिरवयवस्तद्रहितः। सनातनो नित्यः। सर्वभूतमयः सर्वभूतात्मा । एत एवाचिन्त्यः इयत्तया परिच्छत्तुमशक्यः । स एव स्वयमुद्बभौ महदादिकार्यरूपतया प्रादुर्बभूव' उत्पूर्वो भातिः प्रादुर्भावे वर्तते । धातूनामनेकार्थत्वात् ' ॥

अस्मिन् व्याख्याने द्वैतसिद्धान्ताननुगुणाः अनेके विषयाः निरूपिताः । तन्निकरणायैव टीकायाम् 'अतीन्द्रियग्राह्यः' इत्येकपदं व्याख्याय एवमेवान्यान्यप्यूह्यानि इति सूचितमिति ध्येयम् ।

१. शाङ्करभाष्ये ।

२. 'इत्येतानि' इति बे, श-१ मातृकायां च ।

व्यावृत्त्यर्थमित्यर्थः ।। तस्यापि

**'कार्यं बादरिः'**[१] **(ब्र.सू.४.३.७)**

इति सूत्रोक्तदिशा

**'स एनान् ब्रह्म गमयति' (छा.उ.५.१०.२)**

इत्यादौ नपुंसकब्रह्मशब्दवाच्यत्वदृष्टेरिति भावः।। **इत्यादेरिवेति** ।।

**'अनिन्द्रिया अनाहारा अनिष्यन्दाः'**

इति प्रागुदाहृतवाक्योक्तानि इन्द्रियाणीत्यादेरिवेत्यर्थः ।। **'योऽसावतीन्द्रियग्राह्यः'** इत्यस्य अर्थमाह- **इन्द्रियग्राह्य इति** ।। अस्मदादीन्द्रियाग्राह्यत्वातीत[२]त्वमात्रेण कथं सर्वोत्तमत्वलाभ इत्यत आह- **सर्वमेवेति** ।।

( भगवानपि शरीरी रूपी च )

**भाष्यम् — न च तस्य ब्रह्मणोऽशरीरत्वादेतत् कल्प्यम् । तस्यापि शरीरश्रवणात्**

**'आनन्दरूपम्'**[३] **(आथ.२.४.१०),**

**'सुवर्णज्योतीः' (तै.उ.३.१०)**

**'दहरोऽस्मिन् अन्तराकाशः' (छां.उ.८-१-१) इत्यादिषु।**

**यदि रूपं न स्यादानन्दमित्येव स्यात् । न त्वानन्दरूपमिति । कथं च सुवर्णरूपत्वं स्यादरूपस्य ? कथं च दहरत्वम्? दहरस्थश्च**

**'केचित् स्वदेह' (भाग २.२.८)**

**इत्यादौ रूपवानुच्यते ।**

**'सहस्रशीर्षा पुरुषः'**[४] **(ऋ.१०.९०.१ ),**

---

१. 'कार्यमुत्पत्तिमत् । तद् ब्रह्म इत्यन्वेति । 'स एनान् ब्रह्म गमयति' इति श्रुतौ कार्यं ब्रह्म चतुर्मुखाख्यमेव वायुर्नयतीति बादरिर्मन्यते' तन्त्रदीपिकायाम् ।

२. 'अतीतत्वमात्रेण' इति सो मातृकायामेव। 'अस्मदादीन्द्रियाग्राह्यत्वमात्रेण' इति मं कोशे ।

३. अरूपाधिकरणसूत्रभाष्योक्त्यनुसारात् श्रुतिनिर्देशः । 'आनन्दरूपममृतं यद्विभाति' इति पूर्णा श्रुतिः।

४. भगवतो रूपवत्त्वे ब्र.सू.भाष्ये( १-२-२७)उदाहृतचतुर्वेदशिखावचनम् ।

**'रुग्मवर्ण कर्तारम्'** (आथर्वण. ३.१.३),

**'आदित्यवर्णं तमसः परस्तात्'** (गी.८.९),

**'सर्वतः पाणिपादं तत्'** (म.भा.१२.२३९.२९),

**'विश्वतश्चक्षुः(उत)'**(म.ना.उ.२.२)

**इत्यादि वचनात्, विश्वरूपाध्यायादेश्च रूपवानवसीयते ।।**

**प्रमेयदीपिका**

उत्तमाधमभावेन ब्रह्मेश्वरयोर्भेदो माभूत् । ब्रह्माशरीरम्, ईश्वरस्तु सविग्रह इत्यतो भेदोऽस्तु । अभेदस्यापि सत्त्वाद् ब्रह्मशब्दोपपत्तिरित्यत आह– **नचेति** ।। **'तस्य'** पराभिमतस्य । **'एतत्'** भगवतोऽन्यत्वम् । कुतः? इत्यत आह– **तस्यापीति** ।। 'दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यन्तं वाक्यमिह विवक्षितम् । इत्यादिषु 'ब्रह्मविद्यात्वेन सम्मतेषु' इति शेषः । कथमत्र शरीरश्रवणम्? इत्यत आह– **यदीति** ।। **रूपं** विग्रहः । 'विज्ञानमानन्दं ब्रह्म' इत्यानन्दशब्दस्य नपुंसकत्वदर्शनात् तथोपादानम्। ज्योतिःशब्दो भास्वररूपस्य वाचकः । अत उक्तम्– **सुवर्णरूपत्वमिति** । **दहरत्वं** दहरस्थत्वम् । 'अविग्रहस्य' इति वर्तते । दहरस्थत्वं कथमविग्रहस्यानुपपन्नम्? इत्यत आह– **दहरस्थश्चेति** ।।

एवमुपपत्तिसापेक्षाणि वाक्यान्युदाहृत्य स्पष्टान्यप्युदाहरति[१]– [२]**सहस्रशीर्षेति**।। **अवसीयते** परमात्मा ।।

**भावदीपः**

भाष्ये आकाशस्यैव दहरत्वप्रतीत्या ब्रह्मणो दहरस्थत्वप्रतीत्या अर्थमाह- **इत्यन्तमिति** ।। भाष्ये 'आनन्दम् इत्येव' इत्यत्र पुल्लिङ्गेन भाव्यमिति चोद्यं निरस्यति -**विज्ञानमानन्दमिति** ।। **दहरस्थत्वेतीति** ।। भाष्ये 'केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्' इति भागवते[३] श्रवणाद्[४] रूपवानुच्यते इत्युक्तमिति भावः।।

१. बे. अपि इति नास्ति।

२. बे. सहस्र इति प्र.पाठः ।

३. सो मातृकायामेव 'भागवते' इति।

४. 'श्रवणादिरूपवान्' इति कां, मंकोशे पठ्यते ।

## ( भगवतो आनन्दादिमत्वे प्रमाणानि )

**भाष्यम्** — अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानन्दश्रीशक्त्यादिमांश्च भगवान् ।

'पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च'[१] (श्वे.उ.६.८ ),
'यः सर्वज्ञः'[२] (आथ.१.९),
'आनन्दं ब्रह्मणः' (तै.उ.२.८),
'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ.उ.४.३.३२)
'अनादिमध्यान्तमनन्तवीर्यं सहस्रलक्षामितकान्तिकान्तम्'
'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'[३] (भाग.६.४.४८)
'विज्ञानशक्तिरहमासमनन्तशक्तेः'[४] (भाग.३.९.२४ ),
'तुर्यं तत् सर्वदृक् सदा'[५] (माण्डू.खं २.३),
'आत्मानमन्यं च स वेद विद्वान् ',
'अन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः'[६] (भाग.१.१८.२१)
'ऐश्वर्यस्य समग्रस्य' (वि.पु.),

---

१. (अ) २-२४ भाष्येपि उदाहृतः । आथर्वणभाष्ये च ३-१० । 'ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रिया । स्वाभाविकी यावद्द्रव्यभाविनीत्यर्थः ।' इति मङ्गलीधर्माचार्याः ।

(आ) अनुव्याख्याने लिङ्गपादे 'अनित्यत्वात् क्रियाणां तु' इत्यत्र भगवत्क्रियादीनां भगवता अभेद-नित्यत्वादिविचारः तत्रैव द्रष्टव्यः ।

२. (अ) 'सर्वं जानातीति सर्वज्ञः' राघवेन्द्रतीर्थीयखण्डार्थे ।

३. अयंश्लोकः पूर्वं व्याख्यातः । सत्यधर्मीये विशेषविचारः द्रं ।

४. अयमपि पूर्वं व्याख्यातः ।

५. 'तुरीयस्तु सर्वदृक् सर्वं दर्शयतीति सर्वदृक् मुक्तौ तत्तद्योग्यं सर्वं प्रदर्शयतीत्यर्थः । यद्वा सर्वं पश्यतीत्येव सर्वदृक् ' मां. खं.राघवेन्द्रीये ।

६. 'तस्मात् लोके भुवने मुकुन्दात् मोक्षप्रदात् नानायणात् अन्यतमः अन्यः । स्वार्थे तमप्प्रत्ययः । को नाम भगवत्पदार्थः । निरतिशयज्ञानादिगुणवत्तया भगवानिति नामवाच्योस्ति । सर्वेषां तदर्वाक्तनत्वात् न कोप्यस्तीति भावः ।। अनेन विरिश्चिपूज्यत्वशिवशुद्धिकरतीर्थपदत्वभगवन्नामवाच्यत्वानि च अद्वितीयत्व-सर्वोत्तमत्वसूचकानि इति ज्ञातव्यम्'- इति विजयध्वजतीर्थाः ।।

'अतीव परिपूर्णं ते सुखं ज्ञानं च सौभाग्यम् ।
यच्चात्ययुक्तं स्मर्तुं वा शक्तः कर्तुमतः परः'

इत्यादिभ्यः ।।

**प्रमेयदीपिका**

प्राक् भगवतोऽन्यस्योत्तमत्वं वाक्यविरुद्धमित्युक्तम् । इदानीं व्याहतं च तदिति भावेन आह– **अतिपरिपूर्णतमेति** ।। अत्यादिशब्दैर्निरतिशयत्वं द्योत्यते । **ऐश्वर्यं** वशित्वम् । **श्रीः** कान्तिः ।। परमेश्वरे भगवच्छब्दस्यौपचारिकत्वपरिहारायैषां गुणानां सद्भावे प्रमाणान्याह– **पराऽस्येति** ।। [1]'आनन्दं ब्रह्मणः' इत्यत्र 'यतो वाचः' (तै.उ.२.९)इति पूर्ववाक्यमप्यभिप्रेतम्।

अमितशब्दात् परं चन्द्रशब्दोऽध्याहार्यः । द्रष्टृपुरुषयोग्यताभेदात् त्रिधोक्तिः[2]।।

ऐश्वर्याद्यनन्तगुणत्वे **'मयि'** इति प्रमाणम् । सङ्ख्यापरिमाणाभ्यां गुणानामानन्त्यम् अनेनोच्यते ।।

शक्तेः परत्वं प्रागुक्तम् । तदस्पष्टमित्यतो– **विज्ञानेति** ।।

ज्ञानस्यापरोक्षरूपता-प्रतिपादनाय– **तुर्यमिति** ।।

ईश्वरो नात्मानं वेत्ति कर्तृकर्मभावविरोधादित्येतन्निरासाय– **आत्मानमिति** ।।

ईश्वरे भगवच्छब्दस्यौपचारिकत्वासम्भवं प्रदर्शयितुं तदन्यस्य तच्छब्दार्थतानिरासाय– **अन्यतम इति** ।। अन्य एव **अन्यतमः** ।।

भगवच्छब्दस्यायमर्थ इत्यत्र **'ऐश्वर्यस्य'** इति प्रमाणम् । अत्र षण्णामित्युपलक्षणम् । षाड्गुण्ये सर्वगुणान्तर्भावो वा । तद्वान् भगवानिति प्रसिद्धमेव । भगवत्त्वात् स एव सर्वोत्तम इति ।।

---

१. 'आनन्दं ब्रह्मणः' इत्यादावानन्दस्य परिपूर्णता न प्रतीयत इत्यत आह- एतस्येति। श्रीरप्यनन्तेत्यत आह आनन्देति । ' इति पद्मनाभतीर्थीये ।

२. (अ) 'यथा अनन्तसूर्यकोटिप्रकाशोपि हरिः अधिकारिभेदेन सहस्रलक्षामितभास्करोपमत्व इत्युच्यते तथेत्यर्थः । उक्तं च गीताभाष्यटीकायां सहस्रलक्षामितकान्तिकान्तमित्येतद्व्याख्या- वसरे द्रष्टृपुरुषयोग्यताभेदात् त्रिधोक्तिरिति । विवृतमेतद् वैशेषिकाधिकरणानुव्याख्यानसुधयोरणुत्व- विश्रान्त्युक्तिप्रकरणे त.प्र.भावदीपे.३.४.४.

(आ) त.सा.सं ४.२५ सहस्रलक्षकान्तिम् इति श्लोकव्याख्याने- छलारीये अधिकार्यपेक्षया सहस्रेति । 'अधिकारियोग्यतापेक्षया सहस्रलक्षेति' इति च वेङ्कटपतितीर्थाः ।

समग्रार्थे- **अतीवेति ।। यत्** अन्येन करिष्यामीति **स्मर्तुं** बुद्धिस्थीकर्तुं वा **अयुक्तं** तच्च त्वं कर्तुं शक्तः।।

**भावदीपः**

**पूर्ववाक्यमपीति।।** तेन वाङ्मनसगोचरत्वोक्त्या निरतिशयत्वसिद्धिरिति भावः।। 'अनन्तगुणे गुणतो अनन्ते' इत्यन्वयमुपेत्योभयोरर्थभेदमाह- **सङ्ख्यापरिमाणाभ्यामिति ।। तदस्पष्टमिति।।** परशब्दस्यान्यत्वाद्यर्थपरत्वस्यापि सम्भवादिति भावः।। अन्यतमो न चेत् अन्यस्तु स्यादिति चोद्यनिरासायाह-**अन्य एवान्यतम इति ।।** स्वार्थकोयं 'तमप्' इति भावः ।। **सिद्धमेवेति ।।** अतो भगशब्दार्थ एवोक्तः स्मृतौ नतु[1] मतुबर्थोपीति न प्रकृतासङ्गतिरिति भावः।। 'अन्यतमः' इत्यादिवचनद्वयतात्पर्यमाह- **भगवत्त्वात् स एव सर्वोत्तम इति ।। समग्रार्थ इति ।।** 'अतिपरिपूर्ण' इति वाक्योक्ते सर्वस्मिन्नर्थ इत्यर्थः ।।

( भगवद्गुणाः भगवत्स्वरूपाः )

**भाष्यम्— तानि च सर्वाण्यन्योन्यस्वरूपाणि ।**[2]

**'विज्ञानमानन्दं ब्रह्म'** (बृ. उ. ३-९-२८ ),
**'आनन्दो ब्रह्मेति व्यजानात्'** ( तै.उ.३-३),
**'सत्यं ज्ञानमनन्तं ब्रह्म'**( तै.उ. २-२),
**'यस्य ज्ञानमयं तपः'**(मुं१.१.९),[3]
**'समा भग प्रविश स्वाहा'**[4](तै.उ.१-११),

**'न तस्य प्राकृता मूर्तिः मांसमेदोऽस्थिसम्भवा ।**

---

१. सो मातृकायामेव 'नतु' इति पठ्यते ।

२. इदं वाक्यं ६.४.२७ भागवते सत्यधर्मीये उदाहृतम् । तानि तानि च इति तत्र पाठः ।

३. कर्मनिर्णयभाष्ये इमानि वाक्यानि भगवतः सगुणत्वाभिधायीनीति व्याख्यातानि । तथाहि-तत्र टीका - सत्यम् अनन्याधीनस्वरूपं विश्वसत्तानिमित्तं वा । ज्ञानं सर्वज्ञानविषयम् । प्रत्येकं ह्येतानि ब्रह्मलक्षणानि । विज्ञानानन्दशब्दावप्येवमेव व्याख्येयौ । यस्य तपो ज्ञानस्वरूपम्, नत्वालोचनात्मकं सन्तापात्मकं वा। अज्ञो ह्यालोचयते , अप्राप्तकामस्तपस्यति । 'स तपस्तप्त्वा इदं सर्वमसृजत' इत्यस्य व्याख्यानमेतत् ।।

४. तैत्तिरीयखण्डार्थे- हे भग स त्वं मा मां प्रविश (तै.भा.प्रकाशिकायाम्)मयि सन्निहितो भव । 'न ऋते त्वत्क्रियते' इति श्रुतेः ।।

न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः।।'[१]

(वायुपुराणे-पूर्वार्धे ३४-४१)

'सदेहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।

ज्ञानज्ञानः सुखसुःखः स विष्णुः परमोऽक्षरः'

इति पैङ्गिखिलेषु[२]।।

'देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।

परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम् ।।'

इत्यादि ब्रह्मवैवर्ते ।

**प्रमेयदीपिका**

मतुपा ज्ञानादीनां भगवतो भेदः प्रतीतः ।'षण्णाम्'इत्यादिना परस्परं च । तथा 'आकृतिर्भगवतः' इत्युक्त्याऽकृतेश्च। तन्निरासार्थमाह– **तानीति** ।।

तत्र प्रमाणान्याह– **विज्ञानमिति** ।। **तपः** आलोचनक्रिया । **ज्ञानमयं** ज्ञानात्मकमिति धर्माणां परस्परभेदोक्तिः।।

[३]'**प्राकृत**' इति ङीबभावः छान्दसः । अणञ्भ्यामन्यो वा प्रत्ययः ।। मांसमेदोऽस्थिभिः सम्भवो यस्याः सा तथोक्ता । एतच्च **न योगित्वात्** । किन्तु? **ईश्वरत्वात्** । अत एव **विभुः**। निर्दोषगुणात्मकविग्रहाद् **अच्युतः** ।।

---

१. (अ) **बृ.उ.भा.५.८.१२.उ.वाराहवचनम्** । 'ननु अतम' इत्यादाविव 'अमुखम्'इत्यादावपि सर्वात्मना मुखादिनिषेधः किन्नेति भावेन भगवतः प्राकृतविग्रहराहित्ये प्रमाणमाह - न तस्येति ।' भावबोधे ।

(आ) 'योगाच्चैवेश्वरत्वाच्च सर्वात्मा गत एव सः' इति व्यत्यासः तृतीयचतुर्थपादयोः वायुपुराणे ।

२. **ब्र.सू.भाष्येऽपि.२.२.४१उदाहृता** ।। श्रुत्यर्थस्तु-**भाष्यदीपिकायाम्**- यो जन्मच्छेदादिदोषरहितो देहो यस्यासौ सदेहः । यः 'सुखगन्धः' सुगन्धिः, पुण्यगन्धः, सुखात्मकगन्धो वा । तत्रैकः सुधोक्तः,द्वितीयः तृतीयः न्यायदीपोक्तः । यश्च 'ज्ञानभाः' ननु तैजसभाः । 'सत्पराक्रमः' अप्रतिहतपराक्रमः । यश्च 'ज्ञानज्ञानः' अतिशयितज्ञानः । कर्तृसाधनोऽयं ज्ञानशब्दः । 'सुखसुखः' अतिशयितसुखः । अर्शआद्यजन्तः सुखशब्दः, निर्धारणषष्ट्या चोभयार्थलाभः । स विष्णुः 'परमोऽक्षरः' परा जडप्रकृतिः। ततः परा चित्प्रकृतिः परमा । तत उत्तमोऽक्षर इत्यर्थः ।।

तत्त्वप्रदीपे तु 'ज्ञानज्ञानः' नाज्ञानमिश्रितज्ञानः ,'सुखसुखः' न दुःखमिश्रितसुख इत्यर्थ उक्तः ।।

३. तस्य देहित्वे अन्तवत्त्वादीत्यत आह- न तस्येति इति पद्मनाभतीर्थीये ।

'ज्ञानज्ञानः' इत्यादेरतिशयितज्ञानादिरित्यर्थः । **तेन** निर्दोषत्वादिना ॥

**भावदीपः**

**'आकृतिर्भगवतः इत्युक्तेः'** इत्यत्र 'भगवदाकृतेर्भेदः प्रतीयते' इत्यनुषज्यते ॥ ननु प्रकृतेरियम् इत्यर्थे 'तस्येदम्'(पा.सू.४.३.१२०) इति सूत्रेणाण्प्रत्यये 'टिड्ढाणञ्' (पा.सू.४.१.१५) इत्यादिना ङीप्प्रत्यये 'प्राकृति' इति भाव्यमित्यत आह- **ङीबभाव इति**॥ 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्युक्तेरिति भावः ॥ **'अणञ्भ्यामन्यो वा' इति** ॥ 'तद्धिताः' सूत्रेणाण्प्रत्यये 'अजाद्यतष्टाप्'(पा.सू.४.१.४) इति टाप्प्रत्यय इति भावः ॥ 'सत्यरूपः' इति हेतुगर्भमिति भावेनार्थ[1]माह-**निर्दोषेत्यादि** ॥

**भाष्यम् —तदेव लीलया चासौ परिच्छिन्नादिरूपेण दर्शयति मायया ।**

**'न च गर्भेऽवसद्देव्या न चापि वसुदेवतः ।**
**न चापि राघवाज्जातो नचापि जमदग्नितः ।[2]**
**नित्यानन्दोऽव्ययोऽप्येवं क्रीडते मोघदर्शनः'**

**इति पाद्मे ।**

**'न वै स आत्माऽऽत्मवतामधीश्वरो**
**भुङ्क्ते हि दुःखं भगवान् वासुदेवः।'[3]** (भाग.५.१९.५)
**'सगदिरिशिताऽजः परमसुखनिधिर्बोधरूपोऽप्यबोधं**
**लोकानां दर्शयन् यो मुनिसुतहृतात्मप्रियार्थे जगाम'**

---

१. 'अर्थम्' इति सो मातृकायामेव पठ्यते ॥

२. 'वसुदेवसुतो नायं नायं गर्भेवसत् प्रभुः ।
नायं दशरथाज्जातो न चापि जमदग्नितः' म.भा.ता.नि.२-७६

३. (अ) न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि जिहाति कर्हिचित्' इति पूर्णपाठः ।
आत्मा प्रशस्तं मनो येषां तेषां योगीश्वराणामधीश्वरो भगवान् षड्गुणैश्वर्यपरिपूर्णो वासुदेवः वसति सर्वत्रेति वासुः स एवानन्तरूपेण दीव्यति क्रीडति इति देव इत्यादिव्युत्पत्त्या वासुदेवनामकः आत्मा परमात्मा स रामो दुःखं नवै भुङ्क्ते । कथं खलु पूर्णानन्दस्वरूपस्य दुःखसम्बन्धः, सर्वदेशव्याप्तस्य वियोगश्च सम्भवतीति सूचनाय भगवान् वासुदेव इति विशेषणद्वयम्'इति विजयध्वजीये ।
(आ) म.भा.ता.निर्णये. २-१३२ उदाहृतः ।

'स ब्रह्मवन्द्यचरणो जनमोहनाय
स्त्रीसंगिनामिति रतिं प्रथयंश्चचार ।'[१] (म.भा.ता.नि.उ.२-१३३)
'पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयम् ।
[२]रुद्रवाक्यमृतं कर्तुमजितो जितवत्स्थितः ।
योऽजितो विजितो भक्त्या गाङ्गेयं न जघान ह ।
न चाम्बां ग्राहयामास करुणः कोऽपरस्ततः ।।'

इत्यादि स्कान्दे ।

## प्रमेयदीपिका

भगवद्रूपस्यैवम्भावे कथं परिच्छिन्नत्वगर्भवासादिसंसारिधर्माश्च तत्र दृश्यन्ते? इत्यत आह– **तदेवेति** ।। किमर्थम्? इत्यत उक्तम्– *लीलयेति* ।। मायया व्यामोहकशक्त्या ।

अत्र प्रमाणमाह– **नचेति** ।। **देव्या** देवक्याः । **एवं** गर्भवासादिप्रदर्शनेन । मोघं दर्शनं यस्मिन् विषये स तथा ।। **आत्मवतां** भागवतानाम् **आत्मा** निरुपाधिकप्रिय इति यावत् ।। **मुनिसुतो** रावणः । ब्रह्मवाक्यवद् रुद्रवाक्यमप्यतुलं प्रत्यस्तीत्यतो **रुद्रवाक्यम्** इत्युक्तम् । **करुणः** करुणावान् । [३]अर्श आदित्वादच्।।

## भावदीपः

**यस्मिन् विषय इति** ।। गर्भवासादिविषय इत्यर्थः ।।'**आत्मा**' इत्यस्य [४]'स्वामीत्यर्थकत्वे '**अधीश्वरः**' इत्यनेन पौनरुक्त्यापत्तेरर्थान्तरमाह -**निरुपाधिप्रिय इति** ।। 'ममात्मा भद्रसेनः' इत्यादावात्मपदस्य तादृशार्थदर्शनादिति भावः।। **मुनिसुतो रावण इति** ।। विश्रवसः पुत्रत्वात् तस्येति भावः।।

'पुरातुलो नाम महासुरो भवाद्वरात् स तु ब्रह्मण आप लोकताम्' (म.भा.ता..४)

१. यत्पादपङ्कजपरागनिषेवकाणां दुःखानि सर्वाणि लयं प्रयान्ति' इति पूर्वार्धः -म.भा.ता.नि.उ.२-१३३.

२. रुद्रवाक्यमृतं कर्तुं। यदाहरिर्जितः तदैव तद्धर्हिर्गतः सन् वध्यसे, अन्यथा रुद्रवाक्यं मृषाभवतीति ब्रह्मवाक्यमतुलं प्रति। अतः अन्यदापि तं निस्सारयितुं भगवान्समर्थो जितवद् भूत्वैव तं निस्सारयामासेत्यविरोधः इति नरहरितीर्थीये।

३. (अ)सुधा-परिमले-३-२-२८ ,३.४.१६ अर्श आदिभ्य इति ।। एभ्यो मत्वर्थे अच्प्रत्ययो भवतीति सूत्रार्थः । अर्शांसि विद्यन्ते अस्य इति अर्शस इत्याद्युदाहरणम् । आकृतिगणोयमिति भावः ।।

४. 'स्वार्थार्थकत्वे' इति कां, मं कोशे पठ्यते ।

इति भारततात्पर्यविरोधायाह- **ब्रह्मवाक्यवदिति** ।। **अर्श आदित्वादिति** ।। 'अर्श आदिभ्यो अच्' इति सूत्रे मत्वर्थाच्प्रत्ययोक्तेः अर्शआदेराकृतिगणत्वेन तन्मध्ये अस्यापि ग्राह्यत्वादित्यर्थः।।

**भाष्यम् — न तत्र संसारधर्मा निरूप्याः । यत्र परावरभेदोऽवगम्यते तत्राज्ञबुद्धिमपेक्ष्यावरत्वं विश्वरूपमपेक्ष्यान्यत्र । तच्चोक्तम्–**

**'परिपूर्णानि रूपाणि सामान्यखिलरूपतः ।**
**तथाऽप्यपेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि हि ।**
**परावरं वदन्त्येवं ह्यभक्तानां विमोहनम् ।।' इति गारुडे ।।**

**न चात्र किञ्चिदुपचारादिति वाच्यम् । अचिन्त्यशक्तेः । पदार्थवैचित्र्याच्चेत्युक्तम् ।**

**'कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा ।**
**न चाणुमात्रं भिन्नानि तथाऽप्यस्मान् विमोहसि'**

**इत्यादेश्च नारदीये ।।**

**तस्मात् सर्वदा सर्वरूपेष्वपरिगणितानन्तगुणगणं नित्यनिरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्मापरोक्षज्ञान्यृच्छतीति सिद्धम् ।। ७१ ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये द्वितीयोऽध्यायः ।।**

### प्रमेयदीपिका

**'तदेव'** इत्याद्युक्तमुपसंहरति– **न तत्रेति** ।। 'अतः' इत्युपस्कर्तव्यम् । यद्येवं तर्हि विश्वरूपं परं तदपेक्षया कृष्णादिरूपाण्यपराणीति[१] कथं ग्रन्थेषूच्यते? इत्यत आह– **यत्र चेति** ।। **यत्र** ग्रन्थे । **तत्र विश्वरूपमपेक्ष्यान्यत्र** कृष्णादाववरत्वम् **अज्ञबुद्धिमपेक्ष्योक्तं** ज्ञातव्यमित्यर्थः ।।

कुत एतत्? इत्यत आह– **तच्चेति** ।। **अखिलरूपतः** अखिलधर्मैः । **विमोहनं** कर्तुम् ।। नन्वयमुपचारो वा स्तुतिर्वा किं न स्यात्? इत्यत आह– **न चेति** ।। असम्भवे ह्येषा कल्पना ।

१. 'अवराणि'इति प्र.पाठः। श्रीनि- टिप्पण्यां 'अपराणि इति' प्रतीकग्रहणात् टीकापाठ आदृतः।

अचिन्त्यशक्त्या[१] चैकस्यैवानेकपरिमाणत्वादिकं सम्भवति । अन्यत्रादर्शनेन त्वपलापेऽतिप्रसङ्ग इत्यर्थः ।। अत्रैव प्रमाणमाह– **कृष्णेति** ।। **विमोहसि** विमोहयसि । श्लोकार्थमुपसंहरति– **तस्मादिति** ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वितीयोऽध्यायः ।। २ ।।

**भावदीपः**

**'रूपाणि'** इत्यनेनापौनरुक्त्याय[२] रूपपदं धर्मपरम् इत्युपेत्य अर्थमाह- **अखिलरूपतः अखिलधर्मैरिति** ।। **श्लोकार्थमिति**।। **'एषा ब्राह्मी स्थिति'** इति श्लोकार्थमिति भावः[३]।। ७२ ।।

।। इति श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते द्वितीयोऽध्यायः ।।

---

१. बे, बे-ग्रं ।**'च'** इति प्र.पाठे नास्ति ।

२. 'पौनरुक्त्या मन् पदम्' इति का, मं कोशे पठ्यते ।

३. 'इत्यर्थः' इति सो मातृकापाठः ।

# ।। अथ श्रीमद्भगवद्गीतायां तृतीयाध्यायः ।।

( अर्जुनेन निवृत्तधर्मत्यागेन कर्मनियोजने कारणप्रश्नः)

**अर्जुन उवाच**

**ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत् किं कर्मणि घोरे मां नियोजयसि केशव ।। १ ।।**

( तृतीयाध्यायार्थप्रतिपाद्यनिरूपणम् )

**भाष्यम् — आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र । ज्ञानसाधनत्वेनाकर्म विनिन्द्य कर्म विधीयत उत्तराध्याये ।।**

**प्रमेयदीपिका**

पूर्वोत्तराध्यायेभ्योऽस्य [1]तृतीयाध्यायस्य भेदं [2]स्वस्मिन्नेकतां च दर्शयन्[3] एतदध्यायप्रतिपाद्यमर्थं पूर्वाध्यायार्थसङ्गतत्वेन विवक्षुस्तत्प्रतिपाद्यं तावदाह– **आत्मेति** ।। जीवेश्वरस्वरूपं [4]साङ्ख्याख्यमित्यर्थः । **ज्ञानसाधनम्** आत्मज्ञानसाधनं योगाख्यम्। **पूर्वत्र** पूर्वस्मिन्नध्याये । न चैवं [5]द्वितीयाध्यायस्यैक्यानुपपत्तिः । साधनस्यैव प्राचुर्यात्,प्रचुरेण च व्यपदेशात् । तथाच सप्तमादौ वक्ष्यति **'साधनं प्राधान्येनोक्तमतीतैरध्यायैः'** (७.१) इति । **'आत्मस्वरूपम्'** इत्यादि तु प्रकरणभेदप्रदर्शनायोक्तमिति ।।

एतत्सङ्गतत्वेन तृतीयाध्यायार्थमाह– **ज्ञानेति** ।। योगो द्विविधः । कर्मसमाधिभेदात्। तत्र तावज्ज्ञानसाधनत्वेन **कर्म विधीयते** कर्तव्यमेवेति ज्ञाप्यते कैश्चन वाक्यैः । **अकर्म** कर्माकरणम् । **विनिन्द्य** अस्मिन्नध्याये । अकर्मनिन्दाऽपि कर्मविध्यर्था इत्येकार्थता । तथाऽपि प्रकरणभेदार्थमेवमुक्तम् ।।

---

१. **'तृतीयाध्यायस्य'** इति श-१, २,३ मातृकास्वेव दृश्यते । गुज,वे-ग्रं,बे,प्र-पाठे नास्ति ।

२. **'स्वस्मिन्नेकताम्'** इति वे, गुज,वे-ग्रं,श-१,२मा, भावदीपे च । **'स्वस्मिन्नेकवाक्यताम्'**-इति प्र.पाठः।

३. **'ज्ञापयन्'** पां. श-१+३।

४. **'साङ्ख्यम्'** पां.श-१। भावदीपोक्तपाठान्तरानुगुणम् ।

५. श-मा-२, गुज,वे-ग्रं, । **'द्वितीयाध्यायैक्य'**-वे,प्र.।

**'ज्ञानसाधनत्वेन'** इति वदता मोक्षसाधनता निरस्ता । तेन प्रश्नप्रतिवचनापव्याख्यानमप्यपहस्तितम् ।। आनन्दवृद्ध्यर्थता त्वनुज्ञायत एव ।।

### भावदीपः

**स्वस्मिन्नेकतामिति** ।। अर्थैकत्वनिबन्धनत्वादेकवाक्यताया इति भावः ।। **विवक्षुरिति** ।। 'ज्ञान' इत्यादिना भविष्यतीति भावः । **जीवेश्वरस्वरूपमिति** ।। **'नत्वेवाहम्'** (२.१२) इत्यादिना प्राधान्येन जीवस्य तादर्थ्येनेश्वरस्य च स्वरूपमित्यर्थः ।। **'एषा तेऽभिहिता साङ्ख्ये'**(२.३९) इत्युक्तम् – **साङ्ख्याख्यमिति**[1]।। **आत्मज्ञानेति** ।। ईश्वरज्ञानेत्यर्थः ।। **योगाख्यमिति** ।। निवृत्तिकर्मरूपं समाधिरूपं चेत्यर्थः ।। **अपव्याख्यानमिति** ।। ज्ञानकर्मणोः मोक्षहेतुत्वेन समुच्चयतया[2] यदपव्याख्यानं तदित्यर्थः।।

**भाष्यम् — कर्मणो ज्ञानमत्युत्तममित्यभिहितं भगवता – 'दूरेण ह्यवरं कर्म'** (२.४९) इत्यादौ । एवं चेत् किमिति **कर्मणि घोरे** युद्धाख्ये **नियोजयसि** निवृत्तधर्मान् [3]विनेत्याह – **ज्यायसीति** ।।

### प्रमेयदीपिका

बीजं प्रदर्शयन् प्रश्नवाक्यतात्पर्यमाह– **कर्मण** इति ।। आदिपदेन **'कृपणा फलहेतवः'** (२.४९) इत्यादेर्ग्रहणम् । **घोरे** रागद्वेषाद्युपेते । अत्रोभयत्र कर्मशब्देन काम्यं कर्माभिप्रेतम्। **निवृत्तधर्मान्** निष्कामधर्मान् । यत्याश्रमविहिताञ्छमदमादीन् । अत्र **कर्मणि किमिति नियोजयसि**? इत्येकः प्रश्नः **घोरे** इति द्वितीय इत्यवधेयम् ।।

इदमुक्तं भवति । आश्रमत्रयविहितानि यज्ञादीनि, युद्धादीनि च कर्माणि काम्यान्येव । फलश्रवणात् -

**'सर्व एते पुण्यलोका भवन्ति'** (छा.२.२.१६) इत्यादि ।

तथाऽत्रापि-

**'हतो वा प्राप्स्यसि स्वर्गम्'** (२.३७) इत्यादि ।

---

१. 'साङ्ख्यम्' पां.। एतेन टीकायामपि श-मातृकानुरोधेन पाठान्तरं सम्भाव्यते ।

२. 'मोक्षे समुच्चयहेतुतया हेतुत्वेन' -इति क-मातृकायाम्, सो मातृकायामपि ।

३. गुज,वे-ग्रं, भावदीपानुगुणः । 'विहाय'-प्र.।

चतुर्थाश्रमविहितानि शमदमादीन्यकाम्यानि। फलाश्रवणात् ।

'शान्तो दान्तः' इत्युपक्रम्य 'आत्मानं पश्यति'[1] (बृ.६.४.२४)

इति ज्ञानार्थत्वश्रवणाच्च । ज्ञानं च काम्यात् कर्मणोऽत्युत्तममित्यभिहितम् । ततश्च काम्ये कर्मणि युद्धे **'युद्धस्व भारत '**(२.१८) इति नियोजनमयुक्तम् । किन्तु 'चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भव' इति नियोक्तव्यम् ।।

**भावदीपः**

**बीजमिति ।।** 'प्रश्नस्य' इति योज्यम् ।। **अत्रोभयत्रेति ।।** प्रश्नपरे गीतावाक्ये तद्भाष्ये चेत्यर्थः । यद्वा अत्र भाष्ये **उभयत्र कर्मणा** इत्यत्र कर्मणीत्यत्र चेत्यर्थः ।। **एकः प्रश्न इति ।।** स च **'लोकेऽस्मिन्'**(३.३) इत्यत्र, द्वितीयस्तु **'श्रेयान् स्वधर्मः'**(३.३५) इत्यत्र निरसिष्यत इति तत्रैव व्यक्तीभविष्यतीति भावः ।। ननु सर्वकर्मणां काम्यत्वात् कथं 'निवृत्तधर्मान् विना' इत्युक्तिः? मुक्त्यर्थानां निवृत्तधर्मत्वे तु -

**'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि'**(२.३९)

इति शुद्धकर्मणोऽपि मुक्त्यर्थत्वेन निवृत्तत्वात् **'निवृत्तधर्मान् विना'** इत्युक्तमयुक्तमित्यतः प्रश्नपर[2]श्लोकद्वयतात्पर्यमाह– **इदमुक्तमिति ।।**

**भाष्यम्— कर्मणः सकाशाद् बुद्धिर्ज्यायसी चेत्, ते तव मता, तत्[3] तर्हि ।।१।।**

**प्रमेयदीपिका**

ननु युद्धमपि **'कर्मबन्धं प्रहास्यसि'**(२.३९)इत्युक्तत्वाज्ज्ञानार्थं भवतीति मतम्, तदा व्यामिश्रेण वाक्येन बुद्धिमोहन[4]मेवापद्यते । अथैवं मतम् । युद्धादीनि कर्माणि काम्यान्यकाम्यानि च । तत्र यः सकामः तं प्रति **'हतो वा'**(२.३७)इत्याद्युक्तम् । यः पुनर्ज्ञानार्थी तमुद्दिश्य **'कर्मण्येवाधिकारः'** (२.४७) इत्युक्तम् । तत्र का व्यामिश्रता? इति । तथाऽपि शुद्धेषु निवृत्त[5]लक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव । तत्र मनोविक्षेपाभावात् । अत्र तद्भावादिति ।।

१. 'पश्येत् ' इति सर्वत्र मुद्रितः पाठः । 'पश्यति = पश्येत्' इति खण्डार्थे ।
२. 'पर' इति सो, मं मातृकयोः ।
३. 'तत्' प्र-नास्ति । श.मातृकायाम्, ह-पाठे च । नरहरितीर्थीयानुगुणः ।
४. गुज,वे-ग्रं,। 'इव' इति प्र । ५.'निवृत्त' -श-मा-२ । 'निवृत्ति' गुज,वे-ग्रं ।

किञ्च कामक्रोधादीनां नरकफलत्वमुक्तम् । युद्धे च कामादयोऽवर्जनीयाः । ततोऽपि तत्र नियोजनमयुक्तम् ।। नन्वस्योत्तरं **'सुखदुःखे समे कृत्वा'** (२.३८) इत्युक्तम् । सत्यम् । तथाऽपि रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्स्वशक्यानुष्ठेये[१] युद्धे नियोजनमयुक्तमेवेति ।।

प्रथमश्लोके पदानां व्यवहितत्वादन्वयं दर्शयन् किञ्चिद्व्याचष्टे– **कर्मण** इति ।। षष्ठी-भ्रान्तिनिरासाय **सकाशात्** इत्युक्तम् । **बुद्धिः** आत्मज्ञानम् । **ज्यायसी** प्रशस्यतरा[२]।। १ ।।

### भावदीप

**का व्यामिश्रतेति** ।। अधिकारिभेदेन व्यवस्थितत्वादिति भावः ।। **वैकल्पिकेषु** व्यवस्थितविकल्पवत्स्वित्यर्थः ।। **नरकफलत्वमुक्तमिति** ।। **'विषयान् ध्यायतः'** (२.६२) इत्यादाविति भावः ।। 'ज्यायसी' इत्यस्य वृद्धतमा इति भ्रमनिरासायाह[३]- प्रशस्य-तरेति ।। १।।

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ।। २ ।।**

( भगवता अर्जुनप्रश्नोत्तरत्वेन निष्ठाद्वैविध्यकथनम् )

**श्रीभगवानुवाच -**

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ।। ३ ।।**

**भाष्यम् —** ज्यायस्त्वेऽपि बुद्धेराधिकारिकत्वात् त्वं कर्मण्यप्यधिकृत इति तत्र नियोक्ष्यामीत्याशयवान् भगवानाह– लोक इति ।।

### प्रमेयदीपिका

एवं चेत् प्रश्नः, तर्हि कथं परिहारवाक्यं सङ्गच्छते? तत्र निष्ठाद्वैविध्यकथनादि-त्यतस्तदभिप्रायं वदन्नवतारयति– **ज्यायस्त्वेऽपीति** ।। 'बुद्धिः काम्यकर्मभ्यो ज्यायसी' इति

---

१. 'अशक्यनुष्ठाने' -पां ।-गुज,वे-ग्रं ।

२. श.मा.२, भा.र.को.– **'प्रशस्यतरा' इति कचित् पाठः'** इत्युक्तम् । श.मा-१.'प्रशस्य' इति ।

३. अयं काणि-मातृकायां पत्रं छिन्नम् । सो मातृकानुसारेण शुद्धपाठोपलब्धिः ।

यदुक्तं तत्तथैव [1]इत्यर्थः । तथाऽपि त्वां **तत्र** वैकल्पिके युद्धादिकर्मणि प्रेरयामि । कुतः? आधिकारिकत्वात् । त्वं कर्मण्यपि विक्षेपकारिण्यपि वैकल्पिकेऽधिकृतः इति कृत्वा ॥

## ( अधिकारिभेदेन कर्माणि द्विविधानि )

**अयमत्रोत्तरक्रमः** । आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च न शुद्धकाम्यानि। किन्तु कर्तुरिच्छया स्वर्गाद्यर्थानि ज्ञानाद्यर्थानि च भवन्ति । अतो **बुद्धेः** काम्यकर्मणो **ज्यायस्त्वेऽपि** युद्धस्य बुद्ध्यर्थत्वसम्भवात् तत्र नियोगो नानुपपन्नः । यतिधर्मान् विना किमेतेन नियोगेन? इति चेद् [2]अनाधिकारिकाणामेव यत्याश्रमस्वीकारो नाधिकारिकाणाम् । तैर्गृहस्थाद्याश्रमम-परित्यज्यैव तद्विहितानि कर्माणि निष्कामतयाऽनुष्ठेयानि इति ईश्वरनियमात् तव चाधिकारिकत्वादिति ॥

## ( नियोक्ष्यामि इति भाष्यप्रयोगसाधुत्वसमर्थनम् )

**'स्वराद्यन्तोपसृष्टाच्च'** इति कात्यायनवचनमनित्यम् । अत एव न पाणिनिरभाणीत् ॥

## भावदीपः

ननु 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' **(पा.सू.१.३.६४)** इत्यात्मनेपदविधिसूत्रे 'स्वराद्यन्तोप-सृष्टाच्च' इति वक्तव्यमिति वार्त्तिके स्वरशब्दिताद् यजन्तोपसर्गयुक्ताद् 'युजिर् योगे' **(पा.धा.१४४४)** इति धातोरात्मनेपदोक्तेः 'नियोज्यः' [3]इति प्रयोक्तव्यम् । कथं 'नियोक्ष्यामि' इति प्रयुक्तम्? इत्यत आह– **स्वराद्यन्तेति** ॥ [4]स्वरो अच् आदिरन्तो वा यस्य तादृशेनोपसर्गेण सम्बद्धस्य युजेः अस्माद्धातोरात्मनेपदं वक्तव्यमिति वार्तिकार्थः ॥ कात्यायनवाक्यम् अनित्यत्वे ज्ञापकमित्याह– **अत एवेति** ॥ अनित्यत्वादेवेत्यर्थः । [5]अन्यथा 'प्रोपाभ्याम्' इत्यनुक्त्वा 'स्वराद्यन्तोपसृष्टाद्युजेः' इत्यवक्ष्यत् । अतो वार्त्तिककृन्मते[6] तथात्वेऽपि पाणिनिमते परस्मैपदमेवेति भावः ॥

---

१. श-मा.१ अधिकम् । 'इत्यर्थ इति' - बे, गुज,बे-ग्रं,श-मा-२ नास्ति ।
२. भा.र.को, भावबोधे च। 'अनधिकारिणामेव' इति बे, गुज,बे-ग्रं,श-१मा ।
३. 'इति भाव्यमित्यत आह -स्वराद्यन्तेति' इति सो. कोशे पाठान्तरम् ।
४. इदं वाक्यं काणियूरुमातृकायाम्'अनित्यत्वे' इति पर्यन्तं नास्ति । मं+ सो-मातृका ।
५. इदं वाक्यं काणियूरु, सो-मातृकययोः नास्ति । मं मातृकायामेव ।
६. **'वार्तिककारमते'** -सो-पां ।

( कर्म-ज्ञाननिष्ठयोरुदाहरणम् )

**भाष्यम् — द्विविधा अपि जनासन्ति । गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत् । तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत् । मद्धर्मस्था एवेत्यर्थः। साङ्ख्यानां ज्ञानिनां सनकादीनाम् । योगिनाम्** उपायिनां **जनकादीनाम् ।।**

**प्रमेयदीपिका**

अयमाशयः श्लोकात् कथं लभ्यते? इत्यतो व्याचष्टे– **द्विविधा अपीति ।।** निष्ठा द्विविधा इति व्याख्याने क्रमेणैकस्यैव पुरुषस्य तत्सम्भवान्नोक्तोऽभिप्रायो[१] लभ्यत इत्येवं व्याख्यातम्[२]। न केवलमेकविधाः साङ्ख्या एवेत्यपेरर्थः । द्वैविध्यमेव सोदाहरणमाह– **गृहस्थादीति** ।। यत्याश्रमपरिग्रहेणेत्यपि ग्राह्यम् । **ज्ञाननिष्ठाः** यत्याश्रमविहितैरेव कर्मभिर्ज्ञानसाधनैः युक्ताः[३]। सनकादिभिस्तुल्यं वर्तन्त इति **सनकादिवत्** । एवं जनकादिवदित्यपि ।।

**तत्स्था एव** गृहस्थाद्याश्रमस्था एव । **तद्धर्मैः** युद्धादिभिर्ज्ञानसाधनैः [४]**युक्ताः** । **द्विविधा अपि जनाः सन्ति** इत्युक्ते कर्ममार्गस्था ज्ञानमार्गस्थाश्चेति द्वैविध्यं प्रतीयते । तन्निवृत्त्यर्थमाह– **मद्धर्मेति** ।। ज्ञानमार्गस्था एव । ततश्च 'मद्धर्मस्था एव जना द्विविधा अपि सन्ति' इत्यन्वयः। [५]ततः कथम्? इत्याकाङ्क्षायामुत्तरं वाक्यद्वयम् ।।

'साङ्ख्यानाम्' 'योगिनाम्' इति पदद्वयम् अन्यथाप्रतीति[६]निरासाय व्याचष्टे– **साङ्ख्यानामिति** ।। सम्यक् ख्यातिर्ज्ञानं सङ्ख्या । तत्र भवाः साङ्ख्याः । तेषाम्, ज्ञानिनां ज्ञाननिष्ठानामित्यर्थः ।।

**भावदीपः**

**क्रमेणेति** ।। पूर्वं गार्हस्थ्यं पश्चाद्यत्याश्रमनिष्ठेत्येवं पौर्वापर्यक्रमेणेत्यर्थः ।। [७]**नोक्ता-**

---

१. श.मा-२, गुज,वे-ग्रं। 'क्ताभिप्रायः'- बे ।
२. बे,श-मा-१,२। 'व्याख्यानम्' इति प्र.पाठः ।
३. गुज,बे-ग्रं, । 'ज्ञानसाधने अभियुक्ताः' - प्र। श.मा-१ ।
४. अत्रापि 'अभियुक्ताः' इति श-मा.२ पाठः ।
५. भा.र.को . 'तत् कथम् इत्यपि क्वचित् पाठः'= श्रीनि -टि.पाठः, गुज,वे-ग्रं, ।
६. शाङ्करभाष्ये-भाग-१,पृ २६७ द्रष्टव्यम् ।
७. इदं वाक्यं का-मातृकायां नास्ति । मं+ सो-मातृका ।

**भिप्राय इति** ।। 'इत्याशयवान्' इति भाष्योक्ताभिप्राय इत्यर्थः । 'तेन तुल्यं क्रिया चेद् वतिः'**(पा.सू.५.१.११५)**इति वतिप्रत्यय इति भावेनाऽह–**सनकादिभिरिति** ।। **मद्धर्मस्था** एव इत्यत्र विशेष्याकाङ्क्षायामाह– **ज्ञानमार्गस्था एवेति** ।। तेषां प्रागपि भगवद्धर्मस्थत्वोक्तौ [1]फलमाह– **ततश्चेति** ।। साङ्ख्यानामपि भगवद्धर्मस्थत्वोक्तौ सत्यामित्यर्थः ।। **अन्यथा** प्रतीतार्थ[2] निन्दितसाङ्ख्ययोगे धीनिरासायेत्यर्थः ।।

### (अर्जुनः सकर्मज्ञानाधिकारी )

**भाष्यम् — ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसङ्ग्रहार्थत्वाच्च ये कर्मयोग्या भवन्ति तेऽपि योगिनः । निष्ठा स्थितिः । त्वं तु जनकादिवत् सकर्मैव ज्ञानयोग्यः, न तु सनकादिवत् तत्त्यागेनेत्यर्थः । सन्ति हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयोऽपि ज्ञानिन एव । तथा ह्युक्तम्–**

**'ईश्वरेच्छया [3]विनिवेशितकर्माधिकारः' इति (भाग.५.१.२३) ।। ३ ।।**

### प्रमेयदीपिका

ननु जनकादयोऽपि ज्ञाननिष्ठाः । तत् कथं योगिनः? इत्यत आह– **ज्ञाननिष्ठा अपीति**।। कर्मयोग्याः गृहस्थादिकर्मयोग्याः । साङ्ख्ययोगशब्दौ प्रसिद्धार्थौ किं न स्याताम्? इत्यतो मुक्तिवचनादिति भावेनाऽह– **निष्ठेति** ।। स्थितिः 'स्वरूपेण' इति शेषः ।।

अस्त्वेवं श्लोकार्थः । तथाप्याधिकारिकत्वादित्यादिक[4]मत्र न श्रूयत इत्यतोऽध्याहृत्याऽह– **त्वं त्विति** ।। **सकर्मा** गृहस्थादिकर्मवान् । भवेदिदं व्याख्यानं यदि ते जनाः प्रमिताः स्युर्येषां ज्ञाननिष्ठानामपि गृहस्थादिकर्मस्वेवाधिकारो न यत्याश्रमकर्मसु । जनकादयस्तु यत्याश्रमं नानुष्ठितवन्त इत्येव प्रमितम् । न तु तत्रानधिकारिण[5] इति तत्राह– **सन्ति हीति** ।। विनिवेशितः कर्माधिकारो गृहस्थकर्माधिकारो यस्मिन् स तथोक्तः । प्रियव्रतो हि यत्याश्रमं स्वीचिकीर्षुराधिकारिकत्वयुक्त्या हिरण्यगर्भेण निवारित इत्यनेनोच्यते ।। ३ ।।

१. 'फलितमाह'-सो मातृकायां पां ।
२. 'प्रतीतिनिन्दित' इति का-पाठे ।
३. 'अधिनिवेशित' इति विजयध्वजीये ।
४. गुज,वे-ग्रं, । कारिकत्वादिकम् -बे, प्र.।
५. गुज,वे-ग्रं - तत्रानधिकार इति ।

**भावदीपः**

**'निष्ठा स्थितिः'** इत्युक्तावपि मुक्त्यर्थत्वलाभायाऽह– **स्वरूपेणेति ।। विशेष इति।।**

**'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः'**[1] **(भाग.)**

इत्युक्तेरिति भावः ।। **इत्यादिकमिति** ।। अवतारिकायामुक्त्या कृतमित्यर्थः ।। **इत्यनेनोच्यत इति** ।। **'ईश्वरेच्छया'** इत्यादिभाष्योक्तपञ्चमस्कन्धवाक्येनेत्यर्थः ।। ३ ।।

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च सन्न्यसनादेव सिद्धिं समधिगच्छति ।। ४ ।।**[2]

**भाष्यम्— इतश्च नियोक्ष्यामीत्याह– न कर्मणामिति ।। कर्मणां युद्धादीनामनारम्भेण नैष्कर्म्यं निष्कर्मतां काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं , न तु कर्माकरणमित्यर्थः ।।**

**प्रमेयदीपिका**

**'न कर्मणाम्'** इति मोक्षस्य कर्मसाध्यत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासायाऽह– **इतश्चेति**।। 'स्ववर्णाश्रमोचिते युद्धादौ' इति शेषः । प्राक् 'आधिकारिकत्वात् त्वया कर्म कर्तव्यम्' इत्युक्तम् । इदानीं कोऽपरो हेतुरुच्यते? इत्यतो व्याचष्टे– **कर्मणामिति** ।। अयमभिप्रायः । कर्माणि न कार्याणीति वदन् प्रष्टव्यः । किं ज्ञानं न मोक्षसाधनम्? अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यज्यन्ते? उत ज्ञानं मोक्षसाधनं भवत्येव? किन्तु

**'कर्मणा बद्ध्यते जन्तुः'** **(म.भा.१२.२४१.७)**

इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा । आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्येदमुच्यते? अथवा क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम्, अकरणे च

---

१. (अ) **'अन्यथारूपम् अस्वाभाविकं रूपं हित्वा त्यक्त्वा स्वरूपेण निजरूपेणावस्थितिरेव मुक्तिरित्यर्थः'** **ब्र.सू.भा.दीपिका.१.१.१७.**

(आ) **'अन्यथारूपं प्राकृतसूक्ष्मस्थूलेन्द्रियादिकं हित्वा केवलचिदानन्दात्मकेन स्वरूपेण व्यवस्थितिः विशेषेणावस्थानं मुक्तिरित्युच्यते'** इति विजयध्वजतीर्थाः ।

२. उत्तरार्धः छा.उ.भाष्ये २-२३खण्डे सन्न्यासमात्रेण मोक्षप्राप्तिर्नास्तीत्यत्र मानतयोदाहृतः ।

बीजाभावात् संसारो न भविष्यतीति युक्तिमाश्रित्य? आद्यस्य इदं[१] दूषणम् – **न कर्मणामिति** ।। नैष्कर्म्यशब्दस्यान्यथापि व्याख्यानान्नाद्य इत्यर्थः । ततः किम्? इत्यत आह– **ज्ञानमेवेति** ।।

**( कर्माकरणे न भवति मुक्तिः)**

**भाष्यम्— कुतः? [२]पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः । यदि कर्माकरणेन मुक्तिः, स्यात् स्थावराणाम् ।।**

**प्रमेयदीपिका**

उक्तमाक्षिप्य समाधत्ते– **कुत** इति ।। नैष्कर्म्यशब्दस्यान्यार्थतामङ्गीकृत्य कर्माकरणस्य मोक्षसाधनत्वनिराकरणे को हेतुरित्यर्थः? कथमस्य हेतुत्वम्? इत्यतो व्याचष्टे– **सर्वदेति** ।। प्रलयेऽपि सम्भवार्थं **'स्थूलेन सूक्ष्मेण वा'** इत्युक्तम् । तथाऽपि कथं हेतुत्वम्? इत्यत आह– **यदीति** ।। **स्यात्** इत्यस्य पूर्वोत्तराभ्यां सम्बन्धः । **स्थावराणाम्** इत्यनधिकृतोपलक्षणम् । ततश्चानादौ संसारेऽनधिकृतदेहस्य सम्भवेन मुक्तिप्रसङ्गादधुनापि दृश्यमानस्य[३] पुरुषत्वं न स्यादिति भावः ।।

**भावदीपः**

**कथमस्येति ।। 'पुरुषत्वात्'** इत्यस्येत्यर्थः ।। **'स्थावराणां च'** इत्यस्यान्वयप्रतीत्यर्थमाह– **स्यादित्यस्येति ।। अनधिकृतेति ।।** कर्माधिकारशून्यदेहवन्मात्रोपलक्षणमिति, तेषामपि कर्माकरणसत्वेनापादनसम्भवादिति भावः ।।

**( अननुभुक्तानि अनन्तकर्माणि सन्ति )**

**भाष्यम् — नचाकरणे कर्माभावान्मुक्तिर्भवति । प्रतिजन्मकृतानाम् [४]अनन्तकर्मणां भावात् । नच सर्वाणि [५]भुक्तानि । एकस्मिन् शरीरे बहूनि हि कर्माणि**

१. बे, गुज, वे-ग्रं,। इदम् इति प्र पाठे नास्ति ।
२. गुज, वे-ग्रं । 'पुरुषार्थत्वात् '-प्र ।
३. बे, गुज,वे-ग्रं ,'दृश्यमानम्' -प्र ।
४. गुज,वे-ग्रं । टीकानुगुणोऽयम् । 'अनन्तानां कर्मणाम्' इति प्र।
५. गुज,वे-ग्रं, । **'कर्माणि'** इत्यधिकं प्रभ.पाठे ।

**करोति । तानि चैकैकानि बहुजन्मफलानि कानिचित् । तत्र चैकैकानि कर्माणि भुञ्जन् प्राप्नोत्येव शेषेण मानुष्यम् । ततश्च [1]बहुशरीरफलकर्माणीत्यसमाप्तिः।।**

## प्रमेयदीपिका

द्वितीयनिरासेऽप्यस्यैवार्थस्य[2] तात्पर्यमाह– **न चेति** ।। **कर्माभावात्** संसारबीजाभावात्। अत्र **नैष्कर्म्यम्** इति मुक्तिनामैव । नतु परप्रमाणानुवादः । कुतो न भवति? इत्यतोऽत्रापि **पुरुषत्वात्** इति हेतुमभिप्रेत्याऽह– **प्रतीति** ।। जन्मनिजन्मनि कृतानामित्यर्थः । पुरुषत्वेनानादौ संसारेऽधिकृतानन्तजन्मसम्भवात् तत्रकृतानाम् **अनन्तकर्मणां भावात्** किमद्याकरणमात्रेण भवति? इत्यर्थः ।।

ननु पूर्वपूर्वशरीरकृतानि कर्माण्युत्तरोत्तरशरीरे भुक्तानि । तत्कुतोऽनन्तकर्मणां भावः? इत्यत आह– **न चेति** ।। कुतो न? इत्यत आह[3]– **एकस्मिन्निति** ।। हिशब्दो हेतौ ।।

बहून्यपि भुज्यन्तां को दोषः? इत्यत आह– **तानि** चेति ।। तानि च कानिचिदिति सम्बन्धः ।। **एकैकानीति** ।। प्रत्येकमित्यर्थः ।। ननु तथाविधान्यप्यनधिकृतजन्मभिर्भुक्तानी-त्यत आह– **तत्र** चेति ।। **तेषु** =कर्मसु । **भुञ्जन्** =भुञ्जानः । **शेषेण** =कर्मशेषेण । मानुष्ये चाकरणमसम्भावितमित्याह– **ततश्चेति** ।। **असमाप्तिः** 'भोगेन[4] कर्मणाम्' इति शेषः ।।

## भावदीपः

**अस्यैवार्थस्येति ।। 'न कर्मणाम्'** इत्यर्थस्येत्यर्थः ।। **अत्र नैष्कर्म्यमितीति** ।। अस्मिन् द्वितीयपक्षे गीतायां 'नैष्कर्म्यम्' इति मुक्तेर्नाममात्रम्, नतु नैष्कर्म्यशब्दवाच्यत्वान्यथा-नुपपत्तिरूपपूर्वपक्ष्यभिमतप्रमाणानुवाद इत्यर्थः । [5]'वीप्सायामव्ययीभावः' इति भावेनाऽह– **जन्मनि जन्मनीति** ।। **पुरुषत्वेनेति** ।। शरीरयुक्ततया सदा सत्वेनेत्यर्थः ।। **अधिकृतेति**-अधिकारयुक्तेत्यर्थः ।। 'भुञ्जन्' इत्यस्य 'अवन्' इत्यर्थप्रतीतिनिरासायाऽह– **भुञ्जान इति** ।। 'भुजोऽनवने' **(पा.सू.१.३.६६)** इत्युक्तात्मनेपदस्याभावः छान्दस इति भावः ।।

---

१ ह-पाठः । गुज,वे-ग्रं,। **'बहुशरीरफलानि कर्माणि'-प्र.पाठः नरहरितीर्थीयानुगुणः ।**

२ गुज,वे-ग्रं । **भावदीपानुगुणः ।** 'अर्थस्य' -प्र।

३. गुज,वे-ग्रं-'आह' इति नास्ति ।

४. गुज,वे-ग्रं । 'भोगेनैव' इति एव शब्दः अधिकः -प्र ।

५. इदं वाक्यं सो-नास्ति ।

(जीवाः स्वकर्मणा प्रतिदिनम् अनूनदशकं देहमार्जन्ते )

**भाष्यम् — तच्चोक्तम्–**

जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।
स्त्री वाऽप्यनूनदशकं देहं मानुषमार्जते ।।[१]
चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।
अतोऽवित्वा परं देवं मोक्षाशा का महामुने ।।'[२]

इति ब्राह्मे ।

---

१. (अ) इमौ कृ.म.उ.२१२,२२३.श्लोकौ ।। अत्र 'मानुषमार्जते' 'मानुषमार्जयेत्'; इति, द्वितीयश्लोके 'मोक्षाशा' 'मोक्षाया' इति; 'अतो अवित्त्वा' 'अविदित्वा' इति च पाठान्तराणि टिप्पणीतोवगम्यते ।।
(आ) वायुपुराणे - माघमासमाहात्म्ये १९-६३. 'मुनिः सुकर्मशीलोपि जीवन्नेकदिनेन वै ।
दशावराणां देहानां कारणं प्रतिपद्यते ।।'
(इ )कृ.म.२१४. आचतुर्दशमाद्वर्षात् कर्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ।।
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ।।

२. 'चतुर्दशाद्वर्षादनूनं दशकं यस्येति बहुव्रीहिः । कर्मधारयत्वे दशाधिकदेहनिषेधप्रतीत्या तत्सद्भाव-प्रमाणविरोधापत्तेः । ह्रस्वदीर्घव्यत्यासेन चतुर्दशोर्ध्वजीविनीति स्त्रीविशेषणम् । संसारश्चादिवर्जितः इति कर्मणामनादित्वोपपादनम् ।ततश्चायमर्थः- चतुर्दशाद्वर्षादूर्ध्वं जीवन् पुरुषः तथा चतुर्दशोर्ध्वजीविनी स्त्री वा । अनूनदशकं मानुषं देहमार्जते सम्पादयति । तत्र मानुषे देहे कर्माकरणमसम्भावितम् । अतो भोगेन क्षयासम्भवात् परं देवं नारायणम् अविदित्वा स्थितस्य अधिकारिणो का नाम मोक्षाशा । महामुने इति ऋषिसम्बोधनम् ।। ननु सादिभूते संसारे क्रियमाणकर्मणां बहुत्वेपि बहुकालीनभोगेन क्षयः सम्पादयितुं शक्यते । धायराशिवदित्यत उक्तम्- संसारश्चादिवर्जित इति । चो यस्मादित्यर्थे । यस्मात् संसारो अनादिः तत्र कृतानि कर्माणि न धान्यराशिवद्बहु, किन्त्वनन्तानि । अतो भोगेन क्षयासम्भावात् मोक्षाशा केति सम्बन्धः ।।' उमर्जीये ।

' चतुर्दशोर्ध्वजीवानां संसारः तत्सम्भवः क्लेशश्चानादिः । एवं सति परं सर्वोत्तमं देवं प्रकाशमानं बिम्बरूपं हरिम् अविदित्वा अनपरोक्षीकृत्य मोक्षायाः काः केत्यर्थः । ..। मोक्षशब्देन आगामिसञ्चितकर्मणः सकाशादेव मोक्षः न स्वरूपानन्दानुभवः । तस्य च प्रारब्धक्षपणानन्तरं भगवत्प्रसादैकलभ्यत्वात् । अत्रायपदेनास्यार्थस्य सङ्ग्रहः । अत्र मोक्षाया इति बहुवचनं त्रिविधाधिकारिमोक्षविवक्षयेति ज्ञातव्यम् ।। ननु आचतुर्दशाद्वर्षादित्यत्र चतुर्दशवर्षमारभ्य इति टीकाकारैर्व्याख्यातम् । अत्र चतुर्दशादूर्ध्वमित्युच्यते । तत् कथमिति चेत्- सत्यम् । चतुर्दशवर्षमारभ्य इत्यस्य चतुर्दशवर्षमारभ्य तदूर्ध्वजीवानाम् इत्यर्थाङ्गीकारे उभयोरेकार्थत्वेन न विरोध इति भावः' इति कोनेरी आचार्याः ।

( अनादिः संसारः )

**यदि सादिः स्यात् संसारः पूर्वकर्माभावादतत्प्राप्तिः । अबन्धकत्वं त्वकामेनैव भवति । तच्च वक्ष्यते– 'अनिष्टमिष्टम्'(१८-१२) इति ।।**

**प्रमेयदीपिका**

सम्भावनामात्रेणेदमुक्तं[1] न तु प्रमितमित्यत आह– [2]**तच्चोक्तमिति** ।। [3]**चतुर्दशाद्** वर्षात्। अनूनो दशको यस्येति विग्रहः । ह्रस्वदीर्घव्यत्ययेन **'चतुर्दशोर्ध्वजीविनी'** इति स्त्रिया विशेषणम् । **संसारश्च** इति कर्मणामनन्तत्वोपपादनम् । **अतः** भोगेन क्षयासम्भवात् । **अवित्त्वा** अविदित्वा । पुरुषशब्देनानादिदेहसम्बन्ध उक्तः ।। सोऽसिद्ध इत्यत आह– **यदीति** ।। **अतत्प्राप्तिः** आकस्मिकस्य संसारस्याप्राप्तिः स्यात् । अतः पुरुषत्वं सिद्धमिति ।।

ननु सन्तु प्राग्भवीयान्यनन्तकर्माणि । तथाऽपि बन्धकानि कथं प्रेक्षावता क्रियेरन्? न ह्यनन्तानि पापानि प्राक्तनानि सन्तीत्येतावताऽद्य क्रियन्त इत्यत आह– **अबन्धकत्वं त्विति**।। कर्मणां बन्धाहेतुत्वं त्वकामादिनैव भवति । न त्वकरणेन । प्रत्यवायस्यैव प्राप्तेरित्यर्थः । अकामे[4] अबन्धकत्वं भगवत्सम्मतमिति भावेनाऽऽह– **तच्चेति**।।

**भावदीपः**

**पुरुषत्वमिति** ।। पुरुषब्दितानेकदेहयुतत्वं सिद्धमित्यर्थः । **तच्चेतीति** ।।

**'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां पार्थ नतु सन्यासिनां क्वचित्** ' (१८.१२)

इत्याष्टादशेऽध्याये उक्तमिति भाष्यार्थो ज्ञेयः । तृतीयपक्षनिरासस्तु **'यज्ञार्थात् कर्मणोऽन्यत्र'**(३.९) इति श्लोके भविष्यतीति भावः ।।

**प्रमेयदीपिका**

**सङ्ग्रहस्तु** 'अकरणमसन् न सन्तं प्रत्यवायं जनयति । कथम् **'असतस्सज्जायेत'**

१. गुज,वे-ग्रं । 'मुदितं'-प्र ।
२. गुज,वे-ग्रं । 'तच ' इति -प्र ।
३. वे-ग्रं-'चतुर्दशवर्षात्' इति ।
४. भा.र.को. -'अकामेन' इत्यपि क्वचित् पाठः ।

(छा.उ.६.२.१) इति श्रुतेः' इत्यवादीत्[१]। तद् **भास्करः** प्रत्यषेधीत् । 'द्रव्यविषया श्रुतिः । गुणस्त्वसतोऽपि जायते' इति । उभावपि स्थूलदृश्वानौ । न ह्यकरणमसत् । तथा सति करणप्रसङ्गात् । किन्त्वभावः । सच भाववत् तत्त्वमेवेति कथमकरणम्? गुणं प्रति कारणत्वे च द्रव्यकारणत्वं कुतो न भवेत्? ।।

[२]'ननु चात्रोपादानत्वस्य विवक्षितत्वादकरणस्य चाभावरूपतया सत्वेऽप्यत्र विवक्षिता-पादानत्वानुपपत्तेर्न प्रत्यवायजनकत्वमित्यभिप्राय इत्यत आह -**नहीति**।।'न ह्यत्रोपादानत्वं विवक्षितम् । किन्तु निमित्तत्वमेवेत्युक्तम्[३] इत्यलम् ।।

## भावदीपः

**सङ्ग्रस्त्विति** ।। मायावादीत्यर्थः ।। **तथा सतीति** ।। कारणाभावस्यासत्वो भावप्रतियोगित्वे सतीत्यर्थः । अभावाभावस्य भावत्वनियमादिति भावः । कथमसतो द्रव्योपादानत्वम्? इत्यत आह– **नह्यत्रेति** ।।

**भाष्यम् — ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः ।**
**'निष्कामं ज्ञानपूर्वं तु[४] निवृत्तमिह चोच्यते ।**
**निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्'**
**इति मानवे[५] (म.स्मृ.१२-८९,९)।**

---

१. शाङ्करभाष्यानुवादः । तन्मूले एवमाकारकवाक्यरीतिर्नास्ति ।

२. मातृकायाम् इदवाक्यमधिकं दृश्यते । मुद्रितपुस्तकेषु नोपलभ्यते,भाष्ये प्रतीकमपि न दृश्यते ।।

३. गुज,वे-ग्रं । 'इत्यलम्' -प्र ।

४. गुज,वे-ग्रं,। 'ज्ञानपूर्वं च निवृत्तमपि' इति- प्र ।

(अ)'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते'-इति भारतवचनम् इति भाग.ता-११.१.४ ।।

(आ) अनु.व्या.३.४.४१ (पृ-६२९८) 'ज्ञानपूर्वं च' इति ।।

सुधा-'इह प्रवृत्तनिवृत्तयोर्मध्ये । अभ्येति अतिशयेनैति । आनन्दोद्रेकसाहित्येन मुक्तो भवतीत्यर्थः ।। एतत्स्मृतिवाक्यार्थविवरणाय वाक्यान्तरं पठति -शुभेनेति'।।

अनु.व्या.- 'शुभेनानन्दवृद्धिः स्याद् ह्रासश्चैवाशुभेन हि । ज्ञानिनोऽपि यतस्तेन कर्तव्यं शुभमेव तैः ।।' सुधा-'ह्रासश्चानन्दस्य । शुभमेव कर्तव्यमशुभं त्याज्यं च । अनेन विधिद्भावोऽपि सिद्धः । ततो अधिकारश्च ।।' इति

५. मनुस्मृतौ किञ्चिद्व्यस्तोऽयं श्लोकः-(म.स्मृ.१२-८९,९..)

**अतस्तत्साम्यादकरणेऽपि भवतीत्यत आह– न चेति ।।**

### प्रमेयदीपिका

'नच सन्न्यसनादेव' इति पुनरुक्तम्[१] । अत्रापि कर्मसन्न्यसनस्य मोक्षसाधनत्वोक्तेरित्यत आह – **नन्विति** ।। 'निष्कामं ज्ञानपूर्वं च' इति मानवे वाक्ये तावन्निष्कामकर्मणा मोक्षः स्मृतः । स चोपपत्त्यन्तरादर्शनान्निष्कामकर्मणः फलाभावाद् इत्येव तत्रोपपत्तिरङ्गीकार्या । यत एवं फलाभावस्यैव प्राधान्यम्, अतोऽकरणेऽपि फलाभावस्य[२] साम्यान्मोक्षो भवत्येव। यत् प्राग्भवीयकर्मफलमुक्तं निष्कामकर्मकरणपक्षेऽपि तत्समानम् । न च विनिगमने कारणाभावः। आयासाभावस्य सत्त्वात् । नच प्रत्यवायप्राप्तिः । अमुमुक्षुविषयत्वसम्भवात् । अतो न कर्माणि करोमीति भावः ।।

### भावदीपः

**फलमुक्तमिति** ।। संसारानुवृत्तिरूपमित्यर्थः ।। **तत्समानमिति** ।। इदानीं निष्कामकर्मकरणेऽपि संसारानुवृत्तिः स्यादेव । प्राग्भवीयकर्मणामनुवृत्तेरिति भावः ।। **नच विनिगमनेति** ।। 'कर्माकरणनिष्कामकर्मकरणयोर्मध्ये कर्माकरणोपादनम्' इत्यत्र कारणाभावो न चेत्यर्थः।।

### (काम्यकर्मपरित्यागः सन्न्यासः )

**भाष्यम् — सन्न्यासः काम्यकर्मपरित्यागः । 'काम्यानां कर्मणाम्'**(१८.२) **इति वक्ष्यमाणत्वात् ।। अकामकर्मणाम् अन्तःकरणशुद्ध्या ज्ञानात् मोक्षो भवति । तच्चोक्तम्-**

**'कर्मभिश्शुद्धसत्वस्य वैराग्यं जायते हृदि'**

**इति भागवते[३] ।**

---

'इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते । निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ।।
(अकामोपहतं नित्यं निवृत्तं च विधीयते । कामतस्तु कृतं कर्म प्रवृत्तमुपदिश्यते ।।-इदं पाठान्तरम् ।)
प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम् । निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ।।'

१. अत्र एकस्यां मातृकायां फलमुक्तम् इति पठ्यते । तदेव भावदीपानुसारीति सम्भाव्यते ।
२ गुज,वे-ग्रं,। एवकारः अधिकः- प्र ।
३. अयं भागवते नोपलभ्यते ।

### प्रमेयदीपिका

अनेन कथमस्य परिहारः? इत्यत आह– **सन्न्यास** इति ।। तेन च निष्कामकर्मकरणमुपलक्ष्यत इति भावः ।। निष्कामकर्मकरणान्मोक्षं न प्राप्नोति [1]इत्यतो न तत्प्रतिबन्दीग्रहणं युक्तमित्यनेनोक्तम् । तथाच स्मृतिविरोध इत्यतस्स्मृतेरभिप्रायमाह– **अकामेति** ।। 'सकाशात्' इति शेषः । 'पुंसाम्' इति वा । [2]अकामकर्मभिरन्तःकरणशुद्धिद्वारा ज्ञानं जायत इत्येतत् कुतः? इत्यत आह – **तच्चोक्तमिति**[3] ।।

### भावदीपः

प्रकृतोपयोगायाह- **तेन चेति** ।। काम्यकर्मत्यागोक्तकर्मपरेण **'सन्न्यसनादेव'** इत्येतेनेत्यर्थः ।। **स्मृतीति** ।। मानवस्मृतीत्यर्थः ।।

### ( विरक्तानामेव भगवद्-ज्ञानम् )

**भाष्यम् —विरक्तानामेव च ज्ञानमुक्तम् -**

**'न तस्य तत्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् ।**
**स्वप्ने निरुक्त्या गृहमे(धि)धसौख्यं न [4]तस्य हेयानुमितं स्वयं स्यात्'**

**(भाग.५.११.३) इति ।।**

**न तु फलाभावात् । कर्माभावात् । अतो न कर्मत्याग एव मोक्षसाधनम् ।**

### प्रमेयदीपिका

नन्वत्र वैराग्यं जायत इत्युच्यते, न तु ज्ञानमिति । तत्राह– **विरक्तानामेवेति** ।। प्रागपि वैराग्यद्वारेत्यभिमतमिति भावः । तथाऽपि कथं विरोधपरिहारः? गीतायामकामकर्मणां मोक्षसाधनत्वाभावावधारणादित्यतस्तदभिप्रायमाह– **न त्विति** ।। फलाभावोपपत्तिकं कर्मणां[5] मोक्षसाधनत्वं निषिध्यते । नतु सर्वथाऽपीत्यर्थः । प्रतिबन्दीं मोचयति– **कर्माभावादिति**। अतः कर्माभावान्न मोक्ष इत्यर्थः ।। श्लोकतात्पर्यमुपसंहरति– **अत** इति ।।

१. गुज । अन्यत्र इति नास्ति ।
२. 'अकामकर्मणाम्'– श्रीनि.टि ।
३. गुज,वे-ग्रं । 'तच्चेति' -प्र ।
४. गुज,वे-ग्रं । 'गृहमेध','यस्य' इतिच पां- यादु । अयं श्लोकः २-४४ श्लोके व्याख्यातः टीकाकारैः ।
५. वे-ग्रं । गुज,प्र-'कर्मणाम्' इति नास्ति ।

### भावदीपः

गीतायामिति ।। **'सन्न्यसनादेव'** इत्यस्याकामकर्मोपलक्षकत्वोक्तेः **'अकामकर्मणाम्'** इत्युक्तम् ।।

### ( यत्याश्रमे ईश्वरे मनःसमाधानं भवति )

**भाष्यम् — यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषणार्थश्च । अप्रयतत्वमेव हि प्रायो गृहस्थादीनाम्, इतरकर्मोद्योगात् । अप्रयतानां च न ज्ञानम् । तथा हि श्रुतिः - 'नाशान्तो नासमाहितः'[१](कठ.१.२.२४) इति ।**

### प्रमेयदीपिका

ननु यत्याश्रमो मोक्षसाधनत्वेन श्रुत्यादिप्रसिद्धः । तत्र चेयमेवोपपत्तिर्यत् तद्धर्माणां फलाभावः । अतस्तत्साम्यादकरणेऽपि मोक्षो भवतीत्येतच्छङ्कानिरासार्थं चोक्तम् -**'नच सन्न्यसनादेव'** इति ।। एवं तर्हि श्रुत्यादिविरोध इत्यत आह– **यत्याश्रमस्त्विति** ।। **प्रायत्यं** = प्रयतत्वम् । ईश्वरे मनःसमाधानम् । एतद्द्वारद्वयेन मोक्षसाधनत्वं श्रुत्यादेरभिप्रेतम्। फलाभावोपपत्तिकं तु गीतायां निवारितम्, अतो न विरोध इति भावः ।।

आश्रमान्तरेऽपि प्रायत्यसम्भवात् किं तदर्थं यत्याश्रमेण? इत्यत आह– **अप्रयतत्वमेवेति**।। इतरकर्मसु यजनादिषु । प्रायत्यं कथं मोक्षसाधनम्? इत्यतो व्यतिरेकमुखेन उपपादयति– **अप्रयतानां चेति** ।। 'प्रज्ञानेनैनमाप्नुयात्' (कठ १.२.२४) इति श्रुतिशेषः । **अशान्तः** अभगवन्निष्ठः । **असमाहितः** तत्र चित्तसमाधानरहितः[२] ।।

### ( भगवतो यत्याश्रमे महांस्तोषः )

**भाष्यम् — महांश्च यत्याश्रमे भगवतस्तोषः। तथा ह्याह–**

**' यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषिणीम्'**

**इति नारायणाष्टाक्षरकल्पे ।**

---

१. 'अशान्तः-श्रवणमननध्यानैर्भगवन्निष्ठारहितः । असमाहितः- यथा वस्तु तथा ज्ञानहीनः'

इति राघवेन्द्रीयखण्डार्थे ।

२. गुज,वे-ग्रं,। हीनः इति प्र।

**आधिकारिकास्तु तत्स्था एव प्रायत्ये समर्थाः । स एव च महान् भगवतस्तोषः ।**

( देवादीनां भोगोपि भगवत्तोषार्थः )

**तच्चोक्तम्– 'देवादीनामादिराज्ञां महोद्योगेऽपि नो मनः[1]।**
**विष्णोश्चलति तद्भोगोऽप्यतीव हरितोषणम् ।।'**
**इति पाद्मे ।। ४ ।।**

## प्रमेयदीपिका

भगवत्तोषणस्य आश्रमान्तरेण सम्भवात् किं यत्याश्रमेण? इत्यत आह– **महांश्चेति**।। **तुरीयं** परमहंसाख्यम् । वाक्यशेषेणान्वयः । यत्याश्रम एव चेत् प्रायत्यं **महान् भगवतस्तोषश्च**, तर्हि तद्रहितानामाधिकारिकाणां तदुभयाभाव इत्यत आह– **आधिकारिकास्त्विति** ।। **तत्स्थाः** अधिकारस्थाः । **स एव** अधिकार एव । 'तुष्यत्यनेन' इति तोषः । समासान्तविधेरनित्यत्वात् '**आदिराज्ञाम्**' इति युक्तम् । यथोक्तं महाभाष्ये–

'शुच्याम्पि तटाकानि'[2] इति ।। ४ ।।

## भावदीपः

**वाक्यशेषेणेति** ।। नारायणाष्टाक्षरकल्पगतवाक्यशेषेणेत्यर्थः ।। 'राजाहः सखिभ्यष्टच्' (**पा.सू. ५.४.९१**) इति टच्प्रत्यये सति 'आदिराजानाम्'[3] इति भाव्यमित्यत आह– **समासान्तेति** ।। **भाष्य इति** ।। व्याकरणभाष्ये च 'शुच्यपानि' इति वक्तव्यम् । 'ऋक्-पूरब्धूःपथामानक्षे' (**पा.सू.५.४.७४**) इति समासान्तविधानात् । तथाऽपि शुच्यम्पीत्युक्त्या तद्विधेरनित्यत्वं ज्ञायत इत्यर्थः ।। ४ ।।

( कर्माणि न सर्वात्मना त्यक्तुं शक्यानि )

**नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।। ५ ।।**

---

१. गुज,वे-ग्रं -'महद्योगोऽपि भोगिनः' इति पाठः ।
२. श्रीनि-टि । 'यथा भाष्ये' इति, 'शुच्याम्पि' इति च -भा.र.को पाठः ।
३. का-मातृकायामत्र छिन्नम् ।

**भाष्यम् — न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह– न हीति ।। ५ ।।**

**प्रमेयदीपिका**

ज्ञानरहितात् कर्मत्यागरूपाद् यत्याश्रमात् '**सिद्धिं न समधिगच्छति**'(३.४) इति किल पूर्वमुक्तम् । तत्र 'हेत्वाकाङ्क्षायां 'न हि कश्चित्' इत्युच्यते' इति 'व्याख्यानमसत् इति भावेन श्लोकतात्पर्यमाह– **न त्विति** ।। न ह्यत्र ज्ञानस्यावश्यकत्वे किञ्चिदुच्यते। नापि यज्ञादिकर्माकरणस्यासम्भवोऽभिधीयते । येन प्रकृतसङ्गतिस्स्यात् । किन्तु शरीरयात्राद्यर्थानां कर्मणामपरिहार्यत्वम् । अतो नेदं व्याख्यानम् । अपि तर्हि '**कर्मणा बद्ध्यते जन्तुः**' **(म.भा.१२.२४१.७)**[२] इति स्मृतिमाश्रित्य यस्तृतीयः पक्षस्तमाशङ्क्य '**यज्ञार्थात्**'(३.९) इति स्मृतेरर्थसङ्कोचं वक्ष्यति । तत्र कुतः स्मृतेरर्थसङ्कोचः? इत्याकाङ्क्षा स्यात् । तामपाकर्तुमुपोद्घात-प्रक्रियान्यायेन [३]कर्मशब्दस्तावदसङ्कुचितार्थः परेणाप्यङ्गीकर्तुमशक्य इति प्रतिपादयितुं '**कर्माणि सर्वात्मना त्यक्तुं नैव शक्यानि**' इति अनेन आह इति भावः ।। ५ ।।

**भावदीपः**

अपव्याख्यां स्वयं निराह–**न ह्यत्रेति**[४]।। **प्रकृतेति** ।। त्वदभिप्रेतपूर्वश्लोकार्थसङ्गतिरित्यर्थः ।। **तृतीयः पक्ष इति** ।। ज्ञानं तु मोक्षसाधनं भवत्येव, कर्माणि प्रतिबन्धकानीति प्राग्विकल्पितः पक्ष इत्यर्थः । आद्यस्य द्वेधा विकल्पितत्वाद् अयं द्वितीयः तृतीयत्वेनोक्तः ।। ५।।

**( मनसा विषयचिन्तने मिथ्याचारः )**

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ।। ६ ।।**
**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ।। ७ ।।**

---

१. शाङ्करभाष्ये.प्रथमभागे पृ-२७८।

२. एतत्स्मृतिमूला श्रुतिः - **सन्न्यासोपनिषत्**,२-२१।

३. गुज,श्रीनि.। '**उपोद्घातन्यायेन**' वे-ग्रं ,प्र.पाठः ।

४. '**न आयस्तत्रेति**' कां मातृकायां प्रतीकग्रहणम् । तच्च टीकायां नोपलभ्यते ।

**भाष्यम् — तथाऽपि शक्तितस्त्यागः कार्य इत्याह – कर्मेन्द्रियाणीति ।।** मन एव प्रयोजकमिति दर्शयितुम् अन्वयव्यतिरेकावाह – **मनसा स्मरन् मनसा नियम्येति ।।**

### प्रमेयदीपिका

तथाऽपि 'कर्मेन्द्रियाणि' इत्यसङ्गतम् । तृतीयपक्षस्थेन मनसेन्द्रियार्थस्मरणस्य अनुक्तत्वादित्यत आह– **तथाऽपीति** ।। यद्यपि शरीरयात्राद्यर्थानि कर्माणि त्यक्तुम् अशक्यानि । तथाऽपि **शक्तितः** शक्यत्वाद् यज्ञादिकर्मणां **त्यागः कार्यः** ।।

### (मन एव बन्धमोक्षयोः प्रयोजकम् )

एतदुक्तं भवति । नाशक्यविषये शास्त्रप्रवृत्तिरित्यतस्तद्व्यतिरिक्त[1]कर्मार्थः स्मृतौ कर्मशब्दो भविष्यतीति । एतच्छङ्कापरिहारः श्लोके न दृश्यते । द्वितीयश्लोकश्च व्यर्थ इत्यत आह– **मन एवेति** ।। [2]**मन** एव बन्धमोक्षयोः **प्रयोजकम्** । न कर्मकरणाकरणे । अतस्तन्निग्रह एव कार्यो न कर्मत्याग इति ज्ञापयितुमित्यर्थः । अनिगृहीतत्वे मनसो बन्धापेक्षयाऽऽद्योऽन्वयः । द्वितीयो व्यतिरेकः । मोक्षापेक्षया तु व्यत्यास इति ।।

### भावदीपः

**इन्द्रियार्थस्मरणस्येति** ।। मोक्षप्रतिबन्धकत्वेनेति योज्यम् ।। **स्मृताविति** ।। कर्मणो बन्धकत्वोक्त्या तत्त्यागपरायां '**कर्मणा बद्ध्यते जन्तुः**' इत्यस्यां स्मृतौ कर्मशब्दो शक्यकर्म-व्यतिरिक्तकर्मपर इत्यर्थः ।। **आद्य इति** ।। '**कर्मेन्द्रियाणि**' इति श्लोकः, द्वितीयः '**यस्त्वि-न्द्रियाणि**' इति श्लोकः ।। **व्यत्यास इति** ।। द्वितीयोऽन्वयः । आद्यो व्यतिरेक इत्यर्थः ।।

**भाष्यम् — कर्मयोगं स्ववर्णाश्रमोचितम् । न तु गृहस्थकर्मैवेति नियमः । सन्न्यासादिविधानात् । सामान्यवचनाच्च ।। ६ ।। ७ ।।**

### प्रमेयदीपिका

एतेन स्मरणस्य मानसत्वाव्यभिचारात् 'मनसा' इति व्यर्थमित्यपि[3] परास्तम् ।।

---

१. गुज,वे-ग्रं-'तदतिरिक्त'।

२. 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति भागवते एकादशस्कन्धे ।

३. गुज,वे-ग्रं,। 'मिति'-प्र ।

**'कर्मयोगेन योगिनाम्'** (३.३) इत्यत्र कर्मयोगशब्दस्य गृहस्थादिकर्मविषयत्वेन प्रकृतत्वादत्रापि तद्विषयत्वप्रतीतिः स्यात् । तन्निरासार्थमाह– **कर्मयोगमिति** ।। **गृहस्थकर्मैव** वनस्थकर्मैव ब्रह्मचारिकर्मैव **इति नियमः** न विवक्षित इत्यर्थः ।।

**'सन्न्यासादि'** इत्यादिपदेन यो नियम्यते तद्व्यतिरिक्तग्रहणम् ।।

कर्मयोगशब्दस्य सामान्यवाचित्वाच्च । पूर्वं **'ज्ञानयोगेन साङ्ख्यानाम्'** (३.३) इति यत्याश्रमकर्मणः पृथग् उक्तत्वात् सामान्यशब्दोऽपि विशेषे [1]व्यवस्थापितः । न चात्र तथाविधं किञ्चिदस्तीति भावः ।। ६ - ७ ।।

### भावदीपः

**एतेनेति** ।। मनस एव प्रयोजकत्वोक्तिपरत्वकथनेनेत्यर्थः ।। **'मनसा'** इत्यनुक्तौ तस्यालाभादिति भावः ।। भाष्यमुपलक्षणं मत्वाऽऽह– **गृहस्थकर्मैवेत्यादि** ।। **'कर्मयोगेन योगिनाम्'** (३.३) इत्याश्रम[2]त्रयविहितकर्मणामपि इह[3] प्रकृतत्वादेवं व्याख्या कार्येति भावः ।। **'न विवक्षितः'** इत्यनन्तरं 'किन्तु आश्रमचतुष्टयधर्मोऽपि विवक्षितः' इति योज्यम् ।।

नन्वेवमुत्तरवाक्ये सन्न्यासविधानादित्येव वाच्यम्, आदिपदं न युक्तमित्यत आह– **सन्न्यासादीत्यादिपदेनेति** ।। यदा न गृहस्थकर्मैवेति नियम[4] इत्यर्थः तदा वनस्थत्वब्रह्मचारित्वयोर्विधानादित्यस्य ग्रहणम्, यदा न वनस्थकर्मैवेति नियमः इत्यर्थः[5] तदा गृहस्थब्रह्मचर्ययोर्ग्रहणम्, यदा तु न ब्रह्मचारिकर्मैवेति नियम इति भाष्यार्थस्तदा गृहस्थवनस्थत्वयोर्ग्रहणमित्यर्थः ।। **सामान्येति** ।। आश्रमचतुष्टयसर्ववर्णकर्मयोगसाधारणवचनत्वादित्यर्थः ।। कथं तर्हि **'कर्मयोगेन योगिनाम्'** इत्यत्र कर्मयोगपदस्याश्रमत्रयकर्मपरत्वोक्तिः? इत्यत आह – **पूर्वमिति** ।। ६-७ ।।

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ।। ८ ।।**

---

१. बे, गुज,वे-ग्रं,। प्र-'व्यवस्थितः' ।
२. 'त्य...मत्रय विकर्मणामपि विकृत'– कां पाठे तृटितमत्र ।
३. सो मातृकायामेव 'इह' इति ।
४. इत आरभ्य **'पूर्वमिति'** इति पर्यन्तं कां-मातृकायां नास्ति । मं मातृकायामेव ।
५. सो मातृकायामेव 'इत्यर्थः' इति ।

**भाष्यम् —** अतो नियतं वर्णाश्रमोचितं कर्म कुरु ।। ८ ।।

### प्रमेयदीपिका

उत्तरश्लोकपर्यालोचनया चैवमिति[१] भावेन सङ्गतिं सूचयन् व्याचष्टे– **अत** इति ।। अतश्शब्दपरामर्श्यं **'कर्म ज्यायः'** इत्यादिनैवोच्यते ।। ८ ।।

### भावदीपः

[२]**एवमवेति** ।। कर्मयोगपदं सर्ववर्णसर्वाश्रमकर्मपरमेवेति भावेनेत्यर्थः ।। **उच्यत इति**।। गीतायामुच्यत इत्यर्थः । अतो न व्याख्यायत इत्येवकारार्थः ।। एतेन प्रागुपपादित-कर्मकरणावश्यकत्वस्य 'अतः' इति हेतुकरणात् सङ्गतिः कार्यकारणरूपा सूचितेति भावः ।। ८ ।।

**( फलेच्छारहितं कर्म न बन्धकम् )**

**यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ।। ९ ।।**[३]

**भाष्यम् —** 'कर्मणा बद्ध्यते जन्तुः'[४] (म.भा.१२.२४१.७)

इति कर्म बन्धकं स्मृतमित्यत आह – **यज्ञार्थादिति** ।। कर्मबन्धनं यस्य लोकस्य स **कर्मबन्धनः** ।।

### प्रमेयदीपिका

इदानीं [५]तृतीयपक्षमाशङ्क्य तत्परिहाराय श्लोकमवतारयति– **कर्मणेति** ।। **बन्धकं** मोक्षस्य प्रतिबन्धकम् । 'अतो न करोमि' इति शेषः । तत्पुरुषत्वभ्रान्तिनिरासायाह– **कर्मेति** ।। तत्पुरुषत्वेऽसङ्गतिः स्यादिति भावः ।।

१. गुज,वे-ग्रं,-'चैवमेवेति'।

२. इमानि कां+सोमातृकायोर्न सन्ति । मं-मातृकायाम् । उत्तरवाक्यमेकं भा.र.कोशे उदाहृतं च ।

३ वि.त.नि.टी.टिप्पणे व्यासतत्वज्ञीये - 'वेदोपबृंहणार्थमुदितायां गीतायां 'यज्ञार्थात्..समाचर' इति भगवदर्पणबुद्ध्या निष्कामकर्मणो विधानादिति ' (मा.रा.सं.स.प्रकाशनम्.पृ-६२७)

४. 'कर्मणा बद्ध्यते जन्तुः विद्यया च विमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः' इति ब्र.सू. भाष्ये अवाधाधिकरणे ३.३.३० पूर्णपाठोल्लेखः ।

५ 'तृतीयपक्षम् '-प्र । 'तृतीयं पक्षं' गुज,वे-ग्रं भावदीपाननुगुणः ।

## भावदीपः

'तृतीयपक्षमिति ।। 'कर्म बन्धकम्' इति प्राग्विकल्पितं तृतीयपक्षमित्यर्थः ।।

( अवैष्णवयागः बन्धकः )

**भाष्यम् —**[2]'**यज्ञो विष्णुः । यज्ञार्थं सङ्गरहितं कर्म न बन्धकमित्यर्थः ।** '**मुक्तसङ्गः**' **इति विशेषणात् ।।**

'**कामान् यः कामयते**' (मुं.उ. ३.२.२) इति श्रुतेश्च ।।

'**अनिष्टमिष्टम्**'(१८.१२) इति वक्ष्यमाणत्वाच्च ।

'**एतान्यपि तु कर्माणि**' (१८.६) इति च ।

'**तस्मान्नेष्टियाजुकः स्यात्**' (बृ.उ. ३.६.३)[1] इति च ।।

## प्रमेयदीपिका

यज्ञशब्दस्य यागार्थत्वप्रतीति[4]मपाकर्तुमाह– यज्ञ इति ।। अवैष्णवयागस्यापि बन्धकत्वादिति भावः ।। तदर्थम् इत्युत्तरवाक्यस्यासङ्गतिपरिहारायार्थात् सिद्धं पूर्ववाक्यार्थमाह– **यज्ञार्थमिति** ।। '**सङ्गरहितम्**' इत्यनुक्तं कस्मादुक्तम्? इत्यत आह– **मुक्तेति** ।। **इष्टियाजुकः** फलेच्छया यष्टा ।।

## भावदीपः

असङ्गतिपरिहारायेति ।। यज्ञार्थकर्मतो अन्यकर्मणो बन्धकत्वे पूर्वार्धेनोक्ते सत्युत्तरार्धे तदर्थं यज्ञार्थकर्मान्यकर्म न कार्यमित्युक्तिरेव सङ्गता । ननु '**कर्म समाचर**' इत्युक्तिः । एवमुक्तौ तु 'यज्ञार्थं कर्म न[5] बन्धकम्' इत्येव पूर्वार्धोक्तिः सङ्गता इति हेतोरसङ्गतिपरिहारार्था' इत्युक्तम् ।।

---

१. इदं कां -मातृकायां नास्ति । मं -मातृकायामस्ति । उत्तरवाक्यं भा.र.कोशे उदाहृतं च ।

२. शाङ्करभाष्येपि 'यज्ञो वै विष्णुः' इति श्रुतेर्यज्ञ ईश्वरः ' भाग-१-पृ-२८६ ।

३. 'तस्मात् हुतप्रहुतयोर्देवान्नत्वाद् यज्ञमनुतिष्ठन् पुमान् नेष्टियाजुकः स्यात् फलेच्छया यज्ञकारी न भवेत् ' इति राघवेन्द्रीयखण्डार्थे ।

४. रामानुजभाष्ये पृ-२८५। अत्र रा.भा.टिप्पण्यां वेङ्कटनाथीये- शाङ्करभाष्यमनूद्य तत्रास्वारस्याद् एवं व्याख्या कृता इति सङ्गतिः प्रदर्शिता ।

५. सो पाठ एव नञ् पठ्यते । अवश्यम्भावि चायम् ।

भाष्ये '**इति श्रुतेश्च**'[१] इत्यस्य

**'स कामभिर्जायते तत्र तत्र'**

इति श्रुतिविशेषे काम्यकर्मणो बन्धकत्वोक्तेरित्यर्थः ॥

[२]**'भवत्यत्यागिनां पार्थ नतु सन्न्यासिनाम्'**

इति कामिनो बन्धकम्, अकामिनो नेत्युक्तेरित्यर्थः ॥ **'अनिष्टमिष्टम्'** इति **वक्ष्यमाणत्वाच्चेति**[३] ॥

**'एतान्यपि तु कर्माणि'**(१८.६) इति वाक्यशेषे

**'सङ्गं त्यक्त्वा धनञ्जय । कर्तव्यानि'**

इत्यष्टादशे वक्ष्यमाणत्वाच्चेत्यर्थः ॥

**भाष्यम् — विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते ॥ ९ ॥**

**प्रमेयदीपिका**

ननु **'कर्मणा बद्ध्यते जन्तुः'** इत्यपि विशेषवचनम् । अविद्यादीनामनेकेषां बन्धकत्वेन **'अविद्यादिभिः'** इति सामान्यस्यानुपात्तत्वात् । गीतावाक्यं **'कर्म न बन्धकम्'** इतीदमपि विशेषवचनम् । तत्कथं तत्परिहारायावतार्य व्याख्यातम्? इत्यत आह– **विशेषेति** ॥

यद्यप्युक्तविधया द्वयोर्विशेषवचनत्वं समम् । तथाऽपि गीतावाक्ये **'यज्ञार्थात्'** इत्यादि विशेषणमुच्यते[४]। अतस्तदपेक्षया तत् सामान्यवचनमेव । अतो युक्तमेतद् व्याख्यानमिति भावः ॥

**( कर्मस्वरूपं न त्याज्यम् )**

अयमत्र प्रत्युत्तरक्रमः[५] । **'कर्मणा बद्ध्यते'** इति वाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः।

---

१. भाष्ये 'इति श्रुतेश्च' इति पठ्यते । परन्तु मातृकयोः 'श्रुत्या' इति ।

२. इदं कां, सोमातृकायोरस्ति । मं -मातृकायां नास्ति । अत्रेयमधिकपङ्क्तिरेका 'यस्यानिष्टम्' इति वाक्यशेषे 'सङ्गं त्यक्त्वा धनञ्जय । कर्तव्यानि' इत्यष्टादशे अध्याये वक्ष्यमाणत्वाच्चेत्यर्थः' पठ्यते । अन्वयो न स्पष्टः ।

३. भाष्यस्थप्रतीकमिदम् । इदं व्याख्यानं केवलं श्रीराघवेन्द्रतीर्थैरेव कृतम् । नान्यटिप्पणीकारैः ।

४. गुज ,वे-ग्रं । 'मतिरिच्यते' -प्र ।

५. गुज, वे-ग्रं, इतिशब्दो अधिकः पठ्यते ।

तस्यावैष्णवकाम्यकर्मविषयत्वात् । कुतः सङ्कोचः? इति चेत् । परेणापि परिस्पन्दमात्रस्य त्यक्तुमशक्यत्वेनासङ्कुचितार्थतायाः स्वीकर्तुमशक्यत्वात् । तर्ह्यत एव बाधकाच्छरीरयात्रार्थकर्म-व्यतिरिक्तविषयत्वं कल्प्यत इति चेन्न । वैयर्थ्यात् । एवमपि मनोव्यापारस्य[१] अल्पकत्वेन प्रतिबन्धकाभावो न सिद्ध्यति । तस्यैवान्वयव्यतिरेकाभ्यां प्रयोजकत्वावधारणात् । बाधकात् सङ्कोचमङ्गीकुर्वतां चायमपि सङ्कोचोऽङ्गीकार्यः । विधानसामर्थ्याद्युद्धादीनामपि तत्तद्वर्णा-श्रमोचितत्वात् ।।

नच विधानस्यामुमुक्षुविषयत्वम् । कल्पकाभावात् । न चेदमेव वाक्यं कल्पकम् । तस्य अवैष्णवत्वादिधर्मत्यागेन चरितार्थत्वात् । धर्मिपरित्यागाद्धर्ममात्रपरित्यागस्य ज्यायस्त्वात् । अतो न कर्मस्वरूपं त्याज्यमिति ।। ९ ।।

### भावदीपः

विशेषवचनत्वं व्यनक्ति – **अविद्यादीनामिति** ।। इदमपि गीतावाक्यमित्यन्वयः । 'कर्म न बन्धकम्' इति तु पूर्वार्धाभिप्रेतानुवादः ।। '**नहि कश्चित्**'(३.५) इति श्लोकचतुष्टयस्य '**यज्ञार्थात्**' इत्येतदुपोद्घातत्वमुक्तम् । तत्कथम्? इत्यतो '**न हि**' इत्यादिश्लोकचतुष्टयस्य '**यज्ञार्थात्**' इत्येतदुपयुक्तार्थतां व्यक्तीकर्तुमाह – **अयमत्र प्रत्युत्तरक्रम** इति ।। '**यज्ञार्थात्**' इत्यस्याभिप्रायं तावदाह– **कर्मणेत्यादिना** ।। '**न हि कश्चित्**' (३.५) इति श्लोकतात्पर्यमाह– **परेणापीति** ।। **कल्प्यत इति** ।। '**कर्मणा**' इति स्मृतेरिंति योज्यम् ।। वैय्यर्थ्यमेव व्यनक्ति– **एवमपीति** ।। उक्तार्थकत्वकल्पनेऽपीत्यर्थः । यद्वा देहयात्रार्थं कर्मान्यकर्मपरत्वकल्पनया तत्स्मृतिबलेन देहयात्रार्थकर्मान्यकर्मत्यागेऽपि इत्यर्थः ।। **प्रतिबन्धकेति** ।। 'मोक्षस्य' इति योज्यम् । कुतः? इत्यत आह– **कर्मेन्द्रियाणीति** ।। श्लोक द्वयतात्पर्यमाह– **तस्यैवेति** ।। मनो-व्यापारस्यैवेत्यर्थः ।। कुतः? इत्यतो '**नियतम्**'(३.८) इति श्लोकतात्पर्यमाह– **विधानेति** ।। **धर्ममात्रेति** ।। अवैष्णवत्वकाम्यत्वरूपकर्मनिष्ठधर्ममात्रेत्यर्थः ।। ९ ।।

**( वर्णाश्रमोचितकर्मकर्तव्यत्वे अर्थवादरूपप्रमाणम् )**

**सह यज्ञाः[२] प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।। १० ।।**

१. वे, गुज, वे-ग्रं । प्र-'अत्यक्तत्वेन '।
२. '**सह यज्ञैः प्रजाः**' इति रामानुजीयपाठः ।

**देवान् भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

**भाष्यम् —** अत्रार्थवादमाह– **सहयज्ञा** इति ॥ १०-११ ॥

**प्रमेयदीपिका**

**'सह यज्ञाः'** इत्यादेर्न प्रकृते[१] सङ्गतिर्दृश्यते । अत आह – **अत्रे**ति ॥ वर्णाश्रमोचितस्य कर्मणः सर्वथा कर्तव्यत्वे । [२]स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः ॥ १० -११ ॥

**भावदीपः**

**'अत्र'** इत्यस्यार्थः **'वर्ण'** इत्यादि ॥ **स्तुतिरिति** ॥ गुणिनिष्ठगुणोक्तिः **स्तुतिः** । दोषोक्तिः **निन्दा** । एककर्तृकचरितानुवादः **परकृतिः** । बहुकर्तृकचरितानुवादः **पुराकल्पः**। **'सह'** इत्यादि श्लोकचतुष्टये[३] **'पुरोवाच प्रजापतिः'** इत्येककर्तृकचरितानुवादस्य, आद्यश्लोकद्वयेन गुणकीर्तनस्य[४], **'इष्टान्'** इत्यादिश्लोकद्वयेन बहुकर्तृकचरितानुवादस्य दोषकीर्तनस्य च सत्वेन चतुर्णामप्युक्तिः ॥ १०-११ ॥

**इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**
**यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

( जगच्चक्रस्वरूपम् )

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**

---

१. गुज,वे-ग्रं,बे । 'प्रकृतेन'-प्र ।

२. 'उपक्रमोपसंहार' इति **प्रमाणलक्षणवाक्यव्याख्याने -टीका** 'स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः' इति । **भावदीपः** - 'स्तुतिः गुणकीर्तनम् । दोषकीर्तनं निन्दा । एककर्तृकोपाख्यानं परकृतिः । बहुकर्तृकोपाख्यानं पुराकल्पः' ॥

३. **'प्रजापतिरुवाच'**– इति का. मं-मातृकयोः पाठः ।

४. 'गुणकीर्तन, स ... निष्ठां 'इति तृटितं कां-मातृकायाम् ।

**यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

**भाष्यम्** — हेत्वन्तरमाह– **अन्नादिति** ।। **यज्ञः** पर्जन्यान्नत्वात् तत्कारणमुच्यते। पूर्वयज्ञविवक्षायां[1] चक्रप्रवेशो न भवति । तद्धि आपाद्यं कर्मविधये । नतु साम्यमात्रेणेदानीं कार्यम् ।।

**प्रमेयदीपिका**

'**अन्नात्**' इत्यादेः सङ्गतिमाह– **हेत्वन्तरमिति** ।। 'अत्र' इत्यनुवर्तते । अत्र पर्जन्यो मेघ आदित्यश्च विवक्षितौ । तत्रादित्यस्य पूर्वसिद्धस्य कथं 'यज्ञाद् भवति पर्जन्यः' इति यज्ञः कारणत्वेनोच्यते? इत्यत आह– **यज्ञ** इति ।। यद्यपि '**यज्ञो देवानामुद्दिश्य द्रव्यपरित्यागः**' इति वक्ष्यति । तथाऽप्यत्र परित्यज्यमानं द्रव्यं गृह्यते । तस्य **पर्जन्यान्नत्वात्** पर्जन्योपभोग्यत्वात् । उपभुक्तेन च तस्य बलाद्युपचयाद्[2] यज्ञः, तस्य पर्जन्यस्य कारणमुच्यते ।।

ननु पर्जन्यो देवतात्मा येन यज्ञेन पर्जन्यत्वं प्राप्तः स यज्ञो विवक्षितोऽत्रास्तु । तथासति यज्ञात् पर्जन्योद्भवो मुख्य एव सम्पत्स्यत इति । नेत्याह– **पूर्वेति** ।। तस्य पर्जन्यपदप्राप्तिहेतोः । 'यज्ञस्य' इति शेषः ।।

ननु तदा चक्रं प्रवृत्तमेव । अतः कथं पूर्वयज्ञस्य चक्राप्रवेशः? इत्यत आह– **तद्धीति**।। **तत्** चक्रमापाद्यं ह्यत्र विवक्षितम् । नतु प्रागापादितम् । कुतः? कर्मविधये ह्येतदुच्यते । यदि विहितं कर्म करिष्यसि तर्हि[3] जगच्चक्रप्रवृत्तिर्भविष्यति । अन्यथा तद्विघातः । अतस्त्वया कर्म कर्तव्यमिति । कर्मविध्युपयोगिता चापाद्यस्यैव, न त्वापादितस्य । आपाद्ये च यज्ञव्यक्तिविशेषस्य पर्जन्यपदप्राप्तिहेतोर्न प्रवेश इत्यर्थः ।।

प्राक् पर्जन्येन कर्म कृतम् । तेन च यज्ञादिद्वारा चक्रं प्रवृत्तम् । अतस्त्वयापि कर्म कर्तव्यमित्येवं प्रागापादितचक्रोक्तिरपि कर्मविध्युपयोगिनी भवतीति चेन्मैवम् । '**अतः**' इति कोऽर्थः? त्वत्कर्मणापि चक्रप्रवृत्तिसम्भवादिति वा? कर्मत्वादिति वा? नाद्यः । इदानीन्तनपुरुषकर्मजेन यज्ञेन[4] पर्जन्योत्पत्त्यसम्भवेन चक्राप्रवृत्तेः । न हि सर्वेऽपि कर्मकारिणः पर्जन्यत्वं

---

१. अत्र 'तस्य' इति अधिक पाठः कृ-टिप्पण्यां टीकाननुगुण इति निराकृतः । ताम्रपर्णीये व्याख्यातम् ।

२. 'बलाद् उपचयात्'– इति श्रीनि.टि ।

३. गुज,वे-ग्रं । 'तदा' -बे, प्र. ।

४. गुज,वे-ग्रं । 'कर्मजयज्ञेन' बे, प्र ।

प्राप्नुवन्ति । द्वितीयं दूषयति– **न त्विति** ।। फलरहितेन कर्मत्वसाम्येनेदानीं कर्म कार्यं न भवति । स्वयं क्लेशरूपत्वादिति ।।

**भावदीपः**

**अत्रेत्यनुवर्तत इति** ।। तदर्थस्तु प्रागुक्त एवेति भावः ।। प्राचीनस्यापि चक्रप्रवेशमाशङ्क्ते-**प्राक् पर्जन्येनेति** ।। **स्वकीयमिति** ।।

'स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति'

(आथ.भा. ४.१.८ उ.मुक्तिविवेकस्मृतिः)इति स्मृतावुच्यत इत्यर्थः ।।

( पर्जन्यः मेघचक्राभिमानी )

**भाष्यम् —** मेघचक्राभिमानी च पर्जन्यः । तच्च यज्ञाद् भवति ।
'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठति ।[१]
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।।'[२] (मनु.स्मृ.३.७६)
इति स्मृतेः ।

उभयवचनादादित्यात् समुद्राच्चाविरोधः । अतश्च यज्ञात् पर्जन्योद्भवः सम्भवति।

( यज्ञ-कर्मणोः लक्षण् )

**यज्ञः** देवतामुद्दिश्य द्रव्यपरित्यागः । कर्म इतरक्रिया ।। १४ ।।

---

१ पैशाचभाष्ये, नीलकण्ठीये, ब्रह्मानन्दगिरिव्याख्याने च-उपतिष्ठते इति पाठान्तरमुक्तम् । मनुस्मृतावपि तथैव पठ्यते । तथापि श्रुत्यानुगुण्यायायं पाठ आदृतः ।

२. (अ) मनुस्मृतिव्याख्याने कुल्लूकभट्टः -'अयमानेनाग्नावाहुतिः सम्यक् क्षिप्ता रसाहरणकारित्वाद् आदित्यस्य आदित्यं प्राप्नोति । सचाहुतिरस आदित्याद् वृष्टिरूपेण जायते । ततोन्नम्, तदुपभोगेन जायन्ते प्रजाः' इति ।

(आ)मैत्रायणीयारण्यके - 'यद्धविरग्नौ हूयते तदादित्यं गमयति, तत्सूर्यो रश्मिभिर्वर्षति,तेनान्नं भवति, अन्नाद्भूतानामुत्पत्तिरित्येव ह्याह - अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठति । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति ।

## प्रमेयदीपिका

प्रकारान्तरेणापि **'यज्ञाद्भवति पर्जन्यः'** इत्येतद् [1]घटयितुमाह– **मेघेति**।। चक्रं समूहः। ततः किम्? इत्यत आह– **तच्चेति** ।। मेघचक्रम् । **कुतः**? इत्यत आह– **अग्नाविति** ।।

ननु 'स्वकीयमुदकं नद्यः' इति समुद्राद् वृष्टिरुच्यते । अत आदित्याद् वृष्ट्यङ्गीकारे तद्विरोधः स्यादित्यत आह– **उभयेति** ।। 'वृष्ट्यङ्गीकारात्' इति शेषः । [2]वार्षुका मेघा इह वृष्टिशब्देनोच्यन्ते । [3]अतोऽपि किम्? इत्यत आह– **अतश्चेति** ।।

प्राक् पर्जन्यस्य भवनं गौणमङ्गीकृत्य व्याख्यातम् । इदानीं त्वभिमन्यमानगतस्य भवनस्य[4] अभिमानिनि लक्षणामाश्रित्येति भेदः । यद्वाऽभिमानिगतस्य पर्जन्यशब्दस्याभिमन्यमाने लक्षणामाश्रित्य द्वितीयं व्याख्यानम् ।।

**तात्पर्यनिर्णये तु** मेघसन्ततौ पर्जन्यशब्दो यौगिकोऽङ्गीकृतः ।।

ननु यज्ञः कर्मात्मकः । तत्कथमुच्यते **'यज्ञः कर्मसमुद्भवः'** इति? तत्राह– **यज्ञ** इति।। **इतरक्रिया** यज्ञाङ्गभूता । अपूर्वाङ्गीकारे रूढित्यागेन लक्षणाश्रयणं स्यात् ।। १४ ।।

## भावदीपः

**इहेति** ।। स्मृतावध्याहृतवाक्ये चेत्यर्थः ।। पक्षद्वयेऽपि पर्जन्योद्भवस्यामुख्यत्वाविशेषात् **'प्रकारान्तरेणापि'** इति कथमुक्तम्? इत्यत आह– **प्राक् पर्जन्यस्येति** ।। इत्यादि ग्रन्थ इत्यर्थः ।। **गौणमिति** ।। कार्यस्यैवोपचयाख्यगुणयोगोक्तेर्गौणमित्यर्थः ।। **तात्पर्येति** ।। गीतातात्पर्यनिर्णये तु -

'जननात् परसस्यादेः पर्जन्यो मेघसङ्गतिः'

इति यौगिकोऽङ्गीकृतः । अतो नामुख्यवृत्तिर्दोष इति भावः।।

ननु यज्ञजन्यपुण्याख्यमपूर्वं कर्मपदेन गृह्यताम् । 'कर्मणः=अपूर्वस्य समुद्भवो यस्मात्'इति वा, यज्ञशब्देन वाऽपूर्वग्रहणे 'कर्मणा समुद्भवो यस्य' इति विग्रहे **'यज्ञः कर्मसमुद्भवः'** इति सङ्गच्छत इत्यत आह– **अपूर्वेति** ।।

भाष्ये **बुद्धिर्ज्ञानम्** इत्यस्य -

---

१. गुज,वे-ग्रं -'दर्शयितुम्' ।

२. **श्रीनि । वार्षिका-गुज.। 'वर्षुका इति'** भा.र.को.पाठः ।

३. भा.र.को.। वे, गुज, वे-ग्रं, - 'ततः' ।

४.गुज,वे-ग्रं,वे । प्र-नास्ति ।

**'बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यम्'** (१०.४)

इत्यादिना

**'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः'**(१०.५)

इत्यन्तेन दशमे सर्वस्य तदधीनत्वस्य वक्ष्यमाणत्वादित्यर्थः ।। १४ ।।

( कर्म ब्रह्मणो जायते )

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ।। १५ ।।**

**भाष्यम् —** कर्म ब्रह्मणो जायते ।

**'एष ह्येवैनं साधु कर्म कारयति'**[१] (कौ.उ.३-८)

**'बुद्धिर्ज्ञानम्'** (१०.४)

इत्यादिभ्यः ।

### प्रमेयदीपिका

'कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्यम्'इति परेषां[२]व्याख्यानमसदिति भावेनाऽह– **कर्मेति** ।। **ब्रह्मणः** परब्रह्मणः । कुतः? इत्यत आह– **एष हीति** ।। अपव्याख्यानं प्रत्याख्याति– **न चेति** ।। उद्भवशब्दस्य **मुख्ये**ऽभिधेये जन्मनि सम्भाव्यमाने सति औपचारिकं प्रकाशनमर्थतया न

---

१. ब्र.सू.२.१.३६,३७.भाष्ये 'एष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधुकर्म कारयति तं यमधो निनीषते' इति पूर्णा श्रुतिरुदाहृता ।।

'श्रुतौ साधुकर्मेति मोक्षसाधनज्ञानादिकमुपलक्ष्यते । उन्निनीषतिशब्दोक्तमोक्षहेतुप्रसादस्य केवलकर्मासाध्यत्वात् । हिशब्दः प्रसिद्धौ । तथा च 'एषः' भगवान् 'यं' जीवं 'एभ्यो' भूर्भुवस्स्वराख्यलोकेभ्यः 'उन्निनीषते' ऊर्ध्वं नेतुमिच्छति 'तं' योग्यजीवं 'कर्म ज्ञानादिकं कारयति' तेन तत्सम्पादयनीत्यर्थः । अनेन मोक्षस्येच्छाविशेषरूपेश्वरप्रसादसाध्यतोक्ता भवति । उशब्दो विष्णुवाची । असाधुकर्म मिथ्याज्ञानोपलक्षकम् । तथा च एषः यमेभ्यो लोकेभ्यः 'अधो निनीषते' तमो नेतुमिच्छति, तमयोग्यजीवम् । तेन असाधुकर्म कारयतीत्यर्थः । अयं च सुधारीत्योक्तः ।' इति **भाष्यदीपिकायाम्** ।

२. शाङ्करभाष्ये-भा.१.पृ-२९५। अत्र उद्भवशब्दस्य प्रकाशनार्थत्वं नास्ति । पैशाचभाष्ये (पृ.३०१ ) तथा दृश्यते ।

कल्प्यम् । तथा ब्रह्मशब्दस्य मुख्येऽभिधेये [1]परब्रह्मणि सम्भाव्यमाने सति औपचारिकम् अमुख्यं वेदाख्यं ब्रह्मशब्दार्थतया न कल्प्यम् ।।

(जडस्य वेदस्य स्वतः प्रवृत्तिः नास्ति )

**भाष्यम् —** नच मुख्ये सम्भाव्यमाने पारम्पर्येणौपचारिकं कल्प्यम् । नच जडानां स्वतः प्रवृत्तिस्सम्भवति ।

'एतस्य वाऽक्षरस्य' (बृ.उ.५.८.९ )

इति सर्वनियमनश्रुतेश्च ।

'द्रव्यं कर्म च कालश्च' ( भाग.२.१०.१२) इत्यादेश्च ।

**प्रमेयदीपिका**

किञ्चैवं व्याचक्षाणेनापि वेदस्य कर्मप्रकाशकत्वमन्तर्यामिद्वारा परम्परयाऽङ्गीकार्यम् । तथा चान्ततोऽपि परब्रह्मण्यङ्गीकार्ये शब्दत एव प्राप्तस्य तस्य परित्यागोऽनुपपन्नः । ननु वेदः स्वयमेव कर्मप्रकाशकः[2]। किं परब्रह्मणा? अतो न परम्परेत्यत आह– **न चेति**।।

न केवलं जडत्वाद्वेदस्यान्याधीनत्वम्, किन्त्वागमाद् विष्णवधीनत्वं [3]प्रसिद्धमित्याह– **एतस्येति** ।। 'विष्णोः' इति शेषः ।। ननु शब्दस्यार्थप्रकाशनं स्वभावः । न त्वागन्तुको व्यापारः । यथाऽग्नेरौष्ण्यम् । ततो जडत्वेऽपि न परापेक्षत्यतः स्वभावस्यापि भगवदधीनत्वे प्रमाणमाह– **द्रव्यमिति** ।।

**भावदीपः**

**अन्तर्यामिद्वारेति** ।। साक्षाद्वेदस्य जडस्य प्रकाशकत्वायोगादन्तर्यन्तृरूपेश्वरेत्यर्थः । **स्वभावस्यापीति** ।। 'इत्यादेश्च' इति भाष्ये -

'स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया'

इति वाक्यशेषमादिपदार्थः ।।

---

१. गुज, वे-ग्रं। 'परे ब्रह्मणि'-बे, प्र ।

२ वे, गुज, श्रीनि-टि.अनुगुणश्च । 'प्रकाशयति' इति प्र.पाठः ।

३ वे, गुज. वे-ग्रं । 'सिद्धम्' -प्र. ।

(जीवस्य प्रवृत्तिरपि बिम्बाधीना )

**भाष्यम् — अचिन्त्यशक्तिश्चोक्ता । जीवस्य च प्रतिविम्बस्य बिम्वपूर्वैव चेष्टा ।**

**'न कर्तृत्वम्'**(५.१४) इत्यादि निषेधाच्च ।।

### प्रमेयदीपिका

[1]प्रमाणसिद्धमपि स्वभावनियमनं [2]विष्णोरसम्भावितमित्यत आह– **अचिन्त्येति** ।। यदि जडस्य न स्वतः प्रवृत्तिः तर्ह्यभिमानिदेवताद्वाराऽस्तु । तथाच नान्ततोऽपि परब्रह्माङ्गीकार इत्यत आह– **जीवस्य चेति** ।। ततश्चाधिक्येन परम्परेति भावः । न केवलं प्रतिबिम्बत्वाज्जीवस्य स्वतः प्रवृत्त्यभावः । किन्त्वागमाच्चेत्याह– नेति ।।

### भावदीपः

**'अचिन्त्य'** इति भाष्ये 'उक्ता' इत्यस्य पूर्वाध्याये -

'स्थाणुत्वेऽपि 'ऐक्षत' इत्याद्यविरुद्धमीश्वरस्य' (२.२३)

इत्यादिना 'इत्यादिवचनात्' इत्यन्तेनोक्तेत्यर्थः ।। **'न कर्तृत्वम्'** इत्यादिभाष्यस्य तु-

**'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः'** (५.१४)

इति पञ्चमे वक्ष्यमाणदिशा कर्तृत्वादिनिषेधाच्चेत्यर्थः ।।

( वेदैरभिव्यज्यते ब्रह्म )

**भाष्यम् —** अक्षराणि प्रसिद्धानि । तेभ्यो ह्यभिव्यज्यते परं ब्रह्म । अन्यथा अनादिनिधनम् अचिन्त्यं परिपूर्णमपि ब्रह्म को जानाति ।।

### प्रमेयदीपिका

'ब्रह्माक्षरसमुद्भवम्' इत्यस्य[3] 'ब्रह्म वेदो अक्षरात् परब्रह्मणो जायते' इति परेषां[4]

---

१. वे, गुज, वे-ग्रं । 'एतत्' इत्यधिकं -प्र. ।

२. गुज । 'नियमं' -प्र ।

३. 'इत्यत्र' - बे गुज,वे-ग्रं ।

४. शाङ्करभाष्ये- पृ-२९५, पैशाच-३.१ ।

व्याख्यानमसदिति भावेनाऽह– **अक्षराणीति** ।। [१]**प्रसिद्धानि** अकारादीनि नियतानुपूर्वी-विशिष्टानि । वेद इति यावत् ।।

ननु समुद्भवशब्दस्य मुख्यार्थाङ्गीकारे किं बाधकम् ? येनाभिव्यज्यत इत्यमुख्योऽर्थः स्वीक्रियते । किञ्च प्रमाणान्तरेणापि ब्रह्माभिव्यक्तिसम्भवात् **'तेभ्यः'** इति किमर्थमुक्तम्? इत्यत आह– **अन्यथेति** ।। व्यक्त्यर्थत्वानङ्गीकारे । अनादिनिधनं ब्रह्म 'कथं[२] जायेत' इति शेषः । तथा वेदस्य तदभिव्यञ्जकत्वानङ्गीकारे परिपूर्णत्वाद् **अचिन्त्यं ब्रह्म को जानाति**? वाक्यार्थद्वयसमुच्चये **अपिशब्दः** ।।

### भावदीपः

**वाक्यार्थद्वयेति** ।। **'अनादिनिधनं ब्रह्म कथं जायेत'** इति, **'अचिन्त्यम्'** इत्यादि वाक्यार्थद्वय इत्यर्थः ।।

### ( रूढ्यर्थत्यागेन यौगिकार्थः न ग्राह्यः )

**भाष्यम् — न च रूढिं विना योगाङ्गीकारो युक्तः । परामर्शाच्च 'तस्मात् सर्व-गतं ब्रह्म'** (३.१५) **इति । [३]न ह्येकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते ।।**

### प्रमेयदीपिका

समुद्भवशब्दस्य मुख्यार्थताभावात्[४] परोक्तः अर्थः[५] किं न स्यात्? इत्यत आह– **नचेति**।। ब्रह्मशब्दो हि परब्रह्मणि रूढः । वेदे तु बृहत्त्वयोगेन प्रवृत्तः । तथाऽक्षरशब्दो वर्णेषु रूढः । [६]परब्रह्मणि त्वक्षरणयोगेन[७] प्रवृत्तः । तथा चान्यथा व्याकुर्वता रूढिं परित्यज्य योगोऽङ्गीकृतः स्यात् । तच्च न्यायबाह्यमित्यर्थः ।।

१. गुज,वे-ग्रं । 'प्रसिद्धाकारादीनि'-बे,प्र. ।
२. श्रीनि-टि, भावदीपे च । 'जायते' इति-वे, गुज।
३. अत्र २९ श्लोके 'न ह्येकशब्देन' इति टीकायां भाष्यपाठो दृश्यते ।
४. वे, गुज, वे-ग्रं । 'मुख्यार्थलाभात्' -प्र ।
५. वे, गुज, वे-ग्रं, श्रीनि- टि.अनुगुणः । 'परोक्तार्थ '-प्र ।
६. वे. गुज, वे-ग्रं,। ब्रह्मणि इति प्र.पाठः । परन्तु उपक्रमानुगुण्येन परब्रह्मणि इति साधु इति भाति ।
७. गुज, वे-ग्रं, । 'अक्षरयोगेन' वे, प्र ।

( गीतायां ब्रह्मशब्दः परब्रह्मवाची )

इतश्च ब्रह्मशब्दः परब्रह्मवाचीत्याह– **परामर्शाच्चेति** ।। उत्तरवाक्ये ब्रह्मशब्देन परब्रह्मणः परामर्शाच्च पूर्ववाक्यस्थो ब्रह्मशब्दः परब्रह्मार्थो ज्ञायते । तथाच 'अक्षरशब्दोऽप्यर्थाद् वेदवचनो भविष्यति' इति शेषः[१] । प्राग् अक्षरशब्दोक्तं परब्रह्मेदानीं ब्रह्मशब्देन परामृश्यते । अतः [२]पूर्वोक्तो ब्रह्मशब्दो वेदार्थ एवेत्यत आह– **न हीति** ।। 'एकस्मिन्नेव प्रकरणे' इति शेषः ।।

**'अन्नात् पुरुषः । स वा एष पुरुषोऽन्नरसमयः'** (तै.उ.२.२)

इत्यादि व्यावृत्त्यर्थं **'भेदश्रुतिं विना'** इत्युक्तम् । श्रुतिशब्दश्च प्रमाणोपलक्षणार्थः । अत्रापि 'सर्वगतम्' इति विशेषणमस्तीति चेन्न । वर्णानामपि सर्वगतत्वात् । [३]विकारित्वान्नेति चेन्न । अनन्तरमेव निराकरणात् । इदं च भास्करं प्रत्यभिहितम् । मायावादिना तु 'प्राग् ब्रह्मशब्दोक्तस्य वेदस्यैवायं परामर्शः' इत्यङ्गीकृतत्वात् ।।

**भावदीपः**

**'तपसा चीयते ब्रह्म'** (आथ.१.१.८) इत्यस्योत्तरवाक्ये

**'तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते'** (आथ.१.१.९)

इति श्रुतब्रह्मशब्दादेः सङ्ग्रहाय आह– **श्रुतिशब्दश्चेति** ।। सर्वस्य ब्रह्मविकारित्वभावेन शङ्कते– **विकारित्वादिति** ।। वर्णानां सर्वगतत्वं चेत्यर्थः ।। **अनन्तरमेवेति** ।। 'तानि च' इति ग्रन्थ इति भावः ।।

( वर्णानां नित्यत्वे प्रमाणोदाहरणम् )

**भाष्यम् — तानि चाक्षराणि नित्यानि ।**

**'वाचा विरूप नित्यया'**[४] (ऋ.८.६.४-६) ।

---

१. गुज, वे-ग्रं । भावः -बे, प्र ।
२. बे, गुज, वे-ग्रं,। पूर्व इति प्र ।
३. भावदीपानुसारी-का-मातृका च ।। 'विकारत्वात्' इति गुज, वे-ग्रं, सो- प्र.पाठः। भा.र.कोशे प्रतीकश्च। परन्तु ब्र.सू.भाष्ये 'विकारित्त्वात्' (१.१.१३) इत्युक्तत्वात् 'विकारिणः' इत्येव साधु इति भाति।।
४ (अ) ब्र.सू.२.१.४.भाष्ये- 'नित्यत्वं च शब्दादेव प्रतीयते । 'वाचा विरूप नित्यया' इत्यादेः । 'अनादिनिधना नित्या' इति च स्मृतिः' ।।

'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा'।

(म.भा.१२.२३२.१२४)

'अत एव च नित्यत्वम्'[१] (ब्र.सू.१.३.२९)

इत्यादि श्रुतिस्मृतिभगवद्वचनेभ्यः ।

**प्रमेयदीपिका**

यदप्यन्यथाव्याख्याने 'समुद्भवशब्दस्य मुख्यार्थतालाभः' इत्यभिप्रेतं तदपि दुराशामात्रमित्याह– तानि चेति ।। यान्यस्माभिः प्रसिद्धानि व्याख्यातानि । अनेन 'अभिधानादिबलाद् ब्रह्माक्षरशब्दौ द्वावप्युभयत्र योगरूढौ' इति प्रत्यवस्थानमपि परास्तम् । परामर्शस्य वर्णनित्यत्वस्य चापरिहार्यत्वात् ।।

( वेदाक्षराणि नाबुद्धिपूर्वमुत्पन्नानि )

**भाष्यम्** — [२]दोषाश्चोक्ताः सकर्तृकत्वे । न चाबुद्धिपूर्वम् उत्पन्नानि । तत्प्रमाणाभावात् । निश्वसितशब्दस्त्वक्लेशाभिप्रायो नाबुद्धिपूर्वाभिप्रायः ।

---

**त.प्र-** 'तस्मै सर्वतः प्रकाशायातिसमर्थाय विष्णवे नित्यया वेदवाचा साध्वीं स्तुतिं प्रेरय कुरु इत्यर्थः। 'विरूप'इति स्वात्मानं प्रति सम्बोधनम् । बहुकालीनत्वमात्रेण नित्यत्वोपचारः किं न स्यात्? इत्यत आह– अनादीति । अनादिनिधनतया नित्या, नतु बहुकालीनतामात्रेण नित्यत्वोचार इत्यर्थः'।। **भावदीपः** - तस्मै नूनमभिद्यवे वाचा विरूप नित्यया ।वृष्णे चोदस्व सुष्टुतिम्' इति समग्रमन्त्रार्थमाह तस्मा इति ।। अभिद्यवे सर्वतः प्रकाशाय । वृष्णे अतिसमर्थाय । चोदस्व प्रेरय । स्वात्मनो अन्यस्याभावादाह– कुर्वित्यर्थ इति । कस्यचिदृषेर्नाम 'विरूप' इति ।। अपौनरुक्त्याय हेतुहेतुमद्भावेन व्याचष्टे अनादिनिधनतयेति । आद्यन्तशून्य-तयेत्यर्थः ।।

(आ) **वि.त.नि.प्र.परि-टीका**– 'तस्मै..सुष्टुतिम् ' इति मन्त्रस्यायमर्थः । अभितो द्यौः प्रकाशो यस्यासावभिद्युः, तस्मै अभिद्यवे ; वृष्णे वर्षित्रे, नूनं निश्चितं, हे विरूप नित्यया वाचा वेदलक्षणया सुष्टुति शोभनां स्तुतिं चोदस्व प्रेरय कुरु इति विरूपऋषिं प्रत्युच्यते ।।

(अत्र व्याकरणविशेषः लघुप्रभायां द्रष्टव्यः -'विरूप इति स्वात्मानं प्रति सम्बोधनम् इत्यन्यत्र..'।।

१. 'अर्थापत्त्या वेदप्रवाहनित्यत्वमाह -'अत एव च नित्यत्वम्'।अत एव शब्दनित्यत्वादेव । तदन्यथानुपपत्त्यैवेत्यर्थः । नित्यत्वं वेदप्रवाहस्येत्यर्थः । किं युक्त्यन्तरान्वेषणेनेत्येवार्थः । न केवलं शब्दात् किन्तु शब्दनित्यत्वान्यथानुपपत्त्या चेति चार्थः । न हीन्द्रागच्छेत्यादिवाचो नित्यत्वं वाच्यानित्यत्वे युज्यत इति भावः । अर्थापत्तेरनुमानविशेषत्वात् पृथगुक्तिः ।' इति **तन्त्रदीपिकायां राघवेन्द्रतीर्थाः**

२. दोषश्चोक्तः -इति भाष्ये,टीकायां चैकवचनं-वे,गुज,वे-ग्रं ।

'सोऽकामयत' (तै.उ.२.११) इत्यादेश्च ।

'इष्टं हुतम्' (बृ.उ.६.१.२)

इत्यादिरूपप्रपञ्चेन सहाभिधानाच्च ।।

प्रमेयदीपिका

न केवलं श्रुत्यादिभ्यो वेदस्य नित्यत्वम्, किं तर्हि? विपक्षे बाधकाच्चेत्याह– **दोषा-श्चेति** ।। **'रचितत्वे च धर्मप्रमाणस्य'**(गी.भा.२.१३)इत्यत्र । ननु वेदाक्षराणि ब्रह्मणो अबुद्धिपूर्वमुत्पन्नानि । अतो न विपर्ययादिमूलत्वशङ्केत्यत आह– **न चेति** ।।

**'निश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः'** (बृ.उ.४.४.१०)

इति श्रुतिर्वेदानां ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नत्वे प्रमाणमिति चेत्- किमयं निश्वसितशब्दो अबुद्धिपूर्वमुत्पन्नत्वस्य वाचकः? उत निश्वसितमिव निश्वसितम्, इवार्थश्च 'अबुद्धिपूर्वकम्[1]उत्पन्नत्वम्' इति गौण्या वृत्त्या तदभिप्रायः । नाद्यः । प्रमाणाभावात् ।।

द्वितीयं दूषयति– **निश्वसितेति** ।। अक्लेशेन निस्सरणस्यापीवार्थस्य सम्भवेन निश्वसितशब्दस्य तदभिप्रायतोपपत्तौ नाबुद्धिपूर्वोत्पत्त्यभिप्रायत्वनिश्चय इत्यर्थः । नच परस्येवास्माकमपि निश्चयायोग इति भावेनाऽह– **स** इति ।।

**'सोऽकामयत, स इदं सर्वमसृजत'**[2](तै.उ.२-११)

इति ब्रह्मणः [3]सर्वसृष्टेरिच्छापूर्वकत्वमुच्यते । इच्छा च बुद्ध्या अविनाभूता । अतो न किञ्चिद् ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नमिति ।।

ननु **'निश्वसितमेतत्'** इति श्रुतिः नामप्रपञ्चस्याबुद्धिपूर्वमुत्पत्तिं वक्ति । **'सोऽकामयत'** इति चारूपप्रपञ्चस्येच्छापूर्वमित्यतो न विरोध इत्यत आह– **इष्टमिति** ।। एवं सति **'निश्वसितम्'** इति श्रुतौ

---

१. 'पूर्वम्'- वे, गुज, वे-ग्रं ।

२. **'सोऽकामयत' इत्यादिना सृष्ट्युक्तेः सङ्गत्यन्तरमाह । स्रष्टृत्वादिपूर्णैश्वर्यादिरूपवान् स हरिर्ज्ञेय इति । ....। तत्र ब्रह्मणः सृष्टिकारणत्वं नोपादानत्वरूपेण किन्तु कुलालादिवन्निमित्ततयैवेत्यभिप्रेत्य सृष्ट्यपेक्षया पूर्वभाविनं व्यापारमाह- सोकामयतेत्यादिना । सः प्रलयकालगो नारायणः अकामयत ..। तदिदं सर्वमसृजत वासुदेवादिरूपेण स्वोदरात् वहिर्निष्कास्य वियदधिकरणव्युत्पादितावान्तरविशेषवद् अकरोदित्यर्थः। '** तै.श्री.खण्डार्थे.

३. 'सर्वस्य' -बे ,गुज,वे-ग्रं, ।

**'इष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः'(बृ.उ.६.१.२)**

इति नामप्रपञ्चस्य रूपप्रपञ्चेन सहाभिधानात् । रूपप्रपञ्चस्यापि निश्वसितशब्देनाबुद्धि-पूर्वोत्पन्नत्वप्राप्तौ **'सोऽकामयत'** इति श्रुतिर्निर्विषयैवापाद्येतेति भावः।।

### भावदीपः

**एतेन** इत्युक्तं व्यनक्ति– **परामर्शस्येति** ।। कुत्र? इत्यतः पूर्वाध्यायगतस्थलमाह– **रचितत्वे चेति** ।। **अबुद्धिपूर्वमिति** पदविभागो ज्ञेयः ।।

**भाष्यम् — महातात्पर्यविरोधाच्च । तच्चोक्तं पुरस्तात् (गी-भा.२.२४) । न ह्यस्वातन्त्र्येण[1] उत्पत्तिकर्तुः प्राधान्यम् । अस्वातन्त्र्यं च तदमतिपूर्वकत्वेन भवति। यथा रोगादीनां पुरुषस्य तज्जत्वेऽपि ।।**

### प्रमेयदीपिका

इतोऽपि नाबुद्धिपूर्वा ब्रह्मणः सृष्टिरित्याह– **महातात्पर्येति** ।। [2]परब्रह्मणः सर्वोत्तमत्वे यत् सर्ववेदानां महातात्पर्यं तद्विरोधाच्चेत्यर्थः । तदेव कुतः? इत्यत आह– **तच्चेति** ।। **उक्तं** साधितम् । कथं तद्विरोधः? इत्यत आह– **न हीति** ।। **प्राधान्यं** सर्वोत्तमत्वम् । अस्वातन्त्र्येणोत्पत्तिकर्तृत्वस्य प्राधान्यविरोधित्वेऽप्यबुद्धिपूर्वमुत्पादकत्वस्य किमायातम्? इत्यत आह– **अस्वातन्त्र्यं चेति** ।। कार्यस्य पुरुषमतिपूर्वकत्वाभावे तत्र तस्य पुरुषस्यास्वातन्त्र्यं भवति । तत्र दृष्टान्तमाह– **यथेति** ।। रोगादीनां [3]पुरुषजन्यत्वेऽपि बुद्धिपूर्वकत्वाभावात्, तत्र पुरुषस्यास्वातन्त्र्यं[4] यथेत्यर्थः । ततश्चाबुद्धिपूर्वमुत्पादकत्वादस्वातन्त्र्यम् । अस्वातन्त्र्याद-प्राधान्यं प्रसज्येत इति[5]। तथाच महातात्पर्यविरोध इत्युक्तं भवति । साक्षात् प्रसङ्गसम्भवेऽपि व्युत्पादनार्थमेवमुक्तम् ।।

### भावदीपः

**साधितमिति** ।। 'पूर्वाध्याये' इति योज्यम् ।। **साक्षात् प्रसङ्गसम्भव इति** ।। अबुद्धिपूर्वं

---

१. गुज,वे-ग्रं - अत्र चशब्दः अधिकः ।

२. बे,गुज,वे-ग्रं, । 'ब्रह्मणः' इति भा.र.को, प्र-पाठः ।

३. गुज,वे-ग्रं,। 'पुरुषजत्वे'-बे,प्र ।

४. 'तथेत्यर्थः'-इति बे ,गुज,वे-ग्रं ।

५. गुज,वे-ग्रं,बे । प्र-पाठे इतिर्नास्ति ।

भगवतः सृष्टिहेतुत्वे रोगोत्पत्तौ पुरुषस्येवास्वातन्त्र्यं स्यादिति साक्षात्प्रसङ्गशब्दितानिष्टापादन-सम्भवे सत्यस्वातन्त्र्ये [1]चाप्राधान्यम् । अप्राधान्ये च प्रागुक्तमहातात्पर्यविरोध इति आपाद्यस्य अनिष्टताव्युत्पादनायैवंपरम्परोक्तेत्यर्थः ।।

( वेदोत्पत्तिवचनानां तात्पर्यम् )

**भाष्यम् — उत्पत्तिवचनान्यभिव्यक्त्यर्थानि, अभिमानिदेवताविषयाणि च । 'नित्या' इत्युक्त्वा[2] 'उत्सृष्टा' इति वचनात् । अभिव्यञ्जके कर्तृवचनं चास्ति ।**

**'कृत्स्नं शतपथं .........चक्रे'[3] (म.भा.१२.३१८.१६) इति ।**

**कथमादित्यस्था वेदाः तेनैव क्रियन्ते? वचनमात्राच्च निर्णयात्मकशरीरकोक्तं बलवत् ।।**

**प्रमेयदीपिका**

ननु वेदनित्यत्ववत् तदुत्पत्तावपि **'ऋचः सामानि जज्ञिरे'** (ऋ.८.६.....)इत्यादि वचनानि सन्ति । तत्कथं निर्णयः? इत्यतो विपक्षे बाधकोपेतानां नित्यत्ववाक्यानां प्राबल्याद् उत्पत्तिवचनान्यन्यथा व्याख्येयानीत्याह– **उत्पत्तीति** ।। उत्पत्तिवाची शब्दोऽभिव्यक्तौ क दृष्टः? इत्यत आह– **नित्येति** ।। 'अनादिनिधनतया **नित्या** न तूपचारेण' इति मुख्यं नित्यत्वम् **उक्त्वा** पुनः **'उत्सृष्टा'** इत्युच्यते । तत्र गत्यन्तराभावाद् व्यक्तिरेव ग्राह्येत्यर्थः ।।

( वेदकर्तृशब्दः तदभिव्यञ्जकत्वार्थकः )

अन्यत्रापि प्रयोगं दर्शयति - **अभिव्यञ्जक** इति ।। शतपथाभिव्यञ्जकतया निश्चिते याज्ञवल्क्ये कर्तृशब्दोऽस्तीत्यर्थः । याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यात्? इत्यत आह– **कथमिति** ।। प्रागादित्ये स्थितास्ततो याज्ञवल्क्येनाधीता इत्येतत् प्रमितमित्यर्थः।। इतोऽपि नित्यत्वपक्ष एव बलवानित्याह– **वचनेति** ।। 'ऋचः सामानि' इत्यादिकं वचनमात्रम् ।

---

१. 'चाप्राधान्यम्' इति सो-मातृकायामेव ।'प्राधान्यम्' इत्यन्यत्र ।

२. गुज -'इत्युक्त्वा 'इति नास्ति ।

३. **'ततः कृत्स्नं शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह'** इति भा.र.कोशे पूर्णपाठः उदाहृतः ।

**'अत एव च नित्यत्वम्'(ब्र.सू.१.३.२९)**

इति शारीरकोक्तं वाक्यं निर्णयात्मकम् । वचनं च वृत्त्यन्तरेणापि सम्भवति [1]इति । न तूपचरितो वाक्यार्थावधारणात्मको[2] निर्णयः । अतस्तस्मादिदं बलवदित्यर्थः ।।

**भावदीपः**

**विपक्ष इति** ।। **'सकर्तृकत्वे दोषश्चोक्तः'** इति प्रागुक्तविपक्षबाधकोपेतानां 'वाचा विरूप नित्यया' इत्यादिनामित्यर्थः ।। अपौनरुक्त्यायाऽह– **अनादिनिधनतया नित्येति**।।

**( शास्त्रयोनिशब्दार्थः )**

**भाष्यम् — शास्त्रं योनिः [3]यस्य तत् (इति तु) शास्त्रयोनित्वम्[4]।**

**'जन्माद्यस्य[5]' (ब्र.सू.१.१.२)**

**इत्युक्ते प्रमाणं हि तत्रापेक्षितम् । न तु तस्य जातत्वं वेदकारणत्वं वा । न हि वेदकारणत्वं जगत्कारणत्वे हेतुः ।।**

**प्रमेयदीपिका**

ननु शारीरके[6] 'शास्त्रयोनित्वात्' (**ब्र.सू.१.१.३**) इति ब्रह्मणो वेदकारणत्वमुच्यत इत्यत आह– **शास्त्रमिति** ।।

ननु तत्पुरुषं परित्यज्य कुतो [7]बहुव्रीहिरङ्गीक्रियते? तथात्वे च ब्रह्मणो वेदात् जातत्वं प्रसज्येतेत्यत आह– **जन्मादीति** ।। लक्षणप्रमाणाभ्यां हि वस्तुनिर्णयः । तत्र **'जन्माद्यस्य'**

---

१. गुज,वे-ग्रं । बे,प्र-नास्ति ।

२. गुज,वे-ग्रं । अपिः बे,प्र अधिकः ।

३. गुज,वे-ग्रं,। प्रमाणमस्येति तु -प्र पाठः ।।

४. **ब्र.सू.भाष्यदीपिकायां** (१.१.३) इदं वाक्यमुदाहृतम् । तद्यथा- **'अस्य'** जगत्कारणस्य **'इति शास्त्रयोनि'** इत्यनन्तरं तुशब्दोऽध्याहार्यः । अत एव गीताभाष्ये **'इति तु शास्त्रयोनित्वम्'** इत्युक्तम् । तुरेवार्थः । तथा च - शास्त्रं योनिः प्रमाणं यस्य तच्छास्त्रयोनीत्येव शास्त्रयोनिपदार्थो ब्रह्म, न तु शास्त्रस्य योनीत्यर्थः ।।' तथाच भाष्ये यस्य इति तु शास्त्रयोनित्वम् इति पाठः स्यात् ।

५. गुज,वे-ग्रं । 'यतः' इति अधिकं वे ,प्र ।

६. गुज,वे-ग्रं,। 'शारीरक एव' इति वे ,प्र ।

७. गुज,वे-ग्रं,। बे-'कः' इति दृश्यते ।

इति सूत्रेण लक्षणेऽभिहिते कुतः प्रमाणादेवं प्रतिपत्तव्यम्? इति ब्रह्मणो जगज्जन्मादिकारणत्वे प्रामाणाकाङ्क्षा स्यात् । न तु तस्य वेदाज्जातत्वं वेदकारणत्वं वाऽऽकाङ्क्षितम् । आकाङ्क्षादिवशाच्च वाक्यार्थोऽवसेयः । [१]अतो योनिशब्दं [२]प्रमाणवाचिनमङ्गीकृत्य बहुव्रीहिरेवायं प्रतिपत्तव्यो न तु [३]तत्पुरुषः । वेदकारणत्वं च[४] जगत्कारणत्वे हेतुत्वेनात्रोच्यते । [५]अतो नानाकाङ्क्षिताभिधानमेतदित्यत आह– **न हीति**।। अन्वयाभावादेकदेशकारणत्वेन समुदायकारणत्वानुमानेऽतिप्रसङ्गाच्चेति हेरर्थः ।।

## भावदीपः

**तत्पुरुषमिति** ।। समस्यमानपदार्थत्यागेनान्यपदार्थप्रधानाद् बहुव्रीहेः, तत्पुरुषस्य तदत्यागेनोत्तरपदार्थप्रधानस्य प्राबल्यादिति भावः । तत्र हिशब्दसूचितं हेतुद्वयं स्वयमाह– **अन्वयाभावादिति** ।। 'ईश्वरो विश्वकर्ता तदेकदेशवेदकर्तृत्वात्' इत्यन्वितं भविष्यति; वेदकारणत्वादित्यत आह– **एकदेशेति** ।। कुलालादेरपि विश्वकर्तृत्वापत्तेरिति भावः।।१५।।

**भाष्यम् — न हि विचित्रजगत्सृष्टेर्वेदसृष्टिरशक्या सृज्यत्वे । नच सर्वज्ञत्वे । यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा सर्वज्ञः? तस्माद् वेदप्रमाणकत्वमेवात्र विवक्षितम् । अतो नित्यान्यक्षराणि । यत एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म, तस्मात् तत् नित्यं यज्ञे प्रतिष्ठितम् ।। १५ ।।**

## प्रमेयदीपिका

मा भूदयं निश्चयहेतुः । तथाऽप्यशक्यसृष्टेर्वेदस्य कर्तुर्ब्रह्मणो जगत्सृष्टिकर्तृत्वं सम्भवतीति सम्भावनाहेतुरयं स्यादित्यत आह– **न हीति** ।। सम्भावना ह्यधिकेनाल्पस्य भवति । यथा सहस्रेण शतस्य । नच समुदायसृष्टेस्सकाशात्[६] तदेकदेशसृष्टिरधिका इति भावः । **सृज्यत्वे** वेदस्य । कार्यत्वपक्ष इत्यर्थः । जगत्कारणत्वोक्त्या ब्रह्मणः सर्वज्ञत्वं प्रतीतम् । तत् स्फुटीकर्तुं

१. 'ततो'-बे गुज,वे-ग्रं ।
२. गुज,वे-ग्रं । 'प्रमाणवचनम्'-बे -प्र ।
३. बे,वे-ग्रं ।
४. बे,गुज,वे-ग्रं,। प्र-'चः नास्ति ।
५. गुज,वे-ग्रं । 'तेन , ततः'(पां)-बे, प्र ।
६. श्रीनि -। गुज,वे-ग्रं, प्र-पाठे 'सकाशात्'इति नास्ति ।

तत्र वेदकारणत्वं हेतुरनेनोच्यते । अतो नासङ्गतिरित्यत आह– **न चेति** ।। 'वेदकारणत्वं हेतुः' इत्यनुवर्तते । अबुद्धिपूर्वमुत्पन्नत्वाङ्गीकारादिति भावः ।।

किञ्च **यदि** जगदेकदेशस्य वेदस्य **स्रष्टा** परमेश्वरः **सर्वज्ञः** सिद्ध्येत् तर्ह्यन्तर्भावितवेदस्य जगतस्स्रष्टा सुतरां सर्वज्ञः सिद्ध्येदेव । तथा चार्थादपि जन्मादिसूत्रेणैव सार्वज्ञस्य स्फुटं प्रतीतत्वात् पुनर्हेत्वाकाङ्क्षाऽभावेनासङ्गतिस्तदवस्थेति भावेनाऽह– **यदीति** ।।

सूत्रार्थमुपसंहरति– **तस्मादिति** ।। 'ब्रह्मणः' इति शेषः ।।

'**तानि** च' इत्यादिनोक्तमुपसंहरति – **अत** इति ।। तथाच न समुद्भवशब्दस्य मुख्यार्थत्वलाभाय ब्रह्माक्षरशब्दार्थयोर्व्यत्ययः[1] कार्य इति । 'तस्मात्' इति परामर्शविषयाप्रतीतेः तद्दर्शयन् वाक्यं व्याख्याति– **यत** इति ।। **प्रतिष्ठितम्** 'इत्युच्यते' इति शेषः ।। १५ ।।

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ।। १६ ।।**[2]

**भाष्यम् — तानि चाक्षराणि भूताभिव्यञ्जकानीति चक्रम् । तदेतज्जगच्चक्रं यो नानुवर्तयति । स तद्विनाशकत्वाद् अघायुः । पापनिमित्तमेव यस्याऽयुः सः अघायुः ।। १६ ।।**

### प्रमेयदीपिका

नन्वत्र कार्यकारणपरम्परैवोक्ता न चक्रम् । तत्कथमुच्यते '**एवं प्रवर्तितं चक्रम्**' इति? तत्राह– **तानि** चेति ।। **तानि** वेदाख्यानि । चक्राप्रवृत्तौ कथमघायुष्ट्वादिकम्? इत्यतो व्याचष्टे - **तदेतादिति** ।। आयुषोऽघत्वाभावात् कथमघायुः? इत्यत आह– **पापेति** ।। तादर्थ्यात् ताच्छब्द्यमित्यर्थः ।। १६ ।।

### ( पाङ्गीआचार्यव्याख्या )

सदाचारस्मृति-तद्विवरणरूप-अस्मत्कृताह्निकपद्धत्युक्तप्रकारेण ब्राह्ममुहूर्तादारभ्य पुनः ब्राह्मकालपर्यन्तं (सूर्योदयात् प्रहरपूर्व) सदाचारणचक्रस्य प्रवर्तकाप्रवर्तकयोः

---

१. श्रीनि -। बे ,गुज,वे-ग्रं,प्र-पाठे 'शब्दार्थव्यत्ययः' इति ।

२. इमे ११-१६ श्लोकाः आथर्वणभाष्ये १-६ उदाहृताः, मङ्गालीये, वादिराजीये, सत्यप्रियतीर्थीये च विशेषतो विवृताश्च तत्रैव द्रष्टव्याः ।

स्तुतिनिन्दापरमेवेदं पद्यम् । तत्र स्तुतौ ना, इति, अमोघम्, इति पदच्छेदः । अघसाधनजीवनेन्द्रियेषु न रमते असौ तथेति,अपृथक्पदतृतीयचरणार्थः । निन्दायां तु प्रसिद्ध एव ।। १६ ।।

( असम्प्रज्ञातसमाधिस्थापरोक्षज्ञानिन एव कर्म नास्ति )

**[१]यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**[२]आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ।। १७ ।।**

( रमणादिशब्दार्थः )

**भाष्यम् —** तर्ह्यतीव मनस्समाधानमपि न कार्यमित्यत आह– यस्त्विति ।। रमणं परदर्शनादिनिमित्तं सुखम् । तृप्तिः अन्यत्रालम्बुद्धिः । सन्तोषः तज्जनकं सुखम् ।

---

१. **ब्र.सू.भाष्यटीकायाम्** अयं श्लोकः ज्ञानिनां कार्याभावोक्तिपरतया व्याख्यातः । तथाहि- **त.प्र** - सत्यमस्मिन् पक्षे साम्योक्तिः सम्यक्सम्बद्ध्यत इति । तथाऽपि न युज्यते । कर्तव्य-परित्यागे साम्यायोगात् । अतो मुख्यापि योजना साध्वीत्यत आह - यस्त्विति ।। ज्ञानिनां कार्याभावोक्तेर्न तत्परित्यागे साम्यायाग इति भावः । आत्मरतिः परमात्मदर्शननिमित्त-सुखमाप्तः । आत्मतृप्तः परमात्मप्रसादेन विषयेष्वलम्बुद्धिमाप्तः । तत्कुतः । परमात्मनि सन्तोषवत्त्वात्तद्दर्शनादिनिमित्त-सुखवत्त्वादिति भावः । एवं केन स्यादिति वाक्यशेषस्य यथेष्टाचरणविधित्वाभावमभ्युपेत्यार्थद्वयमुक्तम् ।। **भावदीपः** ।। अत आहेति ।। ननु कथम् तत्स्मृत्योक्तशङ्कानिरासः । गीतातात्पर्ये द्वितीये यस्त्वात्मरतिरेव इत्यादि तु मुक्तविषयम् । यस्त्वेवात्मरतो मुक्तः कार्यं तस्यैव नास्ति हि । तस्मात्कुर्वेव कर्माणीत्याह कृष्णोऽर्जुनं स्मयन्निति स्कान्द इत्युक्तेः ।तथा तृतीये स्वस्थानेऽपि 'विष्णुप्रसादाद्रतिमांस्तृप्तो विष्णुप्रसादतः । विष्णावेवातितृप्तश्च मुक्तोऽसौ विध्यगोचरः' इत्याग्नेये इत्यादिना च मुक्तपरत्वोक्तेः।

गीताभाष्येऽपि -आत्मरतिरेवेत्यवधारणादसंप्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यत इत्युक्त्या अमुक्त-परत्वेऽप्यसंप्रज्ञातसमाधिस्थविषयत्वोक्तेरित्यतोऽत्रोदाहरणवलेन प्रकृतोपयोगाय भावमाह- ज्ञानिना-मिति ।। समाधिस्थस्यापि ज्ञानित्वादिति वा ज्ञानिसामान्यपरत्वमप्यस्ति इति वाऽभिप्रायः । रमणं परदर्शनादिनिमित्तं सुखम् । तृप्तिरन्यत्रालम्बुद्धिरिति गीताभाष्योक्तदिशा पदयोरपौनरुक्त्याय अर्थमाह -आत्मेति ।। तेनैवान्यत्रालम्बुद्धिरिति दर्शयति । आत्मन्येव च सन्तुष्टः इति भाष्यदिशा हेतुत्वेन योजयति- तत्कुत इति ।।' इति ।।

२. 'न हरिं स्मरतः कृत्यं दग्धेन्धनहुताशवत्' इति **भाग.ता ७.१२.३१** ।

'सन्तोषस्तृप्तिकारणम्' इत्यभिधानात् ।।

**प्रमेयदीपिका**

'एवमज्ञानिनः कर्म कर्तव्यमित्युक्तम् । इदानीं ज्ञानिनः कर्तव्याभावमाह' इति [१]पर० याख्यानमसदिति भावेन सङ्गतिमाह– **तर्हीति** ।। यद्येवं कर्माकरणे हानिः, तत्करणे च[२] लाभः, तर्हीत्यर्थः । परमेश्वरे **अतीवमनस्समाधानम्** असम्प्रज्ञातसमाधिरित्यर्थः । **न कार्यं** 'प्रसज्येत' इति शेषः । तत्र कर्मलोपस्यावश्यम्भावादिति भावः ।।

अत्र रतितृप्तिसन्तोषशब्दांस्तावद्व्याचष्टे - **रमणमिति** ।। 'पर' इति स्वरूपकथनम् । न शब्दार्थान्तर्भूतम् । तथाच पञ्चमेऽभिधानं वक्ष्यते । तथात्वे [३]आत्मशब्देन जीवनिराकरणं च व्यर्थं स्यात् । यद्दर्शनादिनिमित्तं सुखं ततो **अन्यत्र** । **तज्जनकं** तृप्तेर्जनकम् । तृप्तिकारणं 'सुखम्' इति शेषः ।।

**भावदीपः**

उत्तरश्लोकसङ्गतिभाष्यमवतारयितुं परमतमाह– **एवमित्यादिना** ।। **इत्युक्तमिति** ।। '**अन्नात्**' इत्यादि श्लोकैरित्यर्थः । '**न कर्मणामनारम्भात्**' इत्यादेस्तात्पर्यार्थोक्तिः– **कर्माकरणे हानिरिति** ।। '**सह यज्ञाः**' इत्यादेः भावार्थोक्तिस्तत्करणे च लाभ इति ।।

'दर्शनस्पर्शसम्भाषायत् सुखं जायते नृणाम् ।
आरामः स तु विज्ञेयः सुखं कामक्षयात्'

इति पञ्चमे (**५.२४.नारदीयवचनम्**) वक्ष्यमाणवचनाविसंवादायाऽह– **परेतीति** ।। परत्वस्यापि रतिपदार्थान्तर्गतौ बाधकं चाह– **तथात्व इति** ।। परत्वस्य रतिपदार्थान्तर्भावत्वे वा 'परदर्शन' इत्युक्त्यैव स्वात्माख्यजीवदर्शनसुखस्य निरासप्राप्तेरुत्तरभाष्ये '**परमात्म-दर्शनादि**' इत्यादिना आत्मपदस्य जीवपरत्वभ्रमनिराकरणं[४] च व्यर्थं स्यात् । न केवलं वक्ष्यमाणाभिधानविसंवाद इति वाऽर्थः ।। '**अन्यत्र**'इत्यत्रावधिमाह– **यद्दर्शनेत्यादि** ।। '**तज्जनकम्**' इत्यत्र तच्छब्दार्थमाह– **तज्जनकं तृप्तेर्जनकमिति** ।।

---

१. **शाङ्करभाष्ये भाग-१.पृ-३१४** ।

२. गुज,वे-ग्रं- चः अधिकः ।

३. गुज,वे-ग्रं - आत्मशब्देन इति नास्ति ।।

४. '**जीवपरत्वोक्तमनिराकरणम्**' इति पां मातृकयोः ।

( आत्मरतिशब्दे समासविचारः )

**भाष्यम् — परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः । अन्यत्र सर्वात्मना अलम्बुद्धिं च[१]।**

### प्रमेयदीपिका

इदानीमात्मशब्दस्य जीवविषयत्वप्रतीतिनिरासार्थं **'आत्मरतिः'** इति समस्तं पदं व्याख्याति– **परमात्मेति** ।। **प्राप्तः**'आत्मरतिः' इति शेषः । अनेन आत्मनि रतिः यस्येति विग्रहः सूचितः । आत्मनो रतिर्यस्येति वा । एवमुत्तरावप्यात्मशब्दौ परमात्मार्थौ ज्ञातव्यौ। [२]नचैवं सति तृप्तिशब्दस्य परमात्मनोऽन्यत्रालम्बुद्धिरर्थः स्यात् । ततश्चेदं न वक्तव्यम् । 'आत्मरतिरेव' इत्यवधारणेनान्यरतिनिरासेन पौनरुक्त्यप्रसङ्गादित्यत आह– **अन्यत्रेति** ।। **अलम्बुद्धिं च प्राप्तः** 'तृप्तशब्देनोक्तः' इति शेषः ।।

( टीकाकृत्सूचितं भाष्यपाठान्तरम् )

**अलम्बुद्धिः इति पाठे** 'तृप्तशब्दार्थः' इति शेषः । अवधारणेनैवात्र रत्यभावे लब्धेऽपि सर्वात्मनाऽन्यत्रालम्बुद्धिं वक्तुं 'तृप्तः' इति पुनर्वचनम् । अवधारणस्यान्यत्रालम्बुद्धिमात्र-द्योतनेन चरितार्थस्य 'सर्वात्मना' इत्यत्राप्रवृत्तेरिति भावः ।।

### भावदीपः

**आत्मनीति** ।। आत्मविषयकदर्शनजन्यसुखं यस्येत्यर्थः । **आत्मन** इति विषय-विषयिभावसम्बन्धः षष्ठ्यर्थ इति भावः ।।

**भाष्यम् — महच्च तत्सुखम्[३] । तेनैवान्यत्रालम्बुद्धिरिति दर्शयति । आत्मन्येव च सन्तुष्ट इति ।। तत्स्थ एव सन् सन्तुष्ट इत्यर्थः । नान्यत् किमपि सन्तोषकारण-मित्यवधारणम् ।।**

---

१. गुज,वे-ग्रं; **'अलम्बुद्धिः इत्यपि पाठः' प्रमेयदीपिका-टीका । टीकाकृत्सूचितपाठान्तरम् ।**

२ गुज,वे-ग्रं,। नन्वेवं -वे.प्र ।

३. गुज,वे-ग्रं -चः अधिकः ।

### प्रमेयदीपिका

ननु 'सन्तुष्टः' इत्यनेनालम्बुद्धिजनकं सुखं प्राप्त इत्युच्यत इत्युक्तम् । तत्किं विषयजन्यम्? उतात्मरत्याख्यम्? नाद्यः । विरोधात् । न द्वितीयः । तस्यात्मरति-शब्देनोक्ततया पुनरुक्तिप्रसङ्गात् । कथं च तस्यान्यत्रालम्बुद्धिजनकत्वम्? इत्यत आह– **महच्चेति** ।। चशब्दो हेतौ। **तत्** आत्मरत्याख्यम् । प्रागुक्तमेव सुखं पुनरन्यत्रालम्बुद्धिकारणत्वेनोच्यते । अतो न दोषः। तस्य च महत्त्वं संशब्देनोक्तम् । अतस्ततत्कारणत्वं चोपपन्नमित्यर्थः ।।

आत्मरतिः सन्तोषशब्देन गृह्यते चेत् पुनः 'आत्मनि' इति व्यर्थमित्यत आह– **तत्स्थ एवेति** ।। सन्तोषाख्यात्मरतिः केनास्य [1]जाता? इत्यपेक्षायामसम्प्रज्ञातसमाधिलक्षणया परमात्मनि स्थित्येति ज्ञापयितुम् 'आत्मनि' इत्युक्तमित्यर्थः । अवधारणस्य प्रयोजनमाह– **नान्यदिति** ।। **अन्यत्** असम्प्रज्ञातसमाधिरूपात् तत्स्थत्वात् ।। एतेन '**आत्मरतिरेव**' इत्यवधारणेनास्य पुनरुक्तता परिहृता ।।

### भावदीपः

**विरोधादिति** ।। विषयजन्यसुखस्य विषयेषु तृष्णाहेतुत्वेनालम्बुद्धिहेतुत्वादिति भावः।। '**चशब्दो हेतौ**' इत्युक्तम् । तस्यान्वयं दर्शयति– **अतो न दोष** इति ।। 'ननु' इत्यादिना शङ्कितदोषो नेत्यर्थः ।। **एतेनेति** ।। आत्मरतावसम्प्रज्ञातसमाधिस्थत्वमेव कारणं नान्यदित्यस्य[2] विवक्षितत्वेनेत्यर्थः ।।

### (आत्मतृप्तशब्दे समासविचारः)

**भाष्यम् — आत्मना तृप्तः । न ह्यात्मन्यलम्बुद्धिर्युक्ता ।**

### प्रमेयदीपिका

ननु 'आत्मतृप्तः' इति कोऽयं समासः? इत्यत आह– **आत्मनेति** ।। न [3]केवलेन आत्मरत्याख्येन सुखेन, किन्तु प्रसन्नेन परमात्मनैवेत्यर्थः । पञ्चमीसमासः कथं न स्यात्? इति चेन्न । असामर्थ्यात् । 'अन्यत्र' इत्यनेन ह्यस्य सामर्थ्यम् । न तु तृप्तशब्दार्थेन । तृप्तशब्दार्थ एवान्यत्रार्थान्तर्भूतो[4]ऽस्तीति चेन्न । तस्य प्रकरणलब्धस्य तदन्तर्भावाभावात् । अन्यथा

१. गुज,वे-ग्रं । बे, प्र- 'जायते' ।  २ 'नान्यदित्यर्थस्य' इति सो-मातृकापाठः ।

३. भा.र.को.।'केवलम्'- इति बे, गुज,वे-ग्रं ।

४. श-१मा,बे,गुज,वे-ग्रं। 'अन्यत्रार्थो अन्तर्भूतः'-भा.र.को । 'अन्यत्रान्तर्भूतः इत्यपि पाठः'-श्रीनि-टि ।

'वयं तु न वितृप्यामः' इत्यत्र 'ततो अन्यत्रालम्बुद्धिं न प्राप्नुमः' इत्यर्थप्रसङ्गात् । अस्तु तर्हि सप्तमीसमास इति, नेत्याह– **न हीति** ।। पूर्वविशेषणविरोधात्,प्रमाणान्तरविरोधाच्चेति भावः।।

### भावदीपः

**असामर्थ्यादिति** ।। तृप्तपदेनाऽकाङ्क्षाराहित्यादित्यर्थः । तदेव व्यनक्ति– **अन्यत्रेति** ।। **'आत्मनः'** इत्यस्यावधिवाचित्वादिति भावः । **प्रकरणलब्धस्येति** ।। भगवत्प्रीतिमात्रोद्देशेन कर्मानुष्ठानापादनस्य[1] प्रकृतत्वेन तृप्तिपदोक्तालम्बुद्धिशब्दितविरागस्य विषयतया[2] भगवतो अन्यस्यैव प्रकरणप्राप्तेरिति भावः ।। **पूर्वविशेषणेति** ।। 'आत्मरतिरेव नत्वन्यत्र रतिमान्' इत्युक्तविशेषणविरोधाद्वा **'वयं तु'** इति प्रमाणान्तरविरोधाच्चेत्यर्थः ।।

**पूरणेति** ।। 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' (**पा.धा.२.२.११**) इति द्वितीयाध्यायद्वितीयपादे सूत्रम् । द्वन्द्वैकवद्भावेनैकवचनम् । अर्थशब्दः प्रत्येकमन्वेति । पूरणार्थेन गुणार्थेन सुहितार्थेन तृप्त्यर्थकेन च शब्देन तथा सत्सञ्ज्ञकशत्रन्तेन[3] सत्सञ्ज्ञकशानजन्तेनाव्ययेन तव्य-प्रत्ययान्तेन समानाधिकरणशब्देन च षष्ठ्यन्तं न समस्यते इति सूत्रार्थः[4] ।।

छात्राणां पञ्चमः,[5] बलाकायाः शौक्ल्यं, फलानां तृप्तेः, ब्राह्मणस्य कुर्वन्, ब्राह्मणस्य कुर्वाणः, ब्राह्मणस्य कृत्वा, ब्राह्मणस्य कर्तव्यः[6], राज्ञः पाटलिपुत्रकस्य' इति क्रमादुदाहरणानि । तथाच प्रकृते सुहितार्थकेन तृप्तपदेन समासो निषिद्ध इत्यर्थः । अत एव 'सुहितार्थ' इत्यन्तप्रतीकोक्तिः ।।

---

१. '-नुष्ठानचोदनस्य' इति मं+ सोमातृकयोः ।

२. इत आरभ्य 'इत्यर्थः' इति पर्यन्तं मं-मातृकायां सो-मातृकायां च । कां मातृकायामयं भागः नास्ति ।

३. 'शत्रन्तेन सत्संज्ञक' इति सो-मातृकायामेव पठ्यते ।

४. अयं भावानुवादः । पाणिनीयवृत्तौ काशिकावृत्तौ वा नैवंविधो वाक्यक्रमः । 'पूरण,गुण,सुहितार्थ,सत्, अव्यय, तव्य, समाधिकरण- इत्येतैः सह षष्ठी न समस्यते । अर्थशब्दः प्रत्येकमभिसम्बद्धते । तत स्वरूपविधिर्न भवति । पूरणार्थे छात्राणां पञ्चमः । छात्राणां दशमः । गुण-बलाकायाः शौक्ल्यम् । काकस्य कार्ण्यम् । सुहितार्थाः तृप्त्यर्थाः । फलानां सुहितः । फलानां तृप्तः । सत् ब्राह्मणस्य कुर्वन् । ब्राह्मणस्य कुर्वाणः । अव्यय ब्राह्मणस्य कृत्वा । ब्राह्मणस्य हृत्वा । तव्य ब्राह्मणस्य कर्तव्यम् ।..। समानाधिकरण-शुकस्य माराविदस्य,राज्ञः पाटलिपुत्रकस्य, पाणिनेः सूत्रकारस्य' इति काशिकायाम् । २-भाग ,१११-११३ पत्राणि ।

५. सो-मातृकापाठः । 'शास्त्राणामवमः' इति काणियूरुमातृकायाम् ।

६. कर्तव्यं इति पां-काणियूरु ।

**भाष्यम् —** तद्वाचित्वं च -

**'वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः'**[१] (भाग.१.१.१९)

इति प्रयोगात् सिद्धम् ।

अध्याहारस्त्वगतिका गतिः ।।

**प्रमेयदीपिका**

स्यादयं दोषो यदि तृप्तिशब्दस्यालम्बुद्धिवाचित्वं स्यात् । तदेव कुतः? इत्यत आह– **तद्वाचित्वं चेति** ।। नन्वत्र तृप्तिशब्दः प्रीत्यर्थः । न चैवं सत्यर्थानुपपत्तिः । उत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैरन्यत्र प्रीतिं न प्राप्नुम इत्यध्याहारेणोपपत्तेरित्यत आह – **अध्याहार-स्त्विति** ।। गत्यन्तररहिता गमनिका । अध्याहारो ह्यश्रुतशब्दकल्पनम् । तच्च कल्पकसद्भावे न दोषः । अन्यथा [२]दोष एव । कल्पकं च गत्यन्तरराहित्यम् । अन्यथाऽनुपपत्तिरिति यावत्। अत्र त्वलम्बुद्ध्यर्थत्वे गृहीते विनाऽप्यध्याहारेण वाक्यार्थोपपत्तेरयुक्तोऽसाविति भावः। षष्ठी-समासस्तु 'पूरणगुणसुहितार्थ'(२.२.११) इति प्रतिषिद्धः ।।

**( स्थितप्रज्ञस्यापि कार्यं विद्यते )**

**भाष्यम् —** आत्मरतिरेवेत्यवधारणादसम्प्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यते ।

**'स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते यदा ।**
**स्वधर्मो मम तुष्ट्यर्थः सा हि सर्वैरपेक्षिता ।।'**

इति वचनाच्च पञ्चरात्रे ।

अन्यदाऽन्यरतिरपीषत् सर्वस्य भवति ।

**प्रमेयदीपिका**

अपव्याख्यानं निराचष्टे[३]– **आत्मरतिरेवेति** ।। 'न ज्ञानिमात्रस्य' इत्येवार्थः ।।

---

१. 'भवतां बहुशः श्रुतहरिकथानां किमित्ययमुत्कण्ठाविशेष इत्यत आह-वयमिति । वयमुत्तमश्लोकस्य हरेर्विक्रमैः श्रुतैर्न वितृप्यामः । अन्येषां तृप्तिरस्तु वा, नास्माकामलम्बुद्धिरित्येतस्मिन्नर्थे तुशब्दः' इति विजयध्वजतीर्थाः ।

२. श्रीनि-टि , भार,को. । तु इत्यधिकं -बे, गुज,वे-ग्रं।

३. गुज,वे-ग्रं । 'व्याचष्टे '-इति बे ,प्र-पाठः अपपाठः ।

इतोऽपि न ज्ञानिमात्रस्य कार्याभाव इत्याह– **स्थितप्रज्ञस्यापीति** ।। **स्वधर्मः कार्य** इति सम्बन्धः । '**आत्मरतिरेव**' इत्यवधारणेऽपि कुतो न ज्ञानिमात्रविषयमेतत्? इत्यत आह– **अन्यदेति** ।। अवधारणेन ह्यनात्मरतिर्व्यावर्त्यते । असम्प्रज्ञातसमाधिकालात् **अन्यदा** सर्वस्य ज्ञानिनः **अपि ईषदन्यरतिः भवति** इत्युपपादितम् । अतोऽसम्प्रज्ञातसमाधिस्थव्यतिरिक्तानां ज्ञानिनामप्यवधारणेन व्यावर्तितत्वान्न तद्विषयमेतदिति भावः ।।

**भावदीपः**

उपपादितमिति ।। '**किमासीत व्रजेत किम्**' (२.५४) इत्येतत्तात्पर्यवर्णनप्रस्तावे पूर्वाध्याय इत्यर्थः ।।

**भाष्यम् — नच तत्रालम्बुद्धिमात्रमुक्तम् । आत्मतृप्तः इति पृथगभिधानात् । कर्तृशब्दः कालावच्छेदेऽपि चायं प्रसिद्धः- 'यो भुङ्क्ते स तु न ब्रूयात्' इत्यादौ ।**

**प्रमेयदीपिका**

ननु ज्ञानिनामन्यरतौ विद्यमानायामपि तत्रालम्बुद्धिरप्यस्तीति 'आत्मरतिरेव' इत्यवधारण-मुपपद्यत इत्यत आह– **न चेति** ।। **तत्र** श्लोके । **तत्र** कार्याभावे । प्रयोजकत्वेनात्मनोऽन्यत्र **अलम्बुद्धिमात्रम्** अल्पालम्बुद्धिः । रतिसहचरितालम्बुद्धिरिति यावत् । नोक्ता किं तर्हि? सर्वात्मनाऽलम्बुद्धिः । कुतः? इत्यत आह– **आत्मेति**।। अवधारणेनान्यत्रालम्बुद्धौ लब्धायामपि यत् पृथक् 'आत्मतृप्तः' इत्यभिधत्ते, तेन सर्वात्मनाऽलम्बुद्धिरवधारणेनाभि-प्रेतेति ज्ञायत इति प्रागुक्तम् । अतो ज्ञानिमात्रे नेदमुपपद्यत [१]इत्यर्थः ।।

'यस्त्वात्मरतिरेव' इत्येतदसम्प्रज्ञातसमाधिस्थ एव [२]सम्भवि । तथाऽपि 'यत् पतति[३] तद् गुरु इतिवत् 'य एवंविधः कदाचित्तस्य सर्वदा कार्यं न विद्यते' इत्येवं व्याख्याने ज्ञानिमात्रस्य कार्याभावः सेत्स्यति । न ह्यत्र यदेवं तदेति कालावच्छेदकशब्दोऽस्ति । आत्मरतिरिति समासस्तु रतेः कर्तारमेवाचष्ट इत्यत आह– **कर्तृशब्द** इति ।। **अयं च** यदा

१. बे- गुज,वे-ग्रं । प्र -इति भावः।
२. वे- गुज,वे-ग्रं,। प्र-सम्भवतीति ।
३. वे । अयमेव मूलपाठः सम्मतः श्रीनि-टि, भावदीपस्य च । 'कदाचित्'इति अधिकं-प्र.पाठे ।।

तदेति रहितोऽपीत्यर्थः । आदिग्रहणेन 'यो दारान् [1]परिगृह्णाति स गृही' इत्यादेः परिग्रहः ।।

**भावदीपः**

**समासस्त्विति** ।। आत्मनि रतिर्यस्य स आत्मरतिरिति समासस्त्वित्यर्थः । रतिकर्तृत्वस्य समासलभ्यत्वात् **'समासस्तु'** इत्युक्तम् ।।

**भाष्यम् — अतोऽसम्प्रज्ञातसमाधावेवैतत् ।।**

**प्रमेयदीपिका**

**( व्यावर्तकं द्विविधम् )**

अयं भावः । **'तस्य कार्यं न विद्यते'** इत्युक्तेऽतिप्रसक्तौ सत्यामन्यव्यावर्तकं **यस्त्वात्मरतिरेव स्यात्** इत्यनेनोक्तम् । व्यावर्तकं च द्विविधं भवति । विशेषणमुपलक्षणं चेति[2]। तत्र व्यवच्छेद्यसमानकालं विशेषणम् । यथा सिद्धान्त्युदाहृतं भोजनम् । अन्यथा तूपलक्षणम् । यथा पूर्वपक्ष्युदाहृतं पतनम् । तत्र विशेषणं मुख्यम् । विशेषज्ञानहेतुत्वात्। अन्यदमुख्यम् । वैपरीत्यात् । मुख्यामुख्ययोश्च मुख्ये कार्यसम्प्रत्ययः[3]। नचात्र विशेषणत्वग्रहणे बाधकमस्ति । येनोपलक्षणमेतदिति प्रतीम इति ।।

कर्तृशब्द इत्युक्तस्य फ़लमाह– **अत** इति । **एतत्** कार्यराहित्यम् । 'समाधावेव' इत्युक्त्या समानकालतां सूचयति ।।

**भावदीपः**

[4]ननु 'यो भुङ्क्ते' इत्यादि दृष्टान्त इव 'यत् पतति तद्गुरु' इत्यपि दृष्टान्तोऽस्ति । तथाच कथं निर्णयः? इत्यत आह– **अयं भाव इति** ।। 'भाष्यकारस्य' इति योज्यम् । **व्यवच्छेद्यसमकालमिति** ।। [5]स्वसमकालाननुव्यवच्छिनत्ति व्यावर्तयति, यत् तद् व्यवच्छेद्य-समकालभोजनं स्वसमानकालीनं वचनं व्यावर्तयतीति तद् विशेषणम् । पतनं तु स्वसम-

---

१. गुज,वे-ग्रं । प्रतिगृह्णाति -बे ,प्र ।

२. गुज,वे-ग्रं । बे -इतिर्नास्ति ।

३. वे ,गुज,। अयमेव साधु । प्र.पाठे कार्य इति न पठ्यते । 'सम्प्रत्यय' इत्येव ।

४. भा.र.को.उदाहृतम् ।

५. **'स्वसमकालं व्यवच्छिनत्ति व्यावर्तयति, अगुरुत्वं व्यावर्तयति इति मं मातृकायाम् ।**

कालीनमेव गुरुत्वं न व्यावर्तयति । पतनस्य कादाचित्कत्वात्, गुरुत्वस्यान्यदाऽपि सत्वात् । अतस्तदुपलक्षणमित्यर्थः ।। **विशेषज्ञानेति** ।। यावत्कालमन्यव्यावृत्तिबुद्धिहेतुत्वादित्यर्थः । यद्वा स्वप्रकारधर्मिज्ञानहेतुत्वादित्यर्थः ।।

**( मानवशब्दार्थः )**

**भाष्यम् —'मानवः' इति ज्ञानिन एवासम्प्रज्ञातसमाधिर्भवतीति दर्शयति । 'मनु अवबोधने' (पा.धा.१४७१) इति धातोः । परमात्मरतिश्चात्र विवक्षिता ।**

**'विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि'**

**इति वचनात् ।। १७ ।।**

**प्रमेयदीपिका**

नन्वसम्प्रज्ञातसमाधिस्थस्य कार्याभावे व्याख्यायमाने कदाचिद् अपरोक्षज्ञान-रहितस्याप्यसम्प्रज्ञातसमाधिसम्भवात् कार्याभावप्रसङ्ग इति चेन्न । अपरोक्षज्ञानिन एवासम्प्रज्ञातसमाधिर्भवति नान्यस्य इत्यस्यार्थस्य 'मानवः' इति पदेन भगवतैव दर्शितत्वादित्याह– **मानव** इति ।।

'मानवः' इति कथं ज्ञानिनो वाचकम्? इत्यत आह– **मन्विति** ।। **धातोः** 'व्याख्यानात्' इति शेषः । अस्माद् धातोः भावे उप्रत्ययः । ततो **मनुः** अवबोधः [1]अस्यास्तीत्यस्मिन्नर्थे, मनोरयमाश्रय इत्यर्थे वाऽण्प्रत्ययः । यद्वा धातोरेवावण्प्रत्ययः । 'मनुष्यः' इति व्याख्यायाम्[2] ऋष्यादिव्यावृत्तिर्वैयर्थ्यं चापद्येत ।।

आत्मशब्दस्याप्यन्यथाव्याख्यां[3] निराकरोति– **परमात्मेति** ।। चशब्दोऽवधारणे । न स्वात्मरतिरित्यर्थः । **तस्यैवे**त्यवधारणादिति ।। १७ ।।

**भावदीपः**

**उप्रत्यय इति** ।। औणादिक इति भावः ।। **अण्प्रत्यय इति** ।। 'तद्धिताः' **(पा.सू.४.१.७६)** इति बहुवचनोक्तिबलादिति ज्ञेयम् । तथा च 'ओर्गुणः' **(पा.सू.६.४.१४६)** इति गुणे, अवादेशे, णित्वात् 'तद्धितेष्वचामादेः'**(पा.सू.७.२.११२)** इत्यादिवृद्धौ रूपमिति भावः ।। **अवण्प्रत्यय**

१. गुज,वे-ग्रं । बे -'अस्यास्तीत्यर्थे '।

२. शाङ्करभाष्ये -(भा.र.को) अपव्याख्याननिराकरणमिदम् ।

३. आत्मरतिः आत्माभिमुखः इति -रामानुजभाष्ये ।

इति ।। 'उणादयो बहुलम्' (पा.सू.३.३.१) इत्युक्तेः [१]औणादिके कर्त्तरि अवणप्रत्यये णित्वात् 'अत उपधायाः' (पा.सू.७.२.११६) इति वृद्धौ मन्यत इति वा, मनुत इति वा, मानव इति रूपमिति भावः ।। **ऋष्यादिव्यावृत्तिरिति** ।। तेषामप्यसम्प्रज्ञातसमाधिमत्वाज्ज्ञानित्वाच्च तद्व्यावृत्तिरनिष्टेति भावः । तथा व्याख्याने च व्यर्थमेव मानवपदम्। 'यस्तु तस्य' इत्येतावता पूर्तेरित्याह– **वैयर्थ्यं चेति** ।। कुत एवं व्याख्या? इत्यतो ज्ञापकमाह– **तस्यैवेतीति** ।। प्रमाणवचने **'तस्यैव'** इत्यवधारणाद् विष्णुरतिरेवात्र विवक्षिता न स्वात्मरतिः, तस्या कार्यान्तरसत्वादिति भावः ।।

इतिशब्दो **'यस्तु'** इति (१७)श्लोकव्याख्यासमाप्तौ ।।

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ।। १८ ।।**

**भाष्यम् — तस्य 'कर्मकाले वक्तव्योऽहम्' इति कश्चित् प्रत्युत्त्वा तत्कृतावात्मरत्यधिकः समो वाऽर्थो नास्ति ।।**

**प्रमेयदीपिका**

[२]यद्ययं कार्याभावो न ज्ञानिमात्रस्य । किन्त्वसम्प्रज्ञातसमाधिस्थस्यैव । तर्हि **'नैव तस्य कृतेनार्थः'** इत्युत्तरं वाक्यं न [३]सम्बद्ध्यते । असम्प्रज्ञातसमाधेः करणस्यैवाभावेन तत्प्रयोजनाभावकथनस्यैवायोगात् । ज्ञानिनस्तु करणसम्भवेन तत्प्रयोजन[४]प्रतिषेधोपपत्तेरिति चेन्न । तर्ह्यतीव मनस्समाधानमपि न कार्यमित्याक्षेपस्य **'तस्य कार्यं न विद्यते'** इत्युत्तरं कस्मादुक्तम्? **कर्मकृतिकाले** त्वयाऽहमुद्बोधनीय इति **कश्चित्** [५]प्रत्युत्त्वा समाहितः, तेन योगशास्त्रोदितोपायैरुद्बोधितः कर्म करोतीति कुतो नोक्तम्? इत्याशङ्कानिरासायेदमेवमुच्यत इत्यभिप्रेत्य व्याचष्टे– **तस्येति** ।। **तस्य** असम्प्रज्ञातसमाधिस्थस्य । **अर्थो नास्ती**ति सम्बन्धः।

---

१. मं,कां-मातृकयोरयं भागः पूर्वत्रैव लिखितः ।'अणादिके कर्त्रर्यचत्प्रत्यये' इति च कां .मातृकायाम् ।
२. बे-गुज । 'यदीयं कार्याभावोक्तिः' इत्यपि क्वचित् पाठः– भा.र.को, वे-ग्रं ।
३. वे,गुज.वे-ग्रं ।'सङ्गच्छते'-प्र ।
४. बे,गुज.वे-ग्रं ।'प्रतिषेधस्य उपपत्तेः' -प्र ।
५. वे,गुज.वे-ग्रं । 'प्रत्युक्तः'-प्र ।

उक्त्वा 'उद्बुद्धस्य'[1] इति शेषः । एवं तर्हि **तस्यैव महत्सुखत्वात्** इत्याद्युक्ति[2]विरोध इत्यत उक्तम् - **आत्मेति** ।। **समो वा** आत्मरत्या । समप्रतिषेधः कैमुत्यार्थः । नतु समव्ययफलं कर्मानुष्ठीयते ।।

**भावदीपः**

[3]त्त्वाश्रुतिनिर्वाहाय समानकर्तृकक्रियान्तरमाह– **उद्बुद्धस्येति**[4] **शेष इति** ।। **एवं तर्हीति** ।। कर्मकृतावर्थो नास्तीति पक्षे -

**'यदा ते मोहकलिलम्'**(२.५२) इति श्लोके
**'तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च'** (२.५२) इत्यस्य
**'निर्वेदं नितरां लाभं नतु वैराग्यम्'** इति व्याख्यावसरे
**'तस्यैव भगवच्छ्रवणादिकर्मण एव महत्सुखत्वात्
तदेव ज्ञानिनाऽप्यवश्यं कार्यम्'** इत्युक्तेः, तद्विरोध इत्यर्थः ।।

बुद्ध्याविभज्यानुषङ्गेणान्वयमाह–**समो वा आत्मरत्येति**।। अप्रसक्तनिषेधदोषनिरासायाऽह– **समप्रतिषेध इति** ।। अप्रसक्तिमेवाह– **नतु समेति** ।। **व्ययपदं** दृष्टान्तार्थम् ।। **उक्तविरोधादिति** ।। **'मा भूदल्पस्य'** इत्यादिना उक्तविरोधात् इत्यर्थः ।।

**भाष्यम् — नच सन्ध्याद्यकृतौ कश्चिद्दोषोऽस्ति । न चैतदपहाय सर्वभूतेषु कश्चित् प्रयोजनाश्रयः । अर्थो येन दर्शनादिना भवति सोऽर्थव्यपाश्रयः ।।**

**प्रमेयदीपिका**

नन्वत्र 'कश्चन' इत्यस्य विशेष्याकाङ्क्षायां सन्निधानात् 'अर्थः' इति सम्बद्ध्यते । तथा चेदमयुक्तम् । न हि कर्माकरणेऽर्थप्राप्तिरस्ति । येन प्रतिषेधः सङ्गच्छेत । अर्थसन्निधानादपि योग्यताया बलवत्त्वात् कश्चन 'दोषः' इत्यध्याह्रियते । तथाप्यश्वमेधाद्यकृतौ प्रत्यवायाप्राप्तेः प्रतिषेधोऽसङ्गत एवेत्यतो 'नाकृतेन' इत्येतद्व्याचष्टे– **न चेति** ।। मा भूद् यज्ञादिकरणार्थ-

---

१. वे,गुज.वे-ग्रं । 'उद्बोधितस्य' -प्र -भावदीपे पाठान्तरम् ।
२. **गुज,वे-ग्रं । अयं भावदीपसम्मतः । भा.र.को-'इत्युक्तविरोधः'। 'इत्याद्युक्त'-प्र ।**
३. 'उक्त्वा इत्यत्र' इत्यादौ योज्यम् ।
४. 'उद्बोधितस्य' इति-पां सो-मातृकायाम् ।

मुत्थानम् । नित्यनैमित्तिकाकरणे प्रत्यवायप्राप्तेः[१] । तदर्थं तु स्यात् इत्याशङ्कानिरासार्थम् एतत् । **'सन्ध्या'** इति तत्कालेऽनुष्ठेयं कर्मोच्यते ।।

माभूदल्पस्य यज्ञादेरनुष्ठाने प्रयोजनाभावः,[२]सन्ध्याकृतौ प्रत्यवायश्च । तथाऽपि गुरुदेवतादिपूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव । अतस्तत्सन्निधिप्राप्तावुत्थानमावश्यकमेवेत्याशङ्कानिरासार्थं **'न चास्य'** इत्युक्तम् । तदयुक्तम् । उक्तविरोधादेवेत्यतो व्याचष्टे - **न चैतदिति** ।। **एतत्** असम्प्रज्ञातसमाधानम् । **अपहाय** 'उत्थितस्य' इति शेषः । **'अपहाय'** इत्यनेन गुर्वादिपूजाया अपि[३] आधिक्यं निषेधति । आधिक्यस्यैव पूर्वत्यागोपयोगित्वात् । **सर्वभूतेषु** गुर्वादिषु ।।

नन्वर्थव्यपाश्रयः नाम = अर्थप्राप्तिः[४]। तथाच सर्वभूतेभ्य इति स्यादित्यत आह– **अर्थ इति** ।। अनेनार्थस्य व्यपाश्रयः प्राप्तिः **येन दर्शनादिना** व्यापारेण **भवति** इति व्यधिकरणो बहुव्रीहिरयमित्युक्तं भवति । तथा च दर्शनादेर्विषया गुर्वादय इति सप्तम्युपपत्तिः । अनेन अर्थव्यपाश्रयोऽप्युपलक्ष्यते ।।

**भावदीपः**

ल्यबन्तनिर्वाहाय समानकर्तृकक्रियान्तरमाह– **उत्थितस्येति शेष इति** ।। 'इति स्यात्' इति प्रयोजनावाप्तौ तेषामवधित्वप्राप्तेरिति भावः । पुल्लिङ्गनिर्वाहायोक्तम्– **व्यापारेणेति** ।। [५]**इत्यप्युपलक्ष्यत इति** ।। गुरुदेवताविषयकदर्शनस्स्पर्शनवन्दन पूजादिव्यापारः कश्चिदप्यर्थप्राप्तिहेतुर्न भवति तथा तत्करणाभावोऽपि अनर्थव्यपाश्रयप्रत्यवायप्राप्तिहेतुर्न भवतीत्युपलक्षणीयमित्यर्थः ।।

**भाष्यम् — ज्ञानमात्रेण यद्यपि प्रत्यवायो न भवति । तदर्जुनस्यापि सममिति न तस्य कर्मोपदेशोपयोग्ये तद् भवति । ईषत्प्रारब्धानर्थसूचकं च तद् भवति ।**

---

१. **न्यायसुधा-३-३-४८.(षट्टिप्पणी-पृ-५००८)**'नित्यं नाम यदकरणे प्रत्यवायः,ब्राह्मण्यादिकमेव च निमित्तमुपादाय विहितं तदुच्यते । यथा सन्ध्यावन्दनादि । नैमित्तिकं नाम-यदकरणे प्रत्यवायः पितृमरणाद्यागन्तुकं च निमित्तमुपादाय विहितं तदुच्यते । यथा पितृश्राद्धादि ।।' इति ।।

२. कृ-टिप्पण्यनुगुणः।'सन्ध्यायकृतौ'इति (वे,गुज.वे-ग्रं.),भा.र.को ।

३. वे, गुज.वे-ग्रं। 'पूजायाम् ..'- प्र ।

४. बे, गुज.वे-ग्रं। 'प्रयोजनप्राप्तिः'-प्र ।

५. इदं वाक्यं मं मातृकायामेव । का- मातृकायां 'उपलक्ष्यत इति।। गुरुदेवता..र्थः' इति ।

**महच्चेद् वृत्रहत्यादिवत् ।। १८ ।।**

## प्रमेयदीपिका

स्यादेतत् । किमनेनायासेन? ज्ञानिमात्रविषयमेतत् किं न स्यात्? ज्ञानमात्रेण प्रत्यवायाभावात् । तत्राप्यस्यार्थस्य सम्भवात् । अवधारणादेश्चोपचरितार्थत्वसम्भवादित्यत आह– **ज्ञानेति** ।। **तद्** ज्ञानमात्रम् । इतिशब्दो हेतौ[1] । **एतत्** कार्याभाववचनम् । प्रत्युत विरोधीति हृदयम् । **'प्रत्यवायो न भवति'** इत्यङ्गीकृत्योक्तम्[2]। वस्तुतस्तु ज्ञानिनोऽप्यस्ति प्रतिषिद्धकर्मकरणादिनाऽनिष्टप्राप्तिरित्याह– **ईषदिति** ।। सूचिते च तदैव चित्तखेदः । उपलक्षणं चैतत् । मुक्तावानन्दह्रास इत्यपि द्रष्टव्यम् । तथा विहितकरणे नानन्दवृद्धिरपीति ।। १८ ।।

## भावदीपः

**तत्राप्यस्यार्थस्येति** ।। ज्ञानिमात्रेऽपि **'कार्यं न विद्यते'** इत्यादिनोक्तार्थस्येत्यर्थः।। **आत्मरतिरेव** इत्यवधारणात् **'असम्प्रज्ञातसमाधिस्थस्यैव'**[3] इत्युक्तस्य गतिमाह– **अवधारणादेश्चेति**[4] ।। आदिपदेन **'आत्मतृप्तः, आत्मन्येव च सन्तुष्टः'** (३.१७) इत्यस्य[5] ग्रहणम् ।। १८ ।।

**तस्मादसक्तस्सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ।। १९ ।।**

**भाष्यम् —** यतोऽसम्प्रज्ञातसमाधेरेव कार्याभावः, **तस्मात् कर्म समाचर** ।।

## प्रमेयदीपिका

**'तस्मादसक्तः'** इति परामर्शविषयो न प्रतीयते । अतः[6] तं दर्शयन् व्याख्याति– यत

---

१. वि.त.नि.टीकायाम्- 'नच जीवेश्वरभेदः सिद्ध इत्यनुवादकत्वम्' इतिमूलव्याख्याने इति शब्दो हेतौ' इति । व्या.टि- इतिशब्द इति । इति हेतुप्रकरणप्रकारादिसमाप्तिषु इत्यभिधानात् '।

२. बे, गुज, वे-ग्रं । प्र - एवशब्दो अधिको दृश्यते ।

३. 'असम्प्रज्ञातस्यैव' इति कां ।

४. 'धारणादेरिति ' इति का ।

५. 'इत्यनयोर्ग्रहणम्' इति का ।

६. बे, गुज, वे-ग्रं । प्र-'अतः' इति नास्ति ।

इति।। 'त्वं चेदानीमसम्प्रज्ञातसमाधिर्न भवसि' इति शेषः । कर्मणोऽवश्यकर्तव्यत्वेऽसम्प्रज्ञात-समाधिविलोपप्रसङ्गान्नेदमवश्यं कर्तव्यमित्यतः 'अहमपि न कुर्याम्' इति परिचोदनायाम् असम्प्रज्ञातसमाधिस्थविलोप[1]प्रतिबन्दीं मोचयितुं तस्य वैलक्षण्यमुक्त्वा तत्फलमिदमुच्यत इति नासङ्गतिः ।। १९ ।।

**भावदीपः**

ननु '**कर्मकृतावकृतौ वाऽर्थानर्थौ न स्तः**' इत्युक्त्वा पुनरत्र '**कर्म समाचर**' इत्युक्तिर्न सङ्गतेति शङ्कां निराह– **कर्मणोऽवश्यकर्तव्यत्व** इत्यादिना ।। **परिचोदनायामिति**।। अर्जुनेन कृतायामिति योज्यम् ।। **उक्त्वेति** ।। '**यस्तु**' इत्यादिश्लोकद्वयेनेति योज्यम् ।।१९।।

( जनकादयः कर्मयोगिनः )

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि ।। २० ।।**[2]

**भाष्यम् —** [3]आचारोऽप्यस्तीत्याह– **कर्मणैवेति ।। कर्मणा सह कर्म कुर्वन्त एवेत्यर्थः । कर्म कृत्वैव, ततः ज्ञानं प्राप्य इति**[4] **वा ।।**

**प्रमेयदीपिका**

'कर्मण एव मुक्तिसाधनत्वमुच्यते'[5] इत्यन्यथाप्रतीतिनिरासाय 'कर्मणैव हि' इत्यस्य तात्पर्यं तावदाह– आचारोऽपीति ।। 'विहितस्य कर्मणः कर्तव्यतायां प्रमाणम्' इति शेषः। **अपिः** पूर्वोक्तहेतुसमुच्चये । कर्मण एव 'मोक्षकारणत्वं तृतीययोच्यते' इति प्रतीतिनिरासाय व्याचष्टे– **कर्मणे**ति ।।

---

१. वे, गुज,वे-ग्रं। प्र-'विलोप' इति नास्ति ।

२. (अ) ब्र.सू.भा. विद्याधिकरणेऽयं श्लोकः विवृतस्तत एवावसेयः ।

(आ) ३.३.५० श्रुत्यधिकरणेऽपि 'कर्मणैव' इत्ययोगव्यवच्छेदः' इत्यादि भाष्यमपि तत्रैव द्रष्टव्यम् ।

३. वि.त.नि. व्या.टि. मङ्गलवादे- 'अत एव गीताभाष्ये 'आचाराच्चैवमित्याह- कर्मणैव हि इति चशब्दः प्रयुक्तः' इति वाक्यं पठितम् । तेनात्र भाष्यपाठे पाठान्तरमूह्यम् ।

४ वे,गुज,वे-ग्रं,प्र-पाठेषु इति शब्दो नास्ति । तथाऽपि भावदीपानुसारेण इतिः योजितः ।

५ शाङ्करभाष्यभावानुवादः। द्रं-सङ्कर.भाष्यं. भाग.१-पृ.३११।

## ( सहयोगे तृतीयाविचारः )

नन्वेवं सहयोगे तृतीयायां व्याख्यायमानायां जनकादयः कर्मणा सहैव मुक्तिमास्थिता इति वाक्यार्थः स्यात् । न चायं युक्तः । 'पुत्रेण सहैवागतः पिता' इत्यत्र यथा पुत्रस्याप्यागमनान्वयः प्रतीयते तथा कर्मणोऽपि मुक्तिमास्थितत्व[1]प्रसङ्गादित्यत आह– **कर्मेति**।।

यद्यपि श्रूयमाणक्रियायां सहयोगो नोपपद्यते । तथाप्यध्याहृतावान्तरक्रियायामुपपद्यत एव। ततश्च यथा 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र दशभिः पुत्रैः सहैव वर्तमानाप्येकैव भारं वहतीत्यर्थः, तथाऽत्रापि **कर्मणा सहैव वर्तमानाः** कर्म कुर्वन्त एव इत्यर्थ उपपद्यत इति भावः । [2]द्विधा अपि सहयोगमभिप्रेत्य समासविधौ पाणिनिरपि [3]विशेषणमभाणीत् 'तेन सहेति तुल्ययोगे' **(पा.सू.२.२.२८)** इति ।।

### भावदीपः

**पूर्वोक्तहेत्विति** ।। **'तस्मात्'** इति श्लोकोक्तहेत्वित्यर्थः ।। **श्रूयमाणक्रियायामिति** ।। संसिद्धिशब्दितमुक्तिप्राप्तिरूपक्रियायामित्यर्थः ।। **अध्याहृतेति** ।। वर्तमानत्वरूपावान्तर-क्रियायामित्यर्थः । 'सहयुक्तेऽप्रधाने' **(पा.सू.२.३.१९)** इत्यत्र सहयोगः प्रधानक्रियायामवान्तर-क्रियायां च द्वेधा विवक्षित इत्यत्र ज्ञापकमाह– **द्विधा अपीत्यादिना** ।। कुत्र विशेषण-मवादीत्? इत्यत आह– **तेन सहेति तुल्ययोग इतीति** ।।

द्वितीयाध्यायद्वितीयपादे 'तेन सह' इति बहुव्रीहिसमासविधायकं सूत्रम् । तुल्ययोगः समानसम्बन्धः सहेत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेनेति तृतीयान्तेन समस्यते । 'सपुत्र आगतः' इति । तुल्ययोग इति किम्? 'सहैव दशभिः पुत्रैः' इत्यादौ 'सपुत्रा गर्दभी' इति न भवति । [4]भारवहनक्रियायां सहभावाभावात्। वर्तमानक्रियायामेव सहभावात्' इति वृत्त्यादावुक्तेः[5]।

१ वे,गुज,वे-ग्रं. मुक्तिमास्थितत्वस्य इति दृश्यते ।

२. वे, गुज,वे-ग्रं; रा-टि,श्रीनि-टि, कृ-टि,। अत्र **'द्विविधं हि इत्यपि क्वचित् पाठः' भा.र.को.। तथा, तत्रैव राघवेन्द्रतीर्थीयम् इत्युदाहृत्य द्विविधं हि-इति प्रतीकग्रहणं कृतम् ।। सो-द्विधापि प्रतीकमपि लिखितम् ।**

३. **'पाणिनिः अविशेषम्'** इति- वे,गुज. वे-ग्रं. ।। परं तु टिप्पणीषु विशेषणम् इत्येव प्रतीको दृश्यते ।।

४. इदं वाक्यं सो-मातृकायामेव पठ्यते । उत्तरवाक्यं नास्ति ।

५. **'सह'इत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं 'तेन' इति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति । सहपुत्रेणागतः सपुत्रः ।.. । तुल्ययोग इति किम् ? 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'। विद्यमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थः' इति वृत्तिकारवचनम् । 'तुल्ययोगः समानसम्बन्धः' इति न्यासवचनम् । तथाच भावदीपः वृत्त्यर्थानुवादपरः । काशिकावृत्तिः भाग-२, पृ१३८ ।**

अतः 'तुल्ययोग' इति विशेषणं वदन् पाणिनिः[१] 'अतुल्ययोगेऽप्यस्ति सहयोगः' इत्यभिप्रैतीति भावः ।।

### प्रमेयदीपिका

कर्मसाहित्यं च मुक्तावानन्दवृद्ध्यर्थमिति ज्ञातव्यम् । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति चेत् - सत्यम् । वक्ष्यमाणबाधात् तत्परिग्रहोपपत्तेः । अथवा[२] करणे तृतीया । तथाऽपि 'लाङ्गलेन वयं जीवामः' इतिवत् पारम्पर्येण कर्मणो मुक्तौ कारणत्वमित्याह – **कर्मे**ति।। सिद्धिमास्थिता इति वेत्यर्थः ।। सिद्धिशब्दो ज्ञानार्थः, 'वा' इत्यस्याप्युपलक्षणमेतत् ।।

### भावदीपः

ननु कर्मणां मुक्त्यहेतुत्वे 'तत्सहिताः सन्तः संसिद्धिमास्थिताः' इत्युक्तिः कथम्? इत्यतो मुक्त्यैकदेशहेतुत्वेनेत्याह– **कर्मसाहित्यं चेति** ।। **उपपदेति** ।। 'सहयुक्ते' (**पा.सू.२.३.१९**) इति सूत्रोक्ता तृतीया सहेत्युपपदप्रयुक्ता सहपदाप्रयोगे । तदर्थविवक्षायां 'प्राप्त' इति तृतीयाया अपि उपपदविभक्तित्वात् । 'कर्तृकरणयोस्तृतीया'(**पा.सू.२.३.१८**) इति करणार्थतृतीया तु कारकविभक्तिः । सा तु अन्तरङ्गत्वाद्बलीयसीत्यर्थः ।। **वक्ष्यमाणेति** ।। 'तमेवम्' इत्यादिनेति भावः ।। **'इति वा'** इतिशब्दात् पूर्वं भाष्ये शेषमाह– **सिद्धमास्थिता इति** ।। एवं च सति पारम्पर्यं व्यक्तीकृतं भवति ।। **सिद्धशब्दः** गीतास्थ इत्यर्थः ।। **एतदिति** ।। **'कर्म कृत्वैव'** इत्यादि भाष्यमित्यर्थः । तथा च कर्मणा ज्ञानमाप्ता इत्येव गीतार्थ इति भावः ।।

**भाष्यम् — न तु ज्ञानं विना । प्रसिद्धं हि तेषां ज्ञानित्वं भारतादिषु ।**

**'तमेवं विद्वान्'(तै.आ.३.१२) इत्यादि श्रुतिभ्यश्च ।**

**अत्रापि कर्मणां ज्ञानसाधनत्वोक्तेश्च 'बुद्धियुक्तः'(२-५१) इति ।।**

### प्रमेयदीपिका

यथाप्रतीतार्थः किं न स्यात्? इत्यत आह– **न त्विति** ।। **ज्ञानं विना** केवलेन कर्मणा जनकादयः सिद्धिं गता इत्यर्थस्तु नेत्यर्थः । कुतः? इत्यत आह– **प्रसिद्धं हीति**।। हिशब्दो हेतौ । अस्तु तेषां ज्ञानित्वम् । मुक्तौ तु कर्मैव कारणमित्यत आह– **तमेवमिति**।। **अत्रापि**

१. 'तुल्ययोगवचनं प्रायिकम्' इति -सि.कौ. २ भाग ।

२. 'अस्तु वा'-पां.-बे,गुज.वे-ग्रं. । 'अस्तु वा' इत्यपि पाठो दृश्यते -भा.र.को.।

गीतायामपि । **'कर्मजं बुद्धियुक्ता हि'**(२.५१) इत्यादावित्यर्थः । प्राग् ज्ञानाज्ज्ञानसाधनं पश्चान्मुक्तिसाधनमिति समुच्चयवादिनां मतम्, नतु केवलकर्मवादिनाम् । नचात्र प्रमाणमप्यस्ति।।

**भावदीपः**

**यथा प्रतीतार्थ** इति ।। [1]भिन्नकर्मणो मुक्तिहेतुत्वरूप इन्यर्थः । **कर्मजमिति** ।। **'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः'**(२.५१) इति पूर्वाध्याये 'कर्मजं फलं त्यक्त्वा निष्कामनया कृतकर्माणि ईश्वराय समर्प्य बुद्धियुक्ताः ज्ञानिनो मनीषिणोऽपरोक्षज्ञानिनश्च सन्तो जन्मबन्धविनिर्मुक्ताः' इत्याद्युक्तिरिति भावः ।।

[2]ननु **'कर्मजम्'** इत्यत्र कर्मणो ज्ञानोपायत्वमुक्तम् । इह तु 'ज्ञानिनोऽपि कर्म कुर्वन्त एव संसिद्धिं गताः' इत्युक्त्या ज्ञानकर्मसमुच्चय उच्यते । तथाच पूर्वोत्तरविरोधः । कर्मणो मुक्ति-हेतुत्ववादिमतापकरणं चायुक्तमित्यत आह– **प्राग् ज्ञानादिति** ।।

**भाष्यम् — गत्यन्तरं च 'नान्यः पन्थाः' (तै.आ.३.१२) इत्यस्य नास्ति । इतरेषां ज्ञानद्वाराऽप्यविशेषः[3]।**

**(प्रयागमरणादिना मुक्तिवाचकमानानां गतिकल्पनम् )**

**यत्र तीर्थाद्येव मुक्तिसाधनमुच्यते**

**'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।**
**अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ '**

**इत्यादौ तत्र पापान्मुक्तिः, स्तुतिपरता च ।**

**प्रमेयदीपिका**

ननु यथा मोक्षस्य ज्ञानसाध्यत्वे **'तमेवम्'**(तै.आ.३.१२) इत्याद्यागमास्सन्ति, तथा कर्मसाध्यत्वेऽपि 'अपामसोमम्' (ऋ.८.४८.११-३) इत्यादयोऽपि विद्यन्ते । तत्कथं निर्णयः? इत्यतः, सावकाशत्वनिरवकाशत्वबलादित्याह– **गत्यन्तरं चेति** ।। **ज्ञानद्वारा इति** व्याख्यानेऽपीत्यर्थः ।।

१. 'भिन्न'इत्यधिकं सो-मातृकायाम् ।
२. का मातृकायामत्र छिन्नम् ।
३. 'द्वाराऽप्यविरोधः ' वे,गुज.वे-ग्रं. ।

ननु कर्मवाक्यान्यपि 'ब्रह्मज्ञानेन वा' इत्यादीनि निरवकाशानि सन्ति । तत्र ब्रह्मज्ञानसमान[1]कक्ष्यतया तीर्थस्नानादेरुक्तत्वेनोक्तव्याख्यानायोगात् । अतः पुनरनिर्णय एवेत्याशङ्क्य तेषामपि सावकाशत्वमाह– **यत्रेति** ।। **तीर्थादीति** ।। तत्स्नानादीत्यर्थः । **पापदिमुक्तिः** मुक्तिशब्दार्थ इत्यर्थः । नच सर्वत्र मुक्तिशब्द एवास्ति । संसारमुक्तिरित्यादेरपि सम्भवात् । अतो गत्यन्तरमप्याह[2]– **स्तुतीति** ।। प्रशस्तत्वोपलक्षणेत्यर्थः । [3]प्रशस्तत्व-सादृश्येन गौणी वा । दुष्टजनव्यामोहनार्थत्वस्याप्युपलक्षणमेतत् ।।

**भावदीपः**

**मुक्तीति** ।। मुक्त्यैकदेशानन्दवृद्धिसाधनमिति वा, ज्ञानसहितं सत् सम्पूर्णमुक्तिसाधनमिति वा, समुच्चयवाचिनां सर्वस्यापि ज्ञानिनोऽज्ञानिनश्च कर्मावश्यकमिति वादिनामस्माकम् । नतु केवलकर्मवादिनां मतम् । अतस्तन्निरासो युक्त इत्यर्थः ।।

न केवलं [4]"तमेवं (विद्वान् अमृत इह भवति नान्यः पन्था अयनाय विद्यते)' इत्यादि श्रुतिविरोधः, किं नामोक्तार्थे प्रमाणाभावश्चेत्याह– **न चात्रेति**[5]।। ज्ञानं विना कृतकर्मणो मुक्तिहेतुत्वेत्यर्थः ।। **गौणी वेति** ।। मुक्तिर्यथा प्रशस्ता तथा स्नानादिना जायमानफले प्रशस्तत्वगुणयोगाद्गौणी मुक्तिस्तुतिरित्यर्थः । यद्वा- यथा मुक्तिसाधनं ज्ञानं प्रशस्तं तथा तीर्थस्नानादीनि प्रशस्तानीति गौणीवृत्तिरित्यर्थः ।।

**( ब्रह्मज्ञानेन विना न मुक्तिः )**

**भाष्यम् — तत्रापि हि कुत्रचिद् ब्रह्मज्ञानसाधनत्वमेवोच्यतेऽन्यथा मुक्तिं निषिध्य-**

**'ब्रह्मज्ञानं विना मुक्तिर्न कथञ्चिदपीष्यते ।**

---

१. वे,गुज.वे-ग्रं. ।'सम'-प्र।

२. वे,गुज.वे-ग्रं. । 'माह'-प्र ।

३. द्रं-ब्र.सू.भा-३-१-७.'भाक्तं वा'. इति सूत्रम् ।

४. तमेव ..श्रुतिविरोध.. इत्याह- इति -कां, सो.मं-मातृकासु । तथाऽपि भा.र.कोशस्थ-राघवेन्द्रतीर्थीयानुसारेण कंसान्तर्गतवाक्यनि योजितानि ।

५. अत्र सो मातृकायां पत्राणि अस्तव्यस्तानि । पत्रद्वयेपि ९४ इति पत्रसङ्ख्या लिखिता । २९श्लोकपर्यन्तं सो मातृकायां भावदीपः न लिखितः ।

प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हि' इत्यादौ ।

**नच तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तं ज्ञाननियमं घ्नन्ति । यथा कश्चिद् दक्षं भृत्यं प्रत्युक्तानि 'अयमेव राजा किं राज्ञा?' इत्यादीनि । यथाह भगवान्-**

'यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च ।
स्तावकान्येव तानि स्युरज्ञानां मोहकानि वा ।।
भवेन्मोक्षस्तु मद्दृष्टेर्नान्यतस्तु कथञ्चन'

इति नारदीये ।

**अतोऽपरोक्षज्ञानादेव मोक्षः । कर्म तु तत्साधनमेव ।। २० ।।**

### प्रमेयदीपिका

कुत एतत्कल्प्यते? इत्यत आह– **तत्रापीति** ।। यत्र तीर्थस्नानादिकं मुक्तिसाधनमुच्यते तत्रैव प्रस्तावे । **साधनत्वं** तीर्थस्नानादीनाम् । **अन्यथा** ज्ञानं विना । **या मुक्तिः** यन्मुक्तिसाधनत्वम् । [1]वाक्यत्वाविशेषात् '**ब्रह्मज्ञानेन वा**' इत्यादिभिरेव '**ब्रह्मज्ञानं विना**' इत्यादीनां बाधः किं न स्यात्? इत्यत आह– **न चेति** ।। असाधारणसाधारणप्रसङ्गोक्तत्वादिनेति भावः ।। अत्र दृष्टान्तमाह– **यथेति** ।। **इत्यादीनि** 'नायं राजा किन्तु भृत्य एव' **इत्यादीनि** तत्प्रस्तावेऽप्युक्तानि 'न निघ्नन्ति' इति शेषः ।।

आगमसिद्धा चेयं व्यवस्थेत्याह– यथेति।। '**मद्दृष्टेः**' इत्येतदर्थप्रतिपत्त्यर्थं '**भगवान्**' इत्युक्तम्[2]।। **तीर्थादिवाक्यानीति** ।। तीर्थस्नानक्षेत्रवासादीनां मोक्षसाधनत्ववाक्यानीत्यर्थः ।। '**कर्म**' इति यज्ञादेर्ग्रहणम् । **आदिपदेन** ध्यानादेः सङ्ग्रहः । पूर्ववदर्थः । **अज्ञानां** सम्यज्ज्ञानायोग्यानाम् । उपसंहरति– **अत** इति ।। २० ।।

### भावदीपः

'**अन्यथा**' इत्यनुवादः,'**ज्ञानं विना** ' इति व्याख्या । वचनगतपदानुवादेनार्थमाह– **या मुक्तिरिति** ।। **असाधारण इति** ।। असाधारणप्रस्तावोक्तं साधारणप्रसङ्गोक्तं ज्ञाननियमं न बाधकमित्यर्थः । प्राग् विवृतमेतत् पूर्वाध्याये अन्योत्कर्षनिरासप्रस्तावे ।। **पूर्ववदर्थ इति** ।। प्रशस्तत्वसादृश्येन गौणीवृत्तिर्व्याख्येत्यर्थः ।। २० ।।

---

१. बे,गुज.वे-ग्रं -'वाक्यताविशेषात्'। २. बे,गुज.वे-ग्रं. इत्युक्तिः -प्र ।

( महदाचरणं लोका अनुवर्तन्ते )

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**

**स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ।। २१ ।।**

**भाष्यम् — स यत् वाक्यादिकं प्रमाणीकुरुते यदुक्तप्रकारेण तिष्ठतीत्यर्थः ।। २१ ।।**

**प्रमेयदीपिका**

**'स यत् प्रमाणं कुरुते'** इत्यत्र यच्छब्देन प्रमाणमप्रमाणं वा विवक्षितम्? आद्ये 'प्रमाणं कुरुते' इत्ययुक्तम् । स्थितस्य करणाभावात् । द्वितीयेऽप्येवमेव । अशक्यत्वादित्यत आह– **स** इति ।। प्रमाणमेव सद् यद्[१] वाक्यादिकं लोके प्रगाणतयाऽनवगतं तत्प्रमाणतया ज्ञापयतीत्यर्थः । यद्वा- एकमेवेदं पदम् । यत् प्रमाणकं लौकिकं वैदिकं वा कर्म कुरुत इत्यनेनाभिप्रायेण [२]तात्पर्यमाह– यदुक्तेति ।। २१ ।।

**भावदीपः**

**'यत्प्रमाणम्'** इति बहुव्रीहिरित्युपेत्याऽह–**यत्प्रमाणकमिति** ।। **एवमेवेति** ।। कारणाभाव इत्यर्थः ।। २१ ।।

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**

**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ।। २२ ।।**

**यदि ह्ययं न वर्तेयं[३] जातु कर्मण्यतन्द्रितः ।**

**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।। २३ ।।**

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**

**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ।। २४ ।।**

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**

**कुर्याद्विद्वान् तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ।। २५ ।।**

---

१. बे,गुज.वे-ग्रं. । 'यद्' इति प्र-पाठे नास्ति । २ बे,गुज.वे-ग्रं. । 'तात्पर्यार्थ '-प्र ।

३. 'वर्तेय'-इति पाठः शाङ्करभाष्ये, नीलकण्ठीये च ।

( विद्वान् बुद्धिभेदं न जनयेत् )

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत् सर्वकर्माणि विद्वान् युक्तस्समाचरन् ॥ २६ ॥**[1]

( विद्वदविदुषोः कर्मभेदः )

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २७ ॥**[2]

**भाष्यम् —** विद्वदविदुषोः कर्मभेदमाह– **प्रकृतेरिति ॥ प्रकृतेः गुणैः** इन्द्रियादिभिः । प्रकृतिमपेक्ष्य गुणभूतानि हि तानि, तत्सम्बन्धीनि च । नहि प्रतिविम्बस्य क्रिया ॥ २७ ॥

**प्रमेयदीपिका**

'प्रकृतेः क्रियमाणानि' इति श्लोकद्वयस्य सङ्गते[3]रस्फुटत्वात् तात्पर्यमाह– विद्वदिति ॥ यथायोगं सम्बन्धो न यथाक्रमम् । **कर्मभेदं** कर्मवैलक्षण्यम् । **आह**[4] प्रपञ्चयतीत्यर्थः । **सक्ताः**

---

१. **कर्मनिर्णयभाष्ये**-अयं श्लोकः 'अर्चत प्रार्चत'इति मन्त्र(१)व्याख्यानरूपतयोदाहृतः । टीका-' ननु ते अनादरणीया इत्युक्तमिति , नेत्याह- न बुद्धीति'॥

**राघवेन्द्रतीर्थीये** -'विद्वान् ज्ञानी युक्तो भगवति मनोयुक्तो भूत्वा कर्माचरन् अज्ञान् कर्मसङ्गिनो जनान् कर्मणि जोषयेत् 'जुषी प्रीतिसेवनयोः' सेवयेत् । ते यथा कर्म कुर्वन्ति तथा कुर्यादित्यर्थः । विदुषा कर्मकरणे शिष्टाचाराच्चेति कर्म करिष्यन्तीत्यभिप्रायः । विद्वान् स्वयं कर्मानाचरन्नज्ञानां कर्मसङ्गिनां बुद्धिभेदं कर्माकरणवुद्धिं च जनयेत् । स्वस्याननुष्ठाने तद् दृष्ट्वा न ते अपि कर्म कुर्युः । अतः स्वानुष्ठानाननुष्ठानप्रयुक्तत्वादज्ञजनकर्मकरणाकरणयोः स्वयमवश्यमनुतिष्ठन् तैरपि कारयेदिति गीतावाक्यतात्पर्यावगतेः, ते अनादरणीया न भवन्तीति'अर्चत' इति विधिर्युक्तेति भावः'॥

२. **न्यायामृते कर्तृत्वाध्यासभङ्गे**-'अहङ्कार..मन्यते' इति स्मृतेरपि जीवे स्वातन्त्र्यनिषेधकत्वात् ॥ 'तत्रैवं सति कर्तारं...दुर्मतिः'(गी.१८-१६) इत्यादि वाक्यशेषात् ॥ **श्रीनि-टि.**– 'आत्मानं केवलम् ईश्वरानियतं कर्तारं यः पश्यति स न पश्यति इति ईश्वरानियतकर्तृत्वं मन्यमानस्यैव निन्दनात् । सर्वथा कर्तृत्वनिषेधे तु केवलपदवैयर्थ्यात् इति भावः '॥

३. भा.र.को-'सङ्गतेरिति' इति व्याख्यातम् । श्लोकद्वयस्यास्फुटत्वाद् इति वहुकोशेषु पाठः -इति चोक्तम् । वे -गुज.वे-ग्रं.सङ्गतेः इति नास्ति ।

४. बे, गुज, वे-ग्रं. । प्र -पाठे 'आह' इति नास्ति ।

**कर्मणि** (३.२९) इत्यादिनोक्तत्वात् । व्यवहितत्वादन्वयं दर्शयन् गुणशब्दस्यानेकार्थत्वाद् विवक्षितमर्थमाह– **प्रकृतेरिति** ।। आदिपदेन शरीरमनसोर्ग्रहणम् । कथमिन्द्रियादीनां द्रव्याणां प्रकृतिगुणत्वम्? इत्यत आह– **प्रकृतिमिति** ।। **गुणभूतानि** अप्रधानानि । प्रकारान्तरेण व्याचष्टे– **तदिति** ।। प्रकृतिकार्याणि चेत्यर्थः । गुणशब्दः कार्यार्थ इत्युक्तं भवति ।।

ननु जीवस्यापि कर्तृत्वात्- '**अहङ्कारविमूढात्मा कर्ताहमिति मन्यते**' इति कथमुच्यते? इत्यत आह– **न हीति** ।। 'स्वातन्त्र्येण' इति शेषः ।। २७ ।।

**भावदीपः**

**अस्फुटत्वादिति** ।। प्राक्तनश्लोकद्वयार्थप्रपञ्चनरूपतया अस्फुटत्वादित्यर्थः ।। **प्रपञ्चयतीति** ।। कुतो व्याख्या? इत्यत आह– **सक्ता इति** ।। २७ ।।

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ।। २८ ।।**

**भाष्यम् — कर्मभेदस्य गुणभेदस्य च तत्त्ववित् । गुणाः इन्द्रियादीनि । गुणेषु विषयेषु ।। २८ ।।**

**प्रमेयदीपिका**

गुणानां कर्मणां चान्योन्यं यो विभागस्तस्मिन् वक्तव्ये एकवचनेनालम् । कथं द्विवचनम्? केन वाऽस्यान्वयः? इति शङ्कां विभागशब्दस्यार्थं वदन् परिहरति– **कर्मेति** ।। जीवेश्वरप्रकृतिलक्षणसम्बन्धिभेदात् कर्मणामिन्द्रियादीनां च भेदोऽत्र विवक्षितो ग्रन्थान्तराद् अवगन्तव्यः । 'गुणाः' 'गुणेषु' इति पदद्वयस्य विवक्षितमर्थमाह– **गुणा** इति ।। २८ ।।

**भावदीपः**

**जीवेश्वरेति** ।। गीतायां प्रकृतिपदेन जीवस्वभाव-ईश्वर-जडप्रकृतिरूपा त्रयोऽर्था विवक्षिताः । तथाच प्रकृतेः जीवस्य स्वावरापेक्षायेश्वरायत्तस्वतन्त्रकर्तृकं कर्म, ईश्वरस्य तु[१] पराधीनस्वतन्त्रकर्तृकं कर्म, प्रकृतेस्तु विक्रियारूपं कर्मेति कर्मणां **भेदः**, तथा प्रकृतेर्जीवस्वभावस्य गुणागुणानीन्द्रियाणि, प्रकृतेरीश्वरस्य गुणा इच्छादयः, प्रकृतेर्गुणाः सत्वादय

---

१. तुशब्दः सो-मातृकायामेव ।

इति गुणशब्दितेन इन्द्रियादीनां भेदम् ।। **ग्रन्थान्तरात्** गीतातात्पर्यरूपग्रन्थान्तरात् **'यस्मात् स्वतन्त्रकर्तृत्वं विष्णोरेव'** इत्यादिरूपादित्यर्थः ।। २८ ।।

**प्रकृतेर्गुणसम्मूढास्सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ।। २९ ।।**

**भाष्यम् — प्रकृतेः गुणेष्विन्द्रियादिषु सम्मूढाः । इन्द्रियाद्यभिमानाद्धि विषयादिषु सङ्गः । [1]गुणकर्मसु विषयेषु कर्मसु च ।**

**प्रमेयदीपिका**

'प्रकृतेर्गुणसम्मूढाः' इत्यत्र गुणशब्दस्य विवक्षितमर्थं वदन् विग्रहं दर्शयति– **प्रकृते-रिति** ।। नित्यसापेक्षत्वाद् गुणशब्दस्य न असामर्थ्यमिति प्रदर्शनाय **'प्रकृतेः'** इत्यनुवादः, देवदत्तस्य गुरुकुलमिति यथा । प्रकृतेर्गुणसम्मूढत्वात् सज्जन्ते **गुणकर्मसु** इति हेतुहेतुमद्भावोऽत्र विवक्षितः । अन्यथा वैयर्थ्यापत्तेः । तमुपपादयति– **इन्द्रियादीति** ।। **अभिमानः** ममैवैतानि स्वातन्त्र्येण करणानीति भ्रमः । **'विषयादि'** इत्युक्त्या गुणशब्दोऽत्र विषयार्थ इति दर्शयति । **आदिशब्देन** कर्मग्रहणम् । **विषयेषु** सङ्गः स्नेहादिः । **कर्मसु** स्वातन्त्र्यभ्रमः । 'गुणानां कर्मसु' इति [2]केनचिद्व्याख्यातम् । तदसदिति भावेन द्वन्द्वोऽयमिति दर्शयति– **गुणेति** ।। द्वन्द्वपरिग्रहेऽधिकार्थलाभात् । अनेन 'विषयादि' इत्येतदपि समर्थितं भवति ।।

**भावदीपः**

**अनेनेति** ।। **'गुणकर्मसु'** इत्यत्र द्वन्द्वव्याख्यानेन**आदिपदं** कर्मार्थकमिति व्याख्यात-मित्यर्थः।।

**( गुणशब्दार्थः )**

**भाष्यम् —'शब्दाद्या इन्द्रियाद्याश्च सत्वाद्याश्च शुभानि च ।**
**अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः ।।'** इत्यभिधानात् ।

१. वे,गुज,वे-ग्रं । अयमेव शुद्धः । नतु गुणकर्मस्विन्द्रियेषु इति प्र.पाठः । टीकाननुगुणश्चायम्। द्रं-भा.र.को.।
२. शाङ्करभाष्ये-भाग.१ , पृ-३२४., पै -भा.पृ-३२५ ।

**सत्वाद्यङ्गीकारे 'गुणा गुणेषु'(३.२८) इत्ययुक्तं स्यात् ।। २९ ।।**

**प्रमेयदीपिका**

गुणशब्दस्योक्तानेकार्थत्वं कुतः? इत्यत आह– **शब्दाद्या** इति ।। निरुच्यत इति निरुक्तिः शब्दार्थः । निरुक्तिं गच्छन्त्यवगच्छन्तीति निरुक्तिगाः । अस्तु गुणशब्दस्यानेकेष्वर्थेषु शक्तिः। तथाऽपि विवक्षाऽत्रैकस्यैवार्थस्य युक्ता । अन्यथा **'न ह्येकशब्देन'**(३.१५)इत्युक्त-विरोधात् । शब्दो हि यमर्थमादौ स्मारितवान् स एवार्थो बुद्धौ सन्निहितः 'पुनरुच्चारितेन स्मारयितुं युक्तः । तथा चात्र सर्वत्र सत्वादय एव ग्राह्याः । तद्ग्रहणे शब्दादीनामपि तदात्मकानां ग्रहणसम्भवादित्यत आह– **सत्वादीति** ।। कर्तृत्वाधारत्वयोरेकत्र विरोधादिति भावः । तदात्मकानाम् (इन्द्रियादीनाम्)[2] उपलक्षणे सति वृथा प्रयासः । अनयैवानुपपत्त्या अनेकार्थग्रहणोपपत्तेः ।। २९ ।।

**भावदीपः**

**निरुक्तिगा** इति ।। शब्दार्थज्ञा इत्यर्थः ।। **इत्युक्तविरोधादिति** ।। **'ब्रह्माक्षरसमुद्भवम्'** (३.१५) इत्येतद्व्याख्यावसरे

**'नह्येकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते'**

इत्युक्तविरोधादित्यर्थः ।। **कर्तृत्वाधारत्वयोरिति** ।। **'वर्तन्ते'** इत्युक्तवर्तनक्रिया-कर्तृत्वस्य, **'गुणेषु'** इत्युक्ताधारस्य एकत्र सत्वादिगुणेषु विरोधादिति भावः ।। **उपलक्षणमिति** ।। 'गुणा इत्यनेन' इति योज्यम् ।। २९ ।।

(भगवति सर्वकर्मन्यासस्वरूपम् )

**मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ।। ३० ।।**[3]

**भाष्यम् —** अतः **सर्वाणि कर्माणि** मय्येव **सन्न्यस्य** भ्रान्त्या जीवेऽध्यारोपितानि

---

१. 'पुनरुच्चरितेन'-वे ।
२. वे,गुज.वे-ग्रं. । अयमेव श्रीनि-टि,भा.र.को.सम्मतः पाठः । इन्द्रियादीनाम् इति प्र.पाठः ।
३. सनत्सुजातीये २-१७ श्लोकव्याख्याने श्रीवादिराजतीर्थैः उदाहृतः ।

**मय्येव विसृज्य भगवानेव सर्वाणि कर्माणि करोतीति[१] मत्पूजेति चात्मानं मामधिकृत्य यच्चेतः तदध्यात्मचेतः । सन्न्यासस्तु भगवान् करोतीति । निर्ममत्वं नाहं करोमीति ।। ३० ।।**

## प्रमेयदीपिका

'**मयि सर्वाणि**' इत्यस्य सङ्गतिं दर्शयति– **अत** इति ।। यतो विद्वत्कर्मैवंविधं, त्वं च विद्वानसि, **अतः** । ननु सन्न्यासो विसर्गः । स च स्वकीयस्य भवति । नच जीवस्य कर्माणि सन्तीत्युक्तम् । तत्कथं तेषां विसर्गो विधीयते? इत्यत आह– **भ्रान्त्येति** ।। 'कर्मणां परमेश्वरे सन्न्यासो नाम तदात्मकत्वविज्ञानम्' इति [२]कश्चित् । तदसत् । [३]अशाब्दत्वाद्, प्रमाणविरुद्धत्वाच्चेति भावेन स्वपक्षे तदभिप्रायमाह– **भगवानिति**[४] ।। **इति** 'ज्ञात्वा' इति शेषः ।।

प्रकारान्तरं चाह– **मदिति** ।। **इति** 'समर्पणं च कर्मणां मयि सन्न्यासः' इति शेषः। 'कर्माणि परमेश्वरात्मकत्वं प्रतिपद्य'[५] तत्प्राप्तये कल्प्यन्त इति **अध्यात्मचेतसा**'इति व्याख्यानम् अशाब्दमिति भावेन व्याचष्टे– **आत्मानमिति** ।। अनेनाव्ययीभावगर्भः कर्मधारय इत्युक्तं भवति । अस्य **निराशीः** इत्यनेनान्वयः । परमात्मलाभेन निराशीः आशारहित[६] इत्यर्थः ।।

ननु निर्ममत्वं न मम कर्माणि सन्तीति ज्ञानम् । तच्च '**मयि सर्वाणि कर्माणि सन्न्यस्य**'

---

१. इदं वचनमुदाहृतं **ब्र.सू.भाष्यदीपिकायां**-'सन्न्यस्ताखिलकर्मवान्' इति भाष्यव्याख्यावसरे ।
'यश्च 'सन्न्यस्ताखिलकर्मवान्' सन्न्यस्तं भगवति समर्पितमखिलं यदकाम्यं कर्म तद्वान् 'सः' नरः 'उत्तमोऽधिकारी' स्यादिति योजना । अत्र सन्न्यासो नाम भगवान् सर्वाणि कर्माणि करोति सर्वकर्माणि भगवत्पूजारूपाणीति च ज्ञात्वा भ्रान्त्या जीवकर्तृकत्वेन ज्ञातानां कर्मणां भगवति विसर्गः । यथोक्तं गीताभाष्ये - 'भगवानेव सर्वाणि कर्माणि करोति' इत्यादिना ।'

२. शाङ्करभाष्यानुवादोयम् । भाग-१.पृ-३२६ ।

३. 'अशब्दत्वात्' इति प्र-पाठः न साधुः । अत्र वेदोक्तत्वाभावस्य वाच्यमानत्वात् ,प्रचलितपाठे तदर्थालाभात् । टीकायामुत्तरत्र अशाब्दम् इत्येवोक्तत्वाच्च ।। तथा, श्रीनि-टिप्पण्यां– 'कथञ्चिच्छाब्दत्वे त्वाह - प्रमाणेति' इत्युक्तत्वात्, बे,गुज,वे-ग्रं पुस्तकेषु मातृकासु चादर्शनाच्च 'अप्रामाणिकत्वात्' इति अधिक-प्र.पाठः न सङ्गत इति भाति ।।

४. बे, गुज, वे-ग्रं । प्र-पाठे इवशब्दो अधिकः ।

५. अयं भा.र.कोशोक्तः । प्रतिपद्यन्ते -इति वे,गुज.वे-ग्रं ।

६. बे, गुज, वे-ग्रं । 'इतराशारहितः'-प्र।

इत्यनेन गतार्थमित्यतो द्वयोर्भेदमाह– **सन्न्यासस्त्विति** ।। उभयत्र **'इति'**शब्दात् परं 'ज्ञानम्' इति शेषः ।। ३० ।।

**भावदीपः**

इत्युक्तमिति ।। **'प्रकृतेः'** (३.२७) इति श्लोकभाष्ये **'नहि प्रतिबिम्बस्य क्रिया'** इत्यादिनोक्तमित्यर्थः।। ३० ।।

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।। ३१ ।।**
**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ।। ३२ ।।**[1]

**भाष्यम् — फलमाह– ये म इति ।। ये तु एवं निवृत्तकर्मिणः तेऽपि मुच्यन्ते ज्ञानद्वारा । किम्वपरोक्षज्ञानिनः? न तु साधनान्तरमुच्यते ।**

**'निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये ।**
**अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ।**
**सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।**
**न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक् ।।'**

**इति ह्युक्तं**[2] **नारायणाष्टाक्षरकल्पे ।**

**अत एव समुच्चयनियमो निराकृतः ।। ३१ ।। ३२ ।।**

**प्रमेयदीपिका**

अन्यथाप्रतीतिं निराकर्तुं तावदुत्तरश्लोकद्वयप्रतिपाद्यमाह–**फलमिति** ।।

केचिद् [3]विद्वांस एवं[4] कुर्वन्तीत्येतावता मया कार्यं न वा? इत्याशङ्क्य स्वोक्तकरणाकरणयोः

---

१. ३१-३२.श्लोकौ क.नि.भाष्ये-भगवद्भक्तिज्ञानवैराग्यपूर्वकं कर्म कर्तव्यमित्यत्र मानमित्युदाहृतौ ।।
२. वे, गुज,वे-ग्रं । प्र-'ह्युक्तम्'इति नास्ति ।
३. वे,गुज, वे-ग्रं. । 'किं ..मया कार्यमित्याशङ्क्य'-प्र ।
४. वे-ग्रं -'एवं 'नास्ति ।

फलमाहेत्यर्थः । **'मुच्यन्ते तेऽपि कर्मभिः'** इत्यपिशब्देन ज्ञानमिव निवृत्तं कर्मापि मोक्षसाधनमुच्यते'[१] इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **ये त्विति** ।। कैमुत्यद्योतनार्थोऽपि-शब्दो न समुच्चयार्थ इत्यर्थः । प्रासङ्गिकं चैतत् । समुच्चये यद्यपिशब्दः । स च द्वेधा । ज्ञानमिव कर्मापि पृथक् साधनम् । ज्ञानकर्मसमुच्चय एवेति[२]।।

तत्र[३]आद्यं पक्षं निराकरोति– **न त्विति** ।। निष्कामत्वादिनाऽनुष्ठितानि यज्ञादीनि निवृत्तानि । आदिपदेन नित्यनैमित्तिकानां ग्रहणम्। अपरोक्षा च सा ईशदृष्टिश्च । तादर्थ्ये चतुर्थी । **मुक्तौ** मुक्तिसाधने । **किञ्चित्** सहकारि ।। कर्मापि मुक्तिसाधनमुच्यत इत्यत उक्तम् – **सर्वमिति** ।। **तत्सर्वं** निवृत्तादिकम्। **अन्तरा** मध्ये । ज्ञानमम् **आधाय मुक्तये** मुक्तेः । 'अहल्यायै जार'[४] इति यथा । साक्षात् साधनत्वेन श्रुतमपि कर्म यथा व्यवहितं जातं [५]किं ज्ञानमपि तथा? नेत्युक्तम्– **न किञ्चिदिति** ।।

द्वितीयमपि प्रकारमतिदेशेन निराचष्टे– **अत एवेति** ।। 'अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते' इत्युक्तत्वादेवेत्यर्थः ।। ३१ ।। ३२ ।।

### भावदीपः

**'कर्मणैव'** इत्यादावेव कर्मज्ञानद्वारा मोक्षोपायो न साक्षादिति समर्थनात् पुनरिह **'मुच्यन्ते'** इत्यादिकं किमर्थमुच्यते? इत्यत आह–**प्रासङ्गिकमिति** ।। **'कर्मणैव हि'** इत्यादिना विद्वांसोऽपि कर्म कुर्वन्तीत्युक्तेऽत्र तावता मया कुतः कार्यम्? इति शङ्कायां करणाकरणयोः फलोक्तेः प्रसङ्गप्राप्तत्वादिति भावः । कैमुत्यद्योतितं प्रमेयं प्रासङ्गिकमिति वाऽर्थः । **इत्यादि यथेति** ।। **'अहल्यायाः'** इति विपरिणामो यथा, [६]'न वा अरे पत्युः कामाय' (बृ.उ.४.४.५) इत्यादौ कामेनेति यथा तथा **'मुक्तये'** इत्यस्य मुक्तेरिति विपरिणाम इत्यर्थः ।। ३१-३२ ।।

---

१. शाङ्करभाष्यानुवादः -भाग-१. पृ.३२८ ।
२. ज्ञानकर्मसमुच्चयनियमनिरासः अनुव्याख्याने -विद्याधिकरणे ३.३.४८,(सुधा. पृ-५०१२) द्रष्टव्यः ।
३. वे,गुज.वे-ग्रं. । 'अत्र' -प्र ।
४. वे,गुज.वे-ग्रं.। श्रीनि-टि,कृ-टि,सम्मतः । 'इत्यादि यथा' इति-प्र-पाठः ।
५. गुज.वे-ग्रं. 'किमपि ज्ञानं तथा '-इति दृश्यते ।
६. इदमुपनिषद्वाक्यं का-मातृकायां नास्ति । सो-मातृका तथा भा.र.कोशस्थराघवेन्द्रतीर्थीयानुसारेण योजितम् ।

मं मातृकायामस्ति । 'कामेन' इति भा.र.को पाठे नास्ति ।

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

**भाष्यम् —** एवं चेत् किमिति ते मतं नानुतिष्ठन्ति लोकाः? इत्यत आह– **सदृशमिति** ॥ **प्रकृतिः पूर्वसंस्कारः** ॥ ३३ ॥

**प्रमेयदीपिका**

**'सदृशम्'** इति श्लोकस्य सङ्गतिर्न प्रतीयते । अतस्तामाह– **एवं चेदिति** ॥ यदि त्वन्मतानुष्ठाने मोक्षोऽन्यथा नाश इत्यर्थः । मूलप्रकृतेरेकत्वात् कथं **'स्वस्याः'** इति प्रातिस्विकत्वमुच्यत इत्यते? आह– **प्रकृतिरिति** ॥[1]तत्कार्यौ रागद्वेषावुपलक्ष्येते ॥ ३३ ॥

**भावदीपः**

**'ये'**(३.३२) इत्यादि श्लोकद्वयार्थमनुवदति– **यदिति** ॥ रागद्वेषयोरेव स्वरूपसतोः सर्वचेष्टा हेतुत्वादुत्तरश्लोकानुसाराच्चाह– **तत्कार्यौ रागद्वेषाविति** ॥ ३३ ॥

**( ब्रह्माद्या अपि संस्कारवशाः )**

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

**भाष्यम् —** तथाऽपि शक्तितो निग्रहः कार्यः । निग्रहात् सद्यः प्रयोजनाभावेऽपि भवत्येवातिप्रयत्नत इत्याशयवानाह– **इन्द्रियस्येति** ॥ तथा ह्युक्तम्–

'संस्कारो बलवानेव ब्रह्माद्या अपि तद्वशाः ।
तथाऽपि सोऽन्यथा कर्तुं शक्यतेऽतिप्रयत्नतः ॥' इति ॥ ३४ ॥

**प्रमेयदीपिका**

**'इन्द्रियस्य'** इत्यस्य सङ्गतिमाह– **तथाऽपीति** ॥ एवं तर्हि **'मयि सर्वाणि कर्माणि'** (३.३०) इति विधानं फलकथनं च व्यर्थमित्याशङ्क्येति भावः ॥ यद्यपि **'प्रकृतिं यान्ति भूतानि'** (३.३३) इति निग्रहोऽकिञ्चित्करः । तथाऽपि व्याहतमेतदुच्यत इत्यत उक्तम्– **निग्रहादिति** ॥

१. तत्कार्यौ-इति भा.र.को,भावदीप-कृ-टि,ताम्रपर्णीयसम्मतः । तत्कार्ये-श्रीनि-टि पाठः,(वे,वे-ग्रं,पाठश्च)।

'निग्रहात्' 'इत्याशयवान् **तथाऽपि** इत्याहेति योजना ॥

अत्राऽगमसम्मतिमाह– **तथा हीति** ॥ ३४ ॥

**भावदीपः**

**एवंतर्हीति** ॥ निग्रहस्य कार्याक्षमत्व इत्यर्थः ॥ **व्याहतमेतदिति** ॥ **तथाऽपि** निग्रहस्याकिञ्चित्करत्वेऽपि शक्तितो निग्रहः कार्य इत्येतद्व्याहतम् । निग्रहस्याकिञ्चित्करत्वे तदकारणस्यैव युक्तत्वादिति भावः ॥[२] **निग्रहादित्याशयवानिति** ॥ एतेन निग्रहस्य कालान्तरे किञ्चित्करत्वोक्तेर्न व्याहतिरिति भावः ॥ **तथाऽपीति** ॥ तात्कालिकेऽकिञ्चित्-करत्वादिति भावः । द्वित्वाभावेऽपीत्यर्थः[३] ॥ ३४ ॥

( परधर्मः भयावहः )

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

**भाष्यम् — तथाप्युग्रं युद्धकर्मेत्यत आह– श्रेयानिति ॥**

**प्रमेयदीपिका**

**'श्रेयान्'** इत्यस्य सङ्गतिमाह– तथापीति ॥ **'ज्यायसी चेत्'**(३.१) इत्यत्र द्वावाक्षेपावर्जुनेन कृतौ । तत्राद्यो **'लोकेऽस्मिन्'**(३.३)इत्यादिना परिहृतः । इदानीं **'युध्यस्व विगतज्वरः'**(३.३०), **'तयोर्न वशमागच्छेत्'**(३.३४) इत्युक्त्या स्मारितं द्वितीयमाक्षेप-माशङ्क्य परिहरतीत्यर्थः । यद्यपि कर्म कर्तव्यम् । तथाऽपि उग्रम् अवर्जनीयरागद्वेषम् । 'न कुर्याम्' इति शेषः ॥ ३५ ॥

**भावदीपः**

[४]**तथापीति** ॥ तात्कालिके किञ्चित्करत्वेऽपीत्यर्थः ॥ **द्वावाक्षेपाविति** ॥ यत्याश्रमधर्मेषु

१. भावदीपे । 'इत्याद्याशयवान्'इति बे,गुज,वे-ग्रं,श्रीनि-टिप्पण्यां च प्रतीकः । परन्तु आदिशब्दस्य कृत्यं न प्रदर्शितं कुत्रापि ॥

२ इदं वाक्यं का मातृकायां न पठ्यते ।

३. 'अकिञ्चित्काभावेपीत्यर्थः' इति -सो मातृकापाठः ।

४. इदं वाक्यं मं-मातृकायामेव ।

शमदमादिषु नियोजनं विना काम्यकर्मसु किमर्थं नियोजयसीत्येकः । तत्रापि नरकहेतु-कामक्रोधादिभिरुपेते **घोरे** युद्धाख्ये **कर्मणि** नियोजनमयुक्तमिति द्वितीय इति 'द्वौ' इत्युक्तम् । **'उग्रम्'** इत्यनुवादः, **'अवर्जनीय'** इत्यादि व्याख्या ।। ३५ ।।

**( कर्मकारणानां मध्ये को बलवान् )**

**अर्जुन उवाच -**

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ।। ३६ ।।**

**भाष्यम् — वहवः कर्मकारणाः सन्ति ।**

**प्रमेयदीपिका**

**'अथ केन'** इत्यर्जुनप्रश्नोऽनुपपन्नः। **'तौ ह्यस्य परिपन्थिनौ'**(३.३४)इति रागद्वेषयोः परिपन्थित्वस्योक्तत्वात् । नहि पापप्रयोजकत्वादन्यद्रागादेः पुरुषपरिपन्थित्वमित्यतः प्रश्नाभिप्रायमाह– बहव इति ।।

**( कारणशब्दः त्रिलिङ्गः )**

कारणशब्दः करोतेर्ण्यन्तात् करणे ल्युडन्तः । सच[1] त्रिलिङ्गः । 'अयमनुमानः' इति भाष्ये[2] प्रयोगात् । अथवा 'ण्यासश्रन्थो युच्'(पा.सू.३.३.१०७) इति करणे युच् । [3]अयं च स्त्रीलिङ्गः। **बहवः** इत्यपि स्त्रीलिङ्ग एव । 'वोतो गुणवचनात्' (पा.सू.४.१.४४) इति विकल्पविधानात् ।।

**भावदीपः**

ननु परिपन्थित्वोक्त्या कथं पापप्रयोजकत्वलाभः? इत्यत आह– **नहीति** ।।

**ण्यन्तात् करणे ल्युडिति** ।। कृधातोः स्वार्थे णिच्प्रत्यये,'अचोऽञ्णिति'(पा.सू. ७.२.११५) इति वृद्धौ कारीति रूपे सति, ततः 'करणाधिकरणयोश्च' (पा.सू.३.३.११७) इति करोत्यनेनेति करणे ल्युट्प्रत्यये, आद्यानुबन्धयोर्लोपे, 'युवोरनाकौ'(पा.सू.७.१.१)

---

१. गुज,वे-ग्रं ,भा,र.को ,भावदीप,श्रीनि-। कृ-टिप्पण्यां 'च' नास्ति ।
२. व्याकरणमहाभाष्ये ।
३. भा.र.को, गुज,-वे-ग्रं । कृ-टिप्पण्यां अयं तु इति पाठः ।

इत्यनादेशे, 'रषाभ्याम्' (पा.सू.८.४.१) इति णत्वे, 'णेरनिटि' (पा.सू.६.४.५१) इति णिलोपे, 'कारणाः' इति रूपमिति भावः ।। ल्युडन्तस्य कथं पुल्लिङ्गता? इत्यत आह– **स चेति** ।। नपुंसकं पूर्वत्र प्रकृतं 'करणोधिकरणयोश्च' (पा.सू.३.३.११७) इत्यत्र 'नानुवर्तते' इति वृत्त्यादावुक्तेरिति भावः । प्रयोगं च तज्ज्ञापकमाह– **अयमिति** ।। यद्यपि 'भूवादयो धातवः'(पा.सू.१.३.१)इति सूत्रे [1]''कोऽयमनुमानो नाम' इति भाष्यवाक्यम्, तथाऽपि 'अयम्' इत्यर्थानुवादः । 'कारणा' इति स्त्रीलिङ्गमिति भावेनाऽह– **अथवेति** ।। 'करोतेर्ण्यन्तात्' इत्यनुवर्तते । **ण्यास इति** ।। णान्ताद्धातोः 'आस उपवेशने' इत्यस्मात् स्त्रियां युच्प्रत्यय इति सूत्रार्थः[2]। पूर्ववदेव प्रक्रिया ध्येया ।। **अयं च** युजन्तश्च स्त्रीलिङ्ग एवेत्यर्थः । तृतीयाध्यायतृतीयपादे 'कर्मव्यतिहारे णिच् स्त्रियाम्' (पा.सू.३.३.४३) इति प्रकृतस्त्र्यधिकारे युजो विधानादिति भावः । 'बह्वचः' इति भाव्यमित्यत आह– **वोत इति** ।। 'उवर्णान्ताद् गुणवचनात् शब्दात् स्त्रियां ङीप् भवति' [3]इत्युक्तेः ङीबभावपक्षे 'बहवः' इति रूपमिति भावः ।।

**भाष्यम् - क्रोधादयः कामश्च । तत्र को बलवान्? इति पृच्छति – अथेति ।। अथेत्यर्थान्तरं 'तयोर्न वशमागच्छेत्'**(३.३४) **इति प्रश्नप्रापकम् ।। ३६ ।।**

**प्रमेयदीपिका**

**'कर्म'** इति पापं विवक्षितम् । द्वयोरेवोक्तत्वात् कथं 'बहवः' इत्यनुवादः? इत्यत आह– **क्रोधादय** इति ।।

पूर्वं भगवता द्वेषशब्देन मदमत्सरादयोऽप्युपलक्षिताः । अरिषड्वर्गप्रसिद्धेः । तदेतद् विदित्वैवमनुवदतीति भावः । रागशब्देन कामः, द्वेषशब्देन क्रोधादयश्च त्वयोक्ता इत्यर्थः । अस्य प्रश्नस्य प्रकृते क उपयोगः? इत्यत आह– **अथेति** ।। नास्य प्रकृतेन हेतुहेतुमद्भावादि-लक्षणासङ्गतिरिति स्वयमेव सूचितमित्यर्थः ।।

'अथ' इति शब्देनार्थान्तरमिदम् [4]इति सूच्यते । तर्ह्यसङ्गतं न प्रष्टव्यमित्यतः सङ्गत्य-

१. कोऽसावनुमानो-पां । व्याकरणभाष्ये त्रिषुस्थलेषु एवं प्रयोगो दृष्यते ।

२. **'ण्यन्तेभ्यो धातुभ्यः, आसश्रन्थइत्येताभ्यां च स्त्रियां युच्प्रत्ययो भवति' काशिकायां भा-३,पृ-७८।**

३. **काशिकावृत्त्यर्थानुवादः । 'गुणमुक्तवान् गुणवचनः । गुणवचनाद् प्रातिपदिकादुकारान्तात् स्त्रियां वा ङीष्प्रत्ययो भवति' इति काशिकावृत्तिः भाग-३,पृ-३३८ ।**

४. एतत् -पां . वे ।

न्तराभावेऽपि प्रासङ्गिकी सङ्गतिरस्तीत्याशयवान् प्रसङ्गं दर्शयति–**तयोरि**ति ।। तत्रापि यो बलवांस्तं प्रति महान्तं यत्नं करिष्यामीति भावेन प्रश्नो युक्त एवेति भावः ।। ३६ ।।

**भावदीपः**

**द्वयोरेवे**ति ।। प्रश्नप्रसञ्जकपूर्वश्लोके 'तयोः' इति रागद्वेषयोरेवोक्तत्वादित्यर्थः।।३६ ।।

**( कामाभिमानी कालनेमिः रजोगुणप्रवर्तकः )**

**श्रीभगवानुवाच -**

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ।। ३७ ।।**

**भाष्यम् — यस्तु बलवान् प्रवर्तकः स एष कामः । क्रोधोऽप्येष एव ।** तज्जन्यत्वात् । **'कामात् क्रोधोऽभिजायते'** (२.६२) इति ह्युक्तम् । यत्रापि गुरुनिन्दादिनिमित्तः क्रोधः, तत्रापि भक्तिनिमित्तनिन्दाकामनिमित्त एव ।

**प्रमेयदीपिका**

बलवद्विषयश्चेद् प्रश्नस्तर्हि परिहारो न सङ्गच्छत इत्यतः परिहारं व्याचष्टे - **यस्त्वि**ति ।। **प्रवर्तकः** पापेषु पुरुषः 'त्वया पृष्टः' इति शेषः । एवं योजनायां क्रोधस्यापि कामसाम्यं स्यात् । तथाचोत्तरत्र कामस्यैवानुवृत्तिर्विरुध्येतेत्यतः **'क्रोध एषः'** इत्येतदन्यथा व्याचष्टे– **क्रोधोऽपी**ति ।। किं काम एव मुख्यया वृत्त्या एवमुच्यते? नेति ब्रूमः । किन्तूपचारेणेति भावेनाऽह– **तदि**ति ।। तदेव कुतः? इत्यत आह– **कामादि**ति ।। नायमस्ति नियमः । यदा गुरुनिन्दादिश्रवणे निन्दकाय क्रुद्ध्यति तदा कामाभावेऽपि क्रोधोदयदर्शनादित्यत आह– **यत्रापी**ति ।। भक्तिनिमित्तश्चासावनिन्दाकामश्चेति विग्रहः ।**'सङ्गात् सञ्जायते कामः'**(२.६२) इत्येतद् दर्शयितुं **'भक्तिनिमित्त '** इत्युक्तम् ।।

**भावदीपः**

**त्वये**ति ।। कृतेत्यर्थः ।। **उत्तरत्रे**ति ।। उत्तरार्धादावित्यर्थः[१]।।

---

१. '-विति भावः'-पां ।

( कामः न क्रोधपरिणाभः )

**भाष्यम् —** ये त्वन्यथा वदन्ति ते सङ्करान्न सूक्ष्मं जानन्ति । उक्तं च-

'ऋते कामं न कोपाद्या जायन्ते हि[१] कथञ्चन' इति ।

महाशनः । महद्धि कामभोग्यम् । महाब्रह्महत्यादिकारणत्वात् महापाप्मा । सर्वपुरुषार्थविरोधित्वाद् वैरी ।। ३७ ।।

## प्रमेयदीपिका

'काम एव केनचित् प्रतिहतः क्रोधत्वेन परिणमते' इति परेषां[२] व्याख्यानं दूषयति– **ये त्विति** ।। एकान्तःकरणोपादानत्वलक्षणदानन्तर्यलक्षणाच्च सङ्करात् सूक्ष्मं कामक्रोधयो-रत्यन्तभेदम् । नहि गुणो गुणस्योपादानम् । किन्तु निमित्तमेव ।। प्रागन्वये प्रमाणमुक्तम् । इदानीं व्यतिरेकेऽप्याह–**उक्तं चेति** ।।

**महाशनः** इति कामे दुर्घटत्वाद् गौणमित्याह– **महाशन** इति ।। **भोग्यं** विषयः । यस्मात् कामभोग्यं महत्तस्मादसौ 'महाशनः' इति हेरर्थः[३]। 'काम एषः' इति पापकारणत्वेनोक्त्वा कथं **महापाप्मा** इत्युच्यते? इत्यतो न कर्मधारयोऽयम्, किन्तु महान् पाप्मा यस्मादिति बहुव्रीहिरिति भावेनाऽह– **महाब्रह्मेति** ।। महच्छब्दात् परतः पाप्मशब्दोऽध्याहार्यः । वधादिकर्तृत्वाभावात् कथं वैरित्वम्[४]? इत्यत आह– **सर्वेति** ।। **सर्वः** सम्पूर्णः । **पुरुषार्थः** मोक्षः ।। ३७ ।।

## भावदीपः

**एकान्तेति** ।। एकं यदन्तःकरणं तदुपादानत्वलक्षणादित्यर्थः ।। अपौनरुक्त्यायाऽह– **प्रागिति** ।। **'इति ह्युक्तम्'** इत्यत्रेत्यर्थः । महाब्रह्महत्यादिहेतुत्वे महापाप्मत्वं कुतः? इत्यतो वा ब्रह्महत्यादेर्महत्वघटनाय वा आह– **महच्छब्दात्परत** इत्यादि ।। ऐहिकपुमर्थ-हेतुत्वानुभावात् कथं सर्वपुमर्थविरोधिता? इत्यत आह – **सर्वः सम्पूर्ण** इत्यादि ।। ३७ ।।

---

१. च- पां वे-ग्रं ।

२. शाङ्करभाष्ये एवेति स्थाने एष इति , प्रतिहतः केनचित् इति च व्यत्यासः भा.१, पृ-३३९।

३. वे-ग्रं , गुज- इत्यर्थ इति ।

४. वे-ग्रं ,गुज । वैरी बे -प्र ।

**धूमेनाऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्बेनाऽवृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

**भाष्यम् —** कथं विरोधी सः? इदमनेनावृतम् । **यथा धूमेन** अग्निरावृतः प्रकाशरूपोऽप्यन्येषां न सम्यग् दर्शनाय **तथा** परमात्मा । **यथाऽऽदर्शो मलेन** आवृतोऽन्यस्याभिव्यक्तिहेतुर्न भवति । तथा अन्तःकरणं परमात्मादेर्व्यक्तिहेतुर्न भवति कामेन **आवृतम्** । **यथोल्बेन** आवृत्य बद्धो भवति **गर्भः** तथा कामेन आवृतो[1] जीवः ॥ ३८ ॥

### प्रमेयदीपिका

ननु प्रश्नस्योत्तरं जातं किमुत्तरेण? इत्यतः श्लोकद्वयस्य सङ्गतिमाह– **कथमिति** ॥ सः कामः । 'कथं मोक्षस्य विरोधी' इति जिज्ञासायामाह 'धूमेन इत्यादि'[2] इति शेषः । विवक्षितार्थस्यास्फुटत्वाद् व्याख्याति– **इदमिति** ॥ ईश्वर-अन्तःकरण-जीवलक्षणं वस्तुत्रयम् । केन?, किमिव ? इत्याकाङ्क्षायामाद्यं पादत्रयं व्याचष्टे– **यथेति** ॥ **परमात्मा** कामेनावृतः । 'स्वयं सर्वज्ञोऽप्यन्यैर्न ज्ञायते' इति शेषः । **अन्यस्य** मुखादेः । 'परमात्मादेः' इत्यादिपदेन जीवो गृह्यते । बन्धापेक्षयाऽऽवरणस्य समानकर्तृकत्वम् । **बद्धः** सङ्कुचितः । व्यापारक्षम इति यावत् । **उल्बो** गर्भवेष्टनम् । **कामेनावृतो जीवः** नेश्वरादिज्ञाने क्षम इत्यर्थः ॥ ३८ ॥

### भावदीपः

**'आवृत्य बद्धः'** इत्यत्र ल्यबन्तस्य साधुत्वनिर्वाहायाऽह– **बन्धापेक्षयेति** ॥ ३८ ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

**भाष्यम् —**शास्त्रतो जातमपि ज्ञानं परमात्मापरोक्ष्याय न प्रकाशते कामेन **आवृतं ज्ञानिनोऽपि** । किम्वल्पज्ञानिनः?

---

१. वे-ग्रं ,गुज-बे । प्र-आवृतः इति नास्ति।

२. इत्यादिना-बे ।

## प्रमेयदीपिका

एवं ज्ञेयज्ञानकारण[१]ज्ञातृप्रतिबन्धकत्वोक्त्या ज्ञानप्रतिबन्धकत्वमुक्तम् । 'आवृतं ज्ञानम्' इत्यनेन पुनः किमुच्यते? इत्यत आह– **शाश्वत** इति ।। पूर्वं ज्ञानोत्पत्तिप्रतिबन्धकत्व-मुक्तम् । इदानीं तु कथञ्चिज्जातमपि ज्ञानं न स्वकार्याय प्रभवतीत्युच्यते । अतो न पुनरुक्ति-दोष इति भावः ।।

**'कामचारेण चैके'** [२](ब्र.सू.३.४.१९)

इति वचनादपरोक्षज्ञानस्य मोक्षसाधने न केनापि प्रतिबन्धः? इत्यत उक्तम्– **शाश्वत** इति ।। **'परमात्मापरोक्ष्याय'** इति च ।। **न प्रकाशते** न प्रभवति । 'ज्ञानिनः' इति व्यर्थम् । ज्ञानस्य ज्ञानिसम्बन्धाव्यभिचारादित्यत आह– **ज्ञानिनोऽपीति** ।। शास्त्रजनितज्ञानवतोऽपि । **अल्पज्ञानिनः** गुरूपदेशमात्रजनितज्ञानवतः ।।

**भाष्यम् —कामरूपेण कामाख्येन । नित्यवैरिणा ।।**

## प्रमेयदीपिका

[३]अपरे तु 'ज्ञानिनो नित्यवैरिणा । न मूर्खस्य । ज्ञानी हि विनाशयिष्यामि काममिति यतते । मूर्खस्तु तमनुवर्तते' इति वर्णयन्ति । तदनेनैव निरस्तम् । अपकारित्वं खल्वत्र वैरित्वं विवक्षितम् । तच्च ज्ञान्यपेक्षया मूर्खेऽधिकम् । न हि मूर्खस्तन्नानुसन्धत्त इत्येतावता तन्नास्ति । इच्छानुरूपं रूपं यस्यासौ 'कामरूपः' इत्युच्यते । नचैतत् कामेऽन्तःकरणधर्मे सम्भवतीत्यत आह– **कामेति** ।। रूप्यतेऽनयेति रूपमाख्याऽत्र विवक्षितेत्यर्थः । तर्हि विशेषणपदमिदं जातम् । किमस्य विशेष्यम्? इत्यत आह– **नित्येति** ।।

## भावदीपः

**इति वचनादिति** ।। ज्ञानपादे 'कामचारेण चैके' इत्यत्र कामचारेऽपि[४] अपरोक्ष-

---

१. भा.र.को । ज्ञानकरण -इति पां -श्रीनि-टि ,वे गुज,वे-ग्रं ।

२. 'चोऽप्यर्थे । एके शाखिनः कामकारेण च, कारश्चरणं, यथेष्टाचारेणापि ज्ञानिनो मोक्षं 'कामचाराः कामभक्षाः' इति श्रुतौ पठन्ति यतोऽतो बाधकाभावादस्ति ज्ञानिनः सदसत्प्रवृत्तौ विशेष इति भावः' तन्त्रदीपिकायाम् ।

३. शाङ्करभाष्ये-ज्ञानी हि...इति वाक्यद्वयं न दृश्यते । पृ-३४२ ।। भावानुवाद इति भाति ।

४. सो-मातृकायामेव 'कामचारेपि' इति ।

ज्ञानिनोऽस्त्येव मोक्ष इत्यर्थप्रतिपादक [1]सूत्ररूपवचनादित्यर्थः ।। **मूर्खस्येति** ।। ज्ञानहीनस्येत्यर्थः ।। [2]**अनेनेति** ।। 'ज्ञानिनोऽपि' इत्यादिकथनेनेत्यर्थः ।।

**( कामः दुष्पूरः )**

**भाष्यम् — दुष्पूरेण । दुःखेन हि कामः पूर्यते । न हीन्द्रादिपदं सुखेन लभ्यते । यद्यपीन्द्रादिपदं प्राप्तः पुनर्ब्रह्मादिपदमिच्छतीत्यलम्बुद्धिर्नास्तीत्यनलः ।। उक्तं च -**

**'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा ।**
**आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः ' इति ।**

**प्रमेयदीपिका**

यो न पूरयितुं शक्यः स दुष्पूरः । कामस्तु विषयसम्पादनेन पूरयितुं शक्यः । कथं दुष्पूरः? इत्यतोऽन्यथा व्याचष्टे– **दुष्पूरेणेति** ।। न नञर्थे दुश्शब्दः । किन्तु कृच्छ्रार्थ इत्यर्थः। तदुपपादयति– **न हीति** ।। कामविषयोपलक्षणमेतत् ।।

ननु प्रज्वलनात्मकत्वात् क्रोधोऽनलो युक्तः । कामस्तु कथमनलः? इत्यतः सोपपत्तिकमन्यथा व्याचष्टे– **यद्यपीति** ।। इदमपि प्राप्तादाधिक्यस्योपलक्षणम् । श्लोकद्वयार्थे प्रमाणसम्मतिमाह– **उक्तं चेति** ।। **कामकः** कुत्सितकामो ज्ञानस्य, ब्रह्मणश्च, अग्नेर्धूमः । तथा **बुद्धेः** अन्तःकरणस्य । आदर्शस्य मलम् ।। अथ जीवस्य गर्भस्योल्ब इति सर्वत्र गूढोपमा ।।

एतेन 'इदम्' इत्युक्तस्य विवरणं द्वितीयश्लोके' इति [3]व्याख्यानमपाकृतं भवति।।३९ ।।

**भावदीपः**

**कामो ज्ञानस्य ब्रह्मणश्चेति अग्नेर्धूम** इति ।। 'यथा' इति शेषः ।। **बुद्धेः** इत्यनुवादः, **अन्तःकरणस्य** इति व्याख्या । **तथापदेन**[4] 'कामः' इत्यनुषज्यते । **आदर्शस्य मलमिति** ।। 'यथा' इति, अत्रापि शेषः । **'इह'** इत्यनन्तरमपि 'यथा' इति ध्येयम् । अत एवाऽह– **सर्वत्र गूढोपमेति** ।। **एतेनेति** ।। 'ज्ञानिनोऽपि' इत्यादिकथनेन, प्रमाणकथनेन वा इत्यर्थः ।। ३९ ।।

१. त्व-स्तोत्र-क । अत्र बहु त्रुटितम् ।
२. मातृकात्रयेपि ज्ञानेन इति पठ्यते । लेखकप्रमादात् ।
३. शाङ्करभाष्ये, भाग-१, पृ-३४२ ।
४. 'तथाच आदौ' इति सो-मातृकायां पठ्यते ।

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

**भाष्यम् —** वधार्थं शत्रोरधिष्ठानमाह– **इन्द्रियाणीति** ॥ **एतैः** ज्ञानमावृत्य **बुद्ध्यादिभिर्हि विषयैः ज्ञानम् आवृतं भवति ॥ ४० ॥**

**प्रमेयदीपिका**

'इन्द्रियाणि' इत्यादिकमपृष्टं किमर्थमुच्यते? इत्यत आह– **वधार्थमिति** ॥ एतदर्थमेव ह्यर्जुनेन बलवान् पृष्टः । क्रियाद्वयश्रवणात् किं प्रतीन्द्रियादीनां करणत्वम्? इति न प्रतीयते। सन्निधानाद् विमोहनं प्रतीत्यन्यथा च प्रतीयते । अत आह– **एतैरिति** । तदुपपादयति– **बुद्ध्यादिभिरिति** ॥ इन्द्रियादित्वेनोक्तानामपि बुद्ध्यादित्वेन ग्रहणं प्राधान्य[1]क्रम-ज्ञापनार्थम् ॥ ४० ॥

**तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं [2]प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥**

**भाष्यम् —** हताधिष्ठानो हि शत्रुर्नश्यति ॥ ४१ ॥

**प्रमेयदीपिका**

**तस्मात् त्वम्** इतीन्द्रियाणां निग्रहः [3]कामहननोपायतयोपदिश्यते । [4]तदुपपादयति– **हतेति** ॥ **नश्यति** नाशयितुं शक्यो भवति ॥ ४१ ॥

( कामहननोपायतया तारतम्यकथनम् )

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥**

---

१. वे-ग्रं - क्रम इति नास्ति ।
२. **'प्रजहिहि'** इति सङ्क-भा पाठः । रामानुजीये प्रजहि इत्येव ।
३. 'कामहननायोपदिश्यते' -बे ,गुज,वे-ग्रं ।
४. वे-ग्रं ,गुज । मातृकाद्वयेपि इदं वाक्यं पठ्यते । प्र-नास्ति ।

**भाष्यम् —** शत्रुहनने आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह– **इन्द्रियाणीति** ।।

'असङ्गज्ञानासिमादाय तराति पारम्'[१]

इति ह्युक्तम् ।

शरीराद् इन्द्रियाणि पराणि उत्कृष्टानि । न केवलं बुद्धेः परः । श्रुत्युक्तप्रकारेणाव्यक्तादपि ।

'अव्यक्तात् पुरुषः परः'[२] (काठ.१.३.११)

इति हि श्रुतिः ।।

## प्रमेयदीपिका

**'इन्द्रियाणि पराणि'** इत्यस्य पूर्वेण सङ्गतिर्न दृश्यते । अत आह– **शत्रुहनन** इति ।। **'एवं बुद्धेः परम्** '(३.४३)इत्यनेन वक्तुम् । ज्ञानस्यात्राऽऽयुधत्वे प्रमाणमाह– **असङ्गेति** ।। **असङ्गं** वैराग्यसहितम् । **तराति पारम्** । पारमतितर । 'छन्दसि परेऽपि'(पा.सू.१.४.८.१) इति वचनात् । परत्वस्यावधिसापेक्षत्वात् कस्मादिन्द्रियाणि पराणि? इत्यत आह– **शरीरादिति** ।। सन्निधानादिति भावः । किं परत्वमन्यत्वम्? नेत्याह– **उत्कृष्टानीति** ।। **'यो बुद्धेः परतस्तु सः'** इति परमात्मोच्यते । तस्य बुद्धेः परत्वे महताऽत्मना साम्यं स्यादित्यत[३] आह– **न केवलमिति** ।। काऽसौ श्रुतिर्यद्बलादध्याहारः? इत्यत आह– **अव्यक्तादिति** ।।

## भावदीपः

'वक्तुम्' इत्यस्य 'केन'? इत्याकाङ्क्षायामाह– **एवं बुद्धेः परमित्यनेन वक्तुमिति**।। **अतितरेति** ।। किञ्चित् प्रत्युच्यते अतिक्रान्तो भवेत्यर्थः ।। ननु 'उपसर्गाः क्रियायोगे' (पा.सू.१.४.५९) इत्युक्तेः, उपसर्गस्य 'तर' इति क्रियातः 'अति' इत्युपसर्गस्य प्राक् प्रयोज्यत्वात् 'अतितर' इति पूर्वनिर्देशेन भाव्यम् । कथं तरतीति पश्चान्निर्देशः? इत्यत आह– **छन्दसि परेऽपीति** ।। छन्दोविषये उपसर्गाः परतोऽपि भवन्तीत्युक्तेर्न दोष इत्यर्थः।।

---

१. अस्य समाख्यावचनं भागवते श्रूयते । ५-१३-२०. 'असज्जितात्मा हरिसेवयाशितज्ञानासिमादाय तरातिपारम् ' इति । तेन भागवते पाठान्तरं वा, अस्यैव प्रमाणान्तरत्वं वा अनुमेयम् ।

२. 'अव्यक्तात् श्रीतत्वात् पुरुषः पूर्णत्वहेतुना पुरुषनामा विष्णुः परः' राघवेन्द्रीये–काठकखण्डार्थे ।

३. गुज,वे-ग्रं - इतिशब्दो नास्ति ।

सन्निधानादिति ।। 'इन्द्रियाणि' इत्युक्त्यैव तदाश्रयतया शरीरस्य बुद्धौ सन्निहितत्वादि-त्यर्थः ।। **महता आत्मनेति** ।। महत्तत्त्वाभिमानिना चतुर्मुखेनेत्यर्थः ।।

**( गुणैकदेशज्ञानमात्रेण न मुक्तिः )**

**भाष्यम् — नच तत्र तत्रोक्तैकदेशज्ञानमात्रेण भवति मुक्तिः । सार्वत्रिकगुणोपसंहारो हि भगवता गुणोपसंहारपादेऽभिहितः ।**

**'आनन्दादयः प्रधानस्य'**[1] (ब्र.सू.३.३.१२)

**इत्यादिना । तथा चान्यत्र-**

**'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि ।**
**सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायागताश्च ये ।**
**सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम् ।**
**तेषामेव भवेन्मुक्तिर्नान्यथा तु कथञ्चन '**

**इति गारुडे ।**

**तस्मादव्यक्तादपि परत्वेन ज्ञेयः ।।**

**प्रमेयदीपिका**

अस्तु भगवानव्यक्तादपि परः । तथाऽपि कामादिजयार्थं बुद्धेः परत्वेनैव ज्ञातेनालम् । किं प्रमाणान्तरसिद्धाध्याहारेण? इत्यत आह– **न चेति** ।। कामादिजयो हि मुक्तिद्वारम् । नच मुक्तिरेकदेशज्ञानमात्रेण भवति । कुतः ? इत्यत आह– **सार्वत्रिकेति** ।। तस्यान्यथा-व्याख्यानेऽपि स्पष्टं प्रमाणमाह– **तथा चेति** ।। 'सर्वत्रैव' इति सम्बन्धः । वेदाद्यनुक्ता अपि भगवत्सम्प्रदायागताः । **तैः सह** तैः सहितम् । **नच तत्र** इत्युक्तमुपसंहरति– **तस्मादिति** ।।

**भाष्यम् — न चात्र जीव उच्यते ।**

१. अत्र सर्वमुमुक्षुसाधारणगुणोपासना निर्णीयते । प्रधानस्य मोक्षस्यार्थे आनन्दज्ञाननिर्दोषत्वात्मत्व-रूपाः चत्वारो गुणाः ध्येयाः । अन्यथा तन्न स्यादिति भावः । मोक्षस्येति वाच्ये प्रधानस्येत्युक्तिः 'सुखमेव मे स्याद् दुःखं मनागपि मा भूत्' इति निखिलाशास्यत्वेन प्रधाननिर्दोषसुखानुभवरूप-त्वात् तस्य तदर्थम् एत एवोपास्याः नान्य इति तदुपपादकं सूचयितुम् । 'तं यथा यथोपासते' इत्यादेः । स्वामित्वं तु तत्प्रीत्यर्थत्वादुपास्यमिति 'आत्मेति तूपगच्छन्ति' इत्यत्राग्रे व्यक्तम्' इति तन्त्रदीपिकायां राघवेन्द्रतीर्थाः।

**'रसोऽप्यस्य परं दृष्ट्वा निवर्तते'**(२.५९) इत्युक्तत्वात् ।

**'अविज्ञाय[1] परं मत्तो जयः कामस्य वै कुतः'**

इति च ।

**अतः परमात्मज्ञानमेवात्र विवक्षितम् ।। ४२ ।।**

**प्रमेयदीपिका**

**मायावादी** तु **'यो बुद्धेः परतस्तु सः'** इत्यनेन जीव उच्यते' इत्याह । तन्निराकरोति– **नचेति** ।। कुतः? इति चेत् **'एवं बुद्धेः परम्'** इत्येतज्ज्ञानस्य कामविनाशसाधनत्वोक्तेः, तस्याश्च भगवत्परिग्रहे घटनादन्यथाऽघटनादिति भावेनोभयत्र प्रमाणमाह– **रसोऽपीति** ।। 'न चात्र' इत्युक्तमुपसंहरति– **अत** इति ।।

**भास्करस्तु** 'कामोऽत्रोच्यते' इत्याह । तदतीव मन्दम् । 'कामः सङ्कल्पः'(बृ.उ) इत्यादिश्रुतेस्तस्य मनोधर्मस्य तत्परत्वानुपपत्तेः,पक्षद्वयेऽपि 'इन्द्रियाणि पराणि' इत्यादिना तारतम्योक्तेः न प्रयोजनमस्तीति ।। ४२ ।।

**भावदीपः**

**तस्यान्यथाव्याख्यानेऽपीति** ।। यत्र शाखायाम् 'आनन्दादयः प्रधानस्य ब्रह्मणो नोक्तास्तत्र उपसंहर्तव्याः' इत्यादि व्याख्यानेऽपीत्यर्थः ।। **कामोऽत्रोच्यत इति** ।। **'बुद्धेः परतस्तु सः'** इत्यत्रेत्यर्थः ।। **पक्षद्वयेऽपीति** ।। जीव इति पक्षे, काम इति पक्षे चेत्यर्थः ।। **इति**शब्दो मतद्वयदोषोक्तिसमाप्तौ ।। ४३ ।।

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽत्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ।। ४३ ।।**

**।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो[2] नाम तृतीयोऽध्यायः ।।**

---

१. बे,गुज, वे-ग्रं । प्र-अविहाय ।

२ निवृत्तकर्मयोगस्यावश्यकार्यतया ज्ञापनरूपप्रपञ्चनं नाम इति नामान्तरम् ।

**भाष्यम् — आत्मानं मनः । आत्मना बुद्ध्या ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये तृतीयोऽध्यायः ।।

**प्रमेयदीपिका**

'संस्तभ्यात्मानमात्मना' इत्यस्य 'जीवात्मानं परमात्मनैकीकृत्य' इति व्याख्यानं शब्दबाह्यमित्याशयवान् आत्मशब्दद्वयं व्याख्याति– **आत्मान**मिति ।। ४३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां तृतीयोऽध्यायः ।। ३ ।।

**भावदीपः**

**शब्दबाह्यमिति** ।। संस्तभ्यशब्देनैकीभावार्थालाभादिति भावः ।। ४३ ।।

।। इति श्रीराघवेन्द्रयतिकृतगीताभाष्यभावदीपे तृतीयोऽध्यायः ।।

# ।। अथ श्रीमद्भगवद्गीतायां चतुर्थोऽध्यायः ।।

( कृष्णेन योगस्य परम्पराप्राप्तत्वनिरूपणम् )

**श्रीभगवानुवाच**

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**[1]विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ।। १ ।।**

( चतुर्थाध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम् —** बुद्धेः परस्य माहात्म्यं, कर्मभेदः, ज्ञानमाहात्म्यं चोच्यतेऽस्मिन् अध्याये ।

### प्रमेयदीपिका

उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोऽयमध्याय इति पूर्वसङ्गताध्यायार्थस्थिताविह प्रकरणभेदप्रतिपादनार्थमाह–बुद्धेरिति ।। **'एवं ज्ञात्वा'** (४.१५,३२) इत्यतः प्राक्तनेन ग्रन्थेन **बुद्धेः परस्य** विष्णोर्माहात्म्यमुच्यते । आद्यस्य प्रकरणस्य[2] पूर्वेण सङ्गतिं सूचयितुं **बुद्धेः परस्य** इत्युक्तम् । **'श्रेयान्'**(४.३३) इत्यतः पूर्वेण **कर्मभेदः** । निवृत्तस्य कर्मणोऽन्यस्माद्भेदः । निवृत्त एव कर्मण्युपासनायज्ञादिरूपेण वा भेदः । **ज्ञानमाहात्म्यं** शेषेणेति ।।

### भावदीपः

गीतातात्पर्योक्तयुक्तिमाह– उक्तयोरिति ।। **'एवं बुद्धेः परं बुद्ध्वा'** इत्यनेन **'नियतं कुरु कर्म त्वम्'** इत्यादिना चोक्तयोर्ज्ञानकर्मणोरित्यर्थः । **'कर्मभेदः'** इत्यनूद्य तस्य द्वेधा अर्थमाह– **कर्मभेद इत्यादिना** ।। उपासनारूपेण यज्ञादिरूपेण चेत्यर्थः ।।

---

१. (अ) 'विवस्वते दक्षं प्रविश्य प्रोक्तवान् इति ध्येयम्' इति पद्मनाभतीर्थाः।
(आ) अत्र नरहरितीर्थीये मोक्षधर्म (शान्ति.३४८.४८-५०)वचनान्युदाहृतानि ।
'तत्रैष धर्मः कथितः स्वयं नारायणेन ह । पितामहाय शुद्धाय युगादौ लोकधारिणे ।।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ। ततो ज्येष्ठे च दौहित्रे प्रादाद्दक्षो नृपोत्तम ।।
आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः । त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ ।।
२. गुज। श्रीनि-रीत्या 'प्रकरणस्य' इति नास्ति ।

**भाष्यम् —पूर्वानुष्ठितश्चायं धर्म इत्याह– इममिति ।। १ ।।**

## प्रमेयदीपिका

**'इमं विवस्वते योगम्'** इत्युपदेशपरम्पराकथनं प्रकृतानुपयुक्तमित्यतस्तत्तात्पर्यमाह– **पूर्वेति** ।। 'पूर्वैरनुष्ठितः । **'ये मे मतम्'**(३.३१)इत्युक्तेन हेतुना सहास्य समुच्चयार्थश्च-शब्दः । **अयं धर्मः 'मयि सर्वाणि'**(३.३०) इत्यनेनोक्तः । योगशब्दोऽप्यनेन व्याख्यातः। न केवलमुपदेशपरम्पराऽत्रोच्यते । किन्तु तेषामनुष्ठानमप्युपलक्ष्यते । [1]तच्च इतोऽपि त्वया अनुष्ठेयमिति प्रतिपादनार्थमिति भावः ।।

**'कर्मणैव हि संसिद्धिम्'**(३.२०) इत्यनेनैतद्गतार्थमिति चेन्न । गृहस्थकर्म त्वया न त्याज्यम् इत्यस्योपपादनायाऽचारस्य तत्रोक्तत्वात् । अत्र तु निवृत्तधर्मानुष्ठाने सदाचारस्योच्य-मानत्वात् । अत एव तत्र **'आचारः'** (**गी.भा.३.२०**) इत्येवोक्तम् । इह तु **'अयं धर्मः'** इति । **'लोकेऽस्मिन् द्विविधा'**(३.३) इत्यत्रोक्तस्य **'कर्मणैव'** (३.२०) [2]इत्युदाहरणमुक्तमिति तत्रापि न दोषः ।।

## भावदीपः

**इत्युक्तेन हेतुना 'नियतं कुरु कर्म त्वम्'** (३.८) इत्यादिनोक्ते कर्मावश्यं कर्तव्यमिति साध्ये कर्मणो ज्ञानद्वारा मुक्तिहेतुत्वरूपहेतुना पूर्वैरनुष्ठितत्वरूपहेतोः समुच्चयार्थ इत्यर्थः ।। **योगशब्द इति** ।। गीतास्थ इत्यर्थः ।। न केवलं तात्पर्यकथनमित्यपेरर्थः ।। गीतायामुपदेश-परम्परोक्तावपि **'अनुष्ठितः'** इत्युक्तेर्लभिप्रकारः, तदभिप्रायमाह– **न केवलमिति** ।। एतेन चशब्दस्यार्थान्तरमुक्तं ध्येयम् ।।

**एतद्गतार्थमिति** ।। **'इमं विवस्वते'** इत्यादिना उपलक्षणया महद्भिरनुष्ठितत्वकथनं गतार्थम्। तत्रापि जनकाद्यनुष्ठानस्यैवोक्तेरिति भावः ।। ननु **'लोकेऽस्मिन्'** इति श्लोके **'कर्मयोगेन योगिनाम्'** इत्युक्तेः, तेन **'कर्मणैव** इत्यस्य पौनरुक्त्यमित्यत आह– **लोके-ऽस्मिन्निति** ।। योगिनः के? इत्याकाङ्क्षायाम् **'एते जनकादयस्तु'** इत्युक्तमित्यर्थः ।।१।।

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परन्तप ।। २ ।।**

---

१. गुज -ततोऽपि- (पां )भा.र.को. श-मा.२।

२. इत्याद्यु - इति प्र. । बे, गुज -श१,२-मातृकायाम् आदिशब्दो नास्ति ।

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

अर्जुन उवाच

अपरं[1] भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

श्रीभगवानुवाच

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥[2]

**भाष्यम् — 'मयि सर्वाणि'** (३.३०) इत्युक्तम् । तन्माहात्म्यम् आदितो ज्ञातुं पृच्छति – **अपरमिति** ॥ ४ ॥

**प्रमेयदीपिका**

ननु **'न त्वेवाहम्'**(२.१२) इत्यादिना सर्वप्रकारेणोत्पत्ति[3]विनाशराहित्यमुक्तं भगवतः । तच्छ्रुत्वा कथम् 'अपरम्' इति पृच्छति? इत्यत आह– **मयीति** ॥ **तन्माहात्म्यम्** इत्युपलक्षणम् । (उपादीयते अनेनेत्यादिः प्रमाणं तेन आदिनेत्यादितः । उपसर्गाद्योकिः । आतो लोपः' इति च तृतीयान्तादादिशब्दात्तसिः । आदीयते इति)[4] **आदितः** प्रमितिकारणतः । **'मयि सर्वाणि'**(३.३०) इत्यत्र परमेश्वरस्य **माहात्म्यं** पूज्यत्वादिलक्षणमुक्तम् । अर्जुनस्य

१. 'अवरम्' इति रामानुजीयपाठे ।

२. (अ) 'किञ्चेश्वरवचनैस्तस्य संसारिभेदानुभव एवानुमीयते । कुतस्तत्राभेदानुभवप्रत्याशेत्याशयवानाह- 'तान्यहं... परन्तप' इति । तानि व्यतीतानि । अत्र ज्ञानित्वाज्ञानित्वाभ्यां भेदोक्तिः'॥ तत्त्वोद्योतटीकायाम्-(द्वि.भागे पृ.२७७)

(आ) न्यायामृते भेदपञ्चके प्रत्यक्षप्रकरणे - 'ईश्वरस्य जीवाद् भेदे तु 'तान्यहं वेद..परन्तप','उत्तमः पुरुष...'इत्यादि-तद्वचनानुमितमीश्वरप्रत्यक्षं प्रमाणम '॥ न्या-कण्ठकोद्धारे- तद्विवृतम् पृ -४१२ ॥

(इ) तत्रैव- एकजीवाज्ञानकल्पितत्वभङ्गे -'ईश्वरस्य च अयं सर्वज्ञः इति जीवेन कल्पितत्वेऽप्यहं सर्वज्ञ इति ज्ञातृत्वाभावेन 'तान्यहं वेद सर्वाणि' इत्याद्ययोगात्' ॥

३. विनाश -वे , गुज ,वे-ग्रं । श-मा१ नाश इत्येव ।

४. अयं कंसार्गतभागः मुद्रितसर्वपुस्तकेषु नास्ति । केवलं श-मा-२ मातृकायामेव दृश्यते ।

च पूजकत्वादिकम् । तमिममीश्वरजीवयोः पूज्यपूजकत्वादिना भगवताऽङ्गीकृतं भेदं प्रमाणेन ज्ञातुमेवं पृच्छतीत्यर्थः ।। ४ ।।

अत एव ज्ञाताशयो भगवान् **'तव च'**, **'न त्वं वेत्सि'**[1] इति परिहरति । अन्यथाऽनुपयुक्तं तन्न वक्तव्यमेव ।। ५ ।।

**भावदीपः**

**सर्वप्रकारेणेति** ।। शस्त्रपावकादिना प्रकारेणेत्यर्थः । यद्वा स्वरूपेण देहेन कूटस्थत्वेन वेत्यर्थः ।। **तन्न वक्तव्यमिति** ।। **'बहूनि'** (४.५) इत्यादिनैव प्रश्नपरिहारस्य पूर्तेः **'तान्यहं वेद'** इत्यादिना तज्ज्ञत्वतदज्ञत्वयोर्भेदज्ञापनाभिप्रायाभावे वक्तव्यता न स्यादित्यर्थः।।४.५।।

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।। ६ ।।**

**भाष्यम्** — न तर्ह्यनादिर्भवानित्यत आह– **अजोऽपीति** ।। अव्ययः आत्मा देहोऽपीति **अव्ययात्मा** ।

**'अनन्तं विश्वतो मुखम्'**(११.११)

इति हि रूपविशेषणमुत्तरत्र ।

**'एतन्नानावताराणां निधानं बीजमव्ययम्'**[2] (भाग.१.३.५)

इति च ।

**'जगृहे'** (भाग.१.३.१) इति तु व्यक्तिः ।

[3]युक्तयस्तूक्ताः । आत्माऽनादित्वं तु सर्वसमम् ।।

---

१. न त्वं वेत्सि इति वे, गुज,वे-ग्रं ,श-१,२-मातृका । अयमेव श्रीनि, कृ,सम्मतश्च । 'वेत्थ' इति प्र ।

२. 'त्रयाणां रूपाणां मध्ये पद्मनाभाख्यं रूपमवतारकारणमित्याह- एतदिति । यत् क्षीरार्णवशायिपद्मनाभाभिधं रूपम् एततन्मत्स्यादिनानावताराणां वीजं व्यञ्जकम् । निधानम् अन्ततो अत्र सर्वावतारा निधीयन्ते एकीक्रियन्त इति । न व्येतीत्यव्ययम् ।' इति विजयध्वजीये ।

३. ब्र.सू.भा.२.३.१७ भावदीपे 'जगृहे पौरुषं रूपम्' इत्यादि तु प्रथमस्कन्धतात्पर्ये,'जगृह इति तु व्यक्तिः' इति चतुर्थगीताभाष्ये च व्याख्यातम् ।।....।।

## प्रमेयदीपिका

प्रश्नस्य परिहृतत्वात् **'अजोऽपि'** इति किमर्थम् ? इत्यत आह - **न तर्हीति** ।। यदि जन्मानि व्यतीतानि तर्हीत्यर्थः । **अनादिः** देहतोऽपि । उपलक्षणं चैतत् । मरणरहितः, सर्वभूतानामीश्वरश्चेत्यपि द्रष्टव्यम् । तथाचोक्तविरोध इति भावः ।।

ननु देहतोऽप्यनादित्वादेराक्षेपेऽजत्वादिमात्रं कथमुच्यते? इत्यतः **'अव्ययात्मा'** इत्येतावता देहतोऽप्यविनाशमाचष्टे । तत्साहचर्यात् **अजोऽपि** इत्येतदपि तथैव व्याख्येयमिति भावेनाऽह– **अव्यय** इति ।। **अपिपदात्परम्** 'अस्य' इत्यध्याहार्यम् । स्यादेवं व्याख्यानं यदि भगवद्विग्रहस्याप्यव्ययत्वं गीताचार्यस्याभिमतं स्यात् । तदेव कुतः? इत्यत आह - **अनन्तमिति** ।। **इति** च रूपविशेषणमिति वर्तते ।।

एवं तर्हि कथं तत्रैव 'जगृहे पौरुषं रूपम्' इति रूपग्रहणमुच्यते? गृहीतस्य च त्यागो नियत एवेत्यत आह– **जगृह** इति ।। **व्यक्तिः** 'उच्यते' इति शेषः । कुत एवं कल्प्यते? इत्यत आह - **युक्तय** इति ।। युज्यत एभिरिति **युक्तयः** प्रमाणानि । असम्भावना[1](आदि) परिहारार्था अचिन्त्यशक्तित्वाद्या युक्तयो वा । **उक्ताः** द्वितीये ।।

अस्तु भगवद्विग्रहस्याप्यव्ययत्वम् । अत्र तु स्वरूपस्यैवोच्यत इति किं न स्यात्? इत्यत आह– **आत्मेति** ।। 'आत्मनः स्वरूपस्य[2] विग्रहस्याप्यव्ययत्वोपपादेनेनाजत्वमपि साहचर्यात्तस्यैव' इति योऽभिप्रायस्तं प्रकटयितुम् 'अव्ययत्वम्' उपक्रम्य 'अनादित्वम्' इत्युक्तम् । **सर्वसमं** जीवानमप्यस्ति । अतस्तद्विषयो [3]नाक्षेपः परिहारो वा सम्भवतीति भावः। आत्मशब्दोऽप्यन्यथा व्यर्थः । अस्मत्पक्षे स्वरूपदेहयोरुपादानार्थः । अत एव 'देहोऽपि' **(भाग.११.१३.१७)** इत्युक्तम् ।।

## भावदीपः

गीतोक्ताव्यय-आत्मादिपदानुरोधेनाह– **उपलक्षणश्चैतदित्यादि** ।। **उक्तेति** ।। **'नत्वेवाहम्**'(२.१२) इत्यादिनोक्तेत्यर्थः ।। **'अनन्तम्**' इति भाष्ये **उत्तरत्र** इत्यस्य एकादशेऽध्याये

---

१. श-मा-१,२ आदिपदमधिकम् ।

२. वे,**'देहस्यापि' -पां । श-मा१,२, कृ-टि सम्मतश्च । 'विग्रहस्य' इति तु - गुज । श्रीनि, भा.र.को सम्मतः ।**

३. बे, गुज, श-१-२ पाठः । आक्षेपः परिहारो वा न - प्र ।

**'दर्शयामास पार्थाय परमं रूपमैश्वरम्'**(११.९)

इति पूर्वत्र प्रकृतरूपस्य **'अनन्तं विश्वतो मुखम् । दर्शयामास'** इति **देशकालगुणैरनन्तम्** इति अनन्तत्वविशेषणोक्त्या विग्रहस्याव्ययत्वं ज्ञायते । तथा प्रथमस्कन्धे तृतीयेऽध्याये

**'जगृहे पौरुषं रूपम्'** इत्यस्येत्यर्थः ।।

**'जगृहे पौरुषं रूपम्'** इति पूर्वत्र प्रकृतरूपस्य 'अव्ययम्' इति च विशेषणं युक्तमित्यर्थः।। **द्वितीय इति** ।। द्वितीयाध्यायान्त्यभागे **'न च तद्ब्रह्मणो शरीरत्वादेतत् कल्प्यम्'** इत्यादिनेति भावः ।। **'आत्मानादित्वम्'** इत्यत्र आत्मपदं षष्ठ्यन्तत्वेनानूद्यार्थमाह– **आत्मन इति ।। तस्यैवेति ।।** विग्रहस्यैवेत्यर्थः ।। **योऽभिप्राय इति ।।** 'गीताचार्यस्य' इत्यनुषङ्गः।। **आक्षेप इति** ।। न तर्ह्यनादिर्भवान् इत्येवाक्षेप इत्यर्थः ।। **अत एवेति** ।। आत्मपदे स्वरूपस्याप्यभिमतत्वादेव । भाष्ये स्वरूपसमुच्चयार्थं **'देहोऽपि'** इत्युक्तं प्रागित्यर्थः ।।

( भगवान् जात इव प्रतीयते )

**भाष्यम् —** कथमनादिनित्यस्य जनिः? **प्रकृतिं स्वामधिष्ठाय** । प्रकृत्या जातेषु वसुदेवादिषु । तथैव[1] तेषां जात इव प्रतीयत इत्यर्थः । न तु स्वतन्त्रामधिष्ठायेत्याह– **स्वामिति** ।।

**'द्रव्यं कर्म च'** (भाग.२.१०.१२) इति ह्युक्तम् ।

सा हि तत्रोक्ता । ततः सर्वसृष्टेः ।।

**प्रमेयदीपिका**

एवंतर्हि **'प्रकृतिं स्वामधिष्ठाय'** इति कथमुक्तम्'? इत्यतस्तदन्यथाव्याख्यातुमाह– कथमिति ।। स्वरूपतो देहतश्च **अनादिनित्यस्य 'सम्भवामि'** इति जनिः **कथम्** उच्यते? व्याहतत्वादित्यत 'आह' इति शेषः । **अधिष्ठाय** इत्यतः परम् इतिशब्दश्च । कथमनेन परिहारः? इत्यतो व्याचष्टे– **प्रकृत्येति** ।। **वसुदेवादिषु** 'प्रादुर्भूतत्वात्' इति शेषः । अनेन जन्मभ्रान्तेर्निमित्तमुक्तम् । यथोक्तम्- **'स्त्रीपुम्प्रसङ्गात्'** (म.भा.ता.नि.१०.५०) इत्यादि । भ्रान्तेरुपादानमाह–[2] **तथैवेति** ।। तमोरूपया । यदि मातापितृसम्बन्धोऽङ्गीकृतस्तर्हि तन्निमित्तं

१. 'तयैव तेषां प्रतीये'इति गुज, वेग्रं -प्र.पाठः । प्रभञ्जन.पाठ तथैव इत्येव ।
२. बे, श-१ । तयैव इति प्र.पाठः ।

दुःखादिकमपि प्रसज्यत इत्याशङ्का[1]निरासाय **स्वाम्** इति पदं व्याख्याति– **नन्विति** ।।

प्रकृतेर्भगवदधीनत्वं कुतः? इत्यत आह– **द्रव्यमिति** ।। अत्र वाक्ये प्रकृतिर्न श्रूयत इत्यत आह– **सा हि** इति । 'द्रव्यपदेन' इति शेषः । [2]तस्यात्र प्रकृतिवाचित्वं कुतः ? इत्यत आह– **तत** इति ।। सर्वसृष्टिकारणानि ह्यत्र निर्दिश्यन्ते । तच्च प्रकृतेरेव सम्भवति । न पृथिव्यादेरित्यर्थः ।।

**( भगवतो जन्मभ्रान्तेर्निमित्तम् )**

**भावदीपः**

**यथोक्तमिति** ।। भारततात्पर्ये दशमे –

स्त्रीपुंसङ्गात् परतो यतो हरिः प्रादुर्भावत्येव विमोहयन् जनम् ।
अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहम्'

इति जन्मभ्रान्तेर्निमित्तमुक्तमित्यर्थः ।। **तमोरूपयेति** ।। अनाद्यविद्यारूपयेत्यर्थः ।। **तस्यात्रेति** ।। 'द्रव्यं कर्म च' इति वचने द्रव्यपदस्येत्यर्थः ।। **अत्र निर्दिष्यन्त इति** ।। 'द्रव्यं कर्म च' इत्यत्रेत्यर्थः ।। द्वितीयस्कन्धे दशमे 'द्रव्यं कर्म च' इत्युक्त्वा,

'एको नानात्वमन्विच्छन् योगतल्पात् समुत्थितः ।
वीर्यं हिरण्मयं देवो मायया व्यसृजत् त्रिधा ।।' (२.१०.१३)

इत्युक्तिरिति भावः ।।

**( मायाशब्दार्थः )**

**भाष्यम् —** आत्ममायया आत्मज्ञानेन । प्रकृतेः पृथगभिधानात् ।।
'केतुः । केतः । चेतः । चित्तम् । मतिः । क्रतुः । मनीषा । माया ...'[3]
(वैदिकनिघण्टौ -३-९) इत्यभिधानात् ।

---

१. 'त्यादिशङ्का'–पां. श-मा.१,२ ।
२. 'तस्य प्रकृतिवाचित्वम्' इति भावदीपानुसारेण पाठः ।
३. 'केतुः । केतः । चेतः । चित्तम् । क्रतुः । असुः । धीः । शची । माया । वयुनं (ज्ञानम् ) अभिख्या' इति एकादश प्रज्ञानमानि' इति वैदिकनिघण्टौ -३-९ । 'केतुः केतश्चितिश्चित्तम्' इति प्रचलितः ।

'आत्ममायया आत्मविद्यया' इति प्रतीतिनिरासायाह– **आत्मेति** ।। कुतो हेतोरेवं जीवविलक्षणं ते जन्म? इत्याशङ्कानिरासार्थमेतत् । अन्यथाप्रतीतिरप्यनेन परिहृता । सर्वज्ञस्याविद्याऽयोगात् । प्रकृतिरत्र माया किं न स्यात्? इत्यत आह - **प्रकृतेरि**ति ।। मायाशब्दस्य ज्ञानवाचित्वं कुतः? इत्यत आह– **केतुरि**ति ।। 'इति[1] प्रज्ञायाः नामधेयानि' इति वाक्यशेषात् ।।

**( प्रकृतिपदवाच्या श्रीः जगदुपादानकारणम् )**

**भाष्यम् — सृष्टिकारणया तेषां शरीरादि सृष्ट्वा विमोहिकयाऽजात एव जात इव प्रतीयते वा । उक्तं च -**

**'महदादेस्तु[2] माता या श्रीर्भूमिरिति कल्पिता ।**
**विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि ।**
**जातवत् प्रथते ह्यात्मचिद्बलान्मूढचेतसाम् ।।' इति ।**

**प्रमेयदीपिका**

प्राक् '**प्रकृतिं स्वामधिष्ठाय**' इत्यनेनैव भ्रमनिमित्तत्वमुपादानत्वं च प्रकृतेरुक्तमिति मायाशब्दो न प्रकृतिवाची । पुनरुक्तिप्रसङ्गादित्युक्तम् । इदानीं तस्य निमित्तमात्रपरत्वे मायाशब्दस्य प्रकृत्यर्थतायामपि न दोषः । [3]उपादानप्रतिपादनार्थत्वादिति भावेनाऽह– **सृष्टी**ति ।। 'प्रकृत्या' इति शेषः । **तेषां** वसुदेवादीनाम् । **सृष्ट्वा** तत्र प्रादुर्भूतः । **विमोहिकया** मायाख्यया । अत्रागमसम्मतिमाह– **उक्तं चे**ति ।। **आत्मचिद्बलाद्** अजात एव ।।

**भावदीपः**

**अनेनेति** ।। उक्तशङ्कानिरासार्थं प्रवृत्तत्वेनेति वा आत्मज्ञानेनेति व्याख्यानेनेति वा अर्थः ।। **निमित्तमात्रपरत्व इति** ।। हरेर्जन्मभ्रान्तेरिति योज्यम् । **उपादानेति** ।। तमोरूपोपादानार्थत्वादित्यर्थः । 'भ्रान्तेः' इति शेषः ।। '**सृष्टिकारणया**' इति स्त्रीलिङ्गनिर्वाहाय

---

१. इति 'एकादश' प्रज्ञानामधेयानि' इति 'एकादश' इतिपदमधिकं मातृकायाम् । एवं गीताभाष्ये १२.२ श्लोके अस्य कोशस्यावशिष्टभागोप्युदाहृतः ।

२. महदादेश्च-बे ,गुज ,वे-ग्रं

३. बे ,गुज, । उपादानार्थत्वात् -प्रच ।

विशेष्यमाह– **प्रकृत्येति शेष इति** ।। ल्यबन्तस्य नपुंसकत्वेऽप्यत्र स्त्रीलिङ्गत्वोक्ति[1]निर्वाहो **'वहवः कर्मकारणाः'**(३.३६) इत्यत्रोक्तदिशा ध्येय इति भावः ।। **'अजोऽपि'** इत्यस्यार्थः - **जात एवेति** ।।

**( ईश्वरशब्दार्थः )**

**भाष्यम् —ईश्वरः ईशेभ्योऽपि वरः । तच्चोक्तम्–**

**'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् ।**
**वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्यचित् ।।'**

**इति ब्रह्मवैवर्ते ।**

**'समर्थ ईश इत्युक्तस्तद्वरत्वात् त्वमीश्वरः' इति च ।। ६।।**

**प्रमेयदीपिका**

नन्वीशनशीलानामपि ब्रह्मादीनामुत्पत्तिमरणदर्शनेन विरोधाभावात् 'ईश्वरोऽपि सम्भवामि' इति कथमुच्यते? इत्यतः 'स्थेशभासपिसकसो वरच्' **(पा.सू. ३.२.१७५)** इत्येतद्विहायान्यथा व्याचष्टे– **ईश्वर** इति ।। कुत एतत्? इत्यत आह– **ईशेभ्य** इति ।। एतदागमबलादेव समासाकारलोपावनुमन्तव्यौ । अजत्वादेः सम्भवेन[2] शाब्दो व्याघातः, अस्य तु व्याप्त्येति ज्ञापनाय क्रममुल्लङ्घ्य व्याख्यातम् ।। ६ ।।

**भावदीपः**

वरच्प्रत्ययस्य 'आकेस्तच्छीलतद्धर्मतत्साधुकारिषु' **(पा.सू.३.२.१३४)** इति सूत्राद् अनुवृत्तताच्छील्यार्थे विधानादीशनशीला इति ईश्वरशब्दार्थोऽनूदितः ।। **स्थेशभासेति** ।। 'ष्ठा गतिनिवृत्तौ' स्थावरः। 'ईश ऐश्वर्ये' ईश्वरः । 'भासृ दीप्तौ' भास्वरः । 'कसृ गतौ' कस्वरः इति पाणिन्युक्तं स्थाप्रभृतिधातुभ्यस्ताच्छीलार्थकवरच्प्रत्ययान्तत्वं विहायेत्यर्थः ।।

ननु 'पञ्चमी भयेन' **(पा.सू .२.१.३७ )** इति पञ्चम्यन्तस्य भयेनैव 'चोराद्भयं चोरभयम्' इत्यादावेव समासोक्तेः इह कथं समासः? ईशेभ्योऽपि वर इति विग्रहे च ईशवर इति भाव्यम्। कथं शकारस्थाकारलोपः? इत्यत आह – **एतदागमबलादेवेति** ।। 'प्रकृतिम्' इत्यादि

१. उक्ति इति सो मातृकायामेव ।
२. **'सम्भवादिना'** इति पाठे इति पाठान्तरोप्युक्तः -श्रीनि - टि ।

व्याख्यानानन्तरमेवेश्वरपदव्याख्याने तात्पर्यमाह– **अजत्वादेरिति** ।।

**सम्भवेनेति** ।। **'सम्भवामि'** इत्युक्तसम्भवशब्दितजन्मना अजत्वाव्ययदेहत्वयोः शब्दकृतो व्याघातः । अस्य त्वीश्वरपदोक्तब्रह्मरुद्रादीशशब्दितसमर्थेभ्योऽपि वरत्वस्य तु 'योऽयं निवारणेऽतिसमर्थः स तद्वान्त्र' इति व्याप्तावशक्तस्य ईश्वरस्य कथं जन्मादि? इति व्याघातोऽनुमेय इत्यजादिपदव्याख्यानन्तरमेव [1]अव्याख्याय पश्चाद् व्याख्यातमित्यर्थः । तदुक्तं **'सर्वधर्मोपपत्तेश्च'** (ब्र.सू.२.१.३८) इत्यत्र 'ईश्वरः सर्वदा त्यक्तसमस्तजननमरणादिदोषः । तज्जिहासुत्वे सति तत्र शक्तत्वात्' इत्यादि[2] ।। ६ ।।

( भगवदवतारे निमित्तम् )

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ।। ७ ।।**[3]
**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।। ८ ।।**[4]

---

१. सो-मातृकायामेव । का-'व्याख्यानानन्तरमेव व्याख्या पश्चाद्व्याख्यानमित्यर्थः' इति पठ्यते ।

२. इदं वाक्यं कुत्रत्यमिति नोपलब्धम् । एतत्सजातीयानि वाक्यानि सुधायामुपलभ्यन्ते । तद्यथा-
'द्वेधा हि वस्तु न प्राप्यते । तत्र स्वातन्त्र्याभावाद्वा प्रेप्साभावाद्वा । द्वेधा च न हीयते । स्वातन्त्र्याभावाद्वा जिहासाभावाद्वा । अस्ति तावदीश्वरस्य सर्वत्र स्वातन्त्र्यम् । अस्ति च मया सर्वदा आनन्दादिगुणवता दुःखादिदोषवर्जितेन भाव्यमितीच्छा, प्रेक्षावत्त्वात् । अतः कथं तस्यानन्दादिगुणपूर्णत्वं दुःखादिसर्वदोषदूरत्वं न भवति । अत्रैते प्रयोगाः । ईश्वरः सकलगुणपूर्णः सर्वदोषदूरश्च, स्वतन्त्रत्वात् ,व्यतिरेकेण यज्ञदत्तवत् । ईश्वरो विप्रतिपन्नगुणवान् तत्र प्रेप्सावत्वे सति स्वतन्त्रत्वात्, यो यत्र प्रेप्सावत्वे सति स्वतन्त्रः स तद्वान् यथा सम्प्रतिपन्नः । विमतो न विमतदोषवान्, तज्जिहासुत्वे सति सति स्वतन्त्रत्वात्, यो यत्र जिहासावत्वे सति स्वतन्त्रः स तदभाववान् , यथा सम्मत इति '।।

३. (अ) 'सात्त्विकेषु त्रिषु यदा त्वेकस्य प्रतिबाधनम् । रजस्तमोभ्यां विष्णुर्हि तदा प्रादुर्भवत्यजः।।
राजसांस्तामसान् हत्वा सात्त्विकान् वर्धयत्युत ।।' इति स्कान्दे (भाग.ता.२.१.४२)
(आ) संस्थापनाय धर्मस्य प्रशमायेतरस्य च । अवतीर्णो हि भगवानंशेन जगदीश्वरः ।।
'हि प्रसिद्धमेतत् । 'यदा यदा हि..भारतेत्यादौ' इति सत्यधर्मतीर्थाः ।। भाग.१०.३१.२७.

४. (अ)न्यायामृते ब्रह्मणो उपादानत्वे प्रमाणभङ्गे - 'एतेनैव 'असद्वा इदमग्र आसीत् ,ततो वै सदजायत,तदात्मानं स्वयमकुरुत' इत्येतदपि व्याख्यातम् । 'तदात्मानं सृजाम्यहम् , सम्भवामि युगे युगे ' इत्यादिवदुपपत्तेः ।।'

**भाष्यम् —** न जन्मनैव परित्राणादिकं कार्यमिति नियमः । तथाऽपि लीलया स्वभावेन च यथेष्टचारी । तथा ह्युक्तम् –

'देवस्यैष स्वभावोऽयम्'[१] (मां.१.१९),

'लोकवत्तु लीला कैवल्यम्'[२](ब्र.सू.२.१.३४)

'क्रीडतो बालकस्येव चेष्टां तस्य निशामय' (विष्णुपुराणे.१.२.१८)

'अरिभयादिव स्वयं पुराद् व्यवात्सीद् यदनन्तवीर्यः'[३](भाग ३.२.१६),

'पूर्णोऽयमस्यात्र न किञ्चिदाप्यं तथाऽपि सर्वाः कुरुते प्रवृत्तीः ।

अतो विरुद्धेषुमिमं वदन्ति परावरज्ञा मुनयः प्रशान्ताः ।।'

इत्यादि ऋग्वेदखिलेषु ।। ८ ।।

---

(आ) लोकेऽस्य जन्मकर्माणि सदसन्मिश्रयोनिषु । क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ।। (भाग.१०.४४.४०)

१. (अ)**वैषम्यनैर्घृण्याधिकरण. ता.चं.प्रकाशिकायाम्** 'एषः - इच्छापूर्वकसृष्ट्यादिव्यापारः' ।

(आ)**राघवेन्द्रीयखण्डार्थे** 'देवस्य अयं सृष्ट्यादिविषयः एषः इच्छा इच्छापूर्वको व्यापार इति यावत् । इषु इच्छायां घञ् । स्वभाव एव । न प्रयोजनाय' ।

(इ) देवस्यायं सृष्ट्यादिविषयः, एषः= इच्छा, तत्पूर्विका कृतिरिति यावत् । स्वभाव एव न प्रयोजनाय। **न-प्रयोजनाधिकरणसुधा ।**

(ई)'देवस्य' हरेः 'अयं' सृष्ट्यादिविषये 'एषः' इच्छा । भावे घञ् । तत्पूर्विका प्रवृत्तिरिति यावत् । स्वभाव एव न प्रयोजनाय भवति । कुतः? यतः 'आप्तकामस्य' पूर्णकामस्य 'का स्पृहा' किं फलेच्छाऽस्ति न काऽप्यत इत्यर्थः । अयं च सुधायामुक्तः । न्यायदीपिकायां तु -'एषः' अवतारादिः देवस्य स्वभावः । सः स्वभावश्च 'अयं' देव एव, न तु ततो भिन्न इत्यर्थविशेष उक्तः । गीताभाष्य-प्रमेयदीपयोस्तु - 'अयमेषः' इयमिच्छेति व्याख्याय विष्णोः सर्वजनरक्षणायावतारेच्छा लीलारूपा स च स्वभाव इत्यर्थः' -

**ब्र.सू.भाष्यदीपिका ।**

२. 'फलाभावे कथमीशस्य प्रेक्षावतः प्रवृत्तिरित्यत आह- लोकवत्तु लीलाकैवल्यमिति । तुरेव । मत्तादेर्नृत्तगानादिका क्रिया यथा तथेशस्यापि सृष्टिक्रिया लीलायाः कैवल्यं केवलं प्रयोजनवत्तां विना लीलैवेत्यर्थः । फलाभावेपि सुखोद्रेकात् स्वभावादेव विश्वसृष्टिरिति भावः -**तन्त्रदीपिकायाम् ।**

३. 'अरिः कंसो जरासन्धश्च । पुरात् मथुरापुराद् गोमन्तद्वारकयोर्विवासः प्रवासः । अनन्तवीर्य इत्ययं लोकानुसरणं स्मारयति' इति विजयध्वजतीर्थाः ।

## प्रमेयदीपिका

**परित्राणाय साधूनाम्** इति साधुपरित्रणादिकं भगवदवतारस्य प्रयोजनमुक्तम् । तत्र किं जन्मनैव परित्राणादिकं कार्यमिति नियमः? इत्यपेक्षायामाह– **नेति** ।। जन्मना विनाऽपि कर्तुं समर्थत्वादिति भावः । तर्हि किमर्थं जन्म? इत्यत आह– **तथाऽपीति** ।। **यथेष्टचारी** इच्छयैव तथा आचरति । तथेच्छैव किमर्था? इत्यत उक्तम्– **लीलयेति** ।। लीलाऽप्यालस्य-परिहाराद्यर्था न भवतीत्युक्तम्– **स्वभावेन चेति** । अत्रैव प्रमाणान्याह– **तथा हीति** ।। **अयमेषः** = इयमिच्छा । **अत्र** प्रवृत्तिषु । **विरुद्धेषुं** लोकविपरीतेच्छुम्[1]।। ७ ।। ८ ।।

## भावदीपः

'एषः' इत्येतत् शब्दरूपं न भवति । किन्तु 'इषु इच्छायाम्'**(पा.धा.१३५१)** इत्यतः भावे घञ्प्रत्ययान्तः । अतो न पौनरुक्त्यमित्याह– **अयमेषः इयमिच्छेति** [2]।। 'अत्र न किञ्चिदाप्यम्' इत्यत्रत्य '**अत्र**'पदानुवादेन अर्थमाह– **अत्र प्रवृत्तिष्विति** ।। इच्छतेर्भावे कप्रत्यय इति भावेनाऽह– **विरुद्धेषुमिति** ।। ८ ।।

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ।। ९ ।।**

**भाष्यम् —** पृथङ् मुक्त्युक्तिः सर्वज्ञाननियमदर्शनार्थम् । न तु तावन्मात्रेण मुक्तिरित्युक्तम् ।

'वेदाद्युक्तं तु सर्वं यो ज्ञात्वोपास्ते सदा हि माम् ।
तस्यैव दर्शनपथं यामि नान्यस्य कस्यचित् ।।'

इत्युक्तेश्च महाकौर्मे ।

अत्रोक्तस्यैतज्ज्ञात्वैव जन्म नैति इति गतिः । इतरवाक्यानां नान्या[3] गतिः ।

---

१. विपरीतेच्छम् इति प्र.पाठः । इच्छुमिति वे, गुज, वे ग्रं, श-१ ।

२. 'एष इत्यनुवादः इच्छा इति व्याख्या ।'इषु इच्छायाम्' इत्यस्माद्भावे घञि पुगन्तलघूपदस्य चेति गुणे रूपम् । अन्यथा इयमेष इति पुनरुक्तिः स्यादिति भावः ।। इदं वाक्यमुदाहृत्य वैशेषिकाधिकरणसुधा-टिप्पण्यां वाक्यार्थरत्नमालायां (द्रं -सुधा -सम्पुटम्-१३. पत्रे.६२९७) विचारः कृतः ।

३. गुज, वेग्रं । टीकानुसारेण च नान्या इत्येव साधु इति भाति । नान्यथा इति प्र.।

**'नान्यस्य कस्यचित्' इति विशेषणात् । 'तत्त्वतः' इति विशेषणाच्च सर्वं ज्ञानमापतति । यत्रैवं भवति तत्र तत्त्वत इति विशेषणेन विरोधः । उक्तं च–**

**'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः ।**
**न समर्थो महेन्द्रोऽपि तस्मात् सर्वत्र जिज्ञसेत् ।।'[1]**

**इति स्कान्दे ।। ९ ।।**

## प्रमेयदीपिका

**'जन्म कर्म च'** इति ।। 'भगवज्जन्मादिज्ञानमात्रेण मुक्तिरुच्यते' इति प्रतीति-निरासायाऽह– **पृथगिति** ।। एकदेशज्ञानेनेत्यर्थः । **दर्शनार्थम्** उपलक्षणार्थम् । यथाप्रतीत[2] एवार्थः किं न स्यात्? इत्यत आह– **न त्विति** ।। **उक्तं** तृतीये (गी.भा.३.४२,४३) । प्रमाणान्तरं चाह– **वेदादीति** ।। वाक्यत्वाविशेषादेतस्य गीताबाधकत्वं कुतः? इत्यतः साव-काशत्वनिरवकाशत्वाभ्यामित्याह– **अत्रेति** ।। अयोगव्यवच्छेदमात्रपरत्वमित्यर्थः । एतच्च पूर्वोक्तादर्थान्तरमिति ज्ञेयम् ।।

इतरवाक्यान्यधिकारिविशेषापेक्षया सावकाशानीति कुतो नान्या गतिः? इत्यत आह– **नेति** ।। **विशेषणात्** पक्षान्तरव्यवच्छेदात् । इतोऽप्यत्र सर्वज्ञानमङ्गीकार्यमित्याह – **तत्त्वत इति** ।। **आपतति** इत्यनेनाऽर्थापत्तिमभिप्रैति ।। एतमेव न्यायमन्यत्राप्यतिदिशति – **यत्रेति**।। **एवं भवति** सर्वज्ञाने प्रमितेऽप्येकदेशज्ञानोक्तिर्भवति । तत्त्वतो ज्ञानं [3]कुतस्सार्वज्ञमाक्षिपति? इत्यत आह– **उक्तं चेति** ।। **जिज्ञसेत्** जिज्ञासेत । अन्यत्रापि -

**'एको भावः तत्त्वतो येन दृष्टः सर्वे भावाः तत्त्वतस्तेन दृष्टाः'**

इति । [4]सर्वत्र सार्वज्ञं यथाशक्ति विवक्षितमित्यवधेयम्[5] ।। ९ ।।

---

१. सुधापरिमले-(पृ-५१४५) 'एकं च..जिज्ञसेत्' इत्यत्र यावदपेक्षितं तावज्ज्ञानित्वरूपसर्वज्ञतां विना तत्त्वतो ज्ञातुं न समर्थः इत्युक्त्या तावता इत्यनेन प्राचुर्यार्थलाभः यथा तथेत्यर्थः '।।

२. गुज,श-मा१, कृ-टी .सम्मतः । प्रतीतार्थ–प्र ।

३. 'कथं सार्वज्ञम्' इति वे-ग्रं।

४. 'यथाशक्त्यखिलान् वेदान् विज्ञायोपासनं भवेत् । तत्राखिलस्य विज्ञप्तिः सम्यग् ब्रह्मण एव हि । तदन्येषां यथायोगमखिलज्ञप्तिरिष्यते '- अनु.३.३.६५ ।

५. बे, गुज,वेग्रं ,श-मा.१ । इति ध्येयम् इति प्र.पाठः ।

### भावदीपः

**तृतीय इति** ।। तृतीयाध्यायान्त्यभागे-

'नच तत्र तत्रोक्तैकदेशज्ञानमात्रेण भवति मुक्तिः'

इत्यादिनेति भावः ।। **पूर्वोक्तादिति** ।। उपलक्षणार्थमित्युक्तादित्यर्थः । 'ज्ञा-श्रु-स्मृ-दृशां सनः' **(पा.सू.१.३.५७)** इत्यात्मनेपदोक्तेः **'जिज्ञासेत'** इति छान्दसप्रयोग इति भावेनाऽह– **जिज्ञसेत् जिज्ञासेत इति** ।। **अन्यत्रापीति** ।। एकस्य तत्त्वतो ज्ञानेन सर्वज्ञानं भवतीत्येतदुक्तमित्यर्थः ।। ९ ।।

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ।। १० ।।**

**भाष्यम् — सन्ति च तथा मुक्ता इत्याह– वीतरागेति ।। मन्मयाः मत्प्रचुराः। सर्वत्र मां विना न किञ्चित् पश्यन्तीत्यर्थः ।। १० ।।**

### प्रमेयदीपिका

किञ्च, उत्तरश्लोकेऽधिकानुवादान्नात्रैतावन्मात्रं विवक्षितमिति भावेन तत्तात्पर्यमाह– **सन्ति चेति** ।। **तथा** उक्तज्ञानेन । **आह** 'श्रद्धोत्पादनार्थम्' इति शेषः । 'मन्मया मदात्मकाः' इति प्रतीतिनिरासार्थमाह– **मन्मया** इति ।। सर्वेषां भगवान् प्रचुरः । को विशेषो ज्ञानिनाम्? इत्यत आह– **सर्वत्रेति** ।। सर्वेषु पदार्थेषु । **किञ्चित्** सत्तादिकम् । मदायत्तमेव सर्वं **पश्यन्ति** इत्यर्थः ।। १० ।।

### भावदीपः

**तथा** इत्यनुवादः, **'उक्तज्ञानेन'** इति व्याख्या । स्वयोग्यसर्वज्ञानेनेत्यर्थः ।। **'आह'** इत्यनुवादेन तत्र शेषमाह– **आहेति** ।। १० ।।

**(भगवद्भजनानुसारेण फलं भवति )**

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**[1]

---

१. (अ)'यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे तदनुग्रहाय'।(भाग.३-१.-११)
(आ)'यादृशो भावितस्त्वीशस्तादृशो जीव आभवेत्' इति तन्त्रसारे (भाग.ता ३-१.-११)

**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

**भाष्यम् — न च मद्भजनमात्रेण मुक्तिर्भवत्यन्यदेवतादिरूपेण । तथाऽपि सर्वेषामानुरूप्येण फलं ददामीत्याह– ये यथेति ॥ भजामि सेवयामि फलदानेन। नतु गुणभावेन ॥**

## प्रमेयदीपिका

'ये यथा' इति वाक्यं न प्रकृतेन साक्षात् सङ्गतम् । अतस्तत्सङ्गमयितुं मध्ये शङ्कान्तरं निराकरोति – **न चेति** ॥ **'मामुपाश्रिताः' 'मद्भावमागताः'** इत्युक्त्याऽन्यदेवतादिरूपेण मद्भजनमात्रेण त्रैविद्यानामपि मुक्तिर्भवतीति नाऽशङ्कनीयमित्यर्थः । विष्णुं सामान्यतः सर्वोत्तमं ज्ञात्वाऽन्यदेवताः पितॄंश्चेष्ट्वाऽन्ते विष्णौ समर्पणम् **अन्यदेवतादिरूपेण भगवद्-भजनम्** । उपपत्तिं तूत्तरत्र वक्ष्यामीति भगवतोऽभिप्रायः ॥

तत्किं त्रैविद्यानां त्वद्भजनं निरर्थकमेव? इत्यत आह– **तथाऽपीति** ॥ यद्यपि न मुक्तिं ददामि । तथाऽपि 'तदभिप्रेतं स्वर्गादिकं ददामि' इति शेषः । एवं तर्हि ज्ञानिभ्यो मुक्तिं, त्रैविद्येभ्योऽल्पं फलं ददद्विषमो भगवान् स्यादित्याशङ्कानिरासार्थत्वेनोत्तरवाक्यं सङ्गमयन् आह– **सर्वेषामिति** ॥ **आनुरूप्येण** सेवानुसारेण । **सर्वेषां** ज्ञानिनां त्रैविद्यानां चेति चतुर्थ्यर्थे षष्ठी । 'तथैव भजामि' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे– **सेवयामीति** ॥ 'बहुल-मेतन्निदर्शनम्'(**'हनस्तो'.पा.सू.७.३.३२.उ.गणसूत्रम्.२०८**) इति वचनात् स्वार्थे णिच् ॥

## भावदीपः

उपपत्तिं **तूत्तरत्र वक्ष्यामीति** ॥ त्रैविद्यानां मुक्तिर्नेत्यत्र **'त्रैविद्या मां सोमपाः'**(९.२०) **'येऽप्यन्यदेवताभक्ताः'** [1]इत्यादौ च नवमे सम्यग् भगवज्ज्ञानाभावस्वर्गादिप्रार्थना-विधिपूर्वकयजनाद्युपपत्तिं वक्ष्यामीत्यर्थः ॥ **'चातुर्वर्ण्यम्'**(४.१३)इत्यत्र टीकोक्तदिशा वेति ज्ञेयम् ॥

### ( चतुर्थ्यर्थे षष्ठीप्रयोगः )

**चतुर्थ्यर्थे षष्ठीति** ॥ 'ददाति' इति दानक्रियायोगे सम्प्रदानत्वप्राप्त्या 'सर्वेभ्यः'

---

१. इदं वाक्यं सो मातृकायामेव ।

इति भाव्यमित्यतो व्यत्ययेन तदर्थ एव षष्ठीत्यर्थः । 'सेवे' इति वक्तव्ये 'सेवायाम्' इति कथं प्रयोगः? इत्यत आह– **वहुलमिति** ।। 'सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्' **(पा.सू.३.१.२५)** इति स्वार्थिक-णिज्विधायकसूत्रस्थ चुरादिगणपाठे 'चुरादि' इत्यत्र आदिपदोक्तधातूनां प्रदर्शनं बहुलं ज्ञेयम् । अन्येऽपि धातवः प्रयोगवशाद् ध्येयाः' इत्युक्तवचनादित्यर्थः । तथाच 'णिचश्च' **(पा.सू.१.३.७४)** इति सूत्रेण णिजन्तस्य कर्त्रभिप्राय एव क्रियाफले आत्मनेपदविधानात् परस्मैपदं च साध्विति भावः ।।

**( फलतारतम्यं सेवाविशेषात् )**

**भाष्यम् — कथमयं विशेषः? इत्यत आह– मम वर्त्मेति ।। अन्यदेवता यजन्तोऽपि मम वर्त्मैवानुवर्तन्ते । सर्वकर्मकर्तृत्वाद् भोक्तृत्वाच्च मम ।।**

### प्रमेयदीपिका

**'मम वर्त्म'** इत्यस्य सङ्गत्यप्रतीतेस्तामाह– **कथमिति** ।। यः [1]फलतारतम्यहेतुः **अयं** ज्ञानिभ्यस्त्रैविद्यानां सेवायां विशेषः **कथं** किम्प्रकार इत्यर्थः । कथमनेनैतच्छङ्कापरिहारः? इत्यतो व्याचष्टे– **अन्येति** । न केवलं ज्ञानिनः । किन्त्वन्यदेवता यजन्तोऽपि, त्रैविद्या इति यावत् । किं तत्सर्वेषां तद्वर्त्मानुवर्तनम्? इत्यत आह– **सर्वेति** ।। **भोक्तृत्वात्** हविरादीनाम् । एतद्वयमेव भगवद्वर्त्मानुवर्तनम् । तथा व्यवहारे निमित्तत्वात् पञ्चमी ।।

इदमुक्तं भवति । अहमेव सर्वयज्ञानां भोक्ता च प्रेरकश्च । तदेतज्ज्ञात्वा भागवता निष्कामा मामेव यजन्ते । त्रैविद्यास्त्वेतत्तत्वतोऽजानानाः कर्मणां सिद्धिं काङ्क्षन्तोऽन्यदेवता यजन्ते । एवं सेवाविशेषाद्युक्तं फलतारतम्यमिति ।।

### भावदीपः

किं तत्सर्वेषां मम वर्त्मानुवर्तनम्? इति प्रश्ने 'सर्वकर्मकर्तृत्वम्' इत्यादि प्रथमान्तमेव वाच्यम् । न पञ्चम्यन्तमित्यतः सत्यमिति भावेनाऽह– **एतद्वयमेवेति** ।। तर्हि पञ्चम्युक्तिः कथम्? इत्यत आह– **तथेति** ।। मम वर्त्मगा एत इति व्यवहारे मत्स्वामिकयज्ञकर्तृत्व, मद्भोग्यहविराद्यु-पेतयज्ञकर्तृत्वयोर्निमित्तत्वात् पञ्चमीत्यर्थः ।। **'काङ्क्षन्तः'** इत्येतदर्थमाह– **त्रैविद्यास्त्विति** ।।

---

१. बे ,गुज,श-१ ,भा.र.कोशश्च । फलतारतम्ये -इति प्र.।

( भगवतः सर्वयज्ञभोक्तृत्वे बाधकपरिहारः )

**भाष्यम् —** **'येऽप्यन्यदेवताभक्ताः'** (९.२३) इति वक्ष्यति ।
**'यो देवानां नामधा एक एव'**[१] (ऋ.सं.१०.८२.३ )

इति हि श्रुतिः ।

भगवानेव च तत्राभिधीयते ।
**'अजस्य नाभावध्येकमर्पितम्'**[२] (ऋ.सं.१०.८२.६ )

इत्यादि लिङ्गात् ।। ११ ।।

**प्रमेयदीपिका**

कुत इदं भगवतोऽभिप्रेतम्? इत्यत आह– **येऽपीति** ।। अनेन श्लोकद्वयमुपात्तम् । तत्र च स्पष्टमेषोऽर्थः प्रतीयते ।। नन्विन्द्रादीनामवद्भिर्मन्त्रैर्दत्तं हविरादिकं कथं भगवान् भुङ्क्ते? भगवतः सर्वनामवत्त्वेन मन्त्राणां तत्परत्वादिति भावेनाऽह– **य इति** ।। ननु विश्वकर्मा एवमुच्यत इत्यत आह– **भगवानेवेति** ।। **तत्र च** इति सम्बन्धः । अनेन भगवतः सर्वयज्ञादिभोक्तृत्वे बाधकं परिहृतम् ।। ११ ।।

**भावदीपः**

**अनेनेति** ।।'सर्वकर्म' इत्यादिना **'इति वक्ष्यति'** इत्यन्तेनेति वा **'इति वक्ष्यति'** प्रतीकग्रहणेनेति वा अर्थः ।।

**'अहं हि सर्वयज्ञानां भोक्ता च'** (९.२४) इति

---

१. (अ)ब्र.सू.भा.१.१.१उदाहृतम् । तत्वप्रकाशिका-'यथा सर्वनामवत्वेन विष्णुरेवात्रोक्तं ब्रह्म तथा रुद्रादीनामपि विष्ण्वादिशब्दवाच्यत्वेन त एवात्रोक्तं ब्रह्म किं न स्युरित्यत आह - य इति । नामधा नामधारकः ।। यच्छब्देन विष्णुरिति कुतः । अस्य सूक्तस्यान्यपरत्वादित्यत आह - अजस्येति । पद्मनाभत्वलिङ्गादयं विष्णुरेव ।'

(आ)'यो भगवान् 'एक एव' देवानां ब्रह्मादीनां 'नामधाः'- विश्वपाशब्दवदयं शब्दः । नामधारकः, नत्वन्येऽपि, 'तं प्रश्नं 'प्रष्टारं 'अन्या' अन्यानि 'भुवना' भुवनानि लोकाः 'संयान्ति' संयान्ति मोक्षे प्रलये च इति श्रुत्यर्थः' । (भाष्यदीपिका)

२. 'अजस्य' अजन्यस्य पुरुषस्य 'नाभौ' एकं वस्तु अर्पितम्' उद्धृतम् । यस्मिन् विश्वानि भुवनानि सर्वे लोकाः 'अधितस्थुः' अधिष्ठिताः इति '।। (भाष्यदीपिका)

**'येऽप्यन्यदेवता'** (९.२३)

इति च श्लोकद्वयं नवमाध्यायस्थमुपात्तमित्यर्थः ।। **इति सम्बन्ध इति** ।। शब्दस्येति योज्यम् ।। **अनेनेति** ।। श्रुत्युदाहरणादिना **'नन्विन्द्रादिनामवद्भिः'** इत्यादिना शङ्कितं बाधकं परिहृतमित्यर्थः ।। ११ ।।

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ।। १२ ।।**

**भाष्यम् —** कुतो मम वर्त्मानुवर्तन्ते ? – **क्षिप्रं हि** ।। अत एव हि फलप्राप्तिः। 'तस्मात्ते धनसनयः' (छां.१.३.९) इति श्रुतिः ।। १२ ।।

**प्रमेयदीपिका**

साधकं तु प्रमाणं पृच्छति– **कुत इति** ।। **मम वर्त्मानुवर्तन्ते** (४.११) इति यत् सर्वयज्ञादिभोक्तृत्वं भगवत उक्तं तत् **कुतः** प्रमाणाज्ज्ञायत इत्यर्थः । सर्वकर्तृत्वं तु जीवानामस्वातन्त्र्यदर्शनात् सिद्धम् । 'इत्यत आह' इति शेषः । **हि** इत्यतः परमितिशब्दश्च । किमनेन प्रमाणमुक्तम् ? इत्यत आह– **अत एव**[1] **हीति** ।। **कर्मजा सिद्धिः** फलप्राप्तिस्तावत् **क्षिप्रं** प्रत्यक्षोपलभ्याऽस्ति । **सा च अत एव** कर्मणां भगवता भुक्तत्वादेव हि युज्यते । नान्यथेत्यर्थः । इन्द्रादिभ्योऽपि फलप्राप्त्युपपत्तेरुपक्षीणाऽर्थापत्तिरित्यत आह– **अत एव हीति** ।। भगवत एव । अत्र '**हि**' इति सूचितं प्रमाणमाह– **तस्मादिति** ।। **धनसनयः**[2] धनलाभवन्तः ।। १२ ।।

**भावदीपः**

**इति यदिति** ।। इत्यनेन यत्सर्वयज्ञादिभोक्तृत्वमुक्तमित्यर्थः ।। १२ ।।

**( सात्विकादिगुणविभागः )**

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ।। १३ ।।**

---

१. बे,गुज,। श-१ अत एव।
२. 'सनये लाभाय' इति बृ.उ.भा.३.९.१९ ।

**भाष्यम् — अहमेव हि कर्तेत्याह– चातुर्वर्ण्यमिति ।। चतुर्वर्णसमुदायः । सात्त्विको ब्राह्मणः । सात्त्विकराजसः क्षत्रियः । राजसतामसो वैश्यः । तामसः शूद्र इति गुणविभागः ।**

## प्रमेयदीपिका

**चातुर्वर्ण्यम्** इत्यस्य सङ्गतिं सूचयंस्तात्पर्यमाह– **अहमेव हीति** ।। यस्मादहमेव चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूतास्तस्मात् स्वपितरं मां परित्यज्याऽन्यदेवता यजन्तः कथं महाफलभाजो भवेयुः? इत्याहेत्यर्थः । 'विचित्रा हि तद्धितगतिः' इति वचनादतिरिक्तार्थसम्भवे 'चतुर्वर्णादिभ्यः स्वार्थे उपसङ्ख्यानम्'(७.१.३.**वार्तिकम्**) इति नाऽदरणीयमिति भावेनाऽह– **चतुर्वर्णे**ति ।।

वर्णाश्चत्वारः, गुणास्त्रयः । तत्कथं तेषु गुणविभागः ? इत्यत आह– **सात्विक** इति।। '[1]राजसस्थसात्विकेष्वेवायं विभाग इति ज्ञातव्यम् । निर्देशप्राथम्यात् क्षत्रिये रजसः सत्वम् अधिकम् । तत एव वैश्ये तमसो रजः । तच्च समसत्वयुतम् । रजोऽपेक्षया तमोऽधिकं शूद्र इत्यसौ तामसः । सत्वं तु तमसोऽप्यधिकम् ।।

## भावदीपः

**इति वचनादिति** ।। भाष्यकारीयवचनादित्यर्थः ।। **अतिरिक्तेति** ।। स्वार्थादन्यसमूहार्थत्व-सम्भव इत्यर्थः ।। **इति नादरणीयमिति** ।। पञ्चमाध्यायाद्यपादे 'गुणवचनब्राह्मणा-दिभ्यः'(**पा.सू.५.१.१२४**) इति सूत्रे वार्तिकोक्तं स्वार्थेऽप्यनुपसङ्ख्यानं नादरणीयमित्यर्थः ।।

**'राजसानां मध्ये सात्विका एव भागवता विप्रादयः'**

इत्याद्यष्टादशाध्यायतात्पर्यानुरोधेन वा

**'राजसास्तु नृपास्तत्र विप्रा राजससात्विकाः'**

इत्यादि तात्पर्यानुरोधेन वाऽऽह – **राजसानां मध्य इति** ।। **निर्देशेति** ।। '**सात्विक-राजसः**' इति भाष्ये सात्विकपदस्य प्रथमं निर्देशादित्यर्थः । 'सञ्ज्ञाप्रमाणत्वात्' इतिवदयं निर्देशो ज्ञेयः ।।

**'सात्विकाः स्वल्परजसः क्षत्रियाः सत्वराजसाः'** इत्यादिमानानुरोधादाह– **क्षत्रिय इत्यादि** ।।

---

१. गुज । अयं श्रीनि, भा.र.कोशानुसारी । तथा - राजससात्विकेषु इति च पाठः– कृ -टि, श-१मा ।

**तत एव** इति भाष्ये रजःपदस्य निर्देशप्राथम्यादेवेत्यर्थः ।। **रज इति** ।। 'अधिकम्' इत्यनुषङ्गः । व्यक्तमेतत् सर्वमन्तिमाध्यायतात्पर्ये ।।

( भगवान् कर्ताप्यकर्ता )

**भाष्यम् — कर्मविभागस्तु 'शमो दमः' (१८.४२) इत्यादिना वक्ष्यते । क्रियायां वैलक्षण्यात् कर्ताऽप्यकर्ता । तथा हि श्रुतिः**

**'विश्वकर्मा[1] विमनाः'[2] (ऋ.सं.१०. ८२.२) इत्यादि ।**

**'तनुर्विद्या क्रियाऽऽकृतिः'[3] (भाग.६.४.४६) इति च ।**

**साधितं चैतत् पुरस्तात् ।। १३ ।।**

**प्रमेयदीपिका**

कर्मविभागः कीदृशः? इत्यत आह– **कर्मेति** ।। यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वाज्जीववत् तवापि[4] कर्मलेपः प्रसज्यत इत्यतः कर्मलेपाभावं वक्तुं हेतुस्तावदुच्यते– **तस्येति** ।। तदेतद् व्याहतमित्यत आह– **क्रियायामिति** ।। कथं वैलक्षण्यम्? इत्यतः श्रुत्यैव दर्शयति– **तथा हीति** ।। विश्वकर्माऽपि **विमनाः** तत्राभिनिवेशरहित इत्यर्थः ।।

प्रकारान्तरेण वैलक्षण्यं पुराणेन दर्शयति– **तनुरिति** ।। 'क्रियाया मिथ्यात्वात् कर्ताऽप्यकर्ता' इति परव्याख्यां प्रत्याख्याति– **साधितं चेति** ।। एतत् क्रियायाः सत्यत्वम्। **पुरस्ताद्** द्वितीये ( **गी.भा.२.२४**) ।। १३ ।।

**भावदीपः**

**कर्मेतीति** ।। ब्राह्मणादिवर्णचतुष्टयकर्मविभागस्त्वष्टादशेऽध्याये **'शमो दमः'** इत्यादि

---

१. 'विना गरुडेन शुवति गच्छतीति विशुः । विपूर्वाच्छुवतेः औणादिको डुः । न वियते कर्म बन्धकं यस्येति वा न वियते क्लिष्टं कर्मेति वा अकर्मा । विशिश्चासावकर्मा चेति वा, विश्वं कर्म यस्येति वा ' **युद्ध.६.१०७.२१.सत्यधर्मीये ।**

२. **यास्केन निरुक्ते १०.२६ 'विश्वकर्मा सर्वस्य कर्ता'** इत्यादिना व्याख्यातैषा पूर्णा ऋक् । (पृ ८५५ )

३. भगवद्वचनमिदम् । 'विद्या मम तनुः स्वरूपम् । विद्याभिमानिन्युमा तनोर्जाता तदाश्रिता । क्रियाभिमानी त्विन्द्रः हरेराकृतिः । शृङ्गाराद्याकाराज्जातस्तदाश्रितश्च ।'शृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः (भा.ता)' इति विजयध्वजतीर्थाः ।।

४. गुज , वेग्रं ... । .'तवापि जीववत् ' प्र ।

श्लोकत्रयेण वक्ष्यतीत्यर्थः ।। **तनुरितीति** ।। भाष्ये विद्याक्रिययोः तन्वाकृतिपदाभ्यां भगवत्-स्वरूपत्वोक्त्या च वैलक्षण्यं क्रियाया इत्यर्थः ।। **द्वितीय इति** ।। **'स्थाणुत्वेऽप्यैक्षतेत्याद्यविरुद्धमीश्वरस्य'** इत्यारभ्य **'स्वरूपत्वान्न मायामयमित्युक्तम्'** इत्यन्तेनेति भावः ।।१३ ।।

**( भगवतो कर्मलेपो नास्ति )**

**[1]न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बद्ध्यते ।। १४ ।।**

**भाष्यम् —** अत एव **न मां कर्माणि लिम्पन्ति** । इतश्च न लिम्पन्तीत्याह– **न मे कर्मफले स्पृहा** ।। इच्छामात्रं त्वस्ति । न तु तत्राभिनिवेशः ।।

**प्रमेयदीपिका**

अपव्याख्यानस्य दूषणान्तरं सूचयन् क्रियावैलक्षण्यकथनस्य का सङ्गतिः ? इत्यत उत्तरेण सङ्गतिमाह– **अत एवेति** ।। एवशब्देनास्मद्व्याख्यान एवायं[2] हेतुहेतुमद्भावो युज्यते, न परव्याख्यान इति सूचयति ।।

जीवानां कर्मलेपेऽभिनिवेशादिकं कारणम्, तदस्य[3] नास्तीति । मिथ्यात्वं तु जीवक्रियायामपि[4] समानमिति[5] तेषामपि लेपाभावे किमाश्रय आक्षेपः स्यात् ? ज्ञानेन विशेष इति चेन्न । तस्याश्रवणात् । लेपनिवारणं च व्यर्थम् । तस्यापि मिथ्यात्वेन ज्ञातव्यत्वात् । हेतुहेतुमतोरुक्तत्वात् **न मे कर्म** इति किमर्थम्?इत्यत आह– **इतश्चेति**।। नन्वात्मार्थं भगवतः फलस्पृहाभावेऽपि परार्थमस्त्येव । तत्कथमेवमुच्यते ? इत्यत आह– **इच्छेति** ।। **तत्र** कर्मफले । येन तत्प्राप्तिपर्यन्तं मनसो विक्षेपः सोऽभिनिवेशः ।।

**भावदीपः**

**अत एवेतीति** ।। 'लोकविलक्षणक्रियावत्वादेव' इत्यर्थस्य स्पष्टत्वादेवकारार्थमाह– एव-

---

१. वराह.पु.चा.मा.२३-२५८ उदाहृतः ।
२. गुज वे-ग्रं एव- प्र ।
३. गुज, वे-ग्रं- तस्य ।
४. बे,गुज,अयमेव टिप्पणीसम्मतश्च । क्रियाणामपि- इति प्र.पाठः ।
५. बे,श-मा.१। अयमेवादृतष्टिप्पण्योः । समानमस्ति– इति प्र ।

**शब्देनेति** ।। 'युज्यते' इत्याद्युक्तं व्यनक्ति– **जीवानामिति** ।। **आक्षेप इति** ।। चातुर्वर्ण्यं त्वया सृष्टं चेत् तर्हि कर्तृत्वात् जीववत् तवापि कर्मलेपः प्रसज्येत इत्यर्जुनकृताक्षेपः किमाश्रयः? किं दृष्टान्तमाश्रित्य प्रवर्तते? येन **'तस्य'** इत्याद्युत्तरार्धेन परिहारो घटतेत्यर्थः ।।

नन्वीश्वरस्य क्रियाणां मिथ्यात्वज्ञानादलेपः, जीवस्य तु तदभावाल्लेप इति शङ्कते– **ज्ञानेनेति** ।। **लेप इति** ।। जीवस्य मिथ्यात्वज्ञानाल्लेपे सति निवारणं च व्यर्थम् । अलेपार्थं मिथ्यात्वज्ञानस्यैव सम्पाद्यत्वादित्यर्थः ।। **हेतुहेतुमतोरिति** ।। **'अकर्तारम्'** इत्यनेनाभिनिवेशाभावरूपहेतोः **'न मां कर्माणि लिम्पन्ति'** इत्यनेन साध्यस्य चोक्तत्वादित्यर्थः ।।

**भाष्यम् — तच्चोक्तम् –**

**'आकाङ्क्षन्नपि देवोऽसौ नेच्छते लोकवत्परः ।**
**न ह्याग्रहस्तस्य विष्णोर्ज्ञानं कामो हि तस्य तु ।।' इति ।।**

**नच केचिन्मुक्ता भवन्तीति क्रमेण सर्वमुक्तिः । तथा हि श्रुतिः -**

**'ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वान्' इति**

**'कथं वा इति, अनन्ता वा इत्यनन्तवदिति होवाच ' इति[1] ।। १४ ।।**

## प्रमेयदीपिका

अत्र प्रमाणमाह– **तच्चेति** ।। 'व्यत्ययो बहुलम्' (पा.सू.३.१.८५) इति व्यत्ययः । **ज्ञानं** ज्ञानमिव । **'इति माम्** 'इत्येवं ज्ञानिनो मुक्तिः फलमुच्यते । सा च वर्तमानप्रत्ययेन । प्राक् च भूतप्रत्ययेन **'मद्भावमागताः'** (४.१०)इति ।।

तत्रैकजीववादिनामाक्षेपमुद्भाव्य प्रतिषेधति– **न चेति** ।। केचिदिदानीं मुक्ता भवन्ति, केचिद् भूता इति पक्षेऽतीत एव काले क्रमेण सर्वमुक्तिस्स्यात् । तथा चेदानीं संसारानुपलम्भस्स्यादिति **न** शङ्कनीयम् । कस्मात् ? यतः श्रुतिरेवमाशङ्क्य पर्यहार्षीदित्याह – **तथा हीति** ।। **हृदा** बुद्ध्या च । इत्येतत् **कथं वा** युज्यते? उक्ताऽक्षेपादिति [2]शङ्कायाम् **'अनन्ताः** जीवाः' इत्युत्तरम् ।।

---

१. जीवानन्त्यादिविषये वि.त.निर्णयवचनानि- 'अनागता अतीताश्च यावन्तः सहिताः क्षणाः। अतीतनागताश्चैव यावन्तः परमाणवः । ततोप्यनन्तगुणिताः जीवानां राशयः पृथक् ' इति वत्सश्रुतिः।।
२. गुज-वे-ग्रं आशङ्कायाम् ।

ननु [1]'कालोऽत्यनन्तोऽत इत्यस्योत्तरम्– **अनन्तवत्** इति । 'यथा भगवान् कालक्षणेभ्योऽ-प्यतिशयेनानन्तस्तथाऽनन्ताः । कुतः? **इति होवाच** इति' श्रुत्यन्तरमिति ।। १४ ।।

**भावदीपः**

ननु 'इषु इच्छायाम्' इत्यस्य परस्मैपदत्वात् 'इच्छते' इति कथम् ? इत्यत आह– **व्यत्यय इति** ।। यद्यपि तृतीयाद्यपादे शबादिविकरणोक्तिप्रस्तावे 'व्यत्ययो बहुलम्' (**पा.सू.३.१.८५**) इति सूत्रम् । तस्य च वृत्तौ 'यथायथं शबादिविकरणप्रत्ययाः विहिताः । तेषां छन्दसि विषये बहुलं व्यत्ययो भवति' इत्यर्थ उक्तः । तथाऽपि वृत्तावेव बहुलग्रहणं सर्व(विधि)[2]व्यभिचार-नियमार्थम् ।।

**सुप् -तिङ्-उपग्रह-लिङ्ग-नराणां काल-हल्-अच्-स्वर-कर्तृ-यङां च ।**
**व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ।।'**

इत्यप्युक्तत्वादुपग्रहशब्दितपरस्मैपदस्य आत्मनेपदित्वेन व्यत्यय इत्यर्थः ।।

'काङ्क्षन्' इत्यत्र तु 'काङ्क्षि,माङ्क्षि,काङ्क्षायाम्'(**पा.धा.६६७**) इति परस्मैपदेऽप्येव पाठान्नानुपपत्तिशङ्केति तदर्थमियं समाधिरिति न मन्तव्यम् ।। **'ज्ञानम्'** इत्यनुवादो, **'ज्ञानमिव'** इति व्याख्या । यथा ज्ञानं प्रमैकरूपं नतु भ्रमरूपम्, तथा कामोऽपीच्छारूपमेव नतु अभिनिवेशरूपमित्यर्थः ।। **फलमुच्यत इति** ।। गीतायामिति योज्यम् ।। 'आगताः' इति भूतप्रत्ययेन मुक्तिः फलमुच्यत इति योजना । भाष्यम् इत्युपलक्षणं मत्वाऽह– **केचिद्भूता इति** ।। मुक्तभूता इत्यर्थः ।। 'इति होवाच' इत्यत्र कर्त्राकाङ्क्षायामाह– **श्रुत्यन्तरमिति** ।। १४ ।।

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ।। १५ ।।**

**भाष्यम् —** एवं ज्ञात्वा अपि[3] कर्मकरण आचारोऽप्यस्तीत्याह - **एवमिति** ।। **पूर्वतरं कर्म पूर्वभावीत्यर्थः** ।। १५ ।।

---

१. वे, श-मा.१,श्रीनि-पाठः । गुज, वे-ग्रं ,कृ-पाठे कालोऽप्यनन्तः ।
२. विधि इत्यधिकं सो ।
३. वे,गुज,वे-ग्रं अपिः नास्ति ।

## प्रमेयदीपिका

ननु **'एवं ज्ञात्वा'** इति पुनरुक्तम् । कर्मकरण आचारस्य प्रागेवोक्तत्वादित्यत आह– **एवमिति** ।। यदि ज्ञानी कर्मभिर्न बद्ध्यते तर्हि ममापि ज्ञानित्वेन कर्मबन्धाभावात् कथं कर्मविधानम्? इत्याशङ्क्य ज्ञानिनामप्यधिकमोक्षाकाङ्क्षया[1] **कर्मकरणे आचारो**ऽत्रोच्यते । प्राक् तु जनकादीनां विवस्वदादीनां च विद्यमानमपि ज्ञानित्वं भगवता न विवक्षितमिति भावः । अत एव भाष्यकारेण तत्र **'कर्म कृत्वैव'** (गी.भा.३.२०) इत्याद्युक्तम् । न हि ज्ञानिनां कर्म ज्ञानद्वारा मुक्तिहेतुः । **'मुमुक्षुभिः'** इति 'तत्साधुकारिणि' (पा.सू.३.२.१३)उप्रत्ययः । **'पूर्वैः कृतम्'** इत्यनेनैव पूर्वतरत्वस्योक्तत्वात् पुनरुक्तिरित्यत आह– **पूर्वतरमिति** ।। तैरपि ततोऽपि पूर्वभावि[2]कृतमित्यर्थः । कर्मणः क्षणिकत्वात् कथं तदेव कर्तव्यम् ? इत्यतो वा इदमुक्तम् । पूर्वमिव भवतीति **पूर्वभावि** । अत एव **कर्म** इत्यनुवादः ।। १५ ।।

## भावदीपः

**कर्मकरणे** इति सप्तम्यन्तम् । **उक्तत्वादिति** ।। **'इमं विवस्वते'** (४.१) इत्यादिनेति भावः ।। **'इति माम्'** इत्यादि पूर्वश्लोकोत्तरार्धानुवादः– **यदीत्यादि** ।। **अत एवेति** ।। ज्ञानित्वस्य विवक्षितत्वादेवेत्यर्थः । तस्य विवक्षायां तु कर्माकरणेऽपि **'अनियमः सर्वेषाम्'** (ब्र.सू.३.३.३२) इति सूत्रोक्तदिशा मुक्तिसिद्धेः **'कर्म कृत्वैव'** इति कर्मकरणनियमोक्तिर्न स्यादिति भावः । 'कर्म **कृत्वा'** इत्युक्त्या कथं ज्ञानित्वाविवक्षालाभः ? इत्यत आह– - **नहीति** ।। 'येन **कर्म कृत्वैव** इति नियमोक्तिर्घटित' इति वाक्यशेषः ।।

यद्वा ज्ञानिकृतमपि ज्ञानद्वाराऽस्तु मुक्तिहेतुः कुतोऽधिकमुक्ति[3]हेतुत्वकल्पना? इत्यत आह – **नहीति** ।। हिशब्देनानन्दवृद्धिहेतुत्वे प्रमाणप्रसिद्धं सूचयति ।। नन्वेवं गीतायाम् 'आनन्दवृद्धिकामैः' इति वक्तव्यं न 'मुमुक्षुभिः' इत्यत आह– **तत्साधुकारिण्युप्रत्यय इति** ।। तृतीयस्य द्वितीयपादे 'आक्वेः तच्छीलतद्धर्मतत्साधुकारिषु' (पा.सू.३.२.१३) इत्यधिकारे 'सनाशंसभिक्ष उः' (पा.सू.३.२.१६८) इति सूत्रेण सन्नन्तस्य साधुकारी इत्यर्थे 'उ' प्रत्ययोक्तेरत्र 'साधुमोक्षेच्छाकारिभिः' इत्यर्थे उप्रत्यय इत्यर्थः । साधुत्वञ्च सातिशयत्वमेवेति भावः ।। **पूर्वमिवेति** ।। तत्सजातीयमिति भावः ।। **अत एवेति** ।। क्षणिकत्वसूचनेन सजातीयग्रहणार्थत्वादेवेत्यर्थः ।। १५ ।।

१. बे,गुज, श-मा.१ । मोक्षाकाङ्क्षायाम् इति कचित् पाठः श्रीनि,भा.र.कोशाननुगुणः ।

२. पूर्वभाविष्कृतमित्यर्थः' वे-ग्रं पाठः ।

३. मोक्षहेतुत्व इति सो-मातृकायाम् ।

( कर्म दुर्विज्ञेयम् )

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**'तत्ते कर्म प्रवक्षामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

**भाष्यम् —** **कर्म कुरु** इत्युक्तम् । तस्य कर्मणो दुर्विज्ञेयत्वमाह सम्यग्वक्तुम्– **किं कर्मे**ति ॥

**प्रमेयदीपिका**

**किं कर्म** इत्यस्य सङ्गतिर्नप्रतीयते । अत आह– **कर्मे**ति ॥ **तस्य** कर्तव्यतयोक्तस्य । किमर्थं **सम्यग्वक्तुम्** । एतदेव सम्यग्वचनं यज्जिज्ञासवे कथनम्[२]। जिज्ञासा च दुर्विज्ञेयत्वोक्तौ भवतीति भावः । अत एव **प्रकर्षेण वक्ष्यामी**त्याह । ननूत्तरश्लोके विकर्मणोऽपि गृहीतत्वाद् इहाप्यकर्मशब्दस्तदुपलक्षणार्थ इति स्थिते कर्मादीनामिति वक्तव्यम् । **कर्मणः** इति कथम् । अनुष्ठेयत्वात् । अकर्मादिकं हि हेयतया ज्ञेयम् । अत एव '**तत्ते कर्म प्रवक्ष्यामि**' इत्याह । तत्राप्यकर्मादेरुपलक्षणात् ॥ १६ ॥

**भावदीपः**

सम्यग्वचनत्वं वक्ष्यमाणस्य व्यनक्ति- **एतदेवे**ति ॥ तच्छब्दार्थं व्यनक्ति– **यदि**ति ॥ **इत्याहे**ति ॥ कृष्ण इत्यर्थः ॥ **इति वक्तव्यमि**ति ॥ 'भाष्ये' इति योज्यम् । समाधिमाह– **अनुष्ठेयत्वादि**ति ॥ 'कर्मणः'इत्यनुषङ्गः ॥ **अत एवे**ति ॥ अनुष्ठेयतया प्राधान्यादेवेत्यर्थः । हेयतया ज्ञातव्यस्यापि वक्तव्यतया अनुक्तिर्दोषायेत्यत आह– **तत्रापी**ति ॥ **कर्म प्रवक्ष्यामि** इत्यत्रेत्यर्थः । '**विकर्माकर्मणी प्रोक्तप्राये**'(४.१८) इति वक्ष्यमाणत्वात् । यद्वा '**तस्य कर्मणः**' इति भाष्येऽपीत्यर्थः ॥ १६ ॥

( कर्म-अकर्म-विकर्मनिरूपणम् )

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

---

१. '**तत्ते अकर्म**' इति शाङ्करभाष्यपाठः ।

२. जिज्ञासितकथनम् - (पां) वे,गुज, श-मा१ ।

**भाष्यम् —** न केवलं तज्ज्ञात्वा मोक्ष्यसे । ज्ञात्वैवेत्याशयवानाह– **कर्मण** इति ।। **तच्चोक्तम्–**

'अज्ञात्वा भगवान् कस्य कर्माकर्म विकर्मकम् ।
दर्शनं याति हि मुने कुतो मुक्तिश्च तद्विना ।।' इति ।

**अकर्म** कर्माकरणम् । कर्माकर्मान्यद् **विकर्म** । निषिद्धं कर्म[1] । बन्धकत्वात् । ततो विविच्य कर्मादि बोद्धव्यमित्यादि । नच शापादिना ।

**'कवयोऽप्यत्र मोहिताः'**(४.१६) ।

अशक्यं चैतज्ज्ञातुमित्याह– **गहनेति** ।। १७ ।।

### प्रमेयदीपिका

ननु **'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्** '(४.१६) इत्यनेनैव कर्मादिस्वरूपं[2] मुमुक्षुणा ज्ञातव्यमिति लब्धम् । तत्किमर्थं **'कर्मणो हि'** इत्याद्युच्यते? इत्यत आह– **न केवलमिति**।। **तत्** कर्मादिकम् । सिद्धे सत्यारम्भो नियमार्थ इति भावः ।।

अत्रैव प्रमाणमाह– **तच्चेति** ।। दर्शनापेक्षया समानकर्तृकत्वात् क्त्वानिर्देशः । कर्मशब्दार्थो भगवतैव वक्ष्यते । अकर्मविकर्मशब्दार्थावाह– **अकर्मेति** ।। किं तद्विकर्म? इत्यत आह– **निषिद्धमिति** ।। एवं चेत् कामाद्युपेतस्य कुत्रान्तर्भावः? इति चेद्, विकर्मणीति ब्रूमः । कथं तस्य निषिद्धत्वम्? इत्यत आह– **बन्धकत्वादिति** ।। अस्त्वेवं शब्दार्थः । योजना तु कथम्? इत्यतो लाघवार्थं द्वितीयपादयोजनां तावदाह– **तत** इति ।। **ततः** विकर्मणः । **कर्मादि** कर्माकर्म च । **इत्यादि** इत्यनेनाद्यतृतीयपादयोजनां सूचयति । 'कर्मणो **विविच्य** विकर्मादि बोद्धव्यम्, अकर्मणश्च विविच्य **कर्मादि बोद्धव्यम्**' इति ।। ननु **'कवयोऽप्यत्र मोहिताः** ' इत्यनेन कर्मादिदुर्ज्ञेयत्वमुक्तम् । तत्पुनः किमर्थमुच्यते? इत्यत आह– **न चेति** ।। ज्ञातुं 'स्वभावेन' इति शेषः । एतच्च श्रोतुरधिकादरजननार्थमिति ज्ञेयम् ।। १७ ।।

### भावदीपः

**दर्शनापेक्षयेति** ।।'याति' इत्युक्तक्रियां प्रति हरेः कर्तृत्वेऽपि दर्शनस्य, 'अज्ञात्वा'

१. वे,गुज,वे-ग्रं - कर्म इत्यधिकम् ।
२. कर्मस्वरूपमुग्रम् इति मातृकायाम्, गुज ।

इत्युक्ताज्ञानस्य च जीवैककर्तृकत्वात् 'समानकर्तृकयोः पूर्वकाले' **(पा.सू.३.४.२१)** इत्युक्तत्वात् क्त्वाश्रुत्युपपत्तिरित्यर्थः । कामादिकमज्ञात्वा भगवन्तं कः पश्यतीति यावत् ।। **वक्ष्यत इति** ।। 'कर्मणि' इत्यादावित्यर्थः ।। **लाघवार्थमिति** ।। **ततः** इत्यनेन प्रागुक्त-विकर्मपरामर्शादिति भावः । **श्रोतुरधिकादरेति** ।। शापादिना दुर्ज्ञेयत्वे शापादिहीनानां सुज्ञेयत्वप्राप्त्या जिज्ञासा नोदीयात् । स्वभावत एव दुर्ज्ञेयत्वोक्तौ जिज्ञासोदयद्वारा श्रोतुरधिकादरो भवतीति **'गहना कर्मणो गतिः'** इत्युक्तमित्यर्थः ।। १७ ।।

**( कर्मादिस्वरूपप्रपञ्चनम् )**

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**

**स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ।। १८ ।।**

**भाष्यम् —** कर्मादि स्वरूपमाह– **कर्मणीति** ।। **कर्मणि क्रियमाणे** सति । **अकर्म यः पश्येत्** । विष्णोरेव कर्म, नाहं चित्प्रतिबिम्बः किञ्चित् करोमीति । **अकर्मणि** सुप्त्यादौ अकरणावस्थायाम् ।

## प्रमेयदीपिका

**कर्म प्रवक्ष्यामि** (४.१६) इति प्रतिज्ञातं[१] कर्मादिप्रपञ्चनं[२] च क्वापि नोपलभ्यते। **कर्मणि** इति श्लोकस्य यत्किञ्चिद्दर्शनस्तुतिरूपत्वादित्यत आह– **कर्मादीति** ।। यद्यप्ययं श्लोकोऽन्यथा प्रतीयते । तथाऽप्यविहितस्य स्तुत्ययोगाद् वाक्यभेदेन कर्मादिकं प्रतिपाद्य तत्स्तुतिः क्रियत इति भावः । कथमनेन तत्स्वरूपमुच्यते? इत्यतो व्याचष्टे– **कर्मणीति** ।। वर्णाश्रमोचिते । अकर्म कर्माभावं स्वस्य । तद्विवृणोति – **विष्णोरेवेति** ।। **चित्प्रतिबिम्बः** इत्यनेन तदधीनः करोमीत्यपि सूचयति ।।

## भावदीपः

**वाक्यभेदेनेति** ।। यच्छब्दत्यागेन 'कर्मण्यकर्म यः पश्येत्, अकर्मणि च कर्म पश्येत्' इति कर्मस्वरूपप्रतिपादकमेकं वाक्यम् । यच्छब्दद्वययोगेनानुवादकतयाऽपरं वाक्यमिति वाक्यभेदेनेत्यर्थः ।।

---

१. बे, श-मा-१ मातृकायामपि – एकमेव वाक्यम् । अत्र वाक्यसमाप्तिः कचिद्दृश्यते ।

२. **'प्रवचनं क्वचित् पाठः'** भा.र.को.। श-१,बे,गुज ।

**भाष्यम्** — परमेश्वरस्य **कर्म यः पश्यति** 'अयमेव परमेश्वरः सर्वदा सर्वसृष्ट्यादिकं करोति' इति **सः बुद्धिमान्** ज्ञानी । **स एव** च **युक्तः** योगयुक्तः । सर्वाकरणात् स एव च **कृत्स्नकर्मकृत्** । कृत्स्नफलवत्त्वात् ।। १८ ।।

## प्रमेयदीपिका

सृष्ट्यादिकं कथमकर्म? इत्यत उक्तम्– **अकरणेति** । जीवापेक्षयेदम् ।। एतदपि विवृणोति– **अयमेवेति** ।। **सर्वदा** जीवव्यापाराभावे भावे च[१]। सर्वस्य महदादेः स्वाप्नगजादेश्च । अनेन भगवतः परानपेक्षया कर्तृत्वम्, स्वस्य [२]तदधीनं कर्तृत्वं च ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेत्युक्तं भवति । अनेनैवोक्तलक्षणे विकर्माकर्मणी प्रोक्तप्राये । यः पश्येत् स बुद्धिमानिति कोऽर्थभेदः? कथञ्च स्तुतिः? इत्यत आह– **स** इति ।। ज्ञानिशब्दो हि पामरविलक्षणे प्रसिद्धः । मतुबादीनां प्रशंसार्थत्वात् **स युक्तः** इत्येतत् स्तुतिर्यथा स्यात्तथा व्याचष्टे– **स** एव चेति ।। **कृत्स्नकर्मकृत्** इत्येतन्मुख्ये बाधकं प्रदर्शयन् गौणं व्याख्याति– **सर्वेति** ।। **सर्वस्य** अश्वमेधादेः । कृत्स्नकर्मणां फलस्य ज्ञानस्य मोक्षस्य च प्राप्तप्रायत्वादित्यर्थः ।। १८ ।।

## भावदीपः

**तदधीनमिति** ।। कर्तृत्वमित्यनुषङ्गः।। **अनेनैवेति** ।। '**कर्मणि**' इत्यादिना कर्मस्वरूप-कथनेनैव ।। **उक्तलक्षणे** अकर्मकरणे कर्माकरणम् कर्म, अन्यद्विकर्म निषिद्धं कर्मेति प्राग्-भाष्योक्तलक्षणे विकर्माकर्मणी **प्रोक्तप्राये** इत्यर्थः ।। **प्रशंसार्थत्वादिति** ।। 'भूमनिन्दा-प्रशंसासु भवन्ति मतुबादयः' इत्युक्तेरिति भावः ।। **मुख्य इति** ।। मुख्यार्थे ।। १८ ।।

( पण्डितलक्षणम् )

**यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ।। १९ ।।**

**भाष्यम्** — एतदेव प्रपञ्चयति **यस्य** इत्यादिना श्लोकपञ्चकेन । उक्तप्रकारेण **ज्ञानाग्निदग्धकर्माणम्** ।। १९ ।।

---

१. व्यापारभावे अभावे इति वे-गुज । स च टिप्पण्यननुगुणः । द्रं -भा.र.को. ।
२. भावदीपानुसारेणायं पाठः सम्भाव्यते । वे,गुज,श-मा.१-तदधीनकर्तृत्वम् इत्येकपदम् । भा.र.कोशे तु 'तदधीनं कर्तृत्वम्' इति पाठः,'स्वस्य' इति षष्ठ्याः अध्याहृत-कर्तृत्वशब्देनान्वयश्चोक्तः ।

### प्रमेयदीपिका

ननु प्रतिज्ञातमुक्तम् । तत् किमुत्तरैः श्लोकैः? इत्यत आह– **एतदेवेति** ।। कर्मस्वरूपमेव । अनेनात्रापि वाक्यभेदेन कामादिवर्जनं विधाय[1] स्तुतिः क्रियत इति सूचितम् । 'मिथ्यात्वज्ञानेन कर्मणामुपमर्दो ज्ञानाग्निदग्धकर्मत्वम्' इति व्याख्यानमसदिति भावेन आह– **उक्तेति** ।। परमेश्वरस्यैव कर्तृत्वं ज्ञात्वा स्वस्य स्वातन्त्र्येण कर्माभावज्ञानमेव ज्ञानाग्निदग्धकर्मत्वम् इत्यर्थः।। १९ ।।

### भावदीपः

**अत्रापि वाक्यभेदेनेति** ।। 'यस्य' इत्यस्य त्यागेन 'सर्वे समारम्भाः कामसङ्कल्पवर्जिताः कार्याः' इत्येकं वाक्यम्, 'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः तमेवमाहुः' इत्यपरं वाक्यमिति वाक्यभेदेनेत्यर्थः ।। १९ ।।

**त्यक्त्वा कर्मफलाऽसङ्गं नित्यतृप्तो(ऽ)निराश्रयः[2]।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ।। २० ।।**

**भाष्यम् — नच कामसङ्कल्पाभावेनालम् । आसङ्गं स्नेहं च त्यक्त्वा । ज्ञानस्वरूपम् आह पुनः –नित्यतृप्त** इति । **नित्यतृप्तनिराश्रयेश्वरसरूपोऽस्मीति तथाविधः** ।।

### प्रमेयदीपिका

**'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः'** (४.१९) इत्यनेन यदुक्तं तदेव **'त्यक्त्वा कर्मफलाऽसङ्गम्'** इत्यनेनोच्यते । सङ्कल्पो हि कर्मासङ्गः । कामश्च फलाऽसङ्ग इत्यतः सङ्गतिपूर्वमन्यथा व्याचष्टे– **न चेति** ।। नैतावता कर्मस्वरूपं सम्पूर्णमित्यर्थः । 'किं तर्हि' इत्यध्याहारः ।।

'ननु नित्यतृप्तो निराश्रयः' इति साध्योऽर्थः । [3]स कथं साधने [4]निवेश्यते? इत्यत आह– **ज्ञानेति** ।। **'कर्मण्यकर्म** '(४.१८) इत्यपेक्षया **पुनरिति** । मिथ्याज्ञानमेतदि-

---

१. बे ,गुज, बे-ग्रं ,श-१,श्रीनि-टि सम्मतश्च । वर्जनविषय–इति प्र ।

२. **अनिराश्रय इति गीतातात्पर्यानुगुणः पाठः ।**

३. भा.र.को., श-मा.१। बे, गुज,बे-ग्रं 'सः' इति नास्ति ।

४. 'अभिनिवश्यते' पां-, श-१मा. ।

त्यतोऽभिप्रायमाह– **नित्येति** ।। **इति** हेतोरहमपि **तथाविधः** । किन्तु? अविद्यया तथा न प्रतीयत इति जानन्नित्यर्थः ।। २० ।।

### भावदीपः

**इत्यपेक्षया पुनरिति** ।। 'सर्वदा हरिरेव कर्ता अहं तु तदधीनकर्ता' इति **'कर्मणि'** इति श्लोके यज्ज्ञानस्वरूपमुक्तं तदपेक्षया अन्यथापि ज्ञानस्वरूपमुच्यत इति पुनरित्युक्तमित्यर्थः ।। **मिथ्याज्ञानमेतदिति** ।। नित्यतृप्तत्वादिज्ञानमित्यर्थः । भाष्यस्थेतिशब्दानुवादेनार्थमाह – **इति हेतोः** ।। **तथाविधः** ।। नित्यतृप्तत्वादिधर्मोपेत इत्यर्थः । तर्हीदानीं कुतः स धर्मो नोपलभ्यते? इति भावेन **'किन्तु'** इति प्रश्ने उत्तरम् –**अविद्यया** इत्यादि ।। २० ।।

### ( कामादित्यागोपायः )

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाऽप्नोति किल्बिषम् ।। २१ ।।**

**भाष्यम् — कामादित्यागोपायमाह– निराशीरिति ।। यतचित्तात्मा भूत्वा निराशीरित्यर्थः । आत्मा मनः । परिग्रहत्यागोऽनभिमानम् ।।**

### प्रमेयदीपिका

कामादिवर्जितत्वमेव **निराशीः** इत्यनेनोच्यत इत्यत आह– **कामादीति** ।। आदिपदेन सङ्कल्पादिपरिग्रहः । कथम्? इत्यतो योजयति– **यतेति** ।। **निराशीः** 'त्यक्तसर्वपरिग्रहश्च भवति' इति शेषः । 'सेन्द्रियं शरीरमात्मा'[१] इत्यसत् । अन्तःकरणवृत्तिनियमेनैव[२] तन्नियम-सिद्धेरिति भावेनाऽह– **आत्मेति** ।। ननु परिग्रहो देहादिः । तत्त्यागः कथं साधकस्य? इत्यत आह– **परिग्रहेति** ।। **अनभिमानम्** इति **स्थितिः** इत्यादिक्रियाविशेषणम् । अर्थाभावे अव्ययीभावो वाऽयम् । अभिमानाभाव इत्यर्थः ।।

### भावदीपः

**सङ्कल्पादिपरिग्रहः** ।। सङ्कल्पफलस्नेहयाग्रहणमित्यर्थः ।। **कथमिति** ।। त्यागोपायोक्तिः

---

१. शाङ्करभाष्यानुवादः ।
२. बे,गुज,भा.र.को.। **'तन्नियमन'** इति श्रीनि-।

कथमित्यर्थः ।। नपुंसकत्वनिर्वाहायाऽह– **स्थितिरित्यादीति** ।। भाष्ये 'स्थितिः दर्शनं स्पर्शनं श्रवणमाघ्राणम्' इत्यादिक्रियाध्याहारः । अनभिमानं यथा भवति तथा देहादौ स्थितिः चक्षुरादिना रूपादिदर्शनादिकमित्यर्थः ।। द्वितीयाध्यायान्त्यपादे 'स नपुंसकम्' (पा.सू.२.४.१७) इत्यधिकारे 'अव्ययीभावश्च' (पा.सू.२.४.१८) इति सूत्रे 'पथश्च सङ्ख्याव्ययादेः क्रियाविशेषणानां द्वितीयैकवचनं नपुंसकम्' इति वार्तिके क्रियाविशेषणस्य नपुंसकत्वैकवद्भावयोरुक्तेरत्र नपुंसकत्वं साध्विति क्रियानध्याहारेणैव समाधिमाह **–अर्थाभाव इति** ।। 'अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभाव' (पा.सू.२.१.६) इत्यादिसूत्रे 'अर्थाभावे यदव्ययं तत्सुबन्तेन समस्यत सोऽव्ययीभावः' इत्युक्तेः 'विवादाभावो अविवादम्' इत्यादाविव अभिमानाभावोऽनभिमानमित्यर्थः ।।

**भाष्यम् — नैव किञ्चित् करोति** (४.२०) **इत्यस्याभिप्रायमाह– नाऽप्नोति किल्बिषमिति ।। २१ ।।**

### प्रमेयदीपिका

पूर्वश्लोके '**कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः**' इति कर्मणां मिथ्यात्वज्ञानात्' इति व्याख्यान[1]मसत् । अत्र श्लोकेऽन्यथा तदभिप्रायस्य वर्णितत्वादिति भावेनाऽह– **नैवेति** ।। गौण्या वृत्त्येदमभिप्रायकथनमित्यवधेयम् ।। २१ ।।

### भावदीपः

**गौण्या वृत्त्येति** ।। कर्माकरणस्येव कर्मकरणस्यापि फलानिष्पादकत्वगुणयोगाद् गौण्या वृत्त्या '**नैव किञ्चित् करोति**' इत्यस्य न किञ्चित् किल्बिष-रूपं तत्फलमाप्नोतीत्येवमभिप्रायकथनं कृष्णस्येत्यर्थः ।। २१ ।।

**यदृच्छा[2]लाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वाऽपि न निबद्ध्यते ।। २२ ।।**

**भाष्यम् —** यतचित्तात्मनो लक्षणमाह – **यदृच्छालाभेति** ।। कथं द्वन्द्वातीतत्त्वम्? इत्याह– **समस्सिद्धाविति ।। २२ ।।**

---

१. शाङ्करभाष्यम् ।

२. 'यदृच्छा हि तदिच्छा स्यात् ' इति वचनम् ।

### प्रमेयदीपिका

कामादिवर्जने यदृच्छालाभसन्तुष्टत्वादिकमर्थात् सिद्धम् । तत् किमर्थमुच्यत इत्यत आह – यतेति ।। **द्वन्द्वातीतः** इत्युक्तमेव **समस्सिद्धावसिद्धौ च** इत्यनेनोच्यत इत्यत आह– **कथमिति** ।। किंप्रकारकमित्यर्थः । इति 'जिज्ञासायाम्' इति शेषः । व्याख्यानव्याख्येयत्वे[1] न पुनरुक्तिदोष इत्यर्थः ।। २२ ।।

### भावदीपः

**न पुनरुक्तीति** पदविभागः[2]।। २२ ।।

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाऽचरतःकर्म समग्रं प्रविलीयते ।। २३ ।।**

**भाष्यम्**— उपसंहरति– **गतसङ्गस्येति** ।। **गतसङ्गस्य** फलस्नेहरहितस्य । **मुक्तस्य** शरीराद्यनभिमानिनः । **ज्ञानावस्थितचेतसः** परमेश्वरज्ञानिनः ।

### प्रमेयदीपिका

यदुक्तं कामादिवर्जनं तदेव **गतसङ्गस्य** इत्यनेनोच्यते । '**त्यक्तसर्वपरिग्रहः**'(४.२१) इत्येतत् '**मुक्तस्य**' इत्यनेन, '**कर्मणि**'(४.२०) इति '**नित्यतृप्तः**'(४.२०) इति च '**ज्ञानावस्थितचेतसः**' इत्यनेन । अतः पुनरुक्तिरित्यत आह– **उपसंहरतीति** ।। विक्षिप्तं पिण्डीकरोतीत्यर्थः । 'गतसङ्गस्य' इति विषयसापेक्षम् । अतस्तत्प्रदर्शनेन व्याख्याति– **गतेति**।। 'मुक्तस्य' इत्येतत् साधके घटयति– **मुक्तस्येति** ।। अनेन 'अभिमानान्मुक्तस्य' इति वा 'मुक्तसदृशस्य' इति वा व्याख्यातं भवति । ज्ञानस्य विषयसापेक्षत्वात्तं प्रदर्शयन् व्याचष्टे– **ज्ञानेति** ।। आत्मज्ञानस्याप्युपलक्षणमेतत् ।। २३ ।।

### भावदीपः

**साधक इति** ।। साधनानुष्ठातरीत्यर्थः ।। **आत्मज्ञानस्यापीति** ।। भगवतः तत्प्रतिबिम्बत्वादिना तत्स्वरूपज्ञानिन इत्यर्थः ।। २३ ।।

---

१. मातृकायामेवायं पाठ उपलभ्यते । व्याख्येयत्वेन न इति मुद्रतः भावदीपाननुगुणः ।
२. अनेनापि टीकायां 'व्याख्येयत्वेन' इति मुद्रितपाठः प्रामादिक इति निश्चीयते ।

( सर्वं भगवदधीनसत्तावत् )

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्म समाधिना ।। २४ ।।**

**भाष्यम् — ज्ञानवास्थितचेतस्त्वं स्पष्टयति– ब्रह्मार्पणमिति ।। सर्वमेतद् ब्रह्म इत्युच्यते । तदधीनसत्ताप्रतीतित्त्वात् । नतु तत्स्वरूपत्वात् ।**

**प्रमेयदीपिका**

ननु कर्मस्वरूपं प्रतिज्ञाय सङ्क्षेपविस्तराभ्यां प्रतिपाद्योपसंहृतम् । किमिदं **ब्रह्मार्पणम्** इत्यनेनोच्यते? इत्यत आह– **ज्ञानावस्थिते**ति ।। एतेन 'इति यो जानाति' इत्यध्याहारोऽत्र सूचितो भवति ।। 'अत्रार्पणादेर्ब्रह्मस्वरूपत्वमुच्यते' इत्यन्यथाप्रतीति[1]निरासायाह– **सर्व**मिति ।।

**भावदीपः**

प्रतिज्ञायेति ।। '**किं कर्म** ' (४.१६)इति श्लोके **कर्म प्रवक्ष्यामि** इति प्रतिज्ञाय कर्मण्यकर्म' (४.१८) इति श्लोके सङ्क्षेपेण '**यस्य**' (४.१९,--२२) इत्यादिश्लोकचतुष्टये विस्तरेण प्रतिपाद्य, पञ्चमे '**गतसङ्गस्य**' (४.२३) इत्यत्रोपसंहृतमित्यर्थः ।। **इत्यध्याहारोऽत्रेति ।।** अत्र 'श्लोके' इति भावः ।।

**भाष्यम् — उक्तं हि –**

**'त्वदधीनं यतस्सर्वमतस्सर्वो भवानिति ।**
**वदन्ति मुनयस्सर्वे नतु सर्वस्वरूपतः'**

**इति पाद्मे ।**

**'सर्वं तत्प्रज्ञानेत्रम्'[2] (ऐत.२.५.३) इति च ।**

१. शाङ्करभाष्यानुवादः ।

२. व्याख्यातेयं श्रुतिः न्यायसुधायाम् (२.३.२८) अनु – 'प्रज्ञानेत्रोऽलोक इति मुक्तौ भेदो अभिधीयते'। न्या.सु-'एष ब्रह्मैष प्रजापतिरिन्द्रः' इत्यादिना विश्वप्रपञ्चमनूद्य 'सर्वं प्रज्ञानेत्रम्' इति तस्य प्रज्ञाख्यब्रह्म-नेतृकत्वमभिधाय नेतृनेतव्यभावस्य कल्पितत्वादित्याशङ्कानिवृत्त्यर्थं - प्रज्ञानेत्रोऽलोक इति श्रुत्या मुक्तावपि जीवपरयोर्भेदो अभिधीयते -अलोको मुक्तः अपि प्रज्ञानेत्रो ब्रह्मनेतृक इति । नीयते अनेनेति नेत्रम् ।

**'एतं ह्येव वह्वृचाः'** (ऐत.आ.२.८.३.७) **इत्यादि च ।**

**समाधिना सह ब्रह्मैव कर्म ।। २४ ।।**

### प्रमेयदीपिका

[1]कुतः? इत्यत उक्तम् -**उक्तं हि** इति ।। सर्वस्य भगवदधीनत्वे प्रमाणमाह -**सर्वमिति** ।। **प्रज्ञा ब्रह्म नेत्रं** नेतृ यस्य तत्तथोक्तम् । **एतं हि** इत्यनेन सर्वान्तर्यामित्वमुच्यते । 'ब्रह्मकर्मा ब्रह्मविषयः समाधिर्यस्यासौ तथोक्तः'[2] इति व्याख्यानं प्रक्रमविरुद्धमिति भावेन अन्यथाऽऽ याख्याति- **समाधिनेति** ।। समाधिरपि ब्रह्मेत्यर्थः ।। २४ ।।

### भावदीपः

कर्मशब्दः कर्मकारकपरः सन् विषयपर्यायः, बहुव्रीहिश्च समास इति भावेनोक्तं- **ब्रह्मकर्मा ब्रह्मविषय** इति । **प्रक्रमेति** ।। **'ब्रह्मार्पणम्'** इत्यादिनाऽर्पणादेः ब्रह्मभेदेनोपक्रमादिहाभेदा-नुक्तावुपक्रमविरोध इत्यर्थः ।। २४ ।।

( यज्ञभेदाः )

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ।। २५ ।।**

**भाष्यम् — यज्ञभेदानाह – दैवम् इत्यादिना ।। दैवं भगवन्तम् । स एव तेषां यज्ञः । भगवदुपासनं यज्ञम् इति क्रियाविशेषणम् ।।**

### प्रमेयदीपिका

उत्तरप्रकरणप्रतिपाद्यं बुद्ध्यारोहार्थमाह- **यज्ञेति** ।। सामान्यतः कर्मस्वरूपमुक्तम् ।

---

'दाम्नि' इत्यादि सूत्रात् । प्रज्ञा च ब्रह्म । 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति वाक्यशेषात् । नचात्र 'लोक' इति पदं छेद्यम् । जनभुवनरूपस्य लोकस्य प्रागेव ब्रह्मनेतृकत्वस्योक्तत्वेन पुनरुक्तिप्रसङ्गात् । नच नेतृ-नेतव्ययोर्भेदः कचिदस्ति । नचावान्तरमुक्तिविषयेयं श्रुतिः । तत्र लोकातीताऽयोगात् । देहेन्द्रियादिवैकल्यं खल्ववलोकत्वम् । परममुक्तौ चानुवर्तमानो भेदो नाविद्याकल्पितो भवितुमर्हत्यतिप्रसङ्गात्।'।

१. भा.र.कोशे, श-१मा । वे,गुज-वेग्रं, एतदित्यत आह इति । अयं भागः कचिददृष्टश्चेत् स लेखकप्रमाद एवेति सम्भाव्यते ।।

२. शाङ्करभाष्यानुवादः ।

तच्च यज्ञादिभेदभिन्नम् । तत्र **'नायं लोकोऽस्ति'** (४.३१) इति वक्ष्यति । तदनुपपन्नम् । [1]'यत्याद्याश्रमविलोपप्रसङ्गाद् इत्याशङ्कानिरासार्थम्' इति शेषः । तत्र[2] 'दैवं देवविषयम्' इति व्याख्यान[3]मसत् । **'द्रव्ययज्ञाः'** (४.२८) इत्यस्य पुनरुक्तत्वादिति भावेनाऽह– **दैवमिति** ।।

एवंतर्हि 'केचित् भगवन्तमुपासते' इत्युक्तं स्यात् । तथाच नेयं [4]प्रतिज्ञातोक्तिरित्यत आह– **स एवेति** ।। स इति परामृष्टं दर्शयति– **भगवदिति** ।। भगवदुपासनस्य यज्ञत्वमिह कथं लभ्यते? इत्यत आह– **यज्ञमिति** ।। 'भगवत्' इत्यादिकं क्रियाविशेषणत्वप्रदर्शनार्थ-मेकमेव वाक्यम् ।।

### ( क्रियाविशेषणशब्दार्थः )

साधनं परित्यज्य धात्वर्थमात्रस्य विशेषणं (हि)[5] क्रियाविशेषणम्[6]।।

### भावदीपः

**कर्मस्वरूपमुक्तमिति** ।। भगवदधीनकर्तृत्वानुसन्धानपूर्वं तत्प्रीत्युद्देशेन वर्णाश्रम-विहितानुष्ठानं कर्मेति सामान्यतः कर्मस्वरूपं 'कर्मणि' इत्यादिनोक्तमित्यर्थः ।। **वक्ष्यतीति** ।।

---

१. बे,वे-ग्रं ,गुज भा.र.को., श-१मा.। 'तत्र यज्ञाभावात्' इत्युक्तेः यत्याश्रम इति प्र-पाठो श्रीनि-टिसम्मत इति भाति ।

२. बे,गुज, भा.र.को.,श-१मा.। 'अत्र'– प्र.पाठः ।

३. शाङ्करभाष्यानुवादः ।

४. श्रीनि -टि । बे ,गुज.वे-ग्रं श-१मातृकायां च 'यज्ञोक्तिः' इति । 'यज्ञोक्तिः इत्यपि पाठः' -श्रीनि-टि.।

५. बे,वे-ग्रं -गुज -'हि' इति नास्ति । प्र-पाठे अधिकम् ।

६. (अ) **आनन्दमयाधिकरणन्यायसुधायाम्** -'उक्तोन्नमय इत्यादि' इति वाक्यव्याख्यावसरे 'इत्यादीति क्रियाविशेषणम्' इत्युक्तम् ।

**शे.वा.चं-** ' साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रियाविशेषणमित्यर्थः । ततश्च क्रियाद्वारेण स्त्रीलिङ्गे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं वाच्यमिति क्लीबत्वैकवचनान्तत्वाव्ययत्वविधानात् .'.।। अत्र **वा.र.मा-** उक्तमूले क्रियाविशेषणत्वं नाम किमिति न प्रतीयते । कथं च तदाश्रयणेन तृतीयाप्राप्तिनिरास इत्यतो 'दैवमेवापरे यज्ञम्' इत्येतच्चतुर्थगीताभाष्यस्थयज्ञमिति क्रियाविशेषणम् इत्येतद्वाक्यव्याख्यानरूपं साधनं परित्यज्येत्यादि प्रमेयदीपिकानुसारेण क्रियाविशेषणत्वं तावन्निर्वक्ति -साधनं परित्यज्येति । ..... दैवमेवापरे यज्ञमिति गीताभाष्यवाक्यतट्टीकयोरप्ययमेवाभिप्रायः' ।।

(आ) **अधिकविचारः सुधा ७- सम्पुटे.** ३१५८-तः ३१६४ पत्रेषु ।

(इ) **अधिकविचारः सुधा १४- सम्पुटे.** ६७७२ पत्रे ।

'अत्रैवाध्याये' इति योज्यम् ।। **इत्यस्य पुनरुक्तत्वादिति** ।। द्रव्ययज्ञस्यापि देवतोद्देशेन द्रव्यत्यागरूपतया देवताविषयत्वादिति भावः ।। **क्रियाविशेषणत्वेति** ।। भगवदुपासना-रूपक्रियां प्रति 'यज्ञम्' इत्यस्य विशेषणत्वप्रदर्शनार्थम् । अत एव 'यज्ञम्' इति नपुंसकम् । नन्वेवं 'भगवन्तमुपासते यज्ञं यथा तथा' इति वक्तव्ये '**भगवदुपासनम्** इति कथमनुवादः ? इत्यत आह– **साधनमिति** ।। लिङादिप्रत्ययोत्पत्तौ यत्साधनं कर्तृकर्मादि तत्त्यागेनेत्यर्थः । अत एवमनुवादः क्रियत इति भावः ।।

**भाष्यम् —** **नान्यत्तेषामस्ति यतीनां केषाञ्चित्** ।।

**प्रमेयदीपिका**

अवधारणार्थं दर्शयति– **नान्यदिति** ।। **अन्यत्** भगवदुपासनात् । अनेन 'एवशब्दो भिन्नक्रमः' इत्युक्तं भवति ।। दैवमेवोपासते नान्यदिति तु प्रकृतासङ्गतम् । **केषाञ्चित्** परमहंसानाम् । अन्येषां बाह्यकर्मणोऽपि भावात् । यद्वा 'केषाञ्चित्' इत्यस्यैव व्याख्यानं– **यतीनागिति** ।।

**भावदीपः**

**अवधारणेति** ।। 'दैवमेव' इत्येवकारार्थमित्यर्थः ।। **भिन्नक्रम इति** ।। 'उपासते' इत्यत्रो-पासनारूपधात्वर्थेनान्वयः । 'भगवदुपासनमेव यज्ञतया कुर्वन्ति नान्यत्' इति भिन्नक्रम इत्यर्थः ।। **अन्येषामिति** ।। 'यतिभ्यः' इति योज्यम् । 'यतीनाम्' इत्यतः 'केषाञ्चित्' इत्येतद् भिन्नार्थतया व्याख्याय सामानाधिकरण्येन व्याचष्टे– **यद्वेति** ।। २५ ।।

**(यज्ञशब्दार्थो भगवान्)**

**भाष्यम् —** [२]यज्ञं भगवन्तम् ।

**'यज्ञेन यज्ञम्'[३] (ऋ.१.१६४.५०)।**

१. इत आरभ्य चतस्रः पङ्क्तयः सो मातृकायां न लिखिताः ।

२. (अ) 'यज्ञो यज्ञपुमान् चैव यज्ञेशो यज्ञभावनः । यज्ञभुक् चेति पञ्चात्मा यज्ञेष्विज्यो हरिः स्वयम्' (भा.ता. ४.८.४१) उदा- तन्त्रसारवचनम् ।

(आ) 'यज्ञ इज्यो महेज्यश्च', 'यज्ञो यज्ञपतिर्यज्वा ' इति च वि.स.नामसु ।।

३. इयमृक् ऋग्वेदे द्विवारं श्रूयते - वामनसूक्ते , पुरुषसूक्ते (१०.९०.१६) च । एवमेव अथर्वे -७.५.१ , यजुषि३१.१६, तैत्तरीयसंहितायां ३.५.११-५, तैत्तिरीयारण्यके -३.२.७ , शतपथे च १०.२.२.२

'यज्ञो विष्णु र्देवता'[१]

इत्यादि श्रुतिः (भ्यः) ।

यज्ञेन प्रसिद्धेनैव । यज्ञं प्रति जुह्वति इति सर्वत्र समं

'तं यज्ञम्'[२] (ऋ.१०.९०.७) इत्यादौ[३] ।

उक्तं च–

'विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना ।
अयजन्मानसे यज्ञे पितरं प्रपितामहः ।।'[४] इति ।। २५ ।।

**प्रमेयदीपिका**

'ब्रह्माग्नौ' इत्यस्य 'आत्मानमात्मनैव मनसा वा ब्रह्मणैकीभावयन्ति' इति [५]व्याख्यानमसदिति भावेन 'यज्ञम्' इत्येतद् व्याचष्टे– यज्ञमिति ।। भगवतो यज्ञशब्दार्थत्वं कुतः इत्यत आह– यज्ञेनेति ।। यज्ञेन इत्यस्यार्थमाह– यज्ञेनेति ।। एवशब्देनापव्याख्यानं निराकरोति । एवं चेद्, 'यज्ञम्' इत्यस्य कथमन्वयः ? इत्यत आह– यज्ञमिति ।। एतद्व्याख्यानम् अन्यत्र अतिदिशति – इति सर्वत्रेति ।। अतिप्रसङ्गनिवारणाय सर्वत्र इत्युक्तं विवृणोति – तमिति ।। एवं तर्हि 'अग्रतो जातं तं पुरुषं यज्ञं भगवन्तं प्रति बर्हिषि प्रौक्षन्' इत्यर्थः स्यात् । स च निर्मूल इत्यत आह– उक्तं चेति ।। २५ ।।

---

१. (अ) 'यज्ञो वै विष्णुः' ४.१.६, 'विष्णुर्वै यज्ञः' ४-४-७ इति मैत्रायणीसंहितायाम् ।
(आ) 'यज्ञो वै विष्णुः'- तै-सं १.४.७ ।।
(इ)ब्रह्मपुराणे १६१ अध्याये-'यज्ञो वै विष्णुरितिच श्रुतिरेषा सनातनी' ।

२. इयमृक् - अथर्वे -१९.६.११ ; यजुषि -३१.९; तैत्तिरीयारण्यके च -३.१२.३ ।

३. (अ)आदिशब्देन 'यो ह वै यज्ञे यज्ञं वेद 'इति ऐतरेयश्रुतिः ।
(आ)'यज्ञो वै विष्णुरित्यत्र प्रत्यक्षं श्रूयते श्रुतिः । इज्यते यत्तमुद्दिश्य परमो धर्म उच्यते ।।
भगवन्तमनुद्दिश्य हूयते यत्र कुत्र वै । तत्र हिंसाफलं पापं भवेदत्र विगर्हितम् ।।
तस्मात् सर्वस्य यज्ञस्य भोक्तारं पुरुषं हरिम् । ध्यात्वैव जुहुयात्तस्मै हव्यं दीप्ते हुताशने ।।'
वृद्धहारीतस्मृतौ ८.७,८,९ ।

४. द्रं - ब्रह्मकृतान्यमानसयज्ञविचारः 'एवं स मानसे यज्ञे त्वयजत् केशवं विभुम्'
इत्यादि बृहद्भाष्येऽपि (३-५-११)।

५. शाङ्करभाष्यम् .(भा.र.को) ।

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**
**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

**भाष्यम् —** आत्मसंयमाख्योपायाग्नौ ॥ २७ ॥

### प्रमेयदीपिका

'**आत्मसंयम**' इत्येतद् दुर्गमार्थत्वाद् व्याख्याति– **आत्मेति** ॥ [1]**आत्मनः** मनसः । आत्मसंयमाख्यो [2]य उपायः स एवाग्निः ॥ २७ ॥

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

**भाष्यम् —** **द्रव्यं जुह्वतीति द्रव्ययज्ञाः । तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति तपोयज्ञाः इत्यादि । इदं तपो हविस्तद्ब्रह्माग्नौ जुहोमि तत्पूजार्थमिति होमः । तदर्पण एव च होमबुद्धिः ॥ २८ ॥**

### प्रमेयदीपिका

ननु द्रव्यं यज्ञो न भवति । तत्कथं बहुव्रीहिः? तत्पुरुषत्वे च कथं पुरुषसामानाधिकरण्यम्? इत्यत आह– **द्रव्यमिति** ॥ अनेन नायं यज्ञशब्दो भावार्थः । किन्तु कर्त्रर्थः । तथाच द्रव्यस्य **यज्ञाः** याजका इत्यर्थ [3]इत्युक्तं भवति । एतदाशङ्कापरिहारायैव **तपोयज्ञाः** इत्येतदप्येवमेव व्याचष्टे– **तप** इति ॥ **तत्र** परमेश्वरे । **योगयज्ञाः** इत्यादिकमप्येवमेव व्याख्येयमिति दर्शयति– **इत्यादीति** ॥ तपसो होमः कथम्? इत्यत आह– **इदमिति** ॥ तपश्चरणमेव तपोयज्ञः किं न स्यात् ? इत्यत आह– **तदर्पण** एवेति ॥ अनेनैव प्रकारेण यज्ञत्वसम्पादनम् । नान्यथेत्यर्थः ॥ २८ ॥

१. 'आत्मनि संयमः आत्मसंयमः' इतिशाङ्करभाष्ये । तन्निराकरणार्थमेवं व्याख्या ।
२ भा.र.को । गुज, वे-ग्रं पाठे 'अयम्' इति । स टिप्पण्यननुगुणः ।
३. वे, गुज, वे-ग्रं -अधिकम् ।श-मा-१ इत्यर्थ इति नास्ति ।

### भावदीपः

**तत्पुरुषत्व** इति ।। द्रव्याणां यज्ञ इत्येवं तत्पुरुषत्व इत्यर्थः ।। **एतदाशङ्कापरिहारायेति** ।। तपो यज्ञो येषाम् इति बहुव्रीहित्वे तत्पुरुषत्वे च प्रागुक्तदोष इति शङ्कापरिहारायेत्यर्थः ।। **एवमेवेति** ।। यज्ञशब्दस्य कर्त्रर्थताभिप्रायेणेत्यर्थः ।। २८ ।।

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ।। २९ ।।**

**भाष्यम् — अपरे प्राणायामपरायणाः प्राणमपाने जुह्वति, अपानं च प्राणे[1]। कुम्भकस्था एव भवन्तीत्यर्थः ।। २९ ।।**

### प्रमेयदीपिका

'अपाने जुह्वति' इत्येतत् पूरकरेचककुम्भकपरतया केचिद्[2] व्याचक्षते । तदसत् । अध्याहारादिप्रसङ्गात् । पूरकरेचकयोः कुम्भकार्थत्वेन, पृथक् प्राणायामत्वाभावाच्चेति भावेन कुम्भकमात्रपरतया योजयति– **अपर** इति ।। **परायणाः** इत्यतः परं **प्राणापानगती रुद्ध्वा** इति द्रष्टव्यम् । अभिप्रायमाह–**कुम्भकस्था एवेति** ।। एवशब्देनापव्याख्यानं व्यावर्तयति ।।

### भावदीपः

**अध्याहारादीति** ।। अपरे पूरकाः 'अपाने प्राणं जुह्वति', अपरे रेचकाः 'प्राणेऽपानं जुह्वति', अपरे कुम्भकस्थाः प्राणापानगतीः रुद्ध्वा प्राणायामपरायणाः भवन्तीत्यध्याहारवृत्त्योः वाक्यभेदस्य च प्रसङ्गादित्यर्थः ।। २९ ।।

**अपरे नियताऽऽहाराः प्राणान् प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ।। ३० ।।**

**भाष्यम् — नियताऽऽहारत्वेनैव प्राणशोषात् प्राणान् प्राणेषु जुह्वति–**

**'यच्छेद्वाङ्मनसी प्राज्ञः'** (काठक-१.७.१३)[3]

---

१. प्राणमपाने इत्यदि भाग.ता १-? धृतराष्ट्रकृतलयचिन्तनम् ।

२. शाङ्करभाष्यम् ।

३ 'प्राज्ञः ज्ञानी इन्द्रियाभिमानिनः प्रागुक्तान् सोमादीन् वाचि वागभिमानिषु पार्वतीवारुणीसौपर्णीषु यच्छेत्

इत्यादि श्रुत्युक्तप्रकारेण वा । अन्यदपि ग्रन्थान्तरे सिद्धम् ।

'यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुताः' इति ।। ३० ।।

### प्रमेयदीपिका

**'अपरे नियत'** इत्यत्र प्राणानां प्राणेषु कीदृशो होमः? नियताऽहारत्वस्य कथमत्रोपयोगः? इत्यत आह– **नियतेति** ।। **प्राणशोषात्** इन्द्रियवृत्तीनां वृत्तिमस्त्विन्द्रियेषु सङ्कोचात्। **जुह्वति** 'इत्युच्यते' इति शेषः । एवशब्देन **'श्रोत्रादीनि'** (४.२६) इत्यतो भेदं दर्शयति । तत्र 'प्रत्याहारेण' अत्र 'नियताहारत्वेनैव'[१] इति । **प्राणान्** इत्यादिकं प्रकारान्तरेण व्याख्याति[२]– **यच्छेदिति** ।। **वाक्** वाचम् । [३]**मनसी** मनसि । **यच्छेत्** तन्नियतां ध्यायेत् । अवराणा-मिन्द्रियदेवतानामुत्तमेन्द्रियदेवतानियतत्वचिन्तनं[४] प्रकारार्थः । **वा** 'प्राणानां प्राणेषु होमः' इति शेषः । अस्मिन् पक्षे 'नियताहाराः' इति पृथग् यज्ञो ज्ञातव्यः । इदमेवास्तु व्याख्यानम् । श्रौतत्वात् । किं पूर्वेण? इत्यत आह– **अन्यदपीति** ।। ३० ।।

### भावदीपः

**'श्रोत्रादीनि'** इत्यत इति ।। पूर्वोक्तश्लोकादित्यर्थः ।। भाष्यस्थवापदमनूद्य तदनन्तरं शेषमाह– **वा प्राणानामित्यादि** ।। ३० ।।

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ।। ३१ ।।**
**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ।। ३२ ।।**

**भाष्यम् — ब्रह्मणः परमात्मनो मुखे ।**

---

इति आदौ योज्यम् । नियमनं नाम तदधीनत्वचिन्तनम् । तन्नियतान् चिन्तयेदित्यर्थः।'

का.खं.राघवेन्द्रीये।

१. भा.र.को , श-१मा.। अत्र वे.गुज ,वे-ग्रं - पुस्तके एव शब्दो नास्ति ।

२. व्याचष्टे -वे-ग्रं ।

३. श-१मा । मनसी इति बे नास्ति।

४. 'तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः' इति का.भाष्ये 'यच्छेद्'शब्दार्थ उक्तः ।

**'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'**(९.२४)

इति वक्ष्यति ।

**मानसिक**[1]**वाचिककायिककर्मजा एव हि ते सर्वे । एवं ज्ञात्वा तानि कर्माणि कृत्वा विमोक्ष्यसे ।**

**प्रमेयदीपिका**

'ब्रह्मणो मुखे वितताः' इत्यस्य 'वेदे[2] प्रतिपादिताः' इति [3]व्याख्यानमसत् । मुख-शब्दवैयर्थ्यादित्यभिप्रायेणाह– **ब्रह्मण** इति ।। परमात्मनः सर्वयज्ञभोक्तृत्वं कुतो भगवत्-सम्मतमित्यत आह– **अहं हीति** ।। उपासनादीनां कर्मजत्वाभावात्[4] 'कर्मजान् विद्धि तान् सर्वान्' इत्ययुक्तम्? इत्यत आह– **मानसिकेति** ।। अत्र **विमोक्ष्यसे** इति सन्नन्तान्मुचः कर्मकर्तरि च[5] लट् । तस्य प्रकृतोपयुक्ततयार्थमाह– **एवमिति** ।। एवं ज्ञात्वा यदि सर्वेऽपि यज्ञाः कर्मजा इति जानासि तर्हि **तानि** युद्धादीनि स्वविहितानि **कर्माणि** कृत्वैव **विमोक्ष्यसे** । संसारादात्मानं मोक्तुमिच्छसि । सर्वेषां कर्मजत्वज्ञाने तवैव मोक्षार्थं युद्धादिकं कर्तव्यमितीच्छा भविष्यतीत्यर्थः ।।

**भावदीपः**

**( विमोक्ष्यसे इति गीताशब्दस्य साधुत्वोपपादनम् )**

**इति व्याख्यानमसदिति** ।। कुतः? इत्यतो ब्रह्मशब्दस्य वेदार्थकत्वे 'ब्रह्मणि वेदेऽपि वितताः' इत्येतावता पूर्तेरिति भावेन हेतुमाह– **मुखेति** ।। **सन्नन्तान्मुच** इति ।। यद्यपि 'मुच्लृ मोक्षणे' (**पा.धा.**) इत्यतः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (**पा.सू.३.१.७**) इति सन्प्रत्यये 'सन्यङोः' (**पा.सू.६.१.९**) इति द्विवचने, 'हलन्ताच्च'(**पा.सू.१.२.१०**) इति सनः कित्वेन गुणाभावे च मुमुक्षेति भाव्यम् । तथाऽपि गुणाभ्यासलोपौ छान्दसावित्युपेत्य सन्नन्तात्

---

१. बे, गुज, वे-ग्रं ।

२. ज्ञा-१मा ।'वेदप्रतिपादिता ' इति -बे,-वे-ग्रं ।

३. शाङ्करभाष्यम् ।

४. बे, गुज, वे-ग्रं । 'कथं 'कर्मजान् विद्धि तान् सर्वान्' इत्युक्तम्' इति प्र-पाठः ।

५. सो-कामातृकानुसारेणायं पाठः । मातृकर्मकर्तरि इति प्रचलितपाठः ।

मोक्षशब्दात् 'वर्तमाने लट्' (**पा.सू.३.२.१२३**) इति लटि, तस्य सिबादेशे 'कर्मवत् कर्मणा तुल्यक्रियः' (**पा.सू.३.१.८७**) इति तृतीयाध्यायाद्यपादीयसूत्रेण 'कर्तरि शप्' (**पा.सू. ३.१.६८**) इत्यतः प्रथमान्तं कर्तृपदमनुवर्त्य 'कर्मणा तुल्यक्रियः कर्मकारकक्रियया तुल्यक्रियः कर्ता कर्मवद्भवति । कर्मकारकनिमित्तं यथा आत्मनेपदे चिण्वद्भावादिकार्याणि लभते' इत्युक्तेः यकि सति, 'अतो लोपः'(**पा.सू.६.४.४८**)इति अकारलोपे 'स्वयमेव विभिद्यते काष्ठाम्' इत्यादाविव 'मोक्ष्यसे' इति रूपसिद्धेः '**कर्मकर्तरि च लट्**' इत्युक्तम् ।।

**भाष्यम् — युद्धं परित्यज्य यन्मोक्षार्थं करिष्यसि तदपि कर्म । अतो विहितं न त्याज्यमिति भावः ।। ३२ ।।**

### प्रमेयदीपिका

तत्कथम्? इत्यत आह– **युद्धमिति** ।। यद्येवमनेके यज्ञाः तर्हि किं कर्मात्मकेन युद्धेन? उपासनादिनैवाहं कृती स्यामित्यर्जुनस्य हार्दं ज्ञात्वा भगवतेदमुक्तम् । [1]तस्यायं भावः। **मोक्षार्थं यत्** उपासनादिकं **युद्धं परित्यज्य करिष्यसि तदपि कर्म** । तथाच त्वया विहितातिक्रम एव कृतः स्यात् । नतु कर्मत्यागः । अत एवं जानतस्तव विहितं युद्धादिकं[2] न त्याज्यमिति बुद्धिर्भविष्यतीत्यर्थः ।।

विमोक्ष्यसे इति लडन्तत्वपक्षेऽयमर्थः । किं सर्वयज्ञानां कर्मजत्वज्ञानमात्रेण मोक्षः ? तथाच **कुरु कर्मैव** (४.१५) इति विधानं व्यर्थमित्यत आह– **एवमिति** ।। **कर्मजान् विद्धि** इत्यनेन कथमर्जुनाशङ्कायाः[3] परिहारः ? इत्यत आह– **युद्धमिति** ।। ३२ ।।

### भावदीपः

'**एवं ज्ञात्वा**' इत्यनुवादः । तस्य तात्पर्यार्थोक्तिः– **यदीत्यादि** ।। **आशङ्काया इति**[4] ।। किं 'सर्वयज्ञानाम्' इत्यत्र नाहं युद्धं करिष्यामि इत्यभिमानपूर्वोक्ताशङ्काया इत्यर्थः।।३२ ।।

---

१. अयमेव पाठः बे, गुज, भा.र.को, श-१मा, कृष्णाचार्य-टिसम्मतश्च । अस्यायम् इति तु प्रचलितः न कुत्रापि ।

२. 'विहितयुद्धादिकम्'-गुज ,वे-ग्रं ।

३. श्रीनि -टि, कृ-टि,भा.र.को.सम्मतः । अर्जुनस्य शङ्कापरिहार इति - वे, गुज,श-१मातृका च ।

४. शङ्काया इति काणियूरुपाठे प्रतीके व्याख्याने च ।

[1]श्रेयान् द्रव्यमयाद्यज्ञाद् ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ।। ३३ ।।

**भाष्यम् — अखिलम् उपासनाद्यङ्गयुक्तम् । ज्ञानफलमेवेत्यर्थः ।। ३३ ।।**

### प्रमेयदीपिका

**'सर्वं कर्म'** इत्युक्तत्वात् **'अखिलम्'** इति पुनरुक्तिरित्यत आह– अखिलमिति ।। कर्म-समृद्ध्यर्थान्युपासनानि वेद एवोच्यन्ते । खिलं सशेषं न भवतीत्यखिलमित्यर्थः । **'ज्ञाने परिसमाप्यते'** इत्यस्य 'ज्ञाने जाते न कर्म कार्यम्'[2] इत्यन्यथाप्रतीतिनिरासाय[3] तात्पर्यमाह– ज्ञानेति ।। **परिसमाप्तिः** सम्पूर्णता सफलता । सा च ज्ञाने सतीति सन्निधानाज्ज्ञानलक्षणेनैव फलेनेति भावः ।। ३३ ।।

### भावदीपः

कर्मसाध्यत्वादुपसनाया कथं कर्माङ्गत्वम्? इत्यत आह– **कर्मसमृद्धीति** ।। **'उद्गीथमुपासीत'** इत्यादिना वेद एवोच्यन्त इत्यर्थः ।। ३३ ।।

**(अर्जुनः ज्ञान्येव )**

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ।। ३४ ।।**

**भाष्यम् — इदानीमपि ज्ञान्येव । तथाऽप्यभिभवान्मोहः । मा तूक्ता ।। ३४ ।।**

### प्रमेयदीपिका

'तद्विद्धि' इत्युक्तत्वादिदानीमर्जुनो न ज्ञानी[4] इति प्रतीतिं निवारयति– इदानीमपीति।। 'तद्विद्धि' इत्यधिकज्ञानार्थमुक्तमिति भावः ।। ज्ञानी चेत्तर्हि **'यज्ज्ञात्वा'** (४.३५) इति तस्य

---

१. **कर्मनिर्णयभाष्यम्- 'अर्चनं यज्ञादि, प्रार्चनं ज्ञानध्यानादि । 'श्रेयान्..' इति भगवद्वचनम् । टीका-'तत्र कुतो यज्ञादितो ज्ञानादेः प्रकर्ष इत्यत आह-श्रेयानिति'।।**

२. **शाङ्करभाष्यानुवादः**

३. 'निवारणाय' वे-ग्रं ।

४. ज्ञानी इति पाठः मातृकायां, गुज पुस्तके च । जानाति इति प्रचलितः।

मोहः कथमुच्यत इत्यत आह– **तथाऽपीति** ।। **अभिभवात् ज्ञानस्य** । अर्जुनस्य ज्ञानित्वे सिद्धे भवेदेतत् । तत्रैव किं प्रमाणम् ? इत्यत आह– **मा त्विति** ।। ३४ ।।

**भावदीपः**

**मा त्वितीति** ।। अर्जुनस्य ज्ञानित्वे प्रमाणं तु द्वितीये (२.४५ )**'नरांश इन्द्रश्च'** इत्यादिनोक्तमिति भाष्यार्थः ।। ३४ ।।

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ।। ३५ ।।**

**भाष्यम् —** **येन** ज्ञानेन **मयि** आत्मभूते सर्व**भूतानि अथो** तस्मादेव मोहनाशात् **पश्यसि** ।। ३५ ।।

**प्रमेयदीपिका**

**'येन भूतानि'** इत्यस्य 'येन मोहेन सर्वाणि भूतान्यात्मनि स्वस्मिन्नथो मयि च द्रक्ष्यसि' इत्यन्यथाप्रतीतिनिरासार्थमाह– **येनेति** ।। **आत्मभूते** सर्वान्तर्यामिणि । 'द्रक्ष्यसि' इत्येतत् 'पश्यसि' इति व्याख्यातमिदानीमपि ज्ञान्येवेति ज्ञापयितुम् ।।३५ ।।

**( अपरोक्षज्ञानस्य महत्वम् )**

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानल्पवेनैव वृजिनं सन्तरिष्यसि ।। ३६ ।।**
**यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।। ३७ ।।**
**[1]न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनाऽत्मनि विन्दति ।। ३८ ।।**[2]

१.. पूर्वार्धः-वराह.पु.चा.मा.१.-६. ।

२. (अ) सुधा-(षट्टिप्पणी)(३-३-४८.पृ. ५००६) नन्वस्यां श्रुतौ ज्ञानिनः कर्मणां परितापः श्रूयते ,नतु ज्ञानेन विनाश इथि विवक्षितोऽर्थ इत्यतो भगवद्वाक्यसमाख्यामह-यथेति ।। अनु-यथा..तथा ।। सुधा-यद्यप्यत्र ज्ञानस्य कारणत्वं स्फुटं प्रतीयते । तथाऽपि कर्मणां भस्मसात्कारणं नाम मुख्यासम्भवात् किं

**भाष्यम्** — करणभूतं ज्ञानं स्तौति पुनः श्लोकत्रयेण ।। ३६ ।। ३७ ।। ३८ ।।

**प्रमेयदीपिका**

**'येन'**(४.३५) इति ज्ञानस्यैव निर्देश इति स्थापयन् **'अपि चेत्'** इत्यादेः प्रतिपाद्यमाह– करणेति ।। 'येन' इति करणतया निर्दिष्टमित्यर्थः ।।

**'श्रेयान् '**(४.३३)इत्याद्यपेक्षया पुनरिति ।। ३६ - ३८ ।।

**भावदीपः**

इत्याद्यपेक्षयेति ।। **'श्रेयान् द्रव्यमयात्** 'इत्यादिना ज्ञानस्य स्तुतत्वात् **'अपि चेदसि'** इत्यादि श्लोकेऽत्र पुनस्तवनं क्रियत इति तदपेक्षया पुनःशब्द इत्यर्थः ।। ३६ -३८ ।।

( ज्ञानस्य अन्तरङ्गसाधनम् )

**श्रद्धावान् लभते ज्ञानं मत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ।। ३९ ।।**
**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ।। ४० ।।**

( ज्ञानफलप्रपञ्चनम् )

**योगसन्न्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ।। ४१ ।।**
**तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ।। ४२ ।।**

**ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु योगशास्त्रे**
**श्रीकृष्णार्जुनसंवादे 'ज्ञानयोगो नाम चतुर्थोऽध्यायः ।।**

---

कल्पनीयमिति न ज्ञायते । अतो वाक्यन्तरं पठति -सर्वेति (गी-१८-६६)।।

(आ) न्यायामृते ज्ञाननिवर्त्यत्वान्यथोपपत्तिविचारप्रकरणे -उदाहृतः ।

१. निवृत्तकर्मणः तारतम्यान्तगतत्वेन विष्णोः, तज्ज्ञानस्य च विस्तृतवर्णनं इति पां ।

**भाष्यम् —** तत्साधनं विरोधिफलं च तदुत्तरैरुक्त्वोपसंहरति ।। ४२ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये चतुर्थोऽध्यायः ।।**

## प्रमेयदीपिका

[1]उत्तरस्य श्लोकस्य सङ्क्षिप्तार्थत्वादेकोक्त्यैव तात्पर्यमुक्त्वा **तस्मात्** इति चतुर्थस्य प्रतिपाद्यमाह– **तदिति** ।।

**तस्य** ज्ञानस्य **साधनम्** अन्तरङ्गं श्रद्धादिकम् । **विरोधि** अज्ञानादिकम् । ज्ञानस्य फलं परशान्त्यादिकम् । **विरोधिनः फलं** विनाशादिकमिति ।। ३९-४२ ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य**

**टीकायां श्रीजयमुनिविरचितायां प्रमेयदीपिकायां चतुर्थोऽध्यायः ।। ४ ।।**

## भावदीपः

फलपदं तत्पदपरामृष्टज्ञानेन विरोधिपदोक्ताज्ञानेन चान्वेतीति भावेनाऽह– **ज्ञानस्य फलमित्यादि** ।। ४२ ।।

**।। इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते चतुर्थोऽध्यायः ।।**

---

१. वे. उत्तरश्लोक इति -प्र.पाठः, श-१मा च।

## ।। अथ श्रीमद्भगवद्गीतायां पञ्चमोऽध्यायः ।।

**अर्जुन उवाच –**

**सन्न्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ।। १ ।।**

**( पञ्चमाध्यायार्थनिरूपणम् )**

**भाष्यम् — तृतीयाध्यायोक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन । 'यदृच्छालाभसन्तुष्टः'** (४.२२) **इत्यादिना[1] सन्न्यासम् । 'कुरु कर्मैव'** (४.१५) **इत्यादिना कर्मयोगं च ।।**

### प्रमेयदीपिका

पूर्वसङ्गतत्वेनैतदध्यायप्रतिपाद्य[2]मर्थमाह– **तृतीयेति** ।। 'कर्मयोगो नाम कर्माणि कृत्वा तेषां ब्रह्मात्मकत्वज्ञानम्' इति **कश्चित्**। तद्व्यावर्तयितु**मेव**शब्दः । फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहित[3]कर्मानुष्ठानमेव कर्मयोगोऽत्र प्रपञ्च्यते । तस्यैव पूर्वमुक्तत्वात् । नान्यः । तस्याप्रकृतत्वात् । द्व्यंशश्चायं कर्मयोगः । कामादिवर्जनम्, ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं चेति । तत्राद्यं सन्न्यासशब्दोक्तम् । द्वितीयमुपचारेण कर्मयोगशब्दोक्तम् । तदभिप्रायेण योगसन्न्यासयोर्लक्षणं स्पष्टयति' इत्यन्य**त्रोक्त**मिति[4] ।।

'**सन्न्यासम्**' इत्यादिना कुत्रोक्तमर्जुनोऽनुवदति? इत्यत आह– **यदृच्छेति** ।। '**कर्मयोगम्**' इति वदता '**कर्मणाम्**' इत्येतद्योगशब्देन सम्बद्ध्यत इत्युक्तं भवति । तथाच 'कर्मणां सन्न्यासं त्यागम्' इति [5]व्याख्यानमसदिति सूचितम् ।। **शंससि** [6]इत्यन्वयः ।।

चतुर्थाध्यायोक्तस्यार्थस्य एतदध्यायोत्थानबीजत्वात् तृतीयाध्यायप्रपञ्चनात्मकस्याप्यस्य चतुर्थानन्तर्यं युक्तमित्यप्यनेन[7] ज्ञापितम् ।।

---

१. अत्र उत्तरत्र च 'इत्यादि' इत्येव प्रभ पाठे पठ्यते । २. वे,गुज,वे-ग्रं,श-१मा. । प्रतिपाद्यम्–प्र ।
३. बे,श-१-मा । विहितानुष्ठानम् -प्र । ४. गीतातात्पर्ये इत्यर्थः ।
५. शाङ्करभाष्ये । ६. इत्यन्वयः-भा.दी,कृ.टि ।'इत्यनेन' वे,गुज,वे-ग्रं ।
७. वे गुज,वे-ग्रं, श-१-मा । इत्यनेन -प्र.।

### भावदीपः

पूर्वमुक्तत्वादिति ।। **'कर्मण्यकर्म यः पश्येत्'** इत्यादिनोक्तत्वादित्यर्थः । यद्वा **'यज्ञार्थात् कर्मणोऽन्यत्र'** इत्यादिनोक्तत्वादित्यर्थः ।। गीतातात्पर्यविरोधं निराह- **व्यंशश्चाय-मित्यादिना** ।। **उपचारेणेति** ।। फलकामत्याग इत्यस्यैव मुख्यतः कर्मयोगशब्दार्थत्वादिति भावः ।। भाष्ये काङ्क्षितं पूरयति– **शंससीत्यन्वय इति** ।।

### ( कृष्णशब्दार्थः )

**भाष्यम् — [1]नियमनादिना सकललोककर्षणात् कृष्णः । तच्चोक्तम् –**

**'यतः कर्षसि देवेश नियम्य सकलं जगत् ।**
**अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः'**

**इति महाकौर्मे ।**

### प्रमेयदीपिका

कृष्णशब्दो वर्णविशेषमात्रवचन इति प्रतीतिनिरासायाह– **नियमनादिनेति** ।।

### ( सन्न्यासशब्दापव्याख्याननिराकरणम्)

**भाष्यम् — सन्न्यासशब्दार्थं भगवानेव वक्ष्यति । अयं प्रश्नाशयः ।**

**यदि सन्न्यासः श्रेयोऽधिकः स्यात् तर्हि सन्न्यासस्येषद्विरोधि युद्धमिति ।। १ ।।**

### प्रमेयदीपिका

'नित्यनैमित्तिककाम्यनिषिद्धरूपसर्वकर्मपरित्यागः सन्न्यासशब्दार्थः'[2] इति व्याख्यानं दूषयति– **सन्न्यासेति**।। **'ज्ञेयः स नित्यसन्न्यासी'** (५.३) इति सन्न्यासशब्दस्य भगवतैवान्यथाव्याख्यातत्वात् तद्विरुद्धं परव्याख्यानमित्यर्थः । यदि सर्वकर्मपरित्यागो नैव सन्न्यासशब्दार्थः,किन्तु द्वेषादिवर्जनमेव; तर्हि तस्य योगेन विरोधाभावात् सन्न्यासयोगयो-र्विरोधाभिप्रायेण श्रेयःप्रश्नोऽनुपपन्नः स्यादित्यत आह– **अयमिति** ।।

---

१. सुमतीन्द्रतीर्थश्रीमच्चरणैः मन्त्ररत्नकोशे कृष्णमन्त्रव्याख्याने इमानि वचनान्युदाहृतानि ।
२. शाङ्करभाष्यानुवादः ।

अत्र **'श्रेयः'** इति यथास्थितं गीतापदमनूद्य सन्न्यासपदानुगुण्येन **अधिकः** इति व्याख्यातम्। नन्वेतत् **'घोरे'** (३.१) इति चोदितम्; **'श्रेयान्'**(३.३५) इति परिहृतं च । सत्यम् । अत एवात्र **ईषत्** इत्युक्तम् इति[१] । अतस्तत् त्यक्त्वा सन्न्यास एव कर्तव्ये किं वैगुण्यमङ्गीकृत्यापि युद्धं विधीयते'[२] इत्याशयशेषः ।। १ ।।

**भावदीपः**

**अन्यथाव्याख्यातत्वादिति** ।। 'अनुपदमेवाग्रे' इति योज्यम् ।। **नन्वेतदिति** ।। द्वेषादिवर्जनरूपसन्न्यासो युद्धादिकर्मतोऽधिक इति द्वेषादियुतयुद्धं न कार्यमित्येतत् **'घोरे कर्मणि किम् माम्'** इति तृतीये चोदितं, **'श्रेयान् स्वधर्मो विगुणः'** इत्यादिना परिहृतं चेत्यर्थः ।।

**( कर्मयोगस्य वैशिष्ट्यम् )**

**श्रीभगवानुवाच –**

**सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसन्न्यासात् कर्मयोगो विशिष्यते ।। २ ।।**

**भाष्यम् — नायं सन्न्यासो यत्याश्रमः ।**

'द्वन्द्वत्यागात् तु सन्न्यासान्मत्पूजैव गरीयसी'

इति वचनात् ।

'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्'(म.ना.१६.१२)

इतिच ।

**प्रमेयदीपिका**

**'सन्न्यासम्** '(५.१)इति प्रश्नवाक्ये **'सन्न्यासः'** (५.२) इति परिहारवाक्ये च सन्न्यासयोगशब्दौ यतिगृहस्थाश्रमविषयावेव । तयोः सर्वकर्मत्यागतदनुष्ठानरूपत्वात् । **'ज्ञेयः'** इति वचनं तु[३] न सन्न्यासशब्दव्याख्यानपरम् । किन्तु यो द्वेषादिवर्जितो गृही सोऽपि सन्न्यासी ज्ञातव्य

१. गुज,वे-ग्रं,बे । इति - प्र -नास्ति।

२. श्रीनि- 'युद्धं विधीयते' श-१मा,गुज,। विधीयते युद्धम् इति -वे ,वे-ग्रं ।

३. उत्तरत्र भावदीपरीत्या तुः वर्तते । श्रीनि-टिप्पण्यां नास्ति ।

इति स्तुतिपरमेव'[१] इत्यत आह– **नायमिति** ।। **अयं** परिहारवाक्यस्थः । प्रश्नवाक्यस्थस्य तात्पर्यनिर्णये तथाऽभ्युपगतत्वात्[२]। योगश्च न गृहस्थाश्रम इत्यपि **द्रष्टव्यम्**। कुतो न? इति चेत् - अत्र **'तयोस्तु'** इति सन्न्यासात् कर्मयोगस्य विशिष्टत्ववचनात् । तस्य चास्मत्पक्ष एव सम्भवात् । अन्यत्रासम्भवादिति भावः । कुतो भवत्पक्षे सम्भवः? इत्यत आह– **द्वन्द्वेति** । **मत्पूजा** मदर्पणबुद्ध्या कर्मानुष्ठानम् ।।

आश्रमार्थत्वे कुतोऽसम्भवः? इत्यत आह– **तानीति** ।।[३] **तानि** आधानादीनि । **अत्यरेचयत्** अत्यरिच्यत[४]। 'इति च'[५] वचनात्' इति वर्तते ।।

**भावदीपः**

तात्पर्येति ।। **'योगसन्न्यस्तकर्माणम्'**इत्यादौ **'न्यासशब्दः'** इत्यादिना गीतातात्पर्यनिर्णये यतिपरत्वाभ्युपगमादित्यर्थः ।। **अस्मत्पक्ष एवेति** ।। कामादिवर्जनं सन्न्यासशब्दार्थः; भगवदर्पणबुद्ध्या कर्मानुष्ठानं कर्मयोग इति पक्ष एव । न तु गृहस्थयतिपरः सन्न्यासादिशब्दः इति पक्ष इत्यर्थः ।। **इत्यनुवर्तत इति** ।। एवञ्च गृहस्थाश्रमतो न्यासशब्दितयतेरुत्कर्षस्य च वचनसिद्धत्वाद् गीतायां **'तयोः'** इत्यर्धे सन्न्यासात् कर्मयोगपदोक्तगार्हस्थ्यस्योत्तमत्वोक्तिः तद्विरुद्धेति भावः ।।

**( सन्न्यासशब्दार्थे प्रमाणोपन्यासः )**

**भाष्यम् —**

**'सन्न्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः ।**
**न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ।**
**तद्भक्तोऽपि हि यद् गच्छेद् तद्गृहस्थो न धार्मिकः ।**

---

१. इदमपव्याख्यानमिति श्रीनि -टि ।

२. कृ-टि । अभ्युपगमात् - गुज,वे-ग्रं,वे ।

३. अत्रेयं श्रुतिः महानारायणे 'अपराणि तपांसि' इति पठ्यते । इयं तु शाखान्तरस्था इति वि.त.नि. टीकाव्याख्यानतः अवगम्यते । तथाहि -' लवणमेतदुदके' इत्यत्र वि.त.नि.टीका ' स ह तथा चकार इति कचित् पाठः । स सदृशशाखान्तरगतो ज्ञातव्यः । एवमन्यत्रापि ' इति । अत्र व्यासतत्वज्ञतीर्थाः- अन्यत्रापीति । 'तानि वा एतान्यवराणि तपांसि 'इति गीताभाष्या(तात्पर्या)दावित्यर्थः' इति ।

४. श्रीनि । अतिरिच्यते इति कृ-टि सम्मतः ।

५. श-१मा । भाष्ये इति च इत्येव वर्तते । इति वचनात् प्र-पाठः,वे , ।

**मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते[१] ।**
**यदाऽधिकारो भवति ब्रह्मचार्यपि प्रव्रजेत् ।।'**

**इति नारदीये ।**

**'ब्रह्मचर्यादेव प्रव्रजेत् यदहरेव विरजेत्'[२]** (ना.प.उ.३. ७५.)

**इति च ।**

**'सन्न्यासे तु तुरीये वै प्रीतिर्मम गरीयसी ।[३]**
**येषामत्राधिकारो न तेषां कर्मेति निश्चयः ।।'**

**इत्यादेश्च ब्राह्मे ।**

**अतो नात्राश्रमः सन्न्यास उक्तः ।। २ ।।**

## प्रमेयदीपिका

'न्यस्यतेऽस्मिन् सर्वमिति ब्रह्मैव न्यासः' इति **कश्चित्** । तदसत् । तपोऽपेक्षयोत्तमत्वाभिधानस्यासङ्गतत्वात् । उपायोपेयभावेन सङ्गतिरिति चेत् - तर्हि तत्सिद्धौ लोकत एवोत्तमत्वसिद्धेरभिधानवैय्यर्थ्यात् ।।

'गृहस्थाश्रमाद्यत्याश्रमस्योत्तमत्वमयुक्तम् । गृहस्थाश्रमो हि सर्वधर्मोपपन्नः । तत्समर्थे मध्यमे वयस्यनुष्ठेयो महाफलश्च । यत्याश्रमस्तु निष्क्रियश्चरमे वयसि गृहस्थ[४]कर्मानधिकृतैरन्धपङ्ग्वादिभिरनुष्ठेयोऽल्पफलश्च' इति **केचित्** । तन्निरासार्थमाह– **सन्न्यासस्त्विति** ।। काम्यकर्मरहितत्वात् **निष्क्रियाख्योऽ**पि **सधर्मकः** । न केवलं सधर्मकः, किन्तु **न तस्मात्** यत्याश्रमानुष्ठेयाद्यतिभक्त्याऽपि **यत्** फलं प्राप्नुयान्न **तत्** सर्वैर्गृहस्थधर्मैरित्यर्थः । **ब्रह्मचर्यादेव** ब्रह्मचर्यं विसृज्यैव । **विरजेत्** विरक्तो भवेत् ।'**तदहरेव प्रव्रजेत्**' इति श्रुतिशेषः । **कर्म** इत्याश्रमान्तरम् ।। यदुक्तं '**नायम्**' (४-४०) इत्यादि तदुपसंहरति– **अत** इति ।। अत्र परिहारवाक्ये ।। २ ।।

---

१. परमात्मनि यो रक्तो विरक्तो अपरमात्मनि ।
सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति ।।(नारदपरिव्राजकोपनिषत् -तृतीयोपदेशः १८.)

२. जाबालोपनिषदि च –४. । अत्र प्रभ-पाठे भिन्नवाक्यत्वेन निर्देशः ।

३. 'महीयसी'-पां- गुज,वे-ग्रं ।

४. 'धर्मानधिकृतैः '- गुज,वे-ग्रं, वे ।

**भावदीपः**

'ल्यब्लोपे पञ्चमी' इति भावेनाऽह– ब्रह्मचर्यं विसृज्यैवेति ।। २ ।।

**ज्ञेयस्स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ।। ३ ।।**

**भाष्यम् —** सन्न्यासशब्दार्थमाह– ज्ञेय इति ।। सन्न्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं तच्छब्दार्थं स्मारयति– ज्ञेय इति ।। ३ ।।

**प्रमेयदीपिका**

**( सन्न्यासशब्दो न यत्याश्रमपरः)**

**'ज्ञेयः'** इत्यस्यापव्याख्यानं[१] [२]दूषयंस्तत्तात्पर्यमाह– **सन्न्यासेति** ।। अर्थान्तरस्य अप्रतीतेरिति भावः । ननु **'यदृच्छालाभसन्तुष्टः'** (४.२२) इत्यादिनोक्तं कामादिपरित्यागं **सन्न्यासं कर्मणाम्**'(५.१) इत्यनूद्यार्जुनस्यायं[३] प्रश्न इत्युक्तम् । ततश्च जानात्येवासौ सन्न्यास-शब्दार्थमिति न तं प्रति स वक्तव्यः । तथा च [४]पूर्वपक्ष्युत्प्रेक्षित एवास्यार्थ इत्यत आह– **सन्न्यासस्येति** ।।

**'सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ'**(५.२)इति यत् **सन्न्यासस्य निःश्रेयस-करत्वमुक्तं** तदुपपादयितुं ज्ञातमपि सन्न्यासशब्दार्थं **स्मारयत्यनेन** । द्वेषादिवर्जनं हि सन्न्यासः। तस्य च [५]निःश्रेयसकरत्वं श्रुत्यादिप्रसिद्धमेवेति । अतः सन्न्यासशब्दार्थकथन एव तात्पर्याभावान्नानुपपत्तिरित्यर्थः । ज्ञापकं चास्यार्थस्यास्तीत्याह– **ज्ञेय इतीति** ।। **ज्ञेयः** स्मर्तव्य इत्यनेनोक्त[६]मित्यर्थः । योगस्य तु निःश्रेयसकरत्वमुत्तरवाक्य एव सेत्स्यति ।। ३ ।।

**भावदीपः**

**अपव्याख्यानमिति** ।। यत्याश्रमार्थत्वरूपमित्यर्थः ।। **पूर्वपक्ष्युत्प्रेक्षित एवेति** ।। 'ज्ञेय इति वचनं तु न सन्न्यासशब्दव्याख्यानपरम्' इत्यादिनोक्त इत्यर्थः ।। श्लोकतात्पर्यं व्यनक्ति –

---

१. शाङ्करभाष्ये ।
२. गुज,वे-ग्रं,बे -दूषयन् तात्पर्यमाह -।
३. बे 'अयम्' इति नास्ति ।
४. शाङ्करभाष्ये ।
५. बे, श.मा-१, गुज,वे-ग्रं,। -तस्य इति प्र ।
६. वे -ह्यनेनोक्तम्- प्र ।

**द्वेषेति** ।। गीतास्थ**हि**शब्दार्थः – **श्रुत्यादिप्रसिद्धमेवेति** ।। **उत्तरवाक्य एवेति** ।। '**साङ्ख्य-योगौ**' इत्यत्रेत्यर्थः ।। ३ ।।

**(ज्ञानोत्पत्तौ कर्मयोगः अवश्यकः)**

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ।। ४ ।।**

**भाष्यम् — सन्न्यासो हि ज्ञानान्तरङ्गत्वेनोक्तः -**

**'न तस्य तत्वग्रहणाय'**[1] **(भाग. ५.११.३) इत्यादौ ।**

**अतः कथं सोऽवमः? इत्यत आह– साङ्ख्ययोगाविति ।। उभयोरप्यन्तरङ्गत्वेन न विरोधः**[2] **।**

**प्रमेयदीपिका**

'सन्न्यासं गृहीत्वा योगं त्यक्ष्यामि' इत्याशयेन द्वयोः श्रेयसि पृष्टे 'द्वावपि निःश्रेयसकरौ। तत्रापि सन्न्यासाद्योगो विशिष्टः । अतो न युद्धं त्वया त्याज्यम्' इति परिहारो जातः । किमर्थं इदानीं[3] **साङ्ख्ययोगौ** इत्युच्यते? इत्यत आह– **सन्न्यासो हीति** ।। हिशब्दो हेतौ । **ज्ञानान्तरङ्गत्वेन** ज्ञानोत्पत्तावत्यावश्यकत्वेन । **न तस्य** इत्यत्र विषयवैराग्याभावे ज्ञानानुत्पत्तिवचनेन तत एव तदुत्पत्तिरिति हि लभ्यते। एवं कर्मयोगस्तु ज्ञानविरोधित्वेनोक्तः **अग्निमुग्धः** इत्यादावित्यपि ग्राह्यम् । **अवमः** योगात् । अनेन योगस्य निःश्रेयसकरत्व-मप्याक्षिप्तम् ।।

ननु साङ्ख्यं ज्ञानम् । योगः कर्म । तयोः कथमत्र पृथक्त्वाभाव उच्यते? कथं वाऽनेनोक्ताक्षेपपरिहारः ? इत्यत आह– **उभयोरपीति** ।। न केवलं सन्न्यासस्य । किन्तु योगस्यापीत्युभयोरपि **ज्ञानान्तरङ्गत्वात् न** उक्त**विरोध** इत्यर्थः । अनेन '**साङ्ख्ययोगौ पृथक्** साध्यसाधनभावहीनाविति **न** पण्डिता **मन्यन्ते**' इत्येवं व्याख्यातं भवति ।।

---

१. अयं श्लोकः द्वितीयाध्याये ४४ श्लोके विवृतः ।
२. अयं टीकाटिप्पण्यनुगुणः । 'त्वेनाविरोधः' इति प्रभ-पाठे पाठान्तरं स्यात् ।
३. इदानीं -बे,वे-ग्रं, ।

### भावदीपः

**'सन्न्यासः कर्मयोगश्च'** इति श्लोकार्थमनुवादव्याजेन व्यनक्ति– **सन्न्यासमिति** ।। वैराग्यं कामादिवर्जनमित्यर्थः । **योगं** भगवत्पूजात्वेन युद्धादिकर्मानुष्ठानम् । वैराग्यस्य ज्ञानान्तरङ्गत्वोक्तिलाभप्रकारं व्यनक्ति ।। **न तस्येत्यत्रेति** ।।

**'न तस्य तत्वग्रहणाय साक्षात्'**

इति [1]पञ्चमस्कन्धस्थभागवतश्लोकः **पूर्वत्र** द्वितीयाध्याये व्याख्यातः ।। अतःशब्दात् पूर्वं भाष्ये शेषमाह – **कर्मयोगस्त्वित्यादिनोक्तविरोध इति** ।। एतेन भाष्ये **न विरोधः** इति पदच्छेदः सूचितः ।।

**( काम्यकर्मण एव ज्ञानविरोधित्वम् )**

**भाष्यम् —**

**'अग्निमुग्धो ह वै धूमतान्तः स्वं लोकं न प्रत्यभिजानाति'**[2] (मुं.३.२.१२)

**'मा वः पदव्यः पितरस्मादाश्रिता**[3]

**या यज्ञशालासनधूमवर्त्मनाम्'**[4] (भाग.४.४.२१)

**इत्यादि तु**[5] **काम्यकर्मविषयमिति भावः । ये त्वन्यथा वदन्ति ते बालाः ।। ४ ।।**

### प्रमेयदीपिका

ननु श्रुतिपुराणाभ्यामेव[6] कर्मणो ज्ञानविरोधित्वमुच्यत इत्युक्तम् । अतः कथमेवमभिधीयते?

---

१. पञ्चमस्कन्ध इति सो, मं मातृकयोर्नास्ति ।

२. 'अग्निमुग्धाः धूमतान्ताः स्वं लोकं (स्वलोकं-पां )न विदन्ति ते ' भाग.११-२१-२७।

३. 'आस्थिताः'-इति शेषगिरिआचार्यपुस्तके । विजयध्वजीयानुगुणपाठः ।

४. 'हे पितः अस्मदास्थिताः अस्माभिराश्रिताः, अवधूतसेविताः सनकादियोगीन्द्रैरभ्यस्ताः, अव्यक्तलिङ्गाः अन्यैरज्ञातलक्षणा अर्चिरादिमार्गलक्षणा याः पदव्यः ता वो युष्माकं मा नैव भवन्ति । यज्ञशालायामासनेन दीक्षालक्षणेन धूमवर्त्म धूमादिमार्गो येषां ते तथेक्ताः, तेषां युष्माकं कदन्नतृप्तैः पशुमांसलक्षणेनान्नेन अलंवुद्धिंगतरसुहृद्भिः पशुप्राणहारिभिः पुरुषैरीडिता या धूमादिलक्षणपदव्यस्ता अस्माकं नैवेति ...।'इति विजयध्वजीये ।।

५. 'इत्यादौ '- प्रच । इत्यादि- गुज,वे-ग्रं,वे । तु-नरहरितीर्थानुगुणः ।

६. 'एव'- गुज,वे-ग्रं,बे.नास्ति।

इत्यत आह– **अग्नीति** ।। अग्न्युपलक्षिते कर्मणि **मुग्धः** श्रेयस्कर[1]मिति भ्रान्तः । **धूमतान्तः** होमधूमेन तान्तः [2]ग्लानः । **धूमता** धूमादित्वमेव **अन्तः** पर्यवसानमस्येति[3] वा । **स्वं लोकं** स्वीयमाश्रयम् । परमात्मानम् ।। यज्ञशालासनेन धूमोपलक्षितमार्गवतां **वः पदव्यः अस्मदाश्रिताः** नैवेत्यर्थः ।।

नन्वकाम्यमपि नित्यं नैमित्तिकं च कर्म प्रत्यवायपरिहारार्थमेव । न ज्ञानान्तरङ्गमिति विद्वांस एव मन्यन्त इत्यत आह– **ये त्विति** ।। बालाः अविवेकिनः ।। ४ ।।

### भावदीपः

**पृथक्** इत्यनुवादः, साध्येत्यादि व्याख्या ।। **इत्युक्तमिति** ।। पूर्वभाष्ये **'अग्निमुग्धः** इत्यादौ' इत्यपि ग्राह्यमित्युक्तम् ।। 'इत्युक्तत्वात्' इत्युक्तम् [4]।। ४ ।।

**( योगोऽपि ज्ञानसाधनम् )**

**यत् साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ।। ५ ।।**

**भाष्यम् — 'एकमपि'** (५.४) इत्यस्याभिप्रायमाह– **यत् साङ्ख्यैरिति** ।। योगिभिः **अपि** ज्ञानद्वारा ज्ञानफलं **प्राप्यते** इत्यर्थः ।। ५ ।।

### प्रमेयदीपिका

योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत् । तदेव कथम्? इत्यत उक्तम्– **एकमपीति**।। तदनुपपन्नम् । उभयोर्मध्ये सम्यगेकमप्यास्थितः फलं विन्दत इति[5] योजनायां द्वयोः साफल्यमात्रमुच्यते । एकमपि सम्यगास्थित उभयोः फलं विन्दत इति पक्षे तु द्वयं किञ्चित् फलं प्रति स्वतन्त्रसाधनमित्युच्यते[6]। पक्षद्वयेऽपि न प्रकृतोपयोग इत्यत आह–**एकमपीति** ।।

१. वे-ग्रं,बे । 'मेतदिति'-प्र ।
२. श्रीनि.। वे. तान्त इत्यधिकपाठतयोक्तं प्र-पाठे ।
३. वे.-गुज,वे-ग्रं,प्र-यस्येति ।
४. इदं वाक्यं सर्वमातृकास्वपि एवमेव पठ्यते । अन्वयो न स्पष्टः ।
५. वे, गुज ,वे-ग्रं,श-१मा । विन्दतीति हि-प्र ।
६. स्वतन्त्रसाधनम्' इति श्रीनि-पाठः । ' स्वतन्त्रं साधनमुच्यते- गुज,वे-ग्रं,बे इतिशब्दो नाति । इतिस्तु स्वरसः ।

एवमनुपयोगेऽपि भगवानेव स्ववाक्याभिप्रायमाह । स ग्राह्य इत्यर्थः ।। अनेनापि योगस्य ज्ञानसाधनत्वे किं प्रमाणमुक्तम्? इत्यतो व्याचष्टे– **योगिभिरपीति** ।।

**'तरति शोकमात्मवित्'** (छां.उ.) इत्यादिना यत् **ज्ञानफलं** मोक्षाख्यं प्रमितं तत्तावत् **योगिभिरपि प्राप्यते** इत्युच्यते **'अपाम सोमम्'**(ऋ.६.४.११) इत्यादिना । तत्र विचार्यम्– किं द्वयमपि स्वतन्त्रं मुक्तिसाधनम्, उत समुच्चितम्? अथचैकं[1] साक्षात् साधनम्, अपरं तत्साधनत्वेनेति । न प्रथमद्वितीयौ । **'नान्यः पन्थाः'**(श्वे.उ.६.१९) इत्यादि विरोधात् । तृतीयेऽपि चिन्त्यं किं कस्य साधनमिति? तत्र न तावज्ज्ञानं कर्मसाधनत्वेन मोक्षहेतुः । **'न किञ्चिदन्तराधाय'**[2] इत्यादिविरोधात् । अतः परिशेषाद् योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इति सिद्ध्यति । तथाच योगस्य ज्ञानसाधनत्वं सिद्धमित्यर्थः । अत्र **'योगिभिः'** इति वदता योगशब्दो धर्मिणामुपलक्षकः, अर्श आद्यजन्तो वेति सूचितम् ।। ५ ।।

### भावदीपः

**न प्रकृतोपयोग इति** ।। योगस्य ज्ञानहेतुत्वासिद्धेरिति भावः । **योगिभिरिति** ।। कर्मयोगवद्भिरित्यर्थः ।। **योगशब्द इति** ।। गीतास्थः 'योगैः' इतिशब्द इत्यर्थः ।। ५ ।।

( सन्न्यासाद् योगो वरः )

**सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ।। ६ ।।**

**भाष्यम्** — इतश्च सन्न्यासाद्योगो वर इत्याह– **सन्न्यासस्त्विति** ।। योगाभावे मोक्षादिफलं न भवति । अतः कामजयादिदुःखमेव तस्य । मोक्षाद्येव हि फलम् । अन्यत् फलम् अल्पत्वादफलमेवेत्याशयः ।।

### प्रमेयदीपिका

**'सन्न्यासस्तु'** इत्यस्य सङ्गतिमाह– **इतश्चेति** ।। ननु प्राक् सन्न्यासाद्योगस्य वरत्वे न कोऽपि हेतुरुक्तः । तत्कथमेवमुच्यते? मैवम् । सन्न्यासस्य योगावरत्वे बाधकं परिहृतम् ।

---

१. गुज,वे-ग्रं,वे अथवैकम् ।

२. भाष्योदाहृतप्रमाणवचनम् ।

साधकमिदानीमुच्यते । बाधकाभावसहितमेव साधकं वस्तुनो व्यवस्थापकम् । तस्माद् **इतश्च** इति युक्तम् । पूर्वं सन्न्यासस्य निःश्रेयसकरत्वमुक्तम् । इदानीं कथं दुःखहेतुत्वमुच्यते ? किंवा अनेन साधकमुक्तम्? इत्यतो व्याचष्टे– **योगेति** ।। विष्ण्वर्पणबुद्ध्या कर्मकरणाभावे। [1]'सन्न्यासमात्रेण' इति शेषः । आदिपदेन ज्ञानं गृह्यते । **तस्य** केवलसन्न्यासिनः । योगाभावे सन्न्यासो निष्फल एवेत्येतन्न युज्यते । मोक्षाद्यभावे अपि[2] तात्कालिकापमानादि-दुःखाभावादेर्भावादित्यत आह– **मोक्षादीति** ।।

**भावदीपः**

**बाधकमिति** ।। ज्ञानान्तरङ्गत्वरूपमित्यर्थः ।।

**भाष्यम् — तच्चोक्तम् –**

**'विना मोक्षफलं यत् तु न तत् फलमुदीर्यते'**

**इति पाद्मे ।**

**यत् तु महाफलयोग्यं तस्याल्पं फलमेव न भवति[3] । यथा पद्मरागस्य तण्डुलमुष्टिः। महाफलश्च योगयुक्तश्चेत् सन्न्यास इत्याह– योगयुक्त इति ।।**

**प्रमेयदीपिका**

तत्र पुराणसम्मतिमाह– **तच्चेति** ।। ननु मोक्षफलाभावेऽपि धान्यादिनैव कृष्यादिकं सफलमित्युच्यते । तत्कथमेवमभिहितम्? इत्यत उक्तं विवृणोति– **यत्त्विति** ।। महाफलं साधयितुं योग्यमित्यर्थः । मोक्षादिग्रहणं प्रकृतापेक्षयैव कृतमिति भावः ।।

ननु सन्न्यासाद्योगस्य वरत्वमनेन साधितम् । तत्किमुत्तरार्धेन? इत्यत आह– **महाफल-श्चेति** ।। महत् फलं यस्मात् स तथोक्तः । योगाङ्गत्वेन सन्न्यासस्य ततोऽवरत्वं सिषाधयिषितम्। तच्चान्वयव्यतिरेकाभ्यां सिद्ध्यति । तत्र पूर्वार्धेन व्यतिरेकमुक्त्वाऽनेनान्वयमाचष्ट इत्यर्थः[4]।।

ननु योगोऽप्येवमेवेति चेत् - सत्यम् । तथाऽपि चरमभावित्वेन विशेषः ।।

---

१. बे-गुज-भावसन्न्यास इति एकमेव पदम् ।

२. वे गुज,वे-ग्रं, । प्रच नास्ति ।

३. 'उच्यते निष्फलत्वेन यदत्यल्पफलं भवेत्' भा.ता.११-२८-१३ उदा.तत्वविवेकवचनम् ।

४. बे,गुज.ग्र-१मा । इति भावः -प्र ।

**भावदीपः**

**एवमेवेति** ।। यथा योगं विना कृतः सन्न्यासो न मोक्षहेतुस्तथा योगोऽपि तेन विना कृतो न महाफलहेतुरित्यर्थः ।। **चरमेति** ।। सन्न्यासापेक्षया चरमभावित्वाद् ज्ञानोत्पत्तौ अव्यवहितसाधनत्वात् ततोऽप्यस्यातिशय इति भावः ।।

**( मुनिशब्दार्थः )**

**भाष्यम् — मुनिः सन्न्यासी । तच्चोक्तम् –**

**'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इति ।। ६ ।।**

**प्रमेयदीपिका**

नन्वत्र सन्न्यासवाचकं न श्रूयते । तत्कथमेवमुच्यते? इत्यत आह– **मुनिरिति** ।। मुनि-शब्दस्य[1]कामादिवर्जनलक्षणसन्न्यासवचनत्वं कुतः ? इत्यत आह– **तच्चेति** ।। ६ ।।

**( योगयुक्तो सन्न्यासः महाफलहेतुः )**

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ।। ७ ।।**

**भाष्यम् — एतदेव प्रपञ्चयति– योगयुक्त इति ।। सर्वभूतात्मभूतः परमेश्वरः ।**

**'यच्चाप्नोति'[2] (म.भा.) इत्यादेः ।**

**स आत्मभूतः स्वसमीपं प्रत्यादानादिकर्ता यस्य सः सर्वभूतात्मभूतात्मा ।। ७ ।।**

**प्रमेयदीपिका**

प्रकृतप्रमेयस्य समाप्तत्वादुत्तरस्य वैय्यर्थ्यमाशङ्क्याऽह– **एतदेवेति** ।। योगयुक्तस्य सन्न्यासस्य महाफलत्वमेव । प्रपञ्चनं च **'यो न द्वेष्टि'** (५.३) इत्यत्रोक्तद्वेषादिवर्जन-कारणोपन्यासेन, **'ब्रह्माधिगच्छति'** (५.६)[3]इत्यत्रोक्तब्रह्मज्ञानावान्तरफलोपन्यासेन चेति ज्ञातव्यम् । **'सर्वभूतात्मभूतात्मा'** इत्यनेन 'जीवस्य परमात्मस्वरूपत्वमुच्यते' इत्यन्यथा-

१. श्रीनि । 'कामवर्जन' बे-गुज,वे-ग्रं,।
२. बृ.उ.भा.३-५-४ उदाहृतम् ।
३. श्रीनि,गुज,वे-ग्रं,बे,। इत्यत्र प्रच ।

प्रतीति[1]निरासायाह– **सर्वेति** ।। सर्वभूतानामात्मभूतः कथम्? इत्यत उक्तम् – **यच्चेति** ।। एतन्निर्वचनमाश्रित्य न स्वरूपत्वमित्यर्थः ।।

**स आत्मभूतः** इति '**सर्वभूतात्मभूतः**' इत्युक्तस्यानुवादः । '**स्वसमीपम्**' इत्यादि द्वितीयआत्मशब्दार्थः[2]। एवं जानन्नत्र विवक्षितः ।। ७ ।।

**भावदीपः**

कारणोपन्यासेनेति ।। विशुद्धात्मत्वजितेन्द्रियत्वादिरूपकारणेत्यर्थः ।। ७ ।।

**नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्छृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ।। ८ ।।**
**प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ।। ९ ।।**

**भाष्यम् —** सन्न्यासं स्पष्टयति पुनः श्लोकद्वयेन ।। ८ ।। ९ ।।

**प्रमेयदीपिका**

'**नैव किञ्चित्**' इत्यादेः प्रतिपाद्यमाह– **सन्न्यासमिति** ।। '**ज्ञेयः**'(५.३) इत्यादिना '**विशुद्धात्मा**' (५.७) इत्यादिना च स्पष्टीकृतत्वात् **पुनः** इति ।। स्पष्टनं च प्रागनुक्तसङ्कल्प-त्यागस्याभिधानात् ।। ८-९ ।।

**भावदीपः**

स्पष्टीकृतत्वादिति ।। '**ज्ञेयः स हि सन्न्यासी**' (५.३) इत्यत्र '**द्वेषादिवर्जनं हि सन्न्यास**[3] शब्दार्थः**' इति 'विशुद्धात्मा' इत्यादि तत्कारणोपन्यासेन च स्पष्टीकृतत्वादित्यर्थः[4] ।। ८-९ ।।

**( सन्न्यासयोगयुक्तस्य कर्मालेपः )**

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।। १० ।।**

१. शाङ्करभाष्ये ।
२. 'शब्दस्यार्थः'- बे, वे-ग्रं ।
३. 'द्वेषादिवर्जनं हि सन्न्यासः' इति टीकावचनम् ।
४. 'दिति भावः'- सो-पां ।

**भाष्यम् — सन्न्यासयोगयुक्त एव च कर्मणा न लिप्यत इत्याह– ब्रह्मणी**ति ।। साधननियमस्योपचारत्वनिवृत्त्यर्थं पुनः पुनः फलकथनम् ।। १० ।।

### प्रमेयदीपिका

ननु **'योगयुक्तः'** (७.५) इत्यनेन यत्सन्न्यासयोगयुक्तस्य कर्मालेपलक्षणफलमुक्तं तदेव तस्य [१](मुक्तस्य) **'ब्रह्मण्याधाय'** इति किमर्थं पुनरुच्यते? इत्यत आह– **सन्न्यासे**ति ।। प्रागुक्तस्यैव नियमोऽत्र क्रियते । सिद्धे सत्यारम्भस्य नियमार्थत्वादिति भावः ।। योगविवरणं च किञ्चिदधिकमिति चार्थः ।। ननु **'सन्न्यासस्तु** '(५.६) इत्यनेनैव सन्न्यासयोगौ मिलितावेव फलं साधयत इति नियमोऽपि लब्ध एव । तत् किमर्थमिदं सन्न्यासयोगयुक्तस्य **'कुर्वन्नपि न लिप्यते'** (५.७), **'लिप्यते न स पापेन '** इति पुनः पुनः फलकथनम्? इत्यत आह– **साधने**ति ।। **साधननियमस्ये**ति ।। तदुक्तेरित्यर्थः । सन्न्यासयोगौ मिलितावेव फलसाधनमिति नियमोक्तेरुपचारत्वमपि सम्भवति । लोकवत् तन्निवृत्त्यर्थमित्यर्थः ।। १० ।।

### भावदीपः

**तदुक्तेरि**ति ।। साधननियमोक्तेरित्यर्थः ।। १० ।।

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ।। ११ ।।**

**भाष्यम् — एवञ्चाचार इत्याह– कायेने**ति ।। ११ ।।

### प्रमेयदीपिका

**'कायेन'** इत्यनेनापि सन्न्यासयोगयुक्तस्याऽऽत्मशुद्धिलक्षणः पापालेप उच्यत इत्यत आह– **एवञ्चे**ति ।। उभयसमुच्चयरूप एवेत्यर्थः । अन्यत्र तात्पर्यान्न पुनरुक्तिरिति भावः । आचारकथनमपि नियमसमर्थनार्थमिति ज्ञातव्यम् ।। ११ ।।

### भावदीपः

**उभयसमुच्चयरूप इ**ति ।। सप्तम्यन्तम्[२]।। ११ ।।

१. बे,गुज,श-मा१ मातृकायां च मुक्तस्य इति नास्ति । मुक्तस्य इति अधिकं प्र ।

२. श्रीनि-टिरीत्या प्रथमान्तोऽयम् इति भाति । महान्तः प्रष्टव्याः ।

( योगसन्न्यासवतोः फलनिरूपणम् )

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबद्ध्यते ।। १२ ।।**

**भाष्यम् —** पुनर्युक्त्यादिनियमनार्थं युक्तायुक्तफलमाह– **युक्त** इति ।। **युक्तः** योगयुक्तः ।। १२ ।।

**प्रमेयदीपिका**

तथाऽपि **'युक्तः'** इत्येतत् पुनरुक्तमित्यत आह– **पुनरिति** ।। **युक्तिः** योगः । आदिपदेन सन्न्यासः । **युक्तायुक्तः** इत्युपलक्षणम् । 'सन्न्यास्यसन्न्यासी' इत्यपि ग्राह्यम् । प्राक् सन्न्यासयोगौ मिलितावेव फलं[१] साधयतः, नान्यतरत्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तम् । इदानीं तु तावेव मोक्षसाधनम्, न तु तदुभयपरित्यागेनान्यदिति नियमज्ञापनाय योगसन्न्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं **फलमाहेत्यर्थः** । युक्तशब्दस्य सहिताद्यर्थनिवारणाय[२] अर्थमाह– **युक्त** इति ।। १२ ।।

**सर्वकर्माणि मनसा सन्न्यस्याऽऽस्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ।। १३ ।।**

**भाष्यम् —** पुनः सन्न्यासशब्दार्थं स्पष्टयति – **सर्वकर्माणीति** ।। **मनसा** इति विशेषणादभिमानत्यागः ।। १३ ।।

**प्रमेयदीपिका**

**'सर्वकर्माणि'** इत्यस्य 'स्वरूपेण कर्मत्यागोऽर्थः'[३] इति प्रतीतिनिवारणाय प्रतिपाद्यमाह– **पुनरिति** ।। प्राक् (५.८) कर्तृत्वाभिमानत्याग उक्तः । इदानीं तु कारयितृत्वाभिमानत्यागोऽपीति[४] स्पष्टनम् । 'स्वरूपेण कर्मत्यागो उच्यते'[५] इत्येतन्निराचष्टे– **मनसेति** ।। अन्यथा तद्व्यर्थं[६] स्यादिति भावः ।। १३ ।।

---

१. 'मोक्षम्' इति ख। २. 'सहिताद्यर्थनिवारणार्थम्' इति ख । ३. शाङ्करभाष्ये ।
४. गुज,वे-ग्रं,बे.। ५. शाङ्करभाष्यानुवादः । ६.'तद्वैयर्थ्यम्' इति भा.र.को ।

( जीवस्य स्वातन्त्र्येण कर्तृत्वनिषेधः )

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

**भाष्यम्** — नच करोति वस्तुत इत्याह– **न कर्तृत्वमिति** ॥ **प्रभुर्हि जीवो जडमपेक्ष्य** ॥ १४ ॥

**प्रमेयदीपिका**

ननु **'न कर्तृत्वम्'** इत्येतत् प्रागुक्तान्न विशिष्यत इत्यत आह– **न चेति** ॥ दर्शनादिकं कुर्वन्नेव 'नैव किञ्चित् करोमीति मन्येत' इत्युक्तम् । तर्हि 'मिथ्याज्ञानी प्रसज्येत' इत्याशङ्कानिरासाय परमेश्वरप्रेरितः कुर्वन् कारयन् अपि[1] वस्तुतः स्वातन्त्र्येण न करोति न कारयति च **इति** अनेन **आहेत्यर्थः** । अस्य जीवविषयत्वे **प्रभुः** इत्येतन्न[2] सम्भवति इत्यत आह– **प्रभुर्हीति** ॥

अनेन **'विभुः'** (५.१५) इत्येतदुपपादितप्रायम्[3] ॥ १४-१५ ॥

**भावदीपः**

**प्रागुक्तादिति** ॥ **'नैव किञ्चित्करोमि'** इत्यादिना प्रागुक्तादित्यर्थः ॥ १४ ॥

**नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

( परोक्षज्ञानेन अज्ञाननाशविचारः )

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

---

१. गुज,वे-ग्रं, बे नास्ति । भा.र.को सम्मतो अपिः ।

२. इत्येतदसम्भवी- गुज,वे-ग्रं,बे ।

३. कृ-टि , गुज,वे-ग्रं,वे । इत्युपपादितप्रायम् (पां)श्रीनि. टि । इत्यप्युपपादित इति भा.र.को.पाठः ।

**भाष्यम्** — ज्ञानमेव अज्ञाननाशकमित्याह– **ज्ञानेनेति** ।। **प्रथमज्ञानं परोक्षम्**[१]।। १६ ।।

**प्रमेयदीपिका**

ननु ज्ञानस्याज्ञाननाशकत्वमर्थप्रकाशकत्वं च प्रसिद्धमेव । तत्किमर्थमुच्यते? इत्यत आह– **ज्ञानमेवेति** ।। **'अज्ञानेनावृतं ज्ञानम्'**(५.१५) इत्युक्तम् । एवं तर्हि तस्याविनाश एव स्यात् । तथा च न कदाचिद् ब्रह्मप्रकाशः । विनाशकान्तराङ्गीकारे च ज्ञानार्थयोः सन्न्यास-योगयोर्वैयर्थ्यमित्याशङ्क्य ज्ञानमेवाज्ञानस्य नाशकम् । अतो नोक्तदोषः । किन्तु स्वरूपज्ञानम् अविद्यया आवृतम् । वृत्तिज्ञानं त्वविद्यां शिथिलयति ब्रह्म प्रकाशयति इत्येतदनेनाहेत्यर्थः।।[२]

अत्र **केचित्** 'यथैक एवादित्योऽन्धकारं नाशयति भूमण्डलं च प्रकाशयति तथैकमेव ज्ञानमज्ञानं निवर्तयति परं च प्रकाशयति' इति व्याचक्षते । तदसदिति भावेनाऽह– **प्रथमेति** ।।

१. 'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकरति ह सोम्य' इति **आथर्वणे** ३-१०।

**तत्र उमर्जीये**-'सः अविद्याग्रन्थिं भावरूपाज्ञानवन्धं विकरति 'कृ विक्षेपे' विक्षिपति शिथिलीकरोतीति यावत् । तदुक्तं 'ज्ञानेन तु तदज्ञानम्' इत्यत्र 'प्रथमज्ञानं परोक्षम्' इति गीताभाष्यव्याख्यानावसरे प्रमेयदीपिकायाम् 'परोक्षज्ञानमविद्यां शिथलयतीति । शृत्वा मत्वा तथा ध्यात्वा' इति सूत्रभाष्य-व्याख्यानावसरे तत्वप्रकाशिकायां च भृत्वा तदज्ञानं पराणुद' इति । 'शृणुयाद्यावदज्ञानम्' इत्याद्यागमे चायमेवार्थोऽवसीयते । अत्र प्रमेयदीपिकादावविद्यां शिथलयतीति यदविद्याशिथिलीकरणमुक्तं यच्च पराणुदेत्याद्युक्तं तदविद्याग्रन्थेः शिथिलीकरणत्वाभिप्रायेण' इति ।।

२. (अ) **भागवते श्रुतिगीतातात्पर्ये** १०-९४-१२ आवरणविचारः द्रं ।

(आ)अत्र **ब्र.सू.(२.३.१३)भाष्यदीपिकायां** विशेषः ।

'अज्ञानस्य श्रवणादिनिवर्त्यत्वेऽप्यपरोक्षज्ञाननिवर्त्यत्वमपि सम्भवति । श्रवणजनितापरोक्षज्ञानेन अज्ञानस्य शिथिलीभावरूपनिवृत्तिः, अपरोक्षज्ञानेनात्यन्तिकी निवृत्तिरित्यभ्युपगमात् । एतत्सर्वं -ज्ञानेन तु.. इति गीताभाष्यप्रमेयदीपिकयोः स्पष्टमुपवर्णितम् । तथाहि प्रमेयदीपिकावचनम् -स्वरूपज्ञानमविद्यया आवृतम्, वृत्तिज्ञानं त्वविद्यां शिथिलयति ब्रह्म प्रकाशयति इति ।। अत्र वृत्तिज्ञानशब्दस्य गीताभाष्यरीत्या परोक्षमपरोक्षं चार्थः । नचैवं प्रमाणैरुत्पन्नमपीदं मनोवृत्तिरूप तत्त्वज्ञानमन्तरङ्गभूतेन विशुद्धस्वभावरूप-ज्ञानेनोपोद्बलितं सत् वहिरङ्गमनाद्यपि सवासनमेवाज्ञानं समूलघातं हन्ति'इति सुधाविरोधः । अत्र केवल-वृत्तिज्ञानस्याज्ञाननिवर्तकत्वोक्तेरज्ञाननिवर्तने स्वरूपज्ञानस्यापि वृत्तिज्ञानसहायत्वोक्तेश्चेति वाच्यम् । पूर्वं स्वरूपज्ञानस्यावृतत्वेनाकिञ्चित्करत्व-परत्वेऽपि परोक्षवृत्तिज्ञानेनावरकाज्ञानस्य शिथिलीभावानन्तरम्, अपरोक्षवृत्तिज्ञानोपोद्बलकत्व-सम्भवात् केवलस्यापरोक्षवृत्तिज्ञानस्यात्यन्तिकाऽज्ञाननिवर्तकत्वाभावेऽपि स्वरूपज्ञानोपोद्बलितस्य समूलाज्ञानघातकत्वोपपत्तेश्च ।।'

तृतीयान्तपदोक्तम् । 'द्वितीयमपरोक्षम्' इति शेषः । अन्यथा द्विर्ज्ञानग्रहणं व्यर्थं स्यादिति भावः ।। १६ ।।

**( ध्यानं परोक्षज्ञानसाधनम् )**

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ।। १७ ।।**

**भाष्यम् — अपरोक्षज्ञानाव्यवहितसाधनमाह– तद्बुद्धय इति ।। १७ ।।**

**प्रमेयदीपिका**

तद्बुद्धित्वादिकं यद्यपुनरावृत्तिसाधनत्वेनोच्यते तदाऽपरोक्षज्ञानादेव मोक्ष इति गतः पक्षः । अथ तद्बुद्धयो ज्ञाननिर्धूतकल्मषा इति ज्ञानसाधनत्वेन । तदसत् । **ज्ञानेन** इति परोक्षज्ञानस्य अपरोक्षज्ञानसाधनत्वेनोक्तत्वादित्यत आह– **अपरोक्षेति** ।। सत्यम् । परोक्षज्ञानम् अपरोक्षज्ञानसाधनम् । किन्तु व्यवहितम् । न हि श्रवणमननानन्तरमेवापरोक्षज्ञानमुत्पद्यते । इदं तु[1] **अव्यवहितसाधनमाह** इत्यर्थः ।। १७ ।।

**( भगवत्स्वरूपाणां साम्यदर्शनम् अपरोक्षज्ञानसाधनम् )**

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**[2]शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।। १८ ।।**

**भाष्यम् — परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह– विद्येति ।। १८ ।।**

**प्रमेयदीपिका**

'**विद्याविनय**' इत्यादि [3]प्रकृतानुपयुक्तमयुक्तं च कथमुच्यते? इत्यत आह – **परमेश्वरेति**।।

१. श्रीनि,वे । इदं च -प्र ।

२. **वैषम्याधिकरण- तात्पर्यचन्द्रिकायाम्** 'नहि दुष्टान्निगृह्णन् राजा विषमः । 'शुनि चैव श्वपाके च' इत्यादि त्वधिष्ठानवैषम्येऽपि तदधिष्ठितस्य भगवतस्तदभावपरम्' ।

३. इत्यदि गुज,वे-ग्रं, -बे । इत्यदिना -प्र।

**सर्वत्र** ब्राह्मणादिषु स्थितानाम् । **सर्वत्र** गुणेषु दोषाभावेषु वा । **साम्यं** तारतम्याभावः । तद्बुद्धित्वादिना सहास्य समुच्चयार्थश्चशब्दः । परमेश्वरविषयता **'निर्दोषं हि'** (५.१९) इत्युत्तरवाक्यगम्या । अपरोक्षज्ञानसाधनता च प्रकरणगम्येत्यतः **आशयवान्** इत्युक्तम् । पण्डितशब्दस्तु परोक्षज्ञानवचनः । **'पाण्डित्यमागमज्ञानम्'** इति वचनात् ।। १८ ।।

**भावदीपः**

**प्रकृतानुपयुक्तमयुक्तश्चेति** ।। अपरोक्षज्ञानहेतूक्तेः प्रकृतत्वात् तदुपयोगिसर्वेषु साम्यदर्शनमयुक्तं च । (योगविवरणं च किञ्चिदधिकमिति 'ब्रह्मण्याधाय' इत्यनेनेत्यर्थः । साम्यदर्शनस्य)[१] तत्तद्योग्यतानुरोधेन दर्शनस्यैव युक्तत्वादिति भावः । भेदव्याप्तसमत्वस्य प्रकृते अभावादाह– **तारतम्याभाव इति** ।। **परमेश्वरविषयतेति** ।। 'साम्यदृष्टेः' इति योज्यम् ।।१८।।

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ।। १९ ।।**

**भाष्यम् — तदेव स्तौति– इहैवेति ।। १९ ।।**

**प्रमेयदीपिका**

ननूत्तरवाक्ये साम्यदर्शनं मुक्तिसाधनमेवोच्यते । तत् कथमुच्यते अपरोक्षज्ञानसाधनम्? इति । प्राग् ज्ञानिनोऽपि जन्मान्तरसद्भाव उक्तः । तत्कथम् **इहैव** इति तद्देह एव मुक्तिरुक्ता? इत्यत आह– **तदेवेति** ।। स्तुतावधिकोक्तिः सम्भवतीति भावः ।। १९ ।।

**भावदीपः**

**मुक्तिसाधनमेवेति** ।। 'तैर्जितः सर्गो जन्मादिः' इतीत्यनेनेति भावः । कैमुत्येनाप्ययुक्ततामाह– **प्राग्ज्ञानिनोऽपीति** ।। **'एषा ब्राह्मी स्थितिः पार्थ'**(२.७२) इति श्लोकव्याख्यानभाष्ये 'ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम्' इत्यादिनेति भावः ।। १९ ।।

**( अध्यायशेषप्रतिपाद्यनिरूपणम् )**

**न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसम्मूढो ब्रह्मविद् ब्रह्मणि स्थितः ।। २० ।।**

१. कंसान्तर्गतभागः एकस्मिन् का,मं कोशयोः नास्ति । अस्पष्टभागः।

**भाष्यम् — सन्न्यासयोगज्ञानानि मिलित्वा प्रपञ्चयत्यध्यायशेषेण ।। २० ।।**

**प्रमेयदीपिका**

अत्र **कश्चित्**[१] 'आध्यायपरिसमाप्तेर्ज्ञानिनः कर्माभावः प्रतिपाद्यते' इत्याह । [१]**अपरस्तु** 'ज्ञानस्वरूपं तत्सहकारिसाधनं च प्रतिपाद्यते' इति । तदुभयमग्गन् । अप्रतीतेरिति भावेना-ध्यायशेषप्रतिपाद्यमाह– **सन्न्यासेति** ।। **मिलित्वा** मेलयित्वा शङ्काप्रमारेणेव, नतु प्रकरण-भेदेनेत्यर्थः । पुनरुक्तिपरिहारार्थं **प्रपञ्चयति** इत्युक्तम् । सन्न्यासस्यादौ ग्रहणेन **न प्रहृष्येत्** इति सन्न्यासप्रपञ्चनमिति सूचितम् ।। २० ।।

( ध्यानादियुक्तस्यैवाक्षयं सुखम् )

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।**

**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते[२] ।। २१ ।।**

**भाष्यम् — पुनर्योगस्याधिक्यं स्पष्टयति– बाह्यस्पर्शेष्विति ।। कामरहित आत्मनि यत् सुखं विन्दति स एव ब्रह्मयोगयुक्तात्मा चेत् तदेव अक्षयं सुखं विन्दति ।।**

**प्रमेयदीपिका**

'प्रकृतस्य सन्न्यासिन एवाक्षयसुखप्राप्तिरुच्यते' इति [३]परव्याख्यानमसदिति भावेनाऽऽह– **पुनरिति** ।। **'सन्न्यासस्तु'** इत्यादिना प्रागुक्तत्वात् **पुनर्** इति । **आधिक्यं** सन्न्यासात् । प्राग् (५.६) योगाभावे सन्न्यासस्य वैयर्थ्यमुक्तम् । तदसत् । कामाद्युपद्रवक्षये स्वरूपसुखस्या-विर्भावादित्याशङ्कानिराकरणात् स्पष्टनम् । नैतदत्र प्रतीयत इत्यतो व्याचष्टे– **कामेति** ।।

**'बाह्यस्पर्शेष्वसक्तात्मा'** इत्यस्यार्थः– **कामरहित** इति ।। आत्मस्वरूपस्यापि सुखस्य न निर्विशेषत्व[४]मिति ज्ञापनाय **आत्मनि** इत्युक्तम् । **स** एव कामरहित एव । **तदेव** आत्मसुखमेव ।।

---

१. शाङ्करभाष्यम् । भास्करः - इति श्रीनि-टि ।

२. 'मक्षय्यमश्नुते' -इति नीलकण्ठीये अपपाठः ।

३. शाङ्करभाष्यभावानुवादः ।

४. श्री.टि निर्विषयत्वम्-भा.र.को.। निर्विशेषत्वम्-भा.र.को.उ.पाठान्तरम् ।

### भावदीपः

**वैय्यर्थ्यमुक्तमिति** ।। **'सन्न्यासस्तु'** इत्यत्र न निर्विषयत्वमिति ।। [1]एतेन **आत्मनि** इति विषयसप्तमीत्युक्तं भवति ।।

**भाष्यम् — ब्रह्मविषयो योगो ब्रह्मयोगः । ध्यानादियुक्तस्यैवात्मसुखमक्षयम्, अन्यथा नेत्यर्थः ।। २१ ।।**

### प्रमेयदीपिका

**'ब्रह्मणा योगः'** इति प्रतीतिनिरासायाऽह– **ब्रह्मेति** ।। कथमनेन सन्न्यासाद्योगस्याधिक्यं स्पष्टीकृतम्? इत्यतो ब्रह्मयोगशब्दार्थं विवृण्वन् तात्पर्यमाह – **ध्यानादीति** ।। 'ज्ञानद्वारा' इति शेषः । **अक्षयं** पुनस्तिरोभावरहितम् । **अन्यथा** सन्न्यासमात्रेण तिरोभावोपेतं तु **अल्पत्वाद-फलमेव'** (५.६) इत्युक्तमेव ।। [2]व्याख्यानान्तरे तु बहूनां पदानां वैयर्थ्यमिति भावः ।। २१ ।।

### भावदीपः

**अन्यथा** इत्यनुवादः, **सन्न्यासमात्रेण** इति व्याख्या ।। कामाद्युपद्रवक्षये स्वरूप-सुखाविर्भावसत्वात् **न** इत्युक्तिः कथम्? इत्यत आह -**तिरोभावेति** ।। **उक्तमेवेति** ।। सन्न्यासस्तु इत्येतद्व्याख्यावसरे उक्तमित्यर्थः ।। **व्याख्यानान्तरे त्विति** ।। सन्न्यासिन एवाक्षयसुखमिति व्याख्याने तु **'बाह्यस्पर्शेष्वसक्तात्मा सुखमक्षयमश्नुते'** इत्येतावतैव पूर्तेरन्येषां पदानां वैय्यर्थ्यम् । अस्मन्मते तु **'कामाद्युपद्रव'** इत्यादिनोक्तशङ्कानिरासाद्यर्थ-तया सार्थक्यमिति भावः ।। २१ ।।

( कामभोगनिन्दा )

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आयन्तवन्तः कौन्तेय न तेषु रमते बुधः ।। २२ ।।**

**भाष्यम् — सन्न्यासार्थं कामभोगं निन्दयति– ये हीति ।।**

---

१. इत आरभ्य आङ्लोकसमाप्तेरेकस्मिन् सो-कोश एव । का,मं-कोशे नास्ति ।

२. श्रीनि,कृ.टि.। व्याख्यान्तरे वे,गुज,वे-ग्रं,श-१मा.।

### प्रमेयदीपिका

ननूत्तरश्लोके सन्न्यासादित्रितयान्तर्गतं न किञ्चिदुच्यत इत्यत आह– **सन्न्यासार्थमिति** ।। **निन्दयति** इति स्वार्थे णिच् । सन्न्यासार्थिनेति वा ।। २२ ।।

### भावदीपः

**त्रितयेति** ।। सन्न्यासयोगब्रह्मध्यानरूपत्रितयान्तर्गतमित्यर्थः । प्रयोजककर्तर्येवायं णिजिति मध्ये कर्त्रन्तरमाह - **सन्न्यासार्थिनेति** ।। कामादित्यागार्थिना पुरुषेणेत्यर्थः ।। २२ ।।

**शक्नोतीहैव यः सोढुं प्राक्छरीरविमोक्षणात् ।**

**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।। २३ ।।**

**भाष्यम् —** तत्परित्यागं प्रशंसति[१] – **शक्नोतीति ।। कामक्रोधोद्भवं वेगं सोढुं शक्नोति, शरीरविमोक्षणात्[२] प्राक् । यथा मनुष्यशरीरे[३] सोढुं सुशकं[४] तथा नान्यत्रेति भावः । ब्रह्मलोकादिस्तु जितकामानामेव भवति ।। २३ ।।**

### प्रमेयदीपिका

उत्तरश्लोकमप्यन्तर्भावयितुमाह –तदिति ।। 'कामभोगपरित्यागं सन्न्यासार्थम्' इति वर्तते। इहैव **'शरीरविमोक्षणात् प्राक्'** इति प्रशंसायामनुपयुक्तमिति भावेन तद्विहायान्यद्योजयति– **कामेति** ।। वेगं मनसोऽनवस्थानम् । एवं तर्हि इहैव **'शरीरविमोक्षणात् प्राक्'** इति किमर्थ-मुक्तम्? इत्यतस्तदनूद्य तात्पर्यमाह– **शरीरेति** ।। **इहैव** इत्यनुवादे ग्राह्यम् । 'अस्मिन्नेव लोके' इति । अत एवोक्तम् – **मनुष्यशरीर** इति ।। 'अतोऽत्रैव तत्सहनाय प्रयतितव्यम्' इत्यभिप्रायशेषः ।। ननु ब्रह्मलोकादौ तत्सहनमत्यन्त[५]सुशकम् । तत्कथमेवमुच्यते? इत्यत आह– **ब्रह्मेति** ।। तथाचान्योन्याश्रय[६] इति भावः ।। **अन्यत्र** इति पश्वादिशरीरं व्युदस्तमिति हृदयम् । एतेनात्र वाक्यभेदः कार्य इति सूचितम्।।

१. प्रशंसयति इति भा.र.को उदाहृतपाठान्तरम् ।
२. टीकानुसारी । शरीरमोक्षणात् -प्र ।
३. टीकानुसारी । बे,गुज,वे-ग्रं, । देहे -इत्यधिकं- प्र ।
४. 'सुकरम् 'इति भावदीपे पाठान्तरं नरहरितीर्थपाठानुसारि।
५. 'अतिसुशकम्-'श-१-मा । नरहरितीर्थीयटीकायामपि 'अतिसुशकत्वात्' इति पठ्यते ।
६. श्रीनि-,बे-वे-ग्रं,। 'अन्योन्याश्रयत्वम् इति भावः ', कृ-टि,श१-मा,गुज ।

'शरीरविमोक्षणपर्यन्तं न सकृत्' इति कश्चित्[1] । तदसत् । तथा सति 'आशरीरविमोक्षणात्' इति स्यात् । **इहैव** इति च व्यर्थम् ।। २३ ।।

**भावदीपः**

**अन्योन्याश्रयत्वमिति** ।। कामराहित्ये सति श्रुतब्रह्मलोकादिप्राप्तिः, तत्प्राप्तौ सति तदित्येवमिति भावः ।। नन्वेवं नान्यत्र सोढुं सुकरम् (सुशकं)[2] इति कथम्? इत्यत आह - **अन्यत्रेतीति** ।। **एतेनेति**।। **'कामक्रोध'** इति भाष्येण,'इहैव प्राक् तच्छरीरविमोक्षणात्' इत्येतावद् विना[3] सर्वमेकं वाक्यम् । तच्च 'सहनसामर्थ्यं मानुषशरीरविमोक्षणात् प्राक्'इत्यपरम् इत्येवं वाक्यभेदः सूचित इत्यर्थः । न सकृदिति सोढुं शक्नोति स युक्तः स सुखीत्यर्थमाह । कश्चिदित्यर्थः ।। २३ ।।

**( ज्ञानिलक्षणनिरूपणम् )**

**योऽन्तस्सुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ।। २४ ।।**

**भाष्यम् — ज्ञानिलक्षणं प्रपञ्चयत्युत्तरश्लोकैः[4] । आरामः परदर्शनादिनिमित्तं सुखम् । अत्र तु परमात्मदर्शनादिनिमित्तं तत् । सुखं तूपद्रवक्षये[5] व्यक्तम् । अत्र तु कामादिक्षये व्यक्तमात्मसुखम् । स्वयञ्ज्योतिष्ट्वाद् भगवतः ।।**

**प्रमेयदीपिका**

ननु योगिनो ब्रह्माधिगतिः प्रागुक्ता (२.७०)। तत् किं पुनरुच्यते? इत्यत आह– **ज्ञानीति** ।। द्वितीये कथितत्वात् (२.७०) **प्रपञ्चयति** इत्युक्तम् । यथा योगस्याधिक्यकथनं योगनिरूपणमेव, सन्न्यासार्थे निन्दास्तुती च सन्न्यासनिरूपणमेव । तथा ज्ञानिलक्षणकथनं च ज्ञानिनिरूपणमिति ।। आरामशब्दार्थं तावदाह– **आराम** इति ।। इदानीमन्तरारामशब्दलब्धम

---

१. शाङ्करभाष्ये ।
२ सो-पाठः । नरहरितीर्थभाष्यपाठानुगुणः।
३. 'इत्येतावद्वर्जम् 'इति का-मातृकापाठः ।
४. भावदीपानुगुणः द्रं-२६ श्लोकः । उत्तरैः श्लोकैः इति वे-ग्रं, बे, गुज ।
५. 'उपद्रवक्षयव्यक्तम् ' इति प्रभ-पाठे।

र्थमाह– **अत्र त्विति** ।। **तत्** सुखम् । एवं तर्हि **अन्तस्सुखः** इत्यनेनैव गतार्थमेतदित्याशङ्क्य सुखशब्दस्य तावदर्थभेदमाह– **सुखं त्विति** ।। **व्यक्तमात्मसुखमिति** सम्बन्धः ।।

तर्हि **अन्तस्सुखः** इति कथम्? इत्यतस्तल्लब्धार्थमाह– **अत्र त्विति** ।। अनेनाराम-सुखशब्दार्थान्तर्गतयोः परोपद्रव-क्षययोः **'अन्तः'** इत्येतत् सामर्थ्याद्विशेषणमित्युक्तं भवति ।। ज्योतिःशब्दार्थं तावदाह– **स्वयमिति** ।। 'ज्योतिष्ट्वम्' इति शेषः ।।

**भावदीपः**

**प्रागुक्तेति** ।।[१] **'योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति'**(५.६) इत्यत्रोक्तेत्यर्थः ।। **कथितत्वादिति** ।। 'प्रजहाति यदा कामान्'(२.५५) इत्यादिनेति योज्यम् ।।

ननु 'सन्न्यासयोगज्ञानानि प्रपञ्चयत्यध्यायशेषेण' इत्युक्तम् । तथाच ज्ञानिलक्षणोक्तिः कथं सङ्गता? इत्यत आह- **यथेति** ।। **'बाह्यस्पर्शेषु'** (५.२१) इत्यनेन योगाधिक्यकथनं **'ये हि** [२]**संस्पर्शजाः'** **'शक्नोतीहैव'** (५.२२,२३) इत्यादि श्लोकद्वयेन क्रमात् कामभोगनिन्दा-तत्त्यागस्तुतीत्यर्थः ।। **'तत्'** इत्यनुवादः, 'सुखम्' इति व्याख्या ।।

[३]**आरामसुखशब्दार्थान्तर्गतयोरिति** ।। 'परदर्शनादिनिमित्तं सुखमारामः' इति, 'उपद्रवक्षय-व्यक्तं तु सुखम्' इति आरामसुखशब्दार्थान्तर्गतयोः **पर** इति **उपद्रव** इति विशेषणयोः 'अन्तः' इत्येतद् योग्यतावशाद् विशेषणम् । [४]अन्तःस्थितो यः परः, अन्तःस्थितो यः कामाद्युपद्रव इत्येवमित्यर्थः । अत्र परत्वस्यारामशब्दार्थान्तत्वोक्तिरभ्युपगमवादेन । दर्शनजसुखस्यैव आ रामशब्दार्थत्वस्याग्रतनाभिधाने व्यक्तत्वात् । द्वितीये **'यस्त्वात्मरतिरेव'** इत्यत्र **परेति स्वरूपकथनम्** इति भाष्यार्थाक्तोक्तेश्चेति ज्ञेयम् । **इदानी**मिति तात्पर्योक्त्यनन्तरं **'सर्वेषाम्'** इत्यादिना प्रयोजनमुच्यत इत्यर्थः ।।

**भाष्यम् — तद्व्यक्तेः अन्तर्ज्योतिः । सर्वेषामन्तर्ज्योतिष्ट्वेऽपि व्यक्तेर्विशेषः । असम्प्रज्ञातसमाधीनां बाह्यादर्शनात् । दर्शनेऽप्यकिञ्चित्करत्वात् एवशब्दः ।।**

---

१. अत्र मं-सो-मातृकातो उपलब्धभागः 'व्यक्तं तु' इत्येतावत्पर्यन्तः । अत्रापि क्वचिदनन्वयः, अक्षर-स्खालित्यादिकं च। यथामति संशोध्य संयोज्य मुद्रितम् । महान्तः प्रष्टव्याः ।

२. इदं प्रतीकद्वयं सो मातृकायां नास्ति ।

३. काणियूरुमातृकायां इदं वाक्यमस्तव्यस्तं जातम् । अ

४. इदं वाक्यं मं-मातृकायां नास्ति । उपरितनं सोमातृकायाम् ।

## प्रमेयदीपिका

यद्यपि ज्योतिःशब्दः प्रकाशमात्रे प्रवर्तते । तथाऽपि भगवत एव परानपेक्ष्य प्रकाशत्वात्, मुख्ये च सम्प्रत्ययात् स एव ज्योतिरित्यर्थः । इदानीमन्तर्ज्योतिश्शब्दार्थमाह– **तद्व्यक्तेरि**ति।। तस्य भगवतोऽन्तर्हृदये व्यक्तेरित्यर्थः । नन्वन्तर्ज्योतिर्यस्यासावन्तर्ज्योतिः । **व्यक्तेः** इति तु कथं लभ्यते ? इत्यत आह– **सर्वेषा**मिति ।। शब्दतः प्राप्तमन्तर्ज्योतिष्ट्वं सर्वसाधारणम् । अत्र तु ज्ञानिनो[1] विशेषणत्वेनोच्यते । तत्सामर्थ्यादिदं लब्धमिति भावः ।। यद्वा **तद्व्यक्तेः** इत्यध्याहारेण तात्पर्यमुक्तम् । अध्याहारस्येदानीं प्रयोजनमुच्यते । नन्वेवशब्दो यदि धर्मान्तरनिवृत्त्यर्थस्तदा [2]'अन्तःसुख' इत्यादि व्याहतम् । अथ वस्त्वन्तरदर्शननिवृत्त्यर्थः तदाऽसम्भवित्वमित्यत आह– **असम्प्रज्ञाते**ति ।। बाह्यं भगवतोऽन्यत् । दर्शनेऽपि 'अन्यदा' इति शेषः । **अकिञ्चित्करात्** विक्षेपकरणाभावादित्यर्थः । **एवशब्दः** 'सम्भवदर्थः' इति शेषः । एतेन 'लक्ष्यमेवेदं कथं लक्षणत्वेनोच्यते' इति परिहृतम् । व्यवच्छेदप्रधानत्वात् । एवशब्दस्य सामर्थ्याज्ज्योतिषा सम्बन्ध इति ।।

## भावदीपः

एवशब्द इति भाष्यपदमनूद्याकाङ्क्षितं पूरयति– **एवशब्दः सम्भवदर्थ इति शेष इति**।। युक्तार्थक इत्यर्थः । **एतेनेति** ।। एवकारार्थकथनेनेत्यर्थः । वक्ष्यति (ज्योति) 'ज्ञानिस्वरूपमेव इदमन्तर्ज्योतिः' इत्येतदित्यर्थः । व्यवच्छेदप्रामाण्यं व्यनक्ति – **एवशब्दस्येति** ।। 'अन्तर्ज्योतिरेव यस्य न तदन्यदर्शनं स ज्ञानी' इत्युक्त्या भगवदन्यादर्शनवत्वम्, अन्यदर्शनेऽप्यविक्षेपवत्त्वं लक्षणं लभ्यत इति भावः ।।

**भाष्यम् — उक्तं चैतत् –**

**'दर्शनस्पर्शसम्भाषाद्यत् सुखं जायते नृणाम् ।**
**आरामः स तु विज्ञेयः सुखं कामक्षयोदितम्'**

**इति नारदीये ।**

**'स्वज्योतिष्ट्वान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थितः'**

**इति च ।**

---

१. बे, गुज, वे-ग्रं । ज्ञानिविशेषण-प्र ।

२. ३११मा । अन्तःसुखमित्यादि, प्र-गुज । मूले भाष्ये वा अस्यादर्शनादयं प्रामादिक इति सम्भाव्यते ।।

**अन्तःसुखत्वादेः कारणमाह– ब्रह्मणि भूत इति ।। २४ ।।**

**प्रमेयदीपिका**

आरामसुखशब्दयोरुक्तार्थत्वं कुतः? इत्यत आह– **उक्तं चेति** ।। न केवलं पुनरुक्तिबलादिति **चार्थः** । **द्वन्द्वैकत्वादेकवचनम्** । 'काम' इत्युपद्रवोपलक्षणम् । **उदितं** व्यक्तम् । 'अन्तर्ज्योतिः' इत्यस्योक्तार्थत्वे प्रमाणमाह– **स्वेति** ।। स स्थितो यस्मिन्निति **तत्स्थितः** । 'अन्तरेव ज्योतिर्दर्शनं यस्य' इत्येवं व्याख्यानेऽपि यद्यप्युक्तार्थो लभ्यते । तथाऽपि 'आर्थिकाच्छाब्दं वरम्' इत्येवं व्याख्यातम् ।।

'ब्रह्मैव भूतः' इत्यन्यथाप्रतीतिनिरासाय ब्रह्मभूतशब्दस्य विग्रहं दर्शयन् प्रकृतसङ्गतिमाह– **अन्तरिति** ।। 'ब्रह्मणि भूतः' इत्येवं विग्रहो न तु 'ब्रह्मैव भूतः' इति । प्रमाणविरोधात् ।। ननु ब्रह्मणि भूतत्वं साधकधर्मः[१]। तत्कथं ज्ञानिलक्षणत्वेनोच्यते? मैवम् । यतोऽन्तःसुखत्वादेः कारणत्वेनोच्यते ।। नन्वेवं सत्यर्थादिदं ज्ञानसाधनत्वेन उच्यते । तच्च **तद्बुद्धयः** इत्यनेनैवोक्तम् । सत्यम् । 'तद्बुद्धित्वादिकं ब्रह्मणि भूतत्वं यस्य कारणं तद्वानेवंलक्षणकः' इत्येवं सङ्गतिसूचनार्थोऽयमनुवाद इति भावः । एवञ्च **अधिगच्छति** इत्यस्य जानातीत्यर्थो ज्ञातव्यः ।। २४ ।।

**भावदीपः**

**द्वन्द्वैकत्वादिति** ।। 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्युक्तेः । अत एव नपुंसकतापीति भावः । **तत्स्थितः** इत्यस्य 'भगवदधिष्ठानभूतः'[२] इत्यर्थलाभायाह– **स स्थितो यस्मिन् इति** ।। **उक्तोऽर्थ इति** ।। भगवदेकदर्शनवत्त्वरूपोऽर्थ इत्यर्थः । **एवं व्याख्यातमिति** ।। 'तत्स्थितः' इत्येवं व्याख्यातमित्यर्थः ।। **ब्रह्मणि भूतत्वं साधकधर्म इति** ।। तदेकनिष्ठत्वरूपं ब्रह्मणि भूतत्वं साधनानुष्ठातृधर्म इत्यर्थः ।। **अर्थादिति** ।। ब्रह्मभूतो ब्रह्माधिगच्छतीत्यनुवादबलादित्यर्थः । **इदमिति** ।। ब्रह्मणि भूतत्वमित्यर्थः ।। **अयमनुवादः** ब्रह्मभूत इत्याद्यनुवाद इत्यर्थः ।। २४ ।।

**( पापक्षयाद् ब्रह्माधिगमः )**

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**

---

१. भावदीपे, साधकधर्मः-श्रीनि । साधारण-प्रच ।

२. 'तदधिष्ठानभूत' इति पाठान्तरम् ।

**छिन्नद्वैधाऽऽयतात्मानः सर्वभूतहिते रताः ॥ २५ ॥**

**भाष्यम् —** पापक्षयाच्चैतद् भवतीत्याह – **लभन्त** इति ॥ **क्षीणकल्मषाः** भूत्वा **छिन्नद्वैधा यतात्मानः** । द्वेधा भावो द्वैधम् । संशयो विपर्ययो वा ॥

### प्रमेयदीपिका

उत्तरश्लोके ज्ञानिनो ब्रह्मप्राप्तिः पुनः किमर्थमुच्यते? इत्यत आह– **पापेति** ॥ ब्रह्मभूतत्वेन सहास्य समुच्चयार्थश्चशब्दः । **एतद्** उक्तलक्षणं ज्ञानम् । अतो **लभन्ते** इत्यस्योपलभन्त इत्यर्थः । कथं तर्हि ज्ञानिलक्षणप्रपञ्चार्थत्वं श्लोकत्रयस्योक्तमिति । उच्यते । ज्ञानप्रतिबन्धकपापक्षयाख्य-मसाधारणकारणं कार्यस्य लक्षणं भवत्येवेति । अत्र कार्यकारणभावो न प्रतीयत इत्यत आह– **क्षीणेति** ॥ **भवन्ति** ततो ब्रह्मोपलभन्त इत्यर्थः । छिन्नद्वैधशब्दार्थं ज्ञापयन् द्वैधशब्दं व्याचष्टे– **द्वैधेति** ॥ विषयापेक्षयाऽन्यप्रकारत्वम् [1]अयथार्थत्वमिति यावत् । तेन च [2]तद्वज्ज्ञानमुपलक्ष्यत इति भावेनाऽह– **संशय** इति ॥ वाशब्दश्चार्थे[3] ॥

### भावदीपः

**एतत्** इत्यनुवादः, **उक्ते**त्यादि व्याख्या ॥ अन्तर्भगवदेकविषयकत्वादिरूपमित्यर्थः ॥ **अत इति** ॥ ज्ञानिनो भगवन्मोक्षोक्तिपरत्वादस्य श्लोकस्येत्यर्थः । **आत्मानः** इत्यनन्तरं भाष्ये शेषमाह- **भवन्ति ततो ब्रह्मोपलभन्त इत्यर्थ** इति ॥ २५ ॥

**भाष्यम् — तच्चोक्तम्–**

> **'विपर्ययः संशयो वा यद्वैधं त्वकृतात्मनाम् ।**
> **ज्ञानासिना तु तच्छित्त्वा मुक्तसङ्गः परं व्रजेत् ॥'** **इति च ।**

**छिन्नद्वैधास्त एव आयतात्मानः । दीर्घमनसः सर्वज्ञा इत्यर्थः । तत एव छिन्नद्वैधाः। तच्चोक्तम्–**

> **'क्षीणपापा महाज्ञाना जायन्ते गतसंशयाः'** **इति ।**

---

१. एवकारःअधिकः. श-१मा ।

२. श्रीनि - बे,बे-ग्रं ,श-१मा.। तज्ज्ञानम्- प्र ।

३. (अ)'यदि वा भेदभिन्नयोः' इति विष्णुतत्त्वनिर्णयटीकायां 'वाशब्दः समुच्चयार्थः' इति ।
(आ) तत्त्वप्रदीपेऽपि 'सुप्तौ मोक्षे वा' इत्यत्र 'वाशब्दः समुच्चयार्थः' इति ।

**छिन्नद्वैधाः यतात्मान**[1] इति वा ।। २५ ।।

**प्रमेयदीपिका**

अत्रैव प्रमाणमाह– **तच्चेति** ।। **अकृतात्मनाम्** अशुद्धबुद्धीनाम्। **छिन्न** इत्यादेः समासत्वमभिप्रेत्य विग्रहमाह– **छिन्नेति**।। आयतशब्दस्यात्मशब्दस्य चानेकार्थत्वाद् **आयतात्मानः** इत्येतद्व्याचष्टे– **दीर्घेति** ।। अणुनो मनसः कथं दीर्घत्वमित्यत आह– **सर्वज्ञा** इति।। बहुविषयत्वमुपलक्ष्यत इति भावः । श्रवणादिना विदितवेद्या इत्यर्थः । समासेन उक्तयोरप्यर्थयोर्बुद्ध्या विविक्तयोर्हेतुहेतुमद्भावोऽस्तीति भावेनाऽह– **तत एवेति** ।। आयतात्मत्वादेव । क्षीणकल्मषत्वायतात्मत्वच्छिन्नद्वैधत्वानां हेतुहेतुमद्भावं प्रमाणमाह– **तच्चेति** ।। व्यस्ते वा एते पदे इत्याह– **छिन्नेति** ।। नियतमनस इत्यर्थः ।। २५ ।।

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम् ।। २६ ।।**

**भाष्यम् - सुलभं च तेषां ब्रह्मेत्याह– कामक्रोधेति ।। अभितः सर्वतः ।।२६।।**

**प्रमेयदीपिका**

'यतीनां सर्वं ब्रह्मतयैव प्रतीयते' इत्यन्यथाप्रतीतिनिरासायाह– **सुलभं चेति** ।। न केवलमुक्तलक्षणा इति चार्थः । इदं चासाधारणधर्मत्वाज्ज्ञानिलक्षणं भवत्येव । सौलभ्यवाचि किमप्यत्र न प्रतीयत इत्यतस्तदुपादाय व्याचष्टे– **अभित** इति ।। सर्वदेशकालेष्वित्यर्थः ।।

**भावदीपः**

**उक्तलक्षणा इति ।। योऽन्तःसुखः** इत्यादिनोक्तलक्षणा इत्यर्थः । **ज्ञानिलक्षणं प्रपञ्चयत्युत्तरश्लोकैः** (५.२४) इति प्राक्तनभाष्यकथनायाः सङ्घटनायाह- **इदं चेति** ।। सर्वदेशकालेषु सुखेन ब्रह्मलब्धित्वमित्यर्थः ।। २६ ।।

**( ध्यानप्रकारनिरूपणम् )**

**स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**

---

१. भाष्यकृत्सूचितपाठान्तरम् ।

**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ।। २७ ।।**

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**

**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ।। २८ ।।**

**भाष्यम् —** ध्यानप्रकारमाह– **स्पर्शानित्यादिना** ।। बाह्यान् स्पर्शान् **बहिः कृत्वा ।** श्रोत्रादीनि योगेन नियम्येत्यर्थः । **चक्षुर्भ्रुवोरन्तरे कृत्वा** भ्रुवोर्मध्यम् अवलोकयन्नित्यर्थः ।। उक्तं च–

'नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधापयेत्' इति ।

**प्राणापानौ समौ कृत्वा** कुम्भके स्थित्वेत्यर्थः ।। २७ ।। २८ ।।

### प्रमेयदीपिका

ध्यायिनां मुक्तत्वं साक्षाच्चेत् प्रमाणविरोधः । ज्ञानद्वारा चेत् पुनरुक्तिरित्यतः श्लोकद्वय-तात्पर्यमाह– **ध्यानेति** ।। **मुक्त एव सः**(५.२८)इति स्तुतिरिति भावः । पदानां व्यवहित-त्वादन्वयमाह– **बाह्यानिति** ।। स्पृश्यन्त इति स्पर्शा शब्दाद्याः । स्पर्शा बाह्या एव । तेषां किं बहिष्करणम्? इत्यत आह - **श्रोत्रादीनीति** ।। **योगेन** प्रत्याहारेण । श्रोत्रादीनाम् अनियमे पद्मभ्यासाऽदरप्रत्ययवशाच्छब्दाद्या अन्तरा इव भवन्ति । तन्नियमे तु बाह्या बहिष्कृताः स्युरिति भावः । **कृत्वा** इत्यस्यानुवृत्त्या योजयति– चक्षुरिति ।। दुर्घटमेतदित्यत आह– **भ्रुवोरिति** ।। **चक्षुर्वृत्तौ** चक्षुःशब्द इत्यर्थः ।। **'सम्प्रेक्ष्य नासिकाग्रं स्वम्'**(६-१३) इति वक्ष्यमाणविरोध इत्यत आह– **उक्तं चेति** ।। 'न्यूनाधिकभावराहित्यं समीकरणम्' इत्यन्यथाप्रतीतिनिरासाया ऽनूद्य व्याचष्टे– **प्राणेति** ।। **कुम्भके** प्राणायामे । ततश्च **समौ** निर्विकारौ निश्चलावित्यर्थः । इतरत्समीकरणं कुम्भकार्थमेवेति भावः ।। २७ ।। २८ ।।

### भावदीपः

**प्रमाणेति** ।। 'दृष्ट्वैव तं मुच्यते' इत्यादि प्रमाणेत्यर्थः । **पुनरुक्तिरिति** ।। **स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते** इत्येवं ध्यानादेर्ज्ञानद्वारा अक्षयसुखहेतुत्वोक्तेरिति भावः । गीतापदस्य निष्कृष्यार्थमाह– **ततश्चेति** ।। तस्यैवार्थः– **निश्चलाविति** ।। **इतरदिति** ।। न्यूनाधिकराहित्यरूपम् ।। २७-२८ ।।

( ध्येयस्वरूपनिरूपणम् )

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।। २९ ।।**[1]

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मसन्यासयोगो नाम पञ्चमोऽध्यायः ।। ५ ।।[2]

**भाष्यम् —** ध्येयमाह– **भोक्तारमिति** ।। २९ ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भगवद्गीताभाष्ये पञ्चमोऽध्यायः ।। ५ ।।

**प्रमेयदीपिका**

भगवज्ज्ञानस्य शान्तिसाधनत्वं पुनः किमर्थमुच्यते? इत्यत आह– **ध्येयमिति** ।। ततश्च **ज्ञात्वा** इत्यस्य 'ध्यात्वा' इत्यर्थः । शान्तिसाधनज्ञानत्वमपि भोक्तृत्वादिवद् ध्येयविशेषणमेवेति भावः ।। २९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पञ्चमोऽध्यायः समाप्तः ।। ५ ।।

**भावदीपः**

नन्वेवमपि 'ध्यात्वा शान्तिमृच्छति' इति ध्यानफलमेव प्राप्तम् , नतु ध्येयमहिमेत्यत आह -**शान्तिसाधनज्ञानत्वमपीति** ।। २९ ।।

।। इति श्रीगीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते पञ्चमोऽध्यायः ।।

---

१. अयं श्लोकः न्यायामृते द्वितीयपरिच्छेदे ब्रह्मणो निर्गुणत्वभङ्गे 'भोक्तारं ...मृच्छति इत्यादिस्मृतिषु सविशेषज्ञानादेव मोक्षोक्तेः ...' इत्येवम् उदाहृतः ।

२. 'अष्टभुजाय नमः' इति बे, गुज ।

## ।। अथ श्रीमद्भगवद्गीतायां षष्ठोऽध्यायः ।।

**श्रीभगवानुवाच**

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः ।। १ ।।**

( षष्टाध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम् — ज्ञानान्तरङ्गं समाधियोगमाहानेनाध्यायेन । विवक्षितं सन्न्यासमाह योगेन सह– अनाश्रित इति ।।**

### प्रमेयदीपिका

सङ्गतिं सूचयन् एतदध्यायप्रतिपाद्यमर्थमाह– **ज्ञानान्तरङ्ग**मिति ।। **योगे त्विमां शृणु** (२.३९) इति प्रतिज्ञाय द्वितीयषट्के वक्ष्यमाणं भगवज्ज्ञानं प्रति कर्मयोगस्य बहिरङ्गत्वात् स प्राधान्येनातीते ग्रन्थे प्रतिपादितः । तत्साध्यत्वात् ज्ञानान्तरङ्गत्वाच्च अवसरप्राप्तं **समाधियोगमाहानेन** षष्ठाध्यायेनेत्यर्थः ।। आसनादीनामङ्गानां वक्ष्यमाणत्वेऽपि (६.११) तेषां समाध्यर्थत्वात् प्राधान्येन समाधियोगस्य ग्रहणम् । पञ्चमान्तोक्तस्य प्रपञ्चोऽयम् इत्यदोषः।।

'गृहस्थस्यापि स्तुत्यर्थमुपचरितं सन्न्यासित्वं योगित्वं चाऽनेन श्लोकेनोच्यते'[1] इति परकीयतात्पर्यकथनम् असदिति भावेनाऽह– **विवक्षित**मिति ।। समाधियोगं विधातुं तत्राधिकारिणं ज्ञापयिष्यन् साङ्ख्याद्यभिमततदधिकारिनिरासाय तद्विशेषणं प्राग् **विवक्षितं** कामादिवर्जनलक्षणं **सन्न्यासम्** ईश्वराराधनस्वकर्मानुष्ठानलक्षणेन **योगेन सह आह** इत्यर्थः । यदि हि सन्न्यासो यत्याश्रमोऽत्र विवक्षितः स्यात्, योगश्च कश्चिद् गृहस्थासम्भवी स्यात् तदोपचारेण तत्स्तुतिरियम् । न चैवमिति भावः ।।

### भावदीपः

भाष्यमित्युपलक्षणं मत्वाऽह– **तत्साध्यत्वा**दिति ।। कर्मयोगसाध्यत्वादित्यर्थः ।। **स्पर्शान् कृत्वा** (५.२७) इत्यत्र ध्यानयोगस्योक्तत्वात् पुनरुक्तिदोषमाशङ्क्याऽह–

---

१. शाङ्करभाष्ये ।

**पञ्चमान्तेति** ।। **विधातुमिति** ।। **योगी युञ्जीत** इत्यादिनेति योज्यम् ।। **प्राग्विवक्षित-मिति** ।। **ज्ञेयः स नित्यसन्न्यासी** इत्यत्रेति भावः ।। ननु कामहीनकर्मानुष्ठानं योगः, कामवर्जनं सन्न्यासः । 'योगेन सह आह' इति कथं इत्यतोऽत्र योगशब्द एकादशपर इति भावेनाऽह– **ईश्वरेति** ।।

**भाष्यम् —चतुर्थाश्रमिणोऽप्यग्निः क्रिया चोक्ता दैवमेव** (४-२५) **इत्यादौ ।**

**'अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृता'**

**इति च ।**

**तस्मात् निरग्निरक्रियः सन्न्यासी योगी च न भवत्येव ।। १ ।।**

**प्रमेयदीपिका**

'न केवलं निरग्निरक्रियश्चतुर्थाश्रमिसन्न्यासी योगी च किन्तु **अनाश्रितः** इत्याद्युक्तो गृहस्थोऽपि' इति परकीयां[१] योजनां निराकरोति– **चतुर्थेति** ।। अत्रैव स्पष्टं वाक्यान्तरं पठति– **अग्निरिति** ।। चस्त्वर्थः । 'अतो न परकीया[२] योजना युक्ता' इति शेषः । तर्हि कथम्? इत्यत आह– **तस्मादिति** ।। परकृतयोजनायाः निरस्तत्वात् ।। ननु निरग्नेरक्रियस्य चतुर्थाश्रमिणोऽपि सन्न्यासित्वाद् योगित्वाच्च कथं **न निरग्निः** इत्याद्युक्तमित्यतो वाऽह– **चतुर्थाश्रमिणोऽपी-त्यादि** ।। **न भवत्येवेति** ।। 'युक्तम्' इति शेषः । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबन्धन इति भावः ।। १ ।।

**भावदीपः**

**चस्त्वर्थ इति** ।। अग्निस्तु ब्रह्मक्रिया तत्पूजेति योजनेति भावः ।। १ ।।

( सन्न्यासो योगान्तर्भूतः )

**यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन ।। २ ।।**

**भाष्यम्** — सन्न्यासोऽपि योगान्तर्भूत इत्याह– **यं सन्न्यासमिति** ।। काम-सङ्कल्पाद्यपरित्यागे कथमुपायवान् स्यादित्याशयः ।। १ ।।

१. शाङ्करभाष्ये ।
२. 'परकीयेति । कुग्जनस्य परस्य चेति कुगागमः '-वि.त.नि.व्या.टि।

### प्रमेयदीपिका

ननु सन्न्यासयोगौ भिन्नलक्षणौ । तत्कथं तयोरैक्यमुच्यते? इत्यत आह– **सन्न्यासोऽपीति**।। **'स[1] सन्न्यासी च योगी च'** (६.१) इत्युक्त्या प्राप्तात्यन्तभेदशङ्कानिवृत्त्यर्थम्' इति शेषः । 'अमुख्ययोगापेक्षया पृथगुक्तोऽपि' इत्यपेरर्थः । योगशब्देन मुख्योऽत्राभिहितः। अत एव वक्ष्यति **उपायवान्** इति । अन्तर्भूतत्वादैक्योक्तिः इत्यर्थः।।

'सन्न्यासस्य योगान्तर्भूतत्वमुपपाद्यते - **न हि** इति' । तदसत् । सङ्कल्पत्यागमात्रस्य असन्न्यासत्वात्[2], ईश्वराराधनार्थाय स्वकर्मकरणमात्रं योगः । तस्य सन्न्यासाभावेऽप्युपपत्तेः इत्यत आह– **कामेति** ।। सङ्कल्पशब्दस्य कामाद्युपलक्षणत्वात्, योगशब्दस्य च ज्ञानोपायरूपमुख्ययोगार्थत्वान्नानुपपत्तिरिति भावः ।। २ ।।

### भावदीपः

**अमुख्ययोगेति** ।। प्रागुक्तदिशा एकदेशरूपेत्यर्थः ।। **अत्रेति** ।। **योगं तं विद्धि** इत्यत्रेत्यर्थः । **ऐक्योक्तिरिति** ।। गीतायामिति योज्यम् ।। २ ।।

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ।। ३ ।।**

**भाष्यम् — कियत्कालं कर्म कर्तव्यमित्यत आह– आरुरुक्षोर्मुनेरिति ।। योगम् आरुरुक्षोः उपायसम्पूर्तिमिच्छोः । योगारूढस्य सम्पूर्णोपायस्य । अपरोक्षज्ञानिन इत्यर्थः । कारणं परमसुखकारणम् ।।**

### प्रमेयदीपिका

नन्वेवं समाधियोगस्याधिकारिणि निरूपिते तं प्रति [3]स अभिधेयः । 'आरुरुक्षोः' इत्यादि [4]किमर्थमुच्यते ? इत्यत आह– **कियदिति** ।। समाधियोगाधिकारत्वेनोक्तं कर्म किं सकृदनुष्ठेयम्, उताफलप्राप्तेः? इति प्रश्नार्थः ।।

---

१. स इति-अधिकं श.मा १, २ । बे,गुज नास्ति ।
२. गुज,सङ्कल्पत्यागमात्रस्य सन्न्यासत्वाभावात् -श-१मा, २ ।
३. श्रीनि- सो अभिधेयः । समाधिर्विधेयः-श-१मा ।
४. किमुच्यते- श-१मा ।

ननु योगो नाम नाश्वादिरिवारोढव्यः । तत् कथमुच्यते '**योगमारुरुक्षोः**, '**योगारूढस्य**? इति । तत्राऽऽह– **योगमिति** ।। उपरिभवनसादृश्यादुपचार इत्यर्थः ।। **उपायः** समाधिरेव। समाधेः फलपरिमाणाद्यवच्छेदाभावात् कीदृशी सम्पूर्णता इत्यत आह– **अपरोक्षेति** ।। साधनस्य हि सम्पूर्णता साध्याय पर्याप्तत्वम् । अतो यावताऽपरोक्षज्ञानं सम्पद्यते तावत्त्वं सम्पूर्णत्वमिति भावः । ननु योगमारुरुक्षोः कर्म कारणम् । सन्निधानाद् 'योगारोहस्य' इति लभ्यते । कारणत्वाच्च तत्पर्यन्तं कर्तव्यमिति । कार्यापेक्षया नियतपूर्व[2]भावित्वात् कारणस्य । योगारूढस्य तु शमः किं प्रति कारणम् । ज्ञानस्य तत एव सिद्धेरित्यत आह– **कारणमिति** ।। **परमसुखं** मुक्तिगतम् ।।

## भावदीपः

अपरोक्षज्ञानिनो पश्चादेव भवतीत्युपरि भवनसादृश्यात्' इत्युक्तम् ।। **तत एव सिद्धेरिति** ।। पूर्वतनकर्मण एव सिद्धेरित्यर्थः ।।

**भाष्यम् — अपरोक्षज्ञानिनोऽपि समाध्यादिफलमुक्तम् (गी.भा.२.६०) । तस्य सर्वोपशमेन समाधिरेव कारणं प्राधान्येनेत्यर्थः । तथाऽपि यदा भोक्तव्योपरमः तदैव सम्यगसम्प्रज्ञातसमाधिर्जायते । अन्यदा तु भगवच्चरितादौ स्थितिः ।।**

## प्रमेयदीपिका

नन्वयं प्रश्नो **यदा ते मोहकलिलम्** (२.५२)इति परिहृतः । मैवम् । तत्र ज्ञानार्थिनोऽत्र तु योगारोहार्थिन[3] इति भेदात् । तयोश्च साध्यसाधनयोः पृथक्त्वात् । **अपरोक्षज्ञानिनः** इति चानतिविप्रकर्षेणोक्तत्वात् । [4]यथोक्तम् **ऐहिकमप्रस्तुतप्रतिबन्धः** (ब्र.सू.३.४.५०) इति । अथवा योगारूढस्यापि कर्तव्यं वक्तुं प्रश्नोत्तरानुवादोऽयमिति ।।

नन्वपरोक्षज्ञानिनोऽनाधेयातिशयस्य कथं शमः परमसुखकारणमुच्यते? इत्यत आह– **अपरोक्षेति** ।। **उक्तं** समर्थितं द्वितीय (२.६०)। **समाध्यादि** इत्यनेन शमशब्दार्थः

---

१. श.मा.- १, २, गुज । योगमारूढस्य-प्र.पाठः गीतानुगुणः इति भाति । त.प्र.भावदीपे-'योगमारूढस्य' इत्येव पठ्यते ।

२. 'क्षणवर्तित्वात् '-पां -श-१मा ,२।

३. श.मा-२.'-र्थिनो-' भावदीपानुगुणः ।-ज्ञानार्थिना.योगारोहार्थिना '-इति तृतीयान्तपाठः-वे,गुज,वे-ग्रं ।

४. श्रीनि-टि, कृ-टि.सम्मतः । तथोक्तम् -वे,गुज, वे-ग्रं-प्र ।

समाधिरिति सूचितम् । तत्किं तस्यान्यत् कर्तव्यमेव नास्तीत्यत आह– **तस्येति** ।। **सर्वोपशमेन** सर्वविषयोपरतिलक्षणेनेति समाधौ शमशब्दं समर्थयितुमुक्तम् । **कारणं** सुखाभिवृद्धेः । तदविरोधेनान्यत् कार्यमिति भावः । यदि ज्ञानिनः समाधिरानन्दवृद्धेः कारणं तर्हि तमेव कुतो न कुर्युः? कुतश्च व्याख्यानादौ प्रवर्तन्ते? इत्यत आह– **तथाऽपीति** ।। **भोक्तव्योपरमः** प्रतिबन्धकप्रारब्धकर्मोपरमः । **अन्यदा** सम्यक् समाधिप्रतिबन्धककर्मानुपरमकाले ।।

**भावदीपः**

**अयं प्रश्न इति** ।। कियत्कालं कर्म कर्तव्यमिति प्रश्नो द्वितीये **यदा ते मोहकलिलम्** इति श्लोके परिहृत इत्यर्थः । **ज्ञानेति** ।। परोक्षेत्यर्थः ।। **योगारोहार्थिन इति** ।। समाध्यर्थिन इत्यर्थः ।। **तयोरिति** ।। परोक्षापरोक्षज्ञानार्थिनोरित्यर्थः ।। ज्ञानार्थिनो हि ज्ञानं साध्यम्, श्रवणमननादिकं साधनम् । समाध्यर्थिनस्तु निर्णयरूपं तत्त्वज्ञानादि साधनम्, अपरोक्षं साध्यमिति भावः ।। नन्वेवं **योगारूढस्य** इत्यस्य समाधिसम्पन्नस्येति वाच्यम् । अपरोक्षज्ञानिन इत्युक्तिस्तु कथमित्यत आह–**अपरोक्षेति** ।। समाधिस्थस्यापरोक्षदृष्टेरनतिविलम्बेन भवतीत्यत्र सूत्रसम्मतिमाह–**ऐहिकमिति** ।। 'प्रारब्धप्रतिबन्धकाभावे साधनसम्पूर्तिमज्जन्मन्येव अपरोक्षं भवति' इति सूत्रार्थः ।। **योगारूढस्य** इत्यस्य 'अपरोक्षज्ञानिनः' इत्यर्थोक्तिरेवेति भावेनाऽह-**अथवेति** ।। **कर्तव्यमिति** ।। समाध्यादिकम् ।। **समर्थितं द्वितीय इति** ।। **बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते** इत्येतद्व्याख्यावसरे **सुकृतमप्रियम्** इत्यादिग्रन्थेनेति भावः ।। ३ ।।

**भाष्यम् — तच्चोक्तम्–**

**'ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम् ।**
**तेषामेव तु सम्यक् (तु) च[1] समाधिर्जायते नृणाम् ।।**
**[2]भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा ।**

---

१. 'सम्यक् तु'-इति प्रभ ,भा.र.को, श्रीनि-चशब्दः वर्तते । 'सङ्क्रम्य' इति गु-ज,वे-ग्रं ।

२ ब्र.सू.भा. ४-१-७ 'सर्वदैनमुपासीत यावद्विमुक्तिः 'इति सौपर्णश्रुतिः ।।

त.प्र- कैमुत्येनापि ध्यानस्य मुक्तिपर्यन्तत्वं साधयन्नाह- सर्वदिति । ज्ञानात्पूर्वं श्रवणादियुतध्यानस्य कर्तव्यत्वात्,ज्ञानानन्तरं च सम्यग्ध्यानालाभे श्रवणादि इत्यत उपासनादीत्यादिपदम् । उक्तं हि - 'भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा । वर्तयन्ति महात्मानः तद्भक्ताः तत्परायणाः' ।। इति ।। भावदीपः- उक्तं हीति । षष्ठे गीताभाष्ये । वर्तयन्ति वर्तन्ते कालं नयन्तीति वा अर्थः । 'कथयापि'

वर्तयन्ति महात्मानः तद्भक्ताः तत्परायणाः'[१] इति ॥

**प्रमेयदीपिका**

अत्राऽगमसम्मतिमाह- तच्चेति ॥ **परं** केवलम् । **तेषामेव** सम्यगेव **समाधिश्च जायते** इति योजना । **वर्तयन्ति** वर्तन्ते, कालं नयन्तीति वा ॥ ३ ॥

**( योगारूढलक्षणम् )**

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

**भाष्यम् —** योगारूढस्य लक्षणमाह- यदेति ॥ सम्यगननुषङ्गस्तस्यैव भवति । उक्तं च-

'स्वतो दोषलयो दृष्ट्वा त्वितरेषां प्रयत्नतः' इति ॥ ४ ॥

**प्रमेयदीपिका**

स्फुटमपि तात्पर्यं मन्दानुजिघृक्षयाऽऽह- **योगेति** ॥ अपरोक्षज्ञानं तु योगारोहस्य कार्यं सति प्रतिबन्धे विलम्बत इति न लक्षणम् । नन्विदं साधकेऽपि विद्यते । **वशे हि यस्येन्द्रियाणि (२.६१)** इत्यादेः । अतोऽतिव्यापकमित्यत आह- **सम्यगिति** ॥ प्रयत्नं विनेत्यर्थः । **तस्यैव** योगारूढस्यैव । अत्र प्रमाणमाह- **उक्तं चेति** ॥ 'परमात्मानं दृष्ट्वा त्वाऽऽप्यते' इति शेषः । मुख्य एव चाननुषङ्गोऽत्र विवक्षित इति भावः ॥ ४ ॥

**भावदीपः**

योगारूढशब्दितसमाधिसम्पन्नस्यापरोक्षज्ञानमेव लक्षणमस्त्वित्यत आह - **अपरोक्षेति** ॥

---

इत्यनेन श्रवणप्रतीतेरिति भावः ॥ ....॥

**त.प्र.**-नच वाच्यं ज्ञानोत्तरध्यानस्य फलाभावादकर्तव्यत्वमिति । आनन्दातिशयफलत्वात् । नचोक्तदोषः। 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इति वचनादानन्दवृद्धौ ध्यानस्यैव प्रधानसाधनत्वात् ॥

**भावदीपः**-फलत्वादिति । ज्ञानातिशयद्वारा, साक्षाद्वेति भावः । योगारूढस्य ज्ञानिनः । शमः ध्यानम् । 'शमो मन्निष्ठता बुद्धेः' इत्युक्तेरिति भावः ॥ उक्तं हि गीताभाष्ये -' योगमारूढस्य .. अपरोक्षज्ञानिन इत्यर्थः'। कारणं परमसुखकारणमिति ॥

१ 'स्त्वद्भक्तास्त्वत्परायणाः'-प्रभ पाठः । अयं तत्वप्रकाशिकापाठाननुगुणः ।

नन्विदमित्यनुवादः ।। **यदा ते मोह** इत्युक्तस्य **आरुरुक्षोः** इति पूर्वार्धेनेति योज्यम् । **यदा हि** इति श्लोकोक्तम्, **वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता** इति द्वितीयोक्त-गीतावचनादित्यर्थः ।। दृष्ट्वा इति त्त्वाश्रुत्युपपत्तये क्रियान्तरमाह - **दृष्ट्वा त्वाप्यत इति शेष इति** ।। **त्वा** त्वामित्यर्थः । तावसाधके विद्यत इति शङ्कायाः कः परिहारः? इत्यत आह - **मुख्य एवेति** ।। **अत्रेति** ।। **यदा हि** इति श्लोके साधकत्वं त्वमुख्यत इति भावः ।। ४ ।।

**( ध्यानयोगः अभियोगेन कार्यः )**

**उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।**

**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।। ५ ।।**

**भाष्यम् — स च योगारोहः प्रयत्नेन कर्तव्य इत्याह– उद्धरेदित्यादिना ।। ५ ।।**

**प्रमेयदीपिका**

नन्वेवं विध्युपयुक्तमुक्त्वा समाधियोगे विधेये किमर्थमात्मोद्धारकर्तव्यतोच्यते ? इत्यतोऽनया वाचोभङ्ग्या योग एव विधीयत इत्याह– **स चेति** ।। यस्याधिकार्यादिकमुक्तम्। 'स एव च योगः' इति वक्तव्ये यदारोहग्रहणं कृतं[१] तत् तेन[२] तावत्पर्यन्तं योगः कर्तव्यः। न मध्य एव त्याज्य इति ज्ञापनार्थम् । **प्रयत्नेन** अभियोगेन ।। ५ ।।

**भावदीपः**

**अधिकार्यादिकमिति** ।। आदिपदेन फलपर्यन्तं कर्मानुष्ठानग्रहः ।। **वाचो-भङ्ग्येति** ।। **उद्धरेत्** इत्याद्युक्तरीत्येत्यर्थः ।। **तावत्पर्यन्तं** सम्पूर्णोपायसिद्धिपर्यन्तम् ।। इत्यपि ग्राह्यमिति ।। एतेन कस्य इत्येतत् किं विशेषणकस्येति व्याख्यातं भवति ।।५।।

**बन्धुरात्माऽऽत्मनस्तस्य येनाऽत्मैवाऽत्मना जितः ।**

**अनात्मनस्तु शत्रुत्वे वर्तेताऽत्मैव शत्रुवत् ।। ६ ।।**

**भाष्यम् — कस्य बन्धुरात्मेति? आह– बन्धुरात्मेति ।। आत्मा मनः । आत्मनः**

१. भा.र.को रीत्या कृतम् इति नास्ति । शेषपूरणार्थोयं ।

२. वे-ग्रं ,श.मा-२ मातृकायाम् । अन्यत्र नास्ति ।

**जीवस्य । आत्मना मनसा । आत्मानं जीवम् ।।**

### प्रमेयदीपिका

**आत्मैव हि** (६-५) इत्युक्तमेवोत्तरश्लोके किमिति कथ्यत इति मन्दाशङ्कानिरासार्थमाह– **कस्येति** ।। 'किं विशेषणश्च' इत्यपि ग्राह्यम् । **तस्यैव** तमेव प्रति बन्धुत्वं रिपुत्वं च विरुद्धम् । तद् विशेषणभेदेन व्यवस्थाप्यम् । तथाच किं विशेषणस्यात्मनः किं विशेषणो वाऽत्मा बन्धू रिपुश्चेत्यर्थः । 'इति पृच्छायाम्' इति शेषः । **आत्मा,आत्मनः** इति पदद्वयम् । आत्मशब्दस्यानेकार्थत्वाद्व्याचष्टे– **आत्मेति** ।।

नन्वाद्यश्लोके स्वपर्याय एवात्मशब्दः प्रकृतः । तदुपपादके द्वितीये कथमन्योऽर्थ[1] इत्यत आह– **आत्मनेति** ।। अनयैव रीत्याऽद्यश्लोकोत्तरार्धगतात्मशब्दव्याख्यानं द्रष्टव्यम् ।।

### भावदीपः

**अनयैवेति** ।। पूर्वार्धगताऽत्मपदद्वयव्याख्यानरीत्यैव जीवमनःपरत्वेन व्याख्यानं द्रष्टव्यमित्यर्थः ।।

(जीवस्य मनः बन्धुः )

**भाष्यम् — आत्मैव मनः । आत्मना बुद्ध्या जीवेनैव वा । सहि बुद्ध्या विजयति।। उक्तं च –**

'मनः परं कारणमामनन्ति'[2] (भाग. ११.२३.४३)
'मन एव मनुष्याणां कारणं बन्धमोक्षयोः'[3](ब्रह्मविन्दु.उ.२),
'उद्धरेन्मनसा जीवं न जीवमवसादयेत् ।
जीवस्य बन्धुः शत्रुश्च मन एव न संशयः',
'जीवेन बुद्ध्या हि यदा मनो जितं तदा बन्धुः शत्रुरन्यत्र चास्य ।
ततो जयेद् बुद्धिबलो नरस्तद् देवे च भक्त्या मधुकैटभारौ ।।'

इत्यादि ब्रह्मवैवर्ते ।।

---

१. तदुपपादके ,अन्यार्थ -श.मा.-२ भा.र.को पाठः । शाङ्करभाष्यानुवादः ।
२. 'यत् संसारचक्रं परिवर्तयेत् तन्मनः परं कारणमामनन्तीत्यन्वयः '-इति विजयध्वजतीर्थाः ।
३. वि.पु.६.७.२८ । मैत्रायणी-४.३.१ । इदं वाक्यं रामानुजभाष्ये च ।

### प्रमेयदीपिका

**येनात्मैवाऽत्मना जितः** इत्यत्रात्मशब्दौ व्याचष्टे– **आत्मैवेति**।। एवशब्दोपादानं व्याख्येयविवेकार्थम् । **जीवेनैव** इत्यवधारणं प्राधान्यज्ञापनार्थम् । यदाऽऽत्मशब्दो जीवे तदा कर्तरि तृतीया । यदा बुद्धौ तदा करण इति ज्ञापयन्नुपपादयति– **स हीति** ।। **विजयति** विजयते । मन इति शेषः ।।

'स्वेनैव'[१] इत्यादिव्याख्याननिरासार्थमुक्तेऽर्थे प्रमाणान्याह– **उक्तं चेति** ।।

### भावदीपः

**व्याख्येयेति**[२]।।**'एवं हि जीवेन'** इत्येवकारो व्याख्याने व्यर्थ इत्यत आह– **प्राधान्येति** ।। आत्मना इत्युक्तकरणापेक्षयेति भावः । 'विपराभ्यां जेः' **(पा.सू.१.३.१९)** इत्यात्मनेपदोक्तेराह– **विजयत इति** ।। ६ ।।

**भाष्यम् — अनात्मनः अजितात्मनः पुरुषस्य, अजितमनस्कस्य । सदपि मनोऽनुपकारीत्यनात्मा । सन्नपि भृत्यो न यस्य भृत्यपदे वर्तते स ह्यभृत्यः ।** तस्यात्मा मन एव **शत्रुवत्** शत्रुत्वे वर्तते ।। ६ ।।

### प्रमेयदीपिका

**अनात्मनः** इति नञ्समासो बहुव्रीहिर्वा स्यात् । नाद्यः । आत्मनः आत्माऽन्यत्वानुपपत्तेः। आत्मान्तरादन्यत्वस्य च [३]प्रकृतेऽनुपयोगात् । न द्वितीयः । आत्मशब्दस्य जीववाचित्वे वा मनोवाचित्वे वा संसारिणि तदभावस्यासम्भवादित्यत आह– **अनात्मन** इति ।। बहुव्रीहिपरिग्रहसूचनाय **पुरुषस्य** इत्यन्यपदार्थो दर्शितः । अनात्मशब्दार्थं दर्शयितुमाह– **अजितेति** ।।

ननु अविद्यमान आत्मा यस्यासावनात्मा । तत्कथमुच्यते **अजितात्मनः** इति? तत्राह– **सदपीति** ।। विद्यमानमपि **मनः** अजितम् **अनुपकारी** इति अविद्यमानसादृश्याद-विद्यमानतामुपचर्य अजितात्मा **अनात्मा** उक्त इत्यर्थः । गौणप्रयोगे किं प्रयोजनमिति चेन्न ।

---

१. रामानुजभाष्ये -२ -भागे ।

२. इदं प्रतीकं न व्याख्यातम् ।

३. प्रकृतानुपयोगात्-वे-ग्रं ।

रूढोपचारे प्रयोजनानपेक्षणादिति भावेनाऽह- **सन्नपीति** ।। **भृत्यपदे** सेवादौ । पदानां व्यवहितत्वात् **अनात्मनः** इत्यर्धं व्याचष्टे- **तस्येति** ।। **तस्य** अजितमनस्कस्य । 'बन्धुरेव' इत्येवार्थः । **शत्रुवत्** प्रसिद्धशत्रुरिव । **शत्रुत्वे** अपकारित्वे ।। ६ ।।

( जितात्मनो योगिनः फलम् )

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः**[१] **।। ७ ।।**

( अपरोक्षज्ञानिलक्षणम् )

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ।। ८ ।।**

**भाष्यम् — जितात्मनः फलमाह- जितात्मन इति ।। जितात्मा हि प्रशान्तो भवति । न तस्य मनः प्रायो विषयेषु गच्छति । तदा च परमात्मा सम्यगाहितः**[२] **। हृदि सन्निहितो भवति । स अपरोक्षज्ञानी भवतीत्यर्थः ।।**

**प्रमेयदीपिका**

योगो विहितः । तत्किं **जितात्मनः** इत्यनेनोच्यते? आह- **जितात्मन** इति ।। 'उपकारी हि बन्धुरुच्यते । तत्र जितं मनः कमुपकारं करोति । येन बन्धुः स्यात्? आत्मोद्धारं करोतीति चेत् । 'स एव च क इत्याशङ्क्य' इति शेषः । जितात्मनः फले वक्तव्ये **प्रशान्तस्य** इत्यनुवादः किमर्थः ? इत्यत आह- **जितात्मा हीति** ।। वाक्यभेदेनेदमेव फलकथनमिति भावः ।। ननु जितात्मत्वमेव प्रशान्तत्वम् । तत् कथं तत्फलं स्यादित्यत आह- **नेति** ।। **तस्य** जितात्मनः । 'स्वत एव' इति शेषः । तर्हि निराकाङ्क्षत्वादुत्तरं वाक्यं व्यर्थमित्यतः परमफलं दर्शयितुं तदिति भावेन न्यूनमध्याहारेण पूरयन् व्याचष्टे- **तदा चेति**।।

**भावदीपः**

**योगो विहित** इति ।। वशीकृतमनस्कत्वं हि समाधिरूपयोगोपायत्वात् **योगः** इत्युच्यते।

१. मानावमानयोः -रामानुजीयपाठः । वे-ग्रं पाठश्च ।
२. सम्यक् हृद्याहितः -प्रभ ।

स च **उद्धरेत्** इत्यादिना विहित इत्यर्थः ।। **वाक्यभेदेनेति** ।। जितात्मनः प्रशान्तिः, प्रशान्तस्य परमात्मा इत्येवमिति भावः । योगारोहः प्रयत्नेन कर्तव्य इत्यादि सम्बन्धः ।।

**भाष्यम् —अपरोक्षज्ञानिनो लक्षणं स्पष्टयति– शीतोष्णेत्यादिना ।। शीतोष्णादिषु कूटस्थः । ज्ञानविज्ञानतृप्तात्मा, विजितेन्द्रियः इति कूटस्थत्वे हेतुः । विज्ञानं विशेषज्ञानम् । अपरोक्षज्ञानं वा ।।**

### प्रमेयदीपिका

प्रशान्तत्वे सति परमात्मा सर्वेषां हृदि सन्निहित एव । तत्कुतः प्रशान्तस्य विशेषः? इत्यतः 'सम्यक्'पदसूचितार्थं विवृणोति– **अपरोक्षेति** ।। योगारूढ इत्यर्थः । **यदा हि** ' (६.५) इति योगारूढस्य लक्षणमुक्तम् । तत्किमर्थं पुनरुच्यते? इत्यत आह– **अपरोक्षेति** ।। सार्धश्लोकद्वयग्रहणायादिपदम् । अत्र सप्तम्या अन्वयो न दृश्यते । अत आह– **शीतेति** ।।

### ( भास्करेण सम्प्रदायोल्लङ्घनम् )

अत्र **भास्करः** अन्वयमपश्यन् **परमात्मा समाहितः** इति सम्प्रदायागतं पाठं विसृज्य 'परात्मसुसमा मतिः' इति पाठान्तरं प्रकल्प्य 'समा मतिः' इति तु आवर्त्य सप्तम्या अन्वयमुक्त्वा, पूर्वपाठेऽन्वयाभावः' इत्यवादीत् । तदनेनापहस्तितं भवति । कृत्रिमेऽपि पाठे **सुहृत्** ' (६.९) इत्यादिकम् **आत्मौपम्येन**'(६.३२) इत्यादिकं च पुनरुक्तं स्यात् ।।

ननु यः शीतोष्णादिषु कूटस्थस्तस्य ज्ञानविज्ञानतृप्तमनस्त्वं विजितेन्द्रियत्वं चार्थात् सिद्धमेव । तत्किमर्थं पुनरुच्यते? इत्यत आह– ज्ञानेति ।। प्रत्येकमन्वयादेकवचनम् ।।

ननु शिल्पादिविषया बुद्धिर्विज्ञानम् । **'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः'** (अमर.१.५.६) इत्यभिधानात् । तत्कथं विज्ञानेन तृप्तात्माऽयं स्यत्? इत्यत आह– विज्ञानमिति ।। अनेन सामान्यज्ञानं परोक्षज्ञानं वा ज्ञानमिति सूचितम् ।।

### भावदीपः

भाष्यानुरोधादाह - **योगारूढ इत्यर्थ इति** ।। समाधिसम्पन्न इत्यर्थः[१] ।। **आत्मौपम्येनेति**।। अत्रैवाध्यायेऽग्रे **आत्मोपम्येन सर्वत्र समं पश्यति योऽर्जुन** इति वक्ष्यमाणं चेत्यर्थः ।।

---

१. इदं वाक्यं सो न पठ्यते ।

### ( ज्ञान-विज्ञानशब्दार्थः )

**भाष्यम् —** तच्चोक्तम् –

'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः ।
देवादीनां तु तज्ज्ञानं[1] विज्ञानमिति कीर्तितम् ।।' इति[2] ।
'श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते ।
तज्ज्ञानं दर्शनं विष्णोर्विज्ञानं शम्भुरब्रवीत् '।।
'विज्ञानं ज्ञानमङ्गादेर्विशिष्टं दर्शनं तथा ।।' इत्यादि ।

**कूटस्थः** निर्विकारः । कूटवत् स्थित इति व्युत्पत्तेः । कूटम् आकाशः ।
[3]'कूटं खं विदलं व्योम सन्धिराकाश उच्यते'
इत्यभिधानात् ।

**योगी** योगं कुर्वन् । **युक्तो** योगसम्पूर्णः । एवम्भूतो योगानुष्ठाता योगसम्पूर्ण उच्यते इत्यर्थः ।। ७, ८ ।।

### प्रमेयदीपिका

कुत एतदित्यत आह– **तच्चेति** ।। प्रसिद्धाभिधानार्थोऽप्यङ्गीक्रियत इति चशब्दः । **सामान्यैः** साधारणैः पुरुषैः । सामान्यविषयं तु ज्ञानमित्यपि द्रष्टव्यम् । तदेव ज्ञानमिति सम्बन्धः । **अङ्गादेः** व्याकरणादेः शिल्पस्य च । **विशिष्टं दर्शनं** वैष्णवं शास्त्रम् । कूटस्थशब्दो [4]नित्यादिपर्यायः । तेन कथमन्वयः सप्तम्याः? इत्यत आह– **कूटस्थ** इति ।।

१. (अ) त-प्र १-१-१.अत्र 'यज्ज्ञानम्' इति पठ्यते ।
**ब्र.सू.भाष्यदीपिकायां** १.१.१ 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति वाक्यव्याख्यावसरे उदाहृतम् ।
(आ) 'विज्ञानं मन इत्यपि' इति अनु-१-१-६। अत्र **सुधा**-विज्ञानशब्दो विशेषज्ञानमाह। सामान्यैर्ये त्वविज्ञेया...कीर्तितमिति वचनात् । **परिमले**- सामान्यैः साधारणगुणपुरुषैः। **यादुपत्ये**- मम गोचराः मज्ज्ञानगोचराः । **श्रीनिधितीर्थीयम्** — तद्ज्ञानं- तेषां ज्ञानम् । **विठ्ठलभट्टीये**- 'प्रमेयदीपिकायामुक्तः। मम विशेषाः सर्वशास्त्रगोचरा इत्येके, मम गोचराः मत्तो ज्ञाता इत्यपरे' ।(सुधा-मं प्रकाशनम्-पृ-३१५२)
२. प्रभ-पाठे 'इति' इति नास्ति ।
३. प्रभ-पाठे नरहरितीर्थीये इदं वाक्यं न मुद्रितम् ।
४. 'एकरूपतया तु यः । कालव्यापी स कूटस्थः' इति अमरे ३-७३ ।।

तत्कथम्? इत्यत आह– **कूटवदिति** ।। 'सुपि स्थः'(**पा.सू.३.२.४**) इति वचनात् कूटशब्दोऽनृतवाद्यादिवाची । तत्परिग्रहे निर्विकारत्वं न लभ्यत इत्यत आह– **कूटमिति**।। एतैः शब्दैः **आकाश उच्यते** इत्यर्थः । 'युक्तो' 'योगी' इति पुनरुक्तिरिति मन्दाशङ्का-निरासार्थमाह– **योगीति** ।। इनेरस्त्यर्थत्वात् **कुर्वन्** इत्युक्तम् । निष्ठाया भूतार्थत्वात् **सम्पूर्णः** इति । वक्ष्यमाणान्वयापेक्षया क्रमोल्लङ्घनम् । तर्हि विरुद्धार्थयोः कथं सामानाधिकरण्यम्? इत्यत आह– **एवम्भूत** इति ।। 'धातुसम्बन्धे प्रत्ययाः'(**पा.सू.३.४.१**) इति ह्युक्तम् ।।

**भावदीपः**

**इति वचनादिति** ।। सुबन्त उपपदे तिष्ठतेः कप्रत्ययो भवतीति पाणिनिवचनादित्यर्थः ।। कूटपदे उपपदे 'स्था' इत्यस्य कप्रत्यये 'आतो लोप इटि च'(**पा.सू.६.४.६४**) इत्याकारलोपे रूपमिति भावः ।। **इनेरिति** ।। योगो अस्मिन्नस्तीत्यर्थे 'तदस्यास्त्यस्मिन्' इत्यनुवर्त्य 'अत इनि ठनौ' (**पा.सू.५.२.११५**) इति सूत्रे इनिप्रत्ययविधानादिति भावः । **निष्ठाया इति** ।। **युक्त** इति श्रुतक्तप्रत्ययस्येत्यर्थः ।।

ननु युक्तपदयोगपदयोः गीतापाठक्रमविपरीतक्रमेण व्याख्याने किं बीजमित्यत आह- **वक्ष्यमाणेति** ।। **एवंभूत** इत्यादिनोत्तरवाक्ये गीतापदानां वक्ष्यमाणान्वयापेक्षयेत्यर्थः ।। **तर्हीति** ।। युक्तयोगिपदयोः अतीतवर्तमानार्थकत्वे, 'योगं कुर्वन्, योगसम्पूर्णः' इति वर्तमानातीतकालीनयोः सामानाधिकरण्यं विरुद्धयोः कथमित्यर्थः ।।

यद्यपि 'धातुसम्बन्धे प्रत्ययाः' (**पा.सू.३.४.१**) इति तृतीयान्त्यपादीयसूत्रे धातुशब्दो पदार्थपर इत्युपेत्य 'प्रातिपदिकार्थधात्वर्थयोः विशेषणविशेष्यभावेन सम्बन्धे अभिमते सति [1]वर्तमानकाल-अतीतकालसम्बन्धेऽभिमते सति, यथाकालोक्ताः प्रत्ययाः साधवो भवन्ती-त्यर्थमुक्त्वा 'सोमयाजी अस्य पुत्रो भविता' इत्युदाहृतं वृत्तौ[2]।। [3]न चात्र धात्वर्थयोः सम्बन्धोऽस्ति । किन्तु 'योगी युक्तः' इति प्रातिपदिकार्थधात्वर्थयोरेव । तथाऽपि 'प्रत्ययः' (**पा.सू.३.१.१**) 'परश्च' (**पा.सू.३.१.२**) इति प्रत्ययाधिकारे पुनरत्र प्रत्ययग्रहणं धात्वधिकारवि ाहिताधात्वधिकारविहिता अपि प्रत्ययास्तद्धिताः धात्वर्थसम्बन्धे कालभेदे साधने साधवो यथा स्युः' इत्युक्त्वा 'गोमानासीत्' गोमान् भविता इत्यपि वृत्तावुदाहृतत्वाद् इहापि युक्त इति

१. का-। अयं सो-मं मातृकयोर्नास्ति ।

२. महाभाष्ये (श्रीनि.टि) ।

३. अत्र का मातृकायां वाक्यान्यस्तव्यस्तानि । सो-मं मातृकातः यथामति वाक्यानि संयोजितानि।

यजिधात्वर्थसम्बन्धाद् वर्तमानातीतकालयोः सामानाधिकरण्यं युक्तमिति भावः।। ७-८ ।।

( समबुद्धेर्वैशिष्ट्यम् )

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते[1] ।। ९ ।।**

**भाष्यम् — स एव स सर्वस्माद्विशिष्यते साधुपापादिषु समबुद्धिः । जीवचितः परमात्मनः सर्वस्य तन्निमित्तकत्वस्य च सर्वत्रैकरूप्येण ।। चिद्रूपा एव हि जीवाः । विशेषस्त्वन्तःकरणकृतः । सर्वेषां साधुत्वादिकं सर्वमीश्वरकृतमेव । स्वतो न किञ्चिदपि ।।**

**प्रमेयदीपिका**

मध्ये लक्ष्यस्योक्तत्वात् **सुहृत्** इत्यादिकं न योगारूढलक्षणमिति प्रतीतिनिरासायाह– **स एवेति** ।। **साधुपापादिषु समबुद्धिश्च सः** योगारूढ एवेति न, किन्तु **सर्वस्मात्** अयोगिवर्गाद् विशिष्यत इत्येतद्वक्तुं पृथगन्वय इति भावः । साधुत्वं धर्मित्वम् । पापत्वं पापवत्त्वं च नियतम्, नतु सुहृत्त्वादिवदव्यवस्थितमित्यतः 'सुहृदादिषु' इत्यनुक्त्वा '**साधुपापादिषु**' इत्युक्तम् । समबुद्धित्वं नाम पूजादिसाम्यम्' इत्यन्यथाप्रतीतिनिरासाय आह– **जीवचित** इति ।।

[2]'**एष चेतनया युक्तो जीव इत्यभिधीयते**' (भाग.४.२९.७६)

इति चेतनाचेतनपिण्डे जीवशब्दप्रयोगात् '**चितः**' इत्युक्तम् । सुहृदादिचैतन्यस्य तथा **सर्वत्र** सुहृदादिषु स्थितस्य **परमात्मनः** । एवं **सर्वत्र** सुहृदादिषु स्थितस्य सुहृत्त्वादेः परमात्म**निमित्तकत्वस्य** चैकरूप्येण कारणेन तद्दर्शी समबुद्धिरित्यर्थः । तत्राऽद्यं प्रकारं विवृणोति– **चिद्रूपा एवेति** ।। मनुष्येषु यत् 'एकमेकं प्रति सुहृत्' इत्यादि तन्न जीव-स्वभावान्तर्गतम् । किन्तु चिद्रूपत्वादिकमेवेत्यर्थः । तर्हि सुहृत्वादिधर्मः किमात्मकः? इत्यत आह– **विशेषस्त्विति** ।। अन्तःकरणोपादानको बाह्यधर्मः ।।

एतदुक्तं भवति । मुक्तावविशिष्यमाणं यज्जीवरूपं तत् '**त्रिविधाः जीवसङ्घाः**' (म.भा.ता. नि.उदा.भविष्यत्पर्ववचनम्) इत्यादि प्रमाणाद्विषममेव । किन्तु देहेन्द्रियान्तःकरणधर्मैर्यद्

१. '**विमुच्यते**' इति पाठान्तरम् इति शाङ्करभाष्ये पाठान्तरोल्लेखः ।
२ '**एष चेतनया..धीयते**' इत्यादिवचनाज्जीवशब्दो भूतादिसङ्घाते वर्तते -'**न्यायसुधा** -(२-३-८)

वैषम्यं तत्तत्स्वरूप एव आरोप्य विषमबुद्धित्वं योगारूढस्य नास्तीति । द्वितीयः प्रकारः स्फुटः । तृतीयं विवृणोति– **सर्वेषामिति** ।। **स्वतः** स्वातन्त्र्येण ।।

**भावदीपः**

**मध्ये लक्षस्येति** ।। **शीतोष्ण** इत्यादिना अपरोक्षज्ञानिलक्षणस्पष्टीकरणमध्ये एवम्भूतो योगानुष्ठानयुक्तो योगसम्पूर्णोऽपरोक्षज्ञानीति युक्तपदेन लक्ष्यस्योक्तत्वादित्यर्थः । **समबुद्धि-रित्यन्त**भाष्यभावार्थमाह– **साध्विति** ।। **पृथगन्वय इति** ।। सुहृदादिषु समबुद्धिः योगारूढ एव न, किन्तु सर्वस्माद्विशिष्यते चेत्येवं गीतायां पृथगन्वय इत्यर्थः ।। **धर्मित्वं** धर्मवत्त्वं सर्वत्र इत्येतत् परमात्मपदेनान्विततया व्याख्याय, **सर्वस्य** इत्यनेनाप्यन्विततया अर्थमाह– **एवमित्यादिना** ।।

**इत्यादीति** ।। एकैकं प्रति मित्रम्. एकैकं प्रत्यरिरित्यादि यत् सुहृत्वादिकं तन्न जीवस्वभावा न्तर्गतमित्यर्थः ।। अस्फुटत्वात् **'जीवचितः'** इत्यादि भाष्यार्थं निष्कृष्याऽह– **एतदुक्तमिति** ।। **त्रिविधा इति** ।। **'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः'** इति भारततात्पर्योक्तप्रमाणाद् इत्यर्थः।। **यद्वैषम्यमिति** ।। सुहृत्वमित्रत्वादिरूपमित्यर्थः ।। **द्वितीय इति** ।। सर्वत्र परमात्मनः साम्यरूपेणेति द्वितीयः प्रकार इत्यर्थः ।।

**( जीवाः चिद्रूपाः )**

**भाष्यम्** — उक्तं चैतत् सर्वम्–

**'स्वतः सर्वेऽपि चिद्रूपाः सर्वदोषविवर्जिताः ।**
**जीवास्तेषां तु ये दोषास्त उपाधिकृता मताः ।।**
**सर्वं चेश्वरतस्तेषां न किञ्चित् स्वत एव तु ।**
**समां एवं ह्यतः सर्वे वैषम्यं भ्रान्तिसम्भवम् ।।**
**एवं समा नृजीवास्तु विशेषो देवतादिषु ।**
**स्वाभाविकस्तु नियमादत एव सनातनः[1] ।।**
**असुरादेस्तथा दोषा नित्याः स्वाभाविका अपि ।**
**गुणदोषौ मानवानां[2] नित्यौ स्वाभाविकौ मतौ ।।**

१. सदातनः इति भा.र.को पाठः ।

२. श्रीनि । मनुष्याणाम् इति भा.र.को पाठः ।

**गुणैकमात्ररूपास्तु देवा एव सदा मताः ।।'**

**इति ब्राह्मे ।**

**प्रमेयदीपिका**

अत्र प्रमाणमाह– **उक्तं चेति** ।। **स्वतः** स्वरूपेण । **दोषैः** अरित्वादिभिः । एवं 'सुहृत्त्वादिगुणैः' इत्यपि ग्राह्यम् । आगन्तुकधर्मा न स्वरूपान्तर्गता इत्यर्थः । किं तर्हि? इत्यत आह– **तेषां त्विति** ।। **दोषाः**, गुणाश्च । **उपाधिः** अन्तःकरणादिः । **सर्वं** सुहृत्त्वादिकम् । अत एव प्रकारद्वयेन यदनात्मधर्मानात्मस्वन्तर्भाव्य **वैषम्यम्**, यच्च क्वचित् परमेश्वरानधीनरूपत्वं तद् भ्रान्तिप्रतीतम् । 'योगं प्रवर्तमानं प्रति यत् सुहृत्त्वादिकं तन्मनुष्येष्वेव स्वरूपवैषम्यकारणं न भवति । न तु देवादिषु' इत्युक्तस्यापवादमाह– **एवमिति** ।। **तु**शब्दोऽवधारणे । अवधारणार्थं विवृणोति– **विशेष** इति ।। विशेषो योगिनं प्रति सुहृत्त्वादिः ।।

तदेव प्रपञ्चयति– **असुरादेरिति** ।। **तथा**शब्दो वक्ष्यमाणसमुच्चये । **दोषाः**[1] योगिनं प्रत्यरित्वाद्याः । तथा चोक्तम्– '**विद्ध्येनमिह वैरिणम्**'(३.३७) इति । **गुणदोषौ** सुहृत्त्वारित्वादी अनागन्तुकौ । '**गुणैः**' सुहृत्त्वादिभिः '**एकमात्रं**' गुणैकमात्रम् । तथाच श्रुतिः '**यथा ह वै बहवः पशवः**' (बृ.उ.१.४.१०) इत्यादिका ।।

**भावदीपः**

**अतः** इत्यनुवादः, **प्रकारद्वयेन** इति व्याख्या ।। **तृतीयमिति** ।। सुहृत्वादेरीश्वरायत्तत्वप्रकारमित्यर्थः ।। स्वतश्चिद्रूपत्वसुहृत्वादिगुणदोषराहित्यरूपकद्वयेन समा इत्यर्थः।। **वक्ष्यमाणेति** ।। '**गुणदोषौ मानुषाणाम्**' इति वक्ष्यमाणेत्यर्थः ।। '**मनुष्याणाम्**' इत्यस्य नित्यसंसारिणामित्यर्थः ।। **एवमिति** ।। 'कामाद्यभिमानिनमसुरं वैरिणं विद्धि' इति तृतीये गीतायामुक्तमित्यर्थः ।।

'यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्ति'[2]

इति काण्वश्रुतिर्वा (श्रुतौ) ।। '**आत्मैवेदमग्रे**' इति चतुर्थब्राह्मणे ज्ञानिनो देवप्रियकृत्वोक्तेः देवानां ज्ञानिनः प्रति गौणैकमात्ररूपत्वं प्राप्तमिति भावः ।।

---

१. श्रीनि- योगिना प्रति इति प्रतीको दृश्यते । तथा व्याख्यातं च ।

२ 'यथा वहवो गोरूपाः पशवः क्षीरादिना मनुष्यं भुञ्ज्युः भोजयेयुः, ह वै प्रसिद्धम् , एवमेकैको ज्ञानिपुरुषः देवान् भुनक्ति भोजयति प्रीणयति इति यावत् ' राघवेन्द्रीय खण्डार्थे ।

## ( विषमपूजानिषेधः )

**भाष्यम् —** न तु साधुपापादीनां पूजादिसाम्यम् । तत्र दोषस्मृतेः ।

'समानां विषमा पूजा विषमानां समा तथा ।
क्रियते येन देवोऽपि स्वपदाद् भ्रश्यते पुमान् ।।' [१]

इति ब्राह्मे ।

'वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी ।
एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम् ।।' [२]

इति मानवे (मनु.२.१३६)।

### प्रमेयदीपिका

**'सुहृत्'** इत्यादि श्लोकस्य[३] प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **न त्विति।।** सर्वशब्दपर्यायस्य समशब्दस्यैव सर्वनामसञ्ज्ञा न साधारणार्थस्य । **'समे देशे यजति'** इति

---

१. अयं कृ.महार्णवेप्युदाहृतः (२१२श्लो)। 'स्वपदाद् भ्रश्यते हि सः' इति चतुर्थपादे व्यत्यासः ।

(अ)'समानानामनेकेषां विदुषां मध्ये समानां ज्ञानभक्तिवैराग्यादिः समानानां महात्मनां विषमा पूजा वैषम्येण मनोवैषम्येण विषमा न्यूनाधिकतया वा पूजा अर्चनादिकम् । तथा विषमानां ज्ञानभक्तिसदाचारादिभिः न्यूनाधिकवतां भागवतानां समा एकप्रकारेण पूजा येन भक्तेन क्रियते स देवोपि स्वपदात् स्वस्थानात् च्युतो भवति' -स्मृति.मु.कृष्णाचार्याः ।

(आ)'मा ज्ञानं तया सहिताः समाः ज्ञानिनः, तेषां पूजा विषमा अज्ञजनसाम्येन क्रियते चेत् तथा विषमानां विषसदृशं मा ज्ञानं विषमम् अज्ञानं येषां ते विषमाः अज्ञानिनः तेषां ज्ञानिजनसाम्येन क्रियते स देवोपि पूज्योपि सदा स्वयोग्यतया प्राप्तपदात् च्युतो भवति ' कोनेरीआचार्याः ।

(इ)'देवोपि स्वपदाद् भ्रश्यते किमुपदेवादि । मानुषस्तु रौरवादिनरकभागेव 'इति ताम्रपर्णीये ।

२. (अ)'चैव तु' इति स्थाने 'भवति' इति पाठो मनुस्मृतौ ।

'वित्तं न्यायार्जितं धनं, बन्धुः पितृव्यादिः, वयः अधिकवयस्कता, कर्म श्रौतं स्मार्तं च, विद्या वेदार्थतत्त्वज्ञानम् एतानि पञ्चमान्यत्वकारणानि । एषां मध्ये यद्यदुत्तरं तत्तत्पूर्वस्मात् श्रेष्ठमिति बहुमान्यमेलके मान्यमुक्तम्' इति कुल्लूकभट्टः ।

(आ) अयं कृ.महार्णवेप्युदाहृतः । कूर्मपुराणे १३२-४९, विष्णुस्मृतौ ३२. याज्ञवल्क्यस्मृत्यादिषु चायमुपलभ्यते ।

३. वे,गुज,वे-ग्रं । श्लोकेन -प्र ।

यथा ।। तथा न केवलं समपूजायां दोषः । किन्तु विषमपूजाविधानं चास्तीत्याह– **वित्तमिति**।। **बन्धुः** इति बन्धुत्वम् मान्यानि च तानि स्थानानि च । वित्तादिशब्दैः तद्वन्त उपलक्ष्यन्ते।।

**भावदीपः**

**प्रतीत एवार्थ इति** ।। साम्येन पूजादिरूपोऽर्थ इत्यर्थः ।। ननु स्मृतौ **समानाम्** इति कथं 'सर्वादीनि सर्वनामानि' **(पा.सू.१.१.२७)** इति स्मृतौ सर्वादिगणे समशब्दं पठित्वा सर्वनामसञ्ज्ञाविधानेन 'आमि सर्वनाम्नः सुट्'**(पा.सू.७.१.५२)** इति सुडागमे सर्वेषामितिवत् समेषामिति भाव्यमित्यत आह- **सर्वशब्दपर्यायस्येति** ।। **'समे दर्शपूर्णमासाभ्यां यजेत'** इत्यादेरर्थानुवादः– **समे देश इति** ।। अन्यथा समस्मिन्निति स्यादिति भावः ।।

**भाष्यम् —**

**'गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः ।**
**सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ।।**
**वैषम्यमुत्तमत्त्वं तु ददाति नरसश्रयात् ।**
**पूजा या विषमा दृष्टिः समा साम्यं विदुःखजम् ।।'**

**इति ब्रह्मवैवर्ते।**

**सुहृदादिषु शास्त्रोक्तपूजादिकृतिरन्यूनानधिका या सापि समता । तदप्याहुः–**

**'यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च ।**
**तथा करोति पूजादि समबुद्धिः स उच्यते ।।'**

**इति गारुडे ।**

**प्रमेयदीपिका**

दृष्टिरेवोक्तप्रकारत्रयेण समा कार्या, पूजा तु विषमैवेत्यत्र प्रमाणान्तरमाह– **गुणेति** ।। या विषमा पूजा सा **वैषम्यम्** । तस्यैव व्याख्यानम् - **उत्तमत्त्वम्** । **साम्यं ददाति** विदुःखत्वनिमित्तम् । समबुद्धित्वं प्रकारान्तरेण व्याचष्टे–**सुहृदादिष्विति** ।। एतत्र योगारूढ-विषयमिति तत्रैव नोक्तम् । न हि योगारूढो लौकिकेष्वरिष्वपकारं करोति (यः)।।[१]

---

१. अत्र मुद्रितपुस्तकेषु करोति यः इति पठ्यते, टिप्पणीषु मातृकासु वा नायं पाठ उपलभ्यते ।

### भावदीपः

**उक्तप्रकारत्रयेणेति** ।। जीवचितः स्वतो निर्दोषायारित्वादिधर्माणामन्तःकरणौपाधिकत्वे ईशायत्तत्वादिप्रकारेणेत्यर्थः ।। पुराणे **पूजा या विषमा** इत्यत्र 'पूजायाः' इत्यस्य षष्ठ्यन्तभ्रमं निरस्यन् योजनामाह– **या विषमा पूजेति** ।। **सा** इति शेषोक्तिः ।। **प्रकारान्तरेणेति** ।। यत् सुहृत्वादिकं यथा शास्त्रं सुहृदादिषु उपकारापकारानुष्ठातृत्वरूपप्रकारान्तरेणेत्यर्थः ।।

( सुहृदादिशब्दार्थः )

**भाष्यम् — प्रत्युपकारनिरपेक्षयोपकारकृत् सुहृत् । क्लेशस्थानं निरूप्यं यो रक्षां करोति स मित्रम् । अरिः वधादिकर्ता । कर्तव्ये उपकारे अपकारे च य उदास्ते स उदासीनः । कर्तव्यमुभयमपि यः करोति स मध्यमः । अवासितकृत् द्वेष्यः । आह चैतत्–**

**'द्वेष्योऽवासितकृत् , कार्यमात्रकारी तु मध्यमः ।**
**प्रियकृत् प्रियो, निरूप्याऽपि क्लेशं यः परिरक्षति ।**
**स मित्रम्,उपकारं त्वनपेक्ष्योपकारकृत् ।**
**यस्ततः स सुहृत् प्रोक्तः, शत्रुश्चापि वधादिकृत् ' ।। इति ।। ९ ।।**

### प्रमेयदीपिका

सुहृन्मित्रशब्दयोः, अरिद्वेष्यशब्दयोः, उदासीनमध्यस्थशब्दयोश्चार्थभेदो न प्रतीयते । अत आह– **प्रत्युपकारेति** ।। **निरपेक्षया** अनपेक्षया । **अवासितम्** अप्रियम् । **ततः** उपक्रियमाणात् ।। ९ ।।

### भावदीपः

**यस्ततः** इत्यत्र ततःशब्दार्थः– तत उपक्रियमाणादिति ।।९ ।।

( ध्यानयोगप्रकारः )

**'योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**

---

१ 'यथा कार्यपरत्वेपि कर्मविधिशेषतया कर्तृकरणादिसिद्धिः तथा 'योगी युञ्जीत सततम्' इत्यादि योगविधिशेषतयापि कर्तृभूतयोगसिद्धिरुपपन्नेति भावः' इति विठ्ठलभट्टीया- 'कर्मविधिसमानयोगक्षेमत्वाच्च योगविधीनाम्' इति **नविलक्षणत्वाधिकरणन्यायसुधाव्याख्यावसरे-सम्पुटं-१२-पृ. ५८२३ ।**

**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

**भाष्यम् —** समाधियोगप्रकारमाह– **योगी युञ्जीत** इत्यादिना ॥ (युञ्जीत[१]) **समाधियोगयुक्तं कुर्यात् । आत्मानं मनः ॥ १० ॥**

**प्रमेयदीपिका**

ननु **'उद्धरेत्'** (६.५) इत्यनेनैव योगो विहितः । तत् किं पुनर्विधीयत इत्यत आह– **समाधीति** ॥ प्रकारकथनाय विध्यनुवाद इत्यर्थः ।**'युञ्जीत'**इति योगमात्रमुच्यते । तत् कथं **समाधि** इत्युक्तम्? इत्यत आह– युञ्जीतेति ॥ सामान्यशब्दोऽपि प्रकरणाद्विशेषेऽवतिष्ठत इत्यर्थः ॥ आत्मशब्दस्यात्र विवक्षितमर्थमाह– **आत्मानमिति** ॥ १० ॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं [२]चेलाजिनकुशोत्तरम् ॥ ११ ॥**
**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**[३]उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥**

**भाष्यम् — योगं समाधियोगं युञ्ज्यात् ॥ १२ ॥**

**प्रमेयदीपिका**

**'उपविश्यासने'** इत्यत्रापि योगशब्द एवमेव व्याख्येय इत्याह– **योगमिति** ॥ स्थान-विवेकार्थं **युञ्ज्यात्** इत्युक्तम् । कुर्यादिति यावत् ॥ १२ ॥

---

१ गुज-अधिकम् । वे-ग्रं नास्ति । *इत्यादिना- वे-ग्रं नास्ति ।

२. चैलाजिन-इति रामानुजीयपाठः ।

३. (अ)आसने कल्पिते दर्भकुशकृष्णाजिनादिभिः ॥ ८९ ॥
उपविश्यासनं सम्यक् स्वस्तिकादि यथारुचि ॥ ९० ॥
बध्वा प्रागासनं विप्रो ऋजुकायः समाहितः ।
नासाग्रन्यस्तनयनो दन्तैर्दन्तानसंस्पृशन् ॥ त्रिशिखि.ब्राह्मणोपनिषत् ॥
(आ)अयं श्लोकः ब्र.सू.भा ४.१.७ तत्वप्रकशिकायां विषयवाक्यतयोक्तः ॥
४.१.८ भावदीपे -'यद्यपि'उपविश्यासने युञ्ज्यात्' इत्यादावपि युञ्ज्यात् उपसीत इति यत् तदासने उपविश्येति योगानुवादेन आसनमपि विहितमेव' ।

### भावदीपः

योगशब्दार्थोक्तिपरं चेद्भाष्ये **युञ्ज्येत्** इत्यंशो न वाच्य इत्यत आह– **स्थानविवेकार्थ-मिति** ।। **'उपविश्यासने युञ्ज्याद्योगम्'** इत्यत्रत्ययोगशब्दार्थ इति ज्ञापयितुमित्यर्थः ।। **'युञ्ज्यात्'** इत्यत्र प्रत्ययमात्रं विवक्षितम् । अन्यथा पौनरुक्त्यापत्तेरिति भावेनाऽह–**कुर्यादिति यावदिति** ।। १२ ।।

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः[१] ।**
**[२]सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।। १३ ।।**
**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ।। १४ ।।[३]**

( योगानुष्ठानफलम् )

**युञ्जन्नेवं (एवं युञ्जन्)सदाऽऽत्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ।। १५ ।।**

**भाष्यम् — निर्वाणपरमां** शरीरत्यागोत्तरकालीनाम् ।। १५ ।।

### प्रमेयदीपिका

ननु 'शान्तिः निर्वाणम्'[४] इति मोक्षपर्यायौ । तत्कथं शान्तेर्निर्वाणपरमत्वम्? इत्यत

---

१. स्थिरम्-इति रामानुजीयपाठः ।
२. ।। ॐ स्मरन्ति च ॐ ।। ४.१.१ ।। सूत्रभाष्यम् - 'समं .. दिशश्चानवलोकयन्' इत्यादि ।।
तत्त्वप्रदीपिका -'स्मरन्ति च ।। तं च विशेषं स्मरन्ति कृष्णादयः । शरीरं समत्वेनाचलं धारयन् मनसि स्थिरो भवतीत्यर्थः । सम्प्रेक्ष्य नासिकाग्रं स्वम् इत्यादेर्दृष्टेरचलत्वं चापेक्ष्यमित्यर्थः ।।
तत्त्वप्रकाशिका- स्मृतिभिरप्यासनस्यावश्यकत्वं साधयत्सूत्रमुपन्यस्य ताः स्मृतीरुदाहरति ।। स्मरन्ति चेति ।। स्थिरः स्थिरमनाः । अस्योपविश्यासन इत्यनेन सम्बन्धाद्विवक्षितसिद्धिः ।। १ ।।
३. विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः ।
अन्त्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ।। १३ ।।
हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य ...।। १४ ।। कैवल्योपनिषत् ।।
४. ' शान्तिर्मोक्षोऽथ निर्वाणम् ' इति (गी.भा.२-६६)उदाहृतवचनम् ।

आह– **निर्वाणेति** ।। उपशान्तेर्योगकारणत्वाद्योगफलत्वमनुपपन्नम् ।। १५ ।।

**भावदीपः**

नन्वत्र शान्तिपदस्य विषयेषु मनसोऽप्रवृत्तिरूपशान्तिरर्थः । कुतो न? इत्यत आह **उपशान्तेरिति** ।। १५ ।।

( ध्यानयोगनिष्ठस्य आहारनियमः )

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ।। १६ ।।**[1]

**भाष्यम् —** अनशनादिनिषेधोऽशक्तस्य । उक्तं हि–

'निद्राशनभयश्वासचेष्टातन्द्यादिवर्जनम् ।
कृत्वाऽऽनिमीलिताक्षस्तु शक्तो ध्यायन् प्रसीदति ।।'

इति नारदीये ।। १६ ।।

**प्रमेयदीपिका**

**न चैकान्तमनश्नतः, जाग्रतो नैव च** इति युञ्जानस्यानशनजागरणनिषेधः क्रियते। 'स सर्वविषयः'[2] इति प्रतीतिनिरासायार्थमाह– **अनशनादीति** ।। कुतः? इत्यतः शक्तस्य तद्विधानादित्याह– **उक्तं हीति** ।। **आनिमीलिताक्षः** ईषन्निमीलिताक्षः । **शक्तस्तु** इति सम्बन्धः।। १६ ।।

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ।। १७ ।।**

**भाष्यम् — युक्ताहारविहारस्य** सोपायाहारादेः । यावता श्रमाद्यभावो भवति तावदाहारादेरित्यर्थः ।। १७ ।।

---

१. 'यावद्भ्रियेत 'इति (भाग-७-१-अ.) व्याख्याने सत्यधर्मीये उदाहृतम् ।

२. शाङ्करभाष्यानुवादः ।

### प्रमेयदीपिका

आहारादीनां केन युक्तत्वम्? इत्यत आह– **युक्तेति** ।। **उपायः समाधिः** । समाधिर्हि धात्वर्थः । तद्वत्ता च प्रत्ययार्थः । अत **सोपायः** इत्युक्तम् । आहारादेः सोपायत्वं नाम कीदृशमित्यत आह– **यावतेति** ।। आदिपदेनेन्द्रियोत्सेकाऽलस्यादेः सङ्ग्रहः । उपायेन साहित्यं नाम तदविरोधित्वम् । तच्चैवम्भूतमित्यर्थः ।। १७ ।।

### ( योगसम्पूर्तिस्वरूपम् )

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ।। १८ ।।**

**भाष्यम् — आत्मनि** भगवति ।। १८ ।।

### प्रमेयदीपिका

**'आत्मन्येवावतिष्ठते'** इत्यत्र 'स्वस्मिन्नेव' इति [1]प्रतीतिनिरासायाह– **आत्मनीति** ।। अन्यथा**'ज्ञात्वा माम्'** (५.२९) इत्यादिविरोधः ।। १८ ।।

### भावदीपः

**अन्यथेति** ।। जीवार्थत्वे **'ज्ञात्वा मां शान्तिमृच्छति'**(५.२९)इति पञ्चमान्तगीतोक्तिविरोध इत्यर्थः ।। १८ ।।

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ।। १९ ।।**

**भाष्यम् — आत्मनः** योगं भगवद्विषयं योगम् ।। १९ ।।

### प्रमेयदीपिका

**युञ्जतो योगमात्मनः** इत्यत्राऽत्मशब्दस्य षष्ठ्याश्च विवक्षितमर्थमाह– **आत्मन** इति ।। 'योगिन आत्मनः'[2] इत्यन्वयनिरासाय **योगम्** इत्युक्तम् । अन्यथा वैयर्थ्यात् ।। १९ ।।

---

१. शाङ्करभाष्यम् ।
२. शाङ्करभाष्यम् ।

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥**

**भाष्यम् — आत्मना** मनसा । **आत्मनि** देहे । **आत्मानं** भगवन्तं पश्यन् ॥२०॥

**प्रमेयदीपिका**

**यत्र चैवाऽऽत्मना** इत्यत्र पदत्रयं व्याख्याति– आत्मनेति ॥ अन्वयापेक्षया व्युत्क्रमः। पश्यन् इति स्थानविवेकार्थमुक्तम् ॥ २० ॥

**भावदीपः**

**व्युत्क्रमः** ॥ गीताक्रमव्यत्यासो भाष्यक्रम इत्यर्थः ॥ **पश्यन्** इति पदार्थे विगानाभावेन व्याख्यानाकरणाद् भाष्ये तदनुवादो व्यर्थ इत्यत आह– **स्थानेति** ॥ **पश्यन्** इत्यत्र कर्मतया श्रुताऽत्मपदस्य **भगवन्तम्** इति व्याख्येति ज्ञापनार्थमित्यर्थः ॥ २० ॥

**सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

**भाष्यम् — तत्त्वतः** भगवद्रूपात् ॥ २१ ॥

**प्रमेयदीपिका**

'तत्त्वतस्तद्भावाद्ब्रह्मत्वात्'[1] इति प्रमाणविरुद्धं व्यावर्तयितुमाह– **तत्त्वत** इति ॥

**भावदीपः**

तत्त्वतः इत्यनूद्य भावप्रधानस्तच्छब्दोऽयमिति भावेन तस्य प्रतिपद(पाद्य-)माह– तद्भावादिति ॥ तस्यार्थमाह– ब्रह्मत्वादिति ॥ २१ ॥

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ २२ ॥**

---

१. शाङ्करभाष्यम् ।

**तं विद्याद् दुःखसंयोगवियोगं योगसञ्ज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥**

**भाष्यम्** — दुःखसंयोगो येन वियुज्यते स **दुःखसंयोगवियोगः** । न केवलमुत्पन्नं दुःखं (वि)नाशयति, उत्पत्तिमेव निवारयतीति दर्शयति– **संयोगशब्देन** । **निश्चयेन योक्तव्यः** योक्तव्य एव बुभूषुणेत्यर्थः ॥ २३ ॥

**प्रमेयदीपिका**

ननु दुःखसम्बन्धस्य वियोगो ध्वंसः । स कथं योगः स्यात् ? इत्यत आह– **दुःखेति** ॥ करणेऽपि घञः स्मरणात् । एवं तर्हि दुःखवियोगमित्येव वक्तव्यम् । किं संयोगशब्देन? इत्यत आह– **न केवलमिति** ॥ वियोगशब्दो निवारणे वर्तत इति भावः । एतच्च पदाधिक्यादेव लभ्यते । नान्यथा ॥

ननु **स निश्चयेन योक्तव्यः** इति पुनर्विधानं किमर्थम्? **निश्चयेन** इत्यादिविशेषविधानार्थमिति चेन्न । महाफले सन्देहात् प्रवृत्त्यभावेन 'निश्चयेन' इत्यस्य वैयर्थ्यादित्यत आह– **निश्चयेनेति**॥ अयोगव्यवच्छेदे निश्चयशब्द इत्यर्थः[1]। कुत्रायोगो व्यवच्छिद्यते? इत्यत उक्तम्– **बुभूषुणेति** ॥ मुमुक्षुणेत्यर्थः ॥ २३ ॥

**भावदीपः**

**करणेऽपि घञः स्मरणादिति** ॥ 'अकर्तरि च कारके सञ्ज्ञायाम्'(**पा.सू.३.३.१९**) इत्यनेनेति भावः । कथमेतल्लाभः? शब्दार्थत्वादित्यत आह- **एतच्चेति** ॥ संयोगपदप्रयोगान्यथानुपपत्त्येत्यर्थः । **पुनर्विधानमिति** ॥ **उद्धरेत्** इत्यनेन विधानात् पुनःशब्दः ॥ **अयोग०** यवच्छेदेति ॥ असम्बन्धव्यवच्छेदो योगशब्दितसमाधिरूपोपायस्येत्यर्थः॥ २३॥

**सङ्कल्पप्रभावान् कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥**

**भाष्यम्** — **सर्वान्** सर्वविषयान् । **अशेषतः** एकैकविषयोऽपि **कामः** स्वल्पः

---

१. इदं वाक्यं ब्र.सू.भाष्यदीपिकायां १.१.३ भाष्यव्याख्यानावसरे उदाहृतम् ।

**कादाचित्कोऽपि न कर्तव्य इत्यर्थः । मनसैव नियन्तुं शक्यते नान्येनेत्येवशब्दः।।**

**( टीकाकृता मूलभाष्यपाठस्वरूपनिर्णयः )**

**प्रमेयदीपिका**

'सर्वान्' 'अशेषतः' इत्येतयोस्तात्पर्यमाह– **सर्वानिति** ।। **'कामः स्वल्पः कादाचित्कोऽपी'ति मूलपाठः** । नन्विन्द्रियग्रामनियमनमेवावश्यकम् । नतु करणनियमः । कथमुच्यते **मनसैवेन्द्रियग्रामम्** इति । तत्राह– **मनसैवेति** ।। स्वरूपकथनमेतदिति भावः । **इति** 'ज्ञापयितुम्' इति शेषः ।। २४ ।।

**भावदीपः**

**इति मूलपाठ इति** ।। [1]"कामः सङ्कल्पः' इत्यद्यतनकोशगतपाठो लेखककृत इत्युक्तं भवति ।। २४ ।।

**शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ।। २५ ।।**

**भाष्यम् — बुद्धेः कारणत्वं मनोनिग्रहे, आत्मरमणे च ।। २५ ।।**

**प्रमेयदीपिका**

**शनैः शनैरुपरमेद् बुद्ध्या** इति बुद्धेरपीन्द्रियग्रामनियमने कारणत्वस्य वक्ष्यमाणत्वात् कथमेतदित्यत आह– **बुद्धेरिति** ।। अनेन **उपरमेत्** इत्यस्यार्थद्वयमुक्तं भवति ।। २५ ।।

**भावदीपः**

**अर्थद्वयमिति** ।। विषयेभ्यः व्यावर्तनरूप एकोऽर्थः भगवति स्मरणरूपोऽन्योऽर्थ इत्यर्थद्वयमित्यर्थः ।। २५ ।।

**यतो यतो निश्चरति[2] मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ।। २६ ।।**

---

१. 'कामः सङ्कल्प' इति प्रामादिकः -श्रीनि ।

२. निश्चलति इति ब्रह्मानन्दीयपाठः ।

**भाष्यम् —यतो यतः यत्रयत्र । 'यतो यतो धावति'**[१] **इत्यादिप्रयोगात् । आत्मन्येव वशं नयेत्** आत्मविषय एव वशीकुर्यादित्यर्थः ।। २६ ।।

**प्रमेयदीपिका**

'यतो यतः श्रोत्रादेः'[२] इति प्रतीतिनिरासायाह– **यत** इति ।। शब्दादावित्यर्थः । कुतः सप्तम्यर्थे तसिर्लभ्यत इत्यत आह– **यत** इति ।। तथाचोक्तं 'आद्यादिभ्य उपसङ्ख्यानम्' इति । अन्यथा द्वारमात्रनियमे स्मरणस्य को निवारयिता । षष्ठ्या ह्यत्र भाव्यं सप्तमी तु कथम्? इत्यत आह– **आत्मनी**ति ।। २६ ।।

**भावदीपः**

**यत इतीति** ।। **'यतो यतो धावति दैवचोदितं मनः'(१०-१-४२)** इति भागवते दशमस्कन्धाद्याध्याये[३] प्रयोगादिति भाष्यार्थः ।। **आद्यादिभ्य इति** ।। 'प्रतियोगे पञ्चम्यास्तसिः' **(पा.सू..५.४.४४)** इति सूत्रे आद्यादिशब्देभ्यः 'सर्वविभक्त्यर्थे तसेरुपसङ्ख्यानम्' इति वार्तिककृतोक्तमित्यर्थः ।। ननु 'यतो यतो यस्माद् यस्मात्, श्रोत्रादिद्वारा मनो निर्गच्छति ततो ततो द्वाराणि नियम्येत्यर्थः कुतो न? इत्यत आह–**अन्यथेति** ।। द्वारार्थत्व इत्यर्थः।। **स्मरणस्येति** ।। शब्दस्पर्शादिविषयस्मरणस्येत्यर्थः । स्वात्मार्थत्वमात्मपदं मत्वा शङ्कते– **षष्ठ्या ह्यत्रेति** ।। २६ ।।

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ।। २७ ।।**
**एवं युञ्जन्**[४] **सदाऽऽत्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ।। २८ ।।**

**भाष्यम् — पूर्वश्लोकोक्तं प्रपञ्चयति– एवं युञ्जन्निति** ।। २८ ।।

---

१. **'सार्वविभक्तिकस्तसिरिति वचनात् यतो यतो यत्र यत्र' इति विजयध्वजीये ।(१०.१.४२)**
२. शाङ्करभाष्यनिराकरणम् ।
३. दशमाध्याये इति का-पाठः ।
४. युञ्जन्नेवं -शाङ्करभाष्यपाठः ।

**प्रमेयदीपिका**

**प्रशान्तमनसम्** इत्युक्तमेव पुनः कस्मादुच्यते? इत्यत आह– **पूर्वेति** ।। २८ ।।

**भावदीपः**

उक्तमेवेति ।। **'सुखमात्यन्तिकम्'**(६-२१)इत्यादिश्लोकोक्तमेवेत्यर्थः । अथवा **युञ्जन्नेवं सदाऽऽत्मानम्** इत्यादिश्लोकोक्तमेवेत्यर्थः ।। २७ ।।

( उत्तमाधिकारिध्येयनिरूपणम् )

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ।। २९ ।।**

**भाष्यम्** — ध्येयमाह– **सर्वभूतस्थमिति** ।। **सर्वभूतस्थमात्मानं** परमेश्वरम् । **सर्वभूतानि च आत्मनि** परमेश्वरे । तं च परमेश्वरं ब्रह्मतृणादावैश्वर्यादिना साम्येन पश्यति । तच्चोक्तम् –

'आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।[1]
अपश्यत् सर्वभूतानि भगवत्यपि चाऽत्मनि ।।'[2] (भाग.३.२९.४७) इति
**'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्'** (१३.२८)

इति च ।। २९ ।।

**प्रमेयदीपिका**

**'एवं युञ्जन्'**(६-२८)इति योगप्रकरणस्य फलकथनेनोपसंहृतत्वात् किमुत्तरेण ? इत्यत आह– ध्येयमिति ।। ननु **'मच्चित्तो युक्तः'**(६-१४) इत्यादिना ध्येयमुक्तमेव । सत्यम् ।

१. 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना' १- कैवल्योपनिषत् ।।
' समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति' इति मनुस्मृतौ उत्तरार्धः-१२.९१.

२. 'तस्य अपरोक्षज्ञानप्रकारमाह- आत्मानमिति ।। अत्र आत्मशब्दद्वयं भगवत्परमेव न स्वात्मपरमित्यभिप्रेत्य समाख्याप्रमाणं पठति भूतगर्भश्चेति ।(भा.ता. -भूतगर्भश्च भूतस्थः पूर्ण एवं द्विरूपवान् । अत आत्मेति तं प्राहुः सदैवाप्तगुणो यतः ।।) भूतानि गर्भे यस्येत्यनेन भूतानि चात्मनि इत्येतदुक्तार्थम् । द्विरूपवान् इत्यनेनान्योन्याश्रयत्वशङ्का परिहृता ।।' इति यादवार्याः ।।

तथाऽप्युत्तमाधिकारिणां ध्येयमनेनोच्यत इत्यदोषः ।। 'आत्मानं स्वात्मानम्'[१] इत्यादि प्रतीति-पराकरणार्थमाह– **सर्वे**ति ।। कुतोऽयमर्थः? इत्यतः पुराणसमाख्यानाद् इत्याह– **तच्चे**ति ।। **सर्वत्र समदर्शनः** इत्यस्योक्तार्थतां गीतासम्मत्याा उपपादयति– **सम**मिति ।।

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ।। ३० ।।**

**भाष्यम् — फलमाह– यो मा**मिति ।। **तस्याहं न प्रणश्यामि** इति । सर्वदा योगक्षेमवहः स्यामित्यर्थः । **स च मे न प्रणश्यति** सर्वदा मद्भक्तो भवति । सत्यपि स्वामिन्यरक्षत्यनाथः । एवं भृत्येऽप्यभजत्यभृत्य इति हि प्रसिद्धिः । उक्तं च -

'सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति ।
अचला तस्य भक्तिस्स्यात् योगक्षेमं वहाम्यहम्'

इति गारुडे ।। ३० ।।

## प्रमेयदीपिका

किञ्चैतदर्थानुवादेन फलप्रतिपादकमुत्तरवाक्यमप्यस्य भगवद्विषयत्वं ज्ञापयतीति भावेनाऽह– **फल**मिति ।। अस्य 'ध्यानविषयस्य' इति शेषः ।। ननु भगवान्, तद्ध्यायी च सर्वान् प्रति नित्यौ । तत्कथमेतत् ? इत्यत आह– **तस्ये**ति ।। कथमयमर्थो लभ्यते? इत्यत आह– **सत्यपी**ति ।। अविद्यमाननाथोऽयमिति भृत्ये प्रसिद्धिः । एवं सत्यपि भृत्येऽभजति 'अविद्यमानभृत्योऽयम्' इति स्वामिनि प्रसिद्धिः ।।

एतदुक्तं भवति । विद्यमानस्यापि स्वयोग्यव्यापाराकरणसादृश्यादुपचारेण अविद्यमानता। प्रकृते तु तथात्वाभावात् **न प्रणश्यामी**त्यादि । रूढोपचारश्चायम् । अतो न प्रयोजनान्वेषण-मिति ।। अत्र पुराणसम्मतिमाह– **उक्तं चे**ति ।। ३० ।।

## भावदीपः

**तथात्वाभावादिति** ।। अरक्षणाभजनयोरभावात् **न प्रणश्यामि** इत्याद्याद्युक्तिः गीतायामित्यर्थः ।। ३० ।।

---

१. शाङ्करभाष्यम् ।

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥**

**( अपरोक्षज्ञानफलं नियतम् )**

**भाष्यम् — एतदेव स्पष्टयति– सर्वभूतस्थितमिति ॥ एकत्वमास्थितः सर्वत्र एक एवेश्वर इति स्थितः । सर्वप्रकारेण वर्तमानोऽपि मय्येव वर्तते ॥ एवमपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः । तथाऽपि प्रायो नाधर्मं करोति । कुर्वतस्तु महच्चेत् - दुःखसूचकं भवतीत्युक्तं पुरस्तात्** (३.१८.गी.भा.)।

## प्रमेयदीपिका

**यो माम्** (६.३०) इत्युक्तमेव पुनः किमर्थमुच्यत इत्यत आह– **एतदेवेति** ॥ 'एकत्वमास्थितः' इत्यस्यान्यथाप्रतीति[1]निरासार्थमर्थमाह– **एकत्वमिति** ॥ 'मयि वा मद्विकारे वा वर्तमानोऽपि' इत्यपव्याख्यान[2]निरासार्थमाह– **सर्वेति** ॥ न्यायेन वाऽन्यायेन वेत्यर्थः । अपव्याख्याने[3] थाल्प्रत्ययो न युक्त इति भावः । 'भगवन्तं भजतोऽधर्माचरणं सर्वथाऽप्यकिञ्चित्करम्' इति प्रतीतिनिरासायाह– **एवमिति** ॥ 'अधर्माचरणेऽपि' इति शेषः । ज्ञानफलं मोक्षः । आनन्दह्रासादिकं तु विद्यत एवेति भावः ॥

ननु ज्ञानिनो मोक्ष एवापेक्षितः । सोऽधर्माचरणेऽपि न प्रतिबद्ध्यते इति चेत् - तत् किमधर्मं करोतीत्यत आह– **तथाऽपीति** ॥ सर्वथाऽप्यकरणे **सर्वथा वर्तमानोऽपि** इत्युक्तमयुक्तमित्यत उक्तम्– **प्राय** इति ॥

एतेन 'न हीदृशस्य यथेष्टचेष्टता सम्भवति'[4] इति परकीयमस्मद्व्याख्यानदूषणमपि निरस्तं भवति ॥ प्रारब्धवशेन कदाचित्तथाभावदर्शनात् । कुतो न करोति? इत्यत आह– **कुर्वतस्त्विति**॥

## भावदीपः

**थाल्प्रत्यय इति** ॥ 'प्रकारवचने थाल्' (पा.सू.५.३.२२) इति पाणिन्युक्त्या अप्रकारार्थत्वादिति भावः ॥ **किमिति** ॥ अधर्मं करोषि किमिति योजना ॥ **यथेष्टचेष्टेति** ॥

१. शाङ्करभाष्यम् । २.शाङ्करभाष्यानुवादः । ३. परव्याख्याने- पां-श्रीनि। ४.शाङ्करभाष्यम् ।

यथेष्टप्रवृत्तिमत्तेत्यर्थः ।। **तथाभावदर्शनादिति** ।। अजामिलादाविति योज्यम् ।।

भाष्ये **पुरस्तात्** इत्यस्य तृतीये'**नैव तस्य कृतेनार्थः**' (३.१८) इति श्लोकभाष्ये **'ईषत् प्रारब्धम् अनर्थसूचकं च तद्भवति । महच्चेद् वृत्रहत्यादिवत्'** इत्यनेनेत्यर्थः ।। ३१ ।।

**( अपरोक्षज्ञानिकृतपापकर्मलेपविचारः )**

**भाष्यम् — आह च–**

**'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत् ।**
**प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति ।**
**आदिराजैस्तथा देवैर्ऋषिभिः क्रियते कियत् ।**
**बाहुल्यात् कर्मणस्तेषां दुःखसूचकमेव तत् ।।' इति ।। ३१ ।।**

**प्रमेयदीपिका**

अत्र प्रमाणमाह– **आह चेति** ।। **कियत्** 'महत्' इति शेषः । **कर्मणः** प्रारब्धस्य **बाहुल्यात्** प्राबल्यात् । लोके प्रवृत्तिकर्मणो बाहुल्येन चित्तविक्षेपादिति वा ।। ३१ ।।

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ।। ३२ ।।**

**भाष्यम् — साम्यं प्रकारान्तरेण व्याचष्टे– आत्मौपम्येनेति ।। ३२ ।।**

**प्रमेयदीपिका**

**'सर्वत्र समदर्शनः'**(६-२९) इत्यन्यथाव्याख्यानम्[१] इतोऽप्यसदिति भावेनाऽह– **साम्यमिति** ।। साम्यदर्शनम् । 'समदर्शनः' इत्युक्ते किं गोगवयादिवद् भवति साम्यदर्शनम् इत्याकाङ्क्षायाम् **एकत्वमास्थितः** इति स्वयमेव व्याख्यातम् । इदानीन्तु भगवदनुवर्ति[२]-विषयतयाऽपि व्याचष्ट इत्यर्थः ।। ३२ ।।

---

१. शाङ्करभाष्ये ।

२. भगवदनुवृत्ति इति भा.र.कोशे प्रतीकं गृहीतम् । सो-मातृकायां भावदीपे एवमेव प्रतीकग्रहणम् ।

### भावदीपः

**अन्यथाव्याख्यानमिति ।। परात्मसु समामतिः** इति पाठान्तरं प्रकल्प्य इत्यादिनोक्तं मयि....[1] तद्विकारेण वर्तमानोऽपि' इत्यपव्याख्यानम्, 'आत्मानं स्वात्मानम्' इत्यपव्याख्यानं वेत्यर्थः ।। **इतोऽपीति** ।। '**आत्मौपम्येन**'इति पद्येनापीत्यर्थः ।। साम्येन पूजादिरूपमित्यर्थः ।। **स्वयमेवेति** ।। कृष्णेनैवेत्यर्थः ।। **भगवदनुवर्तीति** ।। भगवद्भक्तविषयतेत्यर्थः ।। **'सर्वत्र'** इत्यस्य विष्णुभक्तेष्वित्यर्थ इति भावः ।। ३२ ।।

**( योगाननुष्ठानशङ्का-तत्परिहारश्च )**

**अर्जुन उवाच–**

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ।। ३३ ।।**

**भाष्यम् — एतस्य योगस्य स्थिरां स्थितिं न पश्यामि । मनसः चञ्चलत्वात् ।।**

### प्रमेयदीपिका

साम्यस्य योगस्य च प्रकृतत्वात् **एतस्य** इति कस्य परामर्श इति न ज्ञायते । अतस्तत्प्रदर्शनाय व्यवहितानां पदानामन्वयमाह– एतस्येति ।। योगस्य प्राधान्येन, साम्यस्य तु तृतीययाऽप्राधान्येन प्रकृतत्वादिति भावः । 'चञ्चलत्वात्' इत्यस्यान्यो धर्मी न प्रतीयते। अतो योग एव सम्बद्ध्यते । तथाच साध्याविशिष्टतेत्यत आह– **मनस** इति ।। एतच्चोत्तरवाक्यादवगम्यत इति भावः ।। ३३ ।।

### भावदीपः

**प्रकृतत्वादिति** ।। पूर्वार्धेनेति भावः ।। **साध्याविशिष्टतेति** ।। 'स्थिरां स्थितिं न पश्यामि' इत्यस्य 'चञ्चलतां पश्यामि योगस्य' इत्यर्थपर्यवसानादिति भावः ।। ३३ ।।

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।। ३४ ।।**

---

१. अत्र का-मातृका गलिता । मं-मातृकायामेष भाग एव नास्ति ।

( मनोनिग्रहोपायनिरूपणम् )

**श्रीभगवानुवाच -**

**असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥**

**भाष्यम् —** उक्तं च -

'मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा ।
विना अभ्यासं न शक्या स्याद् वैराग्याद्वा न संशयः'

इति व्यासयोगे ॥ ३४,३५ ॥

**प्रमेयदीपिका**

अत्राऽगमं चाऽह– उक्तं चेति॥ एतेन **'असंशयम्'**इति परिहारवाक्यमपि व्याख्यातम् ॥

**भावदीपः**

व्याख्यातमिति ॥ 'अभ्यासेन वैराग्येण च विना दुर्ग्रहणं नास्त्यसंशयम्' इत्युक्त्या 'ताभ्यां लभ्यते' इत्यर्थस्यात्र प्रतीतेरिति भावः ॥ ३५ ॥

**असंयताऽत्मना योगो दुष्प्राप्य[1] इति मे मतिः ।**
**वश्याऽत्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥**

**भाष्यम् —** नच कदाचित् स्वयमेव मनो नियम्यते ।

'शुभेच्छारहितानां च द्वेषिणां च रमापतौ ।
नास्तिकानां च वै पुंसां सदा मुक्तिर्न युज्यते'

इति निषेधाद् ब्राह्मे ॥ ३६ ॥

**प्रमेयदीपिका**

**'असंयत'** इति श्लोको व्यर्थ इव प्रतीयते । तन्निवर्त्यामाशङ्कां सूचयंस्तात्पर्यमाह– नचेति ॥

---

१. दुष्प्राप इति भा.र.को पाठः । शाङ्करभाष्येपि ।

'यथा मत्तमातङ्गः स्वयमेव श्रान्तः शान्तो भवति तथा विषयैस्तृप्तं[1] **मनः कदाचित् स्वयमेव नियतं भवति । किमभ्यासादिना' ?** इत्येतत् **नैवे**त्यर्थः । कुतः? इत्यत आह– शुभेति ।। **सदा** इति पूर्वेण सम्बन्धः । अनेनात्र शुभेच्छादिकमप्युपलक्षितम् इति सूचितम् । मुक्तिबीजत्वात् मनोनियमनस्य **मुक्तिरित्युक्तम्** ।। ३६ ।।

**भावदीपः**

**अनेनात्र शुभेच्छादिकमप्युपलक्षितमिति** ।। अत्र गीतायां **'वश्यात्मना तु यतता'** इत्यनन्तरं 'शुभमिच्छता हरिद्वेषनास्तिक्याभ्यां हीनेन'[2] इत्युपलक्षितमित्यर्थः । 'मनो नियमनं न जायते' इति वक्तव्ये 'मुक्तिर्न जायते' इत्युक्तिरयुक्तेत्यतः प्रकृतार्थसंवादाय मुक्तिपदेन मुक्तिहेतुर्मनोनियतिरेव ग्राह्येति भावेनाऽह– **मुक्तिबीजत्वादिति** ।। ३६ ।।

**योगभ्रष्टगतिविषयकप्रश्नोत्तरम्**

**अर्जुन उवाच -**

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ।। ३७ ।।**

**भाष्यम् — अयतिः अप्रयत्नः ।। ३७ ।।**

**प्रमेयदीपिका**

अचतुर्थाश्रमीति [3]प्रतीतिनिरासाय आह– अयतिरिति ।। ३७ ।।

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ।। ३८ ।।**
**[4]एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ।। ३९ ।।**

---

१. तुष्टं -गुज-वे-ग्रं ।
२. शुभमिच्छता हरिद्वेषिष्यस्ति(षि)नास्तिकाभ्यां हीनेन इति का.मातृका । अस्पष्टम् ।
३. वल्लभाचार्यकृततत्त्वदीपिकायाम् अयतिः असन्नयसी इति व्याख्या कृता ।
४. एवं मे -इति रामानुजीयपाठः ।

**श्रीभगवानुवाच–**

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥**

**प्राप्य पुण्यकृतां[1] लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥**

**अथवा योगिनामेव कुले भवति[2] धीमताम् ।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥**

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥**

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

**भाष्यम्** — योगस्य जिज्ञासुरपि, ज्ञातव्यो मया योग इति यस्यातीवेच्छा **सोऽपि शब्दब्रह्म अतिवर्तते** परं ब्रह्म प्राप्नोतीत्यर्थः ॥ ४४ ॥

**प्रमेयदीपिका**

उप्रत्ययप्रयोगे 'न लोकाव्यय' **(पा.सू.२.३.६९)** इति षष्ठीनिषेधात् 'योगस्य स्वरूपम्' इत्यध्याहृत्य [3]कश्चिद्व्याख्यातवान् । स श्रमो वृथैव । **नञा निर्दिष्टमनित्यम्** इत्यस्यानित्यत्वात् । अतः कात्यायनः 'द्विषः शतुर्वा वचनम्'**(पा.सू.२.३.६९वार्तिकम्)** इत्याद्यवोचद् इत्यभिप्रेत्याह– **योगस्येति** ॥ **'ब्रह्मजिज्ञासा'(ब्र.सू.१.१.१)** इत्यादाविव विचारार्थताशङ्कानिरासाय व्याचष्टे– **ज्ञातव्य इति** ॥ 'अतीव' इत्युप्रत्ययस्यार्थः । 'सनाशंसभिक्ष उः' **(पा.सू.३.३.६८)** इति तच्छीलादौ तस्य विहितत्वात् । इच्छार्थे बाधकाभावादिति भावः ॥

---

१ पुण्यकृतान् इत्यपि पठन्ति इति भा.र.कोशे ।

२. महति-इति रामानुजीयपाठः, वे-ग्रं ।

३. शाङ्करभाष्ये ।

'शब्दब्रह्मातिवर्तते' इत्येतद् 'वेदोक्तकर्मकारिभ्योऽतिरिच्यते'[१] इति कश्चिद्व्याचष्टे । तदसत् । **'ततो याति परां गतिम्'** (६.२२) इत्यस्यार्थस्य परामर्शादिति भावेनाऽह– **शब्देति** ।। शब्दब्रह्मशब्देन वैदिकविधिनिषेधावत्रोच्येते । तदतिवर्तनं परब्रह्मप्राप्तस्यैवेत्यत एवमुक्तम् ।।४४

**भावदीपः**

**अनित्यत्वादिति** ।। 'इकोऽचि विभक्तौ' **(पा.सू.७.१.७३)** इत्यत्राजुग्रहणं 'हे वारि' इति सम्बुद्ध्यन्तवारिशब्दे नुमागमनिवृत्त्यर्थं क्रियते । 'इकोऽचि विभक्तौ' **(पा.सू.)** इत्येवोक्तौ च 'न लुमताङ्गस्य' **(पा.सू.१.१.६३)** इति सूत्रेण 'स्वमोर्नपुंसकात्' इति लुकि लुप्तविभक्तेरकार्यकरत्वेन विभक्तिपरत्वाभावेनैव नमुटो प्राप्तेः, 'व्यर्थं सदजुग्रहणं 'न लुमताङ्गस्य'**(पा.सू.)** इति नञा निर्दिष्टस्यानित्यत्वं ज्ञापयति' इत्याहुः । स्वयं ज्ञापकान्तरमाह– **अत एवेति** ।। 'न लोकाव्ययनिष्ठा खलर्थतृनाम्' **(पा.सू.२.३.६९)** इति तृन्नन्तनिषेधस्यानित्यत्वादेव 'द्विष अप्रीतौ'**(पा.धा.१०१३)** इति धातोः शत्रन्तस्य योगे षष्ठीनिषेधो विकल्पेन भवति । 'चोरं द्विषन् चोरस्य द्विषन्' इति । 'न लोकाव्ययनिष्ठखलर्थतृनाम्' **(पा.सू.२.३.६९)**[२] इति सूत्र एव वार्तिके वार्तिककृदवोचत्[३] । अतो ज्ञायते 'न लोक' **(पा.सू.)** सूत्रनिषेधो अनित्य इति भावः ।। **ताच्छील्यादाविति** ।। 'आ केस्तच्छीलतद्धर्मतत्साधुकारिषु' **(पा.सू.३.२.१३)** इत्यधिकृत्य सन्नन्ताद् धातोः 'शंसु स्तुतौ' **(पा.धा.७२८)** इति धातोः, भिक्षशब्दाच्च उप्रत्ययविधानादित्यर्थः ।। ४४ ।।

**प्रयत्नायतमानस्तु योगी संशुद्धकिल्बिषः ।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।। ४५ ।।**

**भाष्यम् — नैकजन्मनीत्याह– प्रयत्नादिति।।** जिज्ञासुर्ज्ञात्वा प्रयत्नं करोति । एवमनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानी भूत्वा **परां गतिं याति** । आह च–

'अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः ।
ज्ञात्वा ध्यात्वा तथा दृष्ट्वा जन्मभिर्बहुभिः पुमान् ।
विशेन्नारायणं देवं नान्यथा तु कथञ्चन'

इति नारदीये ।। ४५ ।।

---

१. शाङ्करभाष्यानुवादः ।
२. न लोक - एकस्मिन् कोशे एतावानेव । ३ 'वृत्ते ...लो यत् -'इति कां मातृकायाम् ।

**प्रमेयदीपिका**

योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेद् योगानुष्ठानवैयर्थ्यं स्यादित्यत एतदेवाशङ्क्य भगवतैवोत्तरं दत्तमित्याह– **नैकेति** ।। न योगजिज्ञासामात्रेणेत्यभिप्रायः । अत्र योगजिज्ञासोः अपरामर्शात् कथं तद्विषयमेतत्? इत्यतोऽध्याहारेण व्याचष्टे– **जिज्ञासुरिति** ।। **ज्ञात्वा 'योगम्'** इति शेषः । 'यातनानन्तरमनेकजन्मसंसिद्धः'[१] इत्यन्यथाप्रतीतिनिरसाय आह– **एवमिति** ।। योगे सम्पूर्णे संसिद्धेर्विलम्बे कारणाभावादिति भावः ।।

व्याख्यातार्थे पुराणसम्मतिमाह– **आह चेति** ।। ४५ ।।

**भावदीपः**

**परां गतिमितीति** ।। 'याति परां गतिमुत्तरलोकस्थेन 'अशब्दं ब्रह्म' इत्यनेनोक्तार्थस्य अपरामर्शादिति इत्यर्थः ।। ४८ ।।

**( योगस्तुतिः )**

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ।। ४६ ।।**
**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ।। ४७ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे [२]अभ्यासंयमयोगो नाम षष्ठोऽध्यायः ।।

**भाष्यम् — ज्ञानिभ्यः योगज्ञानिभ्यः । तपस्विभ्यः कृच्छ्रादिचारिभ्यः ।**

**( ज्ञान-ध्यानादिषु तारतम्यम् )**

**उक्तं च –**

**'कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते ।**

---

१. शाङ्करभाष्यानुवादः ।

२. कर्मयोगसाध्यज्ञानान्तरङ्गसाधनसमाधियोगप्रपञ्चनम् इति पां ।

तत्रापि शेषश्रीब्रह्मशिवादिध्यानतो हरेः ।।
ध्यानं कोटिगुणं प्रोक्तमधिकं वा मुमुक्षुणाम्'[१]

इति गारुडे ।

'अज्ञात्वा ध्यायिनो ध्यानाज्ज्ञानमेव विशिष्यते ।
ज्ञात्वा ध्यानं ज्ञानमात्रात्, ध्यानादपि तु दर्शनम् ।
दर्शनादपि भक्तेश्च न किञ्चित् साधनाधिकम्[२]'

इति च नारदीये ।। ४६-४७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये षष्ठोऽध्यायः ।। ६ ।।

## प्रमेयदीपिका

ननु ज्ञानं योगस्य फलम् । तत्कथं ज्ञानिभ्योऽप्यधिको मतः ? इत्यत आह– **ज्ञानिभ्य** इति ।। यद्यपि **ज्ञानतपसा पूताः** (४.२०) इति ज्ञानमपि तपः । तथाऽपि तदतिरिक्तमेवात्र विवक्षितमित्याह– **तपस्विभ्य** इति ।। ब्रह्मज्ञानादाधिक्यस्यासम्भवाद्योगज्ञानाधिक्यस्य पृथगुक्तत्वादिति भावः । अत एव पूर्वं तद्व्याख्यातम् ।।

उक्तार्थमुपपादयन् श्लोकद्वयार्थं पुराणवाक्येनाऽह– **उक्तं** चेति ।। **मुमुक्षुणां** मुमुक्षूणाम् ।

---

१. 'अपरोक्षदृशेरेव यस्मान्मोक्षो न चान्यथा । अपरोक्षदृशिश्चापि श्रवणान्मननादनु ।
सम्यङ् निश्चिततत्वस्य निदिध्यासनया भवेत् । द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम् ।।
एकं ध्यानं हरेरन्यत् चत्वार्यङ्गानि तस्य च ।। ..।। सर्वस्मात् श्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ।
अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा । ध्यानं निश्चिततत्वस्य तस्माच्छास्त्रावमर्शनम् ।।
वरं दशगुणं तस्माद् व्याख्यैकस्य शतोत्तरा ।..प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः ।।
स्वाध्यायोतः कोटिगुणः ततोनन्तगुणा हरेः । पूजा तत्त्रिगुणं ध्यानमिति धर्मक्रमः स्मृतः'

त.सा.सं ४-१३०तः१४१ ।।

'ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः । तीर्थदानजपाद्याश्च स्वाध्यायो हरिकीर्तनम् ।
द्वादश्यादिव्रतं चैव तुलस्याद्यैरथार्चनम् । सर्वं भक्त्यर्थमुद्दिष्टं निष्फलं तु तया विना ।
विष्णुभक्तियुतो मुक्तिं याति नान्यः कथञ्चन ।।' वृ.उ.भा ।

२. 'साधनानि तु सर्वाणि भक्तिज्ञानप्रवृद्धये ।
नैवान्यसाधनं भक्तिः फलरूपा हि सा यतः' इति वृ.उ.भा.३-५-४ पैङ्गिश्रुतिः ।

एतेन सर्वेषामपि योगिनां मध्ये यो मां भजते स युक्ततरो मतः । तत्रापि मद्गतेनान्तरात्मना यो भजते स **युक्ततमो मतः** इति व्याख्यातं भवति ।।

**ज्ञानिभ्योऽपि मतोऽधिकः** इत्येतद्योगज्ञानविषयमेव, न तद् ब्रह्मज्ञानविषयम् इत्येतत् पुराणवाक्येन स्थापयति– **अज्ञात्वेति** ।। 'योगम्' इति शेषः । **साधनाधिकं** साधनेष्वधिकम् ।। ४६ ।। ४७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां

जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां षष्ठोऽध्यायः समाप्तः ।। ६ ।।

**भावदीपः**

**अत एवेति** ।। 'तपस्विपदेन ज्ञानग्रहः' इति ज्ञापनार्थत्वादेव **ज्ञानिभ्यः** इतिपदं पूर्वं व्याख्यातम् । अन्यथा पाठक्रमात् तपस्विपदमेव प्राग् व्याख्येयमिति भावः ।। **योगमिति शेष इति** ।। एतेन **ज्ञानमेव** इति **ज्ञात्वा** इति च योगज्ञानविषयमेवेति दर्शितम् । कर्मधारयपक्षे अधिकसाधनमिति स्यादित्यत आह– **साधनेष्वधिकमिति** ।। ४६,४७ ।।

।। इति श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते षष्ठोऽध्यायः ।।

## ।। अथ श्रीमद्भगवद्गीतायां सप्तमोऽध्यायः ।।

**श्रीभगवानुवाच –**

**मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ।। १ ।।**

**भाष्यम् —** साधनं प्राधान्येनोक्तमतीतैरध्यायैः । उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधान्येनाऽह । **आसक्तमनाः** अतीव स्नेहयुक्तमनाः । **मदाश्रयः** भगवानेव सर्वं मया कारयति, स एव च मे शरणम् , तस्मिन्नेवाहं स्थित इति स्थितः । **असंशयम्, समग्रम्** इति क्रियाविशेषणम्[१] ।। १ ।।

### प्रमेयदीपिका

ज्ञानसाधनादन्यदुत्तराध्याय प्रतिपाद्यं वक्तुं **'योगे त्विमां शृणु '**(२.३९) इति प्रतिज्ञात-मसमाप्य कथमर्थान्तरमुच्यते? इत्याशङ्कां तावत्परिहरति– **साधनमिति** ।। 'ज्ञानस्य' इति शेषः । तत्र तत्र भगवन्महिम्नोऽपि वर्णितत्वेन **प्राधान्येन** इत्युक्तम् । प्राचुर्येणेत्यर्थः । **'उक्तम्'** इत्यनेन प्रतिज्ञातसमाप्तिं सूचयति । तच्च प्रतिज्ञान्तरकरणादवगम्यते ।।

इदानीमुत्तरग्रन्थप्रतिपाद्यमाह– **उत्तरैस्त्विति** ।। अध्यायैरिति वर्तते । अनेन ज्ञान-विज्ञानशब्दौ ज्ञेयभगवन्माहात्म्यपराविति सूचितम् । अत्रापि कचित्साधनस्योक्तत्वात् **प्राधान्येन** इत्युक्तम् । सङ्गतिस्तु प्रथमश्लोक एवोक्ता । 'अनेन द्विविधेन योगेन यज्ज्ञातव्यं तच्छृणु' इत्युक्तत्वात् । 'आसक्तमनाः सम्बद्धमनाः'[२] इति प्रतीतिनिरासायाह– **आसक्तेति** ।। **'अतीव'** इत्याङोऽर्थः । सम्बन्धमात्रस्य योगानङ्गत्वादिति भावः । भगवदाश्रयत्वं सर्वसाधारणं कथं योगिनो विशेषणम्? इत्यत आह– **मदाश्रय** इति ।। **शरणं** रक्षकः[३]। इति **स्थित** इति जानन्निति यावत् ।।

**'असंशयं समग्रम्'** इत्युभयं भगवद्विशेषणत्वेन भास्करो व्याख्यातवान् -'संशयरहितं

---

१. अत्राधिकविचारः- **'देवमेवापरे'** इति पूर्वत्र । द्रं -सुधायां, ७-सम्पुटे. ३१५९-तः३१६४ पत्रेषु।

२. **रामानुजभाष्ये ।**

३ **'शरणं गृहरक्षित्रोः'** इति अ.को.३-२.९ ।

समग्रं कृत्स्नं माम्' इति । अपरस्तु[१] 'समग्रम्' इत्येव, 'समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसम्पन्नं मां.. संशयमन्तरेण' इति । तन्निरासार्थमाह– **असंशयमिति** ।। तव समग्रं यथा भवति तथेत्यर्थः । नहि भगवतः संशयराहित्यमिदानीं वक्तव्यम् । नच भगवान् समग्रो अन्येन केनचिच्छक्यो[२] ज्ञातुम् । **'स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वम्'**(१०.१५) इति वक्ष्यमाणत्वादिति भावः ।। १ ।।

**भावदीपः**

भगवन्महिमोक्तेरत्राप्राधान्यनिरासाय प्राधान्य[३]शब्दार्थमाह– **प्राचुर्येणेति** ।। **प्रतिज्ञान्तरेति** ।। **'यथा ज्ञास्यसि तच्छृणु'** इति प्रतिज्ञान्तरकरणादित्यर्थः ।। **सङ्गतिस्त्विति** ।। पूर्वोत्तरषट्कयोः **'मय्यासक्त'** इति श्लोक एव उक्तमित्यर्थः[४]। [५]तां व्यनक्ति– **अनेनेति** ।। **'योगे त्विमां शृणु'** (२.३९) इति श्लोके द्वितीये प्रतिज्ञातं ज्ञानस्य बहिरङ्गसाधनं कर्मयोगम् आपञ्चमाध्यायसमाप्ति निरूप्य, पञ्चमे तदन्तरङ्गसाधन[६]समाधियोगो निरूपित इति **'अनेन पूर्वोक्तेन द्विविधेन योगेन'** इत्युक्तम् ।। १ ।।

**( श्रवणं प्रवचनाधीनम् )**

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।। २ ।।**[७]

**भाष्यम् —** इदं मद्विषयं ज्ञानम् । **विज्ञानं** विशेषज्ञानम् ।। २ ।।

---

१. शाङ्करभाष्ये ।
२. श-मा. श्रीनि । शक्य-प्रच ।
३. का । 'पदार्थ-' इति सो मातृकायाम् ।
४. 'उक्तेत्यर्थः' -इति सो मातृकापाठः।
५. का । सो मातृकायाम् 'तद्व्यनक्ति' इति पां ।
६. सो-मातृकायाम् । 'तदन्तरङ्गसाधनसमाधिः निरूपितः'इति का ।
७. 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति यत् सर्वेश्वरत्वोपपादकं सकलजगत्स्रष्टृत्वसंहर्तृत्वादिगुणवत्तयोपदिश्यमानं स्वस्वरूपं तत् विज्ञानम् । उक्तरीत्या विशिष्य स्वगुणज्ञानं वा विज्ञानम्। अवजानन्ति माम् इत्याद्यपि विज्ञानम् । स्वावमन्तॄणामाशाविघटकस्वस्वरूपस्य निरूपणात् । स्वभजकानां तु महामाहात्म्यसत्यसङ्कल्पत्वादिमहिमाप्रदर्शकस्वस्वरूपस्य निरूपणात्'

इति वादिराजस्वामिनः ।

### प्रमेयदीपिका

ननु ज्ञानं वक्ष्यते, न तूक्तम् । तत्कथमिदमिति परामर्शः? इत्यत आह– इदमिति।। 'माम्' इति स्वस्य प्रकृतत्वात्तत्सम्बन्धित्वेन ज्ञानमपि प्रकृतमिति भावः । 'सविज्ञानं स्वानुभव-संयुक्तम्'[1] इत्येतदपाकर्तुं विज्ञानपदार्थमाह– **विज्ञानमिति** ।। अस्यैव वक्ष्यमाणत्वात् । अपरस्य तदभावादिति भावः ।। २ ।।

### भावदीपः

वक्ष्यमाणत्वादिति ।। '**स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम**'(१०.१५) इति दशमे वक्ष्यमाणत्वादित्यर्थः ।। २ ।।

( भगवज्ज्ञानं दुर्लभम् )

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां [2]कश्चिन्मां वेत्ति तत्त्वतः ।। ३ ।।**[3]

**भाष्यम्** — दौर्लभ्यं ज्ञानस्याऽह– **मनुष्याणामिति** ।। ३ ।।

---

१. शाङ्करभाष्ये । 'सविज्ञानं विज्ञानसहितं स्वानुभवसंयुक्तम् 'इति तद्भाष्ये ।

२. (अ)'कश्चित् - भगवज्ज्ञानार्थं यततां मध्ये साधनपूर्तिमान् यः कश्चिदिति वा । उक्तं च गीतायाम्- 'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इत्यादिना । अथवा 'मारुते वेधसि ब्रध्ने पुंसि कं शिरोम्बुनि' इत्यभिधानात् को वायुः । चेतयतीति स्वावरं सर्वमिति चित् । कश्चासौ चिच्चेति विग्रहः कश्चित् मुख्यप्राणः' इति **सनत्सुजातीय**(३.३९)**व्याख्याने वादिराजीये** ।

(आ)'त्यागेनैके अमृतत्वमानशुः' इति श्रुतिव्याख्याने **ब्र.सू.भा.३.३.३० तत्त्वप्रदीपिकायाम्** - त्यागेनैके इत्यत्रापि त्यागेनामृतत्वमानशुः ते कियन्तः इत्याकाङ्क्षायां केचिदेवेत्यर्थः । मनुष्याणां सहस्रेषु कश्चित्' इत्यादिवत् '।

(इ) **ब्र.सू.भा.३.४.४० तत्त्वप्रदीपिका** 'अनन्तेषु जीवेषु कियांश्चिदेव जनो ज्ञानाधिकारीत्युक्तम् । श्रुतिलिङ्गाभ्यां च बहुजनेषु विरलो ज्ञानयोग्यो देवभाग इति पर्यवसितम् । मनुष्याणां ..सिद्धये' इति च भगवद्वचनम् ' ।

३. (अ) **अनु.३.४.१६(सुधा.पृ.५१३८)** सिद्धये ज्ञानाय । यततामपि मध्ये केचित् सिद्धा भवन्ति । सिद्धानां मध्य इति योज्यम् । तत्त्वतः प्राचुर्येण । एकं च तत्त्वतो ज्ञातुम् इति यथा।।

(आ) मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ।। **भाग.६.१४.५। विशेषस्तत्तात्पर्ये ।**

**प्रमेयदीपिका**

ननु ज्ञानादिवचनं प्रतिज्ञाय यत्किञ्चित् कथमुच्यते? इत्यत आह– **दौर्लभ्यमिति** ।। 'श्रोतुरादरजननार्थम्' इति शेषः । ज्ञानस्य दौर्लभ्ये, विज्ञानस्य तत् सुतराम् ।। ३ ।।

( ज्ञानस्वरूपम् )

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ।। ४ ।।**

**भाष्यम् —** प्रतिज्ञातं ज्ञानमाह– **भूमिरित्यादिना** ।। महतोऽहङ्कार एवान्तर्भावः।।

**प्रमेयदीपिका**

'मनुष्याणाम्' इतिवदुत्तरमप्यन्यार्थमिति प्रतीतिनिरासार्थं प्रतिज्ञातयोरुभयोः किमादावुच्यते? इत्यपेक्षायां चाह– **प्रतिज्ञातमिति** ।। असङ्गतिपरिहारायानन्यार्थताज्ञापनाय च ज्ञानस्य प्राथम्ये हेतुसूचनाय च **प्रतिज्ञातम्** इत्युक्तम् । प्रतिज्ञातत्वेन सङ्गतं प्रतिज्ञातमेव । नतु तदर्थम् । प्राथम्येन प्रतिज्ञातम् । **'रसोऽहम्'** इत्यतः प्राक्तनग्रन्थसङ्ग्रहाय आदिपदम् । महत्तत्वमत्र नोपात्तम् । तत् किं नास्त्येव? इत्यत आह– **महत इति** ।। **अहङ्कारे** अहङ्कारशब्दार्थेऽन्तर्भावः । कार्यवाचिनाऽहङ्कारशब्देन कारणस्य महतोऽप्युपलक्षणमेव । न त्वभाव इत्यर्थः ।। ४ ।।

**भावदीपः**

प्राथम्ये हेतुसूचनं शेषोक्त्या व्यनक्ति– **'प्राथम्येन प्रतिज्ञातमिति** ।। ४ ।।

( चित्प्रकृतिरपि भगवद्वशा )

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**[2]
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ।। ५ ।।**

**भाष्यम् — अपरा** अनुत्तमा । वक्ष्यमाणमपेक्ष्य । **जीवभूता** श्रीः । जीवानां

१. 'प्राधान्येन' इति सो मातृकापाठः ।
२. स्पष्टं च जीवत्वमुक्तं चित्प्रकृतेः ' प्रकृतिं ..मव्ययम्' इत्यादौ ।(वि.त.नि.व्या.टि.पृ-७०१)

**प्राणधारिणी । चिद्रूपा[१] भूता सर्वदा सती ।**

**'एतन्महद्भूतम्' (बृ.उ.२.४.१२)**

**इति श्रुतेः ।**

**प्रमेयदीपिका**

अपरशब्दस्यानेकार्थत्वाद् विवक्षितमर्थमाह– **अपरेति** ।। अनुत्तमत्वस्य सापेक्षत्वात् किमपेक्षया? इत्यत आह– **वक्ष्यमाणामिति** ।। सन्निधानादिति भावः । 'जीवलक्षणां जीवत्वं वा प्राप्ताम्'[२] इति व्याख्याननिरासार्थमाह– **जीवभूतेति** ।। कथं सा जीवभूता? इत्यत आह– **जीवानामिति** ।। **प्राणधारिणी** इत्येवोक्ते स्वप्राणधारिणी इति प्रतीतिः स्यात् । तन्निरासार्थमुक्तम् – **जीवानामिति** ।। सर्वजीवदेहेषु स्थित्वा तदीयान् प्राणान् तत्र धारयतीत्यर्थः । स्वप्राणधारिणी कुतो न स्यात्? इत्यत आह– **चिद्रूपेति** ।। ज्ञानात्मकविग्रहवती ।।

यद्वा 'जीव प्राणधारणे'**(पा.धा.५६२)** इत्यतो जीवशब्दस्य यौगिकार्थमुक्त्वा गौणीं वृत्तिम् आश्रित्यार्थान्तरमनेनोक्तम् । भूतशब्दस्य सर्वदा सत्ववाचित्वे प्रयोगं दर्शयति– **एतदिति**।। प्रकृतिमपेक्ष्य श्रियः परत्वोपादानदार्थम् **एतत्** ।।

**भावदीपः**

**गौणीं वृत्तिमिति** ।। **जीवभूता** इत्यस्य[३] जीववद्वृत्तित्वरूपगुणयोगाज्जीवपदोक्त[४] इत्यर्थः ।। **एतदितीति** ।। जीवभूतेति विशेषणमित्यर्थः ।।

**भाष्यम् — जगाद च -**

**'प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा ।**
**अव्यक्ताख्या जडा सा च सृष्ट्या भिन्नाऽष्टधा पुनः ।।**
**महान् बुद्धिर्मनश्चैव पञ्च भूतानि चेति हि ।**
**अवरा सा जडा श्रीश्च परेयं धार्यते तया ।।**
**चिद्रूपा सा त्वनन्ता च अनादिनिधना परा ।**

१. मातृकायाम् , प्रभ । चिद्रूपभूता इति मुद्रितसर्वपाठः ।
२. शाङ्करभाष्यानुवादः ।
३. सो मातृकायामेवेमौ शब्दौ ।
४. 'जीवपक्षेक्तेत्यर्थः '-पां ।

यत्समं तु प्रियं किञ्चिन्नास्ति विष्णोर्महात्मनः ।।
नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि ।
ताभ्यामिदं जगत्सर्वं हरिः सृजति भूतराट्'

इति नारदीये ।। ५ ।।

### प्रमेयदीपिका

**'भूमिः'** इत्यादेरभिमतमर्थं पुराणवाक्येन स्थापयति– **जगाद चेति** ।। **देवस्यैव** । सृज्यत इति सृष्टिः=कार्यम् । कार्यरूपेणेत्यर्थः । अनेन 'भूम्यादिशब्दैः पञ्चतन्मात्राण्येव उच्यन्ते । न स्थूलानि भूतानि । मनः इति तत्कारणमहङ्कारः । बुद्धिरिति महत्तत्वम् । अहङ्कार इत्यविद्यासहितमव्यक्तम् । 'भिन्ना प्रकृतिरष्टधा' इति वचनात्' इति [1]व्याख्यानं निरस्तम् ।।

**'कार्यरूपेणाष्टधा भिन्ना'** इति व्याख्यानसम्भवेन प्रसिद्धार्थपरित्यागायोगात् । महत्यहङ्कारस्य अन्तर्भावः **'इत्येव'** इति सम्बन्धः । **'जडा'** इत्यवरत्वोपपादनम् । **श्रीः परा** इत्यस्योपपादनम् इयं **धार्यते तया** इत्यादि । **अनन्ता** देशतः गुणतश्च । **परा** मुख्या । **अनादिनिधना** न त्वव्यक्तवद् विक्रियावती ।। ५ ।।

### भावदीपः

एवकारान्वयमाह– **देवस्यैवेति** ।। **अनेनेति** ।। पुराणवाक्यकथनेनेत्यर्थः ।। **अविद्यासहितम् अव्यक्तम्** इत्युक्तार्थे चतुर्थपाद-संवादमाह– **भिन्नेति** ।।[1] 'महान् बुद्धिः मनश्च' इत्यादौ गीतोक्ताहङ्कारो न गणित इत्यत आह–[2]**महतीति** ।। एवकारस्य इतिपदेनान्वयमाह–[3]**इत्येव इति सम्बन्ध इति** ।। ५ ।।

( भगवतो महदैश्वर्यस्वरूपम् )

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।। ६ ।।**[4]

---

१. शाङ्करभाष्ये ।

२. शुद्धपाठः सो-मातृकायामेव । 'कारणेन गणित इत्यत आत्ममद्धत्तीति '-मा ।

३. का नास्ति ।

४. न्यायामृते अहमर्थस्यानात्मत्वभङ्गे -'अहं..तथा' इत्यत्र अहमर्थस्य मनआदिसर्वकारणत्वोक्तेः ।।

**भाष्यम् — न केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यम् इत्याह– अहमिति।। प्रभवादेः सत्ताप्रतीत्यादेः कारणत्वात् तद्भोक्तृत्वाच्च प्रभव इत्यादि ।**

### प्रमेयदीपिका

नन्वत्रापरपरनिरूपणपूर्वकं भगवतो यत्परत्वं वक्तुमभिप्रेतं तत्र शरीरेन्द्रियविषयलक्षणाख्यकार्यस्य जीवानां च तयोरेवान्तर्भाव इति दर्शयितुम् **'एतद्योनीनि'** इत्युक्तम् । इदानीमहं परतर इति वक्तव्यम् । इदं तु किमर्थमुच्यते? इत्यत आह– **न केवलमिति** ।। पूर्वं वाक्यभेदेन प्रकृत्योरवरत्वं परत्वं **मे** इति स्ववशत्वं चोक्त्वा **ययेदं धार्यते जगत्, एतद्योनीनि** इति जगदाधारत्वकारणत्वे कथिते । तत्र प्रकृती एव भगवद्वशे जगज्जन्म-स्थितिलयास्तु प्रकृत्यधीना एव न भगवदधीना इति प्रतीतम् । तन्निरासार्थमेतदित्यर्थः । जगत्प्रति ममैश्वर्यमित्येतावत् प्रकृतिद्वारकमुपचरितमिति यावत् । प्रकृत्योः कारणत्वादिकं मदायत्तमिति भावः ।।

'जगद्धर्मयोः प्रभवप्रलययोः साक्षाद् भगवदैक्यमुच्यते' इति प्रतीतिनिरासार्थमाह– **प्रभवादेरिति** ।। यथा पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरित्युपलब्धः पित्रादेः तद्भोक्तृत्वं तथा **तद्भोक्तृत्वात्** ।।

### भावदीपः

भाष्ये अनुक्तेः पूर्वार्धतात्पर्यं दुर्गमत्वात् स्वयं व्यक्तीकुर्वन्नेवोत्तरार्धसम्बन्धभाष्यमवतारयति– **नन्वत्रापर** इत्यादिना ।। **वाक्यभेदेनेति** ।। '**इयं** जडरूपा प्रकृतिरपरा' इत्येकं वाक्यम् । '**इतः** जडप्रकृतितः **अन्यां** जीवभूतां **परां विद्धि**' इत्यन्यद्वाक्यम् । 'सा च **मे** मदीया मदधीना' इत्यपरं वाक्यम् इति वाक्यभेदेनेत्यर्थः ।। **'जगत्प्रकृति'** इत्यत्र जगत्पदस्य षष्ठ्यन्ततया प्रकृतिविशेषणत्वे वैयर्थ्याद् अन्यथा योजयति– **जगत् प्रति इति** ।। प्रकृती मद्वशे इत्युक्तम् एततच्छब्दपरामृष्टम्, तस्य फलितार्थमाह– **प्रकृतिद्वारकमिति** ।। प्रकृत्यादिभोक्तृत्वं हरेर्व्यनक्ति– **यथेत्यादिना** ।।

**भाष्यम् — तथाच श्रुतिः–**

**'सर्वकर्मा[१] सर्वकामः सर्वगन्धः सर्वरसः**

---

१. राघवेन्द्रतीर्थीयखण्डार्थानुसारी पाठः । प्रचलितः व्यत्यस्तः ।

**सर्वमिदमभ्यात्तोऽवाक्यनादरः''[१]** **(छां.उ.३.२.१४) इति ।**

### प्रमेयदीपिका

भगवतः सर्वभोक्तृत्वं कुतः? इत्यत आह– **तथा चेति** ।। **'सर्वकामः'** इत्यादेः द्विरुक्तत्वादेकं भोगविषयमिति ज्ञायते । काम्यन्त इति कामाः = द्रव्याणि । **गन्धरस**शब्दौ गुणान्तरस्याप्युपलक्षकौ । सर्वमिदम् **अभि** =अभितः । **आत्तः** = धृतः स्थित इत्यर्थः । न विद्यते वाक्यमनुग्रहमन्तरेण यस्यासाववाक्यः । न विद्यते आदरः = आश्चर्यबुद्धिः यस्यासौ नादरः । अवाक्यश्चासौ नादरश्चेति **अवाक्यनादरः** ।।

### भावदीपः

**द्विरुक्तत्वादिति** ।। छान्दोग्ये तृतीये 'सर्वं खल्विदं ब्रह्म' इति चतुर्दशे खण्डे 'सर्वकामः' इत्यादिवाक्यस्य द्विरुक्तत्वादेकं स्वरूपपरम्,अन्यत् तद्भोक्तृत्वपरम् । तथैव तद्भाष्योक्तेः[२] । अन्यथा पुनरुक्तताप्रसङ्गादिति भावः ।।

**भाष्यम् —** आह च -

**'स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता ।**
**यतः सर्वस्य तेनाहं सर्वोऽस्मीत्यृषिभिः स्तुतः ।**
**सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः ।[३]**

---

१. (अ) छान्दोग्ये द्विवारं पठितोयं भागः । 'सर्वकर्मा= सर्वकरणशक्तिरूपः, सर्वकामः=सर्वविषयेच्छावान्, सर्वगन्धः = सर्वशुभगन्धरूपः, सर्वरसः = सर्वशुभरसरूपः, सर्वमिदं जगत् अभ्यात्तः =प्राप्तः, अवाक्यः = लौकिक इव निरर्थकवाक्यरहितः ,अनादरः =आत्मसम्भावनारेहितः । अवाक्यनादर इति पाठे अवाक्यश्चासौ नादरश्च इति विग्रहः । उक्त एवार्थः । छा.खण्डार्थे राघवेन्द्रीये ।

(आ) पूर्वं सर्वगन्ध इति चिदानन्दाद्यात्मकसर्वगन्धादिमत्वमुक्तम् । पुनरत्र सर्वकर्मेत्याद्युक्तिः तद्भोक्तृत्वमप्यस्तीति वक्तुमिति । सर्वमभ्यात्त इत्युक्तिरादरार्था ।- छा.खण्डार्थे राघवेन्द्रीये ।

(इ) **कर्मनिर्णयटीकायाम्** – 'अभ्यात्त इति कर्तरि कः । न विद्यते वाक्यमनृतं यस्यासावनादरः । न विद्यते आदरो मिथ्याभिनिवेशो यस्यासौ नादरः । अवाक्यश्चासौ नादरश्चेति बहुलग्रहणात् समासः' ।। रा.टि.-अभि आदत्त इदं सर्वमिति अभ्यात्तः ।'अच उपसर्गात्तः' इति ददातेस्तत्त्वे 'अभ्यात्तः' इति रूपम्।'

२. **छान्दोग्यभाष्ये** -'एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते । अन्यत्र तु तद्भोक्तृत्वम्' इति ।

३. इदं वाक्यं ईशावास्यटीकायामुदाहृतम् । अत्र विशेषः ईशावास्यटीकातट्टिप्पणीतोधिगन्तव्यः ।

आगमिष्यत् सुखं चापि तच्चास्त्येव सदाऽपि तु ।
तथाऽप्यचिन्त्यशक्तित्वाज्जातं सुखमतीव च ।।'

इति नारदीये ।।

**प्रमेयदीपिका**

'कारणत्वादिनैवैक्यव्यपदेश[1] इत्येतद् कुतः? इत्यत आह– **आह चेति** ।। **सुखरूपस्य** सुखकारणस्य ।। ननु 'स्रष्टा पाता' इत्यादिकमयुक्तम् । कादाचित्कक्रियाऽवेशे विकारित्व-प्रसङ्गात् । भोगेन यद्व्राप्यं सुखं तस्य पूर्वमभावेनापूर्णत्वप्रसङ्गाच्चेत्यत आह– **आगमिष्यदिति** ।। यद्भोगेन **आगमिष्यत् सुखं तच्च सदाऽप्यस्त्येव** । क्रियाश्च शक्तिरूपेण चेति चार्थः । तर्हि कथं 'भोगेन जातम्' इत्युच्यते? इति भावेन पृच्छति– **अपि त्विति** ।।

उत्तरमाह– **तथाऽपीति** ।। **सदा** सद्भावेऽपि । यद्यपि 'प्रभवत्यस्मात्' इति प्रभवः, 'प्रलीयतेऽस्मिन्' इति प्रलय इति शक्यते व्याख्यातुम् । तथाऽपि महिमातिशयलाभायैवं व्याख्यातम् ।।

एतेन 'यस्मान्मम प्रकृती योनी सर्वभूतानां ततोऽहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा'[2] इति व्याख्यानमपहस्तितं भवति ।। ६ ।।

**भावदीपः**

सुखहेतुप्रभवप्रलयभोक्तृत्वरूपप्रकृतप्रमेयसंवादाय आह– **सुखरूपस्य सुखकारणस्य इति** ।। निरूप्यते उत्पद्यते अनेनेति रूपशब्द कारणपर इति भावः ।। **एतेनेति** ।। प्रामाणिक-व्याख्यानान्तरप्रदर्शनेनेत्यर्थः ।। ६ ।।

**मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।। ७ ।।**[3]

---

१. 'कारणादिना इत्यपि कचित् पाठः'-भा.र.को ।

२. शाङ्करभाष्यानुवादः । 'यस्माद् मम प्रकृती योनिः कारणं सर्वभूतानाम् अतः अहं कृत्स्नस्य समस्तस्य जगतः प्रभवः उत्पत्तिः, प्रलयः -विनाशः तथा ' इति शाङ्करभाष्ये ।

३. (अ) 'ब्रह्माद्या देवतास्सर्वाः सूत्रे मणिगणा इव ।
मदाधारेण कुर्वन्ति जगत्सृष्ट्यप्ययादिकम् '।। १७-७ ।। वराह.पु.चा.मा ।

(आ) 'यस्मिन्विश्वानि भूतानि तिष्ठन्ति च विशन्ति च । गुणभूतानि भूतेशे सूत्रे मणिगणा इव' भीष्मस्तवे.२३।

**भाष्यम् —अहमेव परतरः । मत्तोऽन्यत् परतरं न किञ्चिदपि ।। ७ ।।**

## प्रमेयदीपिका

नन्वपरं परं च तत्त्वमुक्त्वा परतरोऽहमिति वक्तव्यम् । **मत्तः** इति किमुच्यते? इत्यतः तात्पर्यमाह– **अहमेवेति** ।। परापरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्य परतरत्वम् उक्तप्रायम्। किन्त्वपरतत्वं यथाऽनेकं भूम्यादिभेदेन, यथा च परतत्वं **'मुक्तस्तु स्यात् पराभासः'(गी.ता.७.७)** इति वचनात् । तथा परतरमपि किमनेकमुत त्वेकमेव? इति जिज्ञासायाम् **'अहमेव परतरः'** इत्यनेनोच्यत इत्यर्थः । कथमनेनेदं लभ्यते? भगवत्प्रतियोगिकाधिक्यवन्निषेधस्यात्र प्रतीतेः, इत्यतो योजयति– **मत्त** इति ।। अन्यथा तरपो अन्यशब्दस्य च वैयर्थ्यादिति भावः ।। ७ ।।

## भावदीपः

यदि उक्तप्रायं[१] तर्हि **'मत्तः'** इत्यनाकाङ्क्षितं किमित्युच्यते? इति पृच्छति– **किन्त्विति** ।। **परतत्वमिति** ।। 'अनेकम्' मित्यनुषङ्गः । कथम्? इत्यतः, चित्प्रकृतित्वेनैकं तु व्यक्तम्, अन्यत्तु मुक्तजातमिति भावेन गीतातात्पर्योक्तं वचनमाह– **मुक्तस्तु स्यादिति** ।। **'पराभासः सुनित्यसुखभोजनात्'** इति वाक्यशेषः । नित्यनिर्दुःखचित्प्रकृतिवदनित्यनिर्दुःखत्वं[२] तेषां नास्ति । किन्तु मुक्तावेवेति भावेन चित्प्रकृतिः परा, मुक्तो पर इत्यनुक्त्वा, **'पराभासः'** इत्युक्तम् ।। **आधिक्यवन्निषेधस्येति** ।। आधिक्यवद्विषयकनिषेधस्येत्यर्थः ।। **अन्यथेति** ।। हरेः परतत्त्वार्थकत्वाभिप्रायाभाव इत्यर्थः ।। ७ ।।

( विज्ञानस्वरूपम् )

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ।। ८ ।।**

**भाष्यम् —** इदं ज्ञानम् । **रसोऽहम्** इत्यादि विज्ञानम् । अबादयोऽपि तत एव ।।

## प्रमेयदीपिका

**'भूमिः'** (७.४)इत्यादिना' इत्यत्रावधेरनुक्तेः **'रसोऽहम्'**(७.८) इत्याद्यपि ज्ञानप्रकरणमिति प्रतीतिः स्यात् । तन्निरासाय तत्समाप्तिमाह– इदमिति ।। एतावता ग्रन्थेन ज्ञानं निरूपित-

१. उक्तार्थतायाम् -पां ।
२. का ।'-प्रकृतिवत् ...स्यात् नित्यन निर्दुखत्वं' इति सो मातृकायां अस्पष्टम् लिखितम् ।

मित्यर्थः ।। कुतोऽत्र ज्ञानप्रकरणस्य समाप्तिः? इत्यत आह– **रसोऽहमिति** ।। इतिशब्दाद्य-भावेऽपि प्रकरणान्तरारम्भ एव समाप्तिं गमयिष्यति । अलौकिकमाहात्म्यप्रतिपादनादस्य विज्ञानप्रकरणत्वं ज्ञायत इति भावः । **प्रभावादेः** इत्युक्तन्यायेनैव **'रसोऽहम्'** इत्यादेरपि व्याख्यानं सिद्धम् । 'रसादीनां सत्तादिकारणत्वाद्भोक्तृत्वाच्च भगवान् रसादिः' इति ।।

**( धर्म-धर्मिणोर्भगवदधीनत्व-तद्भोग्यत्वनिरूपणम् )**

नन्वबादयोऽपि धर्मिणो भगवदधीनाः तद्भोग्याश्चेत्यङ्गीक्रियते न वा । नेति पक्षे **'अहं कृत्स्नस्य** '(७.६) इत्युक्ति विरोधः । आद्ये तु 'अप्सु रसः' इत्यादेर्धर्मिभ्यो निष्कृष्य धर्माणां ग्रहणस्यानुपपत्तिरित्यतः प्रथमं पक्षं तावदङ्गीकरोति – **अबादयोऽपीति** ।। धर्मिणोऽपि तदधीना एव तद्भोग्याश्चैव ।।

**भावदीपः**

**अवधेरनुक्तेरिति** प्रतिज्ञातं ज्ञानमाह । **भूमिरित्यादिना** इति भाष्य इत्यर्थः । व्याख्यानं सिद्धमित्येतद्व्यनक्ति– **रसादीनामिति** ।। चशब्देन भोक्तृत्वादिति ग्राह्यम् ।।

**भाष्यम् —तथाऽपि रसादिस्वभावानां साराणां च स्वभावत्वे सारत्वे च विशेषतोऽपि नियामकः । न त्वबादिनियमानुबद्धो रसादिः तत्सारत्वादिश्चेति दर्शयति 'अप्सु रसः' इत्यादिविशेषशब्दैः ।।**

**प्रमेयदीपिका**

ननु तत्रोक्तो दोष इत्यतः कारणत्वे तावद्विशेषशब्दोपादाने प्रयोजनमाह– **तथाऽपीति** ।। यद्यपि धर्मिणोऽपि भगवदधीना एव । तथाऽपि धर्मिभ्यो निष्कृष्य धर्माणामुपादानं युज्यत इति शेषः । कथम्? इत्यत आह– **रसादीति** ।। रसादयश्च ते स्वभावाः अबादीनाम् अनागन्तुकधर्माश्चेति रसादिस्वभावाः । तेषां साराणामबादिधर्मेषु सङ्ख्यादिषु श्रेष्ठानां च तेषामेवाबादिस्वभावभूतानां तद्धर्मेषु श्रेष्ठानां च रसादीनामिति यावत् । **स्वभावत्वे** 'अबादीनाम्' इति शेषः । **सारत्वे** 'अबादिधर्मेषु' इति शेषः । रसादित्वे चेति चार्थः । यथा लोके कुविन्दादिः पटादिद्रव्येष्वेव व्यापारवाननुभूयते, नतु तदीयेषु गन्धरसादिषु गुणेषु तद्धर्मेषु च गन्धत्वादिषु पृथग्व्यापारवान् । किन्तु ते पटादिजन्मानुषङ्गिजन्मान एव । न तथा भगवान् । अपि त्वबादेर्धर्मेषु रसादिषु तद्धर्मेषु च स्वभावत्वादिषु पृथक् प्रयत्नवान् ।

न त्वबादिनियमानुषङ्गिसत्तादिकास्त इति दर्शयितुं विशेषशब्दा उपात्ता इत्यर्थः ।।

**भावदीपः**

'साराणाम्' इत्यस्यार्थः**श्रेष्ठानामिति** ।। विशेष्या[1]प्रतीतेराह– **रसादीनामिति यावदिति** ।।

**भाष्यम् —भोगश्च विशेषतो रसादेरिति चोपासनार्थं च ।।**

**प्रमेयदीपिका**

भोगपक्षेऽपि प्रयोजनमाह– **भोगश्चेति** ।। अबादिभोगादप्यतिशयेन रसादेर्भोगः परमेश्वरस्येति दर्शयति।। 'विशेषशब्दैः' इति सम्बन्धः । **रसोऽहम्** इत्याद्यभेदोक्तेरर्थान्तरं सूचयन् तत्र **अपि**शब्दोपादाने प्रयोजनमाह- **उपासनार्थं चेति** ।। **विशेषतः** 'रसादेः' इति वर्तते । अर्थवशाद्रसादेरिति सप्तमीत्वेन विपरिणम्यते । रसादयः परमेश्वरोपासने प्रतिमात्वेनात्र विवक्षिताः । प्रतिमायां चाभेदोक्तिः प्रसिद्धा । प्रतिमात्वमबादीनां समानम् । **योऽप्सु तिष्ठन्** (बृ.उ.७.३.४)इत्यादेः । अतः किं विशेषशब्दग्रहणेन? इति चेत् । अबादिभ्यो विशेषतो रसादिषु भगवदुपासनार्थं तदुपपत्तिरिति ।।

**भावदीपः**

**भोगपक्षेऽपि प्रयोजनमाहेति** ।। 'रसोऽहम्' इति निष्कृष्योक्ते[2]रिति योज्यम् ।। **तत्रापीति** ।। उपासनारूपार्थान्तरेऽपीत्यर्थः ।। **प्रसिद्धेति** ।। '**नाम ब्रह्मेत्युपास्ते** इत्यादौ' इति योज्यम् ।।

**भाष्यम् — उक्तं च गीताकल्पे–**

**'रसादीनां रसादित्वे स्वभावत्वे तथैव च ।**
**सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् ।।**
**सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः ।**
**रसादिमानिनां देहे स सर्वत्र व्यवस्थितः ।।**
**अबादयः पार्षदा ध्येयः स ज्ञानिनां हरिः ।**
**रसादिसम्पत्त्याऽन्येषां वासुदेवो जगत्पतिः' इति च ।**

---

१. 'विशिष्य तदप्रतीतेः' -का मातृकायाम् ।
२. सो मातृकापाठः । 'निष्कृष्योक्तिः' इति का ।

## प्रमेयदीपिका

उक्तेऽर्थत्रये प्रमाणमाह– **उक्तं चेति** ।। **तथाच**शब्दावन्योन्यसमुच्चये । एवशब्दस्य **ईश्वरः** इत्यनेन सम्बन्धः । **सर्वत्र** अबादिषु । **ईश्वरः** रसादिकं **जगत्** इत्युच्यत इत्यर्थः । **अवादयः** अबाद्यभिमानिनः । **ज्ञानिनां** ज्ञानार्थिनां **सम्पत्त्यै** प्राप्त्यै **अन्येषां** रसार्थिनाम्[1]। 'अबादयः' इति 'रसादि' इति च पादयोः सप्तनवाक्षरत्वेऽपि **नवा एकेनाक्षरेण छन्दांसि वियन्ति** (ब.ब्रा) इति वचनाददोषः ।।

### ( कामादिषु भगवदुपानाक्रमः )

**भाष्यम् — 'स्वभावो जीव एव च'**(भाग.२.१.१२)
**'सर्वस्वभावो नियतस्तेनैव किमुतापरम्'**
**'नतदस्ति विना यत् स्यात् मया भूतं चराचरम्'**(१०.३९)
इति च ।

**'धर्माविरुद्धः', 'कामादिविवर्जितम्'** इत्याद्युपासनार्थम् ।

**उक्तं च गीताकल्पे–**

**धर्माविरुद्धकामेऽसावुपास्यः काममिच्छता ।**
**विहीने कामरागादेर्बले च बलमिच्छता ।**
**ध्यातस्तत्र त्वनिच्छद्भिर्ज्ञानमेव ददाति सः '**

इत्यादि ।।

## प्रमेयदीपिका

स्वभावस्य भगवदधीनत्वमलौकिकमित्यतस्तत्रान्यान्यपि वाक्यानि पठति– **स्वभाव** इति ।। अस्त्वेवं धर्मिभ्यो निष्कृष्य धर्माणामुपादानम् । धर्माणां विशेषणोपादानं तु किमर्थम्? इत्यत आह– **धर्मेति** ।। **आदिपदेन पुण्यो गन्धः** इत्यस्य ग्रहणम् । **कामादिषु** विशिष्टेष्वेव भगवानुपास्यो न धर्मविरुद्धेष्वशुचिष्विति ज्ञापनाय कामादीनां धर्माणां धर्माविरुद्धत्वादि - विशेषणोपादानमित्यर्थः ।।

१. रसाद्यर्थिनाम् इति भा.र.को ।

अत्र प्रमाणमाह– **उक्तं चेति** ।। **कामं** पुरुषार्थम् । **कामरागादेः** कामरागादिना । **अनिच्छद्भिः** कामादिकम् ।।

**भावदीपः**

**जगदीश्वरः** इत्यत्र इतिशब्द,क्रियाशब्दयोरध्याहारेणार्थमाह – **ईश्वर इति** ।। **रसेति** ।। रसादिरूपजगदात्मना उच्यत इत्यर्थः ।। **विशेषणोपादानमिति** ।। बलादेः कामराग-विवर्जितत्वादिति विशेषणोपादानमित्यर्थः ।।

'**काममिच्छता** इत्यत्र कामपदार्थः पुरुषार्थमिति ।। ८ ।।

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ।। ९ ।।**
**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ।। १० ।।**
**बलं बलवतां चाहं कामरागविवर्जितम् ।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।। ११ ।।**

( भगवान् केवलपुण्यभोक्ता )

**भाष्यम्** — 'पुण्यो गन्धः' इति भोगापेक्षया । तथाहि श्रुतिः ।

'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति'[२] (बृ.उ.३.६.२७)

'ऋतं पिबन्तौ सुकृतस्य लोके' (कठ.उ.१.७.१) इत्यादिका ।

ऋतं च पुण्यम् ।

'ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते' इत्यभिधानात् ।

---

१. भाष्यगतगीताकल्पवचनम् ।

२. 'कुतः एतत्प्रजाकृतं पुण्यमेवामुं सर्वप्रजास्थितं सम्राडविदं प्रति गच्छति न पापम् । येन तद्धेतुकः शोकः स्यात् इति । एतदपि कुत इत्यत आह- न व वाव इति । यतो नियामकतया प्राणिदेहस्थान् देवान् पापं न गच्छति । ह वै प्रसिद्धमेतत् । (बृ.उ.३.६.२७) ।' इति बृ.उ.खण्डार्थे राघवेन्द्रीये ।

**'ऋतं तु मानसो धर्मः सत्यं स्यात् स प्रयोगगः' इति च ।**

**प्रमेयदीपिका**

गन्धस्य विशेषणोपादाने प्रयोजनान्तरमाह– **पुण्य** इति ।। पुण्यगन्धस्यैव भगवतो भोगो न दुर्गन्धस्येति ज्ञापयितुमत्र विशेषणोपादानमित्यर्थः ।।

ननु दुर्गन्धं भगवाननुभवति न वा । नेति पक्षे सार्वज्ञाभावः । आद्ये कथं भोगाभावः? उच्यते । अनुभूयमाना अपि दुर्गन्धादयो न फलहेतव इत्यभिप्रायः । सुगन्धस्तु सुखहेतुरित्युपपादितम् । शुचिवस्त्वेव भगवतो भोग्यमित्यत्र प्रमाणमाह– **तथाहीति** ।। **अमुम्** उपासकम् । कुतः? तस्य देवत्वात् । तथाऽपि कुतः? **न ह वै** देवमात्रस्य पुण्यभोगनियमे देवोत्तमस्य सुतरां तत्सिद्धिः ।।

**ऋतम्** इति श्रुतिः कथं प्रकृतोपयोगिनी? इत्यत आह– **ऋतं चेति** ।। कुतः? इत्यतः सामान्यविशेषाभिधानादित्याह– **ऋतमिति** ।। **प्रयोगगः** शब्दजन्यः । तथाच श्रुतावृतशब्दः पुण्यफलस्योपलक्षक इति भावः ।।

**भावदीपः**

**उपपादितमिति** ।। **सुखरूपस्य भोक्तृत्वात्** इत्यादिनेति भावः ।।**'सप्तान्नोपासनायोग्या देवा एव ततो हि यत्'** इत्यादि बृहद्भाष्यदिशा सप्तान्नविद्यास्थवाक्यस्यार्थमाह– **अमुमुपासकमिति** ।। **तथाऽपि कुत इति** ।। देवत्वेऽपि कुत इति, देवत्वेऽपि पुण्यमात्रवाप्तिः कुतः? इत्यतो वा **'न ह वै देवानाम्'** इति वाक्यं प्रवृत्तमित्यर्थः ।। **सामान्येति** ।। सामान्यरूपविशेषरूपाभिधानादित्यर्थः ।। **प्रयोगगः** इत्यस्यार्थः-**'शब्दजन्यः'** इति । शब्दजन्यो धर्मः सत्यमित्यर्थः ।। धर्मस्य **पिबन्तौ** इत्युक्तपातृत्वायोगादाह- **तथाच श्रुताविति** ।।

**( हरिः जीवविलक्षणभोक्ता अवतारेषु स्थूलभोक्ता च )**

**भाष्यम् — नच 'अनश्नन्नन्यो अभिचाकशीति'** (आथर्वणे.३.१)[1],

**'अन्यो निरन्नोऽपि बलेन भूयान्'** [2](भाग.११.११.६)

**इत्यादि विरोधः । स्थूलानशनोक्तेः । आह च सूक्ष्माशनम् –**

---

१. इदं वाक्यं मुं-३-१-१, ऋ.-२-२-१७-५ च पठ्यते ।

२. अयं श्लोकः विजयध्वजीये विस्तृततया व्याख्याय, तत्र विरोधोपि परिहृतः तत्रैव द्रं।

**'प्रविविक्ताऽहारतर इवैष भवत्यस्माच्छारीरादात्मनः'**[१](बृ.उ.६.२.३) ॥

प्रमेयदीपिका

स्यादिदं व्याख्यानं यदि भगवतो विषयभोगो युक्तः स्यात् । न चैवम् । तदङ्गीकारे श्रुत्यादिविरोधात् । **ऋतं पिबन्तौ** इतिच । अत एव च्छत्रिन्यायेनोपचरितमित्यत आह– **नचेति** ॥ कुतो न? इत्यत आह– **स्थूलेति** ॥ श्रुत्यादिषु स्थूलस्य जीवभोग्यस्य विषयस्याभोगोक्तेः, सूक्ष्मभोगस्य चाङ्गीकारादिति भावः । सूक्ष्माशने प्रमिते भवेदियं व्यवस्था । तदेव कुतः? इत्यत आह– **आह चेति** ॥ गन्धादिषु यो जीवेन्द्रियागोचरः सारभागः तस्य भोगं परमेश्वरः**अस्माच्छारीरादात्मनः** जीवाद् अतिशयेन विलक्षणभोग एव भवति । अवतारेषु स्थूलमपि भुङ्क्ते इति **इव**शब्दः ॥

**भावदीपः**

**अत एवेति** ॥ **अनश्नन्नन्यः** इत्यादिश्रुतिविरोधादेव भोक्तृजीवसाहचर्यादीश्वरे भोक्तृत्व-मुपचरितम् । यथा छत्रिसाहचर्याद् अच्छत्रिणोऽपि च्छत्रिपदेनोच्यन्ते 'छत्रिणो गच्छन्ति' इति तद्वदिति ॥ **प्रविविक्ताहारतरः** इत्यस्यार्थः– **अतिशयेन विलक्षणेति** ॥

**( प्रविविक्ताहारतरः न जीवः )**

**भाष्यम् — न चात्र जीव उच्यते । 'शारीरादात्मानः' इति भेदाभिधानात् । स्वप्नादिश्च शारीर एव ।**

**'शारीरस्तु त्रिधा भिन्नो जाग्रदादिष्ववस्थितेः'**

**इति वचनाद् गारुडे ।**

**'अस्मात्' इति त्वीश्वरव्यावृत्त्यर्थम् ।**

**'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसञ्ज्ञितः ।**
**अनादिबन्धनस्त्वेको नित्यमुक्तस्तथाऽपरः'**

**इति वचनान्नारदीये ।**

---

१. 'अस्मच्छरीरादात्मनो जीवात् प्रविविक्ताहारतरो विलक्षणाहार एव भवति । अवतारेषु स्थूलमपि भुङ्क्ते इति इवशब्दः ।व्याख्यातमेतत् सप्तमे गीताभाष्ये' इति राघवेन्द्रीयखण्डार्थे ।

## प्रमेयदीपिका

ननु प्रविविक्ताऽहारतरोऽयं जीव एवेत्यत आह– **नचेति** ।। नहि जीवो जीवादेव विलक्षणाऽहार इति युज्यत इत्यर्थः ।। ननु शारीराज्जागरावस्थाज्जीवात् स्वप्न सुषुप्त्यवस्थः स एव प्रविविक्ताऽहार इत्यवस्थाभेदोपाधिकं जीवस्य भेदमङ्गीकृत्य व्याख्यास्यामीत्यत आह– **स्वप्नादिश्चेति** ।। 'स्वपो नन्' (पा.सू.३.३.९१) इति स्वप्नशब्दः कर्तरि । स्वप्नः सुषुप्तश्च शारीर एव, न केवलं जाग्रत् । तथाच त्र्यवस्थस्यापि शारीरशब्देन गृहीतत्वान्न ततो भेदः स्वप्नसुषुप्तयोरित्यर्थः ।।

अवस्थात्रयवतोऽपि शारीरत्वं कुतः? इत्यत आह– **शारीरस्त्विति** ।। जाग्रदादिष्ववस्थासु । अस्तु त्र्यवस्थोऽपि शारीरः । तथाऽपि **'अस्मात्'** विशेषणेनात्र शारीरादिति जाग्रदवस्थो गृह्यते । तस्माच्च स्वप्नाद्यवस्थस्य भेदोक्तिरुक्तविधया सम्भवति । भवत्पक्षेऽपि शारीरादिति जीवे सिद्धे **अस्मात्** इति विशेषणं व्यर्थं स्यादिति । तत्राह – **अस्मादिति** ।। नैतद्विशेषणसार्थक्यायेश्वरं परित्यज्य जीवोऽत्र ग्राह्यः ।।

**शारीरात्** इत्येवोक्तावीश्वरस्यापि प्राप्तावीश्वरादेवेश्वरस्य भेदानुपपत्तेस्तद्व्यावृत्त्यर्थं जीवमात्रपरिग्रहाय विशेषणमिति सार्थक्योपपत्तेरित्यर्थः ।। भवेदेवं यदि शारीरत्वमीश्वरस्यापि स्यात् । तदेव कुतः? इत्यत आह– **शारीराविति** ।।

## भावदीपः

**स्वप्नशब्दः कर्तरीति** ।। यद्यपि वार्त्तिके तृतीयपादे भावे 'अकर्तरि च कारके'(पा.सू.३.३.१९) इति अधिकारे 'स्वपो नन्' (पा.सू.३.३.९१) इति नन्प्रत्ययो विहितः । तथापीह भाष्ये कर्तर्युपेत्येत्यर्थः[1] ।। 'जाग्रदादिषु 'इत्यत्र विशेष्यानुक्तेराह– **अवस्थास्विति** ।।

**भाष्यम् — भेदश्रुतेश्च । सति गत्यन्तरे पुरुषभेद एव कल्प्यो न त्ववस्थाभेदः । आह च–**

**'प्रविविक्तभुग्यतो ह्यस्माच्छरीरात् पुरुषोत्तमः ।**
**अतोऽभोक्ता च भोक्ता च स्थूलाभोगात् स एव तु'**

**इति गीताकल्पे ।। ९-११ ।।**

---

१. 'कर्तर्युपेत्य भाष्ये प्रयुक्त इत्याह' इति सो मातृकापाठः ।

**प्रमेयदीपिका**

नन्वेवं पक्षद्वयेऽप्युपपत्तावीश्वर एवात्रोच्यते न जीव इति कुतो विनिगमनम्? इत्यत आह– **भेदेति** ।। **चः** हेतौ । भेदश्रुतेः, स्वाभाविकभेदरूपे गत्यन्तरे सम्भवति पुरुषभेद एवार्थतया ग्राह्यो न त्ववस्थोपाधिको भेदः । मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययात् । अतो युक्तं विनिगमनम्। न केवलमुक्तव्यवस्था न्यायप्राप्ता, किन्त्वागमसिद्धा चेत्याह– **आह चेति** ।। **अभोक्ता च भोक्ता च** इत्येतयोर्व्युत्क्रमेणान्वयः ।। ९,१०,११ ।।

**भावदीपः**

भाष्ये प्रयुक्तप्रविविक्तभोगस्थूलभोगरूपहेत्वोः क्रमादुक्तयोरन्वयमाह– **अभोक्ता च भोक्ता चेत्यादि** ।। ९-११ ।।

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ।। १२ ।।**

**भाष्यम् —** न त्वहं तेषु इति तदनाधारत्वमुच्यते । उक्तं च -

'तदाश्रितं जगत् सर्वं नासौ कुत्रचिदाश्रितः'

इति गीताकल्पे ।। १२ ।।

**प्रमेयदीपिका**

**'सर्वभूतस्थमात्मानम्'** (६.२९) इत्युक्तत्वात्, उपसंहारवाक्ये **'न त्वहं तेषु'** इति कथमुच्यते? इत्यत आह– **न त्वहमिति** ।। **तदनाधारत्वं** तदुपजीवनेन स्थित्यभावः । कुत एतत्? इत्यत आह– **उक्तं चेति** ।। न केवलमुक्तविरोधादिति चार्थः ।। १२ ।।

**भावदीपः**

इत्युक्तत्वादिति ।। पूर्वाध्याये ।। उक्तेति ।। **सर्वभूतस्थ**मित्युक्तेरित्यर्थः ।। १२ ।।

( भगवदनुपलम्भे कारणनिरूपणम् )

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ।। १३ ।।**

**भाष्यम् — तर्हि कथमेवं न ज्ञायस इत्यत आह– त्रिभिरिति ।।**

**तादात्म्यार्थे मयट् । तच्चोक्तम्–**

**'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा'**

**इति । नहि गुणकार्यभूता माया । 'गुणमयी'(७.१४) इति च वक्ष्यति ।।**

**प्रमेयदीपिका**

ननु विज्ञाननिरूपणं प्रारभ्य **'त्रिभिः'** इत्यादिकं किमर्थमुच्यते? इत्यत आह– **तर्हीति** ।। **'ये चैव'** (७-१२) इति विज्ञाननिरूपणोपसंहारवाक्ये सत्त्वादिगुणनिर्वृतानां भगवान् कारणम् आश्रयश्च तदनाश्रयश्चेत्युक्तम् । तेनैव'गुणातीतः' इति चोक्तप्रायम् । तस्यायमाक्षेपः । एवं 'गुणातीततया सगुणश्च ज्ञायसे' इति शेषः । एवमनुपलम्भविपरीतोपलम्भाभ्याम् उक्तमसदिति भावः ।।

[1]विकारार्थतानिरासार्थमाह– **तादात्म्येति** ।। मयटः तादात्म्यार्थत्वं कुतः? इत्यत आह– **तच्चेति** ।। तादात्म्ये प्रयोगं दर्शयितुमुपोद्घातमाह– **न हीति** ।। **कार्यभूता** इत्युपलक्षणम् । गुणप्राचुर्यादिकमपि तस्यां न सम्भवति । ततः किम्? इत्यत आह– **गुणेति** ।। **'दैवी ह्येषा गुणमयी मम माया'** (७.१४) इति मायाया गुणमयीत्वमुच्यते । नच तत्र विकाराद्यर्थता सम्भवति । ततः परिशेषतस्तादात्म्यार्थता ग्राह्येत्यर्थः ।।

**भावदीपः**

**प्रारभ्येति** ।। **'रसोऽहम्'** इत्यादिना इति योज्यम् ।। अनुवादव्याजेन पूर्वश्लोकार्थं व्यनक्ति– **ये चैवेति** ।। **एवमित्यनूद्यार्थमाह**- एवं **गुणातीततयेति** ।। **उक्तमिति** ।। गुणा-तीतत्वं गुणप्राचुर्यादिकमपीति ।। मयटः प्राचुर्यार्थत्वं प्राधान्यार्थकत्वं चात्र न युक्तमिति सूचितम् ।।

**भाष्यम् — सिद्धं च कार्यस्यापि तादात्म्यम् ।**

**'तादात्म्यं कार्यधर्मादेः संयोगो भिन्नवस्तुनोः'**

**इत्यादि व्यासयोगे ।**

---

१. **'मायिनात्र मयटो विकारार्थत्वमुक्तं गुणकार्यैः इति । तत्पक्षे मायापि गुणकार्यभूता स्यात् । नच तद्युज्यत इत्याह- नहीति' -इति नरहरितीर्थाः । अतः शाङ्करभाष्यनिरासोयम् ।**

**भावैः पदार्थैः ।।**

**प्रमेयदीपिका**

अस्तु मयटस्तादात्म्ये शक्तिः । अत्र विकारार्थतां परित्यज्य तद्ग्रहणे को हेतुः ? इति चेदुच्यते । विकारार्थताग्रहणे 'मामेभ्यः परम्' इत्यत्र गुणकार्येभ्य एव भगवतः परत्वमुक्तं स्यान्न तु गुणेभ्यः । अतस्तत्सङ्ग्रहाय तादात्म्यार्थताग्रहणम् । एवं तर्हि गुणेभ्य एव परत्व-मुक्तं स्यान्न तु गुणकार्येभ्योऽपीति समानमित्यत आह– **सिद्धं चेति** ।। **सिद्धं** प्रमितम्। ततश्च गुणात्मकैरित्युक्ते गुणानां तत्कार्याणां चोपादाने सत्युभयपरत्वमुक्तं भवति ।।

**कार्यधर्मादिरिति** ।। कार्यद्रव्यस्योपादानेन गुणक्रियाजातिपूर्वाणां धर्माणां गुण्यादिभिरित्यर्थः।। [1]भावशब्दस्य अनेकार्थत्वात् तस्य विवक्षितमर्थमाह– **भावैरिति** ।। एवंसति सर्वपरत्वलाभादिति भावः ।।

**भावदीपः**

आदिपदार्थोक्तिः– **उपादानेनेति** ।। जातिस्तदसाधारणो धर्मः ।।

**भाष्यम् —** **सर्वे भावा दृश्यमाना गुणमया एत एवेति दर्शयति– एभिरिति ।। ज्ञानिव्यावृत्त्यर्थम् इदमिति । गुणमयदेहादिकं दृष्ट्वेश्वरदेहोऽपि तादृश इति मायामोहित इत्यर्थः ।। जगाद च व्यासयोगे–**

**'गौणान् ब्रह्मादिदेहादीन् दृष्ट्वा विष्णोरपीदृशः ।**
**देहादिरिति मन्वानो मोहितोऽज्ञो जनो भृशम् ।।' [2]इति ।**

**एभ्यः गुणमयेभ्यः । 'गुणेभ्यश्च परम्'** (१४.१९)

**इति वक्ष्यमाणत्वात् ।**

**'केवलो निर्गुणश्च'**[3] (श्वेत.उ.६.११) **इत्यादि श्रुतिभ्यश्च ।**

---

१ 'भावो लीला क्रिया चेष्टा भूत्यभिप्रायजन्तुषु । पदार्थमात्रे' इति नानार्थार्णवसङ्क्षेपे - ८९२श्लोकः।

२. 'पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः । न तथा न योगिराद्धान्तो ज्ञानं देहो यतो हरेः' इति भा.ता.उ.षाड्गुण्यवचनम् ।

३. 'केवलः जडामिश्रः । निर्गुणः सत्वादिगुणहीनः' त.प्र.१.१.११।

**'त्रैगुण्यवर्जितम्'**[१] (म.भा.१.१.१)

**इति चोक्तम् ।। १३ ।।**

## प्रमेयदीपिका

नन्वेवमप्येभिरिति पुरोवर्तिनामेव ग्रहणान्न सर्वपरत्वसिद्धिरित्यत आह– **सर्व** इति ।। प्रमितपरामर्शोऽयं न पुरोवर्तिमात्रस्येति भावः ।। **जगन्मोहितम्** इत्यलम्, किम् **इदम्** इत्यनेन? इत्यत आह– **ज्ञानीति** ।। व्यवहारपतितमित्यर्थः । ननु भगवद्विषयस्य सगुणत्वमोहस्य कथं गुणात्मकाः पदार्थाः कारणम्? इत्यत आह– **गुणमयेति** ।। 'देहत्वादिहेतुना' इति शेषः ।। **माया** इति गुणमयानां ग्रहणम् । **मोहितः** जनः ।।

तत्र[२] प्रमाणमाह– **जगाद** चेति ।। आदिपदेनेन्द्रियादिग्रहणम् । यदर्थं तादात्म्यार्थ-ग्रहणं कृतं तदाह– **एभ्य** इति ।। ननु भगवतो गुणातीतत्वे प्रमिते तदर्थोऽयं श्रमः सफलः स्यात् । तदेव कुतः? इत्यत आह– **गुणेभ्यश्चेति** ।। १३ ।।

## भावदीपः

**देहत्वादिहेतुनेति** ।। विमतो भगवद्देहो गुणमयः, देहत्वात्, ब्रह्मादिदेहवत् । विमतानि ईश्वरेन्द्रियाणि गुणमयानि इन्द्रियत्वात् चैत्रादीन्द्रियवदित्येवं 'देहत्वात्' इतिहेतुकानुमानेन **मोहितो जनः** मिथ्याज्ञानिनो भवन्तीत्यर्थः ।। १३ ।।

**( अज्ञानविपरीतज्ञानयोर्भगवन्माया (दुर्गा) कारणम् )**

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।। १४ ।।**[३]

---

१. 'क्रोधादियुक्तस्य वन्दनमशक्यमित्यतः वन्द्यत्वोपयोगिक्रोधाद्यभावमाह- त्रैगुण्यमिति-'जनार्दनतीर्थाः ।

२. अत्र-गुज ।

३. (अ) न्यायामृते श्रुतेरनिर्वाच्याविद्यापरत्वभङ्गे - 'विश्वमायानिवृत्तिः' इत्यादौ निवृत्तिस्तरणमेव 'मायामेतां तरन्ति ते' इति स्मृतेः।।; मायाशब्दस्य 'मय ज्ञाने' इतिधातुजत्वाच्च । 'दैवी ह्येषा गुणमयी मम माया दुरत्यया इत्यादौ गुणमयत्वाद्युक्तिरपि सत्यत्वानुगुणैव ।।

(आ) न्यायामृते अहमर्थस्यानात्मत्वभङ्गे-'मामेव ये..तरन्ति' इति स्वप्रपन्नमायानिरसनशक्तस्येश्वर-स्याहमुल्लेखोक्तेः ।।

**भाष्यम् — कथमनादिकाले मोहानत्ययो बहूनाम्? इत्यत आह– दैवीति ।। अयमाशयः । माया ह्येषा मोहिका ।।**

**प्रमेयदीपिका**

उपायाभावानुमानाभासाभ्यामनुपलम्भो विपरितोपलम्भश्चेत्युक्तम् । अतः किमुत्तरेण वाक्येन? इत्यत आह– **कथमिति** ।। भगवान् गुणमयविग्रह इत्ययं न मोहः । बाधक-प्रत्ययाभावात् । ज्ञानिनां सम्यक्प्रत्ययो बाधक इत्युक्तमिति चेन्न । बहुतरज्ञानविरोधेन कति-पयज्ञानानामेवायथार्थत्वापत्तेः । ननूत्तरकाले बाधकप्रत्ययो भविष्यतीति चेत् - न । अनादौ कालेऽजातस्योत्तरत्राप्यसम्भवादिति भावः ।।

ननु बाधकप्रत्ययाभावाद्यथार्थ एवायं प्रत्यय इति शङ्कायां किमेतदसङ्गतमुच्यते? इत्यत आह– **अयमिति** ।। **एषा** इत्यनुवादेन **मोहिका** इति व्याख्यातम् । **'मोहितम्'** इति धात्वर्थमात्रं परामृश्य योग्यप्रत्ययसम्बन्धेन व्याख्यानात् । गुणमयी तदभिमानिनी दुर्गा या हि तमोगुणेनैवंविधं मोहं जनयति । अनुमानं तु निमित्तमात्रम् ।।

**भावदीपः**

**उपायेति** ।। गुणातीतत्वेन कथं न ज्ञायसे । प्रत्युत 'गुणयुक्तत्वेनैव ज्ञायसे' इत्याक्षेपस्य **त्रिभिः** इति श्लोके गुणातीतत्वानुपलम्भोपायाभावेन गुणमयत्वेन विपरीतोपलम्भश्च देहत्वाद्य-नुमानाभासेनेत्युक्तमित्यर्थः ।। अप्रकृतस्य कथमत्र **'मोहिका'** इति परामर्शः? इत्यत आह– **मोहितमितीति** ।। विशेष्याकाङ्क्षायां गीतास्थं पदं स्वयमनूद्य तदर्थमाह– **गुणमयीति** ।। **अनुमानं त्विति** ।। देहत्वाद्यनुमानमित्यर्थः ।।

**( देवताशब्दार्थः - देवशब्दनिरुक्तिः )**

**भाष्यम् — सा च सृष्ट्यादिक्रीडादिमद्देवसम्बन्धित्वादतिशक्तेर्दुरत्यया । तथा हि देवताशब्दार्थं पठन्ति -**

**'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमदमोदस्वप्नकान्तिगतिषु'**[1]

**(काशकृत्स्न.धा.पा.) इति ।**

---

१. अत्र प्रभ पाठे मद-मोद इति न पठ्यते । काशकृत्स्नधातुपाठे मोद-मदयोर्ग्रहणात्, भा.र.कोशकारैः स्तुतिमोदादः इति व्याख्यानात् मोद-मदयोरत्र ग्रहणं नानुपपन्नमिति भाति ।।

**कथं? दैवी । मदीयत्वात् । अहं हि देव इति ।**

**प्रमेयदीपिका**

ततः किम्? इत्यत आह– **सा चेति** ।। **सा** दुरत्यया । तत्कृतमोहं कोऽपि नात्येतुं शक्नोति । न कस्यापि बाधकप्रत्ययो भवति । कुतो दुरत्यया? इत्यतः '**अतिशक्तेः**' इति हेतुरध्याहृत्योक्तः । कुतोऽतिशक्तित्वम्? इत्यतो **दैवी** इत्येतद्धेतुगर्भमिति व्याख्यातम् ।। **देव-सम्बन्धित्वादिति** ।। सम्बन्धित्वं परमप्रियत्वम् ।।

सति देवस्यातिशक्तित्वे तत्सम्बन्धिन्यास्तत् स्यात् । तदेव कुतः? इत्यतो देवशब्दार्थो निरुक्तः– **सृष्ट्यादीति** ।। सृष्ट्यादिश्च **सा क्रीडा च** । प्रथमादिपदेन स्थित्यादेः सङ्ग्रहः । द्वितीयेन विजिगीषादेः । क्रीडादिमत्वेनातिशक्तिर्न सिद्ध्यतीति क्रीडा व्याख्याता ।।

देवशब्दस्य क्रीडादिमत्वमर्थः । कुतः? इत्यत आह– **तथाहीति** ।। देवशब्दे या प्रकृतिः तदर्थमित्यर्थः । प्रत्ययस्त्विगुपधालक्षणस्य कस्य बाधकः, पचाद्यच् । **दैवी** इत्यनेन निराकाङ्क्षत्वात् **मम** इति व्यर्थमित्यत आह– **कथमिति** ।। तस्यैव व्याख्यार्थमेतदिति भावः । त्वदीयत्वेऽपि कथं दैवी? इत्यतः शेषं पूरयति– **अहं हीति** ।। आशयवर्णनसमाप्तौ **इति**शब्दः।।

**भावदीपः**

**बाधकप्रत्यय इति** ।। गुणमयदेहो हरिरिति प्रत्ययस्येति योज्यम् ।। गीतायाम् अदृष्टेराह **-अध्याहृत्येति** ।। **इगुपधेति** ।। 'इगुपधाज्ञाप्रीकिरः सम्प्रसारणम्' **(पा.सू.३.१.१३५)** इति सूत्रे इगुपधानिमित्तको यः कप्रत्ययः । तस्य बाधकः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः **(पा.सू.३.१.१३४)** इति विहितो अच्प्रत्ययः । [1]'इगुपधा' इत्यस्य पचादिसूत्रात् परत्वे अपि 'देवसेवामेषादयः पचादिषु द्रष्टव्याः' इति तृतीयाद्यपादे प्रत्ययसूत्र एव वृत्तावुक्तेः अच्प्रत्ययत्वे च कित्वाभावेन 'क्ङिति च' **(पा.सू.७.२.११८)** इति निषेधाप्राप्तेः 'पुगन्तलघूपधस्य च' **(पा.सू.७.३.८६)** इति गुणे देव इति रूपमिति भावः ।।

**( भगवदनुग्रहं विना मायातरणं न शक्यम् )**

**भाष्यम् — अब्रवीच्च –**

**'श्रीर्भूदुर्गेति या भिन्ना महामाया तु वैष्णवी ।**

---

१ इगुपधा इत्यारभ्य कित्वाभावेनेति पर्यन्तं का नास्ति ।

तच्छक्त्यनन्तांशहीनाऽथापि तस्याश्रयात् प्रभोः ।।
अनन्तब्रह्मरुद्रादेर्नास्याः शक्तिकलाऽपि हि ।
तेषां दुरत्ययाऽप्येषा विना विष्णुप्रसादतः'

इति च व्यासयोगे ।।

**प्रमेयदीपिका**

अत्र प्रमाणमाह– अब्रवीच्चेति ।।

( भगवन्मायातरणोपायः )

**भाष्यम् —** तर्हि न कथञ्चिदत्येतुं शक्यत इत्यत आह– **मामेवेति** ।। अन्यत् सर्वं परित्यज्य **मामेव ये प्रपद्यन्ते** गुर्वादिवन्दनं च मय्येव समर्पयन्ति । स एव च तत्र स्थित्वा गुर्वादिर्भवतीत्यादि पश्यन्ति ।

आह च नारदीये–

'मत्सम्पत्त्या तु गुर्वादीन् भजन्ते मध्यमा नराः ।
मदुपाधितया तांश्च सर्वभूतानि चोत्तमाः' इति ।
'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति'[१]

(भाग. ११.२९.६) इति च ।। १४ ।।

**प्रमेयदीपिका**

उत्तरस्य प्रकृतोपयोगितया सङ्गतिमाह– **तर्हीति** ।। यदि न केवलमनुमानं किन्तु भगवतोपोद्बलिता माया मोहहेतुः तर्हीत्यर्थः । ततश्च ज्ञानिव्यावृत्त्यर्थं [२]यदिदमित्युक्तं तदसदिति भावः ।। ननु मायाऽत्ययोपायस्यासम्भावनाशङ्कायां तदुपाय एव वक्तव्यो न तूपायान्तरप्रतिषेधः । अतोऽनुपपन्नमवधारणमित्यत आह– **अन्यदिति** ।। स्वप्रतिपत्तावित्थम्भावसूचक एव एवशब्दो

---

१. 'योन्तर्वहिस्तनुभृतामशुभं विधुन्वन्' इति पूर्वपादः । 'तनुभृतामन्तर्बहिः स्थित्वा अशुभं विधुन्वन् यस्त्वमाचार्यचैत्यः चित्तस्य आचार्यश्चैत्यो ब्रह्मा, तस्यान्तर्यामिवपुषा स्वगतिं स्वयोग्यज्ञानं व्यनक्ति व्यक्तीकरोषि । आचार्यस्य चित्तस्थवपुषेति वा' इति विजयध्वजतीर्थाः ।।

२.. भावदीपकोशरीत्या अत्र 'इदमित्युक्तमसदिति' इति पाठः सम्भाव्यते ।

नोपायान्तरप्रतिषेधपर इत्यर्थः । एवं तर्हि गुर्वादिवन्दनाभावः प्राप्त इत्यतोऽभिप्रायमाह– **गुर्वादीति** ।। 'भागवता एते' इत्यादि बुद्ध्या वन्दनादि कुर्वन्तीति यावत् ।।

**( मध्यमोत्तमभक्तानां भूतेषु भगवद्भजनप्रकारनिरूपणम् )**

एतन्मध्यमभक्तानां चरित्रमुक्तम् । उत्तमानां तु आह– **स एवेति** ।। भगवानेव । **तत्र** गुर्वादिषु । द्वयं प्रमाणेनोपपादयति– **आह चेति** ।। अहं च सा सम्पत्तिश्च । **मदुपाधितया** मत्प्रतिमात्वेन । **चैत्यं** चित्तस्थम् । **स्वगतिं** स्वज्ञानम् । **व्यनक्ति** व्यञ्जयसि ।। १४ ।।

**भावदीपः**

[1]**इदमित्युक्तमसदिति** ।। ज्ञानिनोऽपि दुरत्ययत्वेन मोहितत्वादिति भावः । **व्यनक्ति** इतिपदं ण्यर्थतया व्याचष्टे– **व्यञ्जयसीति** ।।

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ।। १५ ।।**

**भाष्यम् — तर्हि सर्वेऽपि किमिति नात्यायन्? इत्यत आह– न मामिति ।। दुष्कृतित्वात् मूढाः । अत एव नराधमाः । अपहृतज्ञानत्वाच्च मूढाः । अत एव आसुरं भावमाश्रिताः ।।**

**प्रमेयदीपिका**

उत्तरवाक्यं प्रकृतानुपयुक्तमित्यत आह – **तर्हीति** ।। यदि त्वत्प्रपत्तिर्मायातरणोपायस्तर्हीत्यर्थः । 'त्वां प्रपद्ये' इति शेषः । तथाच **'मामेव'(७.१४)** इत्युक्तमसदिति भावः । दुष्कृतित्वादीनां प्रयोजनान्तराभावात् हेतुत्वेनान्वये स्थिते किं ते पञ्चापि साक्षाद् भगवदप्रपत्तिहेतवः? किं वा हेतुहेतुमद्भावेन? इत्यपेक्षायामाह– **दुष्कृतित्वादिति** ।।

**मूढाः** मिथ्याज्ञानिनः । विपर्ययस्याधर्मकार्यत्वप्रसिद्धेः । **अत एव** मूढत्वादेव । देवानाम् उत्तममध्यममनुष्याणां च केवलमिथ्याज्ञानित्वाभावात् । अधिष्ठानयाथात्म्याज्ञानस्य विपर्ययहेतुत्वप्रसिद्धेः **अपहृतज्ञानत्वाच्च मूढाः** । अत एव नराधमत्वादेव । जीवत्रैविध्यविवक्षायां नराधमानाम् असुरेष्वन्तर्भावस्य प्रसिद्धत्वात् । आसुरभावाश्रयणात् **न मां प्रपद्यन्ते** इत्यर्थः।।

---

१. मातृकात्रयेपि अत्र अयमेव पाठः । प्रमेयदीपिकायां 'यदिदमित्युक्तं तदसत्' इति पठ्यते ।

### भावदीपः

**'नराधमाः'** इत्युक्तेर्कृत्यमाह– **देवानामिति** ।। अपहृतज्ञानत्वस्य मूढतायां हेतुत्वं व्यनक्ति– **अधिष्ठानेति** ।।

**भाष्यम् — स च वक्ष्यते – 'प्रवृत्तिं च निवृत्तिं च' (१६-७) इत्यादिना ।**
**अपहारोऽभिभवः । उक्तं चैतद्व्यासयोगे-**

**'ज्ञानं स्वभावो जीवानां मायया ह्यभिभूयते' इति ।**

**असुषु रताः असुराः । तच्चोक्तं नारदीये-**

**'ज्ञानप्रधाना देवास्तु असुरास्तु रता असौ' इति ।। १५ ।।**

### प्रमेयदीपिका

नन्वासुरो भावो हि हिंसानृतादिलक्षणोऽन्यैर्व्याख्यातः[१]। तद्रहिताश्च क्षपणकादयो न भगवन्तं प्रपद्यन्ते । तत्कथमस्य हेतुत्वम्? इत्यत आह– **स चेति** ।। एतेषामन्यतमः सर्वेष्वप्यस्तीति भावः ।।

ननु मुक्तौ योग्यानामयोग्यानां च भगवन्तमप्रतिपद्यमानानां एते धर्मा वक्तव्याः । तत्र मुक्तियोग्यानां सम्यज्ज्ञानस्वभावात् तत्कथमपहृतज्ञानत्वम्? इत्यत आह– **अपहार** इति ।। आगमवाक्यमपि सज्जीवविषयम् । मुक्तियोग्यानामासुरभावाश्रयणं प्रवृत्त्याद्य-ज्ञानेनोक्तम् ।।

प्रकारान्तरेण घटयितुमाह– **असुष्विति** ।। इन्द्रियेषु तत्प्रीणन एव रताः । **असौ** इति जातावेकवचनम् । पदसन्धेर्विवक्षाधीनत्वादसन्धिर्न दोषः । **'त्रिभिः'**(७.१३) इत्यत्र भगवतो गौणविग्रहत्वज्ञानस्य कारणमुक्तम् । अत्र तु स्वदोषादेव न मां प्रपद्यन्ते । नतु मत्प्रपत्तेर्मायातरणोपायत्वाभावादित्यतो महान् भेदः ।। १५ ।।

### भावदीपः

**एतेषामिति** ।। **'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु' (१६.७)**

इत्यादिना षोडशे वक्ष्यमाणप्रवृत्तिनिमित्तज्ञानादिधर्माणां मध्ये अन्यतमस्य सर्वपुरुषेषु

---

१. शाङ्करभाष्यम् ।

सत्वादस्ति तेषामासुरभाव इत्यर्थः ।। एत इति ।। दुष्कृतित्वादिधर्मा इत्यर्थः ।।

( वाक्यमध्ये असन्धेरदोषत्वोपपादनम् )

ननु 'देवास्त्वसुरास्तु' इति भाव्यम् । कथं तत्र सन्ध्यभावः? इत्यत आह– **पदसन्धेरिति** ।। अत एव सप्तमे आद्यपादे 'इकोऽचि विभक्तौ' (**पा.सू.७.१.७३**) इत्यत्र वृत्तौ

'रायत्वं तिसृभावश्च व्यवधानानुमा अपि'

इति श्लोके 'अनुमा' इत्यस्यापिपदेन सन्धिमकृत्वा निर्दिष्टम् । पदमञ्जर्यां च - 'अनुमा अपि इति' इत्यत्र संहिताया अविवक्षितत्वात् सवर्णदीर्घत्वं न कृतमित्युक्तम् ।। १५ ।।

( चतुर्विधभक्तस्वरूपनिरूपणम् )

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।। १६ ।।**
**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।। १७ ।।**[1]

**भाष्यम् —** एकस्मिन्नेव भक्तिरित्येकभक्तिः । तच्चोक्तं गारुडे–

'मय्येव भक्तिर्नान्यत्र एकभक्तिस्स उच्यते' इति ।। १७ ।।

**प्रमेयदीपिका**

( एकभक्तिशब्दे विग्रहविचारः )

'एका भक्तिर्यस्य' इति विग्रहे भक्तिशब्दस्य प्रियादित्वात्तस्मिन् परतः पूर्वपदस्य पुंवद्भावो न सिद्ध्यतीत्यालोच्याऽह– **एकस्मिन्नेवेति** ।। 'अस्य' इत्यध्याहार्यम् । तथाऽपि वैयधिकरण्याद् बहुव्रीहिर्न सिद्ध्यतीति चेन्न । आगमसिद्धत्वाच्च इत्याह– **तच्चेति** ।। 'यस्य' इत्युपस्कर्तव्यम् ।। १७ ।।

---

१. (अ) **ब्र.सू.भा. १.१.१** उदाहृतम् । तत्वप्रकाशिका-'ज्ञानान्मोक्षो नाम अन्यथोपपत्त्या प्रसादादेवोक्तो भवति । ज्ञानेन भगवत्प्रसाद इत्येतत्कुत इति । तत्राह-प्रियो हीति ' ।।

(आ) उत्तरार्धः - **वराह.पु.चा.मा.१.-६।**

**भावदीपः**

**प्रियादित्वादिति** ।। 'स्त्रियाः पुंवद्भाषितपुंस्कादनङ्समानाधिकरणे स्त्रियामपूरणी प्रियादिषु' इति **(पा.सू.६.३.३४)** षष्ठतृतीयपादीयसूत्रेणोक्तषष्ठपुंस्कात् परस्य अनङः स्त्रीप्रत्ययस्य पुंवद्रूपं स्यात् । एकार्थे स्त्रीलिङ्गे परतः, न तु पूरण्यां[1] प्रियादौ परतः' इति पुंवद्भावस्य प्रियादौ परतो निषेधात्; भक्तिपदस्य प्रियादौ पाठादित्यर्थः ।'एका भक्तिः यस्य' इत्युक्तावपि 'एकतद्धिते च' **(पा.सू.६.३.६२)** इति तत्पादगतसूत्रेण 'तद्धितान्ते उत्तरपदे च परत एकशब्दस्य[2] ह्रस्वो भवति' इत्युक्तेः 'एकभक्तिः' इति रूपसिद्धावपि वक्ष्यमाणप्रमाणा[3]नुरोधाद् व्यधिकरण-बहुव्रीहिरप्याराश्रित इति ज्ञेयम् ।। [4]**तथापीति** ।। एकशब्दस्य पुल्लिङ्गत्वोपपत्तावपीत्यर्थः । 'अनेकमन्यपदार्थे' **(पा.सू.२.२.२४)** इति समानाधिकरणानामेव [5]बहुव्रीह्युक्तेरिति भावः ।।

बहुव्रीहित्वख्यापनायाऽह– **इत्युपस्कर्तव्यमिति** ।। अन्यथा '**स उच्यते**' इत्युक्त्यनुपपत्तेरिति भावः ।। १७ ।।

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।[6]**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ।। १८ ।।**

**( भगवज्ज्ञानं बहुजन्मभिर्भवति )**

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।। १९ ।।**

**भाष्यम् — बहूनां जन्मनामन्ते ज्ञानवान् भवति । तच्चोक्तं ब्राह्मे–**

**'बहुभिर्जन्मभिर्ज्ञात्वा ततो मां प्रतिपद्यते' इति ।। १९ ।।**

---

१. सो मातृकायां शुद्धपाठः । का-मं मातृकयोः-'पूरणायाम्' इति पठ्यते ।
२. सो मातृकायां शुद्धपाठः । का-मं मातृकयोः-'एकपरी' इति पठ्यते ।
३. का-मं मातृकयोः-'प्रमाण' इति न पठ्यते ।
४. अयं प्रतीकः सो पाठे न पठ्यते ।
५. मं-मातृकापाठः । का-सो मातृकयोः 'सामानाधिकरण्यमेव' इति पठ्यते ।
६. अयं सनत्सुजातीये २-१७ श्लोकव्याख्याने श्रीवादिराजतीर्थैः उदाहृतः ।

### प्रमेयदीपिका

**'बहूनां जन्मनाम्'** इत्यत्र 'ज्ञानोत्पत्त्यनन्तरं भगवत्प्रपत्तौ बहुजन्मव्यवधानमुच्यते'[१] इति निरासार्थमाह– **बहूनामिति** ।। प्रतीतमेव किं न स्यात्? इत्यत आह– **तच्चेति** ।। **ततः** तदैव ।। १९ ।।

### भावदीपः

'ततः' इत्यनूद्यार्थमाह– तदैवेति ।। १९ ।।

( शुद्धो भागवतो दुर्लभः )

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ।। २० ।।**

**भाष्यम् — प्रकृत्या स्वभावेन ।**

**'स्वभावः प्रकृतिश्चैव संस्कारो वासनेति च'**

**इत्यभिधानात् ।। २० ।।**

### प्रमेयदीपिका

ननु मूलप्रकृतेः सर्वत्रैकत्वात् कथं **'स्वया'** इति प्रातिस्विकत्वमुच्यते? इत्यत आह– **प्रकृत्येति** ।। 'स्वभाव एव' इत्येवशब्दसम्बन्धः ।। २० ।।

**यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां[२] तामेव विदधाम्यहम् ।। २१ ।।**
**स तया श्रद्धया युक्तः तस्याराधनमीहते ।**
**लभते च ततः कामान् मयैव विहितान् हि तान् ।। २२ ।।**

**भाष्यम् — यां यां ब्रह्मादिरूपां तनुम् ।**

---

१. रामानुजभाष्यानुवादोयम् ।
२. 'तस्याचलां भक्तिम्' -इति-ब्रह्मानन्दगिरिरीत्या पाठः ।

( भगवद्भक्ताः अनन्ताः )

उक्तं च नारदीये–

'अन्तो ब्रह्मादिभक्तानां मद्भक्तानामनन्तता ' इति ।

'मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः'[१] (म.भा.१२.३३४.३)

इत्यादेः परिहारसन्दर्भाच्च मोक्षधर्मेषु ।

'अवतारे महाविष्णोर्भक्तः कुत्र च मुच्यते'

इत्यादेश्च ब्रह्मवैवर्ते ।। २१ ।। २२ ।।

**प्रमेयदीपिका**

'रामकृष्णादिरूपां भगवत्तनुम्' इति प्रतीतिनिरासाय आह– **यां यामिति** ।। कुत एतत्? **'अन्तवत्तु फलं तेषाम्'**(७.२३) इति तद्भक्तानामन्तवत्फलवचनात् । तस्य च ब्रह्मादिग्रहणे सम्भवाद् भगवद्ग्रहणे चासम्भवादिति भावेनाऽह– **उक्तं चेति** ।। 'फलस्य' इति शेषः । गम्यत इति गतिः । **इत्यादेः** प्रश्नस्य परिहाररूपवाक्यसन्दर्भाच्च । बहुत्वादनुदाहरणमिति भावः ।।

अनन्तफलत्वं मूलरूपभक्तानामस्तु । अवतारतनुभक्तानाम् अन्तवत्फलाङ्गीकारे को विरोधः? इत्यत आह– **अवतार इति** ।। कुत्र च अवतारे ।। २१ ।। २२ ।।

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।[२]**

**देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ।। २३ ।।[३]**

( भगवतो कार्यदेहो नास्ति )

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**

१. युधिष्ठिरवचनमिदम् ।

२ वि.त.नि.टीकायां- 'कर्मदेवतादिविषयश्रवणमननविज्ञानानुष्ठान-आह्वानपूजादिना यत् फलं तत्सर्वमधिकं भगवच्छ्रवणादिनैव लभ्यते । ततस्तदेव कार्यं लाघवादाधिक्याच्च । नान्यद् गौरवाद् अल्पत्वाच्च'- व्या.टि. अल्पत्वाच्चेति । अन्तवत्तु..मेधसामिति गीतोक्तेरित्यर्थः ' ।।

३. ब्र.सू.भा. त.प्र.१-२-१६- 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' इत्यादेरन्यविषया अन्यगतेरयुक्तत्वात्' इत्युक्तम् । तथा, त.प्र.१-२-३२ 'मद्भक्ता यान्ति मामपि' इत्यादेरन्योपासकस्यान्यप्राप्तेरयोगात्' इति च ।।

**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

**भाष्यम् —** को विशेषस्तवान्येभ्यः? इत्यत आह– **अव्यक्तमिति** ॥ कार्यदेहादि-वर्जितम् । तद्वान् इव प्रतीयस इत्यत आह – **व्यक्तिमापन्नमिति** ॥ कार्य-देहाद्यापन्नम् ॥

**प्रमेयदीपिका**

**अव्यक्तम्** इति श्लोकस्य प्रकृतेन साक्षात् सङ्गत्यभावात् तं सङ्गमयितुमाह– **क** इति॥ **अन्येभ्यः** ब्रह्मादिभ्यः । 'येन तान् प्राप्तानामन्तवत्फलत्वेऽपि त्वां प्राप्तानामनन्तफलता' इति शङ्काशेषः । कथमनेनोक्तशङ्कापरिहारः? इत्यत आह– **कार्येति** ॥ अनेन यथाश्रुतं पदं पठित्वा व्याख्यातम् । वस्तुतस्तु 'अव्यक्तं माम्' इत्यनुवादात् 'अव्यक्तोऽहम्' इति यत्सिद्धं तस्येदं व्याख्यानमिति ज्ञातव्यम् । इदानीमुत्तरस्य सङ्गतिमाह– **तद्वानिति** ॥ कार्यदेहादिमान् इवेति मृदूक्तिः, वस्तुतस्त्वेवेति । 'अतो न तद्वर्जितः' इति शेषः । प्रकृतोपयोगितया व्याचष्टे– **कार्येति** ॥

**भावदीपः**

भाष्ये **अव्यक्तम्** इति प्रतीकग्रहणात् 'कार्यदेहवर्जितम्' इति व्याख्यैव युक्ता, प्रथमान्त-व्याख्या त्वयुक्ता । 'अव्यक्तः' इति विधायकपदाभावादिति हृद्याशङ्क्यार्थलब्धस्येयं व्याख्येत्याह– **अनेनेत्यादिना** ॥ आक्षेपलाभायाऽह– **इति मृदूक्तिरित्यादि** ॥

**भाष्यम् —** तच्चोक्तम् – 'सदसतः परम्'[१]

'न तस्य कार्यम्' (श्वे.उ.६.८),

'अपाणिपादः'(श्वेत.उ.३.१९)[२]

'आनन्ददेहं पुरुषं मन्यन्ते गौणदेहिकम्'

इत्यादौ । **भावं याथार्थ्यम्** । तथाऽब्रवीत् (च) ।

---

१. इदं वाक्यं ९.१७ गी.भाष्ये भारतस्थत्वेन , गी.११.३७ भाष्ये भागवतस्थत्वेन च पठितम् ।

२. ब्र.सू.भा. -त.प्र.२.१.३३. 'अपाणिपाद इति श्रुतौ पाण्यादिविरहिणः अपि हरेर्ग्रहणादिकमुक्त्वा 'न तस्य कार्यम्' इति पाण्यादिरहितत्वस्य प्राकृतविषयत्वेन सर्वोत्तमत्वेन परमशक्तित्वेन चोपपादितत्वात्'॥

**'याथातथ्यमजानन्तः परं तस्य विमोहिताः' इत्यादि ।। २४ ।।**

## प्रमेयदीपिका

भगवतः कार्यदेहादिवर्जितत्वं तद्वक्ताप्रतीतिश्चाज्ञानमूलेत्येतत् कुतः? येन वाक्यद्वयम् उक्तार्थं स्यादित्यतोऽर्थद्वये क्रमेण प्रमाणान्याह– **तच्चेति** ।। 'कार्यात् कारणाच्चेदमपरं रूपं परं तु रूपमजानन्तः' इति प्रतीतिनिरासार्थमाह– **भावमिति** ।। **याथार्थ्यं** प्रमाणाव्यभिचरितस्वरूपम् । अत एव **परम्** । कुतोऽयमर्थः? समाख्यानादित्याह– **तथेति** ।। यद्यप्ययमर्थः **'त्रिभिः'**(७.१३) इत्यत्रोक्तः,तथाऽपि प्रसङ्गात् पुनरुक्त इत्यदोषः।। २४ ।।

## भावदीपः

पूर्वार्धतात्पर्यं निष्कृष्यानुवदति– **भगवत इत्यादिना** ।। **वाक्यद्वयमिति** ।। 'अव्यक्तं माम्' इति एकम्, 'व्यक्तिम्' इत्याद्यपरमिति वा, 'अव्यक्तोऽहम्' इत्यर्थतः सिद्धमेकम्, यथाश्रुतमन्यदिति वेति ज्ञेयम् ।। याथार्थ्यस्य प्रमाणधर्मत्वात् **'मम'** इत्युक्तार्थस्य कथम्? इत्यतः तद्घटयति[१]– **प्रमाणेति** ।। प्रमाणं यथा गृह्णाति तथास्थितस्वरूपमित्यर्थः ।। **परमिति** ।। विलक्षणमित्यर्थः ।। **प्रसङ्गादिति** ।। ब्रह्मादिप्राप्तेः अन्तवत्फलम्,भगवत्प्राप्तेरनन्तफलम् इत्युक्तौ को विशेषस्तेभ्यस्तवेति चोद्यनिरासस्य प्रसक्तत्वादित्यर्थः ।। **अत एवेति** ।। मायाया उपायविशेषत्वादेवेत्यर्थः ।। २४ ।।

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ।। २५ ।।**

**भाष्यम् —** अज्ञानं च मदिच्छयेत्याह– **नाहमिति** ।। **योगेन** सामर्थ्योपायेन । **मायया** च । मयैव **मूढो नाभिजानाति** । तथा हि पाद्मे–

'आत्मनः प्रावृतिं चैव लोकचित्तस्य बन्धनम् ।
स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः'[२]

इति च ।। २५ ।।

---

१. 'तद्व्याख्याति'-पां-कां ।

२. स्वसामर्थ्यात् स्वकर्माणि रमया सह केशवः ।
कुरुते स्वयमेवैष कानिचित् पुरुषोत्तमः ।। इति नारदीये (भाग.ता.३-१.-२२)

### प्रमेयदीपिका

तथाऽपि **'नाहं प्रकाशः'** इति पुनरुक्तिरित्यतः तात्पर्यमाह– **अज्ञानं** चेति ।। येनाज्ञानेन मामन्यथा मन्यन्ते तदज्ञानं च मदिच्छाधीनमेव, न स्वतन्त्रम् । येन तया निन्दया मम खेदः स्यादिति भावः । 'योग एव माया'[१] इति व्याख्यानमसदिति भावेनाऽह– **योगे**नेति ।। सामर्थ्यमेवोपायः ।।

**'युज्यते येन योगोऽसावुपायश्शक्तिरेव च'** इति वचनाद्योगशब्दस्योभयार्थत्वेन द्वन्द्वैकवद्भावः किं न स्यात्? इति चेन्न । **मायया च** इत्यस्य वैयर्थ्यापत्तेः । तस्या अप्युपायविशेषत्वात् । अत एवोपायार्थत्वं गृहीत्वा सामार्थ्येति तद्व्याख्यानं कृतम् । इदं तात्पर्यं श्लोके न प्रतीयते? इत्यत आह– **मयै**वेति ।। उक्तार्थस्थापनाय पुराणसम्मतिमाह– **तथे**ति ।।

### भावदीपः

**उपायार्थत्वं** 'योगपदस्य' इति योज्यम् ।। शङ्कते– **युज्यत इत्यादिना** ।। **उभये**ति ।। शक्त्युपायरूपोभयेत्यर्थः ।। **द्वन्द्वैकवद्भाव इ**ति ।। **'सामर्थ्योपायेन'** इति भाष्य इति योज्यम्।।

( भगवतो माया न बन्धिका )

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ।। २६ ।।**

**भाष्यम् —** न मां माया बध्नातीत्याह– **वेदे**ति ।। **न कश्चन** अतिसमर्थोऽपि स्व-सामर्थ्यात् ।। २६ ।।

### प्रमेयदीपिका

अकस्मात् स्वस्य सार्वज्ञं किमित्युच्यते? इत्यत आह– **ने**ति ।। 'यवनिकाद्युभयभाग-वर्तिनोः परस्पराज्ञानवत्तवापि भूतविषये ज्ञानं न स्यादिति शङ्कानिरासार्थम्' इति शेषः । तथाऽपि **'मां तु वेद न कश्चन'** इति पुनरुक्तमित्यत आह– न **कश्चने**ति ।। असमर्थो लोको न जानातु । **अतिसमर्थ**स्तु ब्रह्मादिर्ज्ञास्यतीति शङ्कानिरासार्थमेतदुक्तम् । **कश्चन** इति विशेषणादिति भावः । तर्हि **'ज्ञानी च भरतर्षभ'** (७-१६) इत्यादि विरोध इत्यत उक्तम्– स्वेति ।। २६ ।।

१. शाङ्करभाष्ये ।

### भावदीपः

**यवनिकादीति** ।। द्वयोः मध्यगतविवृतप्रसारितपटाद्यावरणं यवनिका । **आदिपदेन** कुड्यादिग्रहः ।। इत्यादिविरोध इति ।। **'ज्ञानी च मां भजते'**, **'तेषां ज्ञानी नित्ययुक्तः'**, **प्रियो हि ज्ञानिनः'** इत्यादिपूर्वतनग्रन्थविरोधः । **'न कश्चन वेद'** इत्युक्त्या ज्ञानिन एव दुर्लभत्वादिति भावः ।। २६ ।।

( अज्ञानं कामादिहेतुकम् )

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ।। २७ ।।**[1]

**भाष्यम् — द्वन्द्वमोहेन सुखदुःखादिविषयमोहेन । इच्छाद्वेषयोः प्रवृद्धयोर्न हि किञ्चिज्ज्ञातुं शक्यम्[2]।।**

### प्रमेयदीपिका

'इच्छाद्वेषौ द्वन्द्वम् । तज्जन्यो मोहो द्वन्द्वमोहः । तेन' इति कश्चित्[3]। तदसदिति भावेनाऽह– **द्वन्द्वेति** ।। अन्यथा इच्छाद्वेषसमुत्थेन मोहेनेत्येव स्यादिति भावः । व्याख्यान-व्याख्येयभावश्चागतिका गतिः । द्वन्द्वमोहस्य इच्छाद्वेषसुमुत्थत्वं कथम्? इत्यत आह– **इच्छेति** ।। **किञ्चित्** सुखादिकम् । 'हेयत्वादिना' इति शेषः ।।

( जीवेश्वराभेदविषयकमोहे अवान्तरकारणनिरूपणम् )

**भाष्यम् — कारणान्तरमेतत् । सर्गे सर्गकाले । आरभ्यैव । शरीरे हि सतीच्छादयः।**

१. **वि.त.नि.टीकायाम्** ' ऐकात्म्यं नाम ' इति वाक्यव्याख्याने उदाहृतोयं श्लोकः राघवेन्द्रतीर्थैः व्याख्यातः । 'सप्तमे गीतायां इच्छाद्वेषाभ्यां समुत्थेन जीवेश्वररूपद्वन्द्वविषयमिथ्याज्ञानेन तथा तद्धर्मभूत सर्वज्ञत्व-अल्पज्ञत्वस्वातन्त्र्यपारतन्त्र्यसर्वशक्त्यल्पशक्त्यादिरूपद्वन्द्वविषयकमोहेनेत्यर्थः । मां तु वेद न कश्चन इति पूर्वेणान्वयः । सर्वभूतानि संमोहं सर्गे यान्ति परन्तपेत्युत्तरेण वाऽन्वयः । सर्गे सर्गकाले । सर्गकालमारभ्यैव । संमोहं जीवेश्वरैक्यज्ञानरूपं मिथ्याज्ञानं वा प्रागुक्तद्वन्द्वमोहदार्ढ्यं वा यान्तीति ।।'

२. 'द्वन्द्वमोहो नाम वैषयिकसुखस्य दुःखादेश्च हेयतया ज्ञानाभावः, यथोक्तं गीताभाष्ये-'इच्छाद्वेषयोः प्रवृद्धयोः सतोः नहि किञ्चित् सुखादिकं हेयतया ज्ञातुं शक्यम्' इति **वि.त.नि.श्रीनिटिप्पण्यां** वाक्यरीतिः।

३. शाङ्करभाष्ये ।

**पूर्वं त्वज्ञानमात्रम् ।। २७ ।।**

### प्रमेयदीपिका

ननु **'नाहं प्रकाशः'** (७.२५) इति भगवतो **'दैवी ह्येषा'** (७.१४) इति तदधीनायाः गुणमय्या मायायाश्च मोहकत्वमुक्तम् । तत्कथं भगवद्विषयसम्मोहस्येच्छाद्वेष-समुत्थो द्वन्द्वमोहः कारणमुच्यते? इत्यत आह– **कारणान्तरमिति** ।। इच्छाद्वेषसमुत्थद्वन्द्वमोह-लक्षणमेतद् भगवद्विषयस्य सम्मोहस्यावान्तरकारणमुच्यत इत्यर्थः ।।

कुत एतत्? इत्यतः तत्सूचकं पदं पठति– **सर्ग** इति ।। **सर्गः** क्रिया । कथं तस्या अधिकरणत्वम्? इत्यतो लक्षणामाश्रित्य व्याचष्टे– **सर्गेति** ।। तदुत्तरकालं किं तत्र कारणम्? इत्यतः पुनर्लक्षणाऽऽश्रयणेनाऽह– **आरभ्येति** ।। सर्गकालमिति सम्बन्धः । कथमनेनावान्तरकारणत्वं ज्ञायते? इत्यतः सावधारणमेतदित्युक्तम् **'एव'** इति ।।

उक्तमुपपादयन्नाह– **शरीर** इति ।। **आदिपदेन द्वेषस्य द्वन्द्वानां च ग्रहणम्** । अतः सर्गकालमारभ्यैवैतत् कारणमिति सिद्धम् । एतावता कथमवान्तरकारणत्वसिद्धिः? इत्यत आह– **पूर्वं त्विति** ।। सर्गात् पूर्वं **तु** इच्छादिना विनाऽज्ञानमस्त्येव भगवदिच्छाद्यधीनम् । अत एतदवान्तरं कारणमिति सिद्धमित्यर्थः ।। २७ ।।

### भावदीपः

**'आरभ्य'** इत्यस्याकाङ्क्षां पूरयति– **सम्बन्ध इति** ।। **'आरभ्यैव'** इत्येवकारोक्तेः कृत्यं व्यनक्ति– **कथमित्यादिना** ।। एतदिति भावेन **उक्तमेव** इतिपदमित्यर्थः ।। 'सावधारणमेतत्' इत्युक्तिमात्रेण कथं परिहारः? इत्यत आह– **उक्तमुपपादयन्निति** ।। **द्वन्द्वानां चेति** ।। सुखदुःखलाभालाभादिद्वन्द्वानामित्यर्थः ।। २७ ।।

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ।। २८ ।।**

**भाष्यम् —** विपरीताश्च केचित् सन्तीत्याह– **येषामिति** ।। २८ ।।

### प्रमेयदीपिका

**चतुर्विधाः** इत्यनेन गतार्थमुत्तरं वाक्यमित्यत आह– **विपरीताश्चेति** ।। त्वत्प्रपत्तेर्माया-

तरणकारणत्वात् स्वदोषाद्वा त्वां न प्रपद्यन्त इत्यत्र कथं निर्णयः? इत्यतस्तदुक्तम् । सर्वभूतानि सम्मोहं यान्ति चेल्लुप्तो मुक्तिमार्ग इत्याशङ्क्यात्र द्वन्द्वमोहरहिताश्च **केचित् सन्तीत्याहेत्यर्थः** ।। २८ ।।

### भावदीपः

गतार्थतानिरासायार्थभेदं वक्ति—त्वत्प्रपत्तेरिति ।। **'दैवी ह्येषा'**(७.१४)इत्यादि श्लोकद्वयतात्पर्यानुवादः क्रमात् पञ्चम्यन्तद्वयेन ।। तदुक्तमिति ।। **'चतुर्विधाः'** (७.१६) इत्याद्युक्तमित्यर्थः ।। **'इच्छा'** (७.२७) इत्यादि श्लोकार्थानुवादः – **सर्वभूतानीत्यादि** ।। २८ ।।

( भगवद्भजने फलनिरूपणम् )

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ।। २९ ।।**
**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ।। ३० ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ।।

**भाष्यम् — जरामरणमोक्षाय** इत्यन्यत्कामव्यावृत्त्यर्थं मोक्षे सक्तिस्तुत्यर्थं वा । न विधिः ।

'मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिभाक्'

इतीतरस्तुतेर्नारदीये ।

'नात्यन्तिकम्'[१] (भाग-३.१६.४८) इति च ।।

### प्रमेयदीपिका

**मां भजन्ते** इत्युक्तानुवादेन फलमुच्यते । तत्र 'जरामरणमोक्षाय' इत्यनुक्तस्यानुवादासम्भवादप्राप्तत्वेन विध्यर्थं मद्भजनं च जरामरणमोक्षोद्देशेन कार्यमित्येवं प्रतीतिनिरासार्थमाह–

१. द्वितीयाध्याये व्याख्यातोयं श्लोकः ।

**जरेति** ।। लक्षणया स्वर्गादिकामनिवृत्तिरर्थोऽस्येति तथोक्तम् । मोक्षविषया **सक्तिः** अन्यसक्तेः प्रशस्तेति तत्स्तुत्यर्थं **वा** ।।

**सर्वथा न विधिः** । कुतः? इत्यत आह– **मुमुक्षोरिति** ।। इतरस्यामुमुक्षोर्भक्तस्य । न हि प्रशस्ते सत्यप्रशस्तं नियन्तुं युक्तमिति भावः । **'इति च' 'इतरस्तुतेः'** इति सम्बन्धः । प्रकारभेदात् पृथगुक्तिः ।।

### भावदीपः

अनुवादासम्भवे हेतुः– **अप्राप्तत्वेनेति** ।। 'विध्यर्थम्' इत्यत्राप्ययं हेतुरन्वेति । विध्यर्थत्वमेव व्यनक्ति– **मद्भजनमित्यादिना** ।। 'सर्वथा न विधिः, कुतः' इत्यस्य किमुत्तरम्? इत्यत आह– **नहीति** ।। मोक्षमनुद्दिश्य भजने प्रशस्ते तदुद्देशे सत्यप्रशस्तं तदुद्देशेन भजनं विधिरित्यर्थः ।। **'जरा'** इति श्लोकेन नियन्तुं युक्तमित्यर्थः ।। **प्रकारेति** ।। स्तुतिप्रकारभेदान्मोक्षे 'सक्ति' इति वाक्ये अनुक्त्वा पृथगुक्तिरित्यर्थः ।।

( भक्तियोगस्य गरीयस्त्वनिरूपणम् )

**भाष्यम् —**

**'देवानां गुणलिङ्गानामानुश्राविककर्मणाम् ।**
**सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ।।**[1] (भाग.३-२६-३२,३३)
**अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।**
**जरयत्याशु या कोशं निगीर्णमनलो यथा ।।'**

इति लक्षणाच्च भागवते[2]।।

---

१. 'यद्यपि सत्त्वादिगुणभेदेन भक्तिरप्यनेकधा । तथापि सात्त्विकसञ्ज्ञमुत्तमाधिकारियोग्यं भक्तियोगं निरूपयति- देवानामिति । सत्त्वे एकमनस इत्येतत्पदद्वय ततन्त्रेणोपात्तन्यायेन द्विरावृत्त्या व्याख्येयम् । सदा सर्वगुणाढ्यत्वात् सत्त्वो विष्णुरुदीर्यते इति वचनात् सत्त्वे सर्वगुणाढ्ये एव हरावेव एकमनसः एकाग्रमनसः पुरुषस्य मनुष्याद्यन्यतमस्य गुणलिङ्गानां शब्दादिज्ञापनलक्षणानां इन्द्रियाभिमानिनाम् आनुश्राविककर्मणां वेदोक्तकर्मानुष्ठानेन तदुक्तानतिलङ्घिनां आनुशश्राविककर्मासौ श्रुत्युक्तं यो न लङ्घयेत् इत्युक्तेः देवानां तात्त्विकसञ्ज्ञानां सत्त्वे भगवति एकमनसः एकाग्रमनसः एकाग्रतयान्यत्र्यापारमन्तरेण अन्तःकरणस्य या वृत्तिः सा भक्तिरित्युच्यते । कीदृशी-स्वाभाविकी गङ्गाप्रवाहलक्षणा ।। ३२ ।।

२. अनिमित्ता फलसङ्कल्परहिता । अत्यन्तचित्तनिरोधरूपत्वाद् दुःखहेतुशङ्का न कार्या । प्रत्युत पूर्णानन्दरूपत्वात् अपक्वभक्त्यवाप्तमुक्तेरुत्तमेत्याह- सिद्धेरिति । यस्मिन् काले पूर्णभक्तयः सब्रह्मचारिणो मुक्तिमेष्यन्ति

## प्रमेयदीपिका

इतश्च न मोक्षकामविधिरित्याह– **देवानामिति** ।। **सत्त्व एवैकमनसः** शुद्धसात्त्विकस्य पुंसो **देवानाम्** इन्द्रियाणाम् । **गुणलिङ्गानां** गन्धाद्युपलब्धिलक्षणगुणानुमेयानाम् । तथा वचनादिक्रियाऽनुमेयानां च ।। **आनुश्राविककर्मणां** वैदिकानुष्ठाने कारणानाम् । **या भगवत्यनिमित्ता** फलोद्देशरहिता केवलं स्वाभाविकी निरवधिकस्नेहरूपस्वभावनिर्वृत्ता वृत्तिः सा **भक्तिः** । सा च सकामभक्त्या जातायाः **सिद्धेः** मुक्तेरपि **गरीयसी** । **या** सा कामनाऽभावेऽपि **कोशं** लिङ्गशरीरं स्वभावादेव **जरयति** अनलवत् इत्यनिमित्तत्वस्य भक्तिलक्षणत्वेनोक्तत्वाच्च इत्यर्थः । नहि लक्षणवैकल्यं विधेयमिति भावः ।।

## भावदीपः

**मोक्षकामेति** ।। मोक्षकामोद्देशेन भजनविधिरित्यर्थः ।।

### ( एकान्तभक्तलक्षणम् )

**भाष्यम् —** आह च–

'सर्ववेदास्तु देवार्थाः देवा नारायणार्थकाः ।

---

तस्मिन्नेव समये मुक्तिप्राप्तियोग्यस्य भक्तिपरिपारमनवाप्तस्य पुंसो या सिद्धिः अपूर्णसुखलक्षणा मुक्तिः तस्याः सिद्धेर्गरीयसी ।। तदुक्तम् -अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति ।अतस्तादृशमुक्तेश्च भक्तिः सिद्धेर्गरीयसी इति । पूर्णसुखहेतुत्वात् ज्ञानवदन्तरङ्गत्वाच्च गरीयस्त्वं युक्तमित्याह- जरयतीति । कोशं लिङ्गशरीरम् । ..। समूलतूलनाशस्य विवक्षितत्वात् तस्मिन्नेवार्थे दृष्टान्तमाह- निगीर्णमिति । निरीर्णं सर्वतो ग्रस्तम् । देवानाम् असुरेन्द्रियाभिमानित्वेन पापकर्मणि प्रेरणया तद्दर्शनेन जुगुप्सादिना चित्तविक्षेपसम्भवेन भक्तेरात्यन्तिकत्वायोगादन्यत्र अभिमानित्वे उभयेषामपि भगवति मनोवृत्तेर्गङ्गाप्रवाहवत् सिद्धत्वेन तदभावात् सत्त्वे एव एकमनसः पुंसः गुणलिङ्गानाम् इति विशिष्योक्तेरभिप्रायः । सम्भावनामात्राभिप्रायेणोक्तमिदमित्येतावता भक्ते न्यूनातिरेकभावो न कल्पनीयः । हर्याज्ञाकारित्वेन तत्प्रीतिहेतुत्वात् ।।

देवजातिमात्रपरिहाराय-गुणलिङ्गानामिति । कल्याद्यसुरव्यावृत्तये आनुश्राविककर्मणामिति । तेषां वेदोक्त-कर्मानुष्ठाननियमाभावात् । उक्तविशेषणवतां देवानां सत्त्वे भगवत्येतमनसो वृत्तिर्भक्तिरित्युक्ते अधमाकारिभिः क्रियमाणाया अभक्तित्ववमान्यन्तिकत्वाभावश्च स्यात् । तस्मात् कीदृशी मम गोचरा इति पृष्टत्वात् तत्परिहाराय च विभागो वक्तव्यः । देवानां सत्त्व एव एकमनसो वृत्तिरित्येतद् देवसामान्यभक्तिलक्षणम्। गुणलिङ्गानामिति तद्विशेषभक्तिलक्षणम् । आनुश्राविककर्मणामिति सर्वसामान्यभक्तिलक्षणम् । स्वाभाविक्यनिमित्ता इति सर्वत्र समम् । अधमाधिकारिभिः क्रियमाणा भक्तिरीदृशी । सिद्धेर्मुक्तेः गरीयसी प्रधानसाधनभूता' इति विजयध्वजतीर्थाः।

**नारायणस्तु मोक्षार्थे मोक्षो नान्यार्थ इष्यते ।**
**एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।**
**अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम्''[1] इति गीताकल्पे ।**

**त एव च विदुः । 'यमैवेष वृणुते'(कठ.उ.२.२२) इति श्रुतेः ।। २९,३० ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सप्तमोऽध्यायः ।।**

## प्रमेयदीपिका

**आह च** स्पष्टमेतदन्यत्र ।। **देवार्थाः** देवप्रतिपत्त्यर्थाः । प्रतिपन्ना **देवाः** नारायणज्ञानार्थाः । **मोक्षार्थे** ज्ञातव्यः । **नान्यार्थः** । **परः** पुरुषार्थः । **मध्यमभक्तानां** चित्तवृत्तिः । **एकान्तानां** नियतानामुत्तमभक्तानां **न कस्यचिदर्थे** । **स एव** परमपुरुषार्थः ।।

ननु **मामेव ये प्रपद्यन्ते** इत्युक्तत्वात् **ते ब्रह्म तद्विदुः** इति पुनरुक्तमित्यत आह– **त एवेति** ।। अन्योपायनिवृत्त्यर्थमेतदित्यर्थः । स्यादेवं व्याख्यानम् । यदि भगवद्भजनेन विना ज्ञानस्यान्योपायाभावः प्रमितः स्यात् । स एव च कुतः? इत्यत आह– **यमिति** ।। भक्तमेव च वृणुत इति च प्रसिद्धम् ।। २९ ।। ३० ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तमोऽध्यायः समाप्तः ।।**

## भावदीपः

**'आह च'** इत्यनूद्य शेषमाह – **स्पष्टमित्यादि** ।। फलितमाह– **मोक्षार्थे ज्ञातव्य इति** ।। नारायण इति योज्यम् । नान्यार्थस्य फलितोक्तिः– **पर इत्यादि** ।। **अन्योपायेति** ।। भगवज्ज्ञानेन तद्भजनादन्योपायनिवृत्त्यर्थं 'ब्रह्म तद्विदुः' इति पुनर्वचनमित्यर्थः ।। श्रुतेः उक्तार्थसंवादतासिद्ध्यर्थमाह– **भक्तमेवेति** ।। २९-३० ।।

।। श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते सप्तमोऽध्यायः ।।[2]

---

१. अयं सनत्सुजातीये ३-५१ श्लोकव्याख्याने श्रीवादिराजतीर्थैः उदाहृतः ।
२. 'संशप्तकशत्रुसारथिकृष्णार्पणमस्तु' इति क-कोशे ।

# ।। अथ श्रीमद्भगवद्गीतायाम् अष्टमोऽध्यायः ।।

( अर्जुनस्य 'किं ब्रह्म' इत्यादि सप्त प्रश्नाः )

**अर्जुन उवाच**

**किं तद् ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ।। १ ।।**
**अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ।। २ ।।**

( अष्टमाध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम् — मरणकालकर्तव्यगत्याद्यस्मिन्नध्याय उपदिशति ।। १ ।। २ ।।**

**प्रमेयदीपिका**

अध्यायस्यावान्तरप्रतिपाद्यमर्थमाह[1] ।। **मरणेति** ।। गम्यत इति गतिः । **आदिपदेन** मार्गादिकम् । मरणकालकर्तव्यं च गतिश्च ते आदी यस्य तत् तथोक्तम् । कर्तव्यस्मरण-विषयत्वगम्यत्वादिरूपो भगवन्महिमैव अत्र[2] वर्ण्यत इति षट्कान्तर्भावसिद्धिः । 'उक्त-व्याख्यानपूर्वकम्' इति चोपस्कर्तव्यम् । तेनाऽनन्तर्यलक्षणाऽपि सङ्गतिः सिद्धा । तत्प्रसङ्गेनैव मरणकालकर्तव्याद्युपदेशात् ।। १ ।। २ ।।

**भावदीपः**

**अवान्तरेति** ।। भगवन्महिमत्वरूपैकार्थस्यैवैकवाक्यताहेतोरत्र प्रतिपादनादित्यर्थः[3]। कर्मणि रूपमुपेत्याऽह– **गम्यत इति** ।। तात्पर्योक्तमाह– **उक्तव्याख्यानेति** ।। १-२।।

( ब्रह्म-स्वभाव-कर्मादिस्वरूपनिरूपणम् )

**श्रीभगवानुवाच**

---

१. मातृकाद्वये 'अर्थम्' इति अधिकम् । 'प्रतिपाद्यमाह' इति एकस्मिन् कोशे ।
२. मातृकाद्वये 'अत्र' इति पठ्यते । ३.'दिति भावः' -मं, सो।

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसञ्ज्ञितः ॥ ३ ॥**

**भाष्यम् — परममक्षरं ब्रह्म** । वेदादिशङ्काव्यावृत्त्यर्थमेतत् ॥

### प्रमेयदीपिका

ननु पूर्वाध्याये **'ते ब्रह्म'**(७.२९) इति निर्विशेषणमेवोपक्षिप्तम् । अत एवात्र **'किं तद् ब्रह्म'**(८.१) इति तथैव पृष्टम् । उत्तरे तु कस्मात् **'अक्षरं परमं ब्रह्म'** इति सविशेषणमुपादीयते? इत्यत आह– **परम**मिति ॥ अक्षरस्यैव परमत्वं[१] विशेषणम् । न ब्रह्मण इत्यर्थः। तर्हि 'अक्षरम्' इत्येवालम् । किं विशेषणेन? इत्यत आह– **वेदे**ति ॥ **आदि**पदेन प्रकृतिः गृह्यते । तयोरपि ब्रह्माक्षरशब्दवाच्यत्वात् प्रसक्तिः ॥

### भावदीपः

**तदिति** ॥ **'ते ब्रह्म तद्विदुः'** इति पूर्वोक्तव्याख्यानप्रसङ्गेनैवेत्यर्थः ॥ **तर्हीति** ॥ अक्षरविशेषणत्व इत्यर्थः॥

( अध्यात्मशब्दार्थः )

**भाष्यम् —आत्मन्यधि यत् तत् अध्यात्मम् । आत्माऽधिकारे यत् तदिति वा । तथा हि । जैवः स्वभावः ॥**

### प्रमेयदीपिका

'स्वभावोऽध्यात्मम्' इति शब्दद्वयस्यैकविषयत्वसिद्धयेऽध्यात्मशब्दं तावद् द्वेधा व्याचष्टे– **आत्मनी**ति ॥ आत्मानं जीवमधिकृत्य तदुपकारित्वेन वर्तमानं वस्त्वित्यर्थः । **आत्माऽधिकारे** इति ग्रन्थविशेषस्य सञ्ज्ञा । **यत्** प्रतिपाद्यं **तत्** अध्यात्ममिति वेत्यर्थः । अत्राध्यात्मशब्दं प्रथमान्तं गृहीत्वा प्रथमं व्याख्यातम् । सप्तम्यन्तमुपादाय द्वितीयम् । आत्मशब्दं देहविषयमादाय व्याख्याने परमेश्वरप्रसक्तेर्न तथा व्याख्यातम् ॥

एवं तर्हि 'स्वभावः' इत्युभयस्य कथमुत्तरमित्यतस्तावत् तद्व्याख्यानं प्रतिजानीते– **तथा हीति** ॥ तत्राऽद्योत्तरत्वेनाऽदौ व्याचष्टे– **जैव** इति ॥ जीवस्यायं **जैवः** अन्तःकरणादिः,

१ 'परमत्वविशेषणं'-इति समस्तं कचिन्मातृकायाम् ।

देहपर्यन्तः पदार्थः **स्वभावः** । स्वस्य भाव इति व्युत्पत्त्या । **'ते ब्रह्म तद्विदुः'**(७.२९) इति जीवानां प्रकृतत्वात् स्वशब्दो जीववाची । तथाचात्मन्यधि यत् तदित्येवं व्याख्याताध्यात्म-शब्दार्थप्रश्नस्येदमुत्तरं भवतीति भावः ।।

### भावदीपः

**प्रथमान्तमित्यादि** ।। **अध्यात्मम्** आत्मोपकारित्वेन वर्तमानमिति, **अध्यात्मे** आत्माधिकाराख्यग्रन्थे प्रतिपाद्य इति प्रथमान्तं सप्तम्यन्तमित्यर्थः ।। **परमेश्वरेति** ।। तस्यापि देहमधिकृत्य स्थितत्वादिति भावः ।। **उभयस्येति** ।। को अध्यात्मम्, कः अध्यात्मप्रतिपाद्य इति व्याख्यानद्वयेन कृतप्रश्नद्वयस्येत्यर्थः ।।

### ( स्वभावशब्दार्थः )

**भाष्यम् — स्वाख्यो भावः स्वभाव इति व्युत्पत्त्या जीवो वा स्वभावः सर्वदा-अस्त्येवैकप्रकारेणेति भावः । अन्तःकरणादिव्यावृत्त्यर्थो भावशब्दः । न ह्येकप्रकारेण स्थितिरन्तःकरणादेः । विकारित्वात् । स्वशब्द ईश्वरव्यावृत्त्यर्थः ।।**

### प्रमेयदीपिका

इदानीं द्वितीयोत्तरत्वेन व्याख्याति– **स्वाख्य इति** ।। पूर्ववदत्रापि स्वशब्दो जीववाची। तथाच **आत्माऽधिकारे** इति व्याख्याताध्यात्मशब्दार्थप्रश्नस्येदमुत्तरं भवतीत्याशयः ।। ननु जैववाचित्वे भावशब्दः सार्थकः । षष्ठ्याः साकाङ्क्षत्वात् । जीववाचित्वे तु तस्य पदार्थत्वा-व्यभिचारात् स्वशब्देनैवालम्, किं भावशब्देन? इत्यतो भावशब्दं तावदन्यथा व्याचष्टे– **सर्वदेति** ।। यद्यपि भवनकर्ता **भावः** । तथाऽपि विशेषानुपादाने मुख्यस्य ग्राह्यत्वात् 'सर्वदा' इत्यादि सिद्ध्यति । तथाऽपि तस्य किं प्रयोजनम्? इत्यत आह– **अन्तःकरणादीति** ।।

स्वशब्दमात्रोपादाने तस्याऽत्मीयेऽपि प्रयोगादन्तःकरणादिकमपि प्रसज्येत । तथाच न द्वितीयस्येदमुत्तरं स्यात् । आत्मैव ह्यात्माऽधिकारे प्रतिपाद्यो वक्तव्यो नान्तःकरणादिकम् । अतस्तद्व्यावृत्त्यर्थो भावशब्दः प्रयुक्तः । कथं तेन तद्व्यावृत्तिः? इत्यत आह– **न हीति** ।। **'अन्नमयं हि सोम्य मनः'**(छां.उ.६.५.४) इत्यादेरिति भावः । तथाचान्तःकरणादौ व्यावृत्ते स्वशब्द आत्मार्थतया व्याख्यातो भवतीति हृदयम् ।।

एवं तर्हि 'भावः' इत्येवास्तु, किं स्वशब्देन? इत्यत आह– **स्वशब्द** इति ।।

ईश्वरोऽपि हि **सर्वदैकप्रकारेणास्त्येव** । अतो 'भावः' इत्येवोक्ते तत्प्रसक्तौ पूर्ववद् द्वितीयोत्तरत्वासम्भवे तद्व्यावृत्त्यर्थः स्वशब्दः । न हीश्वरो जीवानां स्वः । भेदप्रमाणविरोधात्। अत एव 'ईश्वरस्वभावो जीवः' इति व्याख्यानमपास्तम् ।।

**भावदीपः**

भावशब्दव्याख्या – **पदार्थ इति** ।। **अन्नमयं हीति** ।। प्रत्यहमुपभुक्तान्नसूक्ष्मभागेन मनस उपचयस्य श्रुतिसिद्धत्वादित्यर्थः ।। आदिपदेन '**आपोमयः प्राणः तेजोमयः**[1]' इति वाग् गृह्यते।।

**( विसर्गशब्दार्थः )**

**भाष्यम् — भूतानां जीवानां भावानां जडपदार्थानां चोद्भवकरेश्वरक्रिया विसर्गः । विशेषेण सर्जनं विसर्ग इत्यर्थः ।। ३ ।।**

**प्रमेयदीपिका**

नन्वेवमपि स्वशब्दस्याऽत्मीयार्थत्वादीश्वरप्रसक्तिः । मैवम् । '**द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिः प्रधानतः**' इति वचनात् । तस्यात्मीयत्वाभावात् । षष्ठ्यन्तात् खल्वयं छः । 'सकलकार्योत्पत्तिनिमित्तभूतो देवतोद्देशेन च पुरोडाशादिद्रव्यत्यागः[2] तज्जन्यमपूर्वम्' इति यावदिति व्याख्यानमसत् । तस्याध्यात्मपदेनैव गृहीतत्वादिति भावेन **भूतभाव** इत्यादिकं व्याख्याति –**भूतानामिति** ।। उद्भवकरी च सा ईश्वरक्रिया चेति विग्रहः । **ईश्वरक्रिया**ग्रहणं कर्मशब्देनैकार्थ्यप्रतिपत्त्यर्थम् । एवंलक्षणो यो **विसर्गः** सः **कर्मसञ्ज्ञितः** न तु कालादिसम्बन्धीत्यर्थः।।

ननु विसर्गशब्दः त्यागार्थः । तत्कथमेवं व्याख्यानम्? इत्यत आह– **विशेषेणेति** ।। ३ ।।

**भावदीपः**

**नन्वेवमिति** ।। स्वपदस्य भावविशेषणत्वे सति, स्वो जीवः तस्यायं स्वः जीवीयः स चासौ भाव इत्यपि विग्रहसम्भवेन पुनरीश्वरस्य प्रसक्तिरित्यर्थः । **मैवमिति** ।। कुत इत्यतो 'राज्ञः पुरुषः' इत्यत्र राज्ञः स्वामित्वेनार्थतः प्राधान्यात्, अर्थतः प्रधान एव षष्ठ्युत्पत्तेः स्वस्य जीवस्यायं स्वो जीवीयः इति नोपपद्यते । जीवस्याप्रधानत्वादिति भावेन प्रधाने षष्ठ्युत्पत्तौ

---

१. 'तेजोमयादीनाम्' इति का कोशे ।

२. द्रव्यपरित्यागः -गुज,वे-ग्रं,।

'षष्ठी शेषे'(पा.सू.२.३.५०) इत्यत्र हरिवचनमाह – **द्विष्टो यद्यपीत्यादि** ।। **अयं शब्द इति** ।। आत्मीयवाचिस्वशब्द इत्यर्थः । 'भूत' इत्याद्य[1]पव्याख्यानमनुवदति– **सकलेति** ।। अध्यात्मपदेन जीवोपकारित्वेन वर्तमानमात्रस्याध्यात्मपदेन ग्रहणादिति भावः ।। ३ ।।

**( अधिभूतशब्दार्थनिरूपणम् )**

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ।। ४ ।।**

**भाष्यम् — भूतानि सशरीरान् जीवानधिकृत्य यत् तत् अधिभूतम् । क्षरो भावः विनाशी कार्यपदार्थः । अव्यक्तान्तर्भावेऽपि तस्यापि अन्यथाभावाख्यो विनाशः अस्त्येव ।**

**प्रमेयदीपिका**

परिहारं सङ्गमयितुमधिभूतशब्दार्थं तावदाह– **भूतानीति** ।। **अधिकृत्य** तदुपकारित्वेन यत् वर्तते । **'क्षरः सर्वाणि भूतानि'**(१५.१६) इति वक्ष्यमाणं क्षरं व्यावर्तयितुं व्याचष्टे– **क्षर** इति ।। क्षरशब्दव्याख्या - **विनाशीति** । भावशब्दस्यार्थद्वयं **कार्यः** इति, **पदार्थः** इति । भवत्युत्पद्यत इति भावः । 'उत्पत्तिमान् पदार्थः', 'नाशवान् पदार्थः' इति प्रत्येकमुत्तरम् । सर्वभूतानाम् अध्यात्मत्वान्न ग्रहणम् ।।

नन्वव्यक्तमपि सशरीरान् जीवानधिकृत्य वर्तत इति तस्याप्यधिभूतेऽन्तर्भावोऽस्त्येव । न चैतद् विनाशि कार्यं वा । **'नासतः'** (२.१६) इत्युक्तत्वात् । ततोऽव्यापकमुत्तरमित्यत आह– **अव्यक्तेति** ।। 'अव्यक्तस्याऽधिभूतान्तर्भावेऽपि नाव्यापकमुत्तरम्' इति शेषः । कुतः? इत्यत आह– **तस्यापीति** ।। **अन्यथाभावो** वैषम्यपरित्यागेन साम्यावस्थापत्तिः। 'यतः' इति शेषः । तथा विक्रियालक्षणं जन्मचेत्यपि ग्राह्यम् ।।

**भावदीपः**

**प्रत्येकमुत्तरमिति** ।। 'किमधिभूतम्' इति प्रश्नस्य 'अधिभूतं क्षरो भावः तथाऽभावः कार्यभूतो भावः पदार्थः' इति भावपदस्यासकृदावृत्त्या प्रत्येकमुत्तरमिति भावः । **'क्षरः सर्वाणि**

---

१ 'इत्याद्यर्थस्य' इति मं मातृकायां पठ्यते ।

**भूतानि**' (१५.१६) इति वक्ष्यमाणसर्वभूतानामत्र ग्रहणं कुतो न? इत्यत आह– **सर्वभूताना-मिति** ।। पूर्वोक्तव्याख्यानरीत्या अत्राध्यात्मपदेन प्राप्तत्वादित्यर्थः ।। **नासत इतीति** ।। 'असतः कारणस्याव्यक्तस्य अभावः न विद्यते' इत्युक्तत्वादित्यर्थः ।।

**भाष्यम् — तच्चोक्तम्–**

**'अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयते'** [1]**इति ।**

**(म.भा.१२.३३९.३१)**

**'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम'** **(म.भा.१२.३३५.३२)**

**इति च ।**

**'विकारोऽव्यक्तजन्म हि'**

**इति च स्कान्दे ।**

**पुरि शयनात् पुरुषो** जीवः । **स च सङ्कर्षणो**[2] **ब्रह्मा वा । स सर्वदेवानधिकृत्य तत्पतिरिति अधिदैवतं,** देवाधिकारस्थ इति वा । **देवान् इन्द्रियाण्यपेक्ष्य**[3]।।

## प्रमेयदीपिका

उभयत्र क्रमेण प्रमाणान्याह–**तच्चेति** ।। **व्योम्नि** व्याप्ते । प्रलये प्रचुरव्यापाराभावात् **निष्क्रिये** ।। ननु पुरुषः परमात्मा । स ब्रह्माधियज्ञशब्दाभ्यामुक्त इत्यत आह– **पुरीति** ।। शरीरे । 'अधिकरणे शेतेः'**(पा.सू.३.२.१५)**इति डः[4] । **'वर्णागमो वर्णविपर्ययश्च'** इत्यादिना साधुः । तथाऽप्यध्यात्मशब्देन गतार्थतेत्यत आह– **स चेति** ।। सर्वजीवाभिमानित्वादिति भावः । तस्याधिदैवत्वं कथमित्यतो द्वेधाऽऽह– **स इति** ।। **अधिकृत्य** वर्तते इत्यस्यैव

१. भीष्मानूदितं नारदं प्रत्युक्तं भगवद्वचनम् । 'अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये ' इति महाभारते ।

२. (अ)**सङ्कर्षणस्य जीवाभिमानिनत्वे** -**'जीवाभिमानिशेषस्य नाम्ना सङ्कर्षणस्य तु'** इति अनुव्याख्यानम्, **ब्रह्मणः** जीवाभिमानित्वे -' कालजीवाभिमानेन रूपद्वन्द्वी चतुर्मुखः' इति भा.ता.नि. वचनं मानम् ।।

(आ) 'स जीवः परिसङ्ख्यातः शेषः सङ्कर्षणः प्रभुः' इति महाभारते.१२.३३९.३६

३. इदं वाक्यं भावरत्नकोशानुसारेण भाष्ये योजितम् । प्राचीनटीकायां, प्रमेयदीपिकायां च न व्याख्यातम्।

४. (अ) पुरुषरूपसिद्धिः श्रौतः उपरि८ श्लोके, अनुव्याख्यानोक्तनिर्वचनं च ।

(आ) 'सुप्युपपदे शीङ् स्वप्न इत्यस्याच्प्रत्ययो भवतीति सूत्रेण तृतीयाध्याये अच्प्रत्ययविधानात्। तथाचाच्प्रत्यये सप्तम्यादेरलुगादिवन्निर्वचनादेव धात्वन्तलोपे पुरुष इति भवतीति भावः ।।

सुधापरिमले -१-१-६।

विवरणम्– **पतिरिति** ।। **देवाधिकारस्थः** तत्प्रकरणेषु मुख्यतः प्रतिपाद्यः । **सर्वदेवतासङ्ग्रहार्थं** वा द्वितीयं व्याख्यानम् । अक्षरार्थस्तु पूर्ववत् ।।

**भावदीपः**

**अधिकरणे शेतेरितीति** ।। यद्यपि द्वितीयतृतीयपादे 'शेतेर्धातोः अधिकरणवाचि सुबन्ते उपपदे अच्प्रत्ययो भवति' इति [1]वृत्तावुक्त्वा 'खे शेते खशयः' इत्याद्युदाहृतम् । तथाऽपि तत्रैव सूत्रे [2]'गिरौ डश्छन्दसि **(१९९६.वार्तिकम्)** गिरौ शेते गिरिशः' इत्यप्युक्तत्वात्, गीताया अपि छन्दस्तुल्यत्वात् 'गिरिश' इत्युपलक्षणम् । अधिकरणभूतपुरुपदे उपपदेऽपि शेतेः डप्रत्ययो बोध्य इति भावेन 'अधिकरणे शेतेः इति डः' इत्युक्तम् । तथाच डित्वाट्टिलोपे शकारस्य षकारे पूर्वपददस्योकारान्तत्वे च रूपमिति भावः ।। रेफान्तपूर्वपदस्योकारागमे शकारस्य षकारतया वर्णविपर्यये च पृषोदरादिसूत्रे ( **पा.सू.६.३.१०९**)वृत्तावुक्तं वचनमाह– **वर्णागम इति** ।।

**'तथाऽपरौ वर्णविकारनाशौ ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ।।'**

इति वाक्यशेषः ।। **सर्वदेवतेति** ।। पुरुषपदेन सर्वजीवाभिमानिसङ्कर्षणस्येव सर्वदेवतानाम् अपि सर्वजीवदेहेन्द्रियादिनियामकतया पुरि शयनात् पुरुषपदेन तासां सङ्ग्रहार्थमित्यर्थः ।। [3]**प्रतिपाद्य इति** ।। सङ्कर्षणपरत्वे यथा तथैवेति वा अध्यात्मपदे यथा तथैवेति वा सङ्कर्षणाद्यर्थद्वयेऽपीत्यर्थः ।। **अक्षरार्थः(तु) पूर्ववदिति** ।। देवतामधिकृत्य वर्तमानो ग्रन्थः अधिदैवतम्।।

**( अधियज्ञस्वरूपनिरूपणम् )**

**भाष्यम् —** सर्वयज्ञभोक्तृत्वादेः अधियज्ञः ।।

**प्रमेयदीपिका**

**'अधियज्ञः कथम्'(८.२)** इत्यस्योत्तरं भगवताऽनुक्तं भाष्यकृदाह– **सर्वेति** ।। आदिपदेन

---

१. काशिकावृत्तौ - 'अधिकरणे सुवन्तः' इत्येव । भाग-२,पृ -५५३ । 'सुबन्ते अधिकरणवाचिन्युपपदे शीङ्धातोरच् स्यादित्यर्थः' इति बालमनोरमायाम् ।

२. 'शेह छन्दसि रीशते ...रौशयः' इति मातृकायाम् ।

३. इदं वाक्यं अक्षरार्थ इति प्रतीकानन्तरं सर्वमातृकासु व्यत्यस्तं पठ्यते । लिपिकृद्दोषः सम्भाव्यते ।

तत्प्रवर्तकत्वादि । नाध्यात्म[1]शब्दवदधियज्ञशब्देऽव्ययीभावः । किन्त्वधिगतो यज्ञमिति प्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा ।।

**भावदीपः**

अधियज्ञः कथं? कोऽत्र देहे? इति प्रश्नवाक्ये कोऽधियज्ञः? कथं चाधियज्ञः? इति प्रश्नद्वयं प्रतीयते । तत्र 'कः' इति प्रश्नस्य 'अधियज्ञोऽहमेव' इति परिहारो गीतायामुक्तः[2]। **'कथम्'** इति **प्रश्नस्य** तु नोक्तः । अत उक्तम्– **भगवता अनुक्तमिति** ।। **नाध्यात्मेति** ।। 'नाव्ययीभावः' इत्यन्वयः । तथात्वे 'अधियज्ञम्' इति स्यादिति भावः ।। द्वितीयस्य द्वितीयपादे 'कुगतिप्रादयः'(**पा.सू.**२.२.१८) इति सूत्रे 'कृत्यादयः । कुशब्दो गतिसञ्ज्ञकः, प्राद्युपसर्गात् च समस्यन्ते' इति समासविधिसूत्रे 'कृत्यादयः क्रान्त्याद्यर्थे द्वितीयासमासे' इत्युक्तत्वात् 'अधि' इति उपसर्गस्य 'अति अधि'[3] इत्यादिषु पाठाद्व्याख्याति । अध्यात्मा-दिषु क्रान्तादीत्यादिपदेन गृहीत 'अधिगत'[4] इत्यर्थे समासमुपेत्य अधिगतो यज्ञ इति प्रादिसमास इत्युक्तम् ।।

**भाष्यम् — अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति देहे इति विशेषणम् ।**

**'भोक्तारं यज्ञतपसाम्'**(५.२९), **'त्रैविद्या माम्'**(९.२०)

'[5]**येऽप्यन्यदेवताभक्ताः**'(९.२३)।

**'एतस्य वा अक्षरस्य प्रशासने गार्गि ..ददतो**

**मनुष्याः प्रशंसन्ति यजमानं देवाः'** (**बृ.उ.३.८.९**) इत्यादेः ।।

**प्रमेयदीपिका**

अधियज्ञः कः? इति प्रश्ने तत्परिहारे च 'देहे' इत्यस्य प्रयोजनमाह– **अन्य** इति ।। अन्यो भगवतः' इति सिद्धार्थतापरिहारार्थं प्रश्नवाक्ये 'देहे' इति विशेषणं प्रयुक्तम् । कर्तृभोक्तृफलदातॄणां [6]देहप्रेरकत्वेन वर्तमान इति । अतः परिहारवाक्येऽपि यथाप्रश्नं तदुपात्तम्'

---

१. **'नाध्यात्मादि' -इति कृ.टि.आदिपदमधिकम् ।**

२. 'व्यक्तः' -सो मातृकापाठः ।

३. 'प्रादिषु' इति पाठोपि का.। अयं भागः मं नास्ति ।

४. '...गता इत्यर्थे' इति कां-मं मातृकयोः । 'अधिगत' इति सो मातृकायामेव ।

५. अत्र मुद्रितपुस्तकेषु 'ये त्वन्यदेवता' इति पठ्यते । अयं परभाष्यपाठ इति नादरणीयः ।

६. 'देहे प्रेरकत्वेन'इति श.मा ।

इति वाक्यशेषः । भगवतः सर्वयज्ञभोक्तृत्वं कुतः? येनैवमुत्तरमध्याह्रियत इत्यत आह– **भोक्तारमिति** ।। त्रैविद्यानुष्ठितयज्ञभोक्तृत्वाभावात् 'सर्व' इत्यनुपपन्नमित्यत आह– **त्रैविद्या इति** ।।

प्रवर्तकत्वे श्रुतिमाह– **एतस्येति** ।।

### भावदीपः

भाष्ये इतिपदं हेत्वर्थमित्युपेत्य तदनुवादपूर्वं तदनन्तरम् अध्याहार्यम् आह– **इति सिद्धार्थतेति** ।। **को अधियज्ञ इति** ।। 'प्रश्नस्य' इति योज्यम् ।। **उक्तमित्यस्य 'अतः'** इत्यादिना अन्वयः ।। स्वयं प्रश्नवाक्यस्थ 'देह' इतिपदस्यार्थमाह - 'कर्तृभोक्तृ' इत्यादिना 'श्रुतत्वात्' इति पञ्चमान्तेन ।। **येनैवमिति** ।। सङ्कर्षणाद्यर्थद्वयेऽपीत्यर्थः ।।[1]

**भाष्यम् —** **'कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैश्रेयसं पदम्'**[2]

**(म.भा. १२.३३४.२) इत्यादि परिहाराच्च मोक्षधर्मे ।**

**भगवांश्चेद् भोक्तृत्वादेरधियज्ञत्वं सिद्धमिति कथम् इत्यस्य परिहारः पृथङ् नोक्तः । सर्वप्राणिदेहस्थरूपेण साधियज्ञः ।।**

### प्रमेयदीपिका

यज्ञफलदातृत्वादौ प्रमाणमाह– **कुतो हीति** ।। **ध्रुवः** चिरन्तनः । नैश्रेयसे मुक्तौ भवं **पदं** सुखम् इत्यादेः प्रश्नस्य ।। नन्वेष परिहारो भगवतैव कुतो नोक्तः? इत्यत आह– **भगवांश्चेदिति** ।। **चेच्छब्दः** यदाशब्दार्थे । अधियज्ञोऽहमिति यदाऽधियज्ञत्वेन भगवानुक्तः, तदा तस्य सर्व-यज्ञभोक्तृत्वादेरधियज्ञत्वम् अर्जुनस्य सिद्धमेव । **भोक्तारम्** इत्यादेरर्थस्य तेन श्रुतत्वात् । अन्यत्वपक्ष एव **कथम्** इति पृष्टत्वात् । एवमालोच्य भगवता **कथम् इत्यस्य** प्रश्नस्य **परिहारः अधियज्ञोऽहम्** इत्यतः **पृथङ्नोक्तः** । अस्माभिस्तु मन्दान् बोधयितुमुक्त इति भावः ।।

ननु यद्यधियज्ञः स्वयमेव, कथं तर्हि **साधियज्ञं माम्** इति प्रागवोचत् ? इत्यत आह– **सर्वेति** ।। रूपविशेषापेक्षया साहित्यमुक्तमिति भावः ।।

अनेन परिहारवाक्यस्थस्य **देहे** इति विशेषणस्य प्रयोजनान्तरं चोक्तं भवति ।।

---

१. इदं वाक्यं सो मातृकायां न पठ्यते ।

२ युधिष्ठिरवचनमिदम् ।' कस्य प्रसादात् ध्रुवः अनावृत्तिफलको ब्रह्मलोक' इति नीलकण्ठीये ।

### भावदीपः

**अन्यत्वपक्ष इति** ।। भगवतोऽन्योऽज्ञादिरेवाधियज्ञ इति पक्ष इत्यर्थः । अतो न प्रश्नायोग इति भावः ।। **प्रागिति** ।। पूर्वाध्यायान्त इत्यर्थः ।। **प्रयोजनान्तरमिति** ।। सर्वप्राणिस्थरूपविशेषेणैव 'अधियज्ञोऽहम्, न बाह्यरूपेण'[1] इति ज्ञापनरूपं प्रयोजनान्तरं [2]सिद्धार्थतानिवृत्त्यर्थतया प्रश्नवाक्योपात्तदेहपदानुसाररूपप्रयोजनाद् अन्यत् प्रयोजनमित्यर्थः ।।

**भाष्यम् — अत्र इति स्वदेहनिवृत्त्यर्थम् । न हि तत्रेश्वरस्य नियन्तृत्वं पृथगस्ति । नात्रोक्तं ब्रह्म भगवतोऽन्यत् । 'ते ब्रह्म'(७.२९) इत्युक्त्वा**

**'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' (७.३०)**

**इति परामर्शात् । तस्यैव च प्रश्नात् । साधियज्ञम् इति भेदप्रतीतेः तन्निवृत्त्यर्थम् अधियज्ञोऽहम् इत्युक्तम् । माम् इत्यभेदप्रसिद्धेः अक्षरम् इत्येवोक्तम् ।।**

### प्रमेयदीपिका

'अत्र' इति देहविशेषणं किमर्थम्? इत्यत आह– **अत्रेति** ।। (देहे[3])इह लौकिके देह इत्यर्थः । कुत ईश्वरदेहो व्यावर्तनीयः? इत्यत आह– **न हीति** ।। **तत्र** स्वदेहे । **पृथक्** पृथग्भावेन यथा 'अधियज्ञोऽहमेव' इत्युक्तं न तथा 'ब्रह्माऽहम्' इति । अतो भगवतः **अन्यदेवेदम्** । **ब्रह्म परमम्** इति तु स्वरूपकथनम् । नतु विशेषणमिति शङ्कां निवारयति– **नात्रेति** ।। पूर्वाध्याये **'ते ब्रह्म तद्विदुः'** (७.२९) इत्युक्त्वा कथम्भूतं ब्रह्म? इत्याकाङ्क्षायां **'साधिभूताधिदैवं साधियज्ञं च ब्रह्म'** इति वक्तव्ये **माम्** इति ब्रह्मणः परामर्शात् । तत्रास्तु भगवानेव ब्रह्म । अत्र तु कुतः? इत्यत आह– **तस्यैवेति** ।। पृष्टस्यैव वक्तव्यत्वात् । तर्ह्यधियज्ञस्य ब्रह्मणश्च भगवत्वादेकत्र 'अहमेव' इत्युक्तिरपरत्र तदनुक्तिः किं निबन्धना? इत्यत आह– **साधियज्ञमिति** ।।

### भावदीपः

'अत्र' इति 'देह' इति पदद्वयार्थः - **इह लौकिकदेह इति** ।। **साधिभूताधिदैवमिति** ।।

---

१. 'अधियज्ञोऽहम्' इत्येतावानेव सो मातृकायाम् । ' नच अन्यबाह्यरूपेण' इति मं मातृकायाम् ।

२. 'सिद्ध्यति । निवृ..' ति भिन्नवाक्यं सो मातृकायाम् लिखितम् ।

३. श्रीनि.टि अनुसारेण योजितम् । मातृकासु, मुद्रितपाठेष्वपि नास्ति ।

अधि-भूतशब्दितसशरीरजीवोपकारित्वेन स्थितोत्पत्तेः विनाशि[१]पदार्थस्थतया तत्सहितम्, अधि-दैवशब्दितसर्वजीवाधिपतिब्रह्मादिस्थत्वेन [२]तत्सहितम्, अधियज्ञशब्दितं, सर्वप्राणि[३]देहगत-रूपेण सहितं चेति पदत्रयार्थः ।। **परामर्शादिति** ।। अस्मच्छब्देन वित्तिविषयतया प्रागुक्तस्येह पुनः कथनादित्यर्थः ।।

### प्रमेयदीपिका

शेषं तात्पर्यनिर्णये ।। एतेन अपव्याख्यानमपि निरस्तम् । द्वादशादौ च विस्तरेण वक्ष्यति[४]।।

### भावदीपः

[५]ननु **'तद्ब्रह्म विदुः'** इत्युक्तस्य **'साधियज्ञं माम्'** इत्युक्त्या भगवानेव ब्रह्म इति लाभात् तस्यैव च पृष्टतया पृष्टस्यैव वक्तव्यतया अस्तु परिहारेऽपि ब्रह्म भगवानिति । तथाऽपि साक्षादेव 'अहम्' इति कुतो नोक्तम्? इत्यतो विष्णोरक्षरत्वाज्ञानिनामक्षरत्वज्ञापनार्थम्, तथा **परमाक्षरं ब्रह्म** इत्युक्तावपि साक्षात् 'अहम्' इत्यनुक्तेः भगवतो अन्यदेव ब्रह्म अक्षरं चेति शङ्का 'अव्यक्तोऽक्षर उच्यते' इत्यादिना अग्रे, पूर्वत्र **'अव्यक्तं व्यक्तिमापन्नम्'**(७.२४) इति हरौ प्रयुक्ताव्यक्तपदानुवादेनाक्षरत्वोक्त्या परिह्रियते । तथा ब्रह्मपदेन व्याप्तरूपम्, [६]अधियज्ञपदेन देहगं रूपमित्याद्यभिप्रेत्याऽह– **शेषमिति** ।।

**एतेनेति** ।। परमाक्षरस्य भगवत्त्वकथनेन परममक्षरं प्रधानमधियज्ञस्तु भगवान् इति वा, परममक्षरं ब्रह्म निर्गुणमिति वा, अपव्याख्यानं निरस्तमित्यर्थः ।। **द्वादशादौ विस्तरेणेति** ।। **'परं तु ब्रह्म नहि भगवतोऽन्यत्'** इत्यादिना निरस्तमित्यर्थः ।।

### ( अधियज्ञाद्यर्थे प्रमाणवचनोदाहरणम् )

**भाष्यम् —** आह च गीताकल्पे–

---

१. 'विनाशपदार्थ' -मं मातृकायाम् ।
२. 'तत्सहितम्' इति मं नास्ति ।
३. 'देह' इति का नास्ति ।
४. प्र,गुज,वेग्रं-पाठेषु नास्ति । श-१ मातृकायां-पठ्यते ।
५. अयं भागः कामातृकायां नास्ति ।।
६. व्याप्तं कथम् -इति पां मं मातृकायाम् ।

'देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः ।
कर्मेश्वरस्य सृष्ट्यर्थं तच्चापीच्छाद्यमुच्यते ।।
अधिभूतं जडं प्रोक्तमध्यात्मं जीव उच्यते ।
हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा ।।
ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वरः' इति ।
'यथा प्रतीतं वा सर्वमत्र नैव विरुद्ध्यते' इति ।(गीताकल्पवचनम्)

### प्रमेयदीपिका

आगमसम्मत्योक्तं स्थापयति– आह चेति ।। यानि **देहस्थविष्णुरूपाणि सः अधियज्ञ इतीरितः** । तदपि इच्छाप्रयत्नाद्यमेव । नतु परिणामरूपम् । जडं देहाद्बाह्यम् । न केवलमेषां पदानामेतावन्मात्रार्थत्वं किन्तु **यथाप्रतीतं** प्रतीतिमनतिक्रम्य शब्दशक्त्या यावत् प्रतीतं प्रमाणविरुद्धं च तत् अत्र व्याख्यायमानं वक्तुरभिप्रायं न व्यभिचरतीत्यर्थः । किञ्चिद्व्यवहितत्वान्मध्येऽपि इतिशब्दः ।।

### भावदीपः

**'इतीरितः'** इत्यस्यान्वयायाह– **यानीति** ।। **स इति**[1]।। देहस्थानेकरूपात्मा विष्णुरित्यर्थः ।। **'तच्च'** इत्यादेरर्थः– **तदपीत्यादि** ।। जडमित्यनुवादः, **'देहाद्बाह्यम्'** इति व्याख्या । यद्यपि **'यथा'** इत्याद्यपि गीताकल्पगतमेव वाक्यम् । तथाऽपि इतिपदस्य मध्ये कीर्तनस्याभिप्रायमाह– **किञ्चिदिति** ।।

**( जीववराणानि बहूनि इत्यत्र प्रमाणोपन्यासः )**

**भाष्यम् — स्कान्दे च –**

'आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते ।
देहाद् बाह्यं विनाऽतीवबाह्यत्वादधिदैवतम् ।।[2]

---

१. इदं वाक्यं सो मातृकायामेव ।

२. अत्र तदभिध्यानाधिकरण ब्र.सू.(२.३.१३) भाष्यदीपिकायां विशेषः- 'इदं त्ववधेयम् । जीवस्य न मायैवावरणम्, किन्त्वन्यान्यप्यावरणानि सन्ति । तानि चादौ देहः, ततः प्रकृतिबन्धः, ततः सत्वादिगुणबन्धः, ततः कर्मादिबन्धः, ततः लिङ्गदेहः, तत ईश्वरेच्छा इत्येवं रूपाणि । नचात्र मूलाभावः ।

देवाधिकारगं सर्वं महाभूताधिकारगम् ।
तत्कारणं तथा कार्यमधिभूतं तदन्तिकात् ' इति ।।

महाकौर्मे च–

'अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम् ।
सदेहजीवभूतानि यत् तेषामुपकारकृत् ।।
अधिभूतं तु मायान्तं देवानामधिदैवतम्' इति ।। ४ ।।

### प्रमेयदीपिका

एतदेव वाक्यान्तरेण स्पष्टयति– **स्कान्दे** चेति ।। आत्मनोऽभिमानस्य विषयः । आत्माधिकारस्थं तत्र प्रतिपाद्यम् । **देहाद् बाह्यं विनेति** । सामर्थ्याद् आत्माभिमानस्थेन सम्बद्ध्यते । तत्र युक्तिः- **अतीवबाह्यत्वात्** अत्यभिमानविषयत्वाभावात् । **महाभूताधिकारगं** महाभूतम् । कार्यकारणग्रहणहेतुः । **तदन्तिकात्** तत्तादात्म्यात् । देवानाम् **उपकारकृत्** ।।

### भावदीपः

**आत्माभिमान** इति आत्मपदं स्थितपदं च 'आत्माभिमानस्थितम्' 'आत्माधिकारस्थितम्' इति प्रत्येकमन्वेति । तत्राद्यस्यार्थमाह– **आत्मनो ऽभिमानस्य विषय इति** ।। द्वितीयमनूद्यार्थमाह– **आत्मेत्यादिना**[1] ।। आत्माभिमानविषयः कः? इत्यपेक्षायां स्मृतौ 'देहाद्बाह्यं विना' इत्युक्तमिति भावेन 'देहाभिमानिस्थं देहाद्बाह्यं विना' इति निर्देशाभावात् कथमन्वय इत्यत आह– **सामर्थ्यादिति** ।। योग्यताबलादित्यर्थः ।।

एतेन यत्प्राक् 'जीवोपकारितया स्थितं यच्च जीवस्वरूपं तदुभयमध्यात्मशब्दार्थः' इति प्रागुक्तं संपादितं[2] भवति । 'देवानाम्' इत्यत्रानुवृत्तिमाह– **उपकारकृदिति** ।। ४ ।।

---

'देहाद् बाह्यं विनाऽतीवबाह्यत्वात्' इति गीताभाष्यस्य मूलत्वात् । इदं हि भाष्यं प्रमेयदीपे-'देहाद्बाह्यं विना आत्माभिमानस्थमध्यात्मम् । तत्र युक्तिः-अतीव बाह्यत्वादत्यभिमानविषयत्वाभावात्' इति व्याख्यातम् ।। अत्र देहाद्बाह्यस्य गेहादेरध्यात्मत्वाभावे साध्ये जीवापेक्षया अतीवबाह्यत्वादिति हेतुरुक्तः । अस्य हेतोर्व्यभिचारवारणाय - अत्यभिमानविषयत्वाभावादिति व्याख्यातः । तथाच जीवापेक्षया देहस्यातीव बाह्यत्वान्मध्ये बहून्यावरणानि सन्तीति सिद्धमिति'।।

१. आत्मेति ।। -पां । इत आरभ्य वाक्यद्वयं सो मातृकायां न पठ्यते ।

२. 'संवादितं' मं-का मातृकयोः ।

(अन्तकाले भगवत्स्मरणफलम् )

**अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

**भाष्यम् — मद्भावं** मयि सत्ताम् (मद्भद्भावम्)[१] । **निर्दुःखनिरतिशयानन्दात्मिकाम्** (नन्दात्मकम्) । **तच्चोक्तम्–**

'मुक्तानां च गतिर्ब्रह्मन्[२] क्षेत्रज्ञ इति कल्पितः' (म.भा.१२.३३४.४१)

इति मोक्षधर्मे ॥ ५ ॥

### प्रमेयदीपिका

'मद्भावम्' इत्यस्य 'मदात्मकत्वम्' इत्यन्यथाप्रतीतिनिरासाय आह– **मद्भावमिति** ॥ ननु भगवति स्थितिः सर्वदाऽस्ति । सा कथं फलम्? इत्यतो विशिनष्टि– **निर्दुःखेति** ॥ **क्वचित् पाठो मद्भावं मद्भद्भावम्** इति । तत्र भगवत्प्रतिबिम्बानां जीवानां तत्सादृश्यं सदाऽस्ति । तत् कथं प्राप्यमुच्यते? इत्यत उक्तम्– **निर्दुःखेति** ॥ अत्र **आत्मकमिति पाठः**॥ 'अभिव्यक्तम्' इति शेषः । प्रतीत एवार्थः किं न स्यात्? इति चेन्न । मुक्तानां भगवदाश्रितत्वेन तद्भावायोगात् । तदपि[३] कुतः? इत्यत आह– **तच्चेति** ॥ क्षेत्रज्ञः परमात्मा **गतिरिति** समर्थितः ॥ ५ ॥

### भावदीपः

**अत्रेति** ॥ 'मद्भद्भावम्' इति पाठपक्ष इत्यर्थः । भावपदस्य पुल्लिङ्गत्वादिति भावः । कल्पितपदार्थः- **समर्थित** इति ॥ ५ ॥

(अन्तकाले भगवत्स्मरणोपायकथनम्)

**यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।**[४]

---

१. टीकाकृत्सूचितपाठः । तथा 'नन्दात्मकम्' इत्ययमपि ॥ गुज, -वे-ग्रं स्त्रीलिङ्गान्तपाठः ॥
२. नारदं प्रति सम्बोधनं ब्रह्मन् इति ।
३. 'तदेव' इति श-मातृकायाम् ।
४. (अ) 'यत्र यत्र मनो देही धारयेत् सकलं धिया ।
स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम्' ॥ भाग.११-९-२२ ॥विशेषस्तत्तात्पर्ये ॥

**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥**[१]

**तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥**

**भाष्यम् — स्मरन् पुरुषः त्यजतीति भिन्नकालीनत्वेऽप्यविरोध इति मन्दमतेः शङ्का मा भूदिति अन्ते इति विशेषणम् । सुमतेः नैव शङ्कावकाशः । स्मरन् त्यजतीत्येककालीनत्वप्रतीतेः ॥**

**प्रमेयदीपिका**

ननु कलेवरत्यागस्यान्ताव्यभिचारात् 'अन्ते' इति व्यर्थमित्यत आह– **स्मरन्निति** ॥ न 'अन्ते' इत्येतत् 'कलेवरं त्यजति' इत्यस्य विशेषणम् । येन व्यर्थं स्यात् । किन्तु **'अन्ते स्मरन्'** इति स्मरणस्यैव । तत्रापि किं प्रयोजनम्? इति चेदुच्यते । 'लक्षणहेत्वोः क्रियायाः'[२] **(पा.सू.३.२.१२६)** इति लक्षणेऽपि शतुर्विधानात् 'स्मरन् पुरुषः कलेवरं त्यजति' इति स्मरणकलेवरत्यागयोः भिन्नकालत्वेऽपि न कश्चिच्छब्दविरोध इति **मन्दमतेः शङ्का** स्यात् । सा **मा भूदि**त्येवमर्थम् **'अन्ते'** इति स्मरणस्य **विशेषण**मुपात्तम् । तेनात्र स्मरण-कलेवरत्यागयोरेककालत्वसिद्धिरिति ॥

**( 'स्मरंस्त्यजति' इत्यस्य साधुत्वोपपादनम् )**

**'मन्दमतेः'** इत्यस्य कृत्यमाह– **सुमतेरि**ति ॥ कुतः? इत्यत आह– **स्मरन्** इति ॥ 'लटः शतृशानचौ' **(पा.सू.३.२.१२४)** इति लडादेशत्वेनापि शतुर्विधानमस्ति । स च 'लट्' इति वर्तमाने पुनः [३]लड्ग्रहणसामर्थ्यात् कचित् प्रथमासामानाधिकरण्येऽपि भवति । लक्षणे विहितत्वाच्च लडादेशो बलीयान् । तत्र क्रियायाम् इत्युपपदसापेक्षत्वात् । अस्यानपेक्षत्वात् ।

(आ) **'यच्चित्तस्तेनैष प्राणमायाति । प्राणस्तेजसा युक्तः स ह आत्मना यथासङ्कल्पितं लोकं नयति'- एष पुरुषो यच्चित्तो मरणकाले यद्विषयचित्तो भवति तेनतद्विषयेण चित्तेन सह प्राणं मुख्यमायाति। तत्समीपं प्राप्नोति । प्राणस्तु तेजसोदानेन युक्तः परमात्मना सह जीवं यथासङ्कल्पितं, तेन जीवेन मरणकाले यादृशः सङ्कल्पितः तथआविधलोकं शरीरं नयति ' इति षट्प्रश्नटीका ३.१२.**

१. अयं श्लोकः ४-२-१७ ब्र.सू.भाष्योदाहृतः,तट्टीकायां विशेषतश्च विवृतश्च तत एवावगन्तव्यः ।

२. **'क्रियायाम् 'इति** भा.र.को **सम्मतपाठः ।**

३. 'लड्ग्रहण' इति काचित्कः पाठः प्रामादिकः ।

'अप्रथमासमानाधिकरणे' इत्यस्य अतिप्रसक्ति[1]परिहारमात्रार्थत्वात् । तथाच बलवतो ग्राह्यत्वे 'स्मरंस्त्यजति' इत्यस्य स्मरति च त्यजति चेत्यर्थः स्यात् । एवञ्च 'अन्ते' इत्यनुक्तेऽपि स्मरणत्यागयोरेककालीनत्वप्रतीतेः **सुमतेर्नैव शङ्कावकाशः** इति भावः ।।

### भावदीपः

**लक्षण इति** ।। तृतीयस्य द्वितीयपादे 'लक्षणहेत्वोः क्रियायाः' **(पा.सू.३.२.१२६)** इति सूत्रम् । 'लटः शतृ शानचावप्रथमासमानाधिकरणे' **(पा.सू.३.२.१२४)** इति पूर्वसूत्रात् लटः शतृशानचाविति लक्ष्यते विद्यते लक्ष्यते चिह्न्यते येन लक्षणं तल्लक्षणहेतुः । हेतुजनकलक्षणे हेतौ च वर्तमानाद्धातोः परस्य लटः शतृशानचौ भवतः । तौ चेत् लक्षणहेतुक्रियाविषये भवत इति तस्यार्थमुक्त्वा, 'तिष्ठन्तो अनुशासन्निति गणकाः, शयाना भुञ्जन्ते यवनाः' इत्यादेः वृत्तौ उदाहृतत्वात् । यवनानां शयनभोजनयोरिव स्मरणत्यागयोरेककालतैव प्रतीयते । तथाऽपि स्मरणस्य लडादेशशत्रन्तशब्दोक्तत्वेऽपि कृद्योगत्यागे लक्षणे महादुःखान्तकालता न सम्भाविनीति शतृप्रत्ययस्य त्यक्तुः पुंसः स्मरणरूपलक्षण एव तात्पर्यम्, नत्वेककालत्व इति भावो ध्येयः ।। **अन्त इति** ।। अन्तकालपदेनेत्यर्थः ।।

ननु तस्मिन् सूत्रे प्रथमान्तपदासमानाधिकरणेसति शतृशानचौ न भवत इत्युक्तेः, इह च 'स्मरन् यः पुमान्' इति प्रथमान्तयच्छब्देन सामानाधिकरण्यात् कथं तेन सूत्रेण शतृप्रत्यय इत्यतो अत्र वृत्तिकारोक्तमेवाह– **स च** इति ।। शतृप्रत्यय इत्यर्थः । 'वर्तमाने लट्' **(पा.सू.३.२.१२३)** इति सूत्रात् लट् इति [2]वर्तमान इत्यर्थः । **लडादेश इति** ।। लक्षणाद्यर्थहीनलडादेश इत्यर्थः । ननु सोऽपि अप्रथमान्तपदसामानाधिकरण्यमपेक्षत एव । अतः कथं बलीयान्? इत्यत आह– **अप्रथमेति** ।। **अतिप्रसङ्गेति** ।। प्रथमासामानाधिकरण्ये सर्वत्र माभूदित्येतदर्थत्वादित्यर्थः ।।

**भाष्यम् — दुर्मतेः दुःखान्न स्मरन् त्यजतीति भविष्यति शङ्का ।**

**'त्यजन् देहं न कश्चित्तु मोहमाप्नोत्यसंशयम्'**

**इति स्कान्दे ।**

**'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति'**

**इति हि** (बृ.उ.६.४.२) **श्रुतिः ।।**

---

१. प्रसङ्ग- श्रीनि.टि।

२. अनुवर्तमान -इत्येव एकस्यां मातृकायाम् ।

### प्रमेयदीपिका

ननु दुर्मतिरपि शाब्दं न्यायं जानात्येव । अन्यथा शास्त्रे नाधिक्रियेत । केवलमध्यात्मविषये **न प्रवीणः** । तत्कथं तस्याप्येषा शङ्का स्यात्? ततश्च तं प्रत्यपि 'अन्ते' इत्येतद्व्यर्थमित्यत आह– **दुर्मतेरिति** ।। **दुर्मतेर्भविष्यति शङ्का** भिन्नकालत्वविषया । कुतः? मरणकाले महद्दुःखं जायते । दुःखस्य च संस्कारविलोपहेतुत्वं प्रसिद्धम् । अतो **दुःखात्** कारणात् मूर्छितो **न स्मरन् त्यजति** । कलेवरत्यागसमये स्मरणमसम्भवीति यावत् । एतामनुपपत्तिं पश्यन् बलवन्तमपि लडादेशं विहाय लक्षणार्थमेव हि मन्यत इति भावः ।।

ननु सुमतेरप्येवं शङ्का स्यादेव । कथं चेयं शङ्का तत्त्वप्रतीतिरेवेति चेन्न । अज्ञानिन एव देहाभिमानिनो देहत्यागमात्मत्यागमिव मन्यमानस्य मरणकाले दुःखं भवति । तदपि मरणक्षणात् पूर्वमेव ज्ञानी तु सर्वदा देहं हेयमेव मन्यमानः न मनागपि दुःखायते । किन्तु विशिष्टमेव तस्योत्क्रमणमित्यध्यात्मशास्त्रमनुसन्दधानस्य सुमतेः शङ्काऽनवकाशात् । किं तदध्यात्मशास्त्रम् ? इत्यत आह– **त्यजन्** इति ।। **कश्चित्** विद्वान् ।[१]अविद्वानपि तत्काले । **तस्य** इति मरणवैशिष्ट्यमात्रपरम् ।।

### भावदीपः

**न प्रवीणो नाधिक्रियेत** इत्यन्वयः ।। **दुःखायते** दुःखिवदाचरतीत्यर्थः ।। **तत्काल इति** ।। मोहं नाप्नोति, किन्तु तत्पूर्वमेवेति योज्यम् । **मरणवैशिष्ट्येति** ।। 'ज्ञानिनः' इति योज्यम् । तावत एव प्रकृतोपयोगादिति भावः ।।

**भाष्यम् — 'सदा तद्भावभावितः' इत्यन्तकालस्मरणोपायम् आह । भावः = अन्तर्गतं मनः । तथाऽभिधानात् । भावितत्वम् अतिवासितत्त्वम् ।**

**'भावना त्वतिवासना' इत्यभिधानात् ।। ६,७ ।।**

### प्रमेयदीपिका

ननु 'अन्ते' इत्येतत् स्मरणविशेषं चेत् तदा 'सदा तद्भावभावितः' इत्यनेनैव गतार्थं स्यात् । अन्यथा तद्व्यर्थं भवेदित्यत आह– **सदेति** ।। अन्तकालस्मरणमेव तत्प्राप्ति-

---

१. 'मोहः अज्ञानमभिमानश्च । एतदुभयाभावात् कस्यापि न दुःखं, किमुत ज्ञानिनः इति भावेनोक्तस्य साक्षात्श्रुतिमप्याह- तस्येति।'इति पद्मनाभतीर्थीये।

साधनम् । नच तदकस्माद् भवति । अतस्तदुपायत्वेन सदा तद्भावभावितत्वमुच्यत इति भावः[१]। कथम्? इत्यतो यथाऽयं तदुपायः स्यात् तथा व्याचष्टे– **भाव** इति ।। **तथाऽभिधानात्** इति । 'स्याद्भावोऽन्तर्गतं मनः' इत्येवं रूपाद[२]भिधानादित्यर्थः । **वासितत्वं** संस्कृतत्वम् । तस्मिन् भावस्तद्भावः । तेन **भावितः** इति मनोधर्मेण आत्मोपचर्यते ।। ६ ।। ७ ।।

**भावदीपः**

**मनोधर्मेण** भावितत्वरूपेण ।। ६-७ ।।

**अभ्यासयोगयुक्तेन चेतसाऽनन्यगामिना ।**
**परमं पुरुषं[३] दिव्यं याति पार्थानुचिन्तयन् ।। ८ ।।**

**भाष्यम् —** सदा तद्भावभावितत्वं स्पष्टयति– **अभ्यासेति** ।। अभ्यास एव योगो अभ्यासयोगः । **दिव्यं पुरुषं** पुरि शयं पूर्णं च ।

'स वा अयं पुरुषः सर्वासु पूर्षु पुरि शयो नैनेन
किञ्चनानावृतं नैनेन किञ्चनासंवृतम्' (बृ.उ २.५.१८)

इति श्रुतेः ।

**दिव्यं** सृष्ट्यादिक्रीडादियुक्तम् ।

'दिवु क्रीडा[४]'(पा.धा.११०७) इति धातोः[५] ।। ८ ।।

---

१. इत्यर्थः-वे-ग्रं ।

२. बे,गुज,वे-ग्रं। रूपाभिधानात् -प्र ।

३. अनु.व्या.१.१.५(श्लो-२०७)'पुरि शेते यतः सोऽथ पुरुषश्चेति गीयते' । न्या.सुधा- पुरि शरीरे । अत्रोपपदस्य सप्तम्या अलुक् । तस्य चेकारस्योकारः । धातुशकारस्य षकारो निर्वचनत्वात् । अधिकरणे शेतेर्डः ।।

४. अत्र पाणिनीयधातुपाठसङ्ख्या दत्ता । पाठभेदास्तु 'दिवु क्रीडायाम्' इति चान्द्रव्याकरणे । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इति काशकृत्स्नः । जय,इच्छा,पणि इति जैनेन्द्रः । जिगीषेच्छापणियुताविति वोपदेवः । अत्र क्षीरस्वामी, शाकटायनश्च 'मोद, मद, स्वप्न, जय, इच्छा, पणि, जिगीषा, कान्त्यर्थान् नोचतुः ।।

५. इदं वाक्यं क्वचिन्न पठ्यते । परन्तु दशमे-३७ श्लोके भावदीपे इयं भाष्यकृदुक्तिरित्युक्तेरत्रास्य भाष्ये अवश्यं ग्रहणम् ।

## प्रमेयदीपिका

### ( पुरुषशब्दनिष्पत्तिः )

कुतोऽयमर्थः ? इत्यत उत्तरत्रैवमेव व्याख्यानादिति भावेनाऽह– **सदेति** ।। [1]द्वन्द्वादिशङ्काव्युदासार्थमाह– **अभ्यास एवेति** ।। अभ्यासातिरिक्तस्य योगस्य प्रकृते उपयोगिनोऽभावादिति भावः । पुरुषश्चाधिदैवतमिति प्रकृतो हिरण्यगर्भोऽत्रोच्यत इति प्रतीति निरासार्थमाह– **दिव्यमिति** ।। दिव्यत्वेन विशेषणादीश्वर एवायमित्यर्थः । 'पॄ पालन-पूरणयोः' **(पा.धा.१०८६)** इत्यतो 'विदिपुरोश्च'[2] **(उ.सू.)** इति कुषन्प्रत्ययविधानात् पूर्णं चेति सिद्ध्यति । 'सर्वासु पूर्षु वर्तमानः' इति स्वरूपानुवादेन 'पुरुषः' इति विधेयम् । तस्य व्याख्यानम् -**पुरि शय**मित्यादि । **आवरणम्** अन्तर्व्याप्तिः । **संवरणं** बहिराच्छादनम् । ननु दिवि भवो दिव्यः । सच सूर्यमण्डलस्थत्वात् हिरण्यगर्भोऽपि भवतीति कश्चित्[3]। अत आह– **दिव्यमिति** ।। औणादिको यक्प्रत्ययः । 'परमम्' इति विशेषणादिति भावः ।। ८ ।।

## भावदीपः

**द्वन्द्वादीति** ।। षष्ठीतत्पुरुषादिरादिपदार्थः । 'विदिपुरोश्च' **(उ.सू.)** इत्युणादिसूत्रेण कुषन्प्रत्यये कित्वाद् गुणाभावे 'उदोष्ठ्यपूर्वस्य' **(पा.सू.७.१.१०२)**इति उत्त्वे, 'उरण् रपरः' **(पा.सू.१.१.१)** इति रपरत्वे पुरुष इति रूपसिद्धेरिति भावः ।। ८ ।।

### ( ध्येयभगवत्स्वरूपनिरूपणम् )

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ।। ९ ।।**

**भाष्यम् —** ध्येयमाह– **कविमिति** ।। **कविं सर्वज्ञम्**[4] ।

---

१. (अ)अभ्यासयोगाभ्यां इति प्रतीतिं वारयति -अभ्यासेति' इति पद्मनाभतीर्थाः।
(आ) अहरह अभ्यासयोगाभ्यां युक्ततया इति रामानुजीये । भाग-२।

२. 'पुरः कुषन्' इति उणादिसूत्रम् (४.७४) इत्यतः प्राक्तनं सूत्रम् ।

३. शाङ्करभाष्यम् ।

४. 'सार्वज्ञात् कविरित्येव शब्द्यते' ई.उ.(८)भा- उ.वाराहवचनम् ।।

'यः सर्वज्ञः'[1](आथ.१.९) इति श्रुतेः ।

'त्वं कविः सर्ववेदनात्' इति च ब्राह्मे ।

### प्रमेयदीपिका

उत्तरश्लोकगतविशेषणबलाच्च परमात्मैवायमिति भावेन तत्तात्पर्यमाह– **ध्येयमिति** ।। **आह** विशिनष्टीत्यर्थः । ननु कवित्वमन्येषामप्यस्ति । तत्कथं भगवतो विशेषणमित्यत आह– **कविमिति** ।। परमेश्वरस्य सार्वज्ञे प्रमिते भवेदिदं व्याख्यानम् । तदेव कुतः ? इत्यत आह– **त्वमिति** ।। **सर्वज्ञः** कविशब्दार्थ इत्येतत् कुत इत्यत आह– **य** इति ।। अन्येषां तु **सर्वे विमोहितधियः** (भाग११.७.१७) इत्यादिना सार्वज्ञाभावः प्रमितः ।।

**भाष्यम् — धातारं धारणपोषणकर्तारम् ।**

**'डु धाञ् धारणपोषणयोः'**[2](पा.धा.१०९२) **इति धातोः ।**

**'धाता विधाता परमोत सन्दृक्'**[3] **इति च श्रुतिः ।**

**'ब्रह्मा स्थाणुः'**[4] **इत्यारभ्य**

**'तस्य प्रसादादिच्छन्ति तदादिष्टफलां गतिम्'**[5]

**(म.भा.१२.३३४.३५,३९ )इति च मोक्षधर्मे ।**

---

१. २-७१ श्लोकेप्युदाहृतेयं श्रुतिः ।'सर्वज्ञः सर्वविदिति जगति सामान्यविशेषाकारयोः सत्वात् जगन्निष्ठौ यौ सामान्यविशेषाकारौ तद्विषयकज्ञानवत्तोच्यते'इति श्रीनिवासतीर्थाः आथर्वणभाष्यटिप्पण्याम् ।

२. अयं काशकृत्स्न,कातन्त्रयोः पाठः । 'डुधाञ् धारणे' इति चन्द्रः । 'धारणे पुष्टौ च' इति वोपदेवः ।

३. 'धाता विधाता परमोत सन्दृक् प्रजापतिः परमेष्ठी विराजा ।
स्तोमाश्छन्दांसि निविदो म आहुरेतस्मै राष्ट्रमभि सं नमाम'।। (तै.सं.९.७.४) ।

४. 'ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः । मरीचिरङ्गिरात्रिश्च पुलस्त्यः पुलहः क्रतुः ।।
वसिष्ठः परमेष्ठी च विवस्वान् सोम एव च । कर्दमश्चापि यः प्रोक्तः क्रोधो विक्रीत एव च ।।
एकविंशतिपुत्पन्नास्ते प्रजत्रापतयः स्मृताः । तस्य देवस्य मर्यादां पूजयन्तः सनातनीम् ।।
दैवं पित्र्यं च सततं तस्य विज्ञाय तत्वतः । आत्मप्राप्तानि च ततः प्रनाप्नुवन्ति द्विजोत्तमाः ।।
स्वर्गस्था अपि ये केचित् तान्नमस्यन्ति देहिनः । ते तत्प्रसादाद्गच्छन्ति तेनादिष्टफलां गतिम्
इति महाभारते पाठः।

५. नारदं प्रति भगवद्वचनम् ।

### प्रमेयदीपिका

ननु धाता विरिञ्चोऽपि प्रसिद्धः । तत्कथमेतद्भगवतो विशेषणम्? इत्यत आह– **धातारमिति** ।। कुतोऽयमर्थः? इत्यत आह– **डु धाञिति** ।। तृचः कर्तृवाचित्वं प्रसिद्धमेव । परमेश्वरस्य धातृत्वसद्भावे किं प्रमाणम्? इत्यत आह– **धातेति** ।। **विधाता कर्ता** । **परमा सन्दृक्** परमज्ञानरूपः । **सर्वस्य धातारम्** इत्येतद्भगवत एव नान्येषामित्यत्र प्रमाणमाह– **ब्रह्मेति** ।। तेन भगवता दिष्टं दत्तं फलं सुखं यस्यां सा तथोक्ता । **मोक्षधर्मे** 'कथितम्' इति शेषः ।।

### भावदीपः

**कर्तृवाचित्वं प्रसिद्धमेवेति** ।। 'ण्वुल् तृचौ'(**पा.सू.३.१.१३३**) इति सूत्रे कर्तरि विधानादिति भावः । धातृपदेन धारणपोषणकर्त्रर्थकेन अपौनरुक्त्याय आह– **विधाता कर्ता इति** ।।

**भाष्यम् — तमसः अव्यक्तात् परतः स्थितम् । तमसः परस्तात् इति ।।**

**'अव्यक्तं वै तमः' 'परस्तात् हि स ततः'**

**इति पिप्पलादशाखायाम् ।**

**'मृत्युर्वा व तमो मृत्युर्वै तमो ज्योतिरमृतम्'(बृ.उ.३-३-२८)**

**इति श्रुतेः ।। ९ ।।**

### प्रमेयदीपिका

**तमसः परस्तात्** इत्येतदादित्यादिसाधारणमित्यतो द्वेधा सप्रमाणकं व्याचष्टे– **तमस** इति ।। 'स्थितम्' इति शेषोक्तिः । अप्राकृतविग्रहमित्यर्थः ।। ९ ।।

**( योगिनां मृतिकाले कर्तव्यनिरूपणम् )**

**प्रयाणकाले मनसाऽचलेन**
**भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्**
**स तं परं पुरुषमुपैति दिव्यम् ।।१०।।**[1]

१. भविष्योत्तरे,ज्येष्ट-मा,११-२१. उत्तरार्धे व्यत्यासः ' ते स्वर्गलोकं समतीत्य यान्ति परं प्रधानस्य परं हि पुंसः ' इति ।

**भाष्यम् — वायुजयादियोगयुक्तानां मृतिकाले कर्तव्यमाह विशेषतः – प्रयाणकाल इति ।।**

### प्रमेयदीपिका

'उत्तरश्लोकोक्तं सर्वं सर्वोचित्क्रमिषुसाधारणम्' इति प्रतीतिनिरासार्थमाह– **वायुजयादीति** ।। साधकाः द्विविधाः भक्त्यादिप्रधाना वायुजयादिप्रधानाश्चेत्यतो विशेषणम् । **विशेषतः** इत्यनेन भक्त्यादीनां साधारण्यमाह ।।

### भावदीपः

**विशेषणमिति** ।। 'योगयुक्तानाम्' इत्यस्य 'वायुजयादि' इति विशेषणमिति । 'विशेषतो मृतिकाले कर्तव्यम्' इत्युक्तिलब्धार्थमाह– **भक्त्यादीनामिति** ।। **साधारण्यमिति**।। 'द्विविधसाधकानाम्' इति योज्यम् ।।

**भाष्यम् — वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसम्पूर्णानां भवत्येव मुक्तिः । तद्वतां त्वीषज्ज्ञानाद्यसम्पूर्णानामपि निपुणानां तद्बलात् कथञ्चिद् भवतीति विशेषः ।**

### प्रमेयदीपिका

ननु च 'अनुस्मरेद् यः । स तं परं पुरुषमुपैति' इत्यन्वयादेकस्य वाक्यस्य कथं भिन्नविषयत्वमुच्यते । एकस्मिन्नपि वाक्ये योगबलेनैव 'भ्रुवोर्मध्ये प्राणमावेश्य' इत्येतन्न सर्वविषयमित्येतावन्मात्रमत्र प्रतिपाद्यते । यथा 'प्रातरुत्थाय'[१] **(ब्र.सू.भा.३.४.१८.उ.व)** इति

१. ॐ परामर्शं जैमिनिश्चोदना चापवदति हि ॐ इति सूत्रभाष्ये इयमुदाहृता । पूर्णपाठस्तु-'प्रातरुत्थाय सन्ध्यामुपासीत, यत् सन्ध्यामुपास्ते ब्रह्मैव तदुपास्ते, अथ देवान्नमेत्,जुहुयात्, वेदानावर्तयीत,नान्यत् किञ्चिदाचरेत्, न सुरां पिबेत्, न पलाण्डुं भक्षयीत,,न भृशं वदेत्, न विस्तरेतात्मानम्, सोमं पिबेत्, हुतशेषेण वर्तयेत्' इति ।।

**भाष्यदीपिका-** 'सन्ध्यामुपासते जना इति यत् 'तद्ब्रह्मैव' एतद्विषयो ब्रह्मैवेत्यर्थः । अनेन सन्ध्याकाले सम्यग्ध्येयत्वात् सन्ध्याशब्दवाच्यस्य परब्रह्मणो मन्त्रैरुपस्थानमेव सन्ध्योपास्तिरित्युक्तं भवति । 'देवान्' प्राच्यादिदिग्वस्थितान् ब्रह्मेन्द्रादीन् 'नमेत्' प्रणमेत् । 'जुहुयात्' अग्निहोत्रहोमादीन् कुर्यात् । 'वेदानावर्तयीत' शब्दतोऽर्थतश्चाभ्यसेदित्यर्थः । अन्यत् 'निषिद्धम्' । तदेव विवृणोति – न सुरामित्यादिना । 'पलाण्डुं' लशुनं 'न भृशं वदेत्' न निष्ठुरं वदेत् 'आत्मानं' परमात्मानं 'सोमं' सोमरसम् । हुतशेषेण वर्तयेदिति । पुनः पुनः होमानुष्ठानेन तच्छेषं तदा तदा भक्षयेदित्यर्थः । अत्र न भृशं वदेदित्यादिकं

श्रुतौ 'न भृशं वदेत्' इत्यादिकं किञ्चित् साधारणं किञ्चिदसाधारणम् । कुतोऽस्याऽसाधारण्यं कल्प्यते ? इत्यत आह– **वायुजयादी**ति ।। अतो 'न तत् सर्वसाधारणम्' इति शेषः । तर्हि को विशेषोऽन्येषम्, येन वायुजयादिक्लेशमधिकमनुभवन्ति ? इत्यत आह– **तद्वतां त्वि**ति ।। **निपुणानां** वायुजयादौ । **कथञ्चित्** अल्पा इत्यर्थः । किञ्चिच्छीघ्रं चेत्यपि ग्राह्यम् ।।

**भावदीपः**

**'कविम्'**(८.९) इति श्लोकस्थयच्छब्दस्य **'प्रयाण'** (८.१०)इति श्लोकस्थतच्छब्देनान्वयं दर्शयति– **इत्यन्वयादि**ति ।। **भिन्नविषयत्वमि**ति ।। 'कविम्' इत्यस्य द्विविधसाधकविषयत्वं 'प्रयाण' इत्यस्य वायुजयादियोगिविषयत्वमित्यर्थः ।। **इति श्रुतावि**ति ।। 'प्रातरुत्थाय सन्ध्यामुपासीत,यत् सन्ध्यामुपास्ते ब्रह्मैव तदुपास्ते' इत्यादि ज्ञानपादीयपरामर्शे 'जैमिनिः' (ब्र.सू.३.४.१८) इति सूत्रभाष्योदाहृतश्रुतौ सन्ध्योपासनादिकं वर्णत्रयसाधारणं, होमादिकं गृहस्थाद्यसाधारणं, 'न भृशम्' इत्यादि सर्वसाधारणमित्यर्थः ।।

**भाष्यम् — उक्तं च भागवते -** (भाग.३.६.२४-२५)

**'पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।**
**वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसा [1]त्वीयुरकुण्ठधिष्ण्यम्।।**
**तथाऽपरे त्वात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।**
**त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते'[2] इति ।**

---

सर्ववर्णाश्रमिसाधारणम् । सन्ध्योपासनादिकं तु त्रैवर्णिकानामेव । अग्निहोत्रादिकं तु गृहस्थानामेव असाधारणमिति विवेकः प्रमेयदीपोक्तोऽनुसन्धेयः ।'

१. यादुपत्ये 'त्वापुरकुण्ठ' इति पाठः गुज,वे-ग्रं,। 'त्वीयुरकुण्ठ' इति विजयध्वजीयः पाठः ।

२. श्लोकद्वयार्थस्तु-'एवंविधस्य हरेरपरोक्षज्ञानसाधनोपासना द्विविधा । ध्यानरूपा, वेदान्तशास्त्रश्रवणादिलक्षणा च।तत्र क्षिप्रप्रवृत्त्यर्थं प्रथमा क्लेशसाध्या, द्वितीया सुखसाध्येत्युभे विशिनष्टि- पानेनेति।। हे देव ते कथासुधायाः पानेन श्रवणादिलक्षणेन प्रवर्धमानया भक्त्या विशदाशयाः निर्मलान्तःकरणाः वैराग्यसारं वैराग्यफलं बोधमपरोक्षज्ञानं प्रतिलभ्य प्राप्य अञ्जसा ऋजुमार्गेण अकुण्ठ-धिष्ण्यमप्रतिहत-वैकुण्ठादिस्थानम्,अपरिच्छिन्नस्वरूपंवात्वात्वाम्यथाईयुः।।(यादुपत्ये-वैकुण्ठादिस्थानीयंत्वामापुः-इति व्याख्या )।। तथाअपरेयेअन्येयोगिनःयमनियमादियोगनिष्ठाःआत्मसमाधियोगबलेनपरमात्मचित्तैकाग्र्य-लक्षणध्यानसामर्थ्येन वलिष्ठाम् अन्यसाधनाजेयां प्रकृतिं वन्धकशक्त्यभिमानिनीं प्रसादाज्जित्वा धीरा धीषु रममाणा अपरोक्षज्ञानिनः पुरुषं पूर्णषड्गुणं त्वामेव विशन्ति । तत्र तेषां योगिनां श्रमः यथा स्याद् यथा तथा ते तव श्रवणादिरूपया सेवया नतु श्रमैव स्यात्, किन्तु सुखमेवेत्यन्वयः।।' इति विजयध्वजीये ।

'ये तु तद्भाविता लोका एकान्तित्वं समाश्रिताः ।
एतदभ्यधिकं तेषां तत्तेजः प्रविशन्त्युत'[१] (म.भा.१२.३३४.४४)
इति मोक्षधर्मे ।

'सम्पूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः ।
नियमेन तथाऽपीरजयादियुतयोगिनाम् ।
वश्यत्वान्मनसस्त्वीषत् पूर्वमप्याप्यते ध्रुवम्'
इति च व्यासयोगे ।। १० ।।

## प्रमेयदीपिका

अत्र प्रमाणान्याह– उक्तमिति ।। यथा यथार्थं बोधम् । धिष्ण्यं मन्दिरम् इन्द्रियम्। त्वां विशन्त्येव न तु ते जीवा इव अञ्जसा ।। तद्भाविताः तेन भगवता वासिताः । एतत् मुक्तिलक्षणं फलम् । तेजः नारायणाख्यम् ।। ईरः समीरः । ध्रुवं ब्रह्म आप्यते तैः ।।१० ।।

## भावदीपः

'नतु सेवया'[२] इत्यत्र शेषमाह– 'नतु ते जीवा इवाञ्जसा' इति 'पुरुषं विशन्ति' इत्यन्वय इति भावः ।। एतत् इत्यनुवादः, मुक्तिलक्षणमिति व्याख्या ।। १० ।।

( सध्येयं मरणकालकर्तव्यप्रपञ्चननिरूपणम् )

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ।। ११ ।।[३]**

**भाष्यम्** — तदेव ध्येयं प्रपञ्चयति– **यदक्षरमित्यादिना** ।। प्राप्यते मुमुक्षुभिरिति पदं स्वरूपम् । 'पद गतौ'(पा.धा.११६९) इति धातोः ।।

---

१. ' ये तु तद्भाविता लोके ह्येकान्तित्वं समास्थिताः । एतदभ्यधिकं तेषां यत् ते तं प्रविषन्त्युत'
इति प्र.पाठः महाभारते ।

२. भाष्यस्थपदम् ।

३ यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि ' -कठ.उ.२-१५.।

'तद्विष्णोः परमं पदम्'(ऋ.१.२.६-५)[1]

इति च श्रुतेश्च ।

'गीयसे पदमित्येव मुनिभिः पद्यसे यतः'

इति वचनान्नारदीये ।। ११ ।।

**प्रमेयदीपिका**

'क्रममुक्त्यर्थमोङ्कारोपासनमुच्यते' इत्यन्यथाव्याख्यानमपाकर्तुमाह– **तदेवेति** ।। वायुजयुतानां मरणकाले कर्तव्यमेव । **'मामनुस्मरन्'**(८.१३)इत्यादिविरोधादिति भावः । [2]ननु पदत्वं शब्दस्येवोङ्कारस्य सम्भवति । न विष्णोरित्यत आह– **प्राप्यत** इति ।। कर्मण्यकारप्रत्ययः । पदं स्वरूपमिति प्रयोगप्रदर्शनम्– **तद्विष्णोरिति** ।। ११ ।।

**भावदीपः**

**क्रममुक्त्यर्थमिति** ।। अर्चिरादिलोकप्राप्तिद्वारकमुक्त्यर्थमित्यर्थः । 'तदेव' इत्यस्यार्थः- **वायुजयेत्यादि** ।। अपव्याख्याने दोषमाह– **मामिति** ।। **आदिपदेन 'यो मां स्मरति'**(८.१४) इत्यादिग्रहः ।। ११ ।।

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम् ।। १२ ।।**
**ओ३म् इत्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम् ।। १३ ।।**[3]

**भाष्यम् —** ब्रह्मनाडीं विना यद्यन्यत्र गच्छति तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीति **सर्वद्वाराणि संयम्य ।**

१. (अ)शु.यजु.वे-मुक्तिकोपनिषत्-७७ , कठ.उ.३-९, ।
(आ)श्रुत्यर्थस्तु-'परममुत्तमं पदं स्वरूपं सदा पश्यन्ति सूरयः' इति श्रीनि.टि।

२. अपव्याख्याननिराकरणार्थमिदम्।-पद्मनाभतीर्थीये तु-'पदशब्देन प्रणव इति शङ्कानिरासाय पदशब्दं सप्रमाणकं व्याचष्टे-प्राप्यत इति' इति ।

३. ष.प्र.उ.५-१ टिप्पण्यां प्रकाशिकायां-'अहमेवाखिलगुणो वाचकः प्रणवो मम' इति स्मृतेः, 'ओमित्येकाक्षरं ..स्मरन्' इति गीतोक्तेश्च नारायणादिनामवत् प्रणवस्यापि विष्णुनामत्वात् '।

**'निर्गच्छन् चक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि'**

**इत्यादि वचनात् - व्यासयोगे, मोक्षधर्मे[१] च ॥**

**प्रमेयदीपिका**

ननु 'मनो निरुध्य' इत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम् । तत् किं पुनरुच्यते? मैवम् । वायुसञ्चरणद्वाराणां नाडीनामत्र ग्रहणात् । तन्नियमनं किमर्थम् ? इत्यत आह– **ब्रह्मेति** ॥ इति हेतौ । 'इत्युक्तम्' इति शेषः । अत्र प्रमाणमाह– **निर्गच्छन्निति** ॥ **सूर्यं** गच्छति । **मोक्षधर्मे** च 'अयमेवार्थ उक्तः' इति शेषः ॥

**भावदीपः**

'संयम्य' इत्यनन्तरमुत्तरं शेषमाह– **इत्युक्तमिति** ॥ 'सूर्यम्' इत्यनूद्य 'गच्छति' इति शेषोक्तिः ॥

**भाष्यम् — हृदि नारायणे ।**

**'ह्रियते त्वया जगद्यस्मात् हृदित्येव प्रभाषसे'**

**इति पाद्मे ।**

**न हि मूर्धनि प्राणे स्थिते हृदि मनसः स्थितिः सम्भवति ।**

---

१. व्यासयोगवचनस्यैव मोक्षधर्मेपि पाठात् पृथगनुदाहरणमिति -भावरत्नकोशे ।
म.भा.शान्तिपर्वणि ३१७ अध्याये उत्क्रमणप्रकरणे इमे श्लोकाः।
याज्ञवल्क्य उवाच-
तथैवोत्क्रमणं तु शृणुश्वावहितो नृप । पद्भ्यामुत्क्रम्यमाणस्य वैष्णवं स्थानमुच्यते॥
जङ्घाभ्यां तु वसून् देवानाप्नुयादिति नः श्रुतम् । जानुभ्यां तु महाभागान् साध्यान् देवानवाप्नुयात् ॥
पायुनोत्क्रममाणस्तु मैत्रं स्थानमवाप्नुयात् । पृथिवीं जघनेनाथ ऊरुभ्यां च प्रजापतिम्॥
पार्श्वाभ्यां मरुतो देवान् नाभ्यामिन्द्रत्वमेव च। बाहुभ्यामिन्द्रमेवाहुरुरसा रुद्रमेव च॥
ग्रीवया तु मुनिश्रेष्ठं नरमाप्नोत्यनुत्तमम्॥ विश्वेदेवान् मुखेनाथ दिशः श्रोत्रेण चाप्नुयात् ॥
घ्राणेन गन्धवहनं नेत्राभ्यामग्निमेव च।भ्रूभ्यां चैवाश्विनौ देवौ मूर्ध्ना देवाग्रजं तथा॥
एतान्युत्क्रमणस्थानान्युक्तानि मिथिलेश्वर ॥

'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा'

इति व्यासयोगे ।

**योगधारणामास्थितः योगभरण एवाभियुक्त** [1]इत्यर्थः ।। १२ ।। १३ ।।

**प्रमेयदीपिका**

'हृदि' इत्यस्य [2]प्रसिद्धार्थतानिरासार्थमाह– **हृदीति** ।। हरतेः 'क्विप् च' (पा.सू.३.२.७६) इति क्विप् । प्रसिद्धार्थ एव किं न स्यात्? इत्यत आह– **नहीति** ।। कुतो न सम्भवति? इत्यत आह– **यत्रेति** ।। आदौ हृदि निरुध्येत्यध्याहारो दोषः । मरणवेलायामखण्डस्मृतिर्वक्तव्या, तत्कथं धारणोच्यते? इत्यत आह– **योगेति** ।। १२ ।। १३ ।।

**भावदीपः**

**क्विपिति** ।। तथाच क्विपः 'लशक्वतद्धिते' (पा.सू.१.३.८) 'हलन्त्यम्' (पा.सू.१.३.३) 'इदमपृक्तस्य...' (पा.सू.) इति सूत्रैः सर्वलोपे सति ह्रस्वस्य पिति किति 'शि तुक्' (पा.सू.८.३.३१) तुगागमे 'हृत्' इति रूपमिति भावः । ननु 'मूर्ध्नि प्राणादीन् आदौ हृदि मनो निरुद्ध्य पश्चात् प्राणं मूर्ध्नि आधाय' इति व्याख्यायां[3] न दोषः इत्यत आह– **आदौ हृदि निरुध्येत्यध्याहारो दोष इति** ।। १२-१३ ।।

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ।। १४ ।।**

**भाष्यम् — नित्ययुक्तस्य** नित्योपायवतः । **योगिनः** परिपूर्णयोगस्य ।।

**प्रमेयदीपिका**

'नित्ययुक्तस्य' 'योगिनः' इत्येतयोरेकार्थतानिरासार्थमाह– **नित्येति** ।। नित्योपायवत्त्वेन सम्पूर्णयोगस्येत्यर्थः ।। १४ ।।

१. 'योगस्य धृतावभियुक्तः आग्रहशाली इति भाष्यार्थः' इति मातृकायाम् अभियुक्तशब्दार्थः हंसपादेन लिखितः ।।

२. हृदि-हृदयपुण्डरीके' इति शाङ्करभाष्ये ।

३. व्याख्यानेन-पां ।

( पुनरावृत्तिरहितभगवत्प्राप्तिरूपमोक्षस्तुतिः )

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ।। १५ ।।**

**भाष्यम्** — तत्प्राप्तिं स्तौति– **मामिति** ।। **परमां सिद्धिं गताः** इति हि तत्र हेतुः।।

**प्रमेयदीपिका**

**'स यांति परमां गतिम्'**(८.१३) **'तस्याहं सुलभः'**(८.१४) इति द्वेधा वचनात् [1]परमागतिः भगवल्लाभश्च पृथगिति न मन्तव्यम् । भगवत्प्राप्तेरेवोत्तरत्र स्तुतेः । अन्यथोभय स्तुतिप्रसङ्गादित्यभिप्रायेणाऽह– **तत्प्राप्तिमिति** ।। तर्हि कथं 'मामुपेत्य' इत्युक्त्वा 'संसिद्धिं परमां गताः' इति पृथगुक्तिः? इत्यत आह– **परमामिति** ।। ये मामुपेताः ते **परमां सिद्धिं** मोक्षलक्षणां हि **गताः** । नच मुक्तानां निर्बीजं जन्म सम्भवतीत्येवं **तत्र** स्वं प्राप्तानां जन्माभावे **हेतु**रयमुच्यते । नतु भगवत्प्राप्तेरन्या परमसंसिद्धिप्राप्तिरित्यर्थः ।। १५ ।।

( पुनरावृत्तिरहितलोकनिरूपणम् )

**[2]आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ।। १६ ।।[3]**

**भाष्यम्** — महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिः । तच्चोक्तं नारायण-गोपालकल्पे–

**'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि ।**
**तथाऽप्यभावस्सर्वत्र प्राप्यैव वसुदेवजम्'**[4] इति ।। १६ ।।

१. परमगतिः-वे-ग्रं ।
२. 'आब्रह्मभवनात्' इति श्रीनि.टि ,रामानुजभाष्यटीकायां वेङ्कटनाथीयेपि अयं पाठः ।।
३. 'आब्रह्मसदनाल्लोकाः जायन्तेऽर्वागवस्थिताः ।
मल्लोकवासिनो भूयः संसरन्ति न कुत्रचित् ' ।।७-५६ ।। पाद्मसंहिता ।।
४. 'गीतावाक्येपि कृष्णसमीपप्राप्तेरेव पुनर्जन्मरूप्यसंसारदूरीकरणसामर्थ्येक्तेः सैव परममुक्तिरित्याह- आब्रह्मेति । यद्यप्यनन्तासनश्वेतद्वीपयोः पुनरावृत्तियुक्तत्वशङ्कानिरासाय मुक्तानामप्यावासत्वेन अङ्गीकृतान्तरिक्षस्वर्गादिलोकानां च पुनरावृत्त्यैव युक्तजनभरितत्वशङ्कानिरासाय च भगवत्पादैरेव

## प्रमेयदीपिका

**'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनः'** इति सत्यलोकसहितानां पुनरावृत्तिरुच्यते'[१] इत्येतदपव्याख्यानमिति भावेनाऽऽह– **महामेरुस्थेति** ।। परतः स्थितानाम् । एवं जनोलोकम् **आरभ्य** इत्यपि ग्राह्यम् । कुत एतत् ? इत्यतः श्लोकमागमेनैव व्याचष्टे– **तच्चेति** ।। पृथिवीसम्बन्धिनां तदसम्बन्धिनां लोकानां ग्रहणायोभयोपादानम् । 'परतः स्थितानाम्','यद्यपि' इति शेषः । **अभावः** 'जनेर्लभ्यते' इति शेषः । अनेनैवं[२] व्याख्यातं भवति । महामेरुस्थब्रह्मसदनं जनोलोकं चारभ्य न पुनरावृत्तिः । अतो 'मामुपेत्य पुनर्जन्म' इति किमुच्यते ? इति चेत् । सत्यम्, **आब्रह्मभुवनात्** एवम् **आजनाच्चार्वाग्भवा एव लोकाः पुनरावर्तिनः** । परे न पुनरावर्तिन इति यावत् । तथाऽपि नोक्तमयुक्तम् । यतस्तेषु लोकेषु स्थितं **मामुपेत्य** अवस्थितस्य **पुनर्जन्म न विद्यत** इति । अन्यथा 'मामुपेत्य पुनर्जन्म' इत्युक्तत्वादुत्तरार्धवैयर्थ्यं च ।। १६ ।।

## भावदीपः

[३]**आरभ्येति** ।। 'परतः स्थितानाम्' इति शेषः ।। वक्ष्यमाणागमानुरोधाद् आह– **एवं जनेति** ।। **पृथिवीति** ।। पृथिवीसम्बन्धिनां मेरुश्वेतद्वीपानन्तासनानां ग्रहणाय जनोलोकमारभ्य स्थितलोकानां ग्रहणाय च– **मेरुस्थब्रह्मसदनमिति** ।। 'आजनात्' इत्युभयोपादनम् इत्यर्थः ।। **'आजनात्'** इत्यनन्तरं **'परतः स्थितानाम्'** इति, **'भुवि'** इत्यनन्तरं **'यद्यपि'** इति शेषमाह– **इति शेष इति** ।। गीतावाक्यं योजयति– **आब्रह्मेत्यादिना** ।। **नोक्तमिति** ।। 'मामुपेत्य न

---

पूर्वार्धस्य मेरुस्थितब्रह्मसदनाद् अर्वाक्तनलोकानां पुनरावृत्त्यैव युक्तजनभरितत्वमेवार्थ उक्तः। तथापि वक्तुः कृष्णस्य व्याख्यातुराचार्यस्य च प्राकृतमेरुस्थब्रह्मभवनसाम्येन सत्यलोकस्य कैमुत्येन तदर्वाक्तनलोकानां च जन्मादियोग्यप्रकृतिवद्धजनयुक्तता अप्यभिमता । अन्यथा मामुपेत्य इति स्वलोक-गमनस्यैव विशिष्य पुनर्भवविदूरत्वकथनविरोधात् । तथापि मुक्तामुक्तजनस्थानतया तेषामपि लोकानामेकांशेन स्वलोकसाम्यमागतमिति चेन्न । मामुपेत्य इति वदतः कृष्णस्य तल्लोकस्थमुक्तानां जन्म-वैधुर्येपि श्वेतद्वीपस्थस्वप्राप्त्येकनिमित्तत्वस्य तेष्वपि लोकेषु स्थितस्वमूर्तिविशेषप्राप्ति-निमित्तत्वस्य चाभिप्रेतत्वेन तल्लोकमहिमत्वाभावे तात्पर्यात् । इति **युक्तिमल्लिकाफलसौरभव्याख्याने सुरोत्तमतीर्थाः** ।

१. शाङ्करभाष्यानुवादः-भाग २ ,पृ-१०१।

२. 'अनेनैव' इति वे-ग्रं,गुज.अपपाठः ।

३. अस्मिन् भागे का.सो मातृकयोः वाक्यानि पूर्वापरीकृतानि । यथामति टीकानुगुणं योजितमत्र । क्षाम्यन्तु मे हन्तापराधं महान्तः ।

पुनर्जन्म' इत्युक्तमयुक्तं नेत्यर्थः ।। **अन्यथेति** ।। लोकावाप्तिमात्रस्य न पुनर्जन्महेतुरित्यर्थः ।। **वैयर्थ्यं चेति** ।। न केवलं पुनरुक्ततेति चार्थः ।। १६ ।।

**( भगवतो सृष्टिप्रलयादिकर्तृत्वमहिमा )**

**सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ।। १७ ।।**
**अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसञ्ज्ञके ।। १८ ।।[1]**
**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ।। १९ ।।**

**भाष्यम्** — मां प्राप्य न पुनरावृत्तिरिति स्थापयितुमव्यक्ताख्यात्मसामर्थ्यं दर्शयितुं प्रलयादि दर्शयति– **सहस्रयुगेत्यादिना** ।। सहस्रशब्दोऽनेकवाची । ब्रह्म परम् ।

**'सा विश्वरूपस्य रजनी'**[2] इति श्रुतिः ।

**द्विपरार्धप्रलय एवात्र विवक्षितः ।**

**'अव्यक्ताद् व्यक्तयः सर्वाः'** (८.१८) इत्युक्तेः ।।

**प्रमेयदीपिका**

उत्तरप्रकरणस्यासङ्गतिमाशङ्क्याऽह– **मां प्राप्येति** ।। 'अवस्थितानाम्' इति शेषः । प्रतिज्ञामात्रेण हि तदुक्तम् । अव्यक्तसामर्थ्यस्यात्र कथनात् कथम् 'आत्म' इत्युच्यत इत्यत उक्तम्– **अव्यक्ताख्येति** ।। **प्रलयादीति** ।। तत्कारणत्वमात्मनः । सृष्टिप्रलययोरिदम्पूर्वत्वाभावज्ञापनाय गीतामुल्लङ्घ्योक्तम् ।। अत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासायाऽह– **सहस्रेति** ।। बहुशब्दपर्यायोऽयम् । नतु प्रसिद्धार्थः[3]।।

---

१. असदधिकरणसुधापरिमले (द्रं सम्पुटम्-१३. पत्रे.३०५६) आगमैः प्रलयसाधनविषये प्रमाणतयोदाहृतम् ।
२. 'नासीदहो..विश्वरूपम् । सा विश्वरूपस्य रजनी हि एवमस्यार्थो बोध्यः'इति म.भा.१२.३४२.८.
३. शाङ्करभाष्ये,रामानुजभाष्ये च चतुर्मुखब्रह्माहःपरतया व्याख्यातम् -भा॰-२, पृ१०३,१०४ ।

विरिञ्चाहोरात्रयोः प्रसिद्धस्य सहस्रचतुर्युगपर्यन्तत्वात् कथमेतत्? इत्यत आह– **ब्रह्मेति** ।। तथाच द्विपरार्धप्रलयस्याऽदिसृष्टेश्चात्र विवक्षितत्वादुक्तं युक्तम् । ननु परस्य ब्रह्मणो नित्यत्वादहोरात्रे न स्तः । तत्कथं तत्परमेतत्? इत्यत आह– **सेति** ।। **सा** निर्व्यापारावस्था-परिपूर्णरूपस्यापि हरेः **रजनी** इत्यर्थः । अनेनाहरपि सिद्धम् ।। भवेदेतत्, यद्यत्र द्विपरार्धप्रलयस्य आदिसृष्टेश्च विवक्षेत्यत्र प्रमाणं स्यादित्यत आह– **द्विपरार्धेति** ।। एवमादिसृष्टेश्चेत्यपि ग्राह्यम् । न ह्यवान्तरसृष्टिप्रलययोः सर्वकार्योत्पत्तिविनाशाविति भावः ।।

### भावदीपः

ल्यबन्तनिर्वाहाय– **अवस्थितानामिति**[१]।। **तदुक्तमिति** ।। 'मामुपेत्य तु कौन्तेय' इत्याद्युक्तमित्यर्थः । तथाच स्थापनं सङ्गतमेवेति भावः ।। गीतानुरोधात् 'सृष्ट्यादि' इति वक्तव्ये कथं 'प्रलयादि' इति व्युत्क्रमेणोक्तिरित्यत आह– **सृष्टीति ।। इदम्पूर्वेति** ।। सृष्टिः पूर्वः लयः पश्चादिति वा, लयः पूर्वः सृष्टिः पश्चादिति वा न नियमोऽस्ति । पौर्णमास्यमावास्योः तिथ्योरिव चक्रवत् परिवर्तमानत्वादिति ज्ञापनायेत्यर्थः ।। **अत्रेति** ।। गीतायामित्यर्थः।। १९ ।।

### ( अवान्तर-महाप्रलययोर्भेदनिरूपणम् )

**भाष्यम् —उक्तं च महाकौर्मे–**

**'अनेकयुगपर्यन्तं महाविष्णोस्तथा निशा ।**
**रात्र्यादौ लीयते सर्वमहरादौ तु जायते' इति च।**

**'यः स सर्वेषु भूतेषु'**(८.२०) **इति वाक्यशेषाच्च ।। १७ ।। १८ ।। १९ ।।**

### प्रमेयदीपिका

आगमान्तरसम्मतेश्चैवमित्याह– **उक्तं** चेति ।। इतोऽप्येवमित्याह– **य** इति ।। न ह्यवान्तरप्रलये सर्वेषामाकाशादीनां भूतानां नाशः । नापि विरिञ्चस्य पञ्चभूतनाशेऽप्यविनाशित्वमिति भावः ।। १७ ।। १८ ।। १९ ।।

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ।। २० ।।**

---

१. इदं वाक्यं पूर्वश्लोकादिमभागे मातृकयोः लिखितम् ।

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**

**भाष्यम् —** अव्यक्तः भगवान् । **'यं प्राप्य न निवर्तन्ते'** इति **'मामुपेत्य'** इत्यस्य परामर्शात् ।

**'अव्यक्तं परमं विष्णुः'** इति प्रयोगाच्च गारुडे ।

**धाम स्वरूपम्**[1] ।

'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते'[2]

इत्यभिधानात् ॥ २० ॥ २१ ॥

**प्रमेयदीपिका**

इदानीम् 'अव्यक्ताख्यात्मा' इति यदुक्तं तत्साधयितुमाह– **अव्यक्त** इति ॥ 'मामुपेत्य' (८.१५) इत्युक्तार्थस्य **'यं प्राप्य न निवर्तन्ते'**(८.१६) इत्यव्यक्तविषयतया परामर्शात् । न केवलम् अव्यक्तशब्दो युक्तिबलाद् भगवति नीयते । किन्तु वाचकश्च तस्येत्याह– **अव्यक्तमिति** ॥ कथं तर्हि भगवतोऽव्यक्तस्य स्वस्थानत्वम् उच्यते? इत्यत आह– **धामेति** ॥

**भावदीपः**

[3]धामपदार्थमाश्रयं मत्वा आह– कथं तर्हीति ॥ ॥ २१ ॥

( भक्तेरेव परमसाधनत्वनिरूपणम् )

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥**

**भाष्यम् —** परमसाधनमाह– **पुरुष** इति ॥ २२ ॥

---

१. गुज,वे -'तेजः स्वरूपम्-इतीदमधिकमनन्वितं च ॥ वे-ग्रं.नास्ति ।

२. (अ)'तेजः शक्तिः समूहश्च गृहं धामेति कथ्यते'॥ इति **शब्दनिर्णये** -भाता-४.८.८५.

(आ)'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' -इति **मेदिनीकोशे** ।

३. सो इदं वाक्यं नास्ति ।

**प्रमेयदीपिका**

**'भक्त्या युक्तः'** (८.१०) इति भक्तेः भगवत्प्राप्तिसाधनत्वस्योक्तत्वात् पुनरुक्तमुत्तरं वाक्यमित्यत आह– **परमेति** ।। अन्यैः साधनैः सहोक्तत्वेन तत्साम्यशङ्कायां साधनेषु भक्तेः परमत्वमनेनाऽह । तच्च पुनर्वचनेनैव द्योत्यमिति भावः ।। २२ ।।

**भावदीपः**

**अन्यैः साधनैरिति** ।। 'मनसा बलेन भक्त्या युक्तो योगबलेन चैव' इत्याद्युक्तेरिति भावः । **अनेनेति** ।। 'परमम्' इति श्लोकेनेत्यर्थः ।। २२ ।।

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ।। २३ ।।**

**भाष्यम् — यत्कालाद्यभिमानिदेवतागता आवृत्त्यनावृत्ती गच्छन्ति ता आह– यत्रेत्यादिना ।। 'कालः' इत्युपलक्षणम् । अग्न्यादेरपि वक्ष्यमाणत्वात् ।। २३ ।।**

**प्रमेयदीपिका**

'यस्मिन् काले मृता आवृत्त्यनावृत्ती यान्ति तत्प्रतिपादनार्थमुत्तरोग्रन्थः'[१] इत्यन्यथा-प्रतीतिनिरासार्थमाह– **यदिति** ।। याश्च ताः कालाभिमानिन्यश्चेति विग्रहः[२] ।। **देवतागता इति** ।। तदधिष्ठितमार्गाभ्यां गता इत्यर्थः । 'कालः' इत्युक्तत्वात् कथमादिपदप्रक्षेपेण व्याख्यानम्? इत्यत आह– **काल इति** ।। कुतः? इत्यत आह– **अग्न्यादेरिति** ।। अग्निर्ज्योतिर्धूमानाम् ।।

**भावदीपः**

आदिपदार्थमाह– **अग्निर्ज्योतिर्धूमानामिति** ।। २३ ।।

( अर्चिर्मार्ग-धूममार्गनिरूपणम् )

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ।। २४ ।।**[३]

१. अयं शाङ्करभाष्यानुवादः-भाग-२, पृ११३-११४ ।
२. समासः इति कचित् ।
३. अयं श्लोकः ४.२.२२ ब्र.सू.भाष्योदाहृतः, तट्टीकायां विवृतश्च तत एवावगन्तव्यः ।।

**भाष्यम् — ज्योतिः अर्चिः ।**

**'ते अर्चिषमभिसम्भवन्ति'** (बृ-उ.६.२.१५) **इति हि श्रुतिः ।**

**तथाच नारदीये -**

**'अग्निं प्राप्य ततश्चार्चिस्ततश्चाप्यहरादिकम्' इति ।**

**अभिमानिदेवताश्चाग्न्यादयः । कथमन्यथा-**

**'अह्न आपूर्यमाणपक्षम्'** (छां-उ.५.५.१) **इति युज्यते?**

**'दिवादिदेवताभिस्तु पूजितो ब्रह्म याति हि ' इति ब्राह्मे ।**

## प्रमेयदीपिका

ज्योतिश्शब्दस्यानेकार्थत्वाद् विवक्षितमर्थमाह– **ज्योतिरिति** ।। **अभिसम्भवन्ति** प्राप्नुवन्ति । श्रुतिपुराणयोरह्नः प्रागर्चिषः प्राप्तेरुक्तेः तत्समाख्यानादित्यर्थः । प्रातीतिक एवार्थः किं न स्यात्? कुतोऽभिमानिदेवताग्रहणम्? इत्यत आह– **अभिमानीति** ।। आदिशब्दसमर्थनेन सह समुच्चयार्थश्चशब्दः । **अन्यथा** मरणकालपरिग्रहे । इति 'श्रुतिः' । उपलक्षणमेतत् । **'अहः शुक्लः'** इति गीताऽपि । अहोरात्रव्यतिरिक्तपक्षाभावाद् इति भावः । समाख्यानाच्चैवमित्याह - **दिवादीति** ।।

## भावदीपः

चशब्दसमुच्चयाप्रतीतेराह– **आदिशब्देति** ।। 'अग्न्यादेः' इति भाष्ये आदिपदोपात्त-ज्योतिःशब्दस्य अर्चिरर्थकत्वं यच्छ्रुतिपुराणाभ्यां समर्थनं कृतं तेनेत्यर्थः । यद्वा 'अग्न्यादेः' इत्यादिपदेन अह्नः प्राक् अर्चिषः प्राप्तेः श्रुतिपुराणाभ्यां[1] समर्थनेनेत्यर्थः ।। **अन्यथा** इत्यनुवादः, **मरणकालपरिग्रहः** इति व्याख्या । इतिपदानुवादपूर्वं शेषमाह– **इति श्रुतिरिति** ।। **एतदिति** ।। भाष्यमित्यर्थः । **गीताऽपीति** ।। 'कथं युज्यते' इत्यनुषङ्ग इति भावः ।।

**( मास-अयनाभिमानिदेवताः भिन्नभिन्नाः )**

**भाष्यम् — मासाभिमानिभ्यो अयनाभिमानी च पृथक् । तच्चोक्तं गारुडे -**

---

१. श्रुतिपुराणोक्त्या-पां ।

'पूजितस्त्वयनेनासौ मासैः परिवृतेन हि 'इति ।

अहरभिजिता शुक्लं पौर्णमास्या अयनं विषुवा सह ।।

तच्चोक्तं ब्रह्मवैवर्ते–

'साह्ना मध्यन्दिनेनाथ शुक्लेन च सपूर्णिमा ।
सविष्वा चायनेनासौ पूजितः केशवं व्रजेत् ।।' इति ।। २४ ।।

**प्रमेयदीपिका**

किञ्च 'षण्मासा उत्तरायणम्' 'षण्मासा दक्षिणायनम्' (८.२५) इत्येतदप्यभिमानिदेवतांगमयति। मासातिरिक्तायनाभावात् । अभिमानिनां च **पृथक्त्वेन** पृथगुक्तिसम्भवादिति भावेनाऽह– **मासेति** ।। अनेन 'षण्मासा एवायनम्' 'इति व्याख्यानं निरस्तं भवति । पुराणविरोधात् ।

अत्रानुक्तमपि किञ्चिदध्याहरति– **अहरिति** ।। सह स्थितं यातीत्यप्यत्र द्रष्टव्यमिति भावः ।। एतदप्यभिमानिदेवतापरिग्रहसमर्थनार्थम् । प्राधान्यादेरविवक्षितत्वात् **'साह्ना'** इत्युक्तम् । **सपूर्णिमा** सपूर्णिमेन । 'सुपां सुलुक्' (पा.सू.७.१.३९) इत्यादेः । विषुशब्दस्योवङ्यणादेश-विकल्पश्छान्दसः ।। २४ ।।

**भावदीपः**

**समर्थनार्थमिति** ।। अहरादेः जडस्य जडान्तरसाहित्यायोगादिति भावः ।। **इत्युक्तमिति** ।। अन्यथा 'सहयुक्ते अप्रधाने' (पा.सू.२.३.१९) इत्युक्तदिशा अप्राधान्यादेः विवक्षितत्वे प्रमाणेऽपि 'अहर्मध्यन्दिन' इत्यादि निर्देशः स्यादिति भावः ।। **'इत्यादेः'** इति **छान्दसः** तृतीयायाः प्रथमेत्यर्थः ।। **विकल्प इति** ।। भाष्ये प्रमाणे[२] उवङादेशः यणादेश इति विकल्प इत्यर्थः ।। २४ ।।

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**

---

१. शाङ्करभाष्यानुवादः ।
२. उवङ्प्रमाणे इति का. सो पठयते ।

**'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ।। २५ ।।[२]**
**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्यया ऽऽवर्तते पुनः ।। २६ ।।**

**( अर्चिर्मार्ग-धूममार्गकथनप्रयोजनम् )**

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।**
**तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ।। २७ ।।**

**भाष्यम् — एते सृती सोपाये ज्ञात्वाऽनुष्ठाय[३] न मुह्यति । तच्चाह स्कान्दे–**
**'सृती ज्ञात्वा च सोपाये अनुष्ठाय च साधनम् ।**
**न कश्चिन्मोहमाप्नोति न चान्या तत्र वै गतिः' [४]इति ।। २७ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भगवद्गीताभाष्ये अष्टमोऽध्यायः।।

**प्रमेयदीपिका**

'नैते सृती पार्थ' इति मार्गज्ञानमात्रेण मोहाभावोऽभिधीयत इति प्रतीति[५]निरासार्थमाह– एत इति ।। **अनुष्ठाय** 'उपायम्' इति शेषः । कुत एतत्? **'योगी'** इत्युक्तत्वात् । पुराणसंवादाच्चेत्याह– **तच्चेति** ।। **मोहः** भगवद्विस्मृतिरूपः । **अन्या** भगवत्प्राप्तेः ।।

---

१. संवत्सरो वै प्रजापतिः । तस्यायने दक्षिणं चोत्तरं च । तद् ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभियजन्ते । ए एव पुनरावर्तन्ते । तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते एष वै रयिर्य पितृयाणः । अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्यादित्यमभि-यजन्ते । एतद् वै प्राणानामायनतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः'
इति ष.प्र.उ.१.७/८

२. 'तच्छ्रद्धयाऽऽक्रान्तमतिः पितृदेवव्रतः पुमान् ।
गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति'।। भाग.३-३२-३ ।।

३. 'अनुष्ठीय' इति पाठः टीकाकृत्सूचितापपाठः ।

४. 'भक्तिमान् मार्गविन्नैव नीचां गतिमवाप्नुयात्' (भाग.ता.७-१४-५६)

५. शाङ्करभाष्ये,रामानुजीये-च पृ.१२२.भाग-२ ।।

( टीकाकृत्सूचितभाष्यपाठः )

भाष्ये पुराणे च 'अनुष्ठाय' इत्याकारस्थाने क्वचिदीकारो लेखकदोषेण पतितः । मूलपुस्तकेष्वदर्शनात् ।। २७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायाम् अष्टमोऽध्यायः समाप्तः ।। ८ ।।

**भावदीपः**

**उपायमितीति ।।** ज्ञानं कर्म चेत्यर्थः ।। २७ ।।

इति श्रीमत्सुधीन्द्रतीर्थश्रीपादशिष्यश्रीराघवेन्द्रयतिकृते
श्रीगीताभाष्यटीकाभावदीपे अष्टमोऽध्यायः ।।[1]

अध्यायार्थोपसंहारः

**वेदेषु यज्ञेषु तपस्सु चैव**
**दानेषु यत् पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा**
**योगी परं स्थानमुपैति चाद्यम् ।। २८ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे [2]अक्षरपरब्रह्मयोगो नामाष्टमोऽध्यायः ।।

---

१. शिष्टजनप्रियकृष्णप्रीतिरस्तु इति मातृकायाम् ।
२. ब्रह्मप्राप्तिमार्गवर्णनं ।

# ।। अथ श्रीमद्भगवद्गीतायां नवमोऽध्यायः ।।

## ( नवमाध्यायार्थ-भगवन्माहात्म्यनिरूपणम्)

**श्रीभगवानुवाच**

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।। १ ।।**

**भाष्यम् — सप्तमाध्यायोक्तं स्पष्टयत्यस्मिन्नध्याये ।। १ ।।**

### प्रमेयदीपिका

पूर्वसङ्गतत्वेनाध्यायार्थमाह– **सप्तमेति**।। 'भगवन्माहात्म्यम्' इति शेषः । पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमिति सप्तमोक्तपदार्थान् अष्टमे व्याख्याय नवमे तद्वाक्यार्थं स्पष्टीकरोतीत्यर्थः ।।

### भावदीपः

**पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमिति** ।। इतिशब्दो हेत्वर्थः ।। **सप्तमोक्तपदार्थानिति** ।। अध्यात्मादिपदार्थानित्यर्थः । तद्वाक्यार्थमिति ।। **'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः'** (७.३०) इत्यादिवाक्यार्थमित्यर्थः । एतेन सप्तमानन्तर्यशङ्का अपास्ता।।

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ।। २ ।।**

**भाष्यम् — राजविद्या** प्रधानविद्या ।।

(राजविद्याशब्दापव्याख्यानिराकरणम्)

### प्रमेयदीपिका

'राज्ञामश्वपतिजनकादीनां विद्या राजविद्या' इति कश्चित्[१] । तदसत् । ब्राह्मणादीनामनधिकारप्रसङ्गादिति भावेनाऽह– **राजेति** ।। राजेव राजा । राज्ञी[२] चासौ विद्या चेति राजविद्येत्यर्थः।।

१. राजानरामकविकृतसर्वतोभद्रटीकायामपि- 'राज्ञां जनकाश्वपतिप्रभृतीनाम् उग्रं स्वकर्मानुष्ठितानामेषा विद्या ज्ञानमपवर्गफलत्वेन श्रूयते । तेषां राज्ञां रहस्यमेतत्' इति पृ-१४९ ।

२. अत्र 'राज्ञी' इति स्थाने 'राजा' इति भावदीपकृत्सूचितपाठान्तरम् ।

### भावदीपः

**राज्ञी चासाविति** ।। तत्र 'स्त्रियाः पुंवद्भाषितपुंस्कात्'[१] (पा.सू.६.३.३४) इति पुंवद्भाव इति भावः ।। [२]**क्वचित् राजा चासौ विद्या च इति पाठः** । किल तत्र स्त्रीत्वमविवक्षितम् । किन्तु प्राधान्यमेव विवक्षितम् । अतो न स्त्रीप्रत्ययः । **'टापं चैव हलन्तानाम्'** इत्युक्तेः । राजन्शब्दाद् अच्प्रत्यये टिलोपे 'राजा' इति रूपम् । 'राजा चासौ विद्या च' इति विग्रहे समासे च पुंवद्भावे राजविद्येति साध्विति ।। राट्शब्दात् हलन्ताद्वा इति टापि कृते राजा चासाविति विग्रहेन 'ङ्यापोः सञ्ज्ञाछन्दसोः बहुलम्' (पा.सू.६.३.६३) इति बहुलग्रहणाद् ह्रस्वत्वे राजविद्येति साध्विति ज्ञेयम् ।। **लेखकदोषमूलोऽयं क्वचित्[३] पाठः इत्येके** ।।

### ( प्रत्यक्षावगमशब्दे समासविचारः )

**भाष्यम् — प्रत्यक्षं ब्रह्मावगम्यते येन तत् प्रत्यक्षावगमम् । अक्षेष्विन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षः ।।**

### प्रमेयदीपिका

'प्रत्यक्षेणावगमो यस्य' इति [४]व्याख्यानमसत् । भगवन्माहात्म्यस्य शास्त्रैक-समधिगम्यत्वात् । अद्वैतोद्धारस्य च प्रमाणविरुद्धत्वादिति भावेनाऽऽह– **प्रत्यक्षमिति** ।। शास्त्रैकवेद्यं ब्रह्म कथं प्रत्यक्षम्? इत्यत आह–**अक्षेष्विति** ।। **प्रत्यक्षः** परमात्मा । प्रादिसमासोऽयं नाव्ययीभाव इति ज्ञापनाय नपुंसके प्रकृतेऽपि पुल्लिङ्गनिर्देशः । अन्यथा षष्ठी न श्रूयेत[५]।।

### भावदीपः

नन्वहंधीविषयप्रत्यगात्मन एव ब्रह्मत्वादस्ति तस्यापि प्रत्यक्षगम्यता इत्यत आह– **अद्वैतोद्धारस्येति** ।। अद्वैतोक्तेरित्यर्थः ।। **प्रमाणेति** ।। साक्षिप्रत्यक्षादिप्रमाणेत्यर्थः ।। 'ब्रह्म' इत्यस्यानन्वयाद् विशेष्याकाङ्क्षां पूरयति– **परमात्मेति** ।।

१. **'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु'** इति पूर्णपाठः ।
२. कृ.टि.,श्री ।
३. क्वचित्कः पाठः इति सो मातृकायाम् ।
४. शाङ्करभाष्यम् । पृ-१३१.भाग-२ । **'प्रत्यक्षेण सुखादेरिवावगमः यस्य'** इति तद्भाष्यपाठः ।
५. **वि.त.नि.टीकायाम्** 'अनेन प्रादिसमासोयमित्युक्तं भवति । अव्ययीभावत्वे हि **'प्रत्यक्षस्येति षष्ठी न श्रूयेत'** इति पृ-४२३(मा.रा.सं.स)। व्याकरणविचारः श्रीनि, पां.टिप्पण्यां च विस्तृतः तत्रैवानुसन्धेयः।।

**प्रादिसमासोऽयमिति** ।। 'कुगतिप्रादयः' (पा.सू.२.२.१८) इति सूत्रे 'कुशब्दो गतिसञ्ज्ञकाः प्रादयश्च समर्थेन समस्यन्ते' इति द्वितीयाध्यायोक्तेः प्राद्युपसर्गेषु पठितप्रतिशब्दस्याक्षपदेन तत्पुरुषसमासो नतु 'अक्षं प्रति प्रत्यक्षम्' इत्यव्ययीभावः । अव्ययीभावत्वे 'प्रत्यक्षम्' इत्येव निर्दिशेत् । 'अव्ययीभावश्च'(पा.सू.२.४.१८)[1] इति सूत्रे 'अव्ययीभावो नपुंसकं स्यात्' इत्युक्तेरिति भावः । अव्ययीभाव एव कुतो नाश्रितो भाष्यकृता? इत्यत आह– **अन्यथेति** ।। अव्ययीभावत्वे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' (पा.सू.२.४.८३) इति सूत्रेण विभक्तीनाम् सुपो अम्भावे, 'जगत्सत्यत्वग्राहिप्रत्यक्षस्य'[2] इत्यादिनिर्देशो भगवत्पादीयप्रमाणलक्षणादावनुपपन्नः स्यादिति भाव इत्येके ।।

प्राज्ञास्तु 'प्रत्यक्षावगमः' इत्यत्र षष्ठीसमासो नान्यः ।। अवगम्यते अनेनेति अवगमम्, प्रत्यक्षस्य अवगममिति षष्ठी न श्रूयत इत्यर्थः' इत्याहुः ।।

**भाष्यम् — तथा च श्रुतिः -**

**'यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरम् ।**
**यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः'**

**'यो वाचि तिष्ठन्' 'यः चक्षुषि तिष्ठन्'[3]** (बृ.उ.५.७.१६...) **इत्यादिः ।**
**'य एषोऽन्तरक्षिणि पुरुषो दृश्यते'** (छां. उ.१.७-५) **इति च ।**

१. वै.सि.कौ.भाग-२. अयं नपुंसकं स्यात् इति वृत्तिः दृश्यते ।

२. 'मानसिद्धत्वादिति सप्रतिसाधितत्वाच्च' इति प्रमाणलक्षणव्याख्या (उत्तरादि.मठ-पृ.३८८)

३. (अ) ब्र.सू.भाष्यम्(२.४.१५)'यज्ज्योतिरायधिष्टानं ब्रह्म तदेवैतैः करणैः प्रवर्तयति ।'यःप्राणे तिष्ठन्' इत्यादि तदामननात्' ।।

त.प्रका.-सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वश्रुतेः 'यश्चक्षुषि तिष्ठन्'इत्यादेर्ग्रहः ।।

भावदीपे- यद्यपि 'यः प्राणे तिष्ठन्' इति श्रुतः,'यो वाचि तिष्ठन्' 'यश्चक्षुषि तिष्ठन्' इत्यादि चेन्द्रियप्रायपाठात् प्राणपरः, माध्यन्दिनानां तथा पाठाच्च । तथाऽपि 'चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते' इति श्रुतेः प्राणेन्द्रियप्रधानदेवताया मुख्यवायोरपि प्राणपदेन ग्रहणादधिकार्थलाभाय 'मुख्यप्राणप्रेरकत्वश्रुतेः' इत्युक्तम् ।।

(आ) बृ.उ-रा.खण्डार्थे - प्राणे प्राणमानिनि । तिष्ठन् तत्र प्रविष्टतया तत्स्थः । यमयति नियमयति तदीयधर्माणां स्वरूपसत्तायाश्च स्वामीति यावत् । एषः यच्छब्दपश्चकेन निर्दिष्टः, ते तव, उद्दालकस्य, आत्मा स्वामी ,अमृतो नित्यो अनन्तर्यामी अन्तः स्वतन्त्रः सन् नियामनकर्तेत्यर्थः ।'एष ते' इत्युक्तजीवेश-भेदज्ञापनाय आत्मपदस्य स्वूपार्थत्वे अत इति षष्ठ्या औपचारिकत्वापातात् ।।

वेदीशीये 'प्राणे घ्राणाभिमानिदेवतायाम् । एवं वागादिशब्देनापितदभिमानिदेवताः ग्राह्याः' ।।

'अङ्गुष्ठमात्रः पुरुषः अङ्गुष्ठं च समाश्रितः'[१] (म.ना.उ.७१.)

इति च[२] ।

'त्वं मनः, त्वं चन्द्रमाः, (त्वं चक्षुराज्यम्)त्वं चक्षुरादित्यः'[३]

(म.भा.१२.३३८.९८,१००) इत्यादेश्च मोक्षधर्मे ।।

### प्रमेयदीपिका

परमात्मनोऽक्षेषु स्थितत्वे किं मानम्? इत्यत आह– **तथाचेति** ।। **प्राण** इति प्राणाभिमानिनी देवतोच्यते । **प्राणादन्तरः** भिन्नः । **अङ्गुष्ठेति** कर्मेन्द्रियाधिष्ठातृत्वमुच्यते । **मन** इत्यादेः मनआदिस्थ इत्यर्थः ।।

### भावदीपः

'यं प्राणो न वेद' इति वाक्यं शेषोक्तिसार्थक्यायाह– **प्राण इतीति ।।** प्राणादेः जडत्वेन 'वेद' इत्यस्य अप्रसक्तनिषेधतापत्तेः **'अधिदैवादिषु'**[४] इति सूत्रकृता दैवपदोक्तेश्चेति भावः ।

---

१. 'ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' इति पूर्णो मन्त्रः । मन्त्रार्थस्तु -'अङ्गुष्ठपरिमितः पुरुषः परमात्मा अङ्गुष्ठं चशब्दात् परिमितहृदयाकाशं श्रितः हृत्पद्मगत इत्यर्थः । सर्वस्य जगतः समस्तप्रपञ्चस्येशः स्वामी विश्वभुक् सर्वभोक्ता । 'अङ्गुष्ठमात्रः पुरुषः मध्य आत्मनि तिष्ठति' इति श्रुतिसमाख्यानात् ' इति धीरेन्द्रीये ।।

२. **ब्र.सू.भाष्यदीपिकाया** 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' (महाना.१६.३) इति श्रुत्यन्तरे 'अङ्गुष्ठमात्रः पुरुषः' इति कठवल्यां च 'अङ्गुष्ठमात्रः पुरुषः' इत्यपरत्र चाङ्गुष्ठपरिमितत्वोक्तेः 'अङ्गुष्ठाग्रप्रमाणकः' इति क्वचिदङ्गुष्ठाग्रप्रमाणकत्वोक्तेर्विरोध इति चोद्यं परिहृतं भवति । देहे हृदयाकाशे प्रादेशपरिमितिरूपविशेषस्य हृदयगतकमलकर्णिकामूलगताकाशेऽङ्गुष्ठाग्रप्रमाणकरूपान्तरस्य कर्णिकाग्रगताकाशे चाङ्गुष्ठपरिमितरूपान्तरस्य च व्यक्तिसम्भवात्, तत्तत्स्थानधर्मस्य स्थानिन्युपचरितत्वसम्भवाच्च । यथोक्तं बृहदारण्यकभाष्ये –'हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः । जीवानां स्थानमुद्दिष्टः सर्वदैव सनातनः ।। हृत्कर्णिकामूलगतः सोऽङ्गुष्ठाग्रप्रमाणकः । मूलेश इति नामास्मिन् सर्वे जीवाः प्रतिष्ठिताः ।। अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ । प्रविशन्ति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा ।।' इति ।। अस्मिन् मूलेशव्यापिनोर्मध्येऽङ्गुष्ठमात्रत्वं च देहे देहाङ्गुष्ठमितत्वं जीवहृदि जीवाङ्गुष्ठमितत्वमिति विवेक्तव्यम् । अत्र 'अङ्गुष्ठं च समाश्रितः' इत्यनेन कर्मेन्द्रियाधिष्ठितत्वमुच्यत इति प्रमेयदीपोक्तमपि ज्ञातव्यम् ।।

३. अत्र प्रचलितभाष्यपाठः चक्षुरादित्यः इति । परंतु महाभारते इतः परमव्यवहितोत्तरभागे त्वं सूर्यः इति पठ्यते । अतः चक्षुराज्यमिति पाठः साधुरिति भाति ।। 'चक्षुराज्यं अवेक्षणेन संस्कृतं यज्ञियं सर्पिः 'इति नीलकण्ठः ।।

४. ॐ अन्तर्याम्यधिदेवादिषु तद्धर्मव्यपदेशात्' ब्र.सू.३.१.५.१ इति पूर्णपाठः ।

एतेन वागादिकमप्यभिमानिदेवतापरं प्रायपाठाज्ज्ञातव्यमित्युक्तं भवति ।।

( प्रत्यक्षशब्दार्थः परमात्मा )

**भाष्यम् —** 'स प्रत्यक्षः प्रति प्रति हि सोऽक्षेष्वक्षवान्

भवति य एवं विद्वान् प्रत्यक्षं वेद'

इति सामवेदे ब्राभ्रव्यशाखायाम् ।

[१]धर्मो भगवान् । तद्विषयं धर्म्यम् । सर्वं जगद्धत्त इति धर्मः ।

'पृथिवी धर्ममूर्धनि'[२]

इति च प्रयोगात् मोक्षधर्मे ।

'भारभृत् कथितो योगी'[३](म.भा.१३.१४९.१०६.वि.स.ना) इति च ।

'भर्ता सन् भ्रीयमाणो बिभर्ति'[४](तै.आ. ३.१४) इति च श्रुतिः ।

१. (अ)'यदा ह्यधर्मेण तमोधिका नृपाः जीवन्ति तत्रैष हि सात्वतः किल ।
धर्मं भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे' इति भाग.(१.१०.२६)
'धारकत्वाद्धर्मरूपः' भाग.१.१०.२६ इति भागवततात्पर्ये ,
'वराहमत्स्यादिरूपस्य भूम्युद्धारकर्मणा धर्माख्या' इति विजयध्वजतीर्थाः ।।
(आ) 'धर्मस्य कारणात्' इति भाग.१.११.२६. 'धर्मस्य -भगवतः' इति विजयध्वजतीर्थाः ।
(इ)'धारणाद्धर्मो भगवान्' शब्दनिर्णयवचनम् (भाग.ता.३.१७.२२);
(ई) काठकभाष्ये-१.१.२८ धारकत्वाद् धर्मो भगवान् ।
(उ)'धारणाद्धर्म इत्यपि । उपासते सदा मुक्ताः परानन्दैकभोगिनः' ११.१०.३४ भा.ता.उ.तन्त्रभाग.व.।
(ऊ) 'त्वां ब्रह्म केचिदवयन्त्युत धर्ममेके' भाग.८.११.८ 'एके स्मार्ताः धारकत्वाद्धर्मं वदन्ति' विजयध्वजतीर्थाः।।

२. -काठकभाष्यवेदेशीये इदं वाक्यमुदाहृतम् १.१.२८ ।

३. 'भारं भारभूतं ब्रह्माण्डं कूर्मरूपेण बिभर्तीति भारभृत् । 'बिभर्त्यण्डंहरिः कूर्मस्त्वण्डे चाप्युदकं महत्' इति बृहद्भाष्योक्तेः । कथितः= सदागमैः प्रतिपादितः । योगी उपायवान्' इति सत्यसन्धतीर्थाः।

४. श्रीनि.टि.अनुगुणः । भ्रियमाण इति पाठान्तरम् ।
ब्र.सू.भाष्ये १.३.१०पूर्णो मन्त्र उदाहृतः । 'एको देवो बहुधा निविष्टः । यदा भारं तन्द्रयते सभर्तु परास्य भारं पुनरस्तमेति' इति शेषभागः। टीका-'एको देवो भर्तृत्वेन बहुधा निविष्टो जगता भ्रियमाणस्तद्बिभर्ति । सच यदा तं भारं भर्तु नेच्छति तदासौ नश्यतीत्यर्थः' इति ।।

**'धर्मो वेदमग्र आसीन्न पृथिवी न वायुर्नाकाशो**
**न ब्रह्मा न रुद्रो न देवा[१] न ऋषयः सोऽध्यायत्'[२]**
**इति च सामवेदे बाभ्रव्यशाखायाम् ।। २ ।।**

### प्रमेयदीपिका

प्रत्यक्षशब्दस्यायमर्थ इत्यत्र श्रुतिमाह– **स** इति ।। **प्रति** स्थितः । **अक्षवान्** प्रशस्तेन्द्रियः । **यः विद्वान् एवं** प्रत्यक्षशब्दार्थं **वेद** ।। धर्मादनपेतं धर्म्यमिति निर्वचनेऽपि न प्रसिद्धधर्माविरुद्धत्वमर्थः । निवृत्तधर्मस्य ब्रह्मज्ञानाविरुद्धतायाः प्रसिद्धत्वात् । प्रवृत्तिलक्षणस्य तु तद्विरुद्धत्वादिति भावेनाऽह– **धर्म** इति ।। तस्मादनपेतमित्यर्थः–**तद्विषय**मिति । कथं भगवान् धर्मः? इत्यत आह– **सर्व**मिति ।। धृञो मनूप्रत्यय औणादिकः ।।

धारके धर्मशब्दप्रवृत्तिः कुतः? इत्यत आह– **पृथिवी**ति ।। पर्वतोपरीत्यर्थः । भगवतः सर्वाधारकत्वे किं मानम्? इत्यत आह– **भारभृ**दिति ।। **सर्वत्र स्थितो** भगवान् **सर्वेण** ध्रियते । स कथं सर्वस्य धारकः? इत्यत आह– **भर्ते**ति ।। **भर्ता** सन्नेव **ध्रियमाणः** । न स्वकीयस्थित्यै । धर्मशब्दस्य भगवद्वाचित्वं कुतः? इत्यत आह– **धर्मो** वेति ।। [३]**इदमग्रे** अस्याग्रे । अत्र पुण्यं धर्मः किं न स्यात्? इति शङ्कानिरासार्थं '**सोऽध्यायत्**' इति वाक्यशेषोदाहरणम् ।। २ ।।

### भावदीपः

'अक्षेषु प्रति' इत्यन्वयमभिप्रेत्य शेषमाह– **स्थित इति** ।। प्रशंसायां मतुप् इत्युपेत्याह– **प्रशस्तेति** ।। अपौनरुक्त्यर्थं 'विद्वान्' इत्यनुवाद इति भावेनाऽह– **विद्वानिति** ।। व्याख्यानान्तरं निन्दन्नवतारयति– **धर्मादिति** ।। **प्रसिद्धत्वादिति** ।। प्रसिद्धस्य

---

भावदीपः-'भर्ता सन्नित्यस्यार्थो- भर्तृत्वेनेति । ध्रियमाणो बिभर्तीत्युक्त्या प्राप्तं जगदीश्वरयोराधाराधेयभावसाम्यं निराकर्तुं 'यदा..मेति' इति शेषार्थमाह- सचेति' ।।

१. बे । वे-ग्रं 'न देवाः' इति नास्ति।

२. मा ।' सामवेदशाखायाम्' इति बे ।

३. (अ)'इदमग्रे' अस्याग्रे इति षष्ठ्यर्थे द्वितीया (बृ.उ.भा ३.९.४) ।

(आ)-'इदम्'अस्येत्यर्थः -त.प्रका.२.३.६ ।

(इ) इदमग्रे अस्य जगतो अग्रे' इति वि.त.नि.२-परिच्छेददीका ।

अवक्तव्यत्वान्नायं तस्यार्थ इति भावः । 'धृञो मन्'[१] इति 'धृञ् धारणे' **(धा.धा.९००)** इत्यतो मनुप्रत्यये 'सार्वधातुकार्धधातुकयोः' **(पा.सू.७.३.८४)** इति गुणे रपरत्वे च धर्म इति सिद्धेरिति भावः । '**धर्ममूर्धनि**' इत्यत्र धर्मस्य धारकस्य पर्वतस्यैवेत्यर्थमुपेत्य आह– **पर्वतोपरीत्यर्थ** इति ।। २ ।।

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ।। ३ ।।**

( भगवज्ज्ञानस्वरूपनिरूपणम् )

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।। ४ ।।**

**भाष्यम्** — प्रत्यक्षावगमशब्देनापरोक्षज्ञानसाधनत्वमुक्तम् । तज्ज्ञानाद्याह– **मयेति** ।। तर्हि किमिति न दृश्यते ? इत्यत आह– **अव्यक्तमूर्तिनेति** ।। ४ ।।

**प्रमेयदीपिका**

एवंतर्हि पुनरुक्तिः स्यात् । 'ब्रह्मविषयं ज्ञानम्' इत्यस्य 'ब्रह्मावगम्यते विषयीक्रियत अनेन ज्ञानेन' इत्यस्य च भेदाभावादित्यत आह– **प्रत्यक्षेति** ।। नावगमशब्देन विषयीकरणमुच्यते । किन्त्ववगतिसाधनत्वम् । नच ज्ञानस्य तद्विरुद्धम् । परोक्षज्ञानस्यापरोक्षज्ञानसाधनत्वोपपत्तेरिति भावः । '**ज्ञानं विज्ञानसहितं प्रवक्ष्यामि**'(९.१) इति प्रतिज्ञाय **यज्ज्ञात्वा** इत्यादिना तत्प्रशंसादिकमुक्तम् । अतो **मया ततम्** इत्यादिकमपि किं तथाभूतमेव किञ्चित्? उत प्रतिज्ञातमुच्यते? इति शङ्कायामाह– **तदिति** ।। प्रतिज्ञातमित्यर्थः । यस्य अपरोक्षज्ञानसाधनत्वमुक्तं तदिति वा । कृत्स्नाध्यायप्रतिपाद्योक्तिरियम् । विशेषणवैयर्थ्यमाशङ्क्याह– **तर्हीति** ।। सर्वव्यापी चेदित्यर्थः । **न दृश्यते**'सर्वत्र' इति शेषः ।। ४ ।।

**भावदीपः**

**एवं तर्हीति** ।। प्रत्यक्षावगमधर्म्यपदयोः भाष्योक्तव्याख्यानपक्षे न पुनरुक्तिः धर्म्य-पदस्य

---

१. **'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिसनिनीभ्यो मन्' इति १.१४० उणादिसूत्रम् ।।**

प्रत्यक्षावगमशब्देनेत्यर्थः । क्रमेण द्वयोरैकार्थ्यं व्यनक्ति[१]– **ब्रह्म इत्यादिना** ।। तथाभूत-**मेवेति** ।। प्रशंसाभूतमेवेत्यर्थः । यच्छब्दाध्याहारेण भाष्यं योजयति– **यस्येति** ।। आदिपदोक्तेराह[२]– **कृत्स्नेति** ।। **विशेषणेति** ।। गीतायाम् **'अव्यक्तमूर्तिना'** इति विशेषणेत्यर्थः ।। ४ ।।

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**

**भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः[३] ।। ५ ।।**

**भाष्यम्** — मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह– **न चेति** ।।

'न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च'[४]

(म.भा.१२.३३९.२१) इति हि मोक्षधर्मे ।

[५]'सञ्ज्ञासञ्ज्ञः' (म.भा.१२.३३८.४७) इति च ।

**ममाऽऽत्मा** देह एव **भूतभावनः** ।

'महाविभूते[६] माहात्म्यशरीर' ( म.भा.१२.३३८.१७४,१७५)

इति हि मोक्षधर्मे ।। ५ ।।

**प्रमेयदीपिका**

( 'मत्स्थानि' 'नच मत्स्थानि' इत्यनयोर्न विरोधः )

**'मत्स्थानि सर्वभूतानि'**(९.४) इत्युक्त्वा पुनः कथं **'नच मत्स्थानि'** इति व्याहतमुच्यते? इत्यत आह– **मत्स्थत्वेऽपीति** ।। **स्पृष्ट्वेति** ।। स्पर्शनेन्द्रियेण तां ज्ञात्वा

---

१. अयं सो पाठ एव ।

२. सो मातृकायां 'तत्कारणत्वमर्थ..कृत्स्न इति'अनन्वितं वाक्यमेकं विद्यते ।

३. 'भूतकृद् भूतभृद्भावो भूतात्मा भूतभावनः' इति वि.स.नामसु ।

४. 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इति म.ना.उ.११. ।
'न चक्षुषा पश्यति नापि वाचा' इति च ।

५. 'संज्ञा यमपत्नी, तन्नामक' इति नीलकण्ठः ।

६. (अ)विभूतेः इति मुद्रितपाठः भावरत्नकोशाननुगुणः । सम्बोधनरूपत्वात् विसर्गान्तत्वमनुपपन्नम्।।
(आ) 'महती वियदादिसृष्टिरूपा विभूतिरस्य । माहात्म्ययुक्तं विराडाख्यं शरीरमस्य' इति नीलकण्ठः ।

अन्योन्यधर्मसङ्क्रान्तिमासाद्य चेत्यर्थः । परमेश्वरस्य स्पर्शनाद्य[1]वेद्यत्वे प्रमाणमाह– **नेति**।। सञ्ज्ञया शब्देनैव सञ्ज्ञा सम्यज्ज्ञानं यस्यासौ तथोक्तः । **मत्स्थानि** इत्यादेरुक्तत्वाद् [2]भूतभृत्त्वादिकं पुनरुक्तमित्यत आह– **ममेति** ।। प्राग् भूताधारत्वादिकं स्वस्योक्तम् । अत्र पुनः **अव्यक्तमूर्तिना** इति मूर्तावुक्तायां साऽस्मदादीनामिव भिन्नेति भ्रान्तिनिरासार्थं स्वलक्षणं स्वदेहस्योच्यत इत्यर्थः । भूतभावनत्वस्याधिकस्योक्तेश्च न पुनरुक्तिरिति भावेनोक्तम् – **भूतेति** ।। स्यादिदं[3] व्याख्यानं यदि भगवद्देहस्येदं [4]भवेत् । तदेव कुतः? इत्यत आह– **महाविभूते** इति ।। माहात्म्यमेव शरीरं यस्यासौ तथोक्तः ।। ५ ।।

### भावदीपः

'यथा आकाश' इत्यग्रेतनदृष्टान्तानुरोधेनाऽह[5]– **अन्योन्येति** ।। औष्ण्यशैत्यादिधर्म-सम्बन्धमित्यर्थः ।। **स्वलक्षणमिति** ।। स्वकीयमसाधारणधर्ममित्यर्थः ।। ५ ।।

**यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।[6]**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ।। ६ ।।**

**भाष्यम् — 'मत्स्थानि', 'नच मत्स्थानि' इत्यत्र दृष्टान्तमाह– यथाऽऽकाश-स्थित इति ।। न हि आकाशस्थितो वायुः स्पर्शाद्याप्नोति ।। ६ ।।**

### प्रमेयदीपिका

एकमेकत्राश्रितमित्यत्रासम्भावनाऽभावात् किं [7]तद्दृष्टान्तत्वोक्त्या? इत्यत आह–

१. आदिशब्दः वे-ग्रं नास्ति ।
२. भूतभृत् इत्यादिकम् इति मातृकायाम् ।
३. 'स्यादेवम्' इति मातृका ।
४. 'सम्भवेत् -इति मातृकाद्वये ।
५ 'अनुरोधादाह' इति सो मातृकायाम् ।
६. (अ) भाग.ता.(४.१.५६.) प्रकाशिकायां -'वायोर्गगनाश्रितत्ववदिदं विष्ण्वाश्रितमित्यत्र प्रमाणं पठति– यथेति' । 'यथाऽऽकाशस्थितो नित्यमित्यादि च' (भाग.तात्पर्यवाक्यम् )।।
(आ) न्यायामृते प्रतिकर्मव्यवस्थाभङ्गे -'असङ्गो ह्ययम्'इ ति श्रुतिरीश्वरस्य तत्कृतलेपाभावपरा । 'स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति' इति पूर्ववाक्यात् । 'यथाऽकाशस्थितो नित्यं वायुस्सर्वत्रगो महान्' इत्यादिस्मृतेश्च ।।
७. बे,वे-ग्रं,मा 'तद्' इति नास्ति ।

**मत्स्थानीति** ।। तत्र स्थितत्वेऽप्यन्योन्यधर्मासङ्क्रान्त्यादावित्यर्थः । तदत्र न प्रतीयत इत्यतो व्याचष्टे– **न हीति** ।। **स्पर्शादीति** तद्धर्मोपलक्षणम् ।। ६ ।।

**भावदीपः**

'इत्यत्र' इत्यन्तस्य तात्पर्यार्थमाह[१]– **तत्र स्थितत्वेऽपीत्यादि** ।। **तदिति** ।। अन्योन्य-धर्मसङ्क्रान्त्यादौ दृष्टान्तत्वमित्यर्थः ।। ६ ।।

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ।। ७ ।।**

**भाष्यम् —** ज्ञानप्रदर्शनार्थं प्रलयादि प्रपञ्चयति– **सर्वभूतानीत्यादिना** ।। ७ ।।

**प्रमेयदीपिका**

यथा **'मया ततम्'**(९.४) इत्याद्युक्तोपपादनार्थान्युत्तरवाक्यानि न तथा **सर्वभूतानि** इत्यादि[२] । किन्तु स्वतन्त्रमेव ज्ञानप्रतिपादकमिति भावेनाऽह– **ज्ञानेति** ।। **प्रलयादीति** ।। तत्कारणत्वम् । **'प्रकृतिं स्वामवष्टभ्य'** इति वचनात्[३] ।। ७ ।।

**भावदीपः**

आदिपदार्थमाह– तत्कारणत्वमिति ।। ७ ।।

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**[४]
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।। ८ ।।**

( भगवतः प्रकृत्यष्टम्भः लीलया )

**भाष्यम् — प्रकृत्यवष्टम्भस्तु यथा कश्चित् समर्थोऽपि पादेन गन्तुं लीलया दण्डमवष्टभ्य गच्छति ।**

---

१. अर्थशब्दः सो मातृकायां न पठ्यते ।
२. इत्यादि वे-ग्रं.। इत्यादिकम्-इति गुज ।
३. इयं पङ्क्तिः ७श्लोकसम्बन्धितया गुज-पुस्तके प्रदर्शिता ।
४. अयमर्धः-ब्र.सू.भा. २.१-.१७ तत्वप्रकाशिकायां विषयवाक्यतयोक्तः ।

'सर्वभूतगुणैर्युक्तं नैव त्वं ज्ञातुमर्हसि' [1](म.भा.१२.३३९.४६)

इति मोक्षधर्मे[2] ।

'सर्वभूतगुणैर्युक्तं दैवं मां ज्ञातुमर्हसि' इति च ।

'विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम् ।

प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति' इति च ।।[3]

'न कुत्रचिच्छक्तिरनन्तरूपा विहन्यते तस्य महेश्वरस्य ।

तथाऽपि मायामधिरुह्य देवः प्रवर्तते सृष्टिविलापनेषु'

इति ऋग्वेदखिलेषु ।

'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'[4](भाग.६.४.४८)

इति भागवते ।

'अथ कस्मादुच्यते परं ब्रह्मेति । वृहति बृंहयति'[5]

इति च आथर्वणे ।

'पराऽस्य शक्तिर्विविधैव श्रूयते' (श्वे.उ.६.८) इति च ।

## प्रमेयदीपिका

तद्विकलस्य भगवतो न सामर्थ्यमिति प्रतीतिनिरासार्थमाह– प्रकृतीति ।। 'तथा

---

१ भीष्मवचनं नारदं प्रति ।

२ मातृकायामत्रैव 'मोक्षधर्मे' इति । हंसपादेन चिह्नितम् । उत्तरत्र वे, वे-ग्रं पुस्तकेषु ।।

३ 'विदित्वा सर्वसूक्ष्माणि षडङ्गं च महेश्वरम् ।
प्रधानगुणतत्त्वज्ञः परं ब्रह्माधिगच्छति' इति अत्रिसंहितायां पाठो दृश्यते ।

४. द्वितीयाध्याये व्याख्यातोयं श्लोकः ।

५. (अ) ब्र.सू.भा २.३.६ उदाहृता । 'अथ' इति प्रश्नार्थः । परं वस्तु ब्रह्मेति कस्मान्निमित्तादुच्यत इति । 'वृहति वृंहयति' इत्युत्तरम् । स्वयं वर्धते पूर्णं भवति, यथायोग्यं वर्धयति,पूरयति चान्यान् । तस्मात् प्रवृत्तिनिमित्तसद्भावाद्ब्रह्मेत्युच्यते इति श्रुत्यर्थः । आथर्वणीयं श्रुतिः ।। ब्र.सू.भा.दीपिका ।।

(आ) 'तद्वा एतद्ब्रह्माहुर्वृहति वृंहयति चेति' ब्र.सू.भा २.३.९ उदाहृतश्रुत्यन्तरम् ।।

(इ) 'अथ कस्मादुच्यते ब्रह्मेति । वृहत्वात्, वृंहणाच (वृंहितत्वाच )' इति ब्र.सू.भा २.४.२१ उदाहृता आग्निवेश्यश्रुतिः ।।

(ई)'बृंहति वृंहयति च तस्मादुच्यते परं ब्रह्म' इति रामा.युद्ध,व्या.गोविन्दराजीये ।

लीलयैव, न तु केवलस्य सामर्थ्याभावात्' इति शेषः । कुत एतत्? भगवतः सर्वसामर्थ्य-सम्पूर्णत्वस्य प्रमितत्वाद् इत्याह– **सर्वेति** ।। सर्ववस्तुसामर्थ्यैः । **एवं** भूतवत् पारतन्त्र्याद्युपेतम् । किन्तु **दैवं** देवोत्तमम्[१]। पञ्च महाभूतानि महदहङ्कारौ च **सप्त सूक्ष्माणि** । 'सर्वज्ञता तृप्तिः'[२] इत्युक्तप्रकारेण षडङ्गम् । **प्रधानस्य** मूलप्रकृतेः **विनियोगः** कार्येषु यो व्यापारः । तत्स्थः तज्ज्ञानी । **मायामधिरुह्य** प्रकृतिमवष्टभ्य ।।

### भावदीपः

'**एवम्**' इत्यनुवादः,'**भूतवत्**' इत्यादि व्याख्या ।। **सर्वज्ञता तृप्तिरित्युक्तप्रकारेणेति** ।। [३]फलितार्थमाह– **तज्ज्ञानीति** ।। प्रधानविनियोगज्ञानीत्यर्थः ।।

**भाष्यम् — 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि'**

**(ऋ.२.२.२४.१),**

**'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप'[४]**

**(ऋ.७.९९.२) इत्यादेश्च ।**

**प्रकृतेर्वशादवशम् ।।**

**'त्वमेवैतत्सर्जने सर्वकर्मण्यप्यनन्तशक्तोऽपि स्वमाययैव ।**

**मायावशं चावशं लोकमेतत्तस्मात् स्रक्ष्यस्यत्सि पासीश विष्णो'**

**इति गौतमखिलेषु ।। ८ ।।**

### प्रमेयदीपिका

**कं** कः **प्रावोचं** प्रवोचत् । 'प्रकृतेर्वशात् विसृजामीति आविद्यकमेवेश्वरस्य कर्तृत्वम् । वस्तुतस्तु निष्क्रियत्वमित्युच्यते'इत्यन्यथाप्रतीतिनिरासाय अन्यथाऽन्वयमाह– **प्रकृते-रिति** ।। कुत एतत्? इत्यतः पूर्वोक्तार्थसहितेऽत्र प्रमाणमाह– **त्वमेवेति** ।। **एतत्सर्जने** एतस्य

---

१. देवतोत्तमम्-मा ।

२. 'सर्वज्ञता तृप्तिरनादिवोधः स्वतन्त्रता नित्यमनल्पशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः सन्तः षडङ्गानि वदन्ति विष्णोः'

३ 'तदर्थ' 'तस्यार्थ' इति मातृकयोः पाठभेदः ।

४. (ब्र.सू.भा.१.१.२)जन्माधिकरणटीकायां व्याख्यातेयं पूर्णा श्रुतिः- 'हे विष्णो देव ते महिम्नः परमन्तं सीमानं जायमानो न प्राप्नोति ,जातो नाप, जनिष्यमाणो नास्तीत्यर्थः' ।।

लोकस्य सृष्ट्याम् । अन्यस्मिन्नपि पालनादौ सर्वकर्मणि । **तस्मात्** मायावशत्वादेव अवशम् । **एतत्** एतम् । **स्रक्ष्यसि** सृजसि ।। ८ ।।

**भावदीपः**

'**कम्**' इत्यनुवादः, '**कः**' इति व्याख्या ।। **पूर्वोक्तार्थसहित इति** ।। 'प्रकृत्यवष्टम्भस्तु' इत्यादिनोक्तार्थसहित इत्यर्थः ।। **अत्र इति** ।। 'अर्थः' इत्यनुषङ्गः ।। अंशतोऽपौनरुक्त्याय आह– **अन्यस्मिन्नपि पालनादौ सर्वकर्मणीति** ।।। 'तस्मात्' इत्यस्यार्थोक्तिपूर्वकम् अन्वयमाह– **तस्मादिति** ।। **अस्ति** इत्यादिप्रायपाठादाह– **सृजसीति** ।। ८ ।।

**( भगवतः कर्मबन्धो न )**

**नच मां तानि कर्माणि निबध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ।। ९ ।।**

**भाष्यम् — उदासीनवत्** न तूदासीनः । तदर्थमाह– **असक्तमिति** ।।

'अवाक्यनादरः'[१] (छां.उ.३.४.१२)

इति श्रुतिः ।

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया'[२]

(भाग.२.१०.१२) इति भागवते ।

यस्यासत्त्यैव सर्वकर्मशक्तिः कुतस्तस्य सर्वकर्मबन्ध इति भावः ।

'न कर्मणा वर्धते नो कनीयान्' (बृ.उ.४.४.२३)

इति हि श्रुतिः ।

---

१ तत्त्वप्रकाशिकायामियं श्रुतिः 'न विद्यते आदरः आश्चर्यबुद्धिर्यस्येति नादरः' इति व्याख्यातम् ।।

२. (अ) अस्य श्लोकस्य संवादादि द्वितीयाध्याये द्रष्टव्यम् ।

(आ)न्यायसुधायाम्–१.१.१.(पृ-२६)- 'द्रव्यपदेन प्रकृत्यादितत्त्वमुच्यते । कर्मेति धर्माधर्मौ । स्वभावः प्रकृत्यादीनां परिणामादिः । जीव इत्यभिमानी । एवेति यदनुग्रहतः इत्यतः परं द्रष्टव्यम्' ।।

**यः कर्माणि नियामयति कथं च [1]तं कर्म बध्नाति ।। ९ ।।**

**प्रमेयदीपिका**

स्वतः कर्तृत्वे कथमुदासीनत्वमुच्यते? इति चेन्न । वतिना तस्य निषिद्धत्वादिति भावेनाऽह – **उदासीनवदिति** ।। अनुदासीनत्वेऽपि वतिर्व्यर्थः स्यात् । अन्यस्य तदर्थस्याभावादित्यत आह– **तदर्थमिति** ।। वत्यर्थं सादृश्यं स्वयमेव विवृणोतीत्यर्थः । परमेश्वरस्य कर्मसु सत्त्यभावे प्रमाणमाह– **अवाक्येति** ।। सर्वथोदासीन एवं किं न स्यात्? इति चेन्न । तथासति प्रकृत्या-दीनामसत्त्वप्रसङ्गादिति भावेनाऽह– **द्रव्यमिति** ।।

यदीश्वरस्य स्वतः कर्तृत्वं स्यात् तदा 'उदासीनम्' इत्येतत् **'नच[2] मां तानि कर्माणि निबध्नन्ति'** इत्यत्र कथं हेतुः स्यात्? इत्यत आह– **यस्येति** ।। **असत्त्या** अनादरेण । अनायासेनेति यावत् । भगवतोऽपि कर्म-बन्धोऽस्ति इति केषाञ्चित् प्रलापो यथा 'विष्णुर्येन' इत्यादि[3] । तन्निरासाय श्रुत्युपपत्ती प्राह– **न कर्मणेति** ।। **नियामयति** नियच्छति ।। ९ ।।

**भावदीपः**

**अवाक्येतीति** ।। तदर्थस्तु सप्तमाध्याय उक्त इति भावः[4]।। **यथा विष्णुर्येनेत्यादिरिति**।।

**'ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे**
**विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।**
**रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः**
**सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे'**

(भर्तृहरिः-नीतिशतके)

इत्याह इत्यर्थः । स्वार्थे णिजिति भावेनाऽह– **नियच्छतीति** ।। ९ ।।

**( भगवान् प्रकृतिप्रेरकः )**

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**

---

१. 'तं कर्म' इति स्थाने 'तत् तम्' इति (बे-मातृकायाम् )।

२. **'नतु' इति वे,वे-ग्रं पुस्तकेषु मूलाननुगुणः पाठः । 'नच' इति मातृका गीतानुगुणा ।**

३. **गुज-पुस्तके -'दशावतारगहने क्षिप्तो महासङ्कटे' इति टीकायां कंसान्तर्गततया अधिकं पठ्यते ।**

४. सप्तमाध्याये ५ श्लोके व्याख्यातेयं श्रुतिः ।।

**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

**भाष्यम् —** उदासीनवदिति चेत् स्वयमेव प्रकृतिः सूयत इत्यत आह– **मयेति** ॥ प्रकृतिसूतिद्रष्टा कर्ता अहमेवेत्यर्थः । तथा च श्रुतिः–

'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्'

(म.ना.उ.१.४)[1] इति ॥

## प्रमेयदीपिका

कथं तर्हि, 'अहं केवलं द्रष्टैव; प्रकृतिरेव चराचरं सूयते' इत्युत्तरवाक्यमित्यतः तन्निवर्त्याशङ्कां प्रदर्श्य व्याचष्टे– **उदासीनवदिति** ॥ भगवतोदासीनसादृश्यं स्वयमेव व्याख्यातम् । तदज्ञात्वा क्रियाऽभाव एवोक्त इति मत्वा शङ्कितम् । पुरा **'प्रकृतिं स्वामवष्टभ्य विसृजामि'**(९.८) इत्युक्तम् । इदानीं तु **'उदासीनवत्'**(९.९) इति निष्क्रियत्वमुच्यते ॥

एवं तर्हि प्रकृतिरेव सूयते । त्वयि तु तत्सन्निधानात् कर्तृत्वोपचारमात्रमित्यापन्नम् इति तन्निवृत्त्यर्थमिदं वाक्यम् । तत्र **'अध्यक्षेण'** इत्यनेन प्रकृतिसूतेः द्रष्टाऽहमेवेत्युच्यते । तृतीयया च तत्प्रयोजककर्ता चाहमेव । नतु तस्याः स्वातन्त्र्यमिति । दर्शनपूर्वकत्वात् प्रयोजकत्वस्य तदुक्तिः । अन्यथा तृतीया व्यर्था स्यादिति भावः । प्रकृतिप्रयोजकत्वं परमेश्वरस्य कुतः? इत्यत आह– **यत इति** ॥ **प्रसूता** सृष्टावभिमुखीभूता । **प्रसूती** प्रसूतिः । **तोयेन** कर्मणा । **व्यससर्ज** विससर्ज । बहुलग्रहणात् ॥ १० ॥

---

१. (अ)ब्र.सू.भाष्ये-१.१.१ उदाहृता ।

**भावदीपे-** 'जगतः प्रसूती' प्रसूतिः जनयित्री लक्ष्मीः 'यतः' यस्मात् 'प्रसूता' उत्पन्ना; यच्च वस्तु 'तोयेन' तत्तत्कर्मणा, स्ववीर्येण वा, तोयोपलक्षितैर्भूतैर्वा 'भूम्यां' पृथिव्यां पृथिव्यादिलोकेषु 'जीवान्' 'व्यससर्ज' विससर्ज विविधं ससर्ज' इति **तत्वनिर्णयटीकोक्तदिशा** भाष्यशेषस्यार्थो ज्ञेयः ॥

**(आ) वि.त.नि.द्वि.परिच्छेदटीकायां तत्वमञ्जर्याम्-**'व्यससर्ज स्वासृजत् । छन्दोभङ्गपरिहारार्थं ह्रस्वत्वम्। 'इन्द्रावरुणवामहम्' इतिवत्' इति ॥

**(इ)धीरेन्द्रीये-**'यतः परमपुरुषाद्धरेः प्रसूता पराधीनविशेषावाप्तिरूपोत्पत्तिमती, जगतश्चेतनाचेतनात्मक प्रपञ्चस्य प्रसूती प्रसूतिः । सुपां सुलुगिति पूर्वसवर्णः । जनित्री । चिदचिद्रूपा प्रकृतिः, तोयेन तत्तत्कर्मणा स्ववीर्येण वा । तोयोपलक्षितस्वजन्यपञ्चमहाभूतैर्वा । भूम्यां तदुपलक्षिते सर्वत्रापि जीवान् प्राणिनः व्यससर्ज विविधं सुरनरतिर्यगादिभेदेन अससर्ज । अडागमश्छान्दसः । सृष्टवतीत्यर्थः ॥' इति

**भावदीपः**

शङ्कानुदयमाशङ्क्याज्ञानमूलतया तामुज्जीवयति– **भगवतेत्यादिना** ।। **व्याख्यातमिति** ।। असक्तपदेनेत्यर्थः ।। अधुना शङ्कापरभाष्यार्थमाह– **पुरेत्यादिना** ।। **इति शङ्कितमिति** इतिपदस्य पूर्वेणान्वयः ।। **इत्यनेनेति** ।। प्रातिपदिकेनेत्यर्थः ।।

**'मया'** इति तृतीययैव प्रयोजककर्तृत्वलाभात् 'तत्र अध्यक्षेण'[1]इति किमर्थम्? इत्यत आह– **दर्शनेति** ।। **अन्यथेति** ।। द्रष्टृत्वमात्रस्याभिमतत्वे[2] 'अहम्[3] अध्यक्ष' इत्येव ब्रूयादित्यर्थः ।। **बहुलग्रहणादिति** ।। षष्ठान्त्यपादे अडागम-तन्निषेधप्रकरणे 'बहुलं छन्दस्यमाङ्योगेऽपि' **(पा.सू.६.४.७५)** इति बहुलग्रहणं तु लुङ्, लङ्, लिङ्भ्योऽन्यत्रापि लकारे अडागम इत्यर्थः ।। [4]अडागमाभावमात्राभिप्राये 'छन्दस्यमाङ्योगेऽपि' इत्येव ब्रूयादित्यर्थः[5] ।। १० ।।

**(भगवदवज्ञानिनां गतिनिरूपणम्)**

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।[6]**
**परं भावमजानन्तो मम भूतमहेश्वरम् ।। ११ ।।[7]**

---

१. 'तदध्यक्षेण' इति मातृका ।
२. 'अभिमतत्वात्' इति मातृका ।
३. 'अहम्' इत्यधिकमनन्वितं का. मातृकायाम्।
४. 'अपवादमाह' इत्यधिकं का. मातृकायाम्।
५. 'दिति भावः' सो मातृकाययाम् ।
६. (अ)'आनन्दरूपं दृष्ट्वा अपि लोको भौतिकमेव तु ।
मन्यते विष्णुरूपं च अहो भ्रान्तिर्बहुस्थिता ।। स्कान्दे' (भा.ता.३.२.१३)।।
(आ)'मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकम् ।
तन्मन्यते भौतिकं तु ये गच्छन्त्यधरं तमः ।। ब्राह्मे' (भा.ता.३.३३.२८)।।
(इ)'पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः ।
तथा न योगिराद्धान्तो ज्ञानं देहं यतो हरेः ।।षाड्गुण्ये'(भाग.ता.४.२२.४१)तथा ४.८.२६ द्रष्टव्यः।।
(ई)'मानुषं मां विजानन्ति ये मूढाः पापबुद्धयः । ते अन्धे तमसि मज्जन्ति यतो नावर्तते पुनः'।। वराह.पु.चा.मा.२३.२९७ ।।
७. (अ)**कर्मनिर्णयटीकायाम्**- भगवद्भक्तिज्ञानवैराग्यपूर्वकं च कर्म कर्तव्यमित्यादिभाष्यव्याख्याने विवृतः । टीका - 'भावं-याथात्म्यम् । भूतमनादिम् । महान्तं गुणपूर्णम् । ईश्वरं च विश्वस्य' ।।
**राघवेन्द्रतीर्थीयम्**- 'भूतमहेश्वरमिति पदत्रयस्यार्थमाह -भूतमनादिमित्यादिना । भूतश्चासौ

**भाष्यम् — तर्हि केचित् कथं त्वामवजानन्ति । का च तेषां गतिः ? इत्यत आह– अवजानन्तीत्यादिना ।। मानुषीं तनुं मूढानां मानुषवत् प्रतीतां तनुम् । नतु [१]मानुषरूपाम् ।**

**उक्तं च मोक्षधर्मे [२] (म.भा.१२.३४७.११,१२,१३)–**

---

महांश्चासावीश्वरश्च इति विग्रह इति भावः ।। कस्येश्वर इत्यत उक्तम् -विश्वस्येति'।।

(आ)'मानुषीं मनुष्यसदृशीम्'२.३.५१ **न्यायसुधा**-(पृ -४८९२); ।।

(इ) 'अवजानन्ति' इत्यनेन भगवदवज्ञादिलक्षणराक्षसादिस्वभाववतां कदापि पुरुषार्थावाप्तिर्नास्तीति कथ्यते । (**न्यायसुधा**-पृ-५१९०)।।

(ई) भागवततात्पर्ये ११-१४-२९,३०श्लोकव्याख्याने उदाहृतः । 'मानुषीं तनुमाश्रितमित्यवजानन्ति इत्युक्त्या तद्विषयमिथ्यात्वमतिरेव तदवज्ञा इत्युक्तं भवति'। इति प्रमेयचन्द्रिका(भा.ता)टिप्पणी।

१. मनुष्य-वे-ग्रं,बे ।

२. **ब्र.सू.भाष्यदीपिकायाम्**-युधिष्ठिरं प्रति भीष्मवचनमेतत् । हे 'विशां' प्रजानाम् पते अस्मिन् 'लोके' जगति यत्किञ्चिज्जीवजातं देहवद्धं वर्तते, तदीश्वरवुद्धिजैः तन्निमित्तकैः पञ्चभिर्भूतैः 'आविष्टं' वद्धमित्यर्थः। एवं जीवानां भौतिकदेहसम्वन्धमुक्त्वा ईश्वरस्य तदसम्वन्ध उच्यते - ईश्वरो हीति ।। हिर्हेतौ, प्रसिद्धौ वा । हेतूनेवाऽह - महदिति ।। महच्च तद्भूतं च महद्भूतं भूतेभ्यो महदिति वा 'महत्' पूज्यम् अपरिच्छिन्नं 'भूतं' सदा स्थितं निर्विकारं वा । 'ईश्वरो हि जगत्स्रष्टा' इति गीताभाष्ये पठितम् । स चेश्वरो नान्यः, किन्तु 'नारायणः' मुक्ताश्रयो विष्णुः विशेषेण राजत इति 'विराट्' नित्याभिव्यक्त-रूपः । 'भूतान्तरात्मा' सर्वजीवान्तर्यामी 'वरदो' मोक्षदः । विज्ञेय इति कचित्पाठः । 'सगुणः' ऐश्वर्यादिगुणोपेतः 'निर्गुणः' सत्त्वादिगुणाकार्यदेहः । अपिचौ समुच्चये ।

पुनर्जीवस्वरूपमुच्यते– भूतेति ।। तस्येति शेषः । अस्य तमिति यावत् । नृपश्चासावतिशयित-सज्जनश्च, तस्य सम्बुद्धिः नृपसत्तमेति । हे नृपसत्तम भूतसम्वन्धाधीनप्रलयोपेतमकार्यत्वादव्यक्तशब्दितं जीवचैतन्यं तस्य नारायणस्य 'शुश्रूषुः' जिज्ञासुर्भवतीति जीवकर्तृकशुश्रूषां प्रति प्रकृतो नारायणः कर्मत्वेन सम्वद्ध्यत इति चन्द्रिकाकारः ।।

प्रमेयदीपिकायां तु - भूतप्रलयस्थानभूता श्रीः 'तस्य' प्रकृतस्य नारायणस्य शुश्रूषुः 'ये चाप्यक्षरमव्यक्तम्' इति स्मृतेरिति तत्त्वप्रदीपानुसारात् कृष्णस्य मानुषतनुत्वं कुतो नेत्यवतार्य शरीराणि हि भौतिकानि भवन्ति । भूतानि चेश्वरवुद्धिजानि तत्कथं तानि सम्वध्नीयुः । भूतानि प्रलीयन्ते यस्मिन् तदव्यक्तं तदभिमानिदेवता तस्य शुश्रूषुः लिङ्गव्यत्ययः छान्दस इति व्याख्यातम् । तत्र चन्द्रिकोक्तः टीकाभिप्रायः स्वरसः । ईश्वरस्य जीववैलक्षण्यप्रतिपादनार्थं प्रवृत्ते मोक्षधर्मवचने तस्यैव प्रतिपादनीयतया लक्ष्मीवैलक्षण्यप्रतिपादनस्येहासङ्गतत्वात् ।

तत्त्वप्रदीपप्रमेयदीपोक्तं त्विहानभिप्रेतमपि योजनान्तरमित्यभिप्रेत्योक्तं चन्द्रिकायां तत्त्वप्रदीपे योजनान्तरमुक्तमिति । इतीत्यस्य इति मोक्षधर्म इत्यन्वयः । उक्तेः न व्यभिचारासिद्धी इति वाक्यशेषः ।

'यत् किञ्चिदिह लोकेऽस्मिन् देहवद्धं विशाम्पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।।
ईश्वरो हि जगत्स्रष्टा[१] प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च ।
भूतप्रलयमव्यक्तं [२]शुश्रूषुर्नृपसत्तम' इति ।।

**प्रमेयदीपिका**

उत्तरवाक्यस्य सङ्गत्यप्रतीतेस्तामाह– **तर्हीति** ।। यदि त्वमेव जगतः सृष्टिस्थितिसंहाराणां कर्ता । कैश्चिदवज्ञानात् । तेषां चानर्थाभावादुक्तमसदिति शङ्काभिप्रायः 'मानुषीं तनुमाश्रितम्' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे– **मानुषीमिति** ।। भ्रान्त्यनुवाद एवायमिति भावः । कुतो न? इत्यत आह– **उक्तं चेति** ।। **चः** हेतौ । शरीराणि हि भौतिकानि भवन्ति । भूतानि चेश्वरस्य बुद्धिजानि । तत्कथं तानि बध्नीयुरित्यर्थः ।।

अत्रैव '**ईश्वरो हि**' इत्यादिनाऽन्ये हेतवोऽभिधीयन्ते । **विराट्** नित्याभिव्यक्तरूपः । **वरदः** मोक्षप्रदः । **सगुणः** स्वातन्त्र्यादिगुणवान् । भूतानि प्रलीयन्ते यस्मिन् तत् । **अव्यक्तं** तदभिमानिनी देवता । तस्य **शुश्रूषुः**[३] । लिङ्गव्यत्ययश्छान्दसः ।।

तथा च मोक्षधर्मे जीवानां भौतिकदेहसम्बन्धस्योक्तत्वादाद्यहेतोः भौतिकत्वविशेषणेन मत्स्यादौ व्यभिचारोऽपि निरस्तः । द्वितीयस्य च स्वांशिकर्मानिर्मितत्वविशेषणाद् दृष्टान्तेऽसिद्धिः परिहृतेति भावः । द्वितीयहेतौ च पक्षे भौतिकत्वविशेषितदेहसम्बन्धित्वरूपविशेष्याभावेन दृष्टान्ते स्वांशिकर्मानिर्मितत्व-रूपविशेषणाभावेन विशिष्टाभावरूपहेतुसत्त्वोपपादनाय नञ्द्वयप्रयोग इति ध्येयम् । न च 'ईश्वरो हि' इत्यादिनांऽशिनो नारायणस्यैव निर्गुणादिपदैः देहासम्बन्ध उक्तः, नांशानां मत्स्यादीनामिति कथं तत्र हेतुसिद्धिरिति वाच्यम् । 'यत्तद्दृशिवान् ब्रह्मा रूपं हयशिरोधरम्' इति हयग्रीवावतारप्रसङ्ग एवास्योक्त-त्वेनास्यावतारविषयत्वात् । नारायणशब्दस्तु अंशानां तदभेदाभिप्राय इति न तदनुपपत्तिः ।' ।।

१. महद्भूतं- विज्ञेयः- पां- ब्र,सू.भा ।
२. 'भूतप्रलयमत्यन्तं शृणुष्व'-इति पाठान्तरम् गुज -पुस्तके, महाभारते च ।
३. 'शुश्रूषुः 'तस्य' इति शेषः -ब्र.सू.भा.तत्वप्रकाशिका ।

**भावदीपः**- स्मृतौ यत्किञ्चिज्जीवजातं देहसम्बद्धं तत्सर्वम् ईश्वरबुद्धिजैः पञ्चभिर्भूतैराविष्टम् । भूतप्रलयं भूतसम्बन्धाधीनप्रलयोपेतम् अकार्यत्वादव्यक्तशब्दितमिति जीवानां देहसम्बन्धमुक्त्वा ईश्वरो हीत्यादिना अंशिनो नारायणस्यैव निर्गुणादिशब्दैर्देहसम्बन्धस्योक्तत्वादिति भावः।। शुश्रूषुस्तस्येति ।। देहबद्धं भूतप्रलयमव्यक्तं जीवजातं तस्य प्रकृतनारायणस्य शुश्रूषुः श्रोतुमिच्छावत् जिज्ञासु इति योजना । तत्त्वप्रदीपे तु भूतप्रलयस्थानभूताव्यक्तशब्दिता श्रीः नारायणस्य शुश्रूषुः ये चाप्यक्षरमव्यक्तमिति स्मृतेरिति

## भावदीपः

तर्हीत्यस्याकाङ्क्षितमाह– **यदीत्यादि** ।। अध्याहारेण योजनामाह– **तस्य शुश्रूषुरिति** ।। नञा निर्दिष्टस्यानित्यत्वात् उप्रत्यययोगेपि 'न लोकाव्ययनिष्ठा'(**पा.सू.२.३.६९**) इति षष्ठीनिषेधो नेत्यर्थः ।।

## (भगवदवताराणापि भौतिकशरीराभावः)

**भाष्यम् — अवतारप्रसङ्गे चैतदुक्तम् । अतो नावताराः पृथक् शङ्क्याः।**

**'रूपाण्यनेकान्यसृजत् प्रादुर्भावभवाय सः ।**
**वाराहं नारसिंहं च वामनं मानुषं तथा'।।**

**(म.भा.१२.३४९.३७) इति ।**

## प्रमेयदीपिका

[1]अस्त्वेतन्मूलरूपविषयम् । अवतारस्य तु कृष्णस्य मानुषत्वं भवत्वित्यत आह– **अवतारेति** ।। **'यत्तद्दृशिवान् ब्रह्मा रूपं हयशिरोधरम्'** इति हयग्रीवावतारप्रसङ्गेऽस्तु हयग्रीवस्यैवम् । कृष्णस्तु मानुषशरीर एव किं न स्यात्? इति चेन्न । युक्तिसाम्यात् ।।

विशेषप्रमाणाच्चेत्याह– **रूपाणीति** ।। **असृजत्** व्यभजत् । **प्रादुर्भावभवाय** उत्तरत्र । **सः** नारायणः । **मानुषं** कृष्णादिकम् ।।

---

प्रकारान्तरेण योजितमित्युक्तं चन्द्रिकायाम् ।।

नवमे प्रमेयदीपिकायां तु कृष्णस्य मानुषवपुष्ट्वं कुतो नेत्यत आह इत्यवतार्य शरीराणि हि भौतिकानि भवन्ति। भूतानि चेश्वरबुद्धिजानि । तत्कथमवतालरान्निविग्रीयुरित्यर्थः ।। अत्रेश्वरो हि इत्यादिना अन्ये हेतवो अभिधीयन्ते । विराट् नित्याभिव्यक्तरूपः, वरदः मोक्षदः। सगुणः स्वातन्त्र्यादिगुणवान् भूतानि प्रलीयन्ते यस्मिन् तत् अव्यक्तम् । तदभिमानिदेवता तस्य शुश्रूषुः लिङ्गव्यत्यासः छान्दस इति व्याख्यानं कृतम् ।।'

१. 'ननु ईश्वरो हि इत्यादिना अंशिनो नारायणस्यैव निर्गुणादिशब्दैर्देहासम्बन्ध उक्तो न त्ववताराणामंशानामित्यत आह- अवतारप्रसङ्गे चेति । प्रकरणादवतारविषयमेवेदं वाक्यं नारायणशब्दस्त्वंशांश्यैक्यभेदाभिप्राय इत्यर्थः। तथा चोक्तं गीताभाष्ये नवमे 'अवतारप्रसङ्गे चैतदुक्तम् । अतो नावताराश्च पृथक् शङ्क्या इति । व्याख्यातं च तत्रैव टीकायां -'यत् तद् ददृशिवान् ब्रह्मा रूपं हयशिरोधरम्' इति हयग्रीवावतारप्रसङ्ग इत्यादि ' इति -२-३-४८ भावदीपे।।

### भावदीपः

'प्रादुर्भावभवाय' इत्यत्र शेषमाह– **उत्तरत्रेति** ।।

**भाष्यम् — तत्रैव प्रथमसर्गकाल एवावताररूपविभक्त्युक्तेश्च । अतो न तेषां मानुषत्वादिर्विना भ्रान्तिम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् । तथा हि ब्राभ्रव्यशाखायाम्-**

**'अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववीर्यम्' इति ।**

**'अस्य महतो भूतस्य निश्वसितम्'(बृ.उ.२.४.१०) इति च ।**

**'ब्रह्मपुरोहित ब्रह्मकायिक महाराजिक'[1]**

**म.भा.१२.३३८.३९,४०,४१) इति च मोक्षधर्मे ।। ११ ।।**

### प्रमेयदीपिका

**तत्रैव** मोक्षधर्म एव । प्रथमसर्गकाल एव । मानुषादिजात्युत्पत्तेः प्रागेवेत्यर्थः । उपसंहरति– **अत** इति ।। **तेषाम्** अवताराणाम् । उत्तरपदविरोधश्चान्यथेति भावेन तद्व्याचष्टे– **भूतमिति** ।। **भूतं** सर्वदा विद्यमानमिति कालानन्त्यमाचष्टे । **महदिति** देशात्यनन्त्यम् । **ईश्वरमिति** गुणानन्त्यम् । **भावं** याथार्थ्यमिति व्याख्यानापेक्षया नपुंसकम्[2]।।

अत्र श्रुतिं पठति– **तथा हीति** ।। ईशं वराणामिति **ईश्वरम्** । षष्ठ्याः परनिपातः। देवाः वीर्यं पुत्रा यस्यासौ तथोक्तः । **'महतो भूतस्य'** इति देशकालानन्त्यमुच्यते । वराणां देवानामीशत्वे **'ब्रह्म'** इति मोक्षधर्मवाक्यं प्रमाणम् । पुरोहितादिदेवनिकायास्त्वदधीना इत्यर्थः ।। **'ब्रह्म'** इति द्विरुक्तिरादरार्था ।। ११ ।।

### भावदीपः

ननु 'परं भावम्' इत्यत्र भावशब्दस्य पुल्लिङ्गत्वात् तद्विशेषणीभूत 'भूतमहेश्वर'

---

१. महाभारते नारदस्तुतिरियम् । **'ब्रह्मपुरोहित =ब्रह्मणे वेदप्रद । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इति श्रुतेः । (३८) ब्रह्मकायिक =ब्राह्मणशरीरसाध्ययज्ञाध्ययनादिरूप । (३९)-महाराजिक,(४०)-चातुर्महाराजिक,(४१)-भासुर-(४२)-महाभासुर =महाराजिकादयः चत्वारः देवानां गणविशेषाः' इति नीलकण्ठीये ।**

२.. इदं वाक्यमुदाहृतं यादुपत्ये २.१.१ सुधाटिप्पणे । द्रं-सम्पुटं-१४.पृ-५३२४ ।

पदव्याख्यानपर इति भाष्ये 'महान्तम्' इत्यनुवादो युक्तो नतु महदिति शङ्कां निराह– **भावमिति** ।। अत्र भावपदस्य भाष्यकृदव्याख्यानेऽपि '**परम्भावमजानन्तो ममाव्ययमनुत्तमम्**'(७.२४) इत्यत्र सप्तमे व्याख्याततत्वात् तद्व्याख्यानमत्राप्यनुसन्धास्यन्ति शिष्या इति भावेन तदपेक्षया महदित्यनुवाद इत्यर्थः ।। 'ईश्वरम्' इत्यस्य 'ईशं वराणाम्' इति विग्रहोक्तौ 'वरेशम्' इति स्यात् । 'उपसर्जनं पूर्वम्' (पा.सू.२.२.३०) इति षष्ठ्यन्तस्य पूर्वनिपातेन भाव्यत्वादित्यत आह– **षष्ठ्या इति** ।। श्रौतनिरुक्तिबलादेव परनिपात इति भावः । का च तेषां गतिरित्यस्यार्थतो अनुवादः ।। ११ ।।

( भगवद्द्वेषिकृतकर्माणि निष्फलानि )

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।। १२ ।।**[1]

**भाष्यम्— तेषां फलमाह– मोघाऽशा इति ।। वृथाऽऽशाः । भगवद्द्वेषिभिः आशासितं आमुष्मिकं[2] न किञ्चिदाप्यते । यज्ञादिकर्माणि च वृथैव तेषाम् । ज्ञानं च । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थ आमुष्मिकस्तैराप्यत इत्यर्थः । वक्ष्यति च 'तानहं द्विषतः क्रूरान्'(१६.१९)इत्यादि ।।**

### प्रमेयदीपिका

किञ्च **तेषां फलम्** इत्यस्य परिहारो न दृश्यते । अत आह– **तेषामिति** ।। अनर्थत्वप्रदर्शनाय व्याचष्टे– **वृथेति** ।। सम्पदादिप्राप्तिदर्शनात् कथमित्यत आह– **भगवदिति** ।। युद्धादिकर्मणां साफल्यदर्शनात् कथं मोघकर्माणः? इत्यत आह– **यज्ञादीति** ।। ज्ञानं तत्वविषयं तेषां नास्त्येव । अतः कथं तस्य मोघत्वमुच्यते? इत्यत आह– **ज्ञानं चेति** ।। '**ज्ञानं च तेषां वृथैव**' इत्यस्य '**केनापीत्यर्थः**' इति सम्बन्धः । अनेन ज्ञानपदमुपलक्षणमिति चोक्तं भवति । न केवलं पुरुषार्थानवाप्तिः । अपि तु दुःखावाप्तिश्चेति भावेन तत्र प्रमाणान्याह– **वक्ष्यति चेति** ।।

---

१. (अ) ये मामवजानन्ति ते मोघाशादिमन्तो भवन्ति । तेषां सुखलेशो अपि न भवति ।। सुधा(पृ-४८९२);
(आ) प्रकृतिः स्वभावः (सुधा-पृ-५१९०)

२. मातृकायामधिकम् । वे. गुज नास्ति ।

### भावदीपः

किञ्च **'तेषां फलम्'** इति चशब्दबलाद् 'यथा'पदमाकृष्यत इति भावेनोक्तम्– **ज्ञानं च तेषां वृथैवेत्यस्येति ।। अनेनेति ।।** 'भक्त्याद्युपायेन' इति कथनेन 'मोघज्ञानमोघभक्तिमोघ-वैराग्यादिमन्तः' इत्युक्तं भवतीत्यर्थः[१] ।। न केवलं पुमर्थहेतुत्वरूपं मोघपदतात्पर्यभूतमिति चार्थः ।।

**भाष्यम् — मोक्षधर्मे** (म.भा.१२.३४६.६,७) च–

**'कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ।**
**मज्जन्ति पितरस्तस्य नरके शाश्वतीस्समाः ।।**
**यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं हरिम् ।**
**कथं स न भवेद् द्वेष्यः [२]आलोकान्तस्य कस्यचित् ।।'**[३] इति ।

### प्रमेयदीपिका

आ सम्यक् । **लोकान्तस्य** चण्डालादेः ।।

### भावदीपः

आङो द्वेष्यपदेनान्वय इति भावेन तदर्थमाह– **आ सम्यगिति ।।**

---

१. सो मातृकायामेवायम् ।

२. 'आत्मा लोकस्य' इति अपपाठः गुज-पुस्तके, महाभारते च । टीकाविरोधात् ।

३. **सुधायाम् (पृ-४८९२ )**'लोको जनः, तस्यान्तश्चण्डालादिः, तत्पर्यन्तस्य ।।

**शे.वाक्यार्थ-** 'लोकान्तं मर्यादीकृत्य इति आलोकान्तम्' इति मर्यादार्थकस्याङो लोकान्तशब्देनाव्ययीभावसमासाश्रयणे 'आलोकान्तस्य'इति षष्ठीश्रवणानुपपत्तिभयादन्यथा समासमाह -लोक इति । एतच्च तात्पर्यकथनम् । विग्रहस्तु - आ तात्पर्यतः लोकान्त इति । प्रगत आचार्यः प्राचार्य इतिवत् प्रादिसमास एवेत्यवधातव्यम् । गीताभाष्यटीकायां तु 'आ सम्यक् लोकान्तः चण्डालादिः' इति व्याख्यातम् ।। तत्राप्युक्तानुपपत्तिपरिहाराय आ सम्यक् लोकान्त इति आलोकान्त इति प्रादिसमास एवोक्त इति द्रष्टव्यम्' ।।

**अनुव्याख्याने अपि उदाहृतो अयं श्लोकः ।** परं तु तत्रैवमानुपूर्वी पाठान्तरञ्च -

'यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं प्रभुम् । कथं स न भवेद् द्वेष्यः आलोकान्तस्य कस्यचित् ।।
यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं प्रभुम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीस्समाः ।।

## ( द्वेषादिना न मोक्षः )

**भाष्यम् —**

'सर्वोत्कृष्टे ज्ञानभक्ती हि यस्य नारायणे पुष्करविष्टराद्ये ।
सर्वावमे द्वेषयुतश्च तस्मिन् भ्रूणानन्तघ्नोऽस्य समो न चैव'
इति सामवेदे शाण्डिल्यशाखायाम् ।

[1]'द्वेषाच्चैद्यादयो नृपाः' (भाग.७.१.३२) ।[2]

[3]'वैरेण यन्नृपतयः शिशुपालपौण्ड्र-

---

१ 'विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् ।
शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणाः' इति **अत्रिस्मृतौ** -९-४।

२. (अ)**न्यायसुधा-३.४.४१(पृ-५३१७)** ननु 'द्वेषाच्चैद्यादयो नृपाः' इत्यादीनि द्वेषस्यापि मोक्षसाधनतां प्रतिपादयन्ति वाक्यानि सन्ति .तत्कथं द्वेषस्य मुक्तिसाधनत्वाभावः ? इत्यत आह-स्मर्तव्य इति ।। -**अनु**- 'स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि कचित् । द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत्'।।
**सुधा**- 'पुराणे क्वचित् प्रदेशे । भगवान्नित्यं स्मर्तव्य इत्यभिप्रायेणैव द्वेषान्मुक्तिमाहेव पुराणकृदिति सम्बन्धः । तस्मान्नोक्तविरोध इति हेरर्थः ।। इदमुक्तं भवति । पुराणवाक्यं द्वेषस्य मुक्तिसाधनत्वं प्रतिपादयदिवापाततो यद्यपि प्रतीयते । तथाऽपि तत्र तदभिप्रायम् । किन्तु मुमुक्षुणा भगवान् सर्वदा स्मर्तव्य इति तस्याभिप्रायः।। यथा- 'वृद्धौ च मातापितरौ साध्वी भार्या सुतःशिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इत्यत्र नाकार्यकरणे तात्पर्यम्, किन्तु सर्वथा भर्तव्यत्वे । तथेहापीति । गुणानाहेति तात्पर्यान्तरम् ।। चैद्यादीनां द्वेषतो मुक्तिं प्रतिपादयद्वाक्यं भगवतः कृपालुत्वादीन् गुणान् आहेति ।। शापादिना द्वेषिणोऽपि चैद्याद्या स्तात्कालिकद्वेषमनिरूप्य पूर्वतनीं भक्तिमेवापेक्ष्य भगवता मोचिताः । अहो कृपालुत्वं, निर्विकारत्वं, सत्यसङ्कल्पत्वं च तस्येत्यत्र तात्पर्यं तेषां वाक्यानामित्यर्थः ।। द्विविधानि वाक्यानि 'वैरेण यन्नृपतयः' इत्यादीनि स्मरणप्रधानानि । तेषां प्रथमा गतिः । 'द्वेषाच्चैद्यादयः' इत्यादीनि द्वेषप्रधानानि । तेषां द्वितीयेति हृदयम्।।

(आ) इमानि अनुव्याख्यानवचनानि ३.३.३१ अनुबन्धाद्यधिकरण-त.प्र.टिप्पणे वाक्यार्थविवरणे विवृतानि ।

३. (अ)'मुक्तेरन्तरङ्गसाधनं भक्तिरेवेति दर्शयितुं वैरप्रधानासुरावेशाद्वैरमिश्रभक्तानामपि भक्त्या स्वस्वयोग्यं फलं भवतति किमुत नित्यानुरक्तबुद्धीनामिति कैमुत्येनाह - वैरेणेति ।। शिशुपालादिषु स्थिता असन्तस्त न्नामानस्तत्साम्यद्वेषयोग्यफलं नरकादिलक्षणमापुः । तत्स्थाः सन्तस्तस्य हरेः साम्यं निर्दोषत्वादिलक्षणं फलमापुः, अनुरक्तधियः केवलभक्ताः किं पुनः भक्तियोग्यफलमापुरितिवक्तव्यम् । अतो भक्तिरेव मुख्येत्यर्थः ।। स्वबुद्धौ आकृतधियः तदाकारवन्तः ।। इति विजयध्वजतीर्थाः ।।

**सात्वादयो गतिविलासविलोकनाद्यैः ।**
**ध्यायन्त आकृतधियः शयनासनादौ**
**तत्साम्यमीयुरनुरक्तधियः पुनः किम्'** (भाग.११.५.४८)

**इति भागवते भक्तप्रियत्वज्ञापनार्थं नित्यध्यानस्तुत्यर्थं च स्वभक्तस्य कदाचिच्छापबलाद् द्वेषिणोऽपि भक्तिफलमेव भगवान् ददातीति।।**

### प्रमेयदीपिका

**पुष्करविष्टराद्ये** पद्मासनस्य पितरि । **भ्रूणानन्तघ्नः** अनन्तभ्रूणघ्नः ।।

यद्येवं कथं तर्हि भागवतादौ भगवद्द्वेषस्य मोक्षसाधनत्ववचनम् ? इत्यत आह– **द्वेषादिति** ।। 'तद्गतिं गताः' इति सम्बन्धः । **वैरेण ध्यायन्तः** यदीयगत्यादिभिः **आकृतधियः** आकृष्टबुद्धयः । ये पूर्वं भक्ताः शिशुपालादयः तद्विषये भवत्वेषा गतिः । न तु पौण्ड्रसाल्वादिविषये । अत आह– **नित्येति** ।। **भक्तप्रियत्वज्ञापनार्थ**मित्युक्तं विवृणोति– **स्वभक्तस्येति** ।। इति भक्तप्रियत्वज्ञापनार्थमिति योजना ।।

### भावदीपः

**'द्वेषम्'** इत्यादिपादस्य प्रकृतोपयोगाय भागवतस्थवाक्यशेषेनान्वयो ध्येय इति भावेनाऽह– **इति सम्बन्ध इति** ।। **नतु पौण्ड्रसाल्वादीति** ।। तेषामासुरस्वभावत्वेन तेषु भगवद्भक्तेरागन्तुक[१] सज्जीवानुप्रवेशनिमित्तकत्वेन शिशुपालादिभक्तेरिवानादित्वाभावात् ।अत एव भाष्ये **'भक्ता एव हि ते पूर्वम्'** इत्युक्तमिति भावः ।।

### ( शिशुपालादीनां स्वतो भक्तत्वनिरूपणम् )

**भाष्यम् — भक्ता एव हि ते पूर्वं शिशुपालादयः । शापबलाद् द्वेषिणः । तत्प्रश्नपूर्वं पार्षदत्वशापादिकथनाच्चैतज्ज्ञायते । अन्यथा किमिति तदप्रस्तुतमुच्यते ?**

### प्रमेयदीपिका

स्यादेतत् । यदि तेषां स्वतो भक्तत्वं शापबलादेव द्वेषित्वमित्येतत् प्रमितं स्यात् । तदेव कुतः? इत्यत आह– **भक्ता एव हीति** ।। प्रसिद्धमेवैतद् भागवतादावित्यर्थः । कुतो

---
१. 'जीव' इति मं नास्ति ।

वचनानामर्थान्तरकल्पना? इति चेत् 'यो द्विष्यात्' इत्याद्युदाहृतवाक्याविरोधात् । हेत्वन्तरं चाह– **तत्प्रश्न** इति ।।

'अहो अत्यद्भुतं ह्येतद् दुर्लभैकान्तिनामपि।

वासुदेवे [1]भगवति गतिश्चैद्यस्य विद्विषः'(भाग.७.१.१७)

इति युधिष्ठिरेण 'द्वेषिणः कथं मुक्तिर्जाता' इत्येवंरूपे तद्विषये प्रश्ने कृते सति ,नारदेन-

'मातृष्वसेयो वश्चैयो दन्तवक्रश्च पाण्डव ।

पार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ ।।'[2] (भाग.७.१.३४)

इति तदुत्तरत्वेन पूर्वपार्षदत्वादिकं कथ्यते । ततोऽपि द्वेषो न मोक्षसाधनमित्येतज्ज्ञायते । कथम् ? इत्यत आह– **अन्यथेति** ।। यदि द्वेषो अपि[3] मोक्षसाधनं स्यात् तदा किमत्राद्भुतम्? यतो द्वेषोऽप्येको मुक्तिमार्ग इत्युत्तरं वक्तव्यम् । पूर्वपार्षदत्वादिकं त्वप्रस्तुतमनुपयुक्तं न वक्तव्यं स्यादित्यर्थः ।।

**( द्वेषिणां भगवत्साम्यवचनाभिप्रायः )**

**भाष्यम् — भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम् ।**

**'न मे भक्तः प्रणश्यति'(९.३१) इति वक्ष्यति ।।**

**प्रमेयदीपिका**

ननु नारदेन 'निन्दनस्तवसत्कार'[4](भाग.७.१.२४) इत्यदिना भगवतो निन्दादौ साम्यमपि तदुत्तरत्वेन कथ्यते । यदि स्तुतेरिव निन्दाया न मोक्षसाधनत्वं स्यात् तदा तदनुपयुक्तं

१. वे। 'परे तत्त्वे प्राप्तिः इति विजयध्वजीये पाठः ।

२. 'चैद्यादयः स्वतो भक्ताः असुरावेशात् द्वेषिण इत्युक्तम् । तत्र हेतुमाह-मातृष्वसेय इति । पार्षदप्रवरत्वं स्वतो भक्तत्वे, विप्रशापादसुराविष्टत्वं द्वेषित्वे हेतुः' इति विजयध्वजतीर्थाः।।

३. मातृकायामेव ।

४. 'निन्दस्तवसत्कारन्यक्कारार्थं कलेवरम् । प्रधानपरयो राजन्नविवेकेन कल्पितम् ।। २४ ।।
हिंसा तदभिमानेन दण्डपारुष्ययोरपि । वैषम्यमिह भूतानां ममाहमिति पार्थिव ।। २५ ।।
यन्निबन्धोभिमानो यं तद्वधात् प्राणिनां वधः । तथा न यस्य कैवल्यादभिमानो खिलात्मनः ।
परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते ।। २६ ।।' इतीमे श्लोका आदिपदग्राह्याः ।।

न वक्तव्यमिति सत्प्रतिपक्षार्थापत्तिरित्यतोऽस्यान्यथोपपत्तिमाह– **भगवत** इति ।। **साम्यं** निर्विकारत्वम् । भक्तानामपराधं भगवान् न गणयतीत्येतत् कुतः? इत्यत आह– **नेति** ।।

**भावदीपः**

**साम्यमपीति** ।। स्तुतिनिन्दयोर्भगवतो निर्विकारत्वमपीत्यर्थः ।। **अर्थापत्तिरिति** ।। पूर्वपार्षदत्वोक्त्यन्यथानुपपत्तिरूपसाम्योक्त्यन्यथानुपपत्तिरूपार्थापत्त्या सत्प्रतिपक्षेत्यर्थः ।।

**( द्वेषभाविनां द्वेष एव भवति )**

**भाष्यम् — न च 'भावो हि भवकारणम्' इत्यादिविरोधः । द्वेषभाविनां द्वेष एव भवतीति हि युक्तम् । अन्यथा गुरुद्वेषिणामपि गुरुत्वं भवतीत्याद्यनिष्टमापद्येत । न चाकृतधीत्वेऽविशेषः[१] । तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः ।।**

**प्रमेयदीपिका**

द्वेषस्य मुक्तिसाधनत्वाभावे भावः यथाकथञ्चिच्चिन्तनं भवस्य मोक्षस्य कारणमित्यादिवचनविरोधः स्यादित्यत आह– **नचेति** ।। कुतो न? इत्यत आह– **द्वेषेति** ।। **हि** यस्मादेतद्वचनम् **इति युक्तं** घटनोपेतं तस्मादित्यर्थः । यथोक्तम्–

'यादृशी भावना ज्ञेया सिद्धिर्भवति तादृशी'

इति । प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **अन्यथेति** ।। भगवद्वेषिणो मुक्तिभाजस्तदाकृतधीत्वाद् भगवद्भक्तवदित्यनुमानविरोध इत्यत आह– **न चेति** ।। उभयोराकृतधीत्वे सति फलेऽपि **अविशेषः** इति **च नेत्यर्थः** । कुतः? इत्यतः कालातीतत्वादित्याह – **तेषामेवेति** ।। आकृतधीनामेव ।।

**भावदीपः**

**'इति हि युक्तम्'** इति भाष्ये **'इति युक्तम्'** इत्युक्तं नित्यत्वमेव[२] अनूद्य विशेष्याकाङ्क्षायाम् **'एतद्वचनम्'** इत्याध्याहारेण पूरयन् युक्तपदार्थमाह– **एतद्वचनमिति** ।। **युक्तं घटनोपेतमिति** ।। द्वेषभाविनां द्वेष एव भवति, नतु भगवद्भाव इत्यर्थतया उपपन्नं

---

१. मातृकायामत्र टीकायां च 'अविरोधः'इति पाठः ।

२. अयं सो मातृकायां पठ्यते । का-मातृकायाम् 'अंशमनूद्य' इति ।

तद्वचनम् । तस्मान्न विरोध इति योजनेत्यर्थः । **प्रतीत एवेति** ।। मोक्षरूप एवार्थ इतीत्यर्थः ।।

**भाष्यम् —** **'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।[१]**
**विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः'[२]**

**(भाग.४.२१.४७ )इति ।।**

**'यदानिन्दत् पिता मह्यम्' इत्यारभ्य**
**'तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात्'(भाग.७.१०.१६,१८ )**

**इति प्रह्लादेन भगवतो वरयाचनाच्च । बहुषु ग्रन्थेषु च निषेधः कुत्रचिदेव तदुक्तिरिति विशेषः । यस्मिन् तदुच्यते तत्रैव निषेधः उक्तः ।।**

## प्रमेयदीपिका

**विविक्षुः** वेक्ष्यतीति सम्भावनाविषयः । 'आशङ्कायामचेतनेषूपसङ्ख्यानात्' । **मह्यं** मम । ननु वचनत्वाविशेषात् **'यो द्विष्यात्'** इत्यादिभिः **'द्वेषाच्चैद्य'** इत्यादीनां कथं बाधनम्? इत्यत आह– **बह्विति** ।। **निषेधः** द्वेषस्य मुक्तिसाधनतायाः । न केवलं बहुत्वाबहुत्वरूपोऽनयोर्विशेषः । किन्तु स्वव्याहतत्वास्वव्याहतत्वरूपोऽपीत्याह–**यस्मिन्निति** ।। भागवतादौ ग्रन्थे **'भगवन्निन्दया'** इत्यादि **निषेधः** ।।

## भावदीपः

**सम्भावनाविषय इति** ।। तमःप्रवेशेच्छाया अयुक्तत्वादिति भावः ।। **अचेतनेष्विति** ।। अचेतनशब्देनेच्छाराहित्यस्य विवक्षितत्वात् **'विविक्षुः'** इत्यत्र सन्प्रत्ययः साधुरिति भावः ।। **उक्तप्राय इति** ।। द्वितीयाध्याये **'गुणोत्कर्षज्ञानान्मुक्तिः'** इत्युक्त्या द्वेषान्नेति प्राप्तत्वादिति भावः ।।

---

१. 'विविक्षुः वेशनसम्भावनाविषयः । आकाङ्क्षायामचेतनेषूपसङ्ख्यानम् इति वचनात् । श्वा मुमूर्षतीति यथा । मम पिता मह्यं मन्निमित्तं त्वामनिन्दत् । मयि मद्विषये चाघवान् अपराधवान् । तस्माद् विष्णुवैष्णव निन्दापराधजाद् अघात् नित्यनरकात् । निन्दादिकं च द्वेषमूलमिति प्रसिद्धमेव । नरहरिं प्रति प्रह्लादस्य वाक्यमिदम् ।।' (सुधा-पृ-४८९२ )

अत्र प्रमेयदीपिका-न्यायसुधयोर्विरोधाभासः शेषवाक्यार्थचन्द्रिकायां परिहृतो तत एवावसेयः ।।

२. 'हिरण्यकशिपुरपि सनकादिशप्तो जयः श्रीहरिपार्षदः । तस्य तमोतिगमनं न युक्तम् । अन्यस्य तदाविष्टस्यासुरस्य तमोतिगमनमौपचारिकम्, अर्थवादवत्' इति विजयध्वजीये ।

## ( वाक्येषु बलाबलनिर्णयः )

**भाष्यम् — महातात्पर्यविरोधश्चोक्तः पुरस्तात् । अयुक्तिमद्भ्यो युक्तिमन्त्येव बलवन्ति वाक्यानि । युक्तयश्चोक्ता अन्येषाम् । न चैषां काचिद्गतिः ।।**

### प्रमेयदीपिका

भगवद्गुणोत्कर्ष एव सर्ववेदानां यन्महातात्पर्यं तद्विरोधो द्वेषान्मुक्तिवाचिनाम् । इतरेषां तु तदानुकूल्यमिति च विशेष इति भावेनाऽह– **महातात्पर्येति** ।। उक्तः उक्तप्रायः। इतोऽपि बाध्यबाधकभावो युक्त इति भावेन व्याप्तिं तावदाह– **अयुक्तिमद्भ्य** इति ।। सप्तम्यर्थे मतुप् । ततः किमित्यत आह– **युक्तयश्चेति** ।। **'महातात्पर्यविरोधश्च'** इत्यपेक्षया। **अन्येषामनुकूलाः युक्तयः**[१] ।'अव्ययं विबुधश्रेष्ठम् । पुष्करविष्टराद्ये' इति ।। सावकाशत्व-निरवकाशत्वविशेषाच्चैवमित्याह– **न चेति** ।। 'इतरेषां तूक्तैव' इति शेषः ।।

### भावदीपः

**सप्तम्यर्थ इति** ।। 'तदस्यास्त्यस्मिन्निति मतुप्' (पा.सू.५.२.९४) इत्युक्तेरिति भावः ।। **युक्तयश्चेति** ।। चशब्दसमुच्चेयमाह– **महातात्पर्यविरोधश्चेत्यपेक्षयेति** ।। न केवलं महातात्पर्यविरोध उक्त इति चार्थ इति भावः । **'अन्येषाम्'** इत्यस्य प्रति-योगिसूचनायैतद् इत्येके । महातात्पर्यविरुद्धस्मृतीनां प्रतियोगित्वादिति 'अन्येषाम्' इत्यस्यान्वयाय आह– **अनुकूला इति** ।। **'यो द्विष्यात्'** इत्यादि वचनानामित्यर्थः ।। युक्तीर्व्यनक्ति– **अव्ययमित्यादिना** ।। **'कर्मणा मनसा'**(**पूर्वत्रोदाहृत.म.भा.वचनम्**) इति श्लोके अव्ययत्वादेः प्रतीतेरिति भावः ।। **उक्तैवेति** ।। 'द्वेषाच्चैद्यादयः' इत्यादिवाक्यानां भक्तप्रियत्वादिज्ञापनादिरूपा गतिरुक्तैवेत्यर्थः ।।

**भाष्यम् — साम्येऽपि वाक्ययोः लोकानुकूलाननुकूलयोर्लोकानुकूलमेव बलवत् । लोकानुकूलं च भक्तप्रियत्वं नेतरत् । उक्तं च तेषां पूर्वं भक्तत्वम्–**

**'मन्येऽसुरान् भागवतांस्त्र्यधीशे**
**संरम्भमार्गाभिनिविष्टचित्तान्'**[२] (भाग.३.२.२४) **इत्यादि ।**

---
१. 'युक्तयः' इति केवलं मा-२ । क्वचित् युक्तय इति अधिकपाठ इत्युक्तम् ।
२. 'असुरयोनित्वमप्रयोजकं भागवतत्वे, किन्तु निर्दोषा भक्तिरेवेत्याशयेनाह-मन्य इति ।। संरम्भमार्गाभि-

**अतो न भगवद्द्वेषिणां काचिद् गतिरिति सिद्धम् ।।**

**द्वेषकारणमाह– राक्षसीमिति ।। १२ ।।**

## प्रमेयदीपिका

इतश्च बाध्यबाधकभावो युक्त इत्यभिप्रेत्य व्याप्तिं तावदाह– **साम्येऽपीति** ।। गुणान्तरेण। **साम्येऽपीति** कैमुत्यार्थम् । **लोकानुकूल**शब्देन[1] लोकदृष्टव्याप्तिकानुमानानुकूलत्व-मुच्यते। ततः किम्? इत्यत आह– **लोकेति** ।। **इतरत्** द्वेषिप्रियत्वम् । भगवत्प्रीत्यैव मोक्ष इति तु प्रसिद्धमेव । शिशुपालादीनां पूर्वभक्तत्वं प्रसिद्धमित्युक्तम् । तत् कथम्? इति चेत्- पार्षदत्वात्। वचनाच्चेत्याह– **उक्तं चेति** ।। त्रयाणां लोकानामधीशे, संरम्भेण मार्गमात्रेण **अभिनिविष्टचित्तान्** ।।

उपसंहरति– **अत** इति ।। **गतिः** सद्गतिः । स्वमौढ्यादेव मामवजानन्ति। न मद्दोषात् । तेषां च महाननर्थ इति सर्वं समाहितम् ।।

**'राक्षसीम्'** इत्यादि तु किमर्थम्? इत्यत आह– **द्वेषेति** ।। 'मौढ्यान्मिथ्याज्ञानं भवतु । प्रज्वलनात्मको द्वेषस्तु तेषां[2] कुत इत्याशङ्कानिवृत्त्यर्थम्' इति शेषः । 'अन्येषामविद्यमानं मौढ्यमेव तेषां कुतः ? इत्याशङ्कानिवृत्त्यर्थम्' इति वा । अत्र **कारणमिति** मूलकारणम् ।।

## भावदीपः

**इतश्चेति** ।। लोकानुकूलाननुकूलाभ्यां चेत्यर्थः।। **कैमुत्यार्थमिति** ।। प्रकृते निरवकाशत्वादिना प्रबलदुर्बलयोः 'किमु' इत्यर्थसूचनायेत्यर्थः ।। इति द्वेषवाक्यानां गत्युक्तिः ।। १२ ।।[3]

---

निविष्टचित्तानिति । यथा कीटः पेशस्कारिणा कुड्ये निरुद्धस्तस्मिन् भृङ्गे प्रथमं संरम्भमार्गेण,पश्चादन्न-दानात् तं द्वेषं विहाय स्नेहेन तंभृङ्गं स्मरन् तत्स्वरूपतां याति तथा तेऽप्यसुराः संरम्भमार्गेण स्मरन्तस्तस्मिन् संरम्भं विहाय भक्त्यैव तस्मिन्निविष्टचित्ताः निरन्तरं तन्मनस्काः इत्यर्थः।' इति विजयध्वजतीर्थाः ।।

१. 'लोकानुकूलम्' इत्यनेन पां।

२. 'तेषाम्'इति केवलं मा-२ ।

३. द्वेषवचनानां गत्युक्तिः युक्तिमल्लिकायां फलसौरभे ७८ तः ९८ पर्यन्तं विवृतः । - 'ननु श्रवणादिजनितभगवदपरोक्षज्ञानादेव मोक्ष इत्युक्तम् । का तर्हि कामक्रोधादीनां मोक्षदायकत्व-प्रतिपादकभागवतवाक्यानां गतिरिति चेत् -न । तत्रैव कामं दहन्ति कृतिनो ननु ..मनः श्रयेत इत्यादिवचनैः क्रोधादीनां दोषत्वस्य कीर्तनात् । लोकेपि कामक्रोधादीनां शिष्टैर्दोषत्वेन परिगणनात्न्न कापि गतिः । हरिभक्त्यादेश्च लोके वेदे पुराणादौ च कापि दोषतया अकथनेन

( उत्तमानां भजनप्रकारनिरूपणम् )

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।। १३ ।।**

<u>**भाष्यम् —** नेतरे द्विषन्तीति दर्शयितुं देवानाह– **महात्मान**</u> इति ।। १३ ।।

गुणतयैव कथनेन च मानान्तराविरुद्धमानप्रतिपादितानां श्रवणमननादीनामेव साधनत्वौचित्यात् । नच वाच्यं लौकिककामादेरेव दोषत्वम्, न भगवद्विषयककामादेरिति । रामकामुकशूर्पनख्याः कर्णनासाच्छेदयोः निष्कारणत्वप्रसङ्गात् । एकपत्नीव्रतत्वादेव तदनङ्गीकारो नतु कामस्य दोषत्वागिति चेन्न । कामस्य दोषतया अपराधत्वाभावे तच्छिक्षणायोगात् । पुण्येन पुण्यं नयति पापेन पापम् इति श्रुत्या तत्तत्कृतपापेनैव भगवतः शिक्षकत्वश्रवणात् । पापान्तरनिमित्तकल्पने दृष्टहान्यन्यश्रुतकल्पनयोः प्रसङ्गात् । षोडशसहस्रपत्नीपतेस्तस्य त्वदुक्तनियमाभावाच्च । उभयोरप्याप्तवाक्यत्वेनाप्रामाण्यायोगादेक स्यार्थान्तरं वाच्यमिति चेत् तर्हि सम्भवदर्थान्तरस्य दोषस्य गुणत्वप्रतिपादतया स्वतोपि विरुद्धस्य पूर्वोत्तरविरुद्धस्य सयुक्तिकनिरवकाशवहुतरास्मद्वाक्यविरुद्धस्य च त्वदीयवाक्यसमुदायस्यैवार्थान्तरं वाच्यमिति भावेनाह- गोप्य इति ।।

गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः । सम्वन्धाद् वृष्णयः स्नेहाद्यूयं भक्त्या वयं प्रभो ।।
इति भागवते प्रोक्तं कामद्वेषादिसाधनम् ।। ७८ ।। द्वारि द्वारि हरेर्लोके सदा सर्वत्र सेविषु ।
अनाद्यनन्तकालेष्वप्येवं कैङ्कर्यकर्मसु ।।७९ ।। निविडज्ञानवैराग्यभक्त्यादिगुणसंपदा ।
शापाद्युपाधिमूलोसावीषद् द्वेषो जयादिषु ।। ८०।। अस्वाभावकदोषत्वान्नैव मोक्षनिरोधकृत् ।
इत्येव मुक्तिदत्वेन कीर्त्यते नारदादिभिः ।। ८१ ।। भृत्यापराधसहनशीलत्वस्तुतये हरेः ।
केवलद्वेशतो मोक्ष इति नर्षेर्मनोगतम् ।। ८२ ।। कतमोपि न पेनस्य पञ्चानां पुरुषं प्रति ।
इत्युत्तरश्लोक एव वेने साधनपञ्चकं ।। यन्नेत्याह ततो द्वेषो द्वेषमात्रं कथं भवेत् ।। ८३ ।।
पूर्णो हि भगवद्द्वेषो वेने तेनैव कीर्तितः । कथं पुनर्निषेधो हि तस्यैव स्याद्विदो मुनेः ।। ८४ ।।
भगवन्निन्दयो वेनो द्विजैस्तमसि पातितः इति निन्दाख्यविद्वेषस्तमोहेतुरुदीरितः ।। ८५ ।।
इदानीं मोक्षदत्वं च कथं तस्यैव कीर्तयेत् । त्रिकालदर्शी स मुनिः किं तात्कालिकदृक् क्व न ।।८६ ।।
अतो ग्रान्थिकमुद्राज्ञो नैवं व्याख्यातुमर्हति । तदीषद्द्वेष एवासौ सुगुणस्तोममध्यगः ।। ८७ ।।
हिरण्यकशिपुश्चापि ..नुभावतः ।।। यदनिन्दत् ..अघात् ।। निन्दां भगवतः शृण्वन् तत्परस्य जनस्य वा । ततो नापैति यस्सोपि यात्यधस्सुकृताच्युतः । इत्यादि वाक्यसन्दर्भैः तमोहेतुर्यतः स्फुटम् । निर्णीतो भगवद्द्वेषः ततोप्युक्तोर्थ एव हि ।। ९२ ।। सूत्रकृच्चाह यद्विद्येव तु निर्धारणादिति । नान्यः पन्था इति स्पष्टो वेदस्तौ को नु लङ्घयेत् ।। ९३ ।। इति ।।

### प्रमेयदीपिका

ननु कुतोऽयं विवेकः? इत्याकाङ्क्षायां राक्षसादिभ्य इतरे न द्विषन्तीत्येतावदेव वक्तव्यम् । 'भजन्ति' इत्यादि तु व्यर्थमित्यत आह– **नेतर** इति ।। सत्यमेतत् । तथाऽपि देवानां स्वरूपकथनार्थमेतत् । तच्च द्वेषाभावोपपादनार्थमिति भावः ।। देवान् इत्युत्तमजीवोपलक्षणम् ।।

### भावदीपः

**अयं विवेक इति** ।। राक्षसादिस्वभावाः प्रद्विषन्तीत्येवं रूप इत्यर्थः।। १३ ।।

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ।। १४ ।।**
**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ।। १५ ।।**

**भाष्यम् —** सर्वत्रैक एव नारायणः स्थित इति **एकत्वेन**,**पृथक्त्वेन** सर्वतो वैलक्षण्येन । **बहुधा** हि तस्य रूपम् -

'आभाति शुक्लमिव लोहितमिवाथो नीलमथोऽर्जुनम्'[1]

इति सनत्सुजाते (म.भा.५.४.२२)।।

**'दैवमेवापरे'** इत्युक्तप्रकारेण बहवो वा **बहुधा** ।। १५ ।।

### प्रमेयदीपिका

'एकत्वेनाद्वैतभावनया'[2] इति व्याख्यानमसत् । मिथ्याभावनात्वादिति भावेनाऽह– **सर्वत्रेति**

---

१. -'काद्रवं वा । यद्ब्राह्मणः पश्यति तद्धि विद्वान् कथं रूपं तदमृतमक्षरं परम्' इति पूर्णपाठः ।। श्लोकार्थस्तु-'एवं ब्रह्मचर्यस्वरूपं ज्ञात्वा धृतराष्ट्रः तत्प्राप्यं ब्रह्म कीदृशमिति पृच्छति-आभातीति ।। विद्वान् ब्राह्मणः यत् ब्रह्म पश्यति तद् ब्रह्म शुक्लमिवाभाति शुक्लपटादिकमिव पटादिरूपसदृशरूपोपेतम् आभाति किम् ? एवमुत्तरत्रापि योजना । किञ्च तद् ब्रह्म कथं रूपं ? कीदृशधर्मोपेतम् । तत्सर्वं ब्रूहीति शेषः' इति सनत्सुजातीयव्याख्याने श्रीवादिराजश्रीमच्चरणाः ।।

२ वल्लभसम्प्रदायीयतत्त्वदीपिकायां- एकत्वेन 'सोऽस्मि' इत्यात्माभेदभावनया' इति व्याख्या कृता । शाङ्करभाष्ये एकत्वेन 'एकमेव परं ब्रह्म' इति परमार्थदर्शनेन' इति व्याख्या ।।

।। सर्वत्र स्थितो नारायण एक एवेति योजना । 'पृथक्त्वेनादित्यचन्द्रादिरूपेण'[१] इत्यसदिति भावेनाऽह– **पृथक्त्वेनेति** ।। [२]अपरस्तु 'पृथक्त्वेन' इत्येतत् सम्यक् व्याख्याय 'बहुधा' इत्येतत् 'आदित्यादिरूपेण' इति व्याख्यातवान् । अत आह– **बहुधेति** ।। कथम्? इत्यत आगमेनैव दर्शयति– **शुक्लमिवेति** ।। इवशब्दोऽप्यर्थः ।।

प्रकारान्तरेण व्याख्याति– **दैवमेवेति** ।। १५ ।।

**भावदीपः**

दैवमेवेति ।। '**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति**'(४.२५)

इत्यादिना चतुर्थोक्तदिशेत्यर्थः ।। १५ ।।

( पूर्वप्रतिज्ञातविज्ञानस्वरूपम् )

**अहं [३]क्रतुरहं यज्ञः[४] स्वधाऽहम् अहमौषधम्[५] ।**
**मन्त्रोऽहम् अहमेवाज्यम् अहमग्नि[६]रहं हुतम् ।। १६ ।।**

**भाष्यम् —** प्रतिज्ञातं विज्ञानमाह– **अहं क्रतु**रित्यादिना ।।

---

१ 'आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुः आदित्यादिरूपेणावस्थितः' इति शाङ्करभाष्यम् । भा.२.पृ-१६०।

२. 'भास्करः' इति श्रीनि.टि ।

३. (अ)'क्रतुस्स सर्वकर्तृत्वात्'(ऐ.भा २.५.१.२), (आ) 'स क्रतुर्ज्ञानरूपत्वात्' ई.उ.भा.(२.४),
(इ) 'क्रतुश्च ज्ञानरूपत्वात्'(बृ.भा.७.२.४), (ई)'क्रतुः ज्ञानरूपः' (कर्मनिर्णय.भा.६.मन्त्र).
(उ) 'सत्यकामः, सङ्कल्पप्रवर्तको वा' इति ८.७.२५ भागवतटिप्पण्यां विजयध्वजतीर्थाः ।।

४. 'ऋग्यजुस्सामधामानं दशार्धहविराकृतिम् । यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः'- भीष्मस्तवराज४६

५. (अ) 'उष्णानामाश्रयत्वेन स एवौषधिनामकः ।
ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत्' - अनु.व्या.१.१.५(श्लो.२६)
(आ) 'संसारे दह्यमानानामाश्रयत्वात् स औषधम्'तै.भा ।।

६. (अ)'अग्निरङ्गप्रणेतृतः' ई.भा.५; बृ.भा.७.११.; ऐ.भा.२.८.४.
(आ) 'अग्र्यत्वादग्निनामासौ' का.भा.१.२.४,
(इ)'अग्निरग्रौ स्थितत्वाच' तै.भा.१.११, (ई) 'अग्निश्चाप्यङ्गनेतृतः' छा.भा.४.३.१

**क्रतवोऽग्निष्टोमादयः । यज्ञः देवतामुद्दिश्य द्रव्यपरित्यागः ।**

**'उद्दिश्य देवान् द्रव्याणां त्यागो यज्ञ इतीरितः'**

**इत्यभिधानात्[1]।। १६ ।।**

### प्रमेयदीपिका

**'विश्वतोमुखम्'** इत्युक्तं सर्वात्मकत्वं प्रपञ्चयत्युत्तरेण'[2]इत्यन्यथाव्याख्याननिरासार्थम् आह– **प्रतिज्ञात**मिति ।। अन्यथा प्रतिज्ञाताऽनुक्तिप्रसङ्ग इति भावः । व्याख्यानं तु **'रसोऽहम्'**(७.८) इत्यादेरिव द्रष्टव्यम् । क्रतुयज्ञशब्दयोरर्थभेदमाह–**क्रतव** इति[3] ।। सामान्यविशेषभावेन भेद इत्यर्थः ।। १६ ।।

### भावदीपः

**इत्यादेरिवेति** ।। सप्तमे

**'रसोऽहमप्सु कौन्तेय [4]प्रभाऽस्मि शशिसूर्ययोः'**

इत्यादौ यथा रसादीनां रसादित्वनियन्तृत्वेन रसादिभोक्तृत्वेन च 'रसोऽहम्' इत्याद्युच्यत इति व्याख्या तथेहापि क्रतुत्वादिनियन्तृत्वेन क्रत्वादिभोक्तृत्वेन 'अहं क्रतुः' इत्याद्युच्यत इति व्याख्या ज्ञेयेत्यर्थः ।। **सामान्येति** ।। पूर्वोत्तराङ्गकलापविशिष्टक्रियाविशेषोऽग्निष्टोमादयः क्रतुपदोक्ताः, द्रव्यत्यागमात्रं यज्ञशब्दार्थ इति भावः ।। १६ ।।

---

१. आथर्वणे ३-६ मन्त्रटिप्पण्यां उमर्जीये इमानि वाक्यान्युदाहृतानि । तथाहि -'यद्यपि यज्ञक्रतुशब्दौ पर्यायौ । यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरोक्तेः तथापि स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः इत्यैतरेयोपनिषदुक्तानां पञ्चविधयज्ञानां मध्ये अग्निहोत्रादयो यज्ञशब्देन गृहीताः । पशुयज्ञादिव्यक्तयस्तु क्रतव इत्यनेन । अन्यथा पौनरुक्त्यप्रसङ्गादिति बोध्यम् । यद्वा क्रीयते सोमो अत्रेति क्रतुः । क्रीणातेः डुतच् । एवञ्च क्रतुः ससोमकयागे वर्तते इति अमरटीकानुसारे सोमयागाः क्रतवः । तदन्ये यज्ञा इत्यपौनरुक्त्यम् । वस्तुतस्तु क्रतवोऽग्निष्टोमाद्याः । यज्ञाः देवानुद्दिष्य द्रव्यत्यागः । 'उद्दिष्य देवान् द्रव्याणां त्यागो यज्ञ इतीर्यते' इत्यभिधानात् । सामान्यविशेषज्ञत्वेन भेद इ तिगीताभाष्यटीकानुसारेणेति योज्यम् ।' इति । अत्र भाष्य-टीकापङ्क्तयः किञ्चिद्व्यत्यासेन पठिताः ।

२. शाङ्करामानुजभाष्ययोर्नास्ति ।

३. इत्थं वाक्यविन्यासः मातृकायाम् । मु-पाठः -क्रतव इति ..क्रतु–माह ।

४. अयं पादः सो मातृकायां न पठ्यते ।

**पिताऽहमस्य जगतो माता धाता[१] पितामहः ।**

**वेद्यं[२] पवित्रम्[३] ओङ्कार ऋक्[४] साम[५] यजु[६]रेव च ॥ १७ ॥**

**गतिः भर्ता[७] प्रभुः[८] साक्षी[९] निवासः शरणं[१०] सुहृत् ।**

**प्रभवः[११] प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥**

**भाष्यम् —** गम्यते मुमुक्षुभिरिति **गतिः** । तथाहि सामवेदे वसिष्ठशाखायाम् -

'अथ कस्मादुच्यते गतिरिति ब्रह्मैव गतिरिति,

तद्धि गम्यते पापविमुक्तैः' इति ।

साक्षादीक्षत इति **साक्षी** । तथाहि बाष्कलशाखायाम् -

'स साक्षादिदिमद्राक्षीत्, यदद्राक्षीत् तत् साक्षिणः साक्षित्वम्' इति ॥

१. 'अनादिनिधनो धाता'; 'आधारनिलयो धाता' इति च वि.स.ना.।

२ 'वेद्यो वैद्यः' इति वि.स.ना ।

३. (अ) 'पवित्राणां पवित्रं यः' (आ) 'पवित्रं मङ्गलं परम्' इति च वि.स.ना।

(इ) ' पवित्रं नाम साक्षात् परं ब्रह्म जनार्दनः' ऐ.भा ।

(ई) 'कर्तरि चार्षिदेवतयोः ' (३-२-१८२)इति पवतेरित्रप्रत्ययः ।

४. (अ) 'ऋगर्च्यत्वाज्जनार्दनः' व्याहृतितत्त्वम् (तै.भा.१.११),

(आ) 'एभ्यः प्राणिभ्यो गतवान् इति ऋक्' -ऐ.उ.भा २.२.२-८.

(इ) 'ऋङ्नामा ज्ञानरूपत्वात्' मानसवचनम् (छां.भा.१.३.८),

(ई) 'अहं यजूंषि सामानि ऋचश्चाथर्वणानि च' ( हरिवंशे.२.११४-१९)

५. 'समत्वात् सामनामा' ।

६. 'यजुर्याज्यस्वरूपत्वात्' ।

७. 'सम्भवो भावनो भर्ता' वि.स.ना ।

८. 'सर्वस्य प्रभवात् प्रभुः' -ऐ.उ.भा.२-७-६. ।

९. (अ) 'यस्सर्वप्राणिनां देहे साक्षिभूतो ह्यवस्थितः ।

अक्षरः क्षरमाणानां तस्मै साक्ष्यात्मने नमः '॥ भीष्मस्तवराज-१११ ॥

(आ) 'अव्ययः पुरुषः साक्षी' वि.स.ना.

(इ) 'स्वयमानन्दयन् तृप्यन् साक्षी साक्षात्करोति यः' इति निरुक्तम् ॥

१०. 'सुरेशः शरणं शर्म' इति वि.स.ना ।

११. 'प्रभवः सर्वभावानां विष्णुरेव न संशयः' हरिवंशवचनम् मां.उ.भा ।

## प्रमेयदीपिका

'गतिः कर्मफलम्' इति 'व्याख्यानमपाकर्तुमाह– **गम्यत इति** ।। **शरणम्** इत्यतो भेदार्थमुक्तम् – **मुमुक्षुभिरिति** ।। अत एव 'गम्यते' इत्यस्यावगम्यत इत्यर्थः । कुत एतत्? इत्यत आह– **तथा हीति** ।। 'किमुच्यते' इत्यपि प्रश्नोऽध्याहार्यः । **साक्षी** इत्यौदासीन्यं प्रतीयते । अत आह– **साक्षादिति** ।। कुत एतत्? इत्यत आह– **तथा हीति**।। **यदद्राक्षीत् साक्षात्** तत् **साक्षिणः** परमेश्वरस्य **साक्षित्वं** साक्षिशब्दप्रवृत्तिनिमित्तम् । तदुक्तम् 'साक्षाद् द्रष्टरि सञ्ज्ञायाम्'(**पा.सू.५.२.९१**)इति ।।

## भावदीपः

**अत एवेति** ।। शरणपदस्य आश्रयपर्यायप्राप्त्यर्थत्वेन व्याख्यानादेवेत्यर्थः । अन्यथा-सिद्ध-अर्थभेदा[२]सिद्धेरिति भावः ।। 'ब्रह्मैव गतिः' इत्युत्तरोक्त्यनुरोधादाह– **इत्यपि प्रश्नोऽध्याहार्य इति** ।। गतिरितिपदेन किमुच्यत इति प्रश्न इत्यर्थः ।। **तदुक्तमिति** ।। पाणिनिनोक्तमित्यर्थः । 'साक्षात्' इति सूत्रेण 'साक्षात्' इत्यव्ययाद् द्रष्टरि वाच्ये सञ्ज्ञायाम् इनिप्रत्यये 'अव्ययानां भमात्रे टिलोपः' इति टिलोपे 'साक्षी' इति सिद्धेरिति भावः ।।

**भाष्यम् —शरणम् आश्रयः संसारभीतस्य । 'परं परायणम्' इत्याद्युक्तम् ।**

**'नारायणं महाज्ञेयं विश्वात्मानं परायणम्'[३]**

**(म.ना.उ.१३-३) इति च ।**

**संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम् । तथा हि ऋग्वेदखिलेषु– 'अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुः' इति ।। १८ ।।**

---

१. शाङ्करभाष्यम् . द्वितीयभाग- पृ-१६५ ।

२. 'अन्यथा सिद्धेः' इत्येव का-मातृकायाम् ।

३ 'पुनर्नारायणस्य महिमान्तराण्याह-महाज्ञेयमिति । ज्ञेयेषु महान् ज्ञेयः । मुख्यज्ञेयं नारायणित्यर्थः । 'तमेवैकं जानथ आत्मानम्' इति । 'नारायणो सौ परमो विचिन्त्यः'इत्यादिश्रुत्यन्तरात् । विश्वात्मानं सर्वान्तर्यामिणम् । 'एष त आत्मा अन्तर्यामृतः' इति 'अन्तर्याम्यधिदैवैदिषु तद्धर्मव्यपदेशात्' इति श्रुतिसूत्राभ्याम् । अन्तर्यामिब्राह्मणे च हरेः सर्वान्तर्यामित्वोक्तेः । परायणं परानां सर्वजीवोत्तमानां ब्रह्मादीनामयनमाश्रय इत्यर्थः' इति धीरेन्द्रीये ।।।

**प्रमेयदीपिका**

निवासशब्दार्थागतार्थतया शरणशब्दार्थमाह– **शरणमिति** ।। **संसारभीतस्य** इति मुक्तोपलक्षणम् । विष्णोर्मुक्ताश्रयत्वे प्रमाणमाह– **परमिति**।। **परायणं** मुक्तानामाश्रयः ।। तथाऽपि 'निधानम्' इति पुनरुक्तिरित्यत आह– **संहारेति** ।। 'सर्वभूतानि प्रकृतिं यान्ति' इत्युक्तत्वात् । कथं भगवति निधीयन्ते? इत्यत उक्तम्– **प्रकृत्येति** ।। प्रथमं प्रकृतिं यान्ति, पश्चात् तत्र निधीयन्त इत्यर्थः । तत्कुतः? इत्यत आह– **तथा हीति** ।। **विश्वकर्मणी**श्वरे शुभ्रचक्षुः शुद्धदृष्टिरहम् ।। १८ ।।

**भावदीपः**

**मुक्तोपलक्षणमिति** ।। एतेन निवासशरणशब्दयोः सामान्यविशेषभावेनार्थभेद इति सूचितं भवति ।। **इत्युक्तत्वादिति** ।। अत्रैवाध्याये पूर्वत्रेत्यर्थः ।। १८ ।।

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं[1] चैव मृत्युश्च सदसच्चाहमर्जुन ।। १९ ।।**

भगवान् सदसत्

**भाष्यम् — सत् कार्यम् । असत् कारणम् ।**[2]

**'सदभिव्यक्तरूपत्वात् कार्यमित्युच्यते बुधैः ।**
**असदव्यक्तरूपत्वात् कारणं चापि शब्दितम्'**

**इति ह्यभिधानात् ।**

**'असच्च सच्चैव च यद् विश्वं सदसतः परम्'**

**इति च भारते** (म.भा.१.१.२३)।। **१९ ।।**

---

१. (अ)'नित्यत्वादमृतं तथा' ऐ.उ.भा.२.१.३ ।
(आ)'अमं करोति यच्छास्त्रमृतं स्वस्मिन् पुनः पुनः । सङ्कर्षणोऽमृतं तस्मात्'चातुरात्म्यम् । ऐ.भा.२.१.३, (इ)'अन्येषाममृतत्वं तु भवेद्विष्णोः प्रसादतः । नित्यामृतः स भगवान्' नारदीये बृ.भा ६.४.७ । (ई) 'न मृतो यत्ततोऽमृतः' बृ.भा.६.४.२६)।।

२. 'एकस्त्वमेव सदसत्' इति भागवते ८.११.७ ।

**प्रमेयदीपिका**

असतो नियम्यत्वानुपपत्तेः 'सदसच्चाहम्' इत्ययुक्तमित्यत आह– **सदिति** ।। कार्यं सदित्युच्यते । **अभिव्यक्तरूपत्वात्** इत्यनेन सदेः गत्यर्थस्य क्विपि कर्मणि[१] रूपमेतद् इत्युच्यते। **कारणमपि अव्यक्तरूपत्वात्** एव **असच्छब्दितम्** । कार्यकारणयोः सदसच्छब्द-प्रयोगं च दर्शयति– **असच्चेति** ।। तस्मात् सदसतोर्विश्वस्माद् ब्रह्म **परम्** ।। १९ ।।

**भावदीपः**

**प्रयोगं चेति** ।। न केवलं व्यक्तत्वादिरूपमिति चार्थः । शेषोक्त्या वाक्यं योजयति– **तस्मादिति** ।। १९ ।।

( त्रैविद्यानां फलनिरूपणम् )

**त्रैविद्या मां सोमपाः पूतपापा**
**यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोकम्**
**अश्नन्ति दिव्यान् दिवि देवभोगान्** ।। २० ।।
**ते तं भुक्त्वा स्वर्गलोकं विशालं**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना**
**गतागतं कामकामा लभन्ते** ।। २१ ।।[२]

**भाष्यम् —** तथाऽपि मद्भजनमेवान्यदेवताभजनाद्वरमिति दर्शयति– **त्रैविद्या** इत्यादिना ।। २० ।। २१ ।।

---

१. 'कर्मणि क्विपि' इति वाक्यविन्यासः मातृकायाम् ।

२. (अ)'इष्टापूर्तं मन्यमाना' इति आथर्वणभाष्ये इमौ श्लोकौ उदाहृतौ । विवृतौ च तट्टिप्पणीषु ।

(आ) वि.त.नि.टी.टिप्पणे व्यासतत्त्वज्ञीये -हीनतरं वा विशन्ति । यथोक्तं श्रुतो -'त्रेधा ह वा अवाग्गतिः तिर्यग्यातना तम इति । एतदुपबृंहणं गीतायां-त्रैविद्या मां इत्यारभ्य तेतं..विशन्ति' इत्यधोलोकप्राप्तेरुक्तत्वात् ' (मा.रा.सं.स.प्रकाशनम्.पृ-६२७)

**प्रमेयदीपिका**

**'सदसच्चाहमर्जुन'** (९.१९) इति विज्ञानस्योपसंहृतत्वादुत्तरस्यासङ्गतिमाशङ्क्याह– **तथाऽपीति** ।। **'अहं क्रतुः'**(९.१६)इत्यादिना सर्वक्रत्वादिभोक्तृत्वं यदुक्तं भगवतस्तदसत् इति वक्ष्यामीति गूढाभिसन्धिना 'यदि सर्वत्र भोक्ता भगवान् तर्हि किं भागवतानां त्रैविद्यानां च फलसाम्यमेव? इति पृष्टस्य इदमुत्तरमित्याशयः । तथाऽपि सर्वत्र भगवतः भोक्तृत्वेऽपि मद्भजनं भागवतैरनुष्ठितम् । **देवताः** इति पित्राद्युपलक्षणम् । त्रैविद्याद्यनुष्ठितात् **वरम्** उत्कृष्टफलम् । **इत्यादिना** श्लोकत्रयेण ।। २० ।। २१ ।।

**भावदीपः**

**विज्ञानस्येति** ।। 'अहं क्रतुः' इत्यादिनोपक्रान्तस्येति योज्यम् ।। **इति वक्ष्यामीति** ।। इत्येतच्चोद्यं **'येऽप्यन्यदेवताः'** इत्येतदवतारिकायां व्यक्तीकरिष्यामीत्यर्थः ।।[1]**भागवतानां** भगवदेकचिन्तकानाम् ।। **त्रैविद्यानामिति** ।। स्वर्गादिकामनया भगवद्याजिनाम्, आदि-पदेनेतरदेवताभजकानामिति [2]ज्ञातव्यम् । **किं साम्यमेव** इत्यन्वयः ।। **इदमिति** ।। **त्रैविद्याः** इत्यादि श्लोकत्रयमित्यर्थः । तत्र फलभेदस्य कीर्तनादिति भावः ।। **पित्राद्युपलक्षण-मिति** ।। **पितॄन् यान्ति पितृव्रताः** इत्यादेरपि वक्ष्यमाणत्वादिति भावः ।। २०-२१ ।।

( भागवतानां फलनिरूपणम् )

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।। २२ ।।**

**भाष्यम् — अनन्याः** अन्यदचिन्तयित्वा । तथा हि गौतमखिलेषु–

'सर्वं परित्यज्य मनोगतं यद्विना देवं केवलं शुद्धमाद्यम् ।
ये चिन्तयन्तीह तमेव धीरा अनन्यास्ते देवमेवाविशन्ति' इति ।
'कामं कालेन महतैकान्तित्वात् समाहितैः ।

---

१. इदं वाक्यं का मातृकायां न पठ्यते ।
२. अत्र सो मातृकायां ग्राह्यम् इति पाठः ।

**शक्यो द्रष्टुं स भगवान् प्रभासन्दृश्यमण्डलः'**

**(म.भा.१२.३६६.२४,२५) इति मोक्षधर्मे ।**

**नित्यमभितः सर्वतो युक्तानाम् ।। २२ ।।**

### प्रमेयदीपिका

'अद्वैतज्ञानिनो अनन्याः' इति [1]प्रतीतिनिरासार्थमाह– **अन्यथा** इति ।। अविद्यमान-मन्यद् येषां ते **अनन्याः** । तच्च 'अनन्याश्चिन्तयन्तो माम्' इति प्रसङ्गात् चिन्तनीयमिति लब्धे **अन्यदचिन्तयित्वा** इति सिद्ध्यति । प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **तथा** हीति ।। **देवमेवाविशन्ति** इत्यनेन **योगक्षेमं वहाम्यहम्** इत्युक्तार्थं भवति । अत्रैव **कामम्** इत्यागमान्तरम् । प्रभया सन्दृश्यं मण्डलं स्वरूपं यस्यासौ तथोक्तः । दर्शनस्य योगक्षेमसाधनत्वं प्रसिद्धमेव ।।

'नित्याभियुक्तानाम्' इत्यस्य 'अपवादविषयाणाम्'[2] इत्यन्यथाप्रतीतिनिरासार्थमाह– **नित्यमिति** ।। **सर्वतः** सर्वस्मिन् देशे । शरीरेन्द्रियमनोभिर्वा युक्तानां भगवति सेवोद्युक्तानाम् ।। २२ ।।

### भावदीपः

**अत्रैवेति** ।। भगवति[3] अनन्यशब्दार्थ एवेत्यर्थः । अस्मिन्नपि वाक्ये **'योगक्षेमं वहामि'** इत्येतदर्थो अर्थाल्लब्ध इति दर्शयति– **दर्शनस्येति** ।। २२ ।।

**येऽप्यन्य[4]देवता भक्ता यजन्ते श्रद्धयाऽन्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।। २३ ।।[5]**

**भाष्यम् — तर्हि 'अहं क्रतुः'**(९.१६)इत्याद्यसत्यमित्यत आह– **येऽपीति** ।।

---

१. शाङ्करभाष्यम्, द्वितीयभाग- पृ-१७३ ।
२. शाङ्कररामानुजभाष्ययोर्नास्ति ।
३. मं-सो मातृकयोरयं न पठ्यते ।
४. 'ये त्वन्य' इति रामानुजपाठः ।
५. 'सर्व एव यजन्ति त्वां सर्वदेवमहेश्वरम् । येप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ।।' (भाग.१०.३८.१०) अत्र सत्यधर्मीये इमौ श्लोकावुदाहृतौ ।।

### प्रमेयदीपिका

उक्तप्रश्नस्योत्तरं जातम् । तत्किमुत्तरेण? इत्यतः प्रश्नाभिसन्ध्युद्घाटनस्येदमुत्तरमित्याह– **तर्हीति** ।। भगवद्भोगनिमित्तं हि फलम् । स चेत् सर्वत्र समः, तदा सर्वेषां फलसाम्येन भाव्यम् । तदभावश्चेत् तर्हि **'अहं क्रतुः'**(९.१६)इत्युक्तं सर्वत्र भगवतः भोक्तृत्वमपि असत्यमित्यर्थः ।। २३ ।।

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**[1]
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।। २४ ।।**

**भाष्यम् —** कारणमाहाविधिपूर्वकत्वे– **अहं हीति** ।। २४ ।।

### प्रमेयदीपिका

**'अहं क्रतुः'**(९.१६)इत्यादिनोक्तत्वात् **'अहं हि'** इति पुनरुक्तिरित्यत आह– **कारणमिति** ।। 'त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेद् भोक्ता, कथं तर्ह्यविधिपूर्वकत्वम्? इति शङ्कायाम्' इति शेषः ।। २४ ।।

**यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ।। २५ ।।**

**भाष्यम् —** फलं विविच्याऽह– **यान्तीति** ।। २५ ।।

### प्रमेयदीपिका

**'ते पुण्यमासाद्य'**(९.२०) इति **'योगक्षेमं वहाम्यहम् '**(९.२२) इति च फलभेदस्योक्तत्वात् किं **यान्ति** इत्यादिना? इत्यत आह - **फलमिति** ।। तस्यैवायं प्रपञ्च इति भावः।। २५ ।।

---

१. (अ) **कर्मनिर्णयभावदीपे**-'अहं हि ..सर्वयज्ञानां भोक्ता च' इति भगवत एव मुख्यतः सर्वयज्ञभोक्तृत्वेन यज्ञविद्याया अपि तस्मिन्नेव समन्वयेन तस्यामपि मुख्यतो भगवत एव प्रतिपाद्यत्वाद् युक्तं तद्वन्दनमिति भावः' इति ।।

(आ) **शेषतात्पर्यचन्द्रिकायाम्** ३.३.४३.'अहं हि..त' इति तत्त्वज्ञानशून्यानां सर्वथा विद्यारहितानां फलाभावः स्मर्यते' इत्युक्तम् (पृ-४७२)।।

( भक्त्यैव भगवतो तुष्टिः )

**पत्रं पुष्पं[1] फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।। २६ ।।**

**भाष्यम् —** दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वादित्याशङ्क्याऽह–पत्रमिति ।। न त्वविहितपत्रादि । तस्यापराधत्वोक्तेर्वाराहादौ । भक्त्यैवाहं तृप्य इति भावः ।

'भक्तप्रियं सकललोकनमस्कृतं च'

इति (म.भा.आदि.१.१) भारते ।

'एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत् सर्वत्रात्मदर्शनम्'[2] (भागवते.७.७.५६) इति ।। २६ ।।

## प्रमेयदीपिका

**पत्रम्** इत्यस्य सङ्गत्यप्रतीतेराह– **दुर्बलैरिति** ।। 'अतस्तद्भजनस्य महाफलत्वेऽपि तद्विहायाल्पानां देवानां भजनमल्पफलमपि सुशकत्वात् करोमि' इति प्रासङ्गिकशङ्का-शेषः । साधनानादरस्योक्तत्वात् यत्किञ्चित् पत्रादिकम् इति न मन्तव्यम् इत्याह– **नत्विति** ।। तत् किमपि भगवते समर्पणीयमेवेति नियमोऽत्राभिप्रेत इत्यत आह– **भक्त्यैवेति** । कुतः? इत्यत आह - **भक्तेति** ।। **स्वार्थः** स्वार्थसाधनोपायः । **आत्मनः** गोविन्दस्य[3] ।। २६ ।।

## भावदीपः

**प्रासङ्गिकेति** ।। प्रासङ्गिकी भगवत्तदितरभजनयोरनल्पाल्पफलकत्वोक्तिप्रसङ्गादागता या शङ्का तस्याः शेष इत्यर्थः ।। **साधनोपाय इति** ।। स्वाभीष्टसाधना इयं गोविन्दैकान्त-भक्तिरुपाय इत्यर्थः ।। २६ ।।

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**

---

१. स्कान्दे- मार्गशीर्षमाहात्म्ये - सप्तमाध्याये पूजाविहितपुष्पतारतम्यो द्रष्टव्यः ।

२. 'तात्पर्यात्पुनरेतदेव हि करणं श्रेय इत्याह-एतावानिति । तस्य हरेः सर्वसत्ताप्रदत्वेनावस्थितेरीक्षणं दर्शनं ज्ञानमिति यत् सेयं भक्ति रिति' इति विजयध्वजतीर्थाः।।

३. इदं वाक्यं गुज-उत्तरश्लोके प्रामादिकतया मुद्रितम् ।

**यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥**[1]

**भाष्यम् —** अतो **यत् करोषि** ॥ २७ ॥

**प्रमेयदीपिका**

साधनानादरस्य पूर्वमेवोक्तत्वाद्व्यर्थमुत्तरमित्यत आह– **अत** इति ॥ सामान्यमुक्त्वा विशेषे निगमनमेतदिति भावः ॥ २७ ॥

**भावदीपः**

**असाधनेति** ॥ भक्तेरेव स्वप्रयोजकतया द्रव्यादिरूपाराधनसाधनानारदस्य **पत्रम्**(९.२६) इति श्लोक एवोक्तत्वादित्यर्थः ॥ **सामान्यमिति** ॥ 'भक्त्युपहृतम्' इति 'उपहृतम्' इति उपहरणसामान्यमुक्त्वा करणादानादिविशेषे उपसंहारादित्यर्थः ॥ २७ ॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥**

( भगवतो समत्वप्रतिपादनम् )

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥**

**भाष्यम् —** तर्हि स्नेहादिमत्त्वाद् अल्पभक्तस्यापि कस्यचिद् बहुफलं ददासि । विपरीतस्यापि कस्यचिद् विपरीतमित्यत आह– **समोऽहमिति** ॥ तर्हि न भक्तिप्रयोजनमित्यत आह– **ये भजन्तीति** ॥

**प्रमेयदीपिका**

भक्तप्रियत्वमुक्त्वा तद्विरुद्धं सर्वत्र साम्यं कथमुच्यते ? इत्यत आह– **तर्हीति** ॥ यदि त्वं भक्तप्रियस्तदा द्वेष्यप्रियश्च स्याः । ततश्च भक्तेषु द्वेषिषु यथासङ्ख्यं स्नेहद्वेषवत्त्वात् **अल्पभक्तस्यापि कस्यचित् बहुफलं** सुखरूपं **ददासि** । **विपरीतस्य** अल्पद्वेषिणः **अपि कस्यचित्** बहुफलं दुःखरूपं ददासि इत्याद्यापाद्यते । राजादिषु तथा दर्शनात् । तथा च

१. वराह.पु.चा.मा.२३-२५५ उदाहृतः ।

वैषम्यनैर्घृण्ये तवेति शङ्कार्थः । पूर्वार्धेनैव शङ्कायाः परिहृतत्वात् किमुत्तरार्धेन ? इत्यत आह– तर्हीति ।।

**अहं** हि **सर्वभूतेषु समः** न वैषम्यादिमान् यतो **मे** [1]तदीयं द्वेषमपेक्ष्याधिकं **द्वेष्यो नास्ति** । तदीयां भक्तिमपेक्ष्याधिकं **प्रियश्च** नास्तीति भगवतोक्तेऽपि विपरीतमर्थं गृहीत्वा शङ्कते । यदि ते प्रियो नास्तीति भगवतोक्तेऽपि विपरीतमर्थं गृहीत्वा शङ्कते । यदि ते प्रियो नास्ति **तर्हि न भक्तिः प्रयोजनं** फलस्य । तथा चोक्तविरोध इति भावः ।।

**भावदीपः**

**उक्तेति** ।। भक्तेरेव साधनोपायत्वं यदुक्तं तद्विरोध इत्यर्थः ।।

**भाष्यम् —मयि ते तेषु चाप्यहमिति ।। मम ते वशाः तेषामहं वश इति । उक्तं च पैङ्गिखिलेषु–**

**'ये वै भजन्ते परमं पुमांसं तेषां वशः स तु ते तद्वशाश्च'** इति ।

**तद्वशा एव ते सर्वदा । तथाऽपि बुद्धिपूर्वाबुद्धिपूर्वकत्वेन भेदः । उद्धवादिवत्, शिशुपालादिवच्च । तच्चोक्तं तत्रैव -**

**'अबुद्धिपूर्वं[2] यो वशः तस्य ध्यानात् पुनर्वशो भवते[3] बुद्धिपूर्वम्'** इति।।

**प्रमेयदीपिका**

**मयि ते तेषु चाप्यहम्** इत्येतत्र फलम्, स्वभावसिद्धत्वादित्यत आह– **मयीति** ।। इति 'अस्य' इति, 'अर्थः' इति योजना । कुत एतत् ? इत्यत आह– **उक्तं चेति** ।। **मम ते वशाः** इत्येतदपि तादृगेव भजनाभावेऽपि तद्वशत्वस्वाभाव्यादित्यत आह– **तदिति** ।। 'यद्यपि' इति शेषः । अत्र दृष्टान्तं प्रमाणं चाह– **उद्धवादीति** ।। अबुद्धिपूर्वं **यो वशः** सः ।। २९ ।।

**भावदीपः**

**मयि** इति वाक्यान्ते 'अस्य' इति पदं, 'वशा इति' इत्यनन्तरम् अर्थपदं चाध्याहृत्य

---

१. अत्र 'मदीयम्' इति श्रीनि.टि ।

२. अबुद्धिपूर्वात् इति सर्वत्र मुद्रितम् । कुम्भकोणपाठे पूर्वमित्येव । अयमेव टीकानुगुण इति भाति ।

३. 'भवति'- इति मातृकायामेव ।

योजनामाह– इत्यस्येत्यर्थ इति योजनेति ।। तादृगेवेति ।। **'मयि ते'** इति गीतावाक्योक्तम् अन्योन्याश्रयत्वं यथा निष्फलं तथा 'मम' इत्यादिना व्याख्यातं तद्वशत्वमप्यफलमेव इत्यर्थः ।। प्रमाणे श्रुतयच्छब्दस्य अध्याहृततच्छब्देनान्वयमाह– **अबुद्धिपूर्वं यो वशः स इति ।। २९ ।।**

**( भगवद्भक्तिप्रशंसा )**

**अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ।। ३० ।।**[1]

**भाष्यम् —** न भवत्येव प्रायस्तद्भक्तः सुदुराचारः। तथाऽपि बहुपुण्येन यदि कथञ्चिद्भवति तर्हि **साधुरेव स मन्तव्यः** ।। ३० ।।

**प्रमेयदीपिका**

**अपि चेत्** इत्यादिना भक्तेः प्रशंसा क्रियते । तत्र विष्णुभक्तेस्सुदुराचारेणैकत्र समावेश-प्रतीतौ यथावद्व्याचष्टे– **न भवत्येवेति** । **बहुपुण्येन** स्वयोग्याधिकेनार्जितेन[2] ।। । ३० ।।

**( भगवद्भक्तः न प्रणश्यति )**

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ।। ३१ ।।**

**भाष्यम् —** कुतः? क्षिप्रं भवति धर्मात्मा । देवदेवांशादिष्वेव च तद्भवति । उक्तं च शाण्डिल्यशाखायाम्–

'नाविरतो दुश्चरितान्नाभक्तो नासमाहितः ।[3]
सम्यग् भक्तो भवेत् कश्चिद् वासुदेवेऽमलाशयः ।

---

१. 'बाध्यमानोपि मद्भक्तो विषयैरजितेन्द्रियः । प्रशस्तयापि मद्भक्त्या विषयैर्नाभिभूयते'।। इति भागवते २२.१४.१८ उद्धवं प्रति भगवद्वाक्यम् ।।
(आ) अयं श्लोकः भा.तात्पर्ये.११.१४.३० उदाहृतः ।
२. इदं वाक्यं गुज-उत्तरमूले प्रामादिकेन मुद्रितम् ।
३. काठके समाख्या-१.२.२४। दुश्चरितात् दुराचारात् अविरतः अनिवृत्तः ,दुराचारीति यावत् । का.खण्डार्थे।

**देवर्षयस्तदंशाश्च भवन्ति क्व च ज्ञानतः' इति ।।**

## प्रमेयदीपिका

**'सम्यग् व्यवसितो हि सः'**(९.३०) इति हेतोरुक्तत्वात् **क्षिप्रम्** इत्यादि व्यर्थमित्यत आह– **कुत** इति ।। सम्यग्व्यवसायवत्वेऽपि सुदुराचारः **कुतः** साधुर्मन्तव्यः ? इति शङ्कार्थः । सम्यग्व्यवसायवत्त्वात् **क्षिप्रं भवति** धर्मचित्तः । यदेतद्भक्तेः सुदुराचारेण सहैकत्र क्वचिदवस्थानमङ्गीकृतं तदपि न मनुष्यविषयमित्याह– **देवेति** ।। देवाः चन्द्रादयः, तदंशाः सुग्रीवादयः । **आदिपदेन** विश्वामित्रादीनामृषीणां ग्रहणम् । एतच्च **देवदेवांशादिष्वेव** विषयेषु **भवतीति** योजना । कुतः ? इत्यत आह– **उक्तं चेति** ।।

**दुश्चरितात् अविरतः** यः **कश्चित्** सः **अमलाशयः** भूत्वा **वासुदेवे सम्यग् भक्तो न भवेत्** । तथा **अभक्तः** श्रवणकीर्तनादिभक्तिलिङ्गरहितः । एवम् **असमाहितः** विषय-विक्षिप्तमनाश्च । देवादयश्च क्वचिदेवम्भूता अपि सम्यग् भक्ता भवन्ति । कुतः ? ज्ञानतः सम्यग्व्यवसायवत्त्वात्।।

## भावदीपः

**चन्द्रादय इति** ।। चन्द्रस्य गुरुदारपरिग्रहो दुराचारः, सुग्रीवस्य वालिदारपरिग्रहः, प्रथमादिपदेन दिक्पालादीनां भगवता युद्धादिः दुराचारः, द्वितीयादिपदेन अश्वत्थामादिः ग्राह्यः ।। **विश्वामित्रादीनामिति** ।। मेनकादिपरिग्रहादिस्तत्र ज्ञेयः । **तथाविध इति** ।। भक्तलिङ्गवान् इत्यर्थः।।

**भाष्यम् — अतोऽन्यः कश्चिद् भवति चेद् दाम्भिकत्वेन सोऽनुमेयः । साधारणपापानां सत्सङ्गात् महत्यपि कथश्चिद् भक्तिर्भवति । साधारण-भक्तिर्वेतरेषाम् ।।**

## प्रमेयदीपिका

ननु देवादिभ्योऽन्योऽपि सुदुराचारस्तद्भक्तो दृश्यते । शङ्खचक्राङ्कितबाहुमूलत्वादि-लिङ्गवत्त्वात् तत्कथमेतत् ? इत्यत आह– **अतोऽन्य** इति ।। **भवति चेत्** 'सुदुराचारोऽपि भक्तिलिङ्गवान्' इति शेषः ।।

माभूत् सुदुराचारो भक्तः । मध्यमदुराचारस्तु तथाविधः कथम् ? इत्यत आह– **साधारणेति**।। 'महति' इति वक्ष्यमाणसाधारणभक्तिव्यवच्छेदार्थम् । सुदुराचाराणामपि भगवत्प्रेम्णोऽनुभव-

सिद्धत्वात् कथं डाम्भिकत्वानुमानम्? इत्यत आह– **साधारणेति** ।। अल्पेत्यर्थः । प्रेमानुभवाभावेऽनुमानमुक्तम् । महाभक्त्यभावविषयं वेति भावः ।।

**भावदीपः**

**डाम्भिकत्वानुमानमिति** ।। विमतो डाम्भिकः भक्तिहीन इति यावत् । देवताद्यन्यत्वे सति भक्तलिङ्गत्वे सति सुदुराचारवत्वात् सम्मतवदित्यनुमानमित्यर्थः । **इति भाव इति** ।। 'येन बाधितविषयं स्यात्' इति शेषः ।।

( डाम्भिकभक्तस्वरूपम्-तद्भक्तिनिन्दा च )

**भाष्यम्- 'स शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवैहि नास्य भक्तिः'[1]**

**(यमगीतायाम्.३.७.३०)इति श्रीविष्णुपुराणे ।**

**'सा श्रद्धधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः' इति च ।**

**प्रमेयदीपिका**

सुदुराचारोऽपि भक्तिलिङ्गान्महाभक्त एवास्तु । किं डाम्भिकत्वादिकल्पनया? इत्यत आह– **स** इति ।। **शठमतिः** डम्भबुद्धिः । महाभक्तेर्दुराचारोपशमहेतुत्वोक्तेश्च न तयोरेकत्र समावेश इत्याह– **सेति** ।। हरिभक्तिः ।।

**भावदीपः**

**इतश्चैवमिति** ।। सदाचारस्य भक्तिहेतुत्व[2]ज्ञानसाधनत्वोक्तेश्च न भक्तिदुराचारयोरेकत्र समावेश इत्यर्थः ।।

**भाष्यम्-**

**'वेदास्त्वधीता[3] मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम् ।**
**पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम् ।।**

---

१ 'परमसुहृदि वान्धवे कलत्रे सुतनयापितृमातृभृत्यवर्गे' इति पूर्वार्धः । 'नास्य भक्तम्' इति मुद्रित-गीताप्रेसपुस्तकपाठः ।

२. 'ज्ञानसाधनवत्वोक्तेश्च'-कां ।

३. वेदाः स्वधीताः-गुज-पां ।

**गुप्तानि चत्वारि यथाऽऽगमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम् ।**
**तं चापि देवं शरणं प्रपन्नमेकान्तभावेन भजाम्यजस्रम् ।।**
**एतैरुपायैः परिशुद्धसत्वः कस्मान्न पश्येयमनन्तमेनम्'[१]**

**(म.भा.१२.३३९.३,४,९)इति मोक्षधर्मे ।**

## प्रमेयदीपिका

इतश्चैवमित्याह– **वेदा** इति ।। **मम** मया । **परस्य गुह्यं न च भिन्नपूर्वं** पिशुनत्वं नाऽचरितम् । उपस्थम्, उदरं, पाणिः, वाग् इति **चत्वारि** । **मे** मया । **एकान्तभावेन** नियतमनसा । **सत्वम्** अन्तःकरणम् । कारणसामग्र्यां सत्यां कार्यानुदयो ह्याश्चर्यहेतुः ।।

**भाष्यम्- आचारस्य ज्ञानसाधनत्वोक्तेश्च ज्ञानाभावे सम्यग्भक्त्यभावात् । तथा हि गौतमखिलेषु–**

**'विना ज्ञानं कुतो भक्तिः कुतो भक्तिं विना च तत्'     इति ।**

**'भक्तिः परे स्वेऽनुभवो विरक्तिरन्यत्र चैतत् त्रिकमेककालम्'[२]**

**(११.२.४२) इतिच भागवते ।। ३१ ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**

**श्रीमद्भगवद्गीताभाष्ये नवमोऽध्यायः ।। ९ ।।**

## प्रमेयदीपिका

नन्वाचारस्य ज्ञानसाधनत्वोक्त्या दुराचाराणां ज्ञानाभावः सिद्ध्यतु । महाभक्त्यभावस्तु कुतः ? इत्यत आह– **ज्ञानेति** ।। कुत एतत् ? इत्यत आह– **तथा हीति** ।। भक्ति-

---

१. गो-कपिलोपाख्याने ।

२ 'एवं स्वायधिष्ठानेषु सन्निहितस्य हरेस्ततो भिन्नत्वेन न?? तत्स्वामित्वेन चोपासनाभक्त्यादिपुष्टिं करोति नान्यथेति सोदाहरणमाह-भक्तिरिति ।। स्वादिषु स्थितं हरं प्रपद्यमानस्योपासीनस्य तथा परे परमात्मनि भक्तिः, स्वे स्वस्मिन्ननुभवो स्वातन्त्र्यज्ञानम्,अन्यत्र संसारे विरक्तिरित्येष त्रिकः त्रिकत्वसङ्ख्यां प्राप्त एककालः स्यादिति शेषः । यथा बुभुक्षोरश्नतः पुंसो अनुघासं प्रतिकवलं क्षुदपायः पुष्टिरुदरपूर्तिलक्षणा तुष्टिरलम्बुद्धिश्चेत्येतत् त्रयं स्यात्' इति विजयध्वजतीर्थाः ।।

ज्ञानयोरविनाभूतत्वाच्च तदभावे तदभावसिद्धिरित्याह– भक्तिरिति ।। ३१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां नवमोऽध्यायः समाप्तः ।।९ ।।

**भावदीपः**

भक्तिज्ञानयोरिति ।। भक्तिपदेनात्र प्रेमो ग्राह्यः ।। ३१ ।।

इति श्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्य श्रीराघवेन्द्रयतिकृते श्रीमद्गीताभाष्यटीकाभावदीपे नवमोऽध्यायः ।।

( भगवद्भक्तिफलनिरूपणम् )

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।। ३२ ।।**
**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ।। ३३ ।।**
**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ।। ३४ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे

राजविद्याराजगुह्ययोगो[1] नाम नवमोऽध्यायः ।। ९ ।।

---

१. भगवन्महिमावर्णनरूपभक्तियोगो, अक्षरपरब्रह्मयोगः इति पा ।

# ॥ अथ श्रीमद्भगवद्गीतायां दशमोऽध्यायः॥

## ( दशमाध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम्- उपासनार्थं विभूतीर्विशेषकारणत्वं च केषाञ्चिदनेनाध्यायेनाह ॥**

### प्रमेयदीपिका

प्रकृतसङ्गतत्वेनाध्यायप्रतिपाद्यं दर्शयति– **उपासनार्थ** मिति ॥ षष्ठे ध्यानमुक्तम् । तत् नवमान्ते '**मन्मना भव**'(९.३४) इति स्मारितम् । तच्च ध्येयसापेक्षम् । विशिष्टाधिकारिणां च भगवद्विभूतय उपास्याः । अतस्ताश्च[१] **आहानेन** दशमाध्यायेन । तत्राऽदौ **केषाञ्चित्** बुद्ध्यादीनां महर्ष्यादीनां च विशेषकारणत्वमपि भगवत आहेत्यर्थः । विभूतिशब्दार्थः तात्पर्यनिर्णयेऽभिहितः । तदुक्तेर्भूयस्त्वात् प्रथममुपादानम् । अत एवैकवाक्यता ॥ ननु विभूतयो '**रसोऽहम्**' (७.८) इत्यादिनोक्ता एव । सत्यम् । अत एव '**विस्तरेणाऽत्मनः**'(१०.१८) इति वक्ष्यति । विशेषकारणत्वं नाम सामर्थ्यातिशयोपेततया निर्माणम्[२]॥

### भावदीपः

#### ( 'विभूति'शब्दस्य त्रेधा अर्थनिरूपणम् )

**विशिष्टाधिकारिणामिति** ॥ उत्तमाधिकारिणामित्यर्थः ॥ **विभूतय इति** ॥ विशिष्टवस्तुषु विशिष्टताप्रदर्शनाय विशिष्टत्वेन[३] विविधत्वेन वा भक्ति[४]साधनयोर्विशिष्टत्वेन विविधत्वेन वा प्रादुर्भूतरूपविशेषा इत्यर्थः ॥ **विशेषकारणत्वमपीति** ॥ तस्याप्यधिकारिविशेष-ध्येयत्वाद् अत्रोक्तिरिति भावः ॥ **तात्पर्यनिर्णय इति** ॥

'**विशिष्टभवनं विभूतिः महत्वं विविधभवनं वा**' इति गीतातात्पर्यनिर्णयेऽभिहित इत्यर्थः । **अत एवेति** ॥ भूयस्त्वादेव ॥ दशमेऽस्यैवार्थस्य प्रतिपादनात् 'अर्थैकत्वादेकं वाक्यम्' इति न्यायेनैकाध्यायत्वमित्यर्थः ॥ **उक्ता एवेति** ॥ 'सप्तमे' इति योज्यम् ॥

---

१. '**च**' शब्दो भं-मातृकायामेव । भाष्ये चशब्दाट्टीकायां तद्ग्रहणम् ।
२. '**निर्मातृत्वम्**' इति मातृकायां पठ्यते ।
३. सो मातृकायामेवैतावत्पर्यन्तमिदं वाक्यं पठ्यते ।
४. '**भक्तिज्ञानयोः**' इति ख. कोशे ।

**श्रीभगवानुवाच**

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**

**भाष्यम् —** प्रीयमाणाय श्रुत्वा सन्तोषं प्राप्नुवते ॥ १ ॥

**प्रमेयदीपिका**

प्राक् '**शोकसंविग्नमानसः**'(१.४७) इत्युक्तम् । तद्विरुद्धं कथं '**प्रीयमाणाय**' इत्युच्यते? इत्यतो व्याचष्टे– **प्रीयमाणायेति** ॥ पूर्वं बन्धुस्नेहाच्छोक उक्तः[१] । इदानीं भगवद्वचनश्रवणनिमित्ता[२] सन्तोषप्राप्तिः श्रोतृत्वसम्पत्प्रतिपादनायोच्यत इति न विरोध इति भावः ॥ १ ॥

( भगवत्प्रभावः न सुज्ञेयः )

**न मे विदुस्सुरगणाः प्रभवं न महर्षयः[३] ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**

**भाष्यम् —** प्रभवं प्रभावम् । मदीयां जगदुत्पत्तिं वा । तद्वशत्वात् तस्य इत्युच्यते । यद्यस्ति तर्हि देवादयोऽपि जानन्ति सर्वज्ञत्वात् । अतो नास्तीति भावः । अहमादिर्हि इति तु उत्पत्तिरपि यस्य वशा कुतस्तस्य जनिरिति ज्ञापनार्थम् ।
'**अहं सर्वस्य जगतः प्रभवः प्रलयः**'(७.६) इति चोक्तम् ॥

**प्रमेयदीपिका**

प्रभवशब्दः **केनचित्**[४] सामर्थ्यमात्रवाचित्वेन व्याख्यातः । **अन्येन**[५] तु भगवदुत्पत्तिवाचित्वेन । तदुभयमङ्गीकुर्वन्नधिकमपि विवक्षुराह– **प्रभवमिति** ॥ **मदीयाम् उत्पत्तिमिति**

---

१. प्रथमाध्याय इत्यर्थः ।
२. वे-ग्रं, भं-मातृकापाठश्च । 'निमित्तात्' इति गुज,वे.पाठः ।
३. 'नान्तं विदाम्यहममी मुनयः प्रजेशा मायाबलस्य पुरुषस्य कुतो अपरे ये' भाग २.७.४१.ब्रह्मवचनम् ।
४. शाङ्करभाष्ये- भाग-२. पृ-२०५ ।
५. रामानुजभाष्ये भाग-२ । २०६,पैशाचभैष्ये-२०६ ।

सम्बन्धः । जगदुत्पत्तिः 'मे' इति कथं विशेष्यते? इत्यत आह– **तदिति** ।। 'जगदुत्पत्तिः' इति वर्तते । एवं तर्हि भगवत्प्रभाववज्जगदुत्पत्तिवच्च भगवदुत्पत्तिरस्त्येव । किन्तु दुर्ज्ञानैव इत्यापन्नमित्यत आह– **यदीति** ।। भगवदुत्पत्तिरिति शेषः । **सर्वज्ञत्वात्** 'सामान्यतः' इति शेषः । ततः परं 'नच सामान्यतोऽपि जानन्ति' इत्यध्याहारः । **अतः** सर्वथाऽनुपलम्भात्। प्रभावादिकं तु विशेषत एव न जानन्ति न तु सामान्यतोऽपीति भावः ।।

ननु भगवदुत्पत्तेरभावश्चेदत्राभिप्रेतस्तदा '**अहमादिर्हि**' इति हेतुवचनं[1] न सङ्गच्छते । अत्र हि देवादयो अर्वाक्तना मया सृष्टाः कथं पूर्वतनीमुत्पत्तिं जानीयुरिति प्रतीयत इत्यत आह– **अहमिति** ।। **अपि**शब्दोऽध्याहृतेन 'सर्वस्य' इत्यनेन सम्बद्ध्यते । **कुतः**? जनकात् । नन्वत्र सर्वस्याप्युत्पत्तिः भगवदधीनेति नोच्यते । किन्तु देवादीनामेव । तत्कथमनेन कारणाभावः सिद्ध्यति? इति चेन्न । देवादिशब्दस्योपलक्षणार्थत्वात् । तत्कुतः? इत्यत आह– **अहमिति**।।

**भावदीपः**

**अधिकमपीति** ।। जगदुत्पत्तिरूपमित्यर्थः ।। '**मे**' '**प्रभवम्**'इति गीतापदयोरर्थतोऽनुवादः- '**जगदुत्पत्तिं मदीयाम्**' इति ।।

**भाष्यम् —** उक्तं चैतत् सर्वमन्यत्रापि ।

**'को अद्धा वेद क इह प्रावोचत् कुत आजाता कुत इयं विसृष्टिः ।**
**अर्वाग् देवा अस्य विसर्जनेनाथा को वेद यत आ बभूव'**

**(ऋ.सं.१०.१२९.६)** इति ।

**'न तत्प्रभावमृषयश्च देवा विदुः कुतोऽन्येऽल्पधृतिप्रमाणाः'**

इति ऋग्वेदखिलेषु ।

**अन्यस्त्वर्थो 'यो मामजम्'** (१०.३) इति वाक्यादेव ज्ञायते ।। २ ।।

**प्रमेयदीपिका**

उक्तमर्थत्रयमुपपादयति– **उक्तं चेति** ।। **इयं विसृष्टिः** विविधा जगत्सृष्टिः **कुतः** कारणात् **आजाता** इति कः पुरुषः **कुतः** प्रमाणात् **अद्धा वेद**; **कश्च इह** लोके **प्रावोचत्** ? न कोऽपि

---

१. 'हेतु' इति भं-मातृकायां नास्ति ।

कुतश्चित् । यतो **देवाः अस्य** ईश्वरस्य **विसर्जनेन** निष्पन्ना[१] अर्वाचीनाः । [२]सर्वथाऽप्यज्ञाने तदभावः स्यादित्यत उक्तम्– **अथ** अन्यत् **यतः** यस्मात् **इयम् आ बभूव स कः** प्रजापतिः भगवान् **अद्धा वेद** इत्यर्थः ।।

**'न तत्प्रभावम्'** इत्यत्र 'अद्धा' इति द्रष्टव्यम् । अत एव व्युत्क्रमः । **प्रमाणं** प्रमा । **अन्यस्त्वर्थः** भगवतः जन्माभावः ।। २ ।।

**भावदीपः**

**अर्थत्रयमिति** ।। 'मे प्रभवम्' इत्यस्य भगवतः सामर्थ्यं भगवत उत्पत्तिं भगवदधीन-जगदुत्पत्तिमिति [३]प्रोक्तमर्थत्रयमित्यर्थः । अडभावच्छान्दस इति भावेनाऽह– **प्रावोचदिति** ।। **कः** इत्यनुवादः, **प्रजापतिरिति** व्याख्या ।। **इति द्रष्टव्यमिति** ।। यथायोग्यं ज्ञानस्य सत्वेन निषेधायोगात् 'अद्धा[४] सम्यङ् न विदुः' इत्यर्थलाभाय 'अद्धा' इत्यनुषञ्जनीयम् इत्यर्थः । **अत एवेति** ।। 'अद्धा' इत्येवमनुषञ्जनीयत्वादेवेत्यर्थः । अन्यथा हि 'प्रभावं मदीयां जगदुत्पत्तिमिति[५] वा' इति भाष्यानुरोधात् **'न तत् प्रभावम्'** इत्येतत् पूर्वमुदाहृत्य **'को अद्धा'**[६] इति श्रुतिः पश्चादुदाहार्येति भावः ।। यद्वा, देवापेक्षया ऋषीणामल्पवेदित्वेन तथाऽऽत्मज्ञानाभावात्, गीतायां **'सुरगणाः'** इति देवानां प्रागुक्तत्वेऽपि **'को अद्धा'** इति श्रुतौ ऋषीणां प्रागुक्तिः गीतायां तु[७] व्युत्क्रम इत्यर्थः ।। यद्वा **'न तत्प्रभावम्'** इति श्रुत्यनन्तरम् **'अन्यस्त्वर्थः'**[८] इति वाक्यमुक्त्वा पश्चात् 'को अद्धा' 'क इत्था' इति श्रुतिर्वाच्या । भाष्यव्याख्यानुसारात्[९] । तथाऽपि प्रभाववज्ज्ञानाभावः। भगवज्जन्मनि सर्वथैव ज्ञानाभाव इति द्योतनाय, अद्धापदस्यानुषञ्जनीयत्वादेव **'न तत्'** इत्येतत् **'को अद्धा'** इत्यनन्तरमुक्त्वा पश्चात् **'अन्यस्तु'** इत्येतदुक्तमित्यर्थः ।। २ ।।

---

१. मातृकायाम् । **'निष्प्रभाः'** इति वे-ग्रं,गुज पाठश्च ।
२. गु-ज,वे-ग्रं, मातृका च ।**'सर्वथा अज्ञाने'** इति प्र ।
३. **'चोक्त'** इति का. ।
४. सो मातृकायामेव अयं शब्दः पठ्यते ।
५. अत्र इतिशब्दः भाष्ये न पठ्यते । का.सो-मातृकयोः इतः परं'भ्रान्तिं वा' इति पदं पठ्यते ।
६. अत्र मातृकायां **'क इत्था'** इति पाठः ? ।
७. **'प्रागुक्तगीतार्थे'** इति क-ग पाठः ।
८. **'अन्यस्तु'**-पां -सो ।
९. 'सारेण'-पां-का ।

( भगवदजत्वानादित्वज्ञानादेव मोक्षः )

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

**भाष्यम् —** अनश्चेष्टयिता आदिश्च सर्वस्येत्यनादिः । अजत्वेन सिद्धेरितरस्य॥

**प्रमेयदीपिका**

अजशब्दागतार्थतया अनादिशब्दं व्याचष्टे– **अन** इति ॥ **'सर्वस्य'** इत्युभयशेषः । अन्तर्णीतण्यर्थादनतेः पचाद्यच् । 'न विद्यते आदिः कारणमस्येत्यनादिः'[१] इत्यन्ये । तदसत् । आर्थिकपुनरुक्तेरपरिहारादित्याह– **अजत्वेनेति** ॥ **इतरस्य** कारणराहित्यस्य । अजत्वे हेतुरयमुच्यत इति चेत् । मैवम् । तज्ज्ञापकविभक्त्याद्यभावात् । गत्यन्तराभावे हि गमनिकैषा । चेष्टकत्वं प्रागनुक्तं कथमनूद्यते?इति चेन्न । प्रभावे सर्वस्यान्तर्भावात् ॥

**भावदीपः**

**उभयशेष इति** ॥ 'चेष्टयिता' इत्यत्र, 'आदिः'[२] इत्यत्राप्यन्वेतीत्यर्थः ॥ ३ ॥

( बुद्ध्यादिसर्वभावकारणो भगवान् )

**बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥**

**भाष्यम् —** तत् प्रथयति – बुद्धिरित्यादिना ॥ कार्याकार्यविनिश्चयो बुद्धिः । ज्ञानं प्रतीतिः ॥

'ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिश्चयः'

इति ह्यभिधानम् ।

दमः इन्द्रियनिग्रहः । शमः परमात्मनि निष्ठा[३]।

---

१. शाङ्करभाष्यानुवादः पृ-२०७, द्वितीयभाग ।
२. मातृकासु 'इत्यत्रापि दीयते इत्यत्र' इति लिखितम् ।
३. **'परमनिष्ठता'** इति भं-मातृकायामेव ।

**'शमो मन्निष्ठता बुद्धेः दम इन्द्रियनिग्रहः'**[१] (भाग.११.१९.३७)

**इति भागवते ॥ ४ ॥**

## प्रमेयदीपिका

तर्हि 'आदिम्' इत्यनेन **'बुद्धिः'** इत्यादिकं गतार्थमित्यत आह– **तदिति** ॥ सर्वादित्वम् । **'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्'**[२] (गौ.न्याय.सू.१.१.१४) इति गौतमवचनात् । 'बुद्धिर्ज्ञानम्' इति पुनरुक्ति[३]रित्यत आह– **कार्येति**॥ कुत एतत्? इत्यत आह– **ज्ञानमिति** ॥ 'ज्ञायते अनेनेति ज्ञानं शास्त्रम्' इत्यसत्[४]। आध्यात्मिकधर्मप्रसङ्गात् । 'दमो बाह्येन्द्रियोपशमः शमोऽन्तःकरणस्य'[५] इति कश्चित् । तदसत् । एकेनैव शब्देन सिद्धत्वात् । किन्तु दमः क्रियासु विनयः । शमो बाह्यान्तःकरणसंयमः' इत्यपरः[६] । तदप्यसदिति भावेनाऽह– **दम इति** ॥ कुतः? इत्यत आह– **शम इति** ॥ ४ ॥

## भावदीपः

'ज्ञानम्' इत्यस्य 'शास्त्रम्' इति व्याख्या प्रकृतप्रसङ्गाननुगुणेत्याह–**आध्यात्मिकेति** ॥ आत्मानमधिकृत्य स्थितधर्मः, प्रसङ्गात् शास्त्रस्य च तथात्वादित्यर्थः[७] ॥ ४ ॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**

**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**[८]

१. 'दम इन्द्रियसंयमः' इति भागवते पाठः । सत्यधर्मीये विजयध्वजीये च न व्याख्यातोयम् ।

२. 'केचित्तु बुद्धिरिति लक्ष्यनिर्देशः, उपलब्धिर्ज्ञानमित्यनर्थान्तरं पर्यायो यस्य पदार्थस्य सा बुद्धिरिति लक्षणमित्याहुः' इति केशवमिश्रप्रणीतन्यायसूत्रप्रकाशे ।

३. 'पुनरुक्तमित्यत' इति भं-मातृकायामेव ।

४. इदं व्याख्यानं नोपलब्धम् ।

५. शाङ्करभाष्ये-द्वितीयभागे पृ-२१० ।

६. अपर इति भास्करः स्यात् । रामानुजभाष्ये नेयं व्याख्या ।

७. इति भावः - सो मातृकायाम् ।

८. (अ) तत्त्वोद्योतटीकायाम् -'भवः उत्पत्तिः । भावः सत्ता । समता द्वन्द्वेषु निर्विकारत्वम् । तुष्टिर्विषयालम्बुद्धिः । भावाः पदार्थाः । अत्र -ईश्वरत्वेशितव्यत्वाभ्यां भेदोक्तिः' ॥ इति व्याख्यातम् ॥ (भेदोक्तिः -ईश्वरसंसारिणोः इति योज्यम् ॥)

(आ)'एतदुक्तं भवति । जीवेश्वरौ द्वावपि शरीरमधितिष्ठतः । तत्रेश्वरः अन्तःकरणं स्पष्टं दृष्ट्वा तत्र ज्ञानेच्छाप्रयत्नरूपा वृत्तीः स्वेच्छाज्ञानप्रयत्नैरुत्पाद्य बाह्यकरणानि चाधिष्ठाय घटाद्युत्पादयति । जीवस्तु

**भाष्यम् — तुष्टिः अलम्बुद्धिः । 'अलम्बुद्धिस्तथा तुष्टिः' इत्यभिधानात् ।। ५ ।।**

**प्रमेयदीपिका**

सुखशब्दागतार्थतया तुष्टिशब्दं सप्रमाणकं व्याचष्टे– तुष्टिरिति ।। ५ ।।

( सप्तमहर्षिस्वरूपनिरूपणम् )

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ।। ६ ।।**

**भाष्यम् — पूर्वे सप्तर्षयः ।**

'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजाः'

इति (म.भा.१२.३३५.२८) मोक्षधर्मोक्ताः ।

ते हि सर्वपुराणेषूच्यन्ते[1] । चत्वारः प्रथमाः स्वायम्भुवाद्याः ।। तेषां हि इमाः प्रजाः । न हि भविष्यतां इमाः प्रजा इति युक्तम् । विभागः प्राधान्यं च प्राथमिकत्वादेव भवति । गौतमखिलेषु चोक्तम्[2]–

'स्वायम्भुवं स्वारोचिषं[3] रैवतं च तथोत्तमम् ।
वेद यः स प्रजावान्'

इति । पूर्वेभ्यो ह्युत्तरा जायन्त [4]इत्येषां प्राधान्यम् । अजातेषु च ज्यैष्ठ्यम् ।।

---

तद्दत्तस्वाम्यो अवतिष्ठते । यथोक्तं -बुद्धिर्ज्ञानम् इत्यादि । तस्मादीश्वरस्यैव मुख्यं स्वाम्यं कर्तृत्वं च । जीवस्य त्वमुख्यमेवेति ।।' न्यायसुधा-२.२.१.।

**परिमले-** इच्छाकृत्योरपि अत्रोपलक्षणादितिवा भावा इत्यत्र ग्रहणादिति वा अभिप्रायः ।।

१. 'तेषां सप्तर्षः पूर्वमासन् ये तन्निबोधत । भृग्वङ्गिरा मरीचिश्च पुलस्त्यः पुलहः क्रतुः । अत्रिश्चैव वसिष्ठश्च सप्त स्वायम्भुवोन्तरे' इति ब्रह्माण्डपुराणे. पू.भा.१३.१०३ ।।
२. भावदीपानुसारात् गौतमखिलेषूक्तं च ' इति पाठः अत्र सम्भाव्यते ।
३. 'रोचिषं च' इति वे-ग्रं,गुज, भं मातृका च । परन्तु टीकाननुगुणत्वात् त्यक्तः पाठः ।
४. 'इति च तेषां प्राधान्यम्' -भं मातृका ।

## प्रमेयदीपिका

'महर्षयः सप्त भृग्वादयः' इति सङ्करः[१] । तदसत् । 'पूर्वे' इति विशेषणेन प्रथममन्वन्तर-स्थानामेव ग्रहणस्योचितत्वात् । मोक्षधर्मसंवादाच्चेति भावेनाऽह– **पूर्व** इति ।। इतोऽपि मरीच्यादय एवेत्याह– **ते हीति** ।। 'निरुपपदेन सप्तर्षिशब्देन' इति शेषः । **'पूर्वे'** इत्यस्योत्तरत्र सम्बन्धेऽप्येतत् सिद्धमिति भावेनानेकप्रमाणोपन्यासः ।।

'ब्रह्मसावर्ण्यो रुद्रसावर्ण्यो धर्मसावर्ण्यो दक्षसावर्ण्य[२] इति भविष्यन्तश्चत्वारो मनवः' इत्यन्ये[३] । तदसदिति भावेनाऽह– **चत्वार** इति ।। स्वायम्भुवस्वारोचिषरैवतोत्तमाः । प्रथमातिक्रमे कारणाभावादिति भावः ।।

किञ्च **'येषां लोक इमाः प्रजाः'** इति विशेषणमेष्वेव सम्भवति । नेतरेषु । अतोऽप्येव-मित्याह– **तेषां हीति** ।। **इमाः** वर्तमानाः **प्रजाः** अपत्यानि ।। ननु चतुर्दश मनवः । तेषु चतुर्णां यत् पृथक्करणं तत्र कारणेन भाव्यम् । अस्ति च तत्परोक्तेषु सञ्ज्ञासाम्यम् । नतु स्वायम्भुवादिषु । अतः कथमेतत्? इत्यत आह– **विभाग** इति ।। 'प्राधान्यादेव' इति शेषः । सञ्ज्ञासाम्यस्याप्रयोजकत्वात् । अन्यथा मेरुसावर्णेरपि ग्रहणप्रसङ्गादिति भावः । अस्त्वेवम् । प्राधान्यं च परोक्तानामेवेत्यत आह– **प्राधान्यं चेति**।। 'स्वायम्भुवादीनाम्' इति शेषः ।।

किञ्च श्रुतौ स्वायम्भुवादीनामेव पृथक्करणात् त एवात्रेत्याह– **गौतमेति** ।। 'पृथक्करणे न फलम्' इति शेषः । प्राथमिकत्वादेव प्राधान्यं भवतीत्युक्तम् । [४]तत्कथम् इत्यत आह– **पूर्वेभ्यो हीति** ।। तत्सन्ततावित्यर्थः । **तेषां** पूर्वेषामुत्तरान् प्रति । तत्सन्ततावजातान् प्रति प्रथमानां कथं प्राधान्यम्? इत्यत आह– **अजातेष्विति** ।। विषयसप्तमीयम् । ज्यैष्ठ्यं प्रथमानां प्राधान्यमित्यर्थः ।।

## भावदीपः

[५]शङ्कते– **चतुर्णामिति** ।। ब्रह्मसावर्ण्यादीनामित्यर्थः ।। **'गौतमखिलेषूक्तं च'** इत्यत्र विशेष्यमाह– **पृथक्करणे न फलमिति शेष इति** ।।

---

१. शाङ्करभाष्ये- द्वितीयभागे पृ-२१४।

२. भं-मातृकायामेवं वाक्यविन्यासः, अयं तद्भाष्यटिप्पण्यनुगुणश्च ।'दक्षसावर्ण्यो धर्मसावर्ण्य'इति प्र।

३. रामानुजभाष्ये (द्रं-वेङ्कटनाथकृता-तद्भाष्यटिप्पणी )द्वितीयभागे पृ-२१९. ।

४. 'कथमेतत्' इति भं मातृकायामेव ।

५. इदं वाक्यं सर्वमातृकास्वपि उपरि पठितम् । टीकानुगुण्यात् पूर्वमेव योजितम् ।

## ( तापसस्य भगवदवतारत्वसमर्थनम् )

**भाष्यम्-** तापसस्य भगवदवतारत्वादनुक्तिः । तच्च भागवते प्रसिद्धम् । मानसत्वं च सर्वेषां मनूनामुक्तं भागवते

'ततो मनून् ससर्जान्ते मनसा लोकभावनान्'[१] (भाग.३.२१.४९)इति।

### प्रमेयदीपिका

इदमुक्तं भवति । प्रधानगुणाभावो हि सति सम्बन्धे भवति । अयुगपद्भाविषु चैतेषु प्रथमानामेव प्राधान्यमुत्तरेषां गुणत्वमुक्तविधया सम्भवति । न त्वन्यथा कथमपीति । प्रथमाश्चेद् गृह्यन्ते तदा चतुर्थस्तापसो गीताभिप्रेततया कुतो न व्याख्यायते[२] ? इत्यत आह– **तापसस्येति** ।। **अनुक्तिः** अव्याख्यानम् । भगवति च '**मद्भावा मानसा जाताः**' इति विशेषणासम्भवादिति भावः । तापसस्य भगवदवतारत्वं कुतः? इत्यत आह– **तच्चेति** ।।

'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः ।
हरिरित्याहुतो येन गजेन्द्रो मोचितो ग्रहात्' (भाग.८.१.२७..३०)

इत्यादिना ।।[३]

---

१. 'स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः' इति पूर्वार्धः । 'सृष्टानां सर्वेषां सर्वकरमाधिकारित्वेनोपकारत्वेन मनुसृष्टिमाह- स आत्मानमिति । यदा आत्मभूः ब्रह्मा आत्मानं देहं कृतकृत्यमिव मन्यमानः अभूत्, तदन्ते अवसाने मनःपूर्वकं लोकभावनान् लोकवृद्धिकरान् मनून् ससर्ज' इति विजयध्वजतीर्थाः ।।

२. गुज,वे-ग्रं,भं-मा । 'व्याख्यातः' इति प्र ।

३. अत्र सत्यधर्मीये- नाम्ना च तापसः । ..। एतस्यैव विष्णुरहस्ये 'जातस्तमसि' इत्याद्युक्तेस्तामसेति नामान्तरं च । अत एव विष्णुपुराणे बहुस्थले तामस इत्युक्तिः सम्भवतीति ज्ञेयम् । मार्कण्डेयपुराणे मन्वन्तरप्रस्तावे 'अवेक्ष्य भाविनीं वृद्धिं नाम चक्रुर्महात्मनः । तामसीं भजमानायां योनिं मातर्यजायत। तमसा चावृते लोके तामसोयं भविष्यति । ततः स तामसस्तेन पित्रा संवर्धितो वने' इत्युक्तेः।।इति ।। 'अत्राधिकविचारः ।। 'तत्रापि जज्ञ' इत्यर्धस्तु न पठनीयः । स च कल्पित इति वदन्ति । न चार्थतः ।

तामसस्यान्तरे चैव सम्प्राप्ते पुनरेव ह । हरिण्यां हरिभिः सार्धं हरिरेव बभूव ह' इति विष्णुपुराणे तृतीयेऽंशे प्रथमेऽध्याय उक्तेस्तदवतारान्तरं भविष्यतीति कथं कल्पिततेति वाच्यम् । तत्रापि लेखकहस्तदोषसम्भवात् ।। तथा चालीलिखन् सम्प्रदायज्ञा गीताभाष्यप्रमेयदीपिकायाख्यावसरे । 'मनुर्नाम्ना च तापसः । हरिरित्याहुतः' इत्येवं वाक्यस्योदाहरणेन मध्ये 'तत्रापि जज्ञे भगवान्हरिण्यां हरिमेधसः' इत्यर्धस्य कल्पितत्वं ज्ञायते । तथात्वे हरिनामकरूपस्यैव गजेन्द्रमोचकत्वप्राप्त्या 'हरिः तापसनामाऽसौ जातस्तपसि

'ननु यदि विशेषणासम्भवात् प्रथमप्राप्तातिक्रमेण तत्सम्भवतां ग्रहणम् तर्हि 'मानसा जाताः' इति विशेषणासम्भवादेतान् परित्यज्य ब्रह्मसावर्ण्यादय एव ग्राह्याः । तेषु तत्सम्भवात्' इति भास्करः । तत्राह– मानसत्वं चेति ।। चतुर्णां दक्षदुहितरि किल भावो युगपदासीदित्येवंविधं मानसत्वं न सर्वेषामिति चेन्न । अत्रार्थे तद्धितोत्पत्तेरस्मरणात् ।।

---

वै मनोः । गजेन्द्रं मोचयामास ससर्ज च जगद्विभुरिति मात्स्ये' इति द्वितीयस्कन्धतात्पर्येण 'त्वां तापसं मोचितहस्तिमल्लम्' इति सङ्ग्रहरामायणेन च विरोधापत्तेः ।।

नन्वितरमन्वन्तर इव तापसमन्वन्तरेऽपि भगवदवतारस्य वक्तव्यत्वात्तदर्थं तत्रापीत्यर्थ आवश्यक इति चेन्न। इतरमनूनां भगवद्भिन्नत्वेनासमर्थतया तत्र प्राप्तोपद्रवपरिहाराय तत्र भगवदवतारस्यावश्यं वाच्यत्वात् । अत्र पुनर्भगवत एव मनुत्वेन तद्भिन्नस्वतन्त्रावतारस्यावक्तव्यत्वादित्याद्यालोचनीयमिति सम्प्रदायविद इति ।।

केचितु 'हरिरिति जातो भगवान् गजममूमुचत् । तापसस्तु जगद्वषख्यात्यादिकं ससर्ज' इति द्वितीयतात्पर्यं व्याकुर्वन्तो रूपद्वयमुपयन्तः पूर्वोक्तयुक्तिपारं गता इव 'ससर्ज च' इति तात्पर्ये समुच्चायकचशब्दवैयर्थ्यं च नालोचितवन्त इव । 'हरिस्तापसरूपेण' इति हरिनाम्नः पृथगवतारत्वभ्रमभ्रंशकं तात्पर्ये 'तापसनामाऽसौ' इति च न च चेतस्यानीतवन्त इति ज्ञेयम् ।।

ननु 'चत्वारो मनवस्तथा' इति गीताव्याकृत्यवसरे भाष्ये -

'गौतमखिलेषु चोक्तम् । स्वायम्भुवं रोचिषं च तथोत्तमम् । वेद यः स प्रजावान्'

इत्युक्तेश्चतुर्थ उत्तमः कथितः । कथं चतुर्थस्तापस इत्युच्यत इति चेन्न । उत्तरभाष्यतट्टीकाभ्यां गतेरुक्तत्वात् । तथाहि । 'तापसस्य भगवदवतारत्वादनुक्तिः । तच्च भागवते प्रसिद्धम् । मानसत्वं च सर्वेषां मनूनामुक्तं भागवते । ततो मनून् ससर्जान्ते मनसा लोकभावनान्' इति । चतुर्थस्तापसो गीताऽभिप्रेततया कुतो न व्याख्यायत इत्यत आह ।। तापसस्येति । अनुक्तिरव्याख्यानम् । भगवति च 'मद्भावा मानसा जाताः' इति विशेषणासम्भवादिति भावः । तापसस्य भगवदवतारत्वं कुत इत्यत आह ।। तच्चेति ।

'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः । हरिरित्याहुतो येन गजेन्द्रो मोचितो ग्रहात् इत्यादिनेति । मानसजातत्वं च भगवदवतारस्य तापसस्यानुपपन्नमिति चतुर्थस्य तापसस्य स्थाने पञ्चमस्योत्तमस्य ग्रहणम् । नात्र तथा बाधकं किञ्चिदिति तापसस्य चतुर्थतया ग्रह इति ध्येयम् ।।

केचिद्विष्णुपुराणपद्यमेतत्पद्यार्धं प्रियव्रतस्यैव हरिमेधा इत्यभिधान्तरम् । हरिणीति तद्भार्याया 'हरय' इति च देवानां पुनरिति सत्यैर्देवैः सह सत्यनामकभगवदवतारानन्तरमिति तापस एव गृह्यत इत्येकविषयतया व्याचक्षते ।।

ग्रहान्नक्राकारात् । आहुत आहूतः । येन स तत्र नाम्ना हरिमेधसोऽपि प्रियव्रताज्जज्ञ इत्यन्वयः । अत्र 'तृतीय उत्तमो नाम प्रियव्रतसुतो मनुरित्युक्त एव क्रमः । गौतमखिले तु नानुपूर्व्या क्रम इति वहवः । प्रमेयदीपिकाटिप्पणीकारा अलीलिखन्निति ततोऽनुसन्धेयो विस्तरः ।। ३० ।।' इति ।।

संपा-अस्मिन्नेव विषये भावरत्नकोशकारा अपि वहु विमर्शितवन्तः इत्यलम् ।

### भावदीपः

**अत्रार्थ इति** ।। क्वचिद् भावयुक्तमनस्कत्वार्थे 'मानसाः' इति मनःशब्दाद् अणप्रत्यये रूपम्[१]। तद्धितोत्पत्तेः पाणिनिस्मृत्यनुक्तेः, किन्त्वपत्यार्थ एवेत्यर्थः ।।

### ( एकस्यैव विना मरणं शरीरान्तरप्रवेशः )

**भाष्यम् —** **अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद्भवति ।।**

### प्रमेयदीपिका

ननु ब्रह्मपुत्रास्सन्तु मानसाः । नतु तदा ते मनवः । किन्तु तच्छरीरं परित्यज्य प्रियादि[२]पुत्रा जातास्तदैव । अतो मनुषु मानसत्वमसम्भाव्य[३]मित्यत आह– **अन्येति** ।। तन्मानसं **शरीरम् अपरित्यज्य** स्थितानाम् **अपि अन्यपुत्रत्वं सम्भवतीति** योजना ।।

'द्वितीये शरीरे जाते तत्पूर्वशरीरेणैक्यमापद्यते' इति **सम्प्रदायविदः**[४]।।

### भावदीपः

ल्यबन्तनिर्वाहायोक्तम्– **स्थितानामिति** ।। **प्रियादीति** ।। प्रियव्रतादीत्यर्थः ।।

**भाष्यम् — प्रमाणं चोभयविधवाक्यान्यथाऽनुपपत्तिरेव । 'पूर्वे' इति विशेषणाच्च एतत्सिद्धिः ।। मत्तो भावो येषां ते मद्भावाः । ये ते ब्रह्मणो मानसा जातास्ते मत्त एव जाता इति भावः ।। ६ ।।**

### प्रमेयदीपिका

किमत्र प्रमाणम्? इत्यत आह– **प्रमाणं चेति** ।। मनूनामेव ब्रह्ममानसपुत्रत्ववाक्यं प्रियव्रतादिपुत्रत्ववाक्यं चेत्युभयविधवाक्यम् । उपचारत्वकल्पना क्लिष्टैव । किञ्च 'पूर्वे' इति विशेषणं पूर्वेणैव सम्बद्ध्यते परेणैव वा उभाभ्यामपीति त्रयः पक्षाः । पक्षत्रयेऽपि चत्वारो

---

१. 'रूपसिद्ध्युक्तेः' इति सो मातृकापाठः ।

२. भावदीपानुगुण्याय एवं पाठः सम्भाव्यते । 'प्रियव्रतादिपुत्राः' इत्येव सर्वमुद्रितेषु मातृकासु च । महान्तः प्रमाणम् ।

३. 'मेवेत्यतः' इति भं-मातृकायामेव ।

४. यथा भागवते कुम्भकपुत्री नीला नग्नजित्पुत्रीनीलादेहे प्रविवेश ।

मनवः प्रथमा एवेति सिद्ध्यति । आद्ये सप्तर्षीणां प्रथमत्वेन तत्साहचर्यात् । द्वितीयतृतीययो॰ र्चिनादेवेति भावेनाऽह– पूर्व इति ॥

'मयि भावो येषाम्' इति व्याख्यानं[1] प्रकृतासङ्गतम् । कारणत्वस्यात्र प्रकृतत्वादिति भावेनाऽह– **मत्त** इति ॥ भावः जन्म । ननु 'मानसा जाताः' इत्यनेन भगवतः तत्कारणत्व-मुच्यते । मैवम् । 'ततो मनून्' इति वचनस्य सत्त्वेन[2] 'ब्रह्मणो मानसा[3] जाताः' इति व्याख्येयत्वात्। तर्हि कथं न व्याहतिः? इत्यत आह– **ये त** इति ॥ **मत्त एव** ब्रह्मान्तर्यामिणः । ब्रह्मा तु द्वारमात्रमिति भावः ॥ ६ ॥

**भावदीपः**

ननु भूतपूर्वगत्यादीनां मानसत्वं वा [4]मनुत्वं वा, अन्यतरद्गौणमिति कल्प्यतामित्यत आह– **उपचारत्वेति** ॥ **प्रकृतत्वादिति** ॥ **'मत्त एव पृथग्विधाः'** इत्यनेनेति भावः । **भगवतस्तत्कारणत्वमिति** । तथाच तेन **'मद्भावम्'**इत्यस्य पुनरुक्ततेति भावः ॥ **ब्रह्मण इति** ॥ विरिञ्चस्येत्यर्थः ॥ ६ ॥

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**
**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

**भाष्यम् —** सन्ति च भजन्तः केचिदित्याह– **अहमित्यादिना** ॥ ८ ॥

**प्रमेयदीपिका**

ननु **'एतां विभूतिम्'**(१०-७) इति परिज्ञातुः फलमुक्तम् । तत्किमर्थं पुनरुच्यते ? इत्यतस्तात्पर्यान्तरमाह– **सन्ति चेति** ॥ 'उक्तफले विश्वासजननार्थम्' इति शेषः॥ ८ ॥

---

१. शाङ्करभाष्यम् । द्वितीयभाग-पृ-२१४ । द्रं-आनन्दगिरिटीका ।
२. 'वचनेन' इत्येव भं मातृकायाम् ।
३. 'मनसा जाताः' इति ख-मातृकायां पठ्यते ।
४. 'अनुमानत्वम् वा' इति सो मातृकायाम् ।

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

अर्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं [१] भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥

**भाष्यम् —** ब्रह्म परिपूर्णम् ।

'अथ कस्मादुच्यते परं ब्रह्म । इति[२]।
बृहत् बृहत्या[३] बृहति बृंहयति' (अथर्वशिर.४) इति च श्रुतिः ।
'बृह बृहि वृद्धौ' (पा.धा.७३५.७३६) इति[४] ।
'परमं यो महद् ब्रह्म'( म.भा.(वि.स.ना)१३.१४९.९) इति च ।

विविधमासीदिति विभुः । तथा हि वारुणशाखायाम्–

"[५]विभु च प्रभु च[६] प्रथमं मेहनावत इति

१ (अ)'अथ कस्मादुच्यते परम इति, परमाद्ध्येते नामरूपे व्याक्रियेते तस्मादाहुः परम इति' ब्र.सू.भा.२.४.२१ उदा आग्निवेश्यश्रुतिः ।
(आ)' पर एव सभवति तस्मादाहुः परम इति' ब्र.सू.भा.३.२.२५ उदा माण्डव्यश्रुतिः ।
२ प्रपाठे इतिः अत्र न दृश्यते ।
३ गुज-पुस्तके अयं अधिकः पठ्यते ।
४ 'बृह बृंह बृहि वृद्धाविति पाठान्तरम् पठति' इत्यधिकं गुज।
५. ऋग्वेदे अस्य समाख्या श्रूयते -'विभु प्रभु प्रथमं मेहनावतः'(२.७.२वर्ग.५मं)इति।
६. 'च' इति भं-मातृकायामेव, टीकानुगुणः पाठः । 'विभुः प्रभुः' इति विसर्गान्तपाठः प्रचलितः । टीकानुगुण्यायेत्थं भाव्यमिति भाति ॥

स ह्येव प्राभवत् विविधोऽभवत्' इति ।
'सोऽकामयत बहुः स्यां प्रजायेय'[१] (तै.उ.२.१४)
इत्यादेश्च ।। १२ ।।

### प्रमेयदीपिका

ब्रह्मविभुशब्दावैक्यार्थपरिहाराय क्रमेण सप्रमाणकं व्याचष्टे– **ब्रह्मेति** ।। **परं** वस्तु **ब्रह्म** इति **कस्मादुच्यते** । **वृहति** पूर्णं भवति । **बृंहयति** पूरयति चान्यान् । बृहतेर्मनूप्रत्ययः, अमागमश्च । [२]ईश्वरो ब्रह्मणोऽन्यः । स कथं परं ब्रह्मेत्युच्यते? इत्यत उक्तम्– **परम**-मिति ।। **विविधम्** अनेकरूपत्वेन **अभवत्** । **मेहनावतः** सेचकस्य भगवतः प्रथमं रूपं '**विभु प्रभु च**' इत्येतदनूद्य व्याख्यायते । **प्राभवत्** समर्थोऽभवदिति **प्रभुः** । विविधोऽभवदिति **विभुः** । '**सोऽकामयत**' इति विविधभवने श्रुत्यन्तरम् । 'विप्रसम्भ्यो ड्वसञ्ज्ञायाम्' (पा.सू.३.२.१८०) इति च स्मृतिः ।। १२ ।।

### भावदीपः

**मनिनिति** ।। 'अन्येभ्योऽपि दृश्यते'[३](पा.सू.३.२.७५) इति सूत्रेण 'आतो मनिन्-क्वनिप्-वनिपश्च' (पा.सू.३.२.७४) इति पूर्वसूत्रादनुवृत्तमनिन्प्रत्यये दृशिग्रहणात्, अमागमे यणादेशे च रूपसिद्धेरिति भावः ।। **विप्रसम्भ्य इति** ।। वीत्याद्युपसर्गत्रयात् परतो विधातोः ड्वप्रत्यय इत्यर्थः । डित्वात् टेर्लोपे 'विभुः, प्रभुः, सम्भूतिः' इति रूपमिति भावः ।। १२ ।।

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ।। १३ ।।**
**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**

---

१. 'स आत्मा प्रजायेय । अन्तर्णीतण्यर्थोऽयम् । जगत् प्रजनयेय जगत् सृजानि । तन्नियामकतया चाहं बहु स्यां वहुरूपः स्यां भवेयमिति अकामयत ऐच्छदित्यर्थः'– **तैत्तिरीयखण्डार्थे राघवेन्द्रीये** ।।

२. ब्रह्मशब्दो हि वृंहणयोगनिमित्तकः, नत्वनपेक्षितावयवार्थो व्यक्तिविशेषे रूढः । **भावदीपे**- 'वृहि वृद्धौ' इत्यतो वृंहेर्नोऽच' इति मनिन्प्रत्यये नकारस्य चाकारे यणादेशे च 'ब्रह्म' इतिरूपमिति भावः ।। **वि.त. नि.टीका.पृ-७२२** ।

३. अन्यत्रापि इति क-मातृकायाम् ।

न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥
स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

( भगवद्विभूतिप्रश्नः )

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।[१]
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

**भाष्यम् —** विभूतयः विविधभूतयः ॥ १६ ॥

**प्रमेयदीपिका**

विभूतयः ऐश्वर्याणि पृष्टानि । नानारूपाणि वक्ष्यन्ते । किं केन सङ्गतम्? इत्यत आह– **विभूतय** इति ॥ **विविधभूतयः** नानाभूतानि रूपाणि ॥ १६ ॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥ १७ ॥
विस्तरेणाऽत्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

**भाष्यम् — न** जायते अर्दयति च संसारमिति **जनार्दनः**[२] । तथाच बाभ्रव्य-शाखायां

'स भूतः स जनार्दनः इति । स ह्यासीत् स नासीत् सोऽर्दयति'

इति ॥ १८ ॥

---

१ (अ) 'हरीच्छया विभूतिर्या ब्रह्मादीनां सदा भवेत् । इच्छया वा बहुविधस्तेषु विष्णुस्स्वयं स्थितः । अतो मायाविभूतिस्त्वं तेषां मत्स्यादिकास्स्वयम् '॥ इत्यध्यात्मे -भाग.ता.२.७.३९ ॥
(आ) 'विविधं भावपात्रत्वात् सर्वे विष्णोर्विभूतयः' इति भा.ता.६.९.३५।

२ ब्र.सू.भा.उ.कौर्मवचने जनार्दनशब्दार्थ उक्तः -'अव्यक्तव्यक्तभावौ च न कचित् परमेश्वरे । सर्वत्रा-व्यक्तरूपोऽयं यत एव जनार्जनः' इति ॥ 'उत्पत्त्या जननं व्यक्तिमर्दयति गमयति प्रापयत्येवान्यान्, न स्वयमन्यशक्त्या प्राप्नोति' इति जनार्दनः । स्वजननमर्दयति अपगमयतीति वा ' ॥

**प्रमेयदीपिका**

'अर्द गतौ याचने च' (**पा.धा.५५**) इति वचनादासुरजनानां नरकादिगमयितृत्वात्, जनैर्याच्यत्वाद् वा जनार्दनः' इति **सङ्करः**[१]। तदप्रामाणिकं व्याख्यानम् । इदं तु श्रौतत्वादुपादेयमिति भावेनाऽह– **न जायत** इति ।। नञः परनिपातः । अत एव नलोपाभावः। उत्तरपदे तस्य स्मरणात् । **अर्दयति** गमयति । **स ह्यासीदिति** ।। **भूतः** अनादितः सत्तावानित्यर्थः । **स नासीत्** न जन्मवान् । **सोऽर्दयति इति जनार्दनः** ।। १८ ।।

**भावदीपः**

ननु 'न जायते' इति व्युत्पत्तौ 'अजः' इति भाव्यम् । 'जन' इति तु कथम्? इत्यत आह– **नञः परनिपात इति** ।। निरुक्तिबलादिति भावः । तावता कथं न लोपाभावः? इत्यत आह– **अत एवेति** ।। परनिपातत्वादेवेत्यर्थः । तत्रापि कुतः? इत्यत आह– **उत्तरेति** ।। **तस्येति** ।। लोपस्येत्यर्थः । 'अलुगुत्तरपदे'(**पा.सू.६.३.१**) इत्युत्तरपदाधिकारात् 'न लोपो नञः' (**पा.सू.६.३.७३**)इति सूत्रे 'नञो न लोपो भवति, उत्तरपदे परतः' इति पाणिन्युक्तेः[२] । इहच जपदस्य पूर्वपदत्वेन नञ उत्तरपदपरत्वाभावान्नलोपाभाव इत्यर्थः ।। गत्यर्थ एवात्र ग्राह्यः, नञो नान्यार्थ इति भावेनाऽह– **गमयतीति** ।। परिहरतीत्यर्थः ।।

**श्रीभगवानुवाच –**

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ।। १९ ।।**
**अहमात्मा गुडाकेश सर्वभूताशयस्थितः।** [३]

---

१. शाङ्करभाष्ये-द्वितीयभागे पृ-२३१.शाङ्करभाष्यानुवादः अयम् ।

२. अयं भावानुवादः । 'नञो नस्य लोपः स्यादुत्तरपदे' इति मूलम्. सि.कौ.२-भाग,-पृ-८६ ।

३. (अ)'स्मृतेश्च' (१.२.६)इति सूत्रभाष्ये उदाहृतोयमर्थः । त.प्र. 'स्मृतिसमाख्यया अपि विष्णोरत्रोक्तसर्वगतत्वं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति स्मृतेश्च इति '।।

(आ) न्यायामृते अहमर्थस्यानात्मत्वभङ्गप्रकरणे -'अहमात्मा गुडाकेश' इत्यादावात्मत्वाद्युक्तेः' इति।।

(इ) । हे 'गुडाकेश' गुडाका निद्रा, तदीशस्तद्रहित इति यावत् । गुडवदासमन्तात् केशा यस्य सः श्लक्ष्णकेशेति वा ।' इति ब्र.सू.भाष्यदीपिकायाम् ।

(इ)प्रथमाध्यायेपि गुडाकेशशब्दार्थः विजयध्वजीयोदाहृतः द्रष्टव्यः ।

**अहमादिश्च मध्यं च भूतानामन्त एव च ।। २० ।।**

भगवद्विभूतिस्वरूपम्

**[1]आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ।। २१ ।।**

विष्णुशब्दनिर्वचनम्

**भाष्यम्-** विष्णुः सर्वव्यापित्वप्रवेशित्वादेः[2]।

'विष्लृ व्याप्तौ' (पा.धा..१०६५), 'विश प्रवेशने' (पा.धा..१४६४) इति च पठन्ति ।

'गतिश्च सर्वभूतानां प्रजानां चापि भारत ।
व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ।।
अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत ।

---

१ (अ)धाता चार्यमणश्चैव मित्रश्च वरुणस्तथा । भगो विवस्वानिन्द्रश्च पूषा पर्जन्य एव च ।।
त्वष्टा विष्णुरिति प्रोक्ता द्वादशैते अदितेः सुताः।। मार्कण्डेय-सं ३-१.३,१.४.

(आ) महाभारते आदि-६५अ,-४५,४६, धाता.मित्रो ... द्वादशो विष्णुरुच्यते । जघन्यस्तु सर्वेषामादित्यनां गुणाधिकः ।।

(इ) गरुडपुराणे-पूर्वार्धे ६.३७,३८.; हरिवंशे- १.३-६.,६१; अग्निपुराणे -आदि.६.६५-७१ ।

२. (अ) महाभारते अर्जुनं प्रति भगवद्वचनम् ।

(आ)'अथ कस्मादुच्यते महाविष्णुमिति ? यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि व्याप्नोति व्यापयति, स्नेहो यथा पललपिण्डं शान्तमूलमोतं प्रोतमनुव्यासं व्यतिषिक्तो व्याप्यते व्यापयते यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा प्रजापतिः संविदानः त्रीणि ज्योतींषि सचते स षोडशी तस्मादुच्यते महाविष्णुमिति' ।। नृसिंहपूर्वतापिनी.उप.२ ।।

(इ)हरिवंशे-शिवकृतविष्णुस्तुतौ-'व्याप्य सर्वानिमान् लोकान् स्थितः सर्वत्र केशव । ततश्च विष्णुनामाऽसि धातोर्व्याप्तेश्च दर्शनात् ' ।। ३-८८-४३ ।।

(ई) वृद्धहारीतस्मृतौ - 'व्याप्तत्वाद्व्यापकत्वाच्च विष्णुरित्यभिधीयते । सदैकरूपरूपत्वात्सर्वात्मत्वा-द्विभुत्वतः '।। ६-२१४ ।।'अनामयत्वाच्छ्रीशत्वाद्गभस्तित्वाद् घृणित्वतः । यथेष्टफलदातृत्वाद्विष्णु-रित्यभिधीयते' ।। ६-२१५ ।।

**क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसञ्ज्ञितः'**[१]

**(म.भा.१२.३४१.४२,४३) इति मोक्षधर्मे ।। २१ ।।**

## प्रमेयदीपिका

द्विविधं विभूतिरूपम् । प्रत्यक्षं तिरोहितं च । अत्र विष्ण्वादिकं प्रत्यक्षमिति ज्ञापयितुं तच्छब्दान् व्याकुर्वन् **'आदित्यानामहं विष्णुः'** इति विष्णुशब्दं तावत् सप्रमाणकं व्याकरोति– **विष्णुरिति** ।। **'सर्व'**इति योग्यतया सम्बद्ध्यते । **आदिपदेन** वक्ष्यमाणार्थसङ्ग्रहः । **चशब्दो** धात्वन्तरसमुच्चयार्थः ।।

[२]गच्छन्त्यनेनेति **गतिः** । **भूतानां** पृथिव्यादीनां **प्रजानां** ब्रह्मादीनाम्। 'वी गतिव्याप्तिप्रज नकान्त्यशनखादनेषु'**(पा.धा.१०४८)** इत्यतो गत्यर्थात् कृस्नुप्रत्ययः । धातोर्ह्रस्वश्च ।।

**मे** मया। [३]**रोदसी** द्यावापृथिव्यौ । **व्याप्तौ** व्याप्ते । 'विष्लृ व्याप्तौ' इत्यतः क्नुः । **कान्तिः** कमनीयता । 'वश कान्तौ'**(पा.धा.१०८०)** इत्यतो नुः । धातोरकारस्येकारः । शकारस्य षकारः । 'वी गति'[४] **(पा.धा.१०४८)**इत्यतो वा कान्तिकर्मणः कृस्नुः ।।

**अधिभूतं** प्राग्व्याख्यातम् । **'विश प्रवेशने'** इति ।। अतः क्नुः, षत्वं च । **तदिच्छुः** अधिभूतस्य जन्मादीच्छुः । **कान्तिः** इच्छा । अतो वयतेर्वेष्टेश्च पूर्ववद्रूपम् । **क्रमणात्** त्रिविक्रमरूपेण पादविक्षेपात् । पूर्ववद् वयतेर्गत्यर्थात् कर्तरि प्रत्ययः ।। २१ ।।

## भावदीपः

**वक्ष्यमाणार्थेति** ।। भूताधिगमनहेतुत्वं कमनीयत्वं गमयित्वा[५] 'अधिभूतजन्म' इत्युक्त्या पादक्रमणरूपार्थसङ्ग्रह इत्यर्थः[६]।। **धात्वन्तरेति** ।। 'वा'धातुवत् 'वश' धातूक्तिरित्यर्थः ।

---

१. (अ) ता.चन्द्रिकायां ३.भागे पृ-५७.इमौ श्लोकावुदाहृतौ, प्रकाशिकायामेवमेव व्याख्यातौच ।

२. गुज,वे-ग्रं,मातृका च । 'गच्छति' इति प्रचलितः पाठान्तरमिति भाति । (आ) सुमतीन्द्रतीर्थश्रीमच्चरणैः मन्त्ररत्नकोशे विष्णुमन्त्रव्याख्याने 'गच्छति' इति एकवचनान्तपाठ एव ।

३. 'रोदसी द्यावापृथिव्यौ' । वस्तुतस्तु 'रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सह प्रयोगेप्यनयो रोदः स्यादपि रोदसी' इति विश्वोक्तेः रोदसी तन्त्रन्यायेन द्यौः पृथिवी च ।। 'रोदसी' इत्यव्ययमप्यस्तीति भानुदीक्षितः ।' रामा.युद्ध. ६.६.सत्यधर्मीये।

४. 'वी गतिव्याप्तिप्रजनकान्त्यशनखादनेषु' इति पूर्णपाठः ।

५. अत्र 'कमनीयत्व-..अ.. न्ध त्वा..' इति मातृकाद्वयेप्ययं भागः त्रुटितः ।

६. 'इति भावः' -पां ।

**कृस्नुप्रत्यय इति** ।। कित्वात् 'सार्वधातुकार्धधातुकयोः'(**पा.सू.७.३.८४**) इति गुणाभावे 'इण् कोः'(**पा.सू.८.३.५७**) इति षत्वे 'रषाभ्यां नो णः'(**पा.सू.८.४.१**) इति णत्वे विष्णुरिति रूपमिति भावः ।।

**क्नुः इति**[1]।। कित्वात्'पुगन्तलघूपदस्य च'(पा.सू. ७.३.८६) इति गुणाभावे,णत्वे च रूपम् ।। **षकार इति** ।। तथाच 'रषाभ्यां नो णः' (पा.सू. ८.४.१) इति णत्वे रूपमिति भावः। निरुक्तिबलात् प्राप्तेकारस्य 'पुगन्त' इति गुणाभावो विधिबलादेवेत्यर्थः ।।

**कान्तीति** ।। इच्छापर्यायकान्त्यर्थकादित्यर्थः । **प्रागिति** ।। 'भूतानि शरीरजीवानधिकृत्य तदुपकारित्वेन स्थितम् । उत्पत्तिविनाशिवस्तु तदधिभूतम्' इत्यष्टमोक्तेरिति भावः ।। **वयतेरिति** ।। वाधातोरित्यर्थः ।। **वष्टेरिति** ।। वशधातोरित्यर्थः । **कान्त्यर्थादिति** उभयशेषो ज्ञेयः ।। **पूर्ववदिति** ।। वयतेः तसुः, वष्टेः क्नुरिति भावः ।। **प्रत्यय इति** ।। कृस्नुप्रत्यय इत्यर्थः ।। २१ ।।

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना[2] ।। २२ ।।**
**[3]रुद्राणां शङ्कर[4] श्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**[5]वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ।। २३ ।।**
**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**

---

१. मातृकाद्वयेपि 'इनिप्रत्यय इति ' इति लिखितम् ।

२. चेतनाशब्दार्थः- **ब्र.सू.भा.त.प्रका.२-४-१३** चेतसो बुद्धिः चेतना । भावदीपे- चेतस इति । 'बहुस्मरणशक्तिश्च चेतनेत्यभिधीयते' इति तत्रैव एकविंशाध्याये तात्पर्योक्तेः ।।

३. (अ)'मृगव्याधश्च शर्वश्च ऋषभध्वजपाक्यवान् । अहिर्बुध्न्यः पिनाकी च उमापतिः ..तथैव च ।। स्थाणुर्भवः कपाली च रुद्रास्त्वेकादश स्मृताः' ।। **मार्कण्डेय-सं**,३.१.६,१.७.

(आ) हरिवंशे-हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः । वृशाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ।। मृगव्याधश्च सर्पश्च कपाली च विशाम्पते।।(१.३.५१,५२.)

(इ) **गरुडपुराणे-पूर्वार्धे** ६.३५,३६ ।

४. (अ)'शङ्करोऽसि सदा देव ततः शङ्करतां गतः' हरिवंशे. ३.८८.४५ ।

(आ)शं सुखं करे यस्य सः, शं करोतीति वा' भा.टि. वि.४.४.१ ।

५. (अ)'धरो ध्रुवश्च सोमश्च आपश्चैवानिलो अनलः । प्रत्यूषश्च प्रभातश्च वसवः शान्तवर्चसः ।। मार्कण्डेय-सं.३.१.५.

**सेनानीनामहं स्कन्दः[1] सरसामस्मि सागरः ॥ २४ ॥**

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**

**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

( कपिलशब्दार्थः )

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।**

**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**

**भाष्यम् —** सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः ।

'प्रीतिः सुखं कम् आनन्दः' इत्यभिधानात् ।

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति च ।

'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैः बिभर्ति जायमानं च पश्येत् ।

सुखादनन्तात् पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरन्ति'[2]

इति च बाभ्रव्यशाखायाम् ॥ २६ ॥

**प्रमेयदीपिका**

**'सिद्धानां कपिलो मुनिः'** इति कपिलशब्दं व्याचष्टे– सुखेति ॥ सुखरूप इति कः । पाल्यते जगदनेनेति पिः । 'पा रक्षणे'**(पा.धा.१०९६)** इत्यतः किः । लीयते जगदनेनेति लः । 'लीङ् श्लेषणे'[3] **(पा.धा.११३९)**इत्यस्मात् डः, 'ला आदाने'**(पा.धा.१०९८)** इत्यतो वा कः । ततः कर्मधारयः । कशब्दस्य सुखवाचित्वेऽभिधानं प्रयोगं च पठति – प्रीतिरिति ॥

समग्रार्थे श्रुतिमाह– ऋषिमिति ॥ तं भगवन्तम् ऋषिं कपिलं च पश्येत् (जानीयादित्यर्थः)[4]।

---

१. 'स्कन्दनात् जलशोषणात् स्कन्दः । स्कन्दान्तर्गतत्वेन च्युतत्वात् स्कन्दः । 'स्कन्नत्वात् स्कन्दतां प्राप्तः' इति भारतदानधर्मपर्वोक्तेः ।' यु.का.१०७.८ सत्यधर्मीये ।

२. न्यायसुधायां रचनानुपपत्त्यधिकरणे- साङ्ख्यशास्त्रे उदाहियमाणेयं श्रुतिः न प्रसिद्धकपिलपरा, किन्तु भगवदवतारपरैव इति समर्थनायोदाहृतम् । द्रं-सम्पुटम्-१४- पृ.६६१०)

३. अत्र सर्वपुस्तकेषु 'ली श्लेषणे' इत्येव पठ्यते । परमयं क्र्यादिप्रकरणे पठितः परस्मैपदी एव, नात्मनेपदीति लीङ् धातुराश्रितः ।

४ अयं भागः मातृकायां 'पश्येत्' इत्यत्र हंसपादेन चिन्हित्वा लिखितः।

कथमृषिः सर्वज्ञत्वादित्युच्यते । यः **प्रसूतं** पूर्वकल्पेषु जातम् । जायमानं वर्तमानं च,एवमागामि च जगत् **ज्ञानैः विभर्ति** जानातीति यावत् । कथं कपिलः? इत्यत उक्तम् – **सुखादिति** ।। 'यत्' शब्दद्वयस्य **तम्** इत्यनेनान्वयः ।। २६ ।।

**भावदीपः**

**किरिति** ।। कित्वात् 'आतो लोपः (इटि च)' **(पा.सू.६.४.२४)** इति वेत्यकारलोप इति भावः ।। **ड इति** ।। डित्वात् टिलोपः ।। **क इति** ।। आतो लोपे रूपमिति भावः । कश्चासौ पिश्चासौ लश्चेति कर्मधारय इत्यर्थः ।। २६ ।।

**[1]उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ।। २७ ।।[2]**
**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।**
**प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ।। २८ ।।**
**[3]अनन्तश्चास्मि नागानां[4] वरुणो यादसामहम् ।**
**पितृणामर्यमा चास्मि यमः संयमतामहम् ।। २९ ।।**
**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्[5] ।**

---

१. 'उच्चैःश्रवशब्दपर्यायो उच्चैःश्रवसशब्दः' रामा.उत्तर.अधिकपाठे,२सर्गे,५श्लो,व्या,सत्यधर्मीये ।

२. वासुदेवसहस्रनाम्नि -अश्वत्थादिनाम भगवत एव प्रसिद्धम् ।
तद्यथा- प्रल्हादो दैत्यराट् शशी ।। शुक्रः कवीश्वरः ।। २८५ ।। महर्षिराड् भृगुः,विष्णुरादित्येशः.. ।... शङ्करो रुद्रराट् ।। २८६ ।। विद्वत्तमश्चित्ररथो गन्धर्वाग्र्यो ..।। २८७ ।। नारदः देवर्षिराट् ,पाण्डवाग्र्यो अर्जुनः, वादः प्रवादराट् । पवनः पवनेशानो, वरुणो यादसां पतिः ।। २८८ ।। गङ्गा तीर्थोत्तमम्, द्यूतं छलकाग्र्यम् । सुदर्शनः अस्त्र्याग्र्यम्, वज्रं प्रहरणोत्तम् ।। २८९ ।। उच्चैःश्रवा वाजिराज ऐरावत इभेश्वरः ।। अश्वत्थः अशेषवृक्षराट् ।। २९० ।। अध्यात्मविद्या विद्याग्र्यः, प्रणवः छन्दसां वरः । मेरुः गिरिपतिः, मार्गः मासाग्र्यः ।। २९१ ।। पूर्वसिद्धः कपिलः सामवेदराट् । ऋत्व्याग्र्यो वसन्तः ।। २९२ ।। कल्पपादपः दातृश्रेष्ठः कामधेनुः ।। २९३ ।। सिंहो मृगेन्द्रः,नागेन्द्रो वासुकिः,नृवरो नृपः । वर्णेशो ब्राह्मणः ।। २९४ ।। वा.स.ना ।।

३. 'अनन्तः स्वमारकमृत्युरहितः'-४.११.४९ भा.टि.वि ।

४. हरिवंशे-हरिवंशपर्वणि -३-११२,११३,११४,११५.नागानामुल्लेखः ।

५. 'यमः कालो मनुष्याणां तस्य कालः सुदर्शनः । तस्यापि कालो रुद्रस्तु 'इति भा.ता.निर्णये ।

**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्  ॥ ३० ॥**

**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।**

**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी  ॥ ३१ ॥**

**भाष्यम् —** आनन्दरूपत्वात्[1] पूर्णत्वात् लोकरमणत्वाच्च **रामः**[2]

**'आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद्रमते तेन रामः'**

**इति शाण्डिल्यशाखायाम् ।**

**रश्च अमश्चेति व्युत्पत्तिः ॥ ३१ ॥**

### प्रमेयदीपिका

**'रामः शस्त्रभृतामहम्'** इति रामशब्दं व्याख्याति– **आनन्देति** ॥ आनन्दरूपत्वात् पूर्णत्वात् इत्येकोऽर्थः । रमत इति रः । 'रमु क्रीडायाम्' (**पा.धा.८५३**)इत्यतो 'ञमन्ताड्डः' इति डः । न विद्यते मा प्रमा परिच्छेदो अस्येति अमः । **'लोक'** इत्यपरोऽर्थः । रमतेः घञ् । अत्र श्रुतिमाह– **आनन्देति** ॥ आद्येऽर्थे विग्रहं दर्शयति– **रश्चेति** ॥ रश्चासावमश्चेत्यर्थः[3]॥

### भावदीपः

**ञमन्तादिति** ॥ ञमिति ञमङणन इति पञ्चवर्णाः उच्यन्ते । 'ञमन्तात्[4] शब्दात् डप्रत्ययः' इति सूत्रार्थः । डित्वात् टिलोपः ॥ **घञिति** ॥ 'अकर्तरि च कारके सञ्ज्ञायाम्'(**पा.सू.३.३.१९**) इति करणे घञि सति 'अत उपधायाः'(**पा.सू.७.२.११६**)इति वृद्धौ रामेति रूपमिति भावः॥३१॥

---

१. (अ)भं-मातृकायां पूर्णत्वात् इत्ययमंशः नास्ति ।

(आ) सुमतीन्द्रतीर्थश्रीमच्चरणैः मन्त्ररत्नकोशे राममन्त्रव्याख्याने 'पूर्णत्वात्' इत्यंशः नादृतः ।

२. (अ)'रमया नित्युक्ततावाद्राम इत्यभिधीयते । श्रियो मनोरमो योऽसौ स राम इति विश्रुतः' ॥

वृद्धहारीतस्मतौ ६.२५०,२५२

(आ)रामशब्दार्थः श्रीसत्यपरायणतीर्थैः स्वीयरामशब्दार्थरत्नमालायां निरुक्ता ।

३. (अ) सुमतीन्द्रतीर्थश्रीमच्चरणैः मन्त्ररत्नकोशे राममन्त्रव्याख्याने इमानि वाक्यान्युदाहृत्य अन्ते रामशब्दप्रवृत्तिनिमित्तमेवमभिहितम् । 'ततश्च रामशब्दे आनन्दरूपत्वदेशकालगुणापरिच्छेदरूपपूर्णत्वे सल्लोकरमणकारयितृत्वं चेति प्रवृत्तिनिमित्तानि ॥

४. 'तदन्तात्' इति पां ।

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥
[1]अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥
बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहम् ऋतूनां कुसुमाकरः ॥ ३५ ॥
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।[2]
जयोऽस्मि [3]व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः[4] ॥ ३७ ॥

**भाष्यम्** — आच्छादयति सर्वं वासयति वसति च सर्वत्रेति वासुः । देवशब्दार्थ उक्तः पुरस्तात् ।

'छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम्'

(म.भा.१२.३४१.४१) इति मोक्षधर्मे[5]।

---

१. 'अकार एव सर्वेषामक्षराणां हि कारणम् । अकारो वै सर्वा वागित्यादिश्रुतिवचस्तथा ।
तस्मादकारो वै विष्णुः श्रीश एव जगत्पतिः ' ॥ वृद्धहारीतस्मृतौ-६-६८..७२ ।

२. 'ज्वलनार्केन्दुताराणां ज्योतिषां दिव्यमूर्तिमान् । यस्तेजयति तेजांसि तस्मै तेजात्मने नमः' भी.रा.७५।

३. व्यवसायः निश्चयः । सुधा-३-४-१६(पृ-५१३.५) ।

४. 'स एव शुक्रसंस्थस्तु नीतीः कवयति स्वयम् । यतः कविः स.'॥ बृ.भा.३.५.४.

५. (अ) महाभारते अर्जुनं प्रति भगवद्वचनम् ।
(आ)'सर्वभूताधिवासं च यद्भूतेषु वसत्यधि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः तदस्म्यहं वासुदेवः'
इति -ब्रह्मबिन्दूपनिषत् -२२ ।

## प्रमेयदीपिका

**'वृष्णीनां वासुदेवोऽस्मि'** इति वासुदेवशब्दं व्याचिकीर्षुः वासुशब्दार्थं तावदाह– **आच्छादयतीति** ।। 'वस आच्छादने'**(पा.धा.१०२३)** इत्यत उण् । वासयति सर्वमिति वर्तते । 'वस निवासे' **(पा.धा.१००५)** इत्यतो ण्यन्तादुण् । **'वसति च'** इति केवलादुणेव । ततः किमायातं वासुदेवशब्दस्य? इत्यत आह– **देवेति** ।। तथा हि **'देवशब्दार्थम्'** इत्यत्र । ततः कर्मधारयः । **विश्वं समस्तं भूत्वा** प्राप्य । 'भू प्राप्तौ **(पा.धा.१८४५)**आत्मनेपदी' इति वचनात्[१] । **सर्वभूताधिवासश्चेति** तत्पुरुषो बहुव्रीहिश्च । अत्रापि देवशब्दार्थो ग्राह्यः ।।

## भावदीपः

**उणिति** ।। 'उणादयो बहुलम्' **(पा.सू.३.३.१)** इति सूत्रात् अण्प्रत्यये उपधावृद्धौ रूपमिति भावः । ण्यन्तात् उण् इति 'णेरनिटि' **(पा.सू.६.४.५१)** इति णिलोपे रूपम् । **केवलादिति** ।। अण्यन्तादित्यर्थः । **तथेहापीति** ।। अष्टमे **(८.८)** **'दिव्यम्'** इत्यस्य 'सृष्ट्यादिक्रीडादियुक्तम्, दिवु क्रीडा इति धातोः' इति भाष्यकृदुक्तेः । तथेहापि देवशब्दार्थो ग्राह्य इत्युक्तं भवति ।। **भू प्राप्ताविति** ।। भूधातुः प्राप्त्यर्थकःआत्मनेपदीति वचनार्थः ।। **तत्पुरुषो बहुव्रीहिश्चेति** । सर्वभूतानामधिवासः आश्रयः, सर्वभूतानि अधिवासः आश्रयो यस्य स इति भावः ।। **अत्रापीति** ।। मोक्षधर्मवाक्येऽपीत्यर्थः ।।

**भाष्यम् —विशिष्टः सर्वस्मात् आ समन्तात् गतः[२] स एवेति व्यासः ।**

**तथा चाग्निवेश्यशाखायाम्–**

**'स व्यासो वीति तमप् वै विः सोऽधस्तात् स उत्तरतः**
**स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरत इति' इति ।**
**'यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'[३]**

**(म.ना.उ.१३.५) इति च ।। ३७ ।।**

---

१. सि.कौ. ३- भागः,पृ-४०६।

२. 'गतः' इति भं मातृकायामेव पाठः टीकानुगुणः । प्रचलितपाठेषु 'गतः' इति नास्ति ।

३. 'यच्च किञ्चिज्जगत् श्रूयते दृश्यते, अपि च दर्शनविषयभूतमतीतानागतं च तत्सर्वं जगत् अन्तर्बहिश्च व्याप्य सार्वत्रिकसम्बन्धेन नारायणः स्थितः' इति धीरेन्द्रीये ।

**प्रमेयदीपिका**

**'मुनीनामप्यहं व्यासः'** इति ।। व्यासशब्दं व्याचष्टे– **विशिष्ट** इति ।। [1]'सर्वस्मात् विशिष्टः' इति विशब्दार्थः । **'आ'** इत्यनुवादेन **'समन्तात्'** इति व्याख्यानम् । **'सः'** इत्यस्य **'स एव'** इति । **'सृ गतौ'** (पा.धा.९३५)**'सृप्लृ गतौ'** (पा.धा.९८३)इत्यतो वा डे रूपमेतत् । न तु तदः । व्यासमित्याद्यनुपपत्तेः । **समन्ताद् गतः** सर्वगत इत्यर्थः । स व्यासः । कुतः? **वीति** हेतोः । कोऽर्थः । तमपो अर्थो हि विशब्दः । **उत्तरतः** उपरिष्टात् । **'यच्च किञ्चित्'** इति भगवतः सर्वगतत्वे प्रमाणम् ।। ३७ ।।

**भावदीपः**

**डे रूपमिति** ।। डित्वात् टिलोपे सति स इति रूपम्, व्यासमित्यर्थः । **नतु तद इति** ।। तच्छब्दस्य रूपं नत्वित्यर्थः । कुतः? इत्यत आह– **व्यासमित्याद्यनुपपत्तेरिति** ।। व्यासं, व्यासेन, व्यासस्मै, व्यासस्मात् इत्यादि स्यादित्यर्थः । गत्यर्थधातुजत्वे फलितमाह– **आ समन्तादित्यादि** ।। श्रुत्यर्थमाह– **स व्यास इति** ।। **उपरिष्ठादिति** ।। तथाच चरमस्य उत्तरत इति [2]न पुनरुक्ततादोष इति भावः ।। ३७ ।।

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**[3]मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ।। ३८ ।।**
**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ।। ३९ ।।**
**नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।[4]**

---

१. (अ) सुमतीन्द्रतीर्थश्रीमच्चरणैः मन्त्ररत्नकोशे वेदव्यासमन्त्रव्याख्याने इमानि वचनान्युदाहृतानि । 'सर्वस्मात्' इति स्थाने 'विश्वस्मात्' इति पाठः तत्र दृश्यते ।

२ 'अपुनरुक्तिता दोष ' इति क ।

३. सनत्सुजातीये 'मौनं ब्रह्मज्ञानम्' इति श्रीवादिराजतीर्थाः ।

४ 'इदानीं रामस्य विभूति रूपाणि वक्तुं तद्विभूतीनां'नान्तोस्ति..परन्तप' इत्यायुक्तरीत्या अनन्तत्वेन सामस्त्येन वक्तुमशक्यत्वात् प्राधान्येनाह-ऋतधामेति । वसूनां मध्ये ऋतधामा नाम वसुः । विभूतिरूपेण तत्र सन्निहित इत्यर्थः । एवमुत्र । अष्टमः महादेवाख्यः कैलासवासी शङ्को अत्र विवक्षितः । रामा.युद्ध. सत्यधर्मीये-६.१२०.७ ।।

**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

**भाष्यम् —** मया विना यद्भूतं स्यात् तन्नास्ति ।

'विश्वरूप अनन्तगते[1] अनन्तभाग अनन्तग[2] अनन्त (अनादे)[3]'

(म.भा.१२.३३८.१२९/१३३) इत्यादि मोक्षधर्मे ॥ ४० ॥

**प्रमेयदीपिका**

**'न तदस्ति विना'** इत्यत्र पदानां व्यवहितत्वादन्वयमाह– **मयेति** ॥ भगवतो अनन्तै रूपैः । सर्वपदार्थव्यापित्वे प्रमाणमाह– **विश्वेति** ॥ विश्वं रूपं प्रतिमा यस्यासौ **विश्वरूपः** । अनन्तानां गतिः आश्रयः **अनन्तगतिः** । अनन्ता भागाः अवताराः यस्यासौ **अनन्तभागः** । अनन्तान् पदार्थान् गतः **अनन्तगः** । **अनन्तः** कालाद्यपरिच्छिन्नः[4] ॥ ४० ॥

**( भगवद्विभूतिविस्तारः )**

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥ ४१ ॥[5]**

**भाष्यम् —** यद्यद्विभूतिमदिति विस्तरः । विष्ण्वादीनि तत्स्वरूपाण्येव । अन्यानि तु तेजोयुक्तानि । तथाच पैङ्गिखिलेषु–

---

१. नारदस्तुतिरियम् । 'गते' इति सम्बोधनान्तः मातृकायाम् । अयमेव महाभरते । गतिः इति प्रचलितपाठः।

२. अत्र महाभारते अयं शब्दः न पठ्यते ।

३. अनन्त इति भारते न पठ्यते ।

४ 'ब्रह्म वा इदमग्र आसीत् एको अनन्तः प्रागनन्तो दक्षिणतोऽनन्तः प्रतीच्योऽनन्त उदीच्योऽनन्त उद्धर्वश्चावाङ् च सर्वतोऽनन्तो न ह्यस्य प्राच्यादिदिशः कल्पन्तेऽथ तिर्यगवाङ् चोद्धर्वं वाऽनूह्य एष परमात्माऽपरिमितो योऽजोऽतर्क्योऽचिन्त्यः' इति मैत्रायणीये आरण्यके ६.१७ ।

५ हरिवंशे ३.८८. 'प्रणवः सर्ववेदानां गायत्री च्छन्दसां प्रभो ॥ ५४ ॥
अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः । रुद्राणामहमेवासि वसूनां पावको भवान् ॥ ५५ ॥
अश्वत्थो वृक्षजातीनां ब्रह्मा लोकगुरुर्भवान् । मेरुस्त्वं पर्वतेन्द्राणां देवर्षीणां च नारदः ॥ ५६ ॥
दानवानां भवान् दैत्यः प्रह्लादो भक्तवत्सलः । सर्पाणामेव सर्वेषां भवान् वासुकिसञ्ज्ञितः ॥ ५७ ॥
गुह्यकानां च सर्वेषां भवान् धनद एव च। वरुणो यादसां राजा गङ्गा त्रिपथगा भवान् ' इति ॥

'विशेषका रुद्रवैन्येन्द्रदेवराजन्याद्या अंशयुताऽन्यजीवाः ।
कृष्णव्यासौ रामकृष्णौ च रामकपिलौ यज्ञप्रमुखाः स्वयं सः'[१]

इति ।

'स एवैको भार्गवदाशरथिकृष्णाद्यास्त्वंशयुताऽन्यजीवाः'

इति गौतमखिलेषु ।

'ऋषयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ।। (भाग.१.३.२७,२८)
एते स्वांशकला पुंसः कृष्णस्तु भगवान् स्वयम्'[२]

इति भागवते ऋष्यादीन् अंशयुतत्वेनोक्त्वा वराहादीन् स्वरूपत्वेनाह ।।

## प्रमेयदीपिका

**'एष तूद्देशतः'** (१०.४०) इति 'एतत्'शब्दोऽनुक्रान्तपरामर्शी इतिप्रतीतिनिरासार्थम् आह- **यद्यदिति** ।। वक्ष्यमाणं बुद्धिस्थमेतच्छब्देन परामृश्यते । [३]शृङ्गग्राहिकयोक्तेरपि लक्षणोक्तेर्विस्तरत्वादिति भावः ।। विभूतिमदादिकं मम तेजोरूपेणांशेन सह भवतीत्युक्त्या

---

१. 'देवराजन्याद्याः' इति 'कृष्णः व्यासो' 'रामकपिलौ' इति भं मातृकापाठः । कुम्भकोणीयेपि ।

२. (अ)'इदानीं प्रतिबिम्बांशानाह- ऋषय इति ।। मनुपुत्राः प्रियव्रतादयः, प्रजापतिभिर्दक्षादिभिः सहिता एते ऋषयः हरेः कलाः भिन्नांशाः स्मृताः स्मृतिषु उक्ताः ।। २७ ।।
तर्हि के स्वरूपांशा इत्यत आह-एत इति । 'स एव प्रथमम्' इत्यारभ्य 'अथासौ' इत्यन्तेन प्रोक्ता एते शेषशायिनः परमपुरुषस्य स्वांशकलाः स्वरूपांशवताराः । न तत्रांशिनोर्भेदः । प्रतिबिम्बांशवत् । किमुक्तं भवति। कृष्णो मेघश्यामः शेषशायी मूलरूपी पद्मनाभो भगवान् स्वयं तु स्वयमेव । न शाखिशिखावत् भेदाभेदोपीति भावेनाऽह-इन्द्रारीति । इन्द्रारिभिर्दैत्यैः व्याकुलं जनं तत्स्थानं च युगेयुगे अवतीर्य मृडयन्ति रक्षन्तीत्यन्वयः ।।' इति विजयध्वजतीर्थाः ।।
(आ) इमौ ब्र.सू.भा.२.३.४३.उदाहृतौ । त.प्रकाशिका-'एते परमपुरुषस्य स्वरूपांशविभागाः स्वयं कृष्णो भगवान् मूलरूप्येव ।वराहादयो लोकं मृडयन्ति'।।

३. (अ)प्रमाणलक्षणभावदीपे–'भृङ्गग्राहिकयेति । भृङ्गग्रहणेनेत्यर्थः । 'ग्रह उपादाने' इत्यतः 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति ण्वुल्प्रत्ययस्य अकादेशे 'ग्राहिका' इति रूपसिद्धेरिति भावः'।।
(आ) 'भृङ्गग्राहिकयेति । धात्वर्थनिर्देशे ण्वुल् वक्तव्य इति रूपम् । भृङ्गग्रहणेनेत्यर्थः'
त.प्र.३.३.३भावदीपे ।

विष्ण्वादीनाम् अपि भगवदंशयुक्तत्वं प्रतीयते । तेषामप्येतल्लक्षणोपेतत्वात् । तन्निवृत्त्यर्थ-माह– **विष्ण्वा-दीनीति** ।। तर्हि किं विषयमेतद्वाक्यम्? इत्यत आह– **अन्यानि त्विति** ।।

कुत एतत्? इत्यत आह– **तथा चेति** ।। **विशेषकाः** गरुडानन्तविरिञ्चाः । **वैन्यः** पृथुः[1]। **राजन्यग्रहणेन** गृहीतस्यापि पुनरुक्तिः साक्षाद् अवतारत्वविशेषोक्तिबाधनार्थम् । **कृष्णः** धर्मसूनुरपि । **रामः** भार्गवोऽपि । अंशयुक्तत्वेनोक्त्वा **'कलाः'** इत्यनेन कला इव कलाः । न[2] स्वरूपत्वेन । **'एते स्वांशकलाः'** इत्यनेन स्वरूपांशरूपा एव कलाः । नतु पूर्ववदुपचारेणेति ।।

**भावदीपः**

**भृङ्गग्राहिकयेति** ।। 'आदित्यानामहं विष्णुः' इत्यादि[3]व्यक्तिविशेषोक्तितोऽपि **'यद्यद् विभूतिमत्'** इति लक्षणोक्तेरनेकसङ्ग्राहकत्वादिति भावः ।। **किं विषयमेतद्वाक्यमिति**।। **'यद्यत्'** इति वाक्यम् ।। **धर्मसूनुरपीति** ।। वासुदेवः कृष्णः 'अपि'पदार्थः ।। **भार्गवोऽपीति** ।। दशरथरामोऽपिपदार्थसमुच्चेयः[4]।। **उक्तत्वेनेति** भाष्ये 'केन' इत्याकाङ्क्षां पूरयति– **कला इत्यनेनेति** ।। तेन तदर्थलाभप्रकारमाह- **कला इव कला इति** ।। **'स्वरूपत्वेनाह'** इति भाष्ये 'केन' इत्याकाङ्क्षां पूरयति– **स्वांशकला इत्यनेनेति** ।। तदर्थमाह–**स्वरूपांश एवेत्यादि** ।।

**भाष्यम् — तुशब्द एवार्थे । अन्यस्तु विशेषो न कुत्राप्यवगतः । अंशत्वं तत्राप्यवगतम् -**

**'उद्बबर्हात्मनः केशौ'** [5](वि.पु.५.१.५९) । **'मृडयन्ति'**(भाग)

**इति च बहुवचनं चायुक्तम् । न ह्यन्तराऽन्यदुक्त्वा पूर्वमपरामृश्य तत्क्रियोच्यमाना दृष्टा कुत्रचित् ।। ४१ ।।**

---

१. (अ)'आविवेश पृथुं देवः शङ्खी चक्री चतुर्भुजः'।

(आ) आविष्टा हरिणा जीवाः ब्रह्मा दक्षो मनुः पृथुः।शक्राद्या ऋषयश्चैव मत्स्यव्यासादयो हरिः' भा.ता.४.९.७.

२. भं -मातृकायां 'न' इति नास्ति । स्वरूपत्वेन इत्येव ।

३. अयं सो मातृकायामेव । '-दिनोक्तिविशेषतोपि' इति का मातृकायाम् ।

४. 'समुच्चेय' इति सो गातृकायामेव ।

५. 'एवं संस्तूयमानस्तु भगवान् परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महामुने'

इति गीताप्रेसपुस्तके उपलभ्यमानपाठः ।

## प्रमेयदीपिका

नन्वत्र 'एते वराहाद्याः परमपुरुषस्यांशा एव । कृष्णस्त्वंशी भगवान् स्वयमिति प्रतीयते । तत्कथमुक्तव्याख्यानम्? अन्यथा तुशब्दानुपपत्तेरित्यत आह– **तुशब्द** इति ।। ततश्चायमर्थः । **एते** वराहाद्याः **पुंसः स्वांशकलाः** । कोऽर्थः?. **कृष्णः** परमपुरुषो **भगवान् स्वयमेव** एत इति । कुत एतत्? इति चेद् उदाहृतश्रुतिसंवादात् । अर्थान्तरस्य संवादाभावाच्चेत्याह– **अन्यस्त्विति** ।। वराहादयो अंशाः । कृष्णोंऽशी इत्येवं रूपः । इतोऽप्ययं विशेषो न युक्त इत्याह– **अंशत्वमिति** ।।

**तत्रापि** कृष्णेऽपि । किञ्चास्मिन् व्याख्याने कृष्णस्यैकस्यैव प्रकृतत्वात् । **'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगेयुगे'** इत्युत्तरवाक्ये बहुवचनं नोपपन्नमित्याह– **मृडयन्तीति** ।। ननु बहुवचनं पूर्वोक्तैर्वराहादिभिः सम्बद्ध्यते । न कृष्णेनेति चेन्न । **'कृष्णस्तु भगवान् स्वयम्'** इति वाक्यार्थेन व्यवहितत्वात् । व्यवहितस्यापि पुनः सन्निधानाय परामर्शाभावात्। सति गत्यन्तरेऽध्याहारायोगात् । असन्निहितेनान्वयबोधस्य काप्यदर्शनादिति भावेनाऽह– **न हीति** ।। **'क्रिया'** इति प्रकृतापेक्षयोक्तम् ।। ननु सन्निधेरपि योग्यता बलवतीति चेत् - सत्यम् । सन्निधिमनतिक्रम्य योग्यान्वयस्तूक्तः ।। ४१ ।।

## भावदीपः

**'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे'** इति वाक्यात् पूर्वं 'एते वराहाद्याः' इत्यध्याहारेणास्तु परामर्श इत्यत आह– **सति गत्यन्तर इति** ।। प्रागुक्तदिशेति भावः ।। 'क्रिया' इत्युक्त्या क्रियान्यधर्मान्तरं वक्तुं शक्यमिति भ्रमनिरासायाऽह– **क्रियेति** ।। **प्रकृतापेक्षयोक्तमिति** ।। **'मृडयन्ति'** इति क्रियाया एवात्र प्रकृतत्वादित्यर्थः ।। ४१ ।।

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।। ४२ ।।**[1]

**।। ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ।। १० ।।**

---

१. वि.त.नि.भावदीपे- 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' 'न त्वेवाहं जातु नासम्' इत्यादिना ईशावरस्य सर्वगतत्वसिद्धेः' इति पृ-९४५(मा.रा.सं.स)

**भाष्यम् — 'किम्'** इति वक्ष्यमाणप्राधान्यज्ञापनार्थम् । न तूक्तनिष्फलत्वज्ञापनाय । तथासति नोच्येत ।

'अज्ञात्वैनं सर्वविशेषयुक्तं देवं वरं को विमुच्येत बन्धात्'

इति ऋग्वेदखिलेषु ।

## प्रमेयदीपिका

**'अथवा बहुनैतेन किं ज्ञातेन'** इति पूर्वोक्तव्यस्तज्ञानाक्षेपात् तस्य निष्फलत्वमिति प्रतीतिनिरासार्थमाह– **किमिति** ।। किमित्ययमाक्षेपो वक्ष्यमाणसर्वव्याप्तरूपज्ञानस्य उक्तरविप्रभृतिपरिच्छन्नवस्तुस्वरूपज्ञानापेक्षया प्राधान्यज्ञापनार्थमेव न तूक्तविशेषज्ञानस्य निष्फलत्वज्ञापनार्थम् । निष्फलत्वे तदुक्तिवैयर्थ्यापत्तिरित्यर्थः ।।

ननु व्याप्तिज्ञानेनैव मुक्तिसम्भवाद् विशेषज्ञानं व्यर्थमेव किं न स्यात्? इत्यत आह– **अज्ञात्वेति** ।।

**'प्रियशिरस्त्वाद्यप्राप्तिः'**[१] **(ब्र.सू.३.३.१३)**

इत्यादिकं ध्यानापेक्षयोक्तम् । ज्ञानापेक्षया तु श्रुतिरित्यविरोधः । अथवा विशिष्टाधिकारिविषयेयं श्रुतिः ।।

## भावदीपः

**व्यस्तेति** ।। व्यासो विस्तारः विस्तरेणोक्तविभूतिज्ञानापेक्षादित्यर्थः ।। 'आदित्यानामहं विष्णुः' इत्यादिनोक्तविष्ण्वादिज्ञानापेक्षयेति भ्रमनिरासायाऽह– **उक्तरविप्रभृतीति** ।। ननु **'तस्य प्रियमेव शिरः'** इत्याद्युक्तप्रियशिरस्त्वसम्भृतिद्युव्याप्त्यादेरसर्वाधिकारिकत्वस्य सूत्रकृदुक्तेः कथम् **'अज्ञात्वैनं'** इति श्रुतिः? इत्यत आह– **प्रियशिरस्त्वादीति** ।। **विशिष्टाधि-**

---

१. 'अत्र प्रियशिरस्त्वादिगुणानां सर्वोपास्यता नेत्युच्यते । प्रियशिरस्त्वादिशब्दः तदुपास्तिपरः । भेद इति निमित्तसप्तमी । प्रधानस्येत्यस्ति । 'तस्य प्रियमेव शिरः' इत्याद्युक्तप्रियशिरस्त्वादिगुणोपास्तिप्राप्तिः न सर्वेषाम् । कुतः? प्रधानस्य मोक्षाख्यफलस्य भेदे भेदार्थं, तारतम्यार्थम् । उपचयापचयौ। प्रस्तावाद् गुणोपासनाया इत्यन्वेति । गुणोपासनाया उपचयापचयौ वृद्धिह्रासौ, तारतम्यमिति यावत्, उपेयावित्यर्थः । हिर्हेतौ । यस्मादेवं तस्मादिति । 'आनन्दस्य मीमांसा भवति' इत्यादि श्रुतिसिद्धफलभेदप्रसिद्धिद्योतका वा । भेद इत्युक्त्या 'नैव सर्वे गुणाः सर्वैरुपास्या मुक्तिभेदतः' इति स्मृतिः सूचता । अप्राप्तिरित्युक्त्या योग्यताऽपि तावतीति सूचितम् ।।' तन्त्रदीपिकायां राघवेन्द्रतीर्थाः ।

**कारीति** ।। उत्तमेत्यर्थः ।। **'यो माम्'** इत्युक्तसर्वत्रहरिदर्शनस्य कथं प्राधान्यलाभः? इत्यत आह– **विशिष्टेति** ।।

**'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि'**(६.३०)
इति षष्ठे व्याप्तिज्ञानस्य योगक्षेमादिविशिष्टफलोक्तेरित्यर्थः ।।

**भाष्यम् — त्वं तु बहुफलप्राप्तियोग्य इति 'तव' इति विशेषणम् । अन्यस्तुत्यर्थत्वेन प्रसिद्धश्चैकत्र किंशब्दः ।**

**'रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ।**
**तावुभौ यदि न स्यातां तपसा किं प्रयोजनम् '** इत्यादौ ।

**प्राधान्यं च सिद्धमेकत्र दर्शनात् सर्वत्र भगवद्दर्शनस्य 'यो मां पश्यति सर्वत्र' (६.३०) इत्यादौ ।। ४२ ।।**

## प्रमेयदीपिका

ननु व्याप्तज्ञानयोग्यानां विशेषज्ञानं निष्फलमेव । अन्यान् प्रति तु तदुक्तिरिति व्यवस्थाऽस्तु । 'तव' इति विशेषणसामर्थ्यादित्यत आह– **त्वं त्विति** ।। 'अतो न तव विशेषज्ञानमात्रेणालमिति ज्ञापयितुम्' इति शेषः । विशेषणस्यान्यथासिद्धत्वात् नोक्तव्यवस्थाकल्पकत्वमिति भावः ।।

ननु किं ज्ञातेन? न किमपीति शब्दादुक्तस्य नैष्फल्ये प्रतीते तदुक्तिवैयर्थ्यप्रसङ्गाद् बाधकात् निष्फलाल्पफलयोः महाफलत्वाभावसादृश्याद् गौण्या वृत्त्या उक्तस्य अप्राधान्यप्रतीतौ अर्थाद्वक्ष्यमाणस्य **'प्राधान्यप्रतीतिः'** इत्युक्तम् । तत्र गौणप्रयोगे प्रयोजनं वाच्यमिति चेन्न । रूढोपचारत्वादिति भावेनाऽह– **अन्येति** ।। **स्तुतिः** प्रशस्तताज्ञापनम् । अर्थः प्रयोजनम् ।।

स्यादिदं व्याख्यानं यदि परिच्छिन्नज्ञानात् व्याप्तज्ञानस्य प्राधान्यं प्रमितं स्यात् । तदेव कुतः? इत्यत आह– **प्राधान्यं चेति** ।। 'यो माम्' इति विशिष्टफलकथनात् । न्यायसिद्धोऽप्यर्थो वाक्यसम्मत्या दृढो भवतीत्येतदुक्तम् ।। ४२ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां श्रीजयतीर्थमुनिविरचितायां प्रमेयदीपिकायां दशमोऽध्यायः समाप्तः ।।१० ।।**

**भावदीपः**

**न्यायेति** ।। आक्षेपार्थक किंशब्दप्रतीतौ अन्यथासिद्धप्राधान्यरूपः **न्यायसिद्धोऽप्यर्थो 'यो माम्'** इति वाक्यसम्मत्या दृढो भवतीति प्राधान्यं सिद्धम् इत्याद्युक्तम् इत्यर्थः ।। ४२ ।।

।। इति **श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते दशमोऽध्यायः** ।।

# ।। अथ श्रीमद्भगवद्गीतायाम् एकादशोऽध्यायः ।।

( एकादशाध्यायार्थनिरूपणम् )

**भाष्यम्-** यथा श्रुते ध्यानं शक्यं तथा स्वरूपस्थितिरनेनाध्यायेनोच्यते ।।

**प्रमेयदीपिका**

एतदध्यायप्रतिपाद्यमर्थमाह– **यथेति** ।। दशमान्ते **'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्'** (१०.४२) इति व्याप्तोपासनं सङ्क्षेपेणोक्तम् । नच सङ्क्षेपेणोक्तस्य[१] ध्यानं शक्यम्, बुद्धावनारोहात् । अतो **यथा**भूते व्याप्तरूपे[२] विस्तरेण **श्रुते ध्यानं शक्यं** भवति । **तथा**भूत**स्वरूपस्थिति**रर्जुनाय प्रदर्शितस्यानुवादेन **अनेन** एकादशाध्यायेनोच्यते । **स्वरूप**-ग्रहणेन विश्वरूपस्य मायादिना तदैव निर्माय विसृष्टत्वं निवारयति ।।

**भावदीपः**

**तथाभूतस्वरूपस्थितिरिति** ।। अस्य 'उच्यते' इत्यनेनान्वयः ।। [३]**'अनुवादेन'** इति अध्यायविशेषणम् ।।

(अर्जुनकृतविश्वरूपदर्शनप्रार्थना )

**अर्जुन उवाच–**

**मदनुग्रहाय परमं गुह्यमध्यात्मसञ्ज्ञितम् ।**
**यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ।। १ ।।**
**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ।। २ ।।**
**एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ।। ३ ।।**

---

१. **'सङ्क्षेपोक्तस्य'** गुज-पां ।
२. **'व्याप्ते रूपे'** गुज-पां ।
३. 'अननेति । अनुवादेत्यध्यायविशेषणम्' इति का -मातृकापाठः ।

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयाऽत्मानमव्ययम् ॥ ४ ॥**

**भाष्यम् —** प्रभुः समर्थः ।

'नास्ति तस्मात् परं भूतं पुरुषाद् वै सनातनात्'

(म.भा.१२.३३९.३) इति मोक्षधर्मे ।

'प्रभुरीशः समर्थश्च'[१] इत्याद्यभिधानम् ॥ ४ ॥

**प्रमेयदीपिका**

**'मन्यसे यदि'** इत्यत्र प्रभुशब्दो न स्वामित्वमात्रार्थः[२] । किन्तु तवातिसामर्थ्यात् त्वत्-सामर्थ्येनैवातीन्द्रियस्यापि दर्शनमिति भावेन प्रयुक्त इत्याशयेनाह[३]– प्रभुरिति ॥ ईश्वरस्य निरतिशयसामर्थ्ये प्रमाणमाह– नास्तीति ॥ भूतं समर्थम् । प्रभुशब्दस्य समर्थार्थत्वेऽभिधानमाह– प्रभुरिति ॥ ४ ॥

( भगवता विश्वरूपदर्शनविधानम् )

**श्रीभगवानुवाच–**

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**[४]
**पश्याऽदित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याऽश्चर्याणि भारत ॥ ६ ॥**

---

१. 'समर्थेऽधिपतौ प्रभुः' इति समाख्याकोशः ।

२. 'प्रभो स्वामिन्' इति शाङ्करभाष्यम् २ भाग.पृ २७२ ।

३. इत्याशयवानाह' -मातृकायां-पाठान्तरम् ।

४. न्यायामृते ब्रह्मणो निराकारत्वभङ्गे - 'एतेन ब्रह्मणो निराकारत्वमपि निरस्तम् । 'पश्य मे ..सहस्रशः' 'सर्वतः पाणि..मुखम्' इत्यादिस्मृतिभिः, तदनुगृहीतैः 'ब्रह्म सविग्रहं स्रष्टुत्वात्, पालयितृत्वात् , वेदोपदेष्टुत्वात् ' इत्याद्यनुमानैश्चाकारसिद्धेः' ॥

आ) तात्पर्यचन्द्रिकायां गुहाधिकरणे-

इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ७ ॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्[१] ॥ ८ ॥

सञ्जय उवाच–

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

भाष्यम्- हरिः सर्वयज्ञादिभागहारित्वात् ।
'[२]इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः'
इति मोक्षधर्मे (म.भा.१२.३४२.६८)॥९ ॥

### प्रमेयदीपिका

'**महायोगेश्वरो हरिः**' इत्यत्र हरिशब्दस्य प्रकृतोपयुक्तमर्थमाह– हरिरिति ॥ गेहेषु इष्टि[३] गेहेषु । हरतेरिकारप्रत्ययः । **श्रेष्ठः** अप्राकृतः । अप्राकृतविग्रहस्य साकारस्यैवानन्तपूजा-स्थानेषु स्वरूपेणैव युगपत् सन्निधाने किं वक्तव्यं महायोगेश्वरत्वमिति ॥ ९ ॥

### भावदीपः

प्रकृतोपयुक्तमिति ॥ महायोगेश्वरत्वोपपादकत्वमित्यर्थ इति भावः ॥ [४]हरतेरिति ॥ 'हृञ्

१. (अ)'पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम् ।
सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्' इति भागवते ।
(आ)योगिज्ञानस्य साक्षात्कारत्वे प्रमाणतया सुधायां -१.२.२अयं श्लोक उदाहृतः ।
२. 'इडोपहूतो' .. 'हरेर्भागम्' इति च गुजपाठः । इळोपहूतयोगेन हरे भागं क्रतुष्वहम् । वर्णश्च मे हरिः श्रेष्ठः तस्माद्धरिरहं स्मृतः ॥'हरिनाम निर्वक्ति-इलेति । इळोपहूता सह दिवा इत्यादि मन्त्रेणाहूतः अहं तदयोगात् यज्ञभागं हरे हरणं कुर्वे । अतः अहं हरित्यर्थः' इति नीलकण्ठीये ।
३, 'गृहेषु'-प्र.गुज ।
४, अत्र का.मं मातृके त्रुटिते । सो मातृकायाम् 'इकार इति' इति प्रतीको दृश्यते । 'हरिरिति' इत्यन्यत्र ।

हरणे' (पा.धा.८९९) इत्यतः 'सार्वधातुकार्धधातुकयोः' (पा.सू.७.३.८४) इति गुणे रपरत्वे च हरिरिति रूपमिति भावः ।। ९ ।।

( विश्वरूपवर्णनम् )

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ।। १० ।।**
**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ।। ११ ।।**

**भाष्यम् — सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् ।। ११ ।।**

**प्रमेयदीपिका**

'सर्वाश्चर्यमयम्' इति **केनचित्**[१] प्राचुर्यार्थो मयड्व्याख्यातः । तदसत् । सर्वशब्देन गतार्थत्वादिति भावेनाऽह– **सर्वेति** ।। मयटस्तादात्म्यार्थत्वे प्रमाणमुक्तमेव ।। ११ ।।

**भावदीपः**

प्रमाणमुक्तमिति ।।

'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा'(७.१३)

इत्युक्तं सप्तमाध्याय इत्यर्थः ।। ११ ।।

( विश्वरूपमनन्तसूर्योपमप्रभम् )

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**[२]

---

१, 'सर्वाश्चर्यप्रायम्' इति शाङ्करभाष्ये ,२ भाग.पृ-२७८ ।

२. अत्र दण्डिमते अद्भुतोपमालङ्कारः । आह च तत्वालोके 'यदिपदसमभिव्याहृतेन स्यादित्यनेन तादृशी भा नास्तीत्यस्य निगरणादविद्यमानाध्यवसाय उपमानस्य । तत उपमानाभावाच्चोपमाभावपरात्, यदि तादृशी भाः, सा सदृशी स्यादित्यतो अविद्यमानस्वरूपभूतोपमात्मिकातिशयोक्तिर्गम्यमाना ' न स्यात्' ततोपि नूनं विश्वरूपस्यैव भा अतिरिच्येतेत्यहं मन्य इत्युत्प्रेक्षां व्यञ्जयन्ती परमतात्पर्यविषयनिरुपमत्वमेव व्यनक्ति' इति ।।

**द्वैतसिद्धान्ते** तु अभूतोपमेयम् । यथाहुः ब्र.सू.(३.४.९)भाष्यदीपिकायां जगन्नाथतीर्थाः-'व्यत्यासो

**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥**

**भाष्यम् — सहस्रशब्दोऽनन्तवाची । तदपि 'पाकशासनविक्रम' इत्यादिवत् प्रत्यायनार्थमेव । तथा हि ऋग्वेदखिलेषु–**

**'अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि' इति ।**

**महातात्पर्याच्च प्राबल्यम् । नच परिमाणोक्त्या किञ्चित् प्रयोजनम् ॥ १२ ॥**

**प्रमेयदीपिका**

'दिवि सूर्यसहस्रस्य' इति विश्वरूपस्य सहस्रसूर्योपमप्रभत्वमुच्यते । तत्र सहस्रशब्दो दशशतवाचीति [1]प्रतीतिनिरासार्थमाह– **सहस्रेति** ॥ अनन्तसूर्योपमप्रभत्वमपि भगवतो न वास्तवम् । निरुपमत्वात् । किं तर्हीत्यत आह– **तदपीति** ॥ [2]**प्रत्यायनार्थं** बुद्धिप्रवेशनार्थम् एव उच्यते । यथा भगवतो दाशरथेः पाकशासनोपमपराक्रमत्वमित्यर्थः ॥

सहस्रशब्दस्य प्रसिद्धार्थपरित्यागः कुतः?[3] इत्यत आह– **तथा हीति** ॥ **ततस्ततः** 'सूर्यादेरपि विलक्षणः' इति शेषः । कुतः श्रुत्या गीतावाक्यस्य बाधः? इति चेत् । '**शतं सहस्रम् इत्यपरिमितनामानि**' इति गीतावाक्यस्य सावकाशत्वेन दौर्बल्यात् । श्रुतेः निरवकाशत्वेन प्राबल्यात् ॥

इतश्च श्रुतेः प्राबल्यमित्याह– **महातात्पर्याच्चेति** ॥ समस्तागमानां महाप्रयोजनाय यद्भगवति महातात्पर्यं श्रुतेस्तदानुकूल्याद् गीतावाक्यस्य तत्प्रातिकूल्यादित्यर्थः । कथं गीतावाक्यस्य तत्प्रातिकूल्यम् ? इति चेत् । किं भगवतः परिमितप्रभत्वमेव वस्तुतः? उतापरिमितप्रभस्याऽप्यत्र सहस्रसूर्योपमप्रभत्वमुच्यते? नाद्यः । सकलश्रुतिस्मृतीतिहास-पुराणविरोधात् । द्वितीये त्वपरिमितस्य परिमाणोक्त्या किञ्चिदपि प्रयोजनं न सिद्ध्यति । कुतो महत्? इत्याह– **नचेति** ॥ १२ ॥

---

अनन्वयश्चैव प्रसिद्धोऽभूत एव च । सर्वसांहारिकश्चेति दृष्टान्तः पञ्चधा स्मृतः ।' तत्र अभूतस्य - 'दिवि सूर्यसहस्रस्य' इत्याद्युदाहरणम् ॥

(आ) त.प्र.भावदीपेप्युल्लिखितम् ।

१. शाङ्करभाष्यभावानुवादः । २ भाग. पृ-२८१ ।

२. 'प्रत्यायनं विश्वासकरणमित्यर्थः '-कथालक्षणभावदीपे (पृ-२७६) ।

३. गुज,वेग्रं । 'कथम् '-पां ।

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तथा ॥ १३ ॥
ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

( अर्जुनकृतविश्वरूपस्तुतिः )

अर्जुन उवाच–

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसन् ।
ब्रह्माणमीशं कमलासनस्थमृर्षींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥
अनेकबाहूदरवक्त्रनेत्रं पश्यामि
त्वां सर्वतोऽनन्तरूपम् ।
[1]नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप[2]॥ १६ ॥

भाष्यम् — अनेकशब्दोऽनन्तवाची ।

'अनन्तबाहुम्' इति च स्वयं[3] वक्ष्यति ।
'सर्वतः पाणिपादं तत्' इत्यादि च[4] ।

'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः'
इति [5]ऋग्वेदे (१०.८१.३)।

---

१. 'न चादिं न मध्यं तथा चैव नान्तं कदाचिद्विदन्ते हि सुरासुराश्च ।
अनाद्यो ह्यविद्यस्तथा चाप्यनन्तः प्रगीतोहमीशो विभुर्लोकसाक्षी' इति म.भा.१२.३४९.९० ॥
२. 'विश्वरूपं यशश्चेति नाम्ना विष्णू रमा तथा ।
वायुश्च संस्थिता नित्यं सर्वेषां दक्षिणाक्षिगाः' बृ.उ.भा.४.२.३ ।
३. गुज, भं.मा । प्रभ पाठे स्वयम् इति नास्ति ।
४. टीकानुगुणः । 'च' इति प्र नास्ति ।
५. 'ऋग्वेदे' इति प्रभ., मं मातृकायाम् । गुज 'ऋग्वेदखिलेषु' इति ।

[1]"विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः'

(म.ना.उ.१४) इति यजुर्वेदे च ।

### प्रमेयदीपिका

**'अनेकबाहूदरवक्त्रनेत्रम्'** इत्यत्रानेकशब्दस्य द्व्यादौ पर्यवसानाद्[2] विवक्षितमर्थमाह- **अनेकेति** ।। अनेन **'अनेकवक्त्रनयनम्'** इत्यपि व्याख्यातम् । कुत एतत्? इत्यत आह- **अनन्तेति** ।। 'सर्वतः' इत्यस्यार्थः तात्पर्यनिर्णयेऽवगन्तव्यः । इत्यादि च वक्ष्यति । **बाहुभ्यां** प्रधानाभ्यां **पतत्रैः** पतत्रसदृशैरितरबाहुभिः **सं धमति** अग्न्यादिभूतानि संयोजयतीति प्रत्येकमन्वयः । **सं नमति** इत्यस्याप्ययमेवार्थः ।।

### भावदीपः

**तात्पर्यनिर्णय इति ।।**

'सर्वतः पाणिपादादिः यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ।।
अणोरणुतरैरूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान्'

इत्यनेन त्रयोदशोक्तादवगन्तव्य इत्यर्थः । **'इत्यादि च'** इति भाष्ये **'वक्ष्यति'** इत्यनुषङ्गमाह-

---

१. 'प्रागुक्तविश्वरूपत्वं किञ्चिद्विशयति- विश्वतश्चक्षुरिति ।। विश्वतः सर्वत्र विद्यमानं चक्षुर्नयनं ज्ञानं वा यस्य स तथोक्तः । विश्वदर्शीति वा । उत अपि च । विश्वतो मुखो विश्वतो बाहुश्च सर्वत्र विद्यमानमुखबाह्वादिमान् । 'विश्वतो हस्त' इति याजुषपाठे हस्तः सर्वत्र विद्यमानविस्तृतकरः। 'प्रकोष्ठे विस्तृतकरे हस्तः' इति कोशात् । उत अपि च । विश्वतस्पात् सर्वत्र विद्यमानपादः । 'अनन्तशीर्षोऽनन्तबाहुः' इति श्रुतेः । ' सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमिखम्' इति गीतावचनाच। स विश्वरूपो हरिः ,द्यावापृथिवी प्रसिद्धे तदुपलक्षितचतुर्दशभुवनानि तत्स्थप्राणिनश्च जनयन् उत्पादयन् एकः समभ्यधिकरहितो मुख्यश्च देवः परमात्मा सं सम्यक् बाहुभ्यां दोर्भ्यां पतत्रैः पक्षैश्च सन्नमति । अन्तर्णीतर्णिच् । वशीकरोतीत्यर्थः । 'विश्वतश्चक्षुः' इति ऋङ्मन्त्रसमाख्यानाच । यद्वा स्वबाहुभ्यां पतत्रैर्गरुडपक्षैश्च सन्नमति वशीकरोतीति यावत् । अनया ऋचा विश्वरूपत्वं सर्वनियन्तृत्वं च भगवतः प्रतिपादितम् ।। ' इति धीरेन्द्रीये ।।

२. 'अनेके बहवः' इति शाङ्करभाष्ये । २-भाग, पृ २८५ ।

इत्यादि च वक्ष्यतीति ।। प्रत्येकमिति ।। 'बाहुभ्यां संधमति' 'पतत्रैः संधमति' इति प्रत्येकमित्यर्थः ।।

**भाष्यम्** — **विश्वशब्दश्चानन्तवाची ।**

**'सर्वं समस्तं विश्वं चानन्तं पूर्णमेव च'**[१]

**इत्यभिधानात् ।**

[२]**'अनन्तपादं तमनन्तबाहुमनन्तवक्त्रं पुरुरूपमेकम्'**

**इति च बाभ्रव्यशाखायाम् ।**

**महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति । अन्यथा 'अनादिमत्परं ब्रह्म'** (१३.१२) **इत्याद्ययुक्तं स्यात् । एकत्र** [३]**त्वनन्तान्यस्य रूपाणीत्यनन्तरूपः। अन्यत्र त्वपरिमाण इति । उक्तं ह्युभयमपि ।।**

**'परात् परं यन्महतो महान्तम् । यदेकमव्यक्तमनन्तरूपम्'**[४]

(म.ना.उ.९) **इति यजुर्वेदे ।।**

**प्रमेयदीपिका**

एतयोर्मन्त्रयोः प्रकृतानुपयोगादयुक्तमुदाहरणमित्यत आह– **विश्वशब्दश्चेति** ।। तथाच प्रथमार्थे तसिरित्युक्तं भवति ।।

---

१. 'जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यते' इति -भा.ता.नि. ४.२०.२०।

२. अत्रायं पाठान्तरत्वेन 'पुरुषं रूपमेकम् ' इति पाठव्यत्यासेन गुज पुस्तके मुद्रितः । 'इदं लिखितपुरातन-पुस्तके पाठान्तरम् । चिन्त्यमेतत् सुधीभिः' इति । 'अनन्तबाहुमनन्तपादमनन्तरूपं पुरुवक्त्रमेकम्' इति गुज मूले । इयं श्रुतिः विजयध्वजीये ५.१७.१८ उदाहृता ।

३. 'तु' इति प्रभपाठे नास्ति । परन्तु टीकानुगुणो तुशब्दः ।

४. 'अतः परं नान्यदणीयस ँहि परात्परं यन्महतो महान्तम् ।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ' इति पूर्णो मन्त्रः।
मन्त्रार्थस्तु - अतः परब्रह्मणो अन्यत् परमुत्तमं नास्ति । अणीयसं चान्यत्परं तस्मादणुरूपं चान्यन्नास्ति। यत् यच्च परात्परमुत्कृष्टं श्रीब्रह्मादिसकलचेतनादुत्कृष्टं महतो महत्परिमाणादव्याकृताकाशात् , महत्तत्त्वाद्वा यन्महान्तं महत् परममहत्परिमाणं यदेकं स्वगतभेदशून्यं केवलं वा । अव्यक्तं सर्वथा व्यक्तीकर्तुमशक्यम् । अनन्तरूपम् अजिताद्यनन्तावतारम् । विश्वं पूर्णम् ....' अनया ऋचा परमात्मनो अणोरणीयस्त्व,महतो महीयस्त्व,परात्परत्व,निर्भेदत्वादयो अनेके महिमानो वर्णिताः' इति धीरेन्द्रीये ।।

स्पष्टार्थां चात्र श्रुतिमाह– **अनन्तपादमिति** ।। यदि भगवान् अनन्तबाह्वादिः तदा परममहत्परिमाणः स्यात् । अन्यथा तदयोगात् । नच तद्युक्तम् । **'रूपं महत्ते'** (११.२३) इति महत्त्वमात्रोक्तेः । तथा **'बहुवक्त्रनेत्रम्'** इति बहुत्वमात्रोक्तेः, अनन्तबाह्वादित्वोक्तिश्चानुपपन्नेत्यत आह– **महत्त्वादिति** ।। स्यादयं विरोधो यदि भगवद्रूपस्य महत्त्वमात्रं तदवयवानां च बहुत्वमात्रमुच्येत । न चैवम् । अवच्छेदकाश्रवणात्। महत्त्वबहुत्वोक्तिस्तु परममहत्त्वात्मकत्वेनानन्तावयवत्वेन च सह सम्भवति । परममहति महत्त्वस्यानन्ते च बहुत्वस्यान्तर्भावादित्यर्थः ।।

अवच्छेदकानुक्तावप्यवान्तरमहत्त्वादिग्रहणे को दोषः? इत्यत आह– **अन्यथेति** ।। तत्र परममहत्त्वस्यानन्तावयवत्वस्य चोक्तेरिति भावः । **'पश्यामि त्वा सर्वतोऽनन्तरूपं त्वया ततं विश्वमनन्तरूप'**(११.३८) इति अनन्तशब्दद्वयस्य माहात्म्यातिशयसूचनायार्थ-भेदमाह– **एकत्र त्विति** ।। अपरिमाणः अपरिच्छिन्न[१] इति अनन्तरूप इति सम्बन्धः ।।

स्यादिदं व्याख्यानं, यदीदं द्वयं प्रामाणिकं स्यादित्यत आह– **उक्तं हीति** ।। **महान्तं** महत् । **'महतो महान्तम्'** इति 'अनन्तमपरिच्छिन्नपरिमाणं रूपमस्य'इत्युक्तार्थे प्रमाणम् । **एकम्** अभिन्नमपि । **अनन्तरूपमिति** अनन्तान्यसङ्ख्यान्यस्य रूपाणि इत्यत्र ।।

## भावदीपः

**प्रकृतेति** ।। अनेकशब्दोऽनन्तत्ववाचीति प्रकृतार्थेत्यर्थः। । (इत्यादि च इति भाष्ये)[२] ।। **विश्वशब्दश्चेतीति** ।। उदाहृतश्रुतिद्वयगत इति ज्ञेयम् ।। **अवच्छेदकेति** ।। महत्तत्त्वतोऽहङ्कारादितत्त्वतो वा त्रिगुणं चतुर्गुणमित्यादिरूपेण वा, 'पृथिव्या ज्यायान् नु दिवो ज्यायान्' इत्यादिरूपेणावच्छेदकाश्रवणादित्यर्थः ।। **तत्रेति** ।। **'अनादिमत्परं ब्रह्म'** इत्याद्युक्तिप्रकरणे[३] **'बहिरन्तश्च भूतानाम्'** इति परममहत्त्वस्य, 'सर्वतः पाणिपादं तत् **सर्वतोक्षिशिरो मुखम्'** इति प्रकृत्याः[४] अनन्तावयवत्वस्य त्रयोदशोक्तेरित्यर्थः । **'महान्तम्'** इत्यस्य रूपविशेषणत्वादाह– **महान्तं महदिति** ।। **इत्यत्रेति** ।। 'प्रमाणम्' इत्यनुषङ्गः।।

---

१. अत्र भं-मातृकायां 'इयत्तानवच्छिन्नपरिमाणः' इति हंसपादं चिह्नित्वा अर्थो लिखितः ।
२. कंसान्तर्गतभागः सो मातृकायामेव । अनन्वित इति भाति ।।
३. 'इत्याद्युदाहरणे' इति का -मातृकायाम् ।
४. सो मातृकायां नास्ति ।

( अव्यक्तमपि अनन्तम् )

**भाष्यम् —** अव्यक्तस्यानन्तत्वादेव महतो[१] महत्त्वेऽपरिमितत्वं सिद्ध्यति ।

'महान्तं च समावृत्य प्रधानं समवस्थितम् ।
अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते'

इत्यादित्यपुराणे ।

तानि चैकैकानि रूपाण्यनन्तानीति चैकत्र भवति[२] ।

**प्रमेयदीपिका**

ननु **'महतो महान्तम्'** इति महत्तत्त्वात् महत्त्वमेवोच्यते । न त्वनन्तत्वम् । ततश्च **'यदेक-मव्यक्तम्'** इत्यव्यक्तव्यापित्ववचनात् तत्साम्यमेव सिद्ध्यति इत्यत आह– **अव्यक्तस्येति** ।। **महतो महत्त्वे** अव्यक्तव्यापित्वे चेत्यपि ग्राह्यम् ।।

अव्यक्तस्यानन्तत्वं कुत इत्यत आह– **महान्तं चेति** ।। **अनन्तस्य** विष्णोः प्रतिमाभूतस्य **तस्य अन्तः** परिमाणं[३] परिच्छेदः कार्यतः **सङ्ख्यानं** सङ्ख्यापरिच्छेदोऽ**पि न विद्यते** ।

प्रकारान्तरेणानन्तरूपशब्दद्वयस्यार्थभेदमाह–**तानि चेति** ।। एकस्यानन्तरूपशब्दस्यानन्त सङ्ख्यारूपार्थत्वे स्थिते सति **एकत्र** अनन्तरूपशब्दे । **तानि च** अनन्तसङ्ख्यानि **रूपाणि** प्र त्येकमपरिच्छिन्नपरिमाणानीत्यर्थो **भवती**त्यर्थः ।।

**भाष्यम् —**

'असङ्ख्याताः ज्ञानकास्तस्य देहाः सर्वे परीमाणविवर्जिताश्च'

इति हि ऋग्वेदखिलेषु ।

'यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः ।
उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते ।

---

१. **'महतः'** ति वे-ग्रं नास्ति । 'अपरिमितत्वम्' इत्यत्र 'अपरिमेयत्वम् च' इति भं-मा ।

२. **'भवन्ति'** इति प्रचलितपाठः टीकाननुगुणः ।

३. 'परिमाणपरि' इति समस्तपदं भं-मा ।

उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ''[1] (छां.उ.८.१.३) इति च ।

'कृष्णस्य गर्भजगतोऽतिभरावसन्न-

पार्ष्णिप्रहारपरिरुग्णफणातपत्रम्'[2] (भाग.१०.१४.३१)

इति च भागवते ।

## प्रमेयदीपिका

अत्र प्रमाणमाह– **असङ्ख्याता** इति ।। **ज्ञानकाः** ज्ञानानन्दात्मकाः ।। **अयं** बहिर्व्याप्तः **आकाशः** परमात्मा **यावान्** यावत्परिमाणः **तावान्** एव **एषः अन्तर्हृदये** स्थितः परमात्मा इत्यर्थः ।। गर्भे जठरे जगद्यस्यासौ तथोक्तः । **अवसन्नः** अवनतः । गर्भजगत्त्वेन अपरिच्छिन्नपरिमाणत्वं लभ्यते ।।

## ( अचिन्त्यशक्तिमान् ईश्वरः )

**भाष्यम् — न च तदयुक्तम् । अचिन्त्यशक्तित्वाद् ईश्वरस्य ।**

**'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्'[3]**

**इति च श्रीविष्णुपुराणे[4] ।**

---

१. 'अन्तर्हृदये हृय्यत इति हृदयशब्दोक्ते पुण्डरीकवेश्मस्थदहराकाशे अन्तः आकाशः आ समन्तात् काशते दीप्यत इति वा आ समन्तात् कं सुखमश्नातीति वा आकाशनामा हरिर्वर्तत इति किन्नामकमित्यस्योत्तरं ब्रूयात् । अयं बाह्यः बहिर्विज्ञानः आकाशनामा हरिर्यावान् देशकालगुणैर्यावद् व्याप्तिमान् तावानेष हृत्पुण्डरीकस्थाकाशगतो हरिरिति किंमहिमक इत्यस्योत्तरं ब्रूयादित्यर्थः । तस्य सर्वाधारत्त्वादिमहिमान्तरं चाह- उभे अस्मिन्निति । हृत्पद्मस्थभूताकाशगते आकाशाख्ये हरावित्यर्थः । न्यायविवरणादौ तु अन्तर्हृदय इत्यतः पूर्वं तस्येति शेषः । यो भगवान् अन्वेष्टव्यतयोक्तः किम्भूतः स इति पृष्टश्च तस्य हरेर्हृदये यावान् वा अयमाकाशस्तावान् सर्वोप्याकाशो विद्यते । अस्मिन्नुभे इत्यादि इत्युक्तम् । अत्र यावावृथिव्यादिशब्देन तदभिमानिग्रहः । उभे इत्युक्तिः मुक्तामुक्तरूपवर्गद्वयग्रहणाय ।' इति छां.खं.राघवेन्द्रीये ।

२. 'गर्भे जगद्यस्य स गर्भजगत् । तस्य कृष्णस्य अतिभरेण अवसन्नाः पीडिताः, पार्ष्णेः पादपृष्ठभागस्य प्रहारैः परि परितो रुग्णा भाश्च ताः फणाश्च पार्ष्णिप्रहारपिरुग्णफणाः, अतिभरावसन्नाश्च ताः पार्ष्णिप्रहारपरिरुग्णफणाश्च अतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणाः, ता एवातपत्राणि यय तम् ।' इति विजयध्वजतीर्थाः ।।

३. ब्र.सू. २.१.२९ भाष्ये विशेषो द्रष्टव्यः ,तत्त्वप्रकाशिकाशिकायामुदाहृतं च ।

४. अयं वायुपुराणे पूर्वार्धे (३४.अ.८. श्लो) पठितः । विष्णुपुराणे नोपलभ्यते । महाभारते उद्योगपर्वणि च ।

**'नैषा तर्केण मतिरापनेया'**[१] **(कठ.१.२.९)** **इति श्रुतिः ।**

### प्रमेयदीपिका

कृष्णादीनामप्यपरिच्छिन्नपरिमाणत्वं वदन्तो वक्तव्याः । या तत्राल्पपरिमाणप्रतीतिः [२]सा किं भ्रान्तिरुत प्रमितिरिति । तत्र आद्ये क्रियादेः द्विभुजचतुर्भुजा(त्वा)देश्च मिथ्यात्वं स्यात् ।।

न द्वितीयः । युगपदेकत्राल्पानल्पपरिमाणसमावेशस्यायुक्तत्वात् । अतोऽपरिच्छिन्नपरिमाणोक्तिरुपचारमात्रमिति चेत् - किमिदमनेकपरिमाणत्वस्यायुक्तत्वं किमन्यत्रादर्शनेन असम्भावितत्वम्, उत 'नायमल्पानल्पपरिमाणोपेतो द्रव्यत्वात्' 'नायं परममहत्-परिमाणोऽल्पपरिमाणत्वात् पटवत्' इत्यादियुक्तिविरुद्धत्वम्, अथातिप्रसङ्गदुष्टत्वम्, किंवा अप्रामाणिकत्वम् ? नाद्य इत्याह– **न चेति** ।। अघटितघटनाशक्त्युपेते किं नामासम्भावितमिति भावः ।। न द्वितीयः । ईश्वरस्य युक्त्यगोचरत्वेन तदनवकाशादिति भावेनाऽह– **अचिन्त्या** इति ।। एषा ब्रह्मविषया । **अपनेया** निराकार्या ।।

### भावदीपः

शङ्कते- **कृष्णादीनामिति** ।। **क्रियादेरिति** ।। गमनागमनगृहप्रवेशकटकाद्याभरणधारणादेरित्यर्थः ।। **अतिप्रसङ्गदुष्टत्वमति** ।। रणे 'बहिरन्तश्च भूतानाम्' इति परममहत्त्वस्य।। **अपाणिपादेति** ।। [३]विकल्पनानन्तरं विरुद्धधर्माणां भगवत्यश्रुतत्वमिति कल्प्येत ।।

---

१. (अ)**कथालक्षणटीका**- **'यस्मात् तत्वमतेरनुमानासाध्यतामाह'** । भावदीपः- 'तत्वमतेः तत्वज्ञानस्य इति श्रौतमतिशब्दार्थः । एषा तत्वमतिः तर्केण आनेया साध्या न भवति, अपनेया बाध्या च न भवति' इति।।

(आ)**विष्णु.त.नि.टीका**- **'आ''अप'इतिविरुद्धार्थयोरुपसर्गयोः क्रमेण सम्बन्धः । एषा परमात्मविषया मतिः शुष्कतर्केण आनेया उत्पाद्या,अपनेया निराकार्या च न भवति'** इति ।।

(इ)**काठकखण्डार्थे राघवेन्द्रीये**– **'एषा ब्रह्मगोचरा मतिः तर्केण । आ अप इतिच्छेदः'** इति ।।

**वेदेशीये**- **'एषा ब्रह्मविषया मतिः तर्केण केवलामुमानेन आनेया उत्पाद्या अपनेया निराकार्या च न भवति'** ।। **प्रकाशिकायाम्** - **'आ, अप' इति उपसर्गद्वयादिण्गताविति धातोश्च एषा मतिः आनेया अपनेया च नेत्यर्थः ।।'**

२. मातृकायाम् । अत्र प्र-पाठे 'या' ऽइति पठ्यते ।

३. अत्र का मातृकायां पत्रं छिन्नम् । इदं वाक्यं सो मातृकायां नास्ति । अतः अनन्वयः प्रतीयते । यथालब्धं यथामति निवेशितम् । महान्तः क्षाम्यन्तु ।

**भाष्यम् — अतिप्रसङ्गस्तु महातात्पर्यवशाद् वाक्यबलाच्चापनेयः ।**

**प्रमेयदीपिका**

अतिप्रसङ्गोऽपि 'किं यदीश्वरो विरुद्धपरिमाणद्वयोपेतः स्यात् तदा निर्दुःखो दुःखी च स्यात्' इतीश्वरमधिकृत्य स्यात् ? उत 'प्राणादयोऽपि तथा स्युः । ततश्च **'अणुश्च'**[१] **(ब्र.सू.२.४.१४)** इत्यादिका तद्विषयवाक्यव्यवस्था नाङ्गीक्रियते' इत्यन्यदधिकृत्य स्यात्? आद्यं दूषयति– **अतिप्रसङ्गस्त्विति** ।। अविशेषमाश्रित्य ह्ययमतिप्रसङ्गः । न चासावस्ति । निर्दोषानन्तगुणत्वे हरेः श्रुतीनां महातात्पर्येण दुःखादेः तद्विरोधात् परिमाणद्वयस्य तु तदविरोधाद् दुःखादेरप्रमाणिकत्वात् परिमाणद्वयस्य तूक्तवक्ष्यमाणवाक्यसिद्धत्वादिति भावः ।।

**भावदीपः**

**'अणुश्च' इत्यादिकेति** ।। [२]**'अणवश्च'** इत्यादिसूत्रग्रहः । **'अणुश्च'** इति सूत्रे **'प्राण एव अधस्तात्'** इति **'प्राणा एव अणवः'** इति प्राणव्याप्तत्वाणुत्वश्रुत्योः बाह्यान्तरवायु-रूपप्राणरूपविषयतया व्यवस्था उक्ता[३] । 'अणवश्च' **(ब्र.सू.२.४.८)** इति सूत्रे **'अणुभिः पश्यति'** इति **'दिवीव चक्षुराततम्'** इति श्रुत्या प्राणानामणुत्वव्याप्तत्वश्रुत्योः स्वरूपप्रकाशविषयतया व्यवस्थोक्तेत्यर्थः ।। **उक्तेति** ।। 'अनन्तरूप' इत्याद्युक्तवाक्येत्यर्थः । **वक्ष्यमाणेति** ।। **'व्याप्तं त्वयैकेन दिशश्च सर्वाः'** इत्यादिवक्ष्यमाणवाक्येत्यर्थः ।।

**भाष्यम् — नहि घटवत् कश्चिदपि पदार्थो न दृष्ट इत्येतावता प्रमाणदृष्टः सन् निराक्रियते । केषुचित् पदार्थेषु वाक्यव्यवस्थाऽचिन्त्यशक्तित्वाभावाद् अङ्गीक्रियते ।**

**[४]'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।**

---

१ 'अत्र श्रेष्ठस्याणुत्वानणुत्वश्रुत्यविरोध उच्यते । श्रेष्ठ इत्यस्ति । अणुश्च अणुर्व्याप्तश्चेति चार्थः । अन्तः प्राणरूपेणाणुः, वहिर्वायुरूपेण व्याप्त इति भावः । अतः 'प्राण एवाधस्तात्' इति श्रुतेः 'प्राणो वा अणुः' इति श्रुतेश्च न विरोध इति भावः ।।' **तन्त्रदीपिकायाम्** ।

२. इत आरभ्य 'उक्ता' इति पर्यन्तं का-मातृकायां नास्ति । सो-मातृकायां वर्तते ।

३. 'व्यवस्थोक्तत्वादित्यर्थः' इति का ।

४. **ब्र.सू.भा.२.१.३८.**उदाहृता । **त.प्रका–** 'सुविरुद्धाः लोकदृष्ट्या । अश्रुता अपि रमादिचिन्त्याः, तदचिन्त्याश्चेत्यर्थः' ।।

**चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः ।।[१]**
**एवं परेऽन्यत्र श्रुताश्रुतानां गुणागुणानां च क्रमाद् व्यवस्था'**
**इति जाबालखिलश्रुतिश्च ।**

**प्रमेयदीपिका**

विपर्ययापर्यवसायी चायं प्रसङ्ग इति भावेनाऽह– **नहीति** ।। यदि घटः पृथुबुध्नोदराकारः स्यात् तर्हि **पदार्थो न स्यात्** । तथाविधस्य पदार्थस्य कस्याप्यदृष्टत्वादिति प्रसङ्गो यथा न युक्तः । भवति च पदार्थः, तस्मात् पृथुबुध्नोदराकारो न भवतीति विपर्ययस्य प्रमाणब ाधितत्वेनापर्यवसानात् । तथात्वेन तस्य धर्मिग्राहकप्रमाणदृष्टत्वात् । तथा प्रकृतेऽपीति । एतेनानुमानानां कालात्ययापदिष्टत्वं चोक्तं भवति ।।

प्राणादिकमधिकृत्यातिप्रसङ्ग इति द्वितीयं निराकरोति– **केषुचिदिति** ।। अत्रापि सम्भावनाहेतुभाव-अभावाभ्यां विशेषादविशेषोऽसिद्ध इति भावः ।।

चतुर्थं निरस्यति– **गुणा** इति ।। **श्रुताः अश्रुताः** अपि **सुविरुद्धाः** अन्यत्र सह **अदृष्टाः** । **अविरुद्धाश्च** । तथा गुणा इव दोषाः श्रुताश्च अश्रुताश्च **नैव सन्ति** । किन्तु **अज्ञैः** मिथ्यादृष्टिभिः **हि तथा** सन्तीति **प्रतीताः** । **एवं परे** ईश्वरे स्थितिः । ततः **अन्यत्र** तु **श्रुताश्रुतानां** प्रमाणान्तरसिद्धानां च गुणादोषाणां **व्यवस्था** अवस्थानम् । तच्च **क्रमात्**

---

१. भाष्यदीपिकोक्तो श्रुत्यर्थः - वेदे 'श्रुता गुणाः' अणुत्वमहत्वादिशुभधर्माः 'सुविरुद्धाश्च' लोकदृष्ट्याऽतिविरुद्धाः अन्यत्र सहादृष्टा अपि 'देवे' हरौ सन्त्येव, न तु तेषां विरुद्धतया मिथ्यात्वं कल्पनीयमित्यर्थः । न केवलं विरुद्धा इत्यपिशब्दार्थः । एवं हरौ 'अश्रुताः' वेदानुक्ताश्च रमाचतुर्मुखवाणीचिन्त्या गुणास्सन्ति । तर्हि यावन्तो रमादिभिश्चिन्तयितुं शक्यन्ते तावन्त एव गुणाः किमित्यतो नेत्याह – अचिन्त्या इति ।। यथा रमादिभिश्चिन्त्यास्सन्ति, तथा तैरचिन्त्याश्च गुणाः सन्तीत्यर्थः । ननु यथा गुणाः श्रुताः चिन्त्या अचिन्त्याश्च देवे सन्ति तथा दोषा अपि किमित्यतो नेत्याह – दोषा इति ।। देवे दोषाः श्रुता एव न सन्ति, नापि चिन्त्याः, किमु पुनरचिन्त्या दोषा न सन्तीति वक्तव्यमित्यर्थः । ननु कथं न दोषाः श्रुताः 'जनितोऽत विष्णोः' इत्यादौ प्रतीतेरित्यत आह – अज्ञैरिति।। मिथ्यादृग्भिर्हि तथा श्रुता इति सन्तीति च प्रतीताः, न तु ज्ञानिनामित्यर्थः । अयं चार्थस्तत्त्वप्रदीप-न्यायदीपिकासूक्तः । न चाश्रुता रमादिचिन्त्याः सन्ति चेत् 'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्च न' इत्युक्तिविरोध इति वाच्यम् । सामान्यतः श्रुताः विशिष्याश्रुता इत्यर्थस्येह विवक्षितत्वेन विरोधाभावात् ।।

इयं च गीतातात्पर्योक्तरीत्या ऋग्वेदे सौपर्णशाखाश्रुतिः । गीताभाष्ये त्वियं जाबालिखिलश्रुतिरित्युक्तम् । सुपर्णदृष्टाया अपि श्रुतेर्जाबालिदृष्टत्वसम्भवादविरोधः ।।

उत्तमेषु गुणबाहुल्यं दोषाल्पत्वम्, मध्यमेषूभयसाम्यम्, अवरेषु दोषबाहुल्यं गुणाल्पत्वमिति । तदेवमसम्भावनाद्यभावान्न भगवत्यपरिच्छिन्नपरिमाणत्वोक्तेः उपचरितत्वं कल्प्यम् ।।

**भावदीपः**

**अत्रापीति** ।। ईश्वर इव प्राणादावप्यणुत्वमहत्वाभ्युपगमविषयेऽप्यचिन्त्यशक्तिकत्वरूप-सम्भावना हेतुभावाभावाभ्यामित्यर्थः ।।

**भाष्यम् — उपचारत्वपरिहाराय 'न मध्यम्' इति[1] । अन्यथा आद्यन्ताभावेनैव तत्सिद्धेः । विश्वरूपः पूर्णरूपः ।**

**'स विश्वरूपोऽनूनरूपो यतोऽयं**
**सोऽनन्तरूपो[2] न हि नाशोऽस्ति तस्य'**

**इति शाण्डिल्यशाखायाम् ।। १६ ।।**

**प्रमेयदीपिका**

अर्जुनेनापि तन्निराकृतमिति भावेनाऽह– **उपचारत्वेति** ।। **'नान्तं न पुनस्तवादिं पश्यामि'** इत्याद्यन्ताभावोक्तेरुपचरितत्वपरिहाराय **'न मध्यम्'** इत्युक्तम् । मध्य-निराकरणार्थमेव तत् किं न स्यादित्यत आह– **अन्यथेति** ।। उपचारत्वपरिहारार्थत्वाभावे । 'तद्वैयर्थ्यं स्यात्' इति शेषः । कुतः? आद्यन्तसापेक्षत्वात् मध्यस्य तदभावोक्त्यैव तदभावसिद्धेः ।'विश्वं महदादिकं रूपं स्वरूपमस्य' इति प्रतीतिं सप्रमाणकं निवारयति– **विश्वरूप** इति ।। एतच्चाभ्यासरूपमिति मन्तव्यम् ।। १६ ।।

**भावदीपः**

पूर्वोक्तानन्तरूपपदेन विश्वरूपपदस्यापौनरुक्त्याय तात्पर्यद्योतकाभ्यासोऽयम् इत्याह– **एतच्चेति** ।। **'विश्वरूप'** इति पुनर्वचनमभ्यासात्मकमित्यर्थः ।। १६ ।।

**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।**

---

१. 'उपचारत्वशङ्कामपाकरोति-न मध्यमिति' इति मातृकायां पठ्यते ।

२. मातृकायां, कुम्भकोणपाठे, गुज । 'सोऽनन्तो' इति प्रभ-पाठः ।

**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद् दीप्तानलार्कद्युतिमप्रमेयम्[1] ।।१७।।**

**भाष्यम् —अनलार्कद्युतिम् इत्युक्ते मितत्वशङ्कामपाकरोति – अप्रमेयमिति।।**

**प्रमेयदीपिका**

ननु '**अनलार्कद्युतिम्**' इत्युक्तत्वात् 'सहस्रशब्दोऽनन्तवाची' इत्याद्युक्तमयुक्तमिति चेन्न । एतदेवाऽऽशङ्क्य प्रत्यायनार्थमेवैतदुक्तम् । वस्तुतस्त्वपरिच्छिन्नद्युतिरेव भगवानिति स्वयमेवोक्तत्वादित्याह– **अनलेति** ।। **इत्युक्ते** जातां द्युतेः **मितत्वशङ्काम्** । एतच्च सविशेषणविशेषणत्वाद् द्युत्या सम्बद्ध्यते ।। १७ ।।

**भावदीपः**

**सहस्रेति** ।। 'दिवि सूर्यसहस्रस्य' इति गीतास्थसहस्रशब्दो अनन्तत्ववाची इत्यादि प्राग्-भाष्योक्तम् अयुक्तमित्यर्थः ।। **एतच्चेति** ।। अप्रमेयविशेषणत्वमित्यर्थः । **द्युत्येति** ।। 'सविशेषणे हि विधिनिषेधौ' इति न्यायात् । तथाच द्युतेर्मितत्वशङ्कानिरासो व्यक्त इति भावः ।। १७ ।।

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतधर्मगोप्ता[2] सनातनस्त्वं पुरुषो मतो मे ।। १८ ।।**
**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ।।१९ ।।**

( देवानां बहुरूपत्वाद् ब्रह्माश्रयत्वम् )

**भाष्यम् —** **'शशिसूर्यनेत्रम्'** इत्यपि

**'अहं क्रतुः'**(९.१६) इत्यादिवत् ।

---

१. (अ) **रामायणे सत्यधर्मीये युद्धकाण्डव्याख्याने-७-२२ 'दीप्तानलार्काद्युतिमप्रमेयम्' इत्यत्र प्रमेयदीपिकायाम् अप्रमेयत्वस्य द्युताविव महदित्यस्य..' इति गीता-प्रमेयदीपिके उदाहृते ।**

(आ ) भागवते ६.८.११ **सत्यधर्मीयेपि उदाहृतम् ।**

(इ) नीलकण्ठीये 'समन्तादीप्त..' इति समस्तं पदम् ।

२. 'सात्वतधर्मगोप्ता' इति अभिनवगुप्तपाठः ।

'तदङ्गजा सर्वसुरादयोऽपि तस्मात्तदङ्गेत्यृषिभिस्तुतास्ते'[१]

इति ऋग्वेदखिलेषु ।

'चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत' (ऋ.१०.९०.१३) इतिच ।

बहुरूपत्वाद् बह्वाश्रयत्वं (च) तेषां युक्तम् ।। १९ ।।

**प्रमेयदीपिका**

'**शशिसूर्यनेत्रम्**' इत्युक्तत्वात् कथं विश्वरूपशब्दस्यान्यथा व्याख्यानम्? इत्यत आह– **शशीति** ।। **इत्यादिवत्** व्याख्येयम् । जन्यजनकभावेन आश्रयाश्रयिभावेन वाऽभेदोक्तिः इत्यर्थः । कुत एतत्? इत्यत आह– **तदङ्गजा** इति ।। **तदङ्ग** इत्यविभक्तिको निर्देशः, सम्बुद्धिर्वा । अभेदे बाधकं चाह– **चन्द्रमा** इति ।। **चक्षोः** चक्षुषः । नन्वत्र चन्द्रमसो मनोजातत्वं तदाश्रयत्वं चोच्यते । गीतायां तु नेत्राश्रयत्वादि । तथाऽन्यत्र 'दंष्ट्रार्यमेन्दू' (भाग.२.१.३१)इति । तत्कुतो न विरोधः? इत्यत आह– **बह्विति**[२]।।१९ ।।

**भावदीपः**

अन्यत्र 'दंष्ट्रार्यमेन्दूडुगणा द्विजानि' इति द्वितीयस्कन्धे आद्येऽध्याये।। १९ ।।

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।[३]**
**दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ।।२०।।**

---

१. 'विष्णोरङ्गसमुद्भूतेर्विष्णोरङ्गानि देवताः । उच्यन्ते सर्ववेदेषु स्वरूपे भेदिनोऽपि तु' ।।
भा.ता.नि.उ१०.३८.१६ अध्यात्मवचनम् ।

२. एवमेव समाधानम् **आथर्वणे** 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इत्यत्रापि । तथाहि - 'नचात्र मुखादिन्द्रश्चाग्निश्च' इत्यादिविरोधः । बहुरूपत्वाङ्गीकारात् । यथोक्तं 'बह्वङ्गत्वं बहुत्वतः' इति **मह्वालीये** ।।
'न चाग्न्यादीनां तन्मूर्धाद्यैक्यमिहाभिप्रेतम् । जन्यजनकभावाख्यभेदप्रकरणत्वात् । 'ब्राह्मणोऽस्य मुखमासीत्' इतिवत्' इति **वामनतीर्थाः** ।।

३. (अ)'व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्यादि स्मृतिश्च ब्रह्मणो विभुदेशसम्बन्धेनैव विभुत्वमाह' **वियदधिकरणतात्पर्यचन्द्रिकायाम्** पृ-२६४.
( आ) 'पार्थदर्शनं च 'द्यावापृथिव्योः' इत्यादि तद्वाक्यागम्यते '-**सुधा**-१-१-६। व्याप्तत्वे अर्जुनप्रत्यक्षं **प्रमाणमाहेत्यर्थः** ।

( भगवन्मुखे मुक्तप्रवेशदर्शनम् )

**अमी हि त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ।।**
**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ।। २२ ।।**
**रूपं [1]महत् ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ।। २३ ।।**
**नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो।।२४**
**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ।। २५ ।।**

भगवन्मुखे सेनाद्वयप्रवेशः

**[2]अमी च त्वा धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ।। २६ ।।**
**वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ।। २७ ।।**
**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ।। २८ ।।**
**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ।। २९ ।।**

---

१. तेजोर्थ उत्तमार्थे च पूज्यार्थे च प्रयुज्यते । महच्छब्दो महःशब्दः' ४.७.४१ भाग.टी.वि ।
२. 'अमी सर्वे धृतराष्ट्रस्य पुत्राः सर्वैः' इति गुज-पाठः ।

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ।। ३० ।।**[1]

**भाष्यम्-** 'मातापित्रोरन्तरङ्गः स एकः रूपेण चान्यैः सर्वगतः स एकः'

इति वारुणश्रुतेः ।

एकेनैव द्यावापृथिव्योरन्तरं व्याप्तो भवति[2] । **'पश्य मे पार्थ रूपाणि'**(११.५) इति बहूनि रूपाणि प्रतिज्ञातानि । मातापितरौ च पृथिवीद्यावौ।

'मा नो माता पृथिवी दुर्मतौ धात्'(ऋ.५.४२.१६)

'मधु द्यौरस्तु नः पिता'(म.ना.उ.३९.२)[3]

इत्यादि प्रयोगात् ।

## प्रमेयदीपिका

**'द्यावापृथिव्योरिदमन्तरं हि'** इत्यत्र **'त्वया'** इत्यनेनैवैकत्वस्य सिद्धत्वात् **'एकेन'** इति व्यर्थमित्यतः प्रमाणपूर्वकं तदभिप्रायमाह– **मातापित्रोरिति** ।। बहुत्वेऽपि सः एकः अभिन्नः । अनेन **दिशश्च सर्वाः** रूपान्तरैरित्युक्तं भवति । तद्युक्तम् । विश्वरूपस्य **'द्रष्टुमिच्छामि ते रूपम्'** (११.३) इत्यादिनैकत्वावगतेरित्यत आह– **पश्येति** ।। ऐक्यापेक्षयैकवचनमिति भावः । **'मातापित्रोः'** इति श्रुतिः प्रकृतानुपयोगिनी कथमुदाहृता। 'द्यावापृथिव्योः' इत्यनभिधानादित्यत आह– **मातापितरौ चेति** ।। **माता पृथिवी नः** अस्मान् **दुर्मतौ मा धात्** न दध्यात् । **नः** अस्माकं **मधु** सुखहेतुः **अस्तु** ।।

---

१. ब्र.सू. ४.२.११ भाष्योदाहृत-'तत्रोष्मावत् परं ब्रह्म' इति सौपर्णश्रुतिव्याख्यानसन्दर्भे गुर्वर्थदीपिकायाम् 'उष्मावत्वं च 'उष दाह' इति धातोः पराभितापनसामर्थ्यविशेषवत्त्वम् । तच्च परमात्मनि ।'भासस्तवोग्राः प्रतपन्ति विष्णो' इति वचनात् स्वभावतः सर्वदा .... अतोऽसौ महास्वतन्त्रः' इत्युक्तम् ।

२. गुज, मातृकायां च । 'व्याप्नोति' इति प्रभ-पाठः ।

३. (अ) 'द्यौः द्युलोकाभिमानिनी देवता च मधु मधुरवचना अस्तु । नः पिता रक्षको भगवान् मधु अस्तु मधुरवचनो भवतु ' इति धीरेन्द्रीये ।

(आ) **न्यायसुधान्तिमभागे** ४.४....' मधुशब्दः सुखवाची । 'मधु द्यौरस्तु नः पिता' इति प्रयोगात् । **परिमलम्** -द्यौः द्युलोकदेवता नोऽस्माकं पिता । अतः मधु सुखदोऽस्त्वित्यर्थः' ।।

### भावदीपः

**विश्वरूपेति** ।। पुनर्वचनमित्याद्यात्मकेत्यर्थः[१] ।। **अनेनेति** ।। 'अन्यैः सर्वगतः' इति कथनेनेत्यर्थः ।।

### ( विश्वरूपं न सर्वेषां सर्वदा भयप्रदम् )

**भाष्यम्- नतु नियमतो भयप्रदं तत्स्वरूपम् । नारदस्य तदभावात् । केषाञ्चित् तथा दर्शयति भगवान् ।**

**'प्रीयन्ति केचित् तस्य रूपस्य दृष्टौ बिभेति कश्चिदभ्यसे सर्वतृप्तिः'**

**इति वारुणशाखायाम् ।**

**नतु तं सर्वे पश्यन्ति । अदृष्ट्वाऽपि तन्निरूप्य भये[२] द्रष्टुस्तथा प्रतिभाति । तथा च गौतमखिलेषु-**

**'दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयाद् बिभ्यतो दृष्टवत्ते ।**

**पश्यन्ति तन्न्यस्तचक्षुर्मुखांश्च[३] तस्मिन्नेवैते मनसो गतत्वात्' इति ।।**

### प्रमेयदीपिका

**'दृष्ट्वाऽद्भुतम्'** इत्यादिना विश्वरूपदर्शनस्य भयहेतुत्वमुच्यते । तन्न सर्वेषां सर्वदा । किन्तु केषाञ्चित् कारणविशेषात् कदाचिदेवेति सप्रमाणकं तदभिप्रायमाह- **न त्विति** ।। **अभ्यसे** अभ्यासे सति **सर्वेषां तृप्तिः** आनन्द एवेत्यर्थः । एवं तद्दर्शनस्य भयहेतुत्वनियम ाभावमभिधाय लोकत्रयस्य दर्शनाभावं चाह- **नत्विति** ।। किन्तु **'त्रिलोकेषु स्थितैर्भक्तैः'** इत्युक्तप्रमाणेन कैश्चिदेव । तदभिप्रायश्च लोकत्रयशब्द इति भावः । प्रकारान्तरेण लोकत्रयम् इत्यस्याभिप्रायमाह- **अदृष्ट्वाऽपीति** ।। विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसां तत् **अदृष्ट्वाऽपि** चेतसि **निरूप्य** स्थितानां भये जाते सति तद्**द्रष्टुर्**र्जुनस्य **तथा**ऽहमिव एतेऽपि दृष्ट्वा बिभ्यतीति **प्रतिभाति** इति **अतः** लोकत्रयं दृष्ट्वा **'प्रव्यथितम्'** इत्याह इत्यर्थः ।।

अत्र श्रुतिसम्मतिम् आह- **दृष्ट्वेति** ।। **देवं** विश्वरूपं **दृष्ट्वा मोदमानाः ते** एतेऽर्जुनादयः

१. इदं वाक्यं सो मातृकायां नास्ति ।

२. 'भयेन' इति गुज.वेग्रं. पाठः टीकाननुगुणः।

३. 'ते न्यस्तचक्षुर्मुखांस्तु' इति गुजपाठः टीकाननुगुणः ।

तद्ध्यायिनः **पश्यन्ति** । कथम्भूतान्? **अदृष्ट्वाऽपि** तन्निरूप्य एतद्भयाद् **बिभ्यतो** भयचिह्नवतः **तस्मिन्नेव** विश्वरूपे **मनसो गतत्वात् तन्न्यस्तचक्षुर्मुखांश्च दृष्टवत्** दृष्टवन्त इवेत्यर्थः ।। २० - ३० ।।

### भावदीपः

**'अभ्यसे'** इत्यनुवादः, **'अभ्यासे सति'** इति व्याख्यानम् ।। **'नतु तं सर्वे पश्यन्ति'** इति भाष्ये आकाङ्क्षितं तात्पर्योक्तवचनेन पूरणायाऽह[1]– **किन्त्विति** ।।

'त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुसारतः'

इत्युक्तप्रकारेणेत्यर्थः ।। **निरूप्य** अनुसन्धायेत्यर्थः ।। ३० ।।

**( अर्जुनकृतभगवद्गुणविशेषविषयकप्रश्नः )**

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं नहि प्रजानामि तव प्रवृत्तिम् ।। ३१**

**भाष्यम् — धर्मान्तरज्ञानार्थमेव को भवानिति पृच्छति–आख्याहीति[2] ।। यथा कश्चित् कश्चित्[3] नामादिकम् । जानन्नपि जातिज्ञानार्थं पृच्छति 'कस्त्वम्' इति । यदि तमेव न जानाति तर्हि 'विष्णो' (११.३०) इत्येवं सम्बोधनं न स्यात् । 'त्वमक्षरम्'(११.१८) इत्यादि च ।। ३१ ।।**

### प्रमेयदीपिका

स्वरूपमेवाज्ञात्वा तद्धर्मान् वाऽयं पृच्छतीत्यन्यथाप्रतीतिनिरासार्थमाह– **धर्मान्तरेति** ।। तर्हि 'किं धर्मान्तरो भवान्' इति प्रश्नेन भाव्यम् । 'को भवान्' इति तु न युज्यत इत्यत आह– **यथेति** । **अन्येषां व्यवहारात् नाम** प्रत्यक्षेण रूपादिकं **जानन्नपि** जातिज्ञानार्थं **यथा कश्चित् कश्चित्** कस्त्वमित्येव **पृच्छति** । तथाऽर्जुनो भगवन्तं तद्धर्मांश्च **जानन्नपि** धर्मान्तरज्ञानार्थं

१. 'पूरयति' पां ।
२. गुज। प्रभ-'आख्याहीति' इति नास्ति ।
३. किश्चित्-प्रभ-पाठः टीकाननुगुणः ।

को भवानित्येव पृच्छतीत्यर्थः ।। **प्रश्नव्याख्यानस्य** वर्तमानत्वाद्वर्तमाननिर्देशः । उग्रं रूपं दृष्ट्वा रुद्रो वा यमो वाऽयमिति स्वरूप एव सन्दिहानस्य प्रश्नः किं न स्यादित्यत आह– **यदीति** ।। तत्स्वरूपमेवेत्यर्थः । **'भासस्तवोग्राः प्रतपन्ति विष्णो'** इति ।।

तर्हि ([1]ननु) धर्मविषयोऽयं प्रश्नोऽस्तु । ततश्चान्तरशब्दो न युक्त इत्यत आह– **त्वमिति** ।। यदि भगवद्धर्मान्न जानीयात् तर्हि **'त्वमक्षरं परमम्'** इत्यादि **वर्णनं न स्यात्** । अतो भगवन्तं तद्धर्मांश्चाक्षरत्वादीन् ज्ञात्वा तदन्यधर्मज्ञानार्थमेव प्रश्न इत्येवमुक्तमित्यर्थः ।। ३१ ।।

**भावदीपः**

नाम्ना [2]ज्ञानोपायमाह– **अन्येषां व्यवहारान्नामेति** ।। 'जानन्' इत्यन्वयः ।। 'अप्राक्षीत्'इति भूतनिर्देशे कार्ये कथं 'पृच्छति'[3] इति भाष्योक्तिः? इत्यत आह– **प्रश्नव्याख्यानस्येति**।।३१।।

( भगवान् कालः )

**श्रीभगवानुवाच –**

**[4]कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वा न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः।।३२।।**

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ।। ३३ ।।**

**भाष्यम् —** कालशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची ।

'कल वन्धने' 'कल च्छेदने'

---

१. 'ननु'इति-पां-भं.मा ।
२. सो ।'नाम्नो ज्ञानोपायम्'इति का मातृकापाठः ।
३ 'पृच्छति'इति सो मातृकायामेव । नान्यत्र ।
४. (अ)'कालः कालयतेर्गतिकर्मणः' 'स हि सर्वाण्येव भूतानि कालयति क्षयं नयतीत्यर्थः'
इति निरुक्तम् -(२.२५)
(आ)'मन्ये त्वां कालमीशानम्' -(त्वां कालं संहर्तारं मन्ये)१-८-३१ भाग.कुन्तीस्तोत्रे ।।
(इ) 'अथ ते कालरूपस्य' इति भागवते(१०.३५.२२) विजयध्वजीये उदाहृतः ।।

'कल ज्ञाने' 'कल कामधेनौ'[1] इति हि पठन्ति ।

प्रसिद्धश्च स शब्दो भगवति ।

'नियतं कालपाशेन बद्धं शक्र विकत्थसे ।

अयं स पुरुषः श्यामो लोकस्य हरति प्रजाः[2]।

बद्ध्वा तिष्ठति मां रौद्रः पशुं रशनया यथा'

इति मोक्षधर्मे (म.भा.१२.२२७.८२,८३) विष्णुना बद्धो बलिर्वक्ति ।

'विष्णौ चाधीश्वरे चित्तं धारयन् कालविग्रहे'[3]

इति (११.१५.१५)भागवते ।।

---

१. (अ)धेनुः-इति प्रचलितः सर्वो पाठः । त.प्र.-भावदीपोक्तदिशा पाठ आदृतः । 'हि' इत्यधिकं च तत्र । तथाहि- ब्र.सू.भा-२.३.१३. 'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भश्शर्वश्च कालाख्यारूपिणस्तव इति भागवते'।।

त.प्रका.- 'काल इत्याख्या,रूपे यस्यासौ तथोक्तः । रूपस्य कालत्वं संहर्तृत्वादिगुणसम्पन्नत्वम्'।।

भावदीप- 'कालशब्दो...कामधेनाविति हि पठन्ति' इत्येकादशे गीताभाष्योक्तेः । 'संहर्ता भगवान् विष्णुः काल इत्यभिधीयते' इति प्रथमस्कन्धतात्पर्योक्तस्मृतेश्चेति भावः' ।।

(आ) ब्र.सू.भाष्यदीपिकायाम्- दशमस्कन्धे उद्धववाक्यमेतत् । तवेति कृष्ण उच्यते । तस्य कालाख्यरूपिण इति हेतुगर्भं विशेषणम् । आख्या च रूपं च आख्यारूपे काल इत्याख्यारूपे यस्यासौ कालाख्यारूपी तस्येति विग्रहः । यस्येति बहुव्रीहिज्ञापकटीका तु इनेरर्थकथनपरा । रूपस्याऽऽकृतेः कालत्वं सर्व-संहर्तृत्वादिगुणसम्पन्नत्वं, कालशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्व-भगवद्धर्मवाचीति गीताभाष्योक्तेः । धर्मविशिष्टभगवद्वाचीति तदर्थः । यद्वा – 'विष्णौ चाधीश्वरे चित्तं धारयन् कालविग्रहे' इति गीताभाष्योदाहृतस्मृतेः प्रमेयदीपे कालनामा विग्रहो यस्यासौ तथोक्त इति व्याख्यानादत्रापि सप्तम्यन्त-रूपपदघटितबहुव्रीहिसमासविग्रहप्रदर्शकतया टीका व्याख्येया । न चैवं कालाख्यारूपिण इति न स्यादिति वाच्यम् । आरूपिणो व्याप्तरूपिण इति आङ्-प्रश्लेषात् । अस्य काल इत्याख्यया युक्तं रूपमस्यास्तीति मध्यमपदलोपित्वाद्वा । तत्त्वप्रदीपे तु - कालाख्यैव काल इति नामैव रूपं ज्ञापकं वाचकत्वेन तद्वानिति व्याख्यातम् । तथा च कालाख्यारूपिण ईशस्य तव 'विश्वसर्गनिरोधयोः' जगत्सृष्टिसंहारयोः हिरण्यगर्भः शर्वश्च 'निमित्तमात्रं' द्वारमात्रं न तु स्वतन्त्रकारणमित्यर्थः ।

२ 'लोकस्य दुरतिक्रमः' इति महाभारतपाठः ।

३. 'ईशित्वप्राप्तिप्रकारमाह-विष्णाविति । परमाण्वादिरूपः कालो विग्रहः प्रतिमा यस्य स कालविग्रहः तस्मिन्नधीश्वरे अधीश्वरत्वगुणविशिष्टे । अनेन योयो गुण उपासकस्याभिलषितस्तं तं गुणं तस्मिन्नुपसंहृत्योपासनं कर्तव्यमित्युक्तं भवति । सर्वत्राधीश्वरत्वादौ विद्यमानेपीत्यादि । विष्णौ व्याप्ते मयि चित्तं धारयन् ईशित्वमवाप्नोति' इति विजयध्वजतीर्थाः ।

**प्रमेयदीपिका**

एवं तर्हि **'कालोऽस्मि'** इत्युत्तरमयुक्तम् । धर्मानुक्तेरित्यत आह– **कालेति** ।। धर्मविशिष्टभगवद्वाचीत्यर्थः । कुत 'एतदित्यत आह– **कलेति** ।। यथा कामधेनुः सर्वार्थान् ददाति तथाऽयमपि धातुः सर्वार्थवाचीत्यर्थः । तथाच अस्मादण् । कर्तरि घञ् वा । **'जगत्'** इति च योग्यतया सम्बद्ध्यते [२]। भवत्वयं बन्धनादिधर्मवद्वावाची । भगवद्वाची तु कुतः । अन्यत्र रूढत्वादित्यत आह– **प्रसिद्धश्चेति** ।। **बद्धं** मां प्रति **विकत्थसे** । आत्मानं तु श्लाघसे । कः[३] कालः? अयम् । कथम्? **श्यामः प्रजाः हरति** । **बद्ध्वा तिष्ठति रौद्रश्चेति** । अत्र कथं विष्णुवाचित्वनिश्चयः? इत्यत आह– **विष्णुनेति** ।। कालनामा विग्रहो यस्यासौ तथोक्तः ।।

**भाष्यम् — प्रवृद्धः परिपूर्णोऽनादिर्वा ।**

**'ऋतं च सत्यं चाभीद्धात्'(ऋ.सं१०.१९०.१) [४]इति हि श्रुतिः ।**

**'एतन्महद्भूतम् (अनन्तम्)[५]' (बृ.उ.२.४.१२) इति च ।**

**'प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम'**

**(ऋ.सं.७.१००.३) इतिच ।**

**न तु वर्धनम् । 'नासौ जजान न मरिष्यति नैधतेऽसौ'[६]**

**इति हि (११ .३.३८ ) भागवते ।**

**'यस्य दिव्यं हि तद्रूपं क्षीयते वर्धते न च' इति मोक्षधर्मे ।।**

---

१. भं -एतत् इति नास्ति ।

२. अयं टीकाभागः ६.८.२२ सत्यधर्मीये उदाहृतः ।

३. सः इति प्रचलितपाठः ।

४. महानारायणे च १.६४ । 'ऋतं यथार्थविज्ञानम् । सत्यं यथार्थभाषणम् । चशब्दात् स्वीयं धर्मजातं समुच्चीयते । तत्सर्वं अभीद्धात् अभितः प्रकाशमानात् परमात्मनः' इत्यर्थः धीरेन्द्रीये ।

५. भं मातृकायामधिकम् ।

६. 'किञ्च कार्याद्यभिन्नत्वे तद्वत् जन्मादिमत्वं प्रसज्यते । नच तत्तथा । तस्माद्भिन्नमेवेति युक्तिमाह- नासाविति । कैलत्रयसम्बन्धित्वान्नौपचारिकोयं निषेधः । तथा जन्मादिपदार्थस्थत्वेन तद्धर्मत्वं नौपचारिकं ब्रह्मण इत्यत्राह-सर्वत्रेति । सर्वेषु जन्मादिमत्सु पदार्थेषु शश्वदेकविधं न विकारि । अत एवानपायि विनाशरहितम् । 'इत्यदि विजयध्वजतीर्थाः । अधिकं तत्रैवानुसन्धेयम् ।

## प्रमेयदीपिका

**'प्रवृद्धः'** इति कादाचित्की वृद्धिः प्रतीयते । अत आह– **प्रवृद्ध** इति ।। वृद्धिः धात्वर्थः । सा च प्रशब्देन देशतः कालतश्च सदातनी विवक्षितेति भावः । **'अनादिः'** इति नित्यस्याप्युपलक्षणम् । भूताधिकारे विहितस्य क्तस्य कुतः सार्वकालिकत्वम्? प्रयोगदर्शनादिति भावेनाऽह – **ऋतं चेति** ।। **इद्धात्** भूतमितिवदित्यर्थः । अत्रापि [1]सार्वकालिकत्वानिश्चय इत्यतो भगवतो दीप्तेः सत्तायाश्च सदातनत्वे श्रुतिसद्भावादित्याह– **प्रविष्णुरिति** ।। **विष्णुः तवसः** देशकालपरिच्छिन्नात् सूर्यादेः तेजसः स्तवीयान् अतिशयिततेजोरूपो भवति । अत एव **ह्यस्य स्थविरस्य** अनादिकालीनस्य **त्वेषमिति नाम** । असाधारण्येन हि व्यपदेशाः भवन्तीत्यर्थः ।।

अस्त्वेवं तथाऽपि 'प्राग् अल्पः सन्निदानीं वृद्धिं गतः' इति, अत्रार्थः किं न स्यादित्यत आह– **न त्विति** ।। तुशब्दो विशेषणार्थः । विक्रियारूपं वर्धनं प्रवृद्धशब्दप्रवृत्तिनिमित्तं न भवति । भगवति भावविकाराणां प्रतिषिद्धत्वात् । भगवतो विक्रियारूपवृद्ध्यभावेऽपि तद्रूपस्य भवतु इति[2]। तत्राह– **यस्येति** ।।

## भावदीपः

**प्रवृद्ध इतीति ।। 'लोकक्षयकृत् प्रवृद्धः'** इति गीतास्थप्रवृद्धपदेनेत्यर्थः ।। **भूताधिकार इति ।।** तृतीयस्य द्वितीयपादे 'भूते'**(पा.सू.३.२.८४)** इति सूत्रमधिकृत्य 'निष्ठा' **(पा.सू. ३.२.१०२)** इति सूत्रेण विहितस्य निष्ठासञ्ज्ञकक्तप्रत्ययस्येत्यर्थः । **'इद्धात्'** इति, **'भूतम्'** इति च पदोपेतश्रुतिद्वयोक्तेः प्रकृतोपयोगाय तात्पर्यमाह– **इद्धात् भूतमितिवदित्यर्थ इति** ।। 'ञि इन्धी दीप्तौ' **(पा.धा.१४४८)** इत्यस्य क्तप्रत्ययान्तस्य पञ्चम्यन्तस्य 'इन्धात्' इति रूपम् । तत्र यथोक्तप्रत्ययान्तस्य 'सदा दीप्तात्' इत्यर्थः । 'भू सत्तायाम्'**(पा.धा.१)** इत्यस्य क्तप्रत्ययान्तस्य सर्वदा विद्यमानमित्यर्थः । तथा इहापि'सदा प्रवृद्धः' इत्यर्थ इति भावः । अस्यैव **त्वेषमिति नाम** कुत इत्यत आह– **असाधारण्येनेति** ।। तवसापि [3]तवीयस्त्वेनेत्यर्थः ।। **भावविकाराणामिति** ।। अस्ति,जायते,विपरिणमते, वर्धते, अपक्षीयते,विनश्यतीति षण्णां पदार्थविकाराणां **'निर्विकारोऽक्षरः शुद्धः'** इत्यादिना निषिद्धत्वादित्यर्थः ।।

---

१. 'कथं सार्वकालिकत्वनिश्चयः' इति मातृकायां पाठः ।

२ **'इत्यत आह'**-इति मातृकापाठः ।

३. सो-मातृकापाठः । 'तृतीयत्वेन' इति का मातृकायाम् ।

( सम्भावितकर्मणाऽपि न भगवतो वृद्धिः )

**भाष्यम्- 'न कर्मणा'(बृ.उ.४.४.२३) इति तु कर्मणाऽपि न किमु स्वयमिति। लोकान् समाहर्तुमिह विशेषेण प्रवृत्तः । भ्रात्रादींश्च ऋते इति अपिशब्दः । प्रत्यनीकत्वं तु परस्परतया । सर्वेऽपि हि न भविष्यन्ति । अक्षोहिण्यादिभेदेन बहुवचनं युक्तम् ।। ३२ ।। ३३ ।।**

**प्रमेयदीपिका**

ननु **'न कर्मणा वर्धते नो कनीयान्'** इति श्रुतौ कर्मनिमित्तवृद्धिप्रतिषेधनात्[1] वृद्धिमात्र-मस्तीति ज्ञायते । अन्यथा विशेषणवैयर्थ्यात् । तथा च सत्प्रतिपक्षमुक्तं वाक्य[2]मित्यत आह– नेति ।। **'न कर्मणा'** इति विशेषनिषेधस्तु वृद्धिलक्षणविक्रियाकारणत्वेन । सम्भावितेन[3] **कर्मणाऽपि** यदा न वर्धते तदा **स्वयं** कर्मणा विना **न** वर्धते इति **किमु** वक्तव्यमिति वृद्धि-लक्षणविक्रियाकारणत्वमात्रनिषेधाय कैमुत्यप्रदर्शनार्थम् इत्यन्यथोपपन्नमित्यर्थः ।।

ननु सर्वत्र भगवानेव लोकानां संहर्ता । तस्मात् **'इह'** इतिव्यर्थमित्यत आह– **लोका-निति** ।। **युगपत्** बहून् प्रत्यक्षत एवेति विशेषेण[4]। युधिष्ठिरादीनामवशिष्टत्वात् कथं 'त्वामृते' इत्येवोक्तम्? इत्यत आह– **भ्रात्रादींश्चेति** ।। **अपिशब्दः** 'द्योतयति'इति शेषः ।।

अस्मत्प्रतिकूलेष्वनीकेष्ववस्थिता योधा न भविष्यन्तीत्युक्ते का पाण्डवादीनां प्राप्तिः; येन 'ऋतेऽपी त्वा' इत्युच्यन्त इत्यत आह– **प्रत्यनीकत्वं त्विति** ।। 'सेनाद्वयस्यापि' इति शेषः । कुत एवं व्याख्यानम्? इत्यत आह– **सर्वेति** ।। सेनाद्वयगता अपीत्यर्थः । **'प्रत्यनीकेषु'** इति बहुवचनं कथम्? इत्यत आह– **अक्षोहिणीति** ।। **भेदेन** बहुत्वेन ।। ३२ -३३ ।।

**भावदीपः**

उक्तं **वाक्यमिति** ।। 'प्रवृद्धः परिपूर्णः' इत्यादि वाक्यमित्यर्थः ।। ३३ ।।

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि योधवीरान् ।**

---

१. 'प्रतिषेधात्' भं मातृकायाम् ।

२. 'उक्तवाक्यम्' इति समस्तपदं प्रच।मातृकानुसात् भावदीपानुगुण्याच्च भिन्नपदं स्वीकृतम् ।

३. 'सम्भावितेनापि कर्मणा' इति वाक्यरीतिः मातृकायाम् । ।

४. 'विशेषणम् । युधिष्टिरादीनामपि शिष्टत्वात्' इति मातृकायां पाठः ।

**मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेताऽसि रणे सपत्नान् ।।**

**सञ्जय उवाच–**

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।**

**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ।। ३५ ।।**

**भाष्यम् —** 'योऽस्य शिरश्छिन्नं भूमौ पातयति तच्छिरो भेत्स्यति' इति तत्पितुर्वराद् जयद्रथोऽपि विशेषेणोक्तः । 'सवरा वासवीशक्तिः' इति कर्णः ।।

**प्रमेयदीपिका**

**'यद्वा जयेम यदि वा नो जयेयुः'** (२.६) इत्यस्य सन्देहेऽपि प्रवृत्तिर्युक्ता । पक्षद्वयेऽपि फललाभादिति **'हतो वा'**(२.३७) इत्युत्तरमुक्तम् । इदानीं तव पराजयशङ्काऽपि नास्तीत्युच्यते – **द्रोणं** चेति ।। तत्र द्रोणस्य धनुर्विद्याचार्यत्वेन, भीष्मस्य स्वच्छन्दमृत्युत्वेन चाऽशङ्का-विषयत्वाद्युक्तं योधवीरसमुदायात् पृथक्कृत्य स्वशब्देन ग्रहणम् । जयद्रथस्य कर्णस्य च कुतः? इत्यत आह– **योऽस्येति** ।। **अस्य** जयद्रथस्य **तच्छिरः** तस्य पातयितुः शिरः **भेत्स्यति** भेत्स्यते । **तत्पितुः** जयद्रथपितुः । **शक्तिः** 'अस्ति कर्णस्य' इति शेषः । **कर्णः** 'विशेषेणोक्तः' इति वर्तते ।। ३४- ३५ ।।

**अर्जुन उवाच –**

**स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।**

**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ।। ३६ ।।**

( हृषीकेशशब्दार्थः )

**भाष्यम् —** यदेतद् वक्ष्यमाणं तत् स्थाने युक्तमेवेत्यर्थः । अग्नीषोमाद्यन्तर्यामितया जगद्धर्षणाद्[1] हृषीकेशः[2] । केशत्वं त्वंशूनां तन्नियतत्वादेः । प्रमाणं तु - 'शशिसूर्यनेत्रम्' (११.१९) इत्यत्रोक्तम् । हृषीकाणामिन्द्रियाणामीशत्वाच्च

१. अयं प्रमेयदीपिकानुगुणः पाठः ।'जगद्धर्षणादेः' इति पद्मनाभतीर्थानुसारिपाठः, सत्यधर्मतीर्थादृतश्च ।

२. इदं वाक्यं भाग.१०.२७.१३ सुमनोरञ्जनीटिप्पण्यामुदाहतम् ।'अग्नीषोमादिषु स्थित्वा स्वकेशनियतैः तत्किरणैः जगद्धर्षणाद् हृषीकेषः हृष्याः केशाःयस्येति विग्रहः। तदुक्तं गीताभाष्ये.।'

हृषीकेशः[१]। तेषां विशेषतः ईशत्वं च

'यः प्राणे तिष्ठन्'(बृ.उ.५.७.१६)

इत्यादौ [२]सिद्धम् ।

## प्रमेयदीपिका

'स्थाने' इत्येतत् 'युक्तम्' इत्यर्थेऽव्ययं चास्ति[३]। अस्ति च सप्तम्यन्तं पदम् । तत् किमत्राभिप्रेतम्? कथं चास्यान्वयः? इत्यत आह– **यदिति** ।। **स्थाने** विषये एवेति वा बहुमानस्थाने त्वयीति वा योजनायां साध्याहारत्वमिति भावः । हृषीकेशशब्दस्य प्रकृतोपयुक्तमपूर्वमर्थमाह– **अग्नीति** ।। अत्राऽद्येनादिशब्देन सूर्यो गृह्यते । द्वितीयेन बोधनस्थापने । 'अग्न्याद्यंशुभिः स्वकेशैः' इति शेषः ।। **जगद्धर्षणादेरिति** ।। बोधनस्थापनाभ्यां जगद्धर्षणादित्यर्थः । सूर्याद्यंशूनां कथं भगवत्केशत्वम्? इत्यत आह– **केशत्वं त्विति** ।। तन्नियतत्वतज्जन्यत्वादिना तादात्म्योक्तिरित्यत्र किं प्रमाणमित्यत आह– **प्रमाणं त्विति** ।। **इत्यत्र** एतद्व्याख्यानावसरे ।।

अनेन वक्ष्यमाणं वाक्यं विवृतं भवति । तथा चाग्न्यादिषु स्थित्वा स्वकेशनियतैस्तदंशुभिः **जगतः** बोधनस्थापनाभ्यां हर्षणादियुक्तं भवति । हृष्यतेः कीप्रत्ययः । हृष्यो हर्षहेतवः केशाः अस्येति हृषीकेशः । नानेन प्रसिद्धोऽर्थस्त्याज्य इति भावेन तमप्याह– **हृषीकाणामिति** ।।[४] ननु जगदीशस्य विशेषत इन्द्रियेशत्वं कथमित्यत आह– **तेषामिति** ।। पुरुषार्थोपयुक्तज्ञानक्रियाशक्तिप्रेरकत्वेनेति भावः ।।

## भावदीपः

**स्थाने** इत्यनुवादः, **विषय** एवेति व्याख्या । हर्षानुरागविषयभूत एव त्वयीति

---

१. गुज,प्रभपाठे एवं पठ्यते। मातृकायां नास्ति ।

२. 'प्रसिद्धम्' इति गुज । मातृकायां नास्ति ।

३. शाङ्करभाष्ये । २-भाग, पृ ३१५ ।

४. भाग.६.५.२२ श्लोकव्याख्याने इमानि टीकावचनानि उदाहृतानि सत्यधर्मतीर्थैः । तथाहि - उक्तं चैकादशाध्यायगीताभाष्यप्रमेयदीपिकादिषु । अग्नीषोमाद्यन्तर्यामितया इत्यारभ्य तमप्यर्थमाह- हृषीकाणामिति । हृषी चासौ कश्चासौ ईशश्च हृषीकेशः । निरुक्तं चोद्योगपर्वणि- हर्षात् सुखात् सुखैश्वर्याद् हृषीकेश इत्यादिना ..इति ।। अत्र कानिचन टीकावाक्यानि अधिकानि पठितानि । तथा भाष्यानुपूर्वी अपि व्यत्यस्ता ।।

योजनायामित्यर्थः ।। **प्रकृतोपयुक्तमिति** ।। 'जगत् प्रहृष्यति' इति गीतोक्तार्थे 'हृषीकेश' इति हेतुगर्भतया[1] पूर्वमर्ध[2]मित्यर्थः । प्रसिद्धेन्द्रियेशत्वादर्थादन्यत्वात् **'अपूर्वम्'** इत्युक्तम् ।। [3]वक्ष्यमाणप्रमाणानुरोधेन [4]क्रमादादिपदद्वयार्थमाह– **अत्राद्येनेति** ।। **अनेनेति** ।। नियतत्वादिकथनेनेत्यर्थः । **'केशैर्मे अंशुसञ्ज्ञितैः'** इति वाक्यं 'केशनियतैरंशुभिः' इत्यादिरूपेण विवृतमित्यर्थः ।। **कीप्रत्यय इति** ।। कित्वात् 'पुगन्तस्य लघूपदस्य च' (**पा.सू.७.३.८६**) इति गुणाभावे हृषीकेश इति रूपमिति भावः ।। **नानेनेति** ।। अपूर्वार्थकथनेनेत्यर्थः ।। ज्ञानेन्द्रिय-कर्मेन्द्रियाभिप्रायेणाह–**ज्ञानक्रियेति** ।।

**भाष्यम् — 'न मे हृषीकाणि पतन्त्यसत्पथे'**[5] **(भाग.२.६.३३ )**

**इत्यादिप्रयोगाच्च ।**

**इतरोऽर्थो मोक्षधर्मे सिद्धः ।**

**'सूर्याचन्द्रमसौ शश्वत् केशैर्मे अंशुसञ्ज्ञितैः ।**
**बोधयन् स्थापयंश्चैव जगदुत्पद्यते पृथक् ।।**
**बोधनात् स्थापनाच्चैव जगतो हर्षसम्भवात् ।**
**अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ।।**
**हृषीकेशोऽहमीशानो**[6] **वरदो लोकभावनः ।।'**

**इति च (म.भा.१२.२४२.६६,६८) ।। ३६ ।।**

### प्रमेयदीपिका

हृषीकशब्दस्येन्द्रियवाचित्वं कुतः? इत्यत आह– **नेति** ।। पूर्वेण समुचितस्यास्य व्याख्यानसमर्थनहेतुत्वात् **चशब्दः** । आद्येऽर्थे प्रमाणमाह– **इतरोऽर्थ इति** ।। अग्निश्च जगत् बोधयन्तो स्थापयन्तश्च **पृथक्** स्वावसरे **उत्पद्यन्ते** उदयं गच्छन्ति । सूर्यकृतैश्च । अत्रापि

१. गतितया इति सो । गर्भिततया इति च ।
२. अर्थम् इति सो-कोशे पठ्यते ।
३.. 'उक्त'इत्यधिकं काणियूरुकोशे ।
४.. 'क्रमादिपदादिपदार्थमाह-'इति सो -कोशे ।
५. **'यन्मे हृदौत्कण्ठ्यवता धृतो हरिः इत्युपरितनभागः ।'हृषीकाणि इन्द्रियाणि ।अत्र हेतुमाह-यन्म इति ।**
६. 'महेशानो' इति गुज ।

पूर्ववद् बोधनादेर्हेतुहेतुमद्भावो ज्ञातव्यः । ईशानत्वादावप्युक्तो हेतुः ।। ३६ ।।

**भावदीपः**

**समर्थनहेतुत्वाच्चशब्द इति** ।। अनेन हेतुना[१] द्वितीयव्याख्याने सिद्धे सत्येव पूर्वेण अपूर्वार्थकथनेनास्य[२] समुच्चयः सिद्धो नान्यथेति तदभिप्रायोऽयं [३]चशब्द इत्यर्थः ।। **'सूर्याचन्द्रमसौ'** इत्यनन्तरं शेषमाह– **अग्निश्चेति** ।। एकवचनं बहुवचनार्थ [४]इत्युपेत्याऽह– **बोधयन्त इत्यादि** ।। **'अग्नीषोमकृतेः'** इत्यनन्तरं शेषमाह– **सूर्यकृतैश्चेति** ।। **पूर्ववदिति** ।। **'कर्मभिः'** इति सामान्येनाक्तावपि पूर्वाबोधनस्थापनयोः हर्षणहेतुत्वं द्रष्टव्यम् इत्यर्थः ।। **ईशानत्वादावपीति** ।। 'ईशानो वरदो लोकभावनः' इत्युक्तेशानत्ववरदत्वलोकभावनत्व-ईशसूर्यादिषु स्थित्वा जगद्धर्षणहेतुबोधनस्थापनकरणरूपोक्तो हेतुरित्यर्थः ।। ३६ ।।

**( अर्जुनकृतभगवत्प्रार्थना )**

**कस्माच्च ते न नमेरन् महात्मन्**
**गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**अनन्त देवेश जगन्निवास**
**त्वमक्षरं सदसत् तत्परं यत् ।। ३७ ।।**
**त्वमादिदेवः पुरुषः पुराणः**
**त्वमस्य विश्वस्य परं निधानम् ।**
**वेत्ताऽसि वेद्यं च परं च धाम**
**त्वया ततं विश्वमनन्तरूप[५]।। ३८ ।।**

---

१. सो-मातृकायामेव ।
२. 'अपूर्वार्थव्याख्यानेन अस्य' इति सो -कोशे ।
३. चशब्द इति सो मातृकायामेव ।
४. अर्थ इति सो नास्ति ।
५. 'तानि चास्य सुदिव्यानि सुगन्धीनि सुभान्ति च । शुभलक्षणपूर्णानि सुवर्णानि महान्ति च ।। यदतोऽनन्तरूपोऽसौ' इति ब्रह्मतर्कवचनम् । भा.ता.नि.(१०.३.३७)

[1]वायुर्यमोऽग्निर्वरुणः[2] शशाङ्कः
प्रजापति[3]स्त्वं [4]प्रपितामहश्च[5] ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ।। ३९ ।।
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रम[6]स्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः[7]।। ४० ।।
सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं[8]

---

१. ऋग्भाष्ये नवधा कृतं वायुशब्दार्थनिर्वचनं द्रष्टव्यम् ।
२. (अ)'आ वृणोतीति वरुणः तपसा ज्ञानतोऽपि वा ।
वरमुन्नयतीत्यस्माद्वरानन्दत्वतोऽपि वा' (ऋग्भाष्ये १-१-२-७)
(आ)' वरुणो वृणोतीति सतः '१०-३ निरुक्ते ।
(इ) 'कॄ वृदारिभ्य उनन्' इति उणादि(३.३३३)सूत्रम् ।
३. (अ)'प्रजानां पालनाद्विष्णुः प्रजापतिरितीरितः'–ष.प्र.उ.प्रजापतिसंहितावचनम् ।
(आ)'ज्येष्ठः श्रेष्ठः प्रजापतिः' वि.स.ना. ।
४ महाभारते -शान्तिपर्वणि- वराहस्य प्रपितामहशब्दवाच्यत्वम् । वि.स.ना.९७०नाम ।
५. पितामहस्त्वं प्रपितामहश्च' इति नीलकण्ठीयादिपाठः ?
६. मुकुन्दोऽमितविक्रमः-विस.ना.४१९, ...प्रद्युम्नोऽमितविक्रमः–७५० नाम ।.
७. (अ)न्यायामृते ब्रह्मणो उपादानत्वे प्रमाणभङ्गे -'नापि 'सर्वं खल्विदं ब्रह्म' इत्यादि सामानाधिकरण्यानुपपत्तिस्तत्र मानम् । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति स्मृत्यैवान्यथा व्याख्यातत्वात्'।।
(आ) रामा.युद्ध.६.१०७.१४ सत्यधर्मीये-जगद्व्यापित्वात् सर्वः । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीतोक्तेः ।
८. 'तवेमम्' इति शाङ्करभाष्ये पाठः ।

**मया प्रमादात् प्रणयेन वाऽपि।। ४१ ।।**[१]

**भाष्यम् —** कथं **'स्थाने'** इति? तदाह– **कस्मादित्यादिना** ।। पूर्णश्चासावात्मा च इति महात्मा ।

( आत्मशब्दनिर्वचनम् )

आत्मशब्दश्चोक्तो भारते–

'यच्चाप्नोति यदादत्ते यच्चाति विषयानिह ।
यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते' इति ।।

तत्परं सदसतः परम् ।

'असच्च सच्चैव (च) यद्विश्वं सदसतः परम्'
इति भारते(१.१.२३) ।। ३७-४१ ।।

**प्रमेयदीपिका**

**'सर्वे नमस्यन्ति'** (११.३६) इत्येतद्युक्तमिति स्वयमेवोक्त्वा **कस्माच्च ते न नमेरन्** इति विरुद्धं कथं पृच्छति? इत्यत आक्षेप एवायमिति ज्ञापयितुं तन्निवर्त्याशङ्काप्रदर्शन-

१. (अ) बृ.भा. उदाहृतम् -'अजानता महिमानं तवेदम्' इतिवत् स्वपूर्णतामापरोक्ष्येणानुभूयेदं पूर्णोऽस्मीति मन्यते । 'क्वचित् तद्भावशेषः स्यात् क्रियाशेषः क्वचिद्भवेत् । क्वचित्पदार्थशेषः स्यादिदमादिस्त्रिधा स्मृतः' इति शब्दनिर्णये ।।

(आ) रामायणे युद्ध-२९ अ, ८श्लो.व्या.सत्यधर्मीये-'स्तवशब्दीर्थीभूत गुणकीर्तनस्य नपुंसकताविवक्षया 'अजानता महिमानं तवेदं'.... इत्युक्तिः सम्भवतीति मन्तव्यमिति केचित् । वस्तुतस्तु 'सम्बन्ध-मनुवर्तिष्यते' इति भाष्याल्लिङ्गानामतन्त्रत्वाद्वा' इति ।।

(इ) 'अनियतलिङ्गानां विशेषणपदानां विशेष्यपदलिङ्गत्वमेवेति नियमो न सर्वत्र । 'अहमेवेदं सर्वोस्मि' अजानता महिमानं तवेदं' इत्यादौ व्यभिचारात् । सर्वमहिमशब्दयोः पुल्लिङ्गत्वेपि तद्विशेषणयोः इदंशब्दयोर्नपुंसकत्वात् । किन्तु लिङ्गानामर्थधर्मत्वमिति पक्षे क्वचिद्विशेष्यपद-प्रतिपाद्यार्थलिङ्गत्वमप्यस्ति । ततश्च सर्वमहिमशब्दप्रतिपाद्ययोः सर्वत्मगिमत्वयोरर्थयोर्नपुंसकत्वात् तद्-विशेषणयोरिदंशब्दयोर्नपुंसकतोपपद्यते ।। यथोक्तं बृहद्भाष्ये भगवत्पादैः- इदमिति पूर्णत्वविशेषणम् । अजानता महिमानं तवेदमिति वत् । इति । उक्तं च गीताभाष्यटीकायां भूतं महदीश्वरं चेति भूतमहेश्वरमिति वाक्यव्याख्यावसरे 'भावं याथार्थ्यमिति व्याख्यानोक्षया नपुंसकमिति ' सुधाटिप्पण्याम् ।

पूर्वकमवतारयति– **कथमिति** ।। **इति** 'शङ्कायाम्' इति शेषः । **तत्** तस्या उत्तरम् । 'महात्मन् अक्षुद्रचित्त'[१] इत्यल्पार्थप्रतीतिनिरासार्थमाह – **पूर्णश्चेति** ।। 'आत्मा जीवः' इति प्रतीतिं वारयितुमाह– **आत्मेति** ।। **उक्तो** निरुक्तः ।।

**यत्** यस्मात् । आप्नोतेः मनिन्[२] । पकारस्य च तकारः । आङ्पूर्वाद् दात्रः स एव प्रत्ययः। आकारलोपः, तत्त्वम् । आङ्पूर्वाददो मन्, तत्वं च ।। **इह** देहे । **सन्ततो भावः** नित्या सत्ता । आङ्पूर्वात् तनोतेः ड्मन् ।[३]

सदसदात्मकं विश्वं त्वमेवेति सत्तादिप्रदत्वादेवोच्यते । न त्वन्यथा[४] । तथासत्युत्तर-वाक्यविरोधादिति भावेन तत्पठित्वा सप्रमाणकं व्याचष्टे– **तत्परमिति** ।। ३७-४१ ।।

**भावदीपः**

**युक्तमितीति** ।। स्थानपदेनेत्यर्थः[५]।। **'तदाह'** इत्यत्र 'तत्' इत्यनूद्य तस्या इति पकृतिपदमुक्त्वा **'आह'** इत्यतः पूर्वम् [६]'उत्तरम्' इति शेषमाह– **तत् तस्या उत्तरम् इति** ।। शङ्काया इत्यर्थः ।। 'तस्मात्' इत्यग्रे श्रवणात् सर्वोऽपि यच्छब्दप्रतिनिरुक्तिहेत्वर्थ इति भावेनाऽह– **यत् यस्मादित्यादिना** ।। अर्थचतुष्टयेऽपि क्रमेण व्युत्पत्तिं दर्शयति

१. शाङ्कर-रामानुजभाष्ययोर्नास्ति ।
२. **'मन्' -इति प्रचलितपाठान्तरम्** ।। भावदीपरीत्या **' मन्'** इत्येतत् टीकायाः पाठान्तरम् ।।
३. **विष्णुतत्त्वनिर्णयटीका**-टिप्पणीषु आत्मशब्दनिर्वचनं यथा - **टीका** 'आङ् पूर्वात् तनोतः माङ् माने इत्यतश्च डनुप्रत्ययः । **राघवेन्द्रीये**- डनुप्रत्यय इति । आतन् मा इति स्थिते उणादयो वहुलम् इति वा निरक्तिवलाद्वा डनुप्रत्यये चुटू इति सूत्रेण डकारलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे स्वायुत्पत्तौ आत्मेति रूपमिति भावः । अदिभूभ्यां डुतच् इत्यादाविव धातुद्वयादप्यस्ति प्रत्ययः इति भावः । **श्री.टि.** ततश्च तनुविस्तारे माङ् माने आभ्यां डनुप्रत्यये डित्वात् धातुद्वयेपि टिभूतस्य अन् इत्यस्य आ इत्यस्य च लोपे आत्+ म् +अन् =आत्मन् इति प्रातिपदिकसिद्धिः । **व्या.टि.** नच धातुद्द्वयात् प्रत्ययो न दृषअटचर इति वाच्यम् । अदिभूभ्यां डुतच् इति यथा इति सुधादौ निदर्शितत्वात् । नचदृष्टान्तः असम्मतः । अदिभुवो डुतच् इत्येवार्वाचीनपाठादिति वाच्यम् । अदिभूभ्यामिति द्विवचनान्त एव पञ्चपादी-दशपाद्यादिषु प्राचीनः सार्वजनीनः पाठः । तत्र नशङ्कापङ्कः । ... -अत्राधिकविचारः तत्रैवानुसन्धेयः ।।
४. **शाङ्करभाष्ये.पृ-३७१, २.भाग** । रामानुजीये-पृ.३७२ ।
५. पदेनेति भावः -पां ।
६. इतः परं वाक्यद्वयं सो नास्ति ।

-आप्नोतेः इत्यादिना ।। **'मनिन्'** इति पाठः साधुः । **'मन्'** इत्येव पाठे तु 'हलन्त्यम्' **(पा.सू.१.३.३)** इति नकारलोपेन भाव्यतया नकारान्तशब्दताऽस्य न स्यात् ।। **दात्र इति** ।। [1]'दाञ् ..' इति धातोरित्यर्थः ।। **तत्वमिति** ।। लुप्ताकारदकारस्य तकार इत्यर्थः ।। [2]आङ्**पूर्वात् तनोतेः मनिति** ।। **तत्वमिति** ।। दकारस्य तकारभाव इत्यर्थः ।। **तनोतेरिति** ।। 'तनु विस्तारे'**(पा.धा.१४६३)** इति धातोः, 'अद भक्षणे'**(पा.धा.१०११)**इति धातोः डमन्प्रत्यये डित्वात् टिलोपे आत्मेति रूपमिति भावः ।। उत्तरवाक्ये 'तत्परम्'इति वाक्येत्यर्थः।।३७-४१।।

**यच्चापहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु[3] ।**
**एकोऽथ वाऽप्यच्युत तत्समक्षं तत् क्षामये त्वामहमप्रमेयम् ।।४२।।**
**पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।[4]**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ।। ४३ ।।**
**तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ।। ४४।।**

---

१. अत्र सो मातृकायां- 'शृ इति । शृङ् गण' इति धातोरित्यर्थः ।। इति वाक्यं लिखितम् । किं केन सङ्गतमिति न स्पष्टम् ।

२. इतः परं वाक्यद्वयं सो-मातृकायां नास्ति ।

३. (अ)'पराभवो धर्षणं स्यादवज्ञानमथापि वा । न तत् सत्सु सदा कुर्यात् सह शय्यासनं न च' (भा.ता. षाड्गुण्ये११.७.४५)

(आ) भागवते १.१४.२०.'शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य ऋभुमाननिति विप्रलब्धः । सख्युः सखेव पितृवत्तनयस्य सर्वं सेहे महामहिमतया कुमतेरघं मे'।।

विजयध्वजीये - **'परदेवतायाः शय्याद्यैक्यमपराधः'**।।

४. (अ)स्मरन्ति च २-३-४७. इति सूत्रम् । तत्व.प्र-एतच्च स्वरूपांशलक्षणं कृष्णाद्यवतारेश्वस्तीत्याह-नेति । (भाष्यम्-)'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः इत्यादि' । त.प्र.-जीवेषु विभिन्नांशलक्षणं त्वनुभवसिद्धम् ।।

(आ) न्यायामृते एकमेवाद्वितीयमिति श्रुत्यर्थविवरणप्रकरणे - तथाच समाभ्यधिकराहित्यमेवाद्वितीय शब्दार्थः । 'न तत्समश्चाभ्यधिकश्च दृश्यते '(श्वे.उ.६-८)इति श्रुतेः,' न त्वत्समोऽस्त्यभ्यधिकः' इति स्मृतेश्च ।।

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ।। ४५ ।।
किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ।। ४६ ।।

( विश्वरूपदर्शनमतिदुर्लभम् )

**श्रीभगवानुवाच–**

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ।। ४७ ।।
न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ।। ४८ ।।
मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ् ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ।। ४९ ।।

**भाष्यम्** — एकस्त्वमेव कारयिता नान्योऽस्ति, अथापि ।। ४२ -४९ ।।

**प्रमेयदीपिका**

'एकः परोक्षः' इति क्लिष्टं[१] व्याख्यानमिति ज्ञापयितुं तदर्थमन्वयं च दर्शयति– **एक इति** ।। आद्याक्षरग्रहणेन 'ए'शब्दः एकस्य द्योतकः । **क** इति कशब्दः कारयितृत्वद्योतकः । अन्तर्णीतण्यर्थात् करोतेर्डः । **अथापि** एवमसत्कारार्होऽप्यसत्कृतोऽसि ।। ४२-४९ ।।

**भावदीपः**

**अथापीति** ।। भाष्यपदानुवादः ।। ४२-४९ ।।

---

१. शाङ्करभाष्यम् २-भाग ,पृ-३२३ ।

**सञ्जय उवाच—**

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ।। ५० ।।

( भक्त्यैकगम्यो भगवान् )

**अर्जुन उवाच—**

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ।। ५१ ।।

**श्रीभगवानुवाच—**

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ।। ५२ ।।[1]
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।। ५३ ।।
[2]भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।। ५४ ।।

( साधनस्वरूपम् )

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ।। ५५ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विश्वरूपसंन्दर्शनयोगो नाम एकादशोऽध्यायः ।। ११ ।।

---

१. न्यायामृते ब्रह्मणो निराकारत्वभङ्गे -'देवा..काङ्क्षिणः' इत्युक्तरूपस्य 'ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप' इति स्मृतौ मुक्तगम्यत्वोक्तेश्च । अत एवेदं रूपं न भौतिकम् , प्राकृतम् ,अनित्यं वा ।।
२. अयं ब्र.सू.भा१.१.१'व्योमसंहितायां च' इति भाष्यस्थचशब्दव्याख्यानतया तत्वप्रदीपे उदाहृतः ।

**भाष्यम् — स्वकं रूपं तु भ्रान्तप्रतीत्या । अन्यथा तदपि स्वकमेव । प्रमाणानि तूक्तानि पुरस्तात् ।। ५० ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये एकादशोऽध्यायः ।। ११ ।।**

**प्रमेयदीपिका**

'स्वकं रूपं दर्शयामास' इति कृष्णरूपस्य स्वकत्वविशेषणाद् विश्वरूपं न स्वकमिति प्रतीतिः स्यात् । अत आह– **स्वक**मिति ।। कृष्णः स्वकं रूपं न विश्वरूपमिति भ्रान्त-प्रतीत्यनुवादेनोच्यत इत्यर्थः । कुत एतत्? इत्यत आह– **अन्यथे**ति ।। प्रमाणप्रतीत्येत्यर्थः । कानि तानि प्रमाणानि? इत्यत आह– **प्रमाणानी**ति ।। द्वितीयान्ते ।। ५० ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां श्रीजयतीर्थमुनिविरचितायां प्रमेयदीपिकायाम् एकादशोऽध्यायः समाप्तः ।।**

**भावदीपः**

तस्यार्थः 'एवमित्यादि भाष्यं योजयति - **कृष्ण इत्यादिना** ।। 'उच्यते' इत्यन्वयः ।।

**।। इति श्रीराघवेन्द्रयतिविरचिते प्रमेयदीपिकाभावदीपे एकादशोध्यायः ।।**

# ।। अथ श्रीमद्भगवद्गीतायां द्वादशोऽध्यायः।।

( भगवदक्षरोपासकयोर्मध्ये के उत्तमाः )

**अर्जुन उवाच–**

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**

**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ।। १ ।।**

( द्वादशाध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम — अव्यक्तोपासनाद्भगवदुपासनस्योत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयत्यस्मिन्नध्याये ।**

**प्रमेयदीपिका**

एतदध्यायप्रतिपाद्य[१]मर्थमाह– **अव्यक्तेति**[२] ।। **अव्यक्तं** श्रीः । **तदुपायं** भगवदुपासनोपायम् । तदुपायप्रदर्शनं च भगवदुपासनाधिक्यसमर्थनार्थमित्येकार्थता । षट्कान्तर्भावश्च । अर्जुनस्य प्रश्नसङ्गतिप्रदर्शनेनैवानन्तर्यलक्षणाऽपि सङ्गतिर्ज्ञायते ।।

**भावदीपः**

प्रतिपाद्यभेदेनाध्यायभेदमाशङ्क्य भगवदुपासनोत्तमतैव प्राधान्येन प्रतिपाद्यते । तदुपायस्तु तादर्थ्येन । अतो नानेन दोष इति भावेनाऽह–**तदुपायप्रदर्शनं चेति** ।। **षट्केति** ।। भगवन्माहात्म्योक्तिपरत्वाद् अस्याध्यायषट्कस्य[३] तदुपपादनेनो[४]त्तमत्वोक्तेश्च तन्महिमोक्तौ पर्यवसानादिति भावः ।। **अर्जुनस्य प्रश्नसङ्गतीति** ।। **'एवं सततयुक्ताः'** इति गीतायामेवंशब्देन दृष्टश्रुतरूपभगवत्परामर्शेन प्रश्नकरणस्य अग्रे भाष्ये व्याख्यानात् पूर्वानन्तर्यमस्य सिद्धमिति भावः ।।

**भाष्यम् — तदुपासनमपि मोक्षसाधनं प्रतीयते ।**

---

१. 'अर्थम्' इति मातृकायां नास्ति ।
२. 'अव्यक्तोपासनेति' इति मातृकायाम् ।
३. 'मध्यषट्कस्य' इति सो मातृकायाम् ।
४ 'तदुपासनोत्तमतोक्तेश्च' इति का+ सोमातृकायोः ।

**'श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ'**

(ऋ.७.४.४.४) इति ।।

### प्रमेयदीपिका

ननु भगवदुपासनमिवाव्यक्तोपासनमपि यदि मोक्षसाधनत्वेन प्रमितं स्यात्, तदा तत्साधकाधिक्यविषयः संशयः स्यात् । तदेव कुतः? तथा कथमयं संशयमूलोऽर्जुनस्य प्रश्नः? न हि भिन्नफलसाधनसाधकानां निर्धारणार्थः प्रश्नो युज्यते । किन्तु साध्यनिर्धारणार्थ एव । नच तथा प्रकृतो **'यावानर्थः'**(२.४६) इत्यादिना निरस्तत्वादित्यत आह– **तदुपासनमपी**ति ।। **श्रियं** प्रति **वसाना** वसन्तः, तामाच्छाद्य स्थित्वा वा उपासीनेति यावत् । तेषां **समिथा** समीहितानि सत्यानि **भवन्ति** । **मितद्रौ** समुद्रे क्षीराब्धौ[1]।।

### भावदीपः

**तत्साधके**ति ।। अव्यक्तोपासनानुष्ठातुराधिक्यविषय इत्यर्थः ।। भिन्नश्रितत्वोपासनायां मोक्षेतरफलकत्वं मन्वान आह–**नहीति** ।। **भिन्नेति** ।। भिन्नविभिन्नफले मोक्षतदितरफलके ये साधने भगवदव्यक्तयोरुपासने तत्साधकानां तदनुष्ठातॄणां मध्ये कोऽधिक इति निर्धारणार्थ इत्यर्थः ।। **साध्यनिर्धारणार्थ एवेति** ।। उपासनाजन्यफलद्वयमध्ये किमुपासनायाः फलमधिकमिति साध्यनिर्धारणार्थ एव प्रश्नो युज्यत इत्यर्थः ।। अस्तु तथैव प्रकृत इत्यत आह– **न च तथेति** ।। कुतः? इत्यत आह -**यावानिति** ।।

**'यावानर्थ उदपाने सर्वतः सम्प्लुतोदके'**(२.४६)

इत्यादिना द्वितीये एव मोक्षेतरफलस्यानुत्तमत्वोक्तेः, अव्यक्तोपासनस्य च मोक्षेतर-फलकत्वात् साध्ये सन्देहस्यैवायोगेन तदुत्तमत्वनिर्धारणार्थोऽपि प्रश्नो न[2] युक्त इत्यर्थः ।। 'वस निवासे'(पा.धा.१०७४) 'वस आच्छादने'(पा.धा.१०९३) इति धातुद्वयरूपमित्युपेत्य क्रमादर्थावाह–**वसाना इत्यादिना** ।। वसतेरात्मनेपदं छान्दसमिति भावः ।। **क्षीराब्धाविति** ।। 'अमृतत्वमायन्' इत्यन्वय इति भावः ।।

---

१. **'क्षीराण्याप इव क्षीरापः, ता धीयन्ते अत्रेति विग्रहे, 'कर्मण्यधिकरणे च'(घोः किः) कर्मण्युपपदे अधिकरणोपाधौ घुसञ्ज्ञकप्रकृतेः किप्रत्यय इत्यर्थः'** -वि.त.नि.लघुप्रभा ।।

२. नकारः मातृकाद्वयेपि अस्पष्टतया लिखितः ।

**भाष्यम्** —'अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते' (कठ.१.३.५)[१] इति च ।

अव्यक्तं च महतः परम् ।

**'महतः परमव्यक्तम्'**(३.११) इत्युक्तपरामर्शोपपत्तेः ।

'उपास्य तां श्रियमव्यक्तसञ्ज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः'

इति सामवेदे आग्निवेश्यशाखायाम् ।

## प्रमेयदीपिका

श्रीशब्दस्यान्यत्रापि प्रवृत्तेरव्यक्तविषयामेव श्रुतिं पठति– **अनादीति** ।। **निचाय्य** सम्पूज्य निशाम्य वा । अत्रापि नाव्यक्तं श्रूयत इत्यत आह– **अव्यक्तं चेति** ।। चोऽवधारणे । कुत एतत्? परमात्मनोऽपि तत्सम्भवादित्यत आह– **महत** इति ।। अत्र हि **'तं महतः परम्'** इति परामर्शो दृश्यते । स चोक्तस्यैव भवति । अव्यक्तमेव च **महतः परमव्यक्तम्** इति महतः परत्वेनोक्तम् । अतोऽत्राप्यव्यक्तग्रहणे **तम्** इत्ययं **महतः** परमव्यक्तम् इत्युक्तस्य परामर्श इत्युपपद्यते । अन्यथाऽनुक्तपरामर्शः प्रसज्यते । परमात्मा तु न महतः पर इत्युक्तः । किन्तु 'अव्यक्तात् पुरुषः परः' इत्येवेत्यर्थः । श्रुतिद्वयार्थ-सङ्ग्राहिकां स्पष्टां चात्र श्रुतिमुदाहरति– **उपास्येति** ।।

## भावदीपः

अन्यत्रापीति ।। 'शंरूपे तु रतेर्वायौ श्रीरित्येव च कीर्त्यते'(म.भा.तानि.२.१२६) इति वाण्यामपि वृत्तेरित्यर्थः ।

---

१. बन्धनिवर्तकं तज्ज्ञानं केन मार्गेण भवतीत्यतो दुर्गं पथ इत्युक्तमाहि- अनादीति । अनाद्यनन्तं आद्यन्तवर्जितम् । महतो महत्तत्त्वाभिमानचतुर्मुखात् परम् । ध्रुवं शश्वदेकप्रकारं तं तारतम्यान्तगत्वेन प्रागुक्तं पुरुषं निचाय्य श्रवणादिभिर्निश्चित्य तदपरोक्षजप्रसादद्वारा मृत्युमुखात् संसृतिबन्धात् प्रकर्षेण मुच्यते । शब्दाद्यवेद्योपि भगवान् सदाचार्यसहायलब्धश्रवणमननध्यानावृत्या प्रसन्नः स्वापरोक्षं दत्वा बन्धान्मोचयतीति भावः । ..। अत्र महतः परादव्यक्तात् परमिति वक्तव्येपि अव्यक्ताभिमानिन्याः स्वभार्यायाः श्रियः परत्वं सिद्धमिति महतः परमित्येवोक्तम् । तेन महत्परत्वलिङ्गादव्यक्तमेवात्र निचाय्यवाक्येन कथ्यत इति प्रत्युक्तम् ' इति खण्डार्थे राघवेन्द्रतीर्थीये ।

[1]अथवा 'त्रैलोक्यां बुभुजे श्रियम्'(भाग-६. )

इति षष्ठस्कन्धे ऐश्वर्येऽपि प्रयोगादिति भावः ।। **अव्यक्तविषयमिति** ।। पूर्वपक्षरीत्येति भावः । वायुदर्शने[2] इति धातुपाठेऽप्यनेकार्थत्वमुपेत्याह–**सम्पूज्येति** ।। **निशाम्येति** ।। श्रवणादिकृत्वेत्यर्थः ।। **तदिति** ।। **'यो बुद्धेः परतस्तु सः'** इत्यादाविवाव्यक्तपुरुषस्यापि महतः परत्वसम्भवादित्यर्थः ।। **अत्र हीति** ।। विचार्यवाक्ये -**अन्यथेति** विचार्यवाक्यस्थतच्छब्दस्य हरेः परामर्शः इत्यर्थः ।।

( वेदोक्तलक्ष्मीमहात्म्यम् )

**भाष्यम् — महच्च माहात्म्यं तस्या वेदेषूच्यते ।**

**'चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।**

**तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्'**[3]

(ऋ.८.६.१६.६)।

---

१. इतः परं वाक्यद्वयं काणियूरु-सोदामातृकायोः नास्ति । केवलं मं-मात्रे ।

२. सर्वत्रापि एवमेव पठ्यते । अर्थः न स्पष्टः ।

३. श्रीदेव्याः नित्ययौवन-ज्ञानमयत्व-सर्वपूज्यत्वरूपमाहात्म्य-मुच्यते – चतुष्कपर्देति । चत्वारः कपर्दाः जटाजूटशब्दिताः शिखण्डाः यस्याः सा तथोक्ता । वेणीचतुष्टयशालिनीत्यर्थः । यद्यपि 'कपर्दोऽस्य जटाजूटः' इत्यमरे पिनाकिजटाबन्धपरं कपर्दशब्दमाचष्ट । तथापि 'कपर्दस्तु जटाजूटे देवदेवस्य शूलिनः' इत्युक्त्वा 'दृश्यते च जटाजूटमात्रे' इति केशवः जटाजूटमपि कपर्दशब्दार्थमाहेति नानुपपत्तिः । युवतिः नित्ययौवना । सुपेशा सुरूपा । 'पेशो रूपे हिरण्ये च' इति केशवः । 'मृदुपिण्डश्च पेशः स्यात्' इति वचनात् सुकुमारतरशरीरा वा । घृतप्रतीका दीप्ताङ्गी । 'स्निग्धदेहा' इत्यप्याहुः । वयुनानि ज्ञानानि । वस्ते आच्छादयति । 'वस आच्छादने' इति धातोः । ज्ञानालङ्कृतेति यावत् । यत्र यस्यां विषये देवाः भागदेयं कर्म दधिरे समर्पितवन्तः । तस्यां सुपर्णा द्विवचनस्य 'सुपां सुलुक्' इत्यादिना आकारादेशः । सुष्ठु परमानन्दा । पृषोदरादिभावेन परशब्दान्त्यलोपः । 'णो हि निर्वृतिवाचकः' वृषणा 'वृष सेचने' इति धातोः 'कनिन् युवृषितक्षिराजिधन्विद्युप्रति दिवः'(उणादि.१-१५६)इत्यौणादिके कनिन्प्रत्यये, तस्य कित्वाद्गुणाभावे वा षपूर्वस्य निगमे षपूर्वस्य ''नो उपधायाः''(पा.सू.-६-४-७) इति विकल्पितत्वात् 'सर्वनामस्थाने चासम्बुद्धौ' (पा.सू.६-४-८)इति प्रसक्तदीर्घाभवे 'कॄपॄवृजिमन्दिनिधात्रः क्युः'(उणादि.२-८१) इत्यत्र 'क्युः' इति योगविभागात् वृषेः क्युप्रत्यये नस्य अनादेशे,नस्य णत्वे वा निष्पन्नवृषणशब्दप्रथमाद्विवचन-स्याकारादेशे वृषणौ, सेचकौ सर्वाभीष्टानां वर्षितारावित्यर्थः । निषेदतुः निषण्णौ बभूवतुः । द्विरूपभगवतो रमणपात्रं रमेति भावः ' इति सत्यसन्धीयव्याख्या ।

'चतुःशिखण्डा युवतिः सुपेशा..... वयुनानि वस्ते'[१] इति च ।

**प्रमेयदीपिका**

नन्वेवं प्रतीयमानमप्यव्यक्तोपासनस्य मोक्षसाधनत्वमुपचरितमेव । **'अन्तवत्तु फलं तेषाम्'**(७.२३)इत्युक्तन्यायात् । अतो नास्य सन्देहहेतुत्वमित्यत आह– **महच्चेति** ।। **तस्याः** श्रियः । युक्तं ब्रह्माद्युपासनस्य मोक्षसाधनतायामुपचरितत्वकल्पनम् । तेषां जनन-मरणादिमत्त्वेनासम्भवात्। श्रियस्तु महामाहात्म्यवत्त्वेन वेदोक्तत्वाद् असम्भवाभावाद् वास्तवमेव तदुपासनस्य मोक्षसाधनत्वमित्यर्थः । **सुपेशा** सुरूपा । **घृतप्रतीका** दीप्ताङ्गी । **वयुनानि** ज्ञानानि **वस्ते** आच्छादयति । ज्ञानालङ्कृतेति यावत् । **सुपर्णा** सुष्ठु परमानन्दौ **वृषणा** सेचकौ द्विरूपो भगवानेव । **यत्र** यस्यां विषये । अत्र नित्ययौवनं ज्ञानमयत्वं सर्वदेवतापूज्यत्वं च प्रतीयते । एवमुत्तरत्र ।।

**भावदीपः**

इत्युक्तन्यायादिति ।। **'कामैस्तैस्तैर्हृतज्ञाना भजन्ते अन्यदेवताः'** इत्युक्त ब्रह्माद्यन्यदेवताभजकानां **'तेषाम्'** इति परामृश्य **'अन्तवत्तु फलम्'** इति सप्तमोक्त-न्यायादित्यर्थः ।। **नास्येति** ।। अव्यक्तोपासनं मुक्तिसाधनमित्यस्योपासकाधिक्यविषयप्रश्नबीज संशयहेतुत्वेत्यर्थः । भाष्ये शेषमाह– **तस्याः श्रिय इति** ।। **एवमुत्तरत्रेति** ।। 'चतुःशिखण्डा' इति श्रुतावित्यर्थः ।।

**भाष्यम् —**

'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः'

इत्यारभ्य

'अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्या वेशयन्तीम् ।

---

१. काठकसंहितायां समाख्या ऋक् श्रूयते -
''चतुःशिखण्डा युवतिः सुपत्नी विनीयमाना महते सौभगाय ।
घृतं दुहानादितिर्जनाय सा मे धुक्ष्व सर्वान् भूतिकामान्'' ३१-४२ ।।,
तैत्तरीयब्राह्मणे -१-२-१-२७, ३-७-६-५, ७-१४ .

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं श्रुणोत्युक्तम् ।
अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुतश्रद्धिवं ते वदामि ।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ।[१]
अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ ।[२]
अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे ।[३]

---

१ (अ)वि.त.नि.टीकायाम्- सम्प्रति ताभ्य एव तत्तद्दर्शनाधिकृताभ्यः शक्त्यादिदेवताभ्यो विष्णोः परत्वं विशेषतः श्रुतिभिरुपपादयति -यं कामय इति । महालक्ष्मीवाक्यमेतत् । अहं यं यमुग्रं रुद्रं कर्तुं कामये तं तमुग्रं कृणोमि करोमि । 'व्यत्ययो वहुलम्' इति विकरणप्रत्ययः । तथा तं ब्रह्माणम् तमृषिम्, तं सुमेधां सुमेधसं करोमि । अहं शरवे हिंसकाय । पञ्चममुखच्छेदाद् ब्रह्मद्विषे रुद्राय । द्वितीयार्थे चतुर्थी । एवम्भूतं रुद्रम् । हन्तवा उ हन्तुमेव ,नतु भीषयितुम् । धनुरातनोमि विस्तारयामि । अहं जनाय जनस्य समदं सम्मदं हर्षं करोमि । अहं द्यावापृथिव्युपलक्षितान् सर्वानूर्ध्वलोकान् धारणयाऽविवेश । विशेः 'छन्दसि सुङ् सङ् लिटः' इत्यपरोक्षेऽपि लिट् । अहमस्य जगतः पितरं ब्रह्माणं मूर्धन् मूर्धनि सर्वोत्कृष्टतया सुवे जनयामि । न केवलं पदे स्थापयामि । एवम्भूताया मम योनिः कारणभूतः समुद्रे अप्स्वपामन्तस्तिष्ठति । स्त्रीणां पतिनामग्रहणम् अनुचितमिति शिक्षणाय नारायण इत्यनुक्त्वा 'आपो नाराः' इत्यादिनोक्तं तदर्थमेवाह । अत्र श्रिया ब्रह्मादीनां सर्वेषामात्माधीनत्वमभिधाय स्वात्मनोऽपि नारायणाधीनत्वमुक्तम् ।।

(आ)न्यायसुधायाम् -(२-२-३७) अहमित्यनेन मृतिः(रुद्रस्य इत्यर्थः) ।। अहं ब्रह्मद्विषे ब्रह्मद्विषां दैत्यानां शरवे हिंसकाय हिंसकं रुद्राय रुद्रं हन्त वै हन्तुमेव प्रलये धनुरातनोमि विस्तारयामीति ।। यमित्यनेन पराधीनपदप्राप्तिः(रुद्रस्य इत्यर्थः) । अहं यं यं रुद्रं कर्तुं कामये तं तमुग्रं रुद्रं कृणोमि करोमि एवं तं ब्रह्माणं तमृषिं तं सुमेधां सुमेधसं करोमीति ।।

२. त.प्रका- ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्रे । शरवे हिंसनशीलाय । हन्त वै हन्तुमेव, नतु भीषणाद्यर्थमिति भावः ।।

भावदीप-ब्रह्मद्विष इति । सुधायां तु व्यत्ययमाश्रित्य' ब्रह्मद्विषां शरवे हिंसकाय' इति व्याख्यातम् ।। 'दक्षप्रजापतिद्विष इति वा' इति चन्द्रिका(पत्युरधिकरणे )।। हिंसनेति ।। 'शृ हिंसयाम्' इति धातोः ।। हन्तुमेवेति ।। तुमर्थे से-सेन्-असे-असेन्-क्से-कसेन्-अध्यै-अध्यैन् - कध्यै-कध्यैन् -शध्यै-शध्यैन्- तवै-तवैङ्-तवेन्' इति तवैप्रत्ययः ।।

३. ब्र.सू.भा-१-१-१.उदाहृता । त-प्र. नचास्तु लक्ष्मीकारणं ब्रह्माद्यन्यतममिति वाच्यम् ।'यं कामये' इति लक्ष्म्या ब्रह्मादीनां स्वाधीनत्वोक्तेरित्यर्थः ।'दिवा'इत्यादि तृतीया पञ्चम्यर्थे । स विष्णुर्द्यावापृथिवीपरोऽहं तु महिम्नैतावती परिमिता वभूवेत्यर्थः ।। यमुग्रं ब्रह्माणृषिं सुमेधसं वा कर्तुं कामये तं तमुग्रं ब्रह्माणमृषिं समेधसं वा करोमीत्यर्थः ।।

भावदीपे- अस्य सूक्तस्याम्भृणीवाक्यत्वात्, अम्भृण्याश्च 'श्रीर्भूर्दुर्गाऽम्भृणी ह्रीश्च महालक्ष्मीश्च

**परो दिवा पर एना पृथिव्यै तावती महिना सम्बभूव'**

**(ऋ.१०.१२५- ) इत्यादि च ।**

**'त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया'**[१]

**(म.ना.उ.१३.२)इति च ।।**

## प्रमेयदीपिका

रुद्राद्यैः परिवृता । **राष्ट्री** राज्ञी । **यज्ञियानां** यज्ञार्हाणां वसूनां पदार्थानां देवानां वा **सङ्गमनी** सङ्गमयित्री । **प्रथमा चिकितुषी** अनादितः सर्वत्र कृतनिवासा । **पुरुत्र** पुरुस्थानेषु । **व्यदधुः** कृतवन्तः पूजार्थं प्रतिष्ठापितवन्तः । **भूरिस्थात्रां** स्वतो भूरिस्थानेषु स्थिताम् । देवानावेशयन्तीम् । 'योऽन्नमत्ति स मयैवात्ति' इत्यादि । ये **अमन्तवो** निरपराधास्ते **मामुपक्षयन्ति** मत्समीपे वसन्ति । **श्रुधि** शृणु । श्रुतः प्रसिद्धः । **श्रद्धिवं** श्रद्धेयम् । **यमुग्रं** रुद्रं कर्तुं **कामये तं तमुग्रं कृणोमि** करोमीत्यादि । **सुमेधां** सुमेधसम् । 'रुद्राय' इत्यादि चतुर्थी द्वितीयार्थे । **ब्रह्मद्विषे** संहारकाले ब्राह्मणादिसर्वप्राणिद्विषम् । यद्वा **ब्रह्मद्विषां शरवे** हिंसकं **हन्तवा उ** हन्तुमेव । **अस्य** जगतः पितरं हिरण्यगर्भं **मूर्धनि** सर्वाधिक्ये । **योनिः** कारणम् । 'दिवा' इत्यादि तृतीया पञ्चम्यर्थे । **एना** एतस्याः । **महिना** महिम्ना अहम् **तावती** एतावती **सम्बभूव** इत्यादिनोच्यते ।।

## भावदीपः

इत्यादि **चेति** भाष्यस्य पूर्वेणान्वयमाह- **इत्यादिनोच्यत इति** ।।

**भाष्यम् — इति शङ्का कस्यचिद् भवति । अतो जानन्नपि**[२] **सूक्ष्मयुक्तिज्ञानार्थं पृच्छति – एवमिति ।। एवंशब्देन दृष्टश्रुतरूपं 'मत्कर्मकृत्'(११.५५)इत्यादिप्रकारश्च**

---

दक्षिणा'इति बृहद्भाष्योक्तश्रुत्या लक्ष्मीमूर्तित्वादिति भावः ।। 'बभूव'इत्युत्तमपुरुषम् । श्रुतौ 'एना'इति पृथिव्याविशेषणम् । अस्या इत्यर्थः । 'तं ब्रह्माणं तमृषिं तं सुमेधाम्' इति शेषस्यार्थः - ब्रह्माणमित्यादि । 'कृणोमि' इति विकरणव्यत्ययेन करोमीत्यर्थः ।।

१.' हे मेधादेवि मेधाभिमानिनि सरस्वति । त्वया जुष्टः अनुगृहीतः त्वत्प्रियो वा ऋषिः अतीतानागतज्ञानी भवति । तथा त्वया जुष्टः ब्रह्मा चतुर्मुखः आगतश्रीः प्राप्तसम्पच्च भवति' इति धीरेन्द्रीये ।।

२. 'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा । पृच्छन्ति साधवः ...'।

परामृश्यते । अव्यक्तं प्रकृतिः[१] ।

'महतः परमव्यक्तम्'(कठ.३.१२) इति प्रयोगात् ।

'यत् तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।

प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्'[२](भाग.३.२७.११)

इति च भागवते ।

अक्षरं च तत् । 'अक्षरात् परतः परः' (आथर्वण.२.१.२) इति श्रुतेः ।

**प्रमेयदीपिका**

भवत्वेवं ततः किम्? असन्दिग्धतया भगवन्तमेवोपासीनस्यार्जुनस्य कथम् अयं संशयः ? येनैवं पृच्छतीत्यत आह– **इतीति** ।। यत एवं भगवदुपासनस्येवाव्यक्तोपासनस्यापि विनोपचारेण मोक्षसाधनत्वं प्रतीयत इति तस्मात् मार्गाद्वयेनैकमेव फलं प्राप्नुवतां मध्ये के श्रेष्ठाः? इति साधकबाधकप्रमाणाभावेन शङ्का संशयः कस्यचिद् अविदिततत्त्वस्य भवति । अतस्तदनुजिघृक्षया भगवदुपासका एव श्रेष्ठा इति जानन्नप्यर्जुनः पृच्छतीत्यर्थः ।।

अथवा जानन्नपि तत्र स्वाविदितयुक्तिज्ञानार्थं संशयमाहृत्य पृच्छतीत्याह–

१. प्रकृतिः महालक्ष्मीः -वि.त.नि.टीका ।

२. कपिलो भगवान् तत्र हरेरनन्तरूपत्वेन तत्स्वरूपे बुद्ध्यनारोहात् प्रकृतिलक्षणज्ञानेन तल्लक्षणस्य ज्ञातप्रायत्वात् प्रकृतिलक्षणं वक्ति - यत् तदिति । यत् तत्वं सत्वादिगुणत्रयरूपमव्यक्तं सूक्ष्मं नित्यमविनाशि सदसदात्मकं व्यक्ताव्यक्तात्मकं ज्ञानिनस्तत् तत्वं प्रधानं नाम्ना प्रकृतिमाहुरित्यन्वयः । अत्र त्रिगुणमित्येतत् इतरव्यावर्तकं लक्षणम् । इतराणि तु स्वरूपाख्यानपराणि । अविशेषमकार्यम् । विशेषवत् महदादिकार्यवत् । अत्रोभयेषाम् अभिमन्यमानाभिमनिनां प्रकृत्यादिशब्दवाच्यत्वमङ्गीकार्यम् । तथाहि सत्वादिगुणवतो जगदुपादानत्वम् । सत्वादिगुणमानिन्याः श्रीभूदुर्गाभिधायाः श्रियश्च सत्वादिगुणप्रवर्तकत्वेन । ततोपि प्रकर्षेण जगद्रूमहदादिशरीरवद्ब्रह्मादिजनिकर्तृत्वेन तच्छब्दवाच्यत्वं विवक्षितम् । केवला सृतिकर्मोदासीना अव्यक्ता , सिसृक्षत्वविशेषोपेता व्यक्ताव्यक्ता, महदादिकार्यव्यापिनी व्यक्तैवेति विशेषात् त्रिरूपिणी श्रीरुच्यते । एवं जडरूपा प्रकृतिरपि प्रधानरूपा अव्यक्ता उपादानरूपा व्यक्ताव्यक्ता, महदादित्वेन परिणीयमाना व्यक्तैव । सर्वकार्येषु प्रधानत्वात् प्रधानम् । नचेदं स्वकपोलकल्पितम् । किन्तु प्रमाणान्तरसिद्धत्वात् । तदुक्तं- व्यक्ताव्यक्तात्मं यत् तु विद्यात् सदसदात्मकम् । असर्गा केवलाव्यक्ता सुसृक्षुरुभयात्मिका । व्यक्तैव कार्यरूपा तु प्रकृतिस्त्रिविधा मता । कार्यतः सा प्रधानत्वात् प्रधानमिति कीर्त्यते । अविशेषा ह्यकार्यत्वात् सा च श्रीर्विष्णुसंश्रया । इति। .' इति विजयध्वजतीर्थाः ।।

**सूक्ष्मेति** ।। योग्यतावशाद् एवम्भूतं त्वामेवं प्रकारेणोपासत इत्युभयत्रैवंशब्दस्यअन्वय इत्याशयवान् आह– **एवमिति** ।। दृष्टं श्रुतं च रूपं यस्य ब्रह्मणः तत्तथा । अव्यक्त-अक्षरशब्दयोरपव्याख्यानं निराकर्तुमर्थं तावदाह– **अव्यक्तमिति** ।। **प्रकृतिश्चे**तना । **त्रिगुणं** त्रिगुणाभिमानित्वात् । **सदसदात्मकं** कार्यकारणाभिमानित्वात् । **अविशेषम्** अकार्यम् । ततः प्रधानं **प्राहुः** । **विशेषवत्** कार्यवत् । ततः **प्रकृतिं प्राहुः** । **तत्** प्रकृत्याख्यं तत्वम् । **परतः परः** अत्युत्तमः । अत्र '**अव्यक्तम्**' इति विशेष्यवाची । '**अक्षरम्**' इति विशेषण-वाची । '**अव्यक्तासक्तचेतसाम्**','**अव्यक्ता हि गतिः**' इत्यादिवचनात् । अतो व्युत्क्रमेण व्याख्यानम् । विशेषणोपादानं च देवतान्तरवैलक्षण्यप्रदर्शनेन प्रश्नसम्भावनार्थम् । एतदेव भाष्यकृता '**महच्च**' इत्यादिना प्रपञ्चितम् ।।

### भावदीपः

'**त्वयेति च**' इति भाष्यस्य '**तदुपासनमपि मोक्षसाधनं प्रतीयते**' इति पूर्वभाष्येण अन्वयमुपेत्यार्थमाह– **यत एवमिति** ।। इतिपदानुवादेनार्थमाह– **इति तस्मादिति** ।। पञ्चम्यन्ताक्षरशब्दस्य चित्प्रकृतित्वलाभाय '**परतः परः**' इत्यस्याभिप्रेतार्थमाह–**अत्युत्तम इति** ।। गीतास्थयोरक्षराव्यक्तशब्दयोर्व्युत्क्रमेण व्याख्याने बीजमाह– **अत्राव्यक्तमितीति** ।। **देवतान्तरेति** ।। ब्रह्मादिदेवतोपास्तेर्मुक्तिहेतुत्वस्योपचरितत्वेऽपि नाव्यक्तोपास्तेः स्तथात्वमिति वैलक्षण्येत्यर्थः ।। **एतदेवेति** ।। अक्षरपदप्रदर्शितं वैलक्षण्यमेवेत्यर्थः ।।

( अपव्याख्याननिराकरणम् )

**भाष्यम्- 'परं तु ब्रह्म न हि भगवतोऽन्यत् ।**

**'आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे'**[१](२.२.३४)

**इति भागवते ।**

### प्रमेयदीपिका

अन्ये तु 'ये त्वां भगवन्तं वासुदेवमुपासते ये चाप्यक्षरमव्यक्तं परं ब्रह्म तेषां के योगवित्तमाः' इति व्याचक्षते । तदसदित्याह– **परं त्विति** ।। '**आनन्दम्**' इत्यादेः पूर्वेणोत्तरेण चान्वयो

---

१ **'परञ्ज्योतिः परं ब्रह्म परमात्मादिका गिरः । सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चन' -गारुडे ४.३.३.सू.भा।**

२. **अत्र भागवततात्पर्योक्तदिशा मुक्तानां भगवत्प्रवेशविचारः विजयध्वीयादिविमर्शेनावधेयः ।**

द्रष्टव्यः । तथाच ये त्वां पर्युपासते ये च त्वामित्युक्तं स्यात् । तथा चोन्मत्तप्रलापत्वप्रसङ्ग इति भावः ।।

### भावदीपः

**पूर्वेणोत्तरेण चेति** ।। द्वितीयस्कन्धे द्वितीयाध्याय एव **'उपैति शान्तिमानन्दम्'** (भाग **२.२.३४)** इति पूर्वेण 'एतां गतिम्' इत्युत्तरेणेत्यर्थः ।।

[१]अयमर्थः । देवानां स्वस्वोत्तमदेवप्राप्तिद्वारा भगवति सायुज्यमुक्त्युक्तिप्रस्तावे **'तेनात्मना आत्मानमुपैति शान्तिम्'** इति पूर्ववाक्ये हरिः शान्तिशब्दितचित्प्रकृतिस्थम् आनन्दमात्मानं स्वात्मानमेव तेनात्मना विरिञ्चेन सहोपैति । स आनन्दमयः पूर्णानन्दो हरिः द्विपरार्धावसाने सर्वान्तर्यामिणि ब्रह्मणि स्वमूलरूपमुपैति । एवं स्वस्वबिम्बद्वारेण हरिं प्रविष्टानामपुनरावृत्तिः। एतां गतिं भगवतो गतिं गतो यः स वै **'पुनर्नेह विषज्जते अङ्ग'** इति उत्तरवाक्येणोच्यते । यो भागवतो वासुदेवे एतां सायुज्यलक्षणां गतिं गतः सः इह संसारे न विषज्जत इति । तथाच अपुनरावृत्तिप्राप्तिहेतुः वासुदेवः कथं न परब्रह्मेति भावः ।।

**भाष्यम् — रूपं चेदृशं साधितं पुरस्तात् । उपासनं च तथैव कार्यम् ।**

**'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' (यजु.सं)**

**इत्यारभ्य**

**'तमेवं विद्वानमृत इह भवति' नान्यः पन्था अयनाय विद्यते'**

**इति सा अभ्यस्ता । आदित्यवर्णत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्यः ।।**

### प्रमेयदीपिका

ननु भगवान् करचारणादिमद्रूपवान् । **परं ब्रह्म** तु नेदृशरूपवत् । **'अशब्दमस्पर्शमरूपम्'** **(काठके.१.३.१५)** इत्यादि श्रुतेः । अतः कथमेतत्? इत्यत आह– **रूपं** चेति ।। पराभ्युपगतस्य ब्रह्मणोऽपीति शेषः । अस्तु भगवानेव परं ब्रह्म । किन्तु ये त्वामेवं साकारमुपासते ये चाव्यक्तं निराकारं तेषां के योगवित्तमाः? इति प्रश्नार्थ इत्यत आह– **उपासनं** चेति ।। **तथैव** रूपवत्तयैव । स्यादयं प्रश्नार्थः, यदि रूपवत्त्वारूपवत्त्वाभ्यां भगवदुपासनं कार्यं स्यात्। नत्वैतदस्ति । किन्तु रूपवत्तयैव । अन्यस्य मिथ्योपासनत्वेनानर्थहेतुत्वादिति भावः।।

१. इदं वाक्यं क्रमातृकायां नास्ति ।

कुत एतत्? इत्यत आह– **सहस्रेति** ।। '**आरभ्य**' इत्यनेन '**ब्राह्मणोऽस्य मुखम्**' इत्यादेः '**आदित्यवर्णं तमसः** [1]**परस्तात्**' इत्यादेश्च ग्रहणम् । अभ्यासशब्देन तत्फलनियमो लक्ष्यते। **श्रुतिः** साकारोपासनं मोक्षसाधनमाह' इति शेषः । नन्वत्रोच्यमान आदित्यवर्णत्वादिः आकारः अतमस्कत्वादिसादृश्यादुपचरित एवेत्यत आह–**आदित्येति** ।। **वृथा** बाधकेन विना । उपचर्यत इत्युपचारः ।।

**केचित्** 'सहस्रशीर्षा' इत्यादिकं हिरण्यगर्भविषयमिति मन्यन्ते । अतस्तद्विधूयेश्वरविषयतया स्वमतं गृहीतुम् '**आदित्य**' इत्याद्युक्तम् ।।

**भावदीपः**

[2]उपासनाफलवाक्यमुक्त्वा, (उपासनं चेति फलवाक्यमुक्त्वा) 'सा अभ्यासा' इत्युक्तिः अयुक्तेत्यत आह–**अभ्यासशब्देनेति** ।। 'कथं सा अभ्यासा' इत्यस्य तं पुरुषमेवं सहस्रशीर्षत्वादिप्रकारेण विद्वान् अमृतो भवति । नान्यो मार्गोऽस्ति मोक्षाय इति, रूपवत्तयोपासनस्य फलनियमोक्तिरूपेत्यर्थः । 'सा अभ्यासा' इत्यस्याकाङ्क्षां पूरयति **श्रुतिरित्यादिना** ।। उपचारशब्दः कर्मणि व्युत्पन्नः । अत आदित्यवर्णत्वादिश्चोपचारत्वेनेत युक्तमिति भावेनाऽह–**उपचर्यत इतीति** ।।[3]अन्यथा शब्दधर्मत्वादुपचारकल्पनस्यात्र अनन्वयः स्यादिति भावः।। 'सहस्रशीर्षा' इति वक्तव्ये 'आदित्य' इत्याद्युक्तेर्बीजमाह– **केचिदिति** ।। श्रुत्यर्थस्य गहनत्वाद्विवेकमाह– **मुमुक्षुभिरिति** ।। 'को ध्येयः' इति शेषोक्तिः । एवमग्रेऽपि ।।

**( साकारमेव ब्रह्म ध्येयम् )**

**भाष्यम् — तथा च सामवेदे सौकरायणश्रुतिः -**

**'स्थाणुर्ह वै प्राजापत्य स प्रजापतिं पितरमेत्य उवाच –**
**'मुमुक्षुभिः साधुभिः पूतपापैः किमु ह वै तारकं तारवाच्यम् ।**
**ध्यानं च तस्याप्तरुचेः कथं स्यात् ध्येयश्च क पुरुषोऽलोमपादः '**
**इति । तं होवाच -**

१. 'तमसस्तु पारे' इति भवितव्यमिति भाति ।

२ कंसान्तर्गतभागः मं-मातृकायामेव । उपासान्तफल...साभ्या' इति कामातृका । अर्थः न स्पष्टः ।

३ 'त्तमा .. दित्यर्थस्य गहनत्वाद्वि ... ति' इति मातृका-। सा नास्ति ।

**'एष वै विष्णुः तारकोऽलोमपादो ध्यानं च तस्याप्तरुचेर्वदामि ।**
**सोऽनन्तशीर्षो वहुवर्णः सुवर्णो ध्येयः स वै लोहितादित्यवर्णः।**
**श्यामोऽथ वा हृदये सोऽष्टवाहुरनन्तवीर्योऽनन्तवलः पुराणः ॥'**

**इति । अरूपत्वादेस्तु गतिरुक्ता । पुरुषभेदश्च प्रश्नादौ प्रतीयते। 'त्वां पर्युपासते', 'ये चाप्यक्षरमव्यक्तम्' इत्यादौ ॥ १ ॥**

**प्रमेयदीपिका**

उपचारानर्हां चात्र श्रुतिमाह– **तथा चेति** ॥ **स्थाणुः** रुद्रः । **प्राजापत्यः** प्रजापतेरपत्यम् । **साधुभिः** साधकैः **तारकं** संसारस्य । **तारः** ओङ्कारः । **आप्तरुचेः** व्याप्ततेजसः । '**लोम**' इति केशवचनम् । '**लोमपाद**' इति द्वन्द्वः । न विद्यन्ते लोमान्तपादाद्यवयवाः यस्यासावलोमपादः । **तं स्थाणुम् उवाच प्रजापतिः** । **सुवर्णः** सुवर्णवर्णः । अत्र **मुमुक्षुभिः** को ध्येयः? इत्येकः प्रश्नः । **तारवाच्यं** तारकं वस्तु किमिति द्वितीयः ॥

तस्य ध्यानं कथं स्यात्? किं साकारतया उत निराकारत्वेन? नाद्यः । अलोमपादो ह्यसावुच्यते । न द्वितीयः, बुद्ध्यावनारोहात् इति तृतीयः । तत्राद्यद्वितीययोरर्थतो न भेदः । तारकस्यैव मुमुक्षुध्येयत्वादित्यभिप्रेत्य द्वयोरेकमेवोत्तरमाह '**यः त्वया मुमुक्षुध्येयः तारकः पृष्टः एष विष्णुः**' इति । 'यद्यप्यसावलोमपाद उच्यते तथाऽपि तस्य साकारतयैव ध्यानं वदामि' इति तृतीयस्य ॥

यदि ब्रह्मसाकारमेव तद्ध्यानं च तथैव कार्यं, तर्हि '**अशब्दमस्पर्शमरूपमव्ययम्**' (काठक.१.३.१५ )इत्यादेः का गतिः? इत्यत आह– **अरूपत्वादेस्त्विति** ॥ लौकिकरूपाद्यभावरूपा । एतेन अलोमपाद इत्यस्याभिप्रायोऽप्युक्तो भवति । इतोऽपि न परोक्तः प्रश्नार्थ इत्याह– **पुरुषेति** ॥ एवं हि व्याख्याने ध्येयस्यैव ध्यानं द्वेधेत्युक्तं स्यात् । अत्र तु ध्येयो पुरुषौ द्वौ प्रतीयेते । अतश्च नैवमित्यर्थः । प्रश्नस्य एकध्येयविषयतया कथञ्चिद्व्याख्यानेऽप्युत्तरं निरवकाशमित्याशयेनादिग्रहणं कृतम् ॥

किञ्च साकारोपासनेन विशुद्धाशये निराकारमुपास्ते इत्येकस्यैव क्रमेण ध्येयद्वयमिति परेषां सिद्धान्तः । अत्र तूपासकपुरुषभेदः प्रतीयते । ततोऽपि नान्योऽर्थ इत्याह– **पुरुषेति** ॥ उत्तरापव्याख्याननिराकरणं तु तात्पर्यनिर्णय इत्युक्तमेव व्याख्यानमिति स्थितम् ॥१ ॥२॥

**भावदीपः**

**तृतीयस्येति** ।। 'उत्तरम्' इत्यनुकर्षः ।। **एवं हि व्याख्यानमिति** ।। 'अस्तु भगवानेवायं परं ब्रह्म' इत्यादिना प्रागुक्तव्याख्यानमित्यर्थः ।। **एकध्येयेति** ।। विशेष्यैक्याभिप्रायेणेति भावः ।। **निरवकाशमिति** ।। ध्यानद्वयस्य उत्तमाधमरूपफलभेदोक्त्या ध्येयद्वयस्यैव प्रतीतेरिति भावः ।। तात्पर्यनिर्णय इति ।।

**'ये तु तेमे युक्ततमा मताः'** (१२.२)

**'मय्येव मन आधत्स्व'** (१२.७)

इत्यादौ भगवतोक्तेऽप्यव्यक्तोपासकानामाधिक्यं वदन्ति । ते त्वपलापकत्वादतिसाहसिकत्वात् सुशोच्या इत्यादिना ग्रन्थेनेत्यर्थः ।। १-२ ।।

**श्री भगवानुवाच–**

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ।। २ ।।**
**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ।। ३ ।।[१]**
**संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ।। ४ ।।**

( अव्यक्तोपासकानामप्यन्ततो भगवत्प्राप्तिरेव )

**भाष्यम् — भवन्तु त्वदुपासका एवोत्तमाः । इतरेषां तु किं फलमित्यत आह– ये त्वित्यादिना ।। अनिर्देश्यत्वं चोक्तं भागवते मायायाः -**

---

१. 'अक्षरं' देहतोऽप्यविनाशि,'अनिर्देश्यं' शब्दागोचरं, 'सर्वत्रगं' देशतो व्याप्तम्, 'अचिन्त्यं' मनसाऽग्राह्यं, गुणबाहुल्यात्, कूटे आकाशेऽभिमानित्वेन तिष्ठतीति 'कूटस्थम्', 'अचलं' कदाऽपि स्वपदादभ्रष्टं 'ध्रुवम्' उत्पत्तिविनाशशून्यम्, 'अव्यक्तं' श्रीतत्त्वं ये पर्युपासत इति गीतार्थः' इति **अक्षराधिकरण-ब्र.सू.भाष्यदीपिकायाम्** ।

'अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः'[१](भाग.१.१७.१९) इति ।

ईश्वरस्तु दैवशब्देनोक्तः **'दैवमन्ये परे'**(४.२५) इत्यत्र । उक्तं च सामवेदे काषायण-श्रुतौ

'नासदासीन्नो सदासीत्तदानीम्'[२] इति ।

'न महाभूतं नोपभूतं तदाऽसीत्' इत्यारभ्य[३]

'तम आसीत्तमसा गूढमग्रे' इति ।

'तमो ह्यव्यक्तमजरमनिर्देश्यमेषा ह्येव प्रकृतिः'[४] इति ।

### प्रमेयदीपिका

एवं तर्हि **'मय्यावेश्य'**(१२.२) इत्यनेनैव मदुपासका एव उत्तमा इति प्रश्नस्योत्तरं जातम् । किमुत्तरेण वाक्येन? इत्यत आह– **भवन्तु** इति ।। आक्षेपगर्भोऽयमभ्युपगमः । न युक्तं त्वदुपासकानामेवोत्तमत्वमिति भावः । तदुपपादनाय पृच्छति– **इतरेषामिति** ।। अव्यक्तोपासकानां किं फलं मोक्षोऽस्ति वा न वा । नचेदुदाहृतवाक्यविरोधः । आद्ये कथं त्वदुपासकानामुत्तमत्वम्? फलसाम्यादिति भावः ।।

नन्वेषां विशेषणानां ब्रह्मणोऽन्यत्रासम्भवात् कथम् 'इतरेषां किं फलम्?' इत्यस्योत्तरत्वेन एतदवतारः? इत्यतोऽक्षराव्यक्तत्वयोः मायायामुपपादितत्वात् तदन्यानि तत्रोपपादयन् अनिर्देश्यत्वं तावदुपपादयति- **अनिर्देश्यत्वं चेति** ।। शब्दागोचरत्वम् । **'धर्मस्य मम पादभङ्गः'** इत्यन्वयः ।।

१. 'अनन्तत्वात् सर्वात्मना अप्रतर्क्यात् तर्काविषयत्वात् अनिर्वाच्यात् प्रधानात् क्लेशपरम्परा, सर्वेषां जीवानां प्रकृत्या पिहितत्वादिति केष्वपि निश्चयः। अथवा अप्रतर्क्यात् प्रकर्षेण तर्कायोग्यात् सत्वेनासत्वेन सदसत्वेन वा निर्वक्तुमशक्यत्वात् भावरूपाज्ञानादिति केषु मायावादिषु निश्चयः' इति विजयध्वजीये ।। परीक्षितं प्रति वृषरूपधर्मवचनमिदम् ।

२. इदं वाक्यम् ऋग्वेदे अपि श्रूयते । तत्त्वोद्योते उदाहृतं च । तत्र च टीका- 'इदं खलु वाक्यं प्रलये सदसतोरभावं तमसश्च भावं प्रतिपादयदनुभूयते, न पुनस्तमः सदसद्विलक्षणमिति' ..इत्यादि ।। ततश्चायं श्रुत्यर्थो भवति । 'तदानीं प्रलये असदमूर्तं वाय्वन्तरिक्षाख्यं नासीत् । सच मूर्तं पृथिव्यप्तेजोरूपं नो आसीत् '। ..।। (अस्याः श्रुतेः द्वैतद्युमणावुक्तः (पृ-२५४) विशेषार्थः तत एवावगन्तव्यः ।

३. 'इत्याद्यारभ्य'-वे-ग्रं ।

४. प्रकृत्यधिकरण ब्र.सू.भाष्यदीपिकायाम्-इदं वाक्यमुदाहृतम् ।

नन्वत्रापीश्वरोऽस्त्वनिर्देश्य इत्यत आह– **ईश्वरस्त्विति** ।। **दैवं** पादभङ्गकारणमाहुः । तथा च पुनरुक्तिः स्यादिति भावः । नच दैवशब्दोऽदृष्टवाची । तस्य **'अपरे कर्म'** इति पृथगुक्तत्वात् ।। मायाया अनिर्देश्यत्वे स्पष्टं च प्रमाणमाह– **उक्तं चेति** ।। **महाभूतमाकाशवायुरूपम्** । **उपभूतं** तेजोऽब्-भूलक्षणम् । **तदा** प्रलये । अजरमित्यादिकं प्रलये अवस्थानस्योपपादकम् । नच **'एतद् ब्रह्म'** इति प्रदर्शनाय 'एषा ह्येव प्रकृतिः' इत्युदाहृतम् ।।

**भावदीपः**

**उदाहृतवाक्येति** ।।**'श्रियं वसाना'** इत्यादिश्रुतीत्यर्थः ।। **'धर्मस्य मम पादभङ्गः'** इत्यन्वय इति ।। प्रथमस्कन्धे वृषभरूपधर्मस्य परीक्षितस्य संवादरूपे सप्तदशेऽध्याये -

**'को ऽवृश्चत्तव पादांस्त्रीन् सौरभेय चतुष्पदः'**

इति परीक्षित्कृतप्रश्नं प्रति एकपादस्थितवृषरूपो धर्मो उत्तरमुक्तवान् ।

**'दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् । अप्रतर्क्यात्'**

इत्यादिना । तत्र पञ्चम्यन्तस्य साकाङ्क्षत्वात् धर्मस्य मम पादभङ्ग इति शेषोक्त्या श्लोकेऽन्वयो बोध्य इत्यर्थः ।। **'दैवम्'** इत्यादिवाक्येऽप्याकाङ्क्षां शेषोक्त्या पूरयति-**पादभङ्गेत्यादि** ।। सच्छब्दार्थस्यैवाकाशवायुरूपस्यैव श्रुतावुक्तेरसच्छब्दार्थं स्वयमाह- **तेजोऽब्भूलक्षणमिति** ।। [1]**असम्भवादिति**।। अनुत्पद्यमानादित्यर्थः ।।

**( अव्यक्तलक्षणम् )**

**भाष्यम्— सर्वगा अचिन्त्यदिलक्षणा हि सा । तथा हि मोक्षधर्मे–**

**'नारायणगुणाश्रयाद् [2]अजरामराद् अतीन्द्रियाद् अग्राह्याद् असम्भवतः असत्याद् अहिंस्रात् ललामाद् [3]द्वितीयप्रवृत्तिविशेषाद् अवैरादक्षयाद् अमराद् अजराद्[4] अक्षराद् अमूर्तितः (सर्वव्यापिनः) सर्वस्याः[5] सर्वकर्तुः शाश्वततमसः'**

**(म.भा.१२.३४२.६) इति ।।**

१ इदं वाक्यं कुत्र सङ्गतमिति न स्पष्टम् । सर्वत्र मातृकायामत्रैव पठ्यते ।

२. 'अजरात्' इत्येव प्रचलितः सर्वोपि पाठः ।

३. विविध इति म.भा मूले ।

४. म.भा.मूले वर्तते । प्रचलितभाष्यपाठे नास्ति ।

५. अयं नास्ति महाभारते ।

**प्रमेयदीपिका**

इदानीं **'सर्वत्रगम्'** इत्यादिकं मायायामुपपादयितुमाह– **सर्वगेति** ।। भावप्रधानो निर्देशः । स्वरूपवाची वा लक्षणशब्दः । नारायणगुणः तदिच्छादिलक्षणः आश्रयो यस्य तत्तथोक्तम् । अनेन ब्रह्मणो व्यावृत्तिः । **'अजरात्' 'अमरात्'** इति जडप्रधानादेः । तस्य तत्प्राप्त्यभावात् । **अग्राह्यात्** मनसोऽप्यगोचरात् इत्यनेन **'अचिन्त्यम्'** इति सिद्ध्यति । **'असम्भवतः' 'अक्षयात्' 'अक्षरात्'** इति ध्रुवत्वसिद्धिः । असति प्रलये भवम् **असत्यम्** । **ललामं** प्रधानम् । द्वितीया भगवदेकाधीना प्रवृत्तिः विशेषो यस्य तत्तथा । **अमूर्तितः** प्राकृतदेहरहितात् । **सर्वस्याः** सर्वगायाः इति छान्दसो लिङ्गव्यत्ययः। अनाद्यविद्याभिमानित्वात् **शाश्वततमसः** । 'पुरुषोऽभूत्' इत्यन्वयः ।।

**भाष्यम् —** **'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।**
**अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः'** (मनु.१.५ )

**इति मानवे ।**

**'कूटस्थोऽक्षर उच्यते'** (१५.१६) **इति वक्ष्यति ।**

**कूटे आकाशे स्थिता कूटस्था ।**

**'आकाशे संस्थिता त्वेषा ततः कूटस्थिता मता'**

**इति हि ऋग्वेदखिलेषु ।**

**'सा सर्वगा निश्चला लोकयोनिः सा चाक्षरा विश्वगा विरजस्का'**

**इति सामवेदे गौपवनशाखायाम् ।। ३-४ ।।**

**प्रमेयदीपिका**

**इदं** = प्रसिद्धं **तमः** = मायाख्यं **प्रलये सर्वतः** प्रसुप्तमिव निर्व्यापारमासीत् । **अभूतम्** =अजातम्। **'अप्रज्ञातम्'** इत्यादिना प्रत्यक्षानुमानागमवेद्यत्वाभाव उच्यते । अवेद्यलक्षणत्वात् **'अप्रतर्क्यम्'** । अनेन सर्वत्रगमचिन्त्यं ध्रुवमिति सिद्ध्यति । गीतावाक्येन कूटस्थत्वं नित्यत्वं चेत् **'ध्रुवम्'** इति पुनरुक्तिः । कूटमनृतं तिष्ठत्यस्मिन्नित्यसम्भवीत्यत आह– **कूट** इति ।। कूटशब्दस्य आकाशवाचित्वेऽभिधानं प्राक् पठितम् । तथाऽपि दार्ढ्याय श्रुत्युदाहरणम् । श्रुत्यनुसारेण स्त्रीलिङ्गम् ।।

**'सा सर्वगा'** इत्युक्तार्थे स्पष्टं प्रमाणम् । **निश्चला**= स्वपदादभ्रष्टा । विश्वं गतमाश्रितम् अस्यामिति **विश्वगा** । एतानि चोक्तविशेषणानि तदुपासनस्य मोक्षसाधनत्वाङ्गीकार-समर्थनार्थानीति ज्ञेयम् ।। ३-४ ।।

### भावदीपः

**इत्यादिनेति** ।। अप्रज्ञान्तमलक्षणमविज्ञातमिति पादत्रयेणेत्यर्थः ।। **अनेनेति** ।। 'आसीत्' त्यादि [१]पदेनेत्यर्थः ।। **सर्वगेति** ।। सर्वतः सर्वगतत्वस्य 'अप्रज्ञातम्' इत्यादिना, अचिन्त्यत्वस्य 'अभूतम्' इत्यनेन ध्रुवत्वस्य प्रतीतेरिति भावः ।। इति **सिद्ध्यतीति** ।। इति गीतोक्तं प्रमेयं सिद्ध्यतीत्यर्थः । **प्राक्पठितमिति** ।। षष्ठे अध्याये 'सा सर्वगता' इति स्पष्टं प्रमाणमित्यन्वयः । कुत्रेत्यत उक्तम्-**उक्तार्थ इति** ।। सर्वगमचिन्त्यादिना गीतोक्तसर्वगतत्वाद्यर्थ इत्यर्थः ।। इति **विश्वगेति** ।। तथाच न **'सर्वगा'** इत्यनेन पौनरुक्त्यमित्यर्थः ।। ननु **'ये त्वक्षरमनिर्देश्यम्'** इत्यादि विशेषणान्यव्यक्तस्य किमर्थमुक्तानि? येन महता प्रयत्नेनानिर्देश्यत्वं चोक्तम् । **भागवतः** इत्यादिना **कथमिति** पर्यन्तभाष्येणाव्यक्ते तत्समाधानं[२] कृतमित्यतो गीतोक्ताव्यक्तविशेषणानाम् उपयोगमाह– **एतानि चेति** ।। एतेन अव्यक्तं विशेष्यम्, अन्यानि तद्विशेषणानीति सूचितम् ।।३,४ ।।

**( अव्यक्तोपासने अधिकक्लेशः )**

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।[३]**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ।। ५ ।।**

**भाष्यम्** — **कथं तर्हि त्वदुपासकानामुत्तमत्वम्? इत्यत आह– क्लेश इति ।। अव्यक्ता गतिः दुःखं ह्यवाप्यते ।।**

### प्रमेयदीपिका

ननु 'इतरेषां किं फलम्?' इत्यस्य प्रश्नस्य **'ते प्राप्नुवन्ति मामेव'** इत्युत्तरं दत्तम् ।

१. 'वचनेन' इति सो मातृकायाम् ।

२. 'तत् समर्थं' इति सो मातृकायाम् ।

३. 'ये तु विष्णुमवज्ञाय श्रियमेव ह्युपासते । उपेक्ष्य वा हरिं ते तु भूत्वा याज्याः पतन्त्यधः' इति प्रवृत्तिसंहितायाम् (भा.ता १.५.८) ।

तत्किमुत्तरेण? इत्यत आह– **कथमिति** ।। पूर्ववाक्ये पक्षग्रहणमात्रं कृतम् । नतु तत्राभिप्रेतस्य दोषस्य परिहारः । अतः पूर्वपक्षिणा अभिप्रायोद्घाटने कृते तत्समाधानम् **आहेति** भावः । **तर्हि** उभयेषां फलसाम्ये ।। यद्यप्येषा शङ्कापूर्ववाक्ये परिहृता । पर्यादिशब्द[1]प्रयोगात् । तथा च वक्ष्यति । तथाऽपि साध्यस्यानुक्तत्वाद्धेतुवचनं स्वरूपकथनं मन्यमानस्य भवत्येव पुनः शङ्का । उत्तरार्धे पदानां व्यवहितत्वादन्वयाप्रतीतौ तमाह – **अव्यक्तेति** ।। अनेन 'दुःखम्' इत्यस्य क्रियाविशेषणत्वमुक्तम् ।।

### भावदीपः

**पूर्ववाक्ये** मामेवेति वाक्ये, अव्यक्तोपासनपक्षस्य ग्रहणे मात्रम् अङ्गीकारस्य मात्रम् इत्यर्थः ।। **तर्हीति** भाष्यानुवादः, **उभयेषाम्** इत्यादि व्याख्या ।। भगवदुपासकानाम् अव्यक्तोपासकानां चेत्यर्थः ।। **पूर्ववाक्य इति** ।। **'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते'** इति वाक्य इत्यर्थः।। **पर्यादीति** ।। **'परिशब्दं सन्नियम्य'** इत्यत्र संशब्दः, **'क्लेशोऽधिकतरस्तेषाम्'** इत्यत्र तरशब्दप्रयोगादित्यर्थः ।। [2]परिशब्दादिप्रयोगाद् अव्यक्तोपासने भगवदुपास्तौ भवेदित्यर्थः । तावता कथं परिहृतः? इत्यतः पर्यादिशब्दप्रयोगादव्यक्तोपासनस्य भगवदुपास्तितो अतिकष्टत्वसूचनमित्येतत् भाष्यकार एव **'अतिशयोपासन'** इत्यादिना ।। परि-सञ्ज्ञा-तरप्-शब्दैः प्रतीयते' इत्यन्तेन वक्ष्यतीत्याह - **तथा च वक्ष्यतीति** ।। **साध्यस्येति** ।। क्लेशाधिक्यलक्षणफलस्येत्यर्थः ।। **हेत्विति** ।। इन्द्रियसंयमनसर्वत्रसमबुद्धित्वसर्वभूतहितत्वरूपाव्यक्तोपासनहेतुवचनमित्यर्थः ।।

**भाष्यम् — गतिः मार्गः । अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखम् अवाप्यत इत्यर्थः ।।**

### प्रमेयदीपिका

गतिशब्दस्य अकर्तरि कारके भावे च प्रयोगादत्र विवक्षितमर्थमाह– **गतिरिति** ।। गम्यते अनेनेति व्युत्पादनाद् उपायो गतिरित्यर्थः । ननु मार्गस्याव्यक्तत्वं कथमुच्यते? कुतश्च गम्यार्थता गतिशब्दस्य त्यज्यते? इत्यत आह– **अव्यक्तेति** ।। अव्यक्तोपासनं

---

१. 'पदप्रयोगात् '-पां ।

२. इदं वाक्यं सो मातृकायां नास्ति । अस्मिन् भागे का-मातृका सम्पूर्णं जीर्णा ।

द्वारमुपायो यस्यासौ तथोक्तः । अव्यक्तोपासनानन्तरभावि यद् भगवदुपासनं तदेवमुच्यते । अनेनाव्यक्तशब्दः तदुपासनं लक्षयति । तेन च तद्द्वारकत्वं लक्ष्यते । (गत्यर्थतायां) गम्यार्थतायां च गतिशब्दस्याव्यक्ताख्यं गम्यमित्युक्तं स्यात् । नच तद्युक्तम् । 'ते प्राप्नुवन्ति मामेव' इति भगवत्प्राप्तेरुक्तत्वादित्युक्तं भवति ।।

### भावदीपः

**अकर्तरीति** ।। कर्तृभिन्ने कर्मकरणादिकारके भावार्थे च प्रयोगादित्यर्थः । 'अकर्तरि च कारके सञ्ज्ञायाम्'(**पा.सू.३.३.१९**) इति सूत्रे 'भाव' इत्यनुवृत्तेरिति भावः । **एव-मुच्यत इति** ।। अव्यक्ता गतिरित्येवमुच्यत इत्यर्थः । तल्लाभप्रकारमाह–**अनेनेति** ।। अव्यक्तेत्यादिभाष्येणेत्यर्थः ।।

**भाष्यम्— अतिशयेन उपासनं सर्वेन्द्रियनियमनसर्वसमबुद्धिसर्वभूतहितेरतत्वातिसुष्ठ्वाचारसम्यग्विष्णुभक्त्यादिसाधनसन्दर्भम् ऋते न अव्यक्तापरोक्ष्यम् । तदृते च न विष्णुप्रसादः । सत्यपि तस्मिन् न सम्यग् भगवदुपासनं ऋते । नर्ते च तं मोक्षः । विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्टोऽयं मार्ग इति भावः ।।**

**तथाऽप्यपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनमित्येव प्रयोजनम् । तत्रापि योऽव्यक्तापरोक्षे प्रयासः तावता प्रयासेन यदि भगवन्तमुपास्ते ऊनेन वा तदा भगवदपरोक्षमेव भवतीति द्वितीयमधिकम् । इन्द्रियसंयमाद्यूनभावेऽत्युपासकस्यापि देवी नातिप्रसादमेति । देवस्तु तानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददातीति चातिसौकर्यमिति भक्तानां भगवदुपासने । इतरत्र तु(च) क्लेशोऽधिकतरः ।।**

### प्रमेयदीपिका

अत्र पूर्वार्धेऽस्य मार्गस्याधिकतरक्लेशवत्त्वं प्रतिज्ञाय कथमित्यतस्तत्प्रसिद्धम् इत्युत्तरार्धेनोक्तम् । तत्प्रसिद्धिं विवृणोति– **अतिशयेति** ।। षष्ठोक्तप्रकारेण सर्वसमबुद्धिः । ततः किम्? इत्यत आह– **तदृते चेति** ।। अयोगव्यवच्छेद एवायमुक्तो न तु

तावन्मात्रेणेत्याह– **सत्यपीति** ।। तस्मिन् अव्यक्तापरोक्ष्ये सति विष्णुप्रसाद इति वर्तते । ततोऽपि किम्? इत्यत आह– **नर्ते चेति** ।। तं विष्णुप्रसादम् । अस्त्वेवम् अव्यक्तोपासनद्वारकभगवत्प्राप्तिमार्गप्रकारः । तथाऽपि कथमत्राधिकतरः क्लेशः? इत्यत आह– **विनेति** ।। अव्यक्तोपासनमार्गम् । अयमव्यक्तोपासनद्वारकः । एवं तर्हि किमिति प्रवृत्तो येनार्जुनेनाशङ्कितः? इत्यत आह–**तथाऽपीति** ।। एवं तर्हि मार्गयोः साम्यमेव। अनेन प्रयोजनेन क्लेशस्य समाधानादित्यत आह– **तत्रापीति** ।। अव्यक्तोपासनद्वारके मार्गेऽपि । द्वितीयं भगवदुपासने दुःखपाक्षिकमेतत् । '**ऊनेन वा**' इत्युक्तत्वात् । इतश्चाव्यक्तोपासनद्वारके मार्गे भगवदुपासनात् क्लेशोऽधिकतर इत्याह– **इन्द्रियेति** ।। **नातिप्रसादमेति** इत्यतः परमेक इतिशब्दः, द्वावपि हेतौ प्रकारार्थौ वा ।।

## भावदीपः

**प्रसिद्धमिति** ।। हिशब्दस्य तत्र[१] श्रवणादिति भावः ।। **षष्ठोक्तप्रकारेणेति** ।। 'सुहृन्मित्रार्युदासीन' इत्याद्युक्तप्रकारेणेत्यर्थः ।। **अयोगेति** ।। अव्यक्तापरोक्षस्य भगवत्प्रसादजनने यो योगः हेतुत्वाभावः तद्व्यवच्छेदक एवायम्, नतु तदेव प्रसादसामग्री । किन्तु कारणान्तरम् इत्यपेक्षितमित्याहेत्यर्थः । '**अङ्गाववद्धास्तु**' इत्युक्तदिशा भगवदुपासावर्जनत्वेन [२]श्रियोप्युपास्यत्वात् कथं 'तद्विना' इत्युक्तिः? इत्यत आह **अव्यक्तोपासनद्वारक**[३]**मार्गमिति** ।। भगवदुपास्तितः प्राक् पृथगुपासनमित्यर्थः ।। **अयम्** इत्यनुवादः, **अव्यक्त** इत्यादि व्याख्या । तत्रापीत्यस्यार्थं वदन्नेव [४]द्वितीयपदेनान्वयमाह- **अव्यक्तेत्यादिना** ।। ननु तावता प्रयोगेन इत्युक्तत्वाद् दुःखं तत्र [५]अपि सममेवेत्यत आह- **भगवदिति** ।। **द्वारकेति** ।। अध्याहृतश्चकारात् पूर्वतनश्चेत्यर्थः । यद्वा, श्रूयमाणौ [६]द्वावित्यर्थः ।।

**भाष्यम्- तदेतत्सर्वं 'पर्युपासते' 'सन्नियम्य' 'अधिकतर' इति परि, सन्, तरप्शब्दैः प्रतीयते।।**

## प्रमेयदीपिका

कुतोऽयं भगवतो भावः? इत्यत आह– **तदेतदिति** ।। उपलक्षणमेतत् । '**सर्वत्र समबुद्धयः**' इत्यादिनेत्यपि द्रष्टव्यम् । अत्र '**परि**' इत्यनेनोपासकस्यातिशयः । **सम्**' इत्यनेन इन्द्रियनियमस्यातिशयः । '**सर्वत्र**' इत्यादिना सर्वेत्यादिकम् । तरपा

१.२.३.४.५.६. एते शब्दाःसो मातृकायामेव ।

अतिसुष्ठ्वाचारादिकम् । **'अव्यक्ता गतिः'** इत्यनेन **'तदृते च'** इत्यादि व्यवधानम् **'मामेव'** इत्यवधारणेन तथाऽपीत्यादिकं प्राप्नुवन्तीति स्वातन्त्र्योक्त्येन्द्रियसंयमादौ इति देवतासहायाभावः । भगवदुपासने त्वेतदभावो यथा गीतोक्तः तदुत्तरत्र प्रदर्शयिष्यते ।।

**भावदीपः**

प्राग् भोक्तस्य समबुद्धित्वादेर्लाभायाह– **उपलक्षणमेतदिति** ।। **तरपेति** ।। 'क्लेशोऽधिकतरः' इत्यत्र तरपेत्यर्थः ।। **व्यवधानमिति** ।। भाष्योक्तं मोक्षस्य व्यवधानम् अव्यक्ता हि गतिः इति गीतावाक्येन प्राक्टीकोक्तलक्षितलक्षणादिव्याख्यानरीत्या लब्धमित्यर्थः ।। **अवधारणेनेति** ।। तेन भगवदुपासनासौकर्यद्वारा तत्प्राप्तिसूचनादिति भावः ।। **इन्द्रियसंयमादिति** ।। इन्द्रियसंयमनादाविव इत्यादिभाष्यवाक्येण उक्त उपास्यदेवीरूपदेव्या साहाय्यभाव इति भावः ।। आप्नुवन्तीति स्वतन्त्रोक्त्या लब्ध इत्यर्थः ।।[१]

नन्वस्तु अव्यक्तोपासने भाष्योक्तक्लेशप्रकारः गीतोक्तपदवाक्यैः उक्तदिशा लब्धः । भगवदुपासने तु 'तत्रापि' इत्यादिना भाष्योक्तक्लेशाभावस्तु कथं गीतापदैर्लब्धः इत्यत आह– **भगवदुपासने त्विति** ।। 'एतत्' इत्युक्तक्लेशाभावो 'मदुपासकानां भक्तानाम्' (१२.७)इत्यादि भाष्यव्याख्यानावसरे प्रदर्शितं दृश्यत इत्यर्थः ।।

**भाष्यम् —सामवेदे माधुच्छन्दसशाखायां चोक्तम् ।**

**'भक्ताश्च येऽतीव विष्णावतीव जितेन्द्रियाः सम्यगाचारयुक्ताः ।**
**उपासते तां समबुद्ध्यश्च तेषां देवी दृश्यते नेतरेषाम् ।**
**दृष्टा च सा भक्तिमतीव विष्णौ दत्त्वोपास्ते सर्वविघ्नान् छिनत्ति ।**
**उपास्य तं वासुदेवं विदित्वा ततस्ततः शान्तिमत्यन्तमेति' ।। इति ।**

**उक्तं च सामवेदे आयास्यशाखायाम्–**

**'प्रसन्नो भविता देवः सोऽव्यक्तेन सहैव तु ।**
**यावता तत्प्रसादो हि तावतैव न संशयः ।।**
**न तत्प्रसादमात्रेण प्रीयते स महेश्वरः ।**
**तस्मिन् प्रीते तु सर्वस्य प्रीतिस्तु भवति ध्रुवम् ।।**

१ अयं भागः सर्वमातृकासु न स्पष्ट इति अत्राप्यस्पष्टता अनन्वितता च ।

यद्यप्युपासनाधिक्यं तथाऽपि गुणदो हि सः ।
मुक्तिदश्च स एवैको 'नाव्यक्तादिस्तु कश्चन'[1] इति ।।

### प्रमेयदीपिका

आगमान्तरसिद्धत्वाच्चायं भवति भगवदभिप्राय इत्याह– **सामवेद** इति ।। **तेषाम्** इत्यादि षष्ठी तृतीयार्थे । **विदित्वा** साक्षात्कृत्य । **ततः** वेदनात् प्रसन्नात् **ततः** वासुदेवात् । यावता प्रयासेन तत्प्रसादोऽव्यक्तप्रसादः । **सर्वस्यापीति** द्वितीयः तुशब्दोऽपिशब्दार्थे । **आधिक्य**शब्देन न्यूनत्वमप्युपलक्ष्यते । न्यूनाधिकयोरन्यत्र प्रत्यवायहेतुत्वात् ।। **नाव्यक्तादेरिति पाठे** मध्येत्युपस्कर्तव्यम् ।।

### भावदीपः

'तथापि' इत्यस्य घटनायाऽह **न्यूनत्वमप्युपलक्ष्यत** इति ।। भगवदुपासनस्य न्यूनाधिकतावाद्यपि 'तथाऽपि सः= भगवान् गुणदः' इति योजनेति भावः ।। **अन्यत्र** अव्यक्तादौ ।। **इत्युपस्कर्तव्यमिति** ।। अव्यक्तादेर्मध्ये कश्चनत्वमुक्तिद इति योजनेति भावः ।।

**भाष्यम् — 'ममात्मभावमिच्छन्तो यतन्ते परमात्मना'[2] (म.भा.१२.२२८.२०)**
**इति मोक्षधर्मे श्रीवचनम् ।**

**'धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।**
**प्रश्रिते दानशीले च सदैव निवसाम्यहम् ।' (म.भा.१२.२२८.२६)**
**इति च ।**

**महतः परं तु ब्रह्मैव । तथा हि भगवता सयुक्तिकमभिहितम् ।**
**'वदतीति चेन्न प्राज्ञो हि'[3] (ब्र.सू.१.४.५)**

---

१ 'नाव्यक्तादेस्तु' इति टीकाकृत्सूचितपाठान्तरम् ।

२. शक्रं प्रति श्रीवचनमिदम् । अत्र परमात्मने इति पाठः महाभारते ।

३. 'उक्तमाक्षिप्याह—वदतीति चेन्न प्राज्ञो हि । ज्ञेयत्वावचनमन्यस्यापि सिद्धम् । यतो 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' इति महत्परत्वलिङ्गेन प्रधानस्यापि मुमुक्षुज्ञेयत्वं वदति श्रुतिरिति चेन्न । प्राज्ञो हि । यस्मात् प्राज्ञो विष्णुरत्र उच्यत इत्यर्थः । सर्वतः परे महत्परत्वं युक्तमिति भावः ।।' इति **तन्त्रदीपिकायां राघवेन्द्रतीर्थाः.**

**'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च'**[१](ब्र.सू. १.४.७) **इत्यादि ।**

**'तम्' इति पुल्लिङ्गाच्चैतत्सिद्धिः । महतः परत्वं त्वव्यक्तपरस्य भवत्येव । तथा चाग्निवेश्यशाखायाम् -**

**'अनाद्यनन्तं महतः परं ध्रुवम्'**[२] **इति**

**'परो हि देवो पुरुहूतो महत्तः' इति ।**

**प्रमेयदीपिका**

**मम** उपासनेन **आत्मभावं** कैवल्यम् । **परमात्मने** तमुद्दिश्य । अस्य वाक्यस्य कथं प्रकृतोपयोगः? इत्यत उक्तम्– **श्रीवचनमिति** ।। **नित्ये** नियते । **ब्रह्मण्ये** ब्रह्मणि साधौ । **निवसामि** प्रसन्ना भवामि । **इति** च 'श्रीवचनम्' इति सम्बन्धः । पूर्वं शङ्काहेतुत्वेन श्रियं वसाना इत्यादीनि वाक्यान्युदाहृतानि । तेष्विदमेकं नाव्यक्तविषयमिति वस्तुस्थितिमाह– **महत** इति ।। **'अनाद्यनन्तं महतः परम्'** इति वाक्यप्रतिपाद्यमिति यावत् । अत्राभ्युच्चययुक्तिं चाह– **तमिति** ।।

ननु **'उक्तपरामर्शोपपत्तेः'** इति पूर्वपक्षेऽपि युक्तिरुक्तेत्यतः साऽन्यथासिद्धेत्याह– **महत** इति ।। तथा चोक्तवक्ष्यमाणबलात् 'अव्यक्तात् पुरुषः परः' इत्युक्तस्यायं परामर्श इति भावः । श्रुत्यन्तरेणैवं व्याख्यानाच्चैद्वाक्यं तत्परमित्याह– **तथा चेति** ।। पुरुभिः हूतः **पुरुहूतः**।।

---

१. 'इतश्च प्राज्ञ एव निचाय्यवाक्योक्त इत्याह- 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च । आद्यः चशब्दो युक्तिसमुच्चये । न केवलं प्रकरणादिति । अन्त्यः प्रश्नोपन्याससमुच्चये । प्राज्ञ इत्यस्ति। बुद्धिस्थत्वात् एतदुपनिषदीत्यन्वेति । एवं 'वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम्' इति, 'स्वर्ग्यमग्निं नचिकेतः प्रजानन्' इति, 'देवैरत्रापि विचिकित्सितं किल' इत्येवं प्रकारेण त्रयाणां पितृसौमनस्य-स्वर्ग्याग्नि-ब्रह्मणैवोपन्यासो यतोऽतश्च प्राज्ञ एव तत्र उच्यत इत्यर्थः । त्रयाणामेवेति कुत इत्यत उक्तम् - प्रश्नश्चेति ।। 'सुमना यथा स्याद्वीतमन्युः' इति, 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तम्' इति, 'येयं प्रेते विचिकित्सा मनुष्ये' इति चेतत्त्रितयविषय एव प्रश्नश्च यतोऽत उपन्यासस्त्रितयविषय इत्यर्थः । आद्यश्चो हेतौ । अन्त्यः समुच्चय इत्येके । प्रश्नस्यादित्वेऽपि प्रति-वचनस्थनिचाय्यवाक्यस्य प्रधानपरत्वशङ्कनात् तन्निरसितुपन्यासस्यादावुक्तिः । त्रयणामेव चेत्येव पूर्तविवमित्युक्तिः त्रयम[illegible] [illegible]धानस्य न निर्देश इति दर्शयितुं प्रकारत्रयोक्त्यर्था । उपन्यासस्योक्त-त्रयविषयत्वसिद्ध्यै प्रश्नोक्ति[illegible] । तन्त्रदीपिकायां राघवेन्द्रतीर्थाः.

२. काठकखण्डार्थे १.३.१५ 'अनाद्यनन्तमाद्यन्तवर्जितम् । महतो महत्तत्वाभिमानिचतुर्मुखात् परम् । ध्रुवं शश्वदेकप्रकारम्' ।

**भावदीपः**

तत्र साधुरिति यत्प्रत्यय इत्युपेत्याह– **ब्रह्मणि साधाविति** ।। अन्यथासिद्धमेव व्यनक्ति– **तथा चोक्तेति** ।। 'वदतीति च' इत्यादि प्रागुक्तसूत्रबलात्, वक्ष्यमाणश्रुतिबलाच्चेत्यर्थः ।।

**भाष्यम् — न चाव्यक्तरूपं भगवता निषिद्धम् । भारतादौ साधितत्वात् ।**

**'ॐशरीररूपकविन्यस्तगृहीतेःॐ'[१] (ब्र.सू.१.४.१)**

**इत्यादौ तु साङ्ख्यप्रसिद्धं निषिध्य वैदिकमव्यक्तमेवोक्तम् ।**

**तथा च सौकरायणश्रुतिः–**

**'शरीररूपिकाऽशरीरस्य विष्णोः यतः प्रिया सा जगतः प्रसूतिः'**

**इति । सुव्रतानां क्षिप्रं महदैश्वर्यं ददाति देवी न देव इति विशेषः ।**

**'सुवर्णवर्णां पद्मकरां च देवीं सर्वेश्वरीं व्याप्तजडां च बुद्ध्वा ।**
**सैवेति वै सुव्रतानां तु मासान्महाविभूतिं श्रीस्तु दद्यान्न देवः'**

**इति ऋग्वेदखिलेषु ।। ५ ।।**

**प्रमेयदीपिका**

नन्वव्यक्तं नाम तत्त्वमेव नास्तीति सूत्रकृतोक्तम् । ततस्तदभिमानिन्यव्यक्ताख्या देवताऽपि नास्ति । तत्कथं तद्विषयतया व्याख्यानम्? इत्यत आह– **नचेति** ।। तर्हि तत्कथं सूत्रितम्? इत्यत आह– **शरीरेति** ।। साङ्ख्यप्रसिद्धं प्रधानमिति स्वतन्त्रं मुख्यतः शब्दवाच्यमित्यर्थः । वैदिकमिति भगवदधीनं तत्सम्बन्धेन शब्दवाच्यमित्यर्थः ।।

अत्र श्रुतिं चाह– **तथा चेति** ।। प्राक् **'तथाप्यपरोक्षीकृताव्यक्तानाम्'** इत्यादिनैकं प्रयोजनमुक्तम् । अपरं च सप्रमाणकमाह– **सुव्रतानामिति** ।। बुद्ध्वेत्युक्तप्रकारेणोपासीनायेति शेषः । एतत्प्रयोजनं गीतायां न सूचितमिति न तत्रैवोक्तम् ।। ५ ।।

---

१. 'आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेः दर्शयति च इति सूत्रम् । यतो अव्यक्तात् पुरुषः परः इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेन्न । तस्यैव पारतन्त्र्यात् । शरीररूपके अव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः' इति भाष्यम् ।।

**भावदीपः**

**व्याख्यानमितीति** ।। गीतावाक्यानामित्यर्थः ।। एकं **प्रयोजनमिति** ।। भगवदुपासना-सौकर्यरूपमित्यर्थः ।। बोधमात्रस्य महाभूतहेतुत्वादाह- **बुद्ध्वेत्युक्तप्रकारेणेति** ।। 'सर्वेन्द्रिय-संयमन' इत्यादिनोक्त प्रकारेणेत्यर्थः ।। ५ ।।

**ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ।। ६ ।।**
**[1]तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ।। ७ ।।**

**भाष्यम् —** मदुपासकानां भक्तानां न कश्चित् क्लेश इति दर्शयति– **ये त्वित्यादिना** ।। उक्तं च सौकरायणश्रुतौ–

'उपासते ये पुरुषं वासुदेवमव्यक्तादेरीप्सितं किंनु तेषाम्'

इति ।

'तेषामेकान्तिनः श्रेष्ठाः ते चैवानन्यदेवताः ।
अहमेव गतिस्तेषां निराशीः कर्मकारिणम्' (म.भा.१२.३४१.३४)

इति च मोक्षधर्मे ।। ६ ।। ७ ।।

**प्रमेयदीपिका**

नन्वव्यक्तोपासकानां क्लेशातिशयो गीतायां प्रतीयते । भगवदुपासकानां तु तदभावो न प्रतीयते । अतः **'तदेतत् सर्वं'** इति कथमुक्तम्? इत्यत आह– **मदुपासकानामिति** ।। **'भक्तानाम्'** इत्यनेन नान्यत्रात्यन्तमादरमिति सूचयति । अत्र **'अनन्येनैव योगेन'** इत्यादिना विनाऽव्यक्तोपासनम् इत्येतत् प्रतीयते । उपासत इत्येवोक्त्य अतिशयो-पासनाद्यभावः । **'नचिरात्'** इत्यनेन तत्रापीत्यादिकम् । **'तेषामहं समुद्धर्ता भवामि'**

---

१. (अ)'अतीदु शक्र' इति कर्मनिर्णयद्वितीयमन्त्रभाष्ये उशब्दव्याख्यानत्वेनोदाहृतः । तथाहि भाष्यम्- 'तेषामहं ..चेतसामित्यादिप्रसिद्धिमुशब्देनाह' ।।

आ)वि.त.नि.टीका-'अहं समुद्धर्ता भवामीत्युक्ते प्रसन्न इत्यर्थाल्लभ्यते' ।

इत्यनेन देवस्त्वित्यादिकम् । आगामिगीतावाक्यमपेक्ष्य प्राक् बुद्ध्यारोहाय तदुक्तमिति ।।

अत्र श्रुत्यादिसम्मतिं चाह– **उक्तं चेति** ।। **तेषाम्** आर्तादीनाम् । मध्ये **गतिः** साधनादिसम्पादकः ।। ६-७ ।।

### भावदीपः

**कथमुक्तमिति** ।। अव्यक्तोपासकानां क्लेशस्य भगवदुपासकानां तदभावस्य च प्रागुक्तत्वेन तदुभयस्यापि **'तदेतत्सर्वम्'** इति भाष्येण परामर्शात् परिसंतरशब्दैः क्लेशस्यैव ज्ञापिततया क्लेशाभावे [1]गीतास्थज्ञापकान् भाष्ये प्रदर्श्य तावत् सर्वपरिसंतरशब्दैः प्रतीयत इति कथमुक्तमित्यर्थः **नान्यत्रेति** ।। इन्द्रियसंयमनादावित्यर्थः ।।

भगवदुपास्तौ क्लेशो नेति प्राक् भाष्योक्तक्लेशाभावे गीतास्थं ज्ञापकं स्वयमाह– **अत्रानन्येनैवेत्यादिना** ।। 'इत्येतत्' इति प्राग्भाष्योक्तमित्यर्थः ।। **अभावः** इत्यनन्तरं 'प्रतीयते' इत्यनुषङ्गः ।।

ननु भगवदुपासने क्लेशाभावोपपादनं भाष्येऽत्रैव कर्तव्यम्, प्रागेव क्लेशोपपादनप्रस्तावे कस्मात् कृतम्? इत्यत आह– **आगामिगीतावाक्यमिति** ।। **तदुक्तमिति** ।। भगवदुपास्तौ क्लेशेनेत्येतदित्यर्थः ।। **आर्तादीनामिति** ।। मोक्षधर्मे पूर्वत्र आर्तजिज्ञास्वर्थार्थ्यादीनां प्रस्तुतत्वा-देवमुक्तम् ।। प्रकृतोपयोगायार्थमाह– गतिः साधनादिसम्पादक इति ।। ६,७ ।।

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ।। ८ ।।**
**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ।। ९ ।।**
**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ।। १० ।।**
**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ।। ११ ।।**

---

१. एकमातृकासाहाय्येन छिन्नाक्षराण्येवं योजितानि । महान्तः प्रमाणम् ।

**श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद् ध्यानं विशिष्यते ।**
**ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ।। १२ ।।**

**भाष्यम्** — अज्ञानपूर्वादभ्यासाद् ज्ञानमेव विशिष्यते । ज्ञानमात्रात् सज्ञानं ध्यानम् । तथाच सामवेदे अनभिम्लानशाखायाम्–

'अधिकं केवलाभ्यासाज्ज्ञानं तत्सहितं ततः ।
ध्यानं ततश्चापरोक्षं ततः शान्तिर्भविष्यति ।।' इति ।

'ध्यानात् कर्मफलत्यागः' इति तु स्तुतिः । अन्यथा कथमसमर्थोऽसीत्युच्येत?

'तयोऽस्तु कर्मसन्न्यासात् कर्मयोगो विशिष्यते'

इति चोक्तम् ।

सर्वाधिकं ध्यानमुदाहरन्ति ध्यानाधिके ज्ञानभक्ती परात्मन् ।
कर्माफलाकाङ्क्षमथो विरागः त्यागश्च न ज्ञानकलाफलार्हः'

इति काषायणशाखायाम् ।

## प्रमेयदीपिका

ननु ज्ञानमभ्यासस्य साधनम् । तत्कथं ततः श्रेयः? इत्यत आह– **अज्ञानेति** ।। **एवेति** ।। केवलम् । 'ज्ञानाद् ध्यानं विशिष्यते' इत्यसत् । सध्यानस्यापि ज्ञानस्य सम्भवात् । अज्ञानपूर्वस्य ध्यानस्य सम्भवाच्चेत्यत आह– **ज्ञानमात्रादिति** ।।

उपपत्तिलब्धमर्थं श्रुत्याऽपि द्रढयति – **तथा चेति** ।। तत्सहितं ज्ञानसहितं ध्यानम् । ततो ज्ञानमात्राद् अधिकम् । ध्यानात् कर्मफलत्यागो विशिष्यत इत्येतद् अन्यथाप्रतीतिनिरासाय व्याख्याति– **ध्यानादिति** ।। त्यागस्य प्रशस्तत्वमेवानेन लक्ष्यते । न प्रतीतार्थे तात्पर्यमित्यर्थः । कुतः ? इत्यत आह– **अन्यथेति** ।। '**अथैतदप्यशक्तोऽसि कर्तुम्**' इति । ध्यानात् प्रत्यवरे कर्मयोगेऽप्यशक्तस्य कर्मफलत्यागः कथमन्यथा ध्यानादाधिक्ये सत्युपदिश्येतेत्यर्थः । **कर्मसन्न्यासात्** कर्मफलरागसन्न्यासात् कर्मयोगोऽपि **विशिष्यते** । किमुत ध्यानयोगः । वक्ष्यमाणकर्मादिसर्वाधिक्यम् । **परात्मन्** [1]परमात्मनि विषये । **विरागः** शोभनाध्यासाभावः ।।

१. 'परमात्मविषये' इति गुज ।

**भाष्यम्—** वाक्यसाम्येऽप्यसमर्थविषयत्वोक्तेस्तात्पर्याभावः इतरत्र प्रतीयते । ध्यानादिप्राप्तिकारणत्वाच्च त्यागस्तुतिर्युक्ता ।

### प्रमेयदीपिका

ननु '**तयोस्तु**' इति '**सर्वाधिकम्**' इति च द्वयोरपि वाक्यत्वात् कथं तद्विरोधेन 'ध्यानात्' इति वाक्यस्य स्वार्थे तात्पर्याभावः व्याख्यातः? इत्यत आह– **वाक्येति** ।। वाक्यत्वेन साम्येऽप्युपपत्तिसाहित्येन प्राबल्यादित्यर्थः । **इतरत्र** '**ध्यानात्**' इति वाक्यस्य प्रतीतेऽर्थे ।।

युक्त्यन्तरं चाह – **ध्यानादीति** ।। त्यागो हि ध्यानज्ञाननिवृत्तकर्मानुष्ठानप्राप्तौ कारणत्वेन 'परीक्ष्य लोकान्' इत्यादावुच्यते । नच फलात्साधनं श्रेयः । अतोऽपीयं स्तुतिरेवेत्यर्थः । अनेन लक्ष्यार्थोऽपि निष्कृष्योक्तो भवति ।

### भावदीपः

एवशब्दः केवलार्थ [१]इत्याह– **एवेति** ।। **केवलमिति** ।। ध्यानं विना कृतमित्यर्थः ।। **उपपत्तीति** ।। ज्ञानपूर्वाभ्यासात् केवलज्ञानस्य, सद्ध्यानज्ञानात् केवलध्यानस्य श्रेयस्त्वायोगरूपोपपत्त्या अज्ञानपूर्वाद् अभ्यासादज्ञानं केवलज्ञानात् सज्ज्ञानध्यानं श्रेय इत्यर्थो लब्ध इत्युपपत्त्या लब्धमित्युक्तम् ।।

**अन्यथा** इति भाष्यानुवादः, **ध्यानादाधिक्ये सति** इति व्याख्या ।। प्रकृतोपयोगाय अनूद्यार्थमाह– **कर्मसन्न्यासादिति** ।। **वक्ष्यमाणेति** ।। उत्तरार्धे वक्ष्यमाणयत्कर्मविरागत्यागाख्यं सर्वं ततोऽधिकमित्यर्थः ।। **अफलाकाङ्क्षम्** इत्यनेन त्यागपदेन वा एकार्थनिरासायाह– **विराग इति** ।। **उपपत्तीति** ।। अन्यथा कथम् 'असमर्थोसि' इत्युच्येत इत्यत्रोक्तोपपत्तिसाहित्येनेत्यर्थः ।। **अनेनेति** ।। 'ध्यानादिप्राप्ति' इत्यादि भाष्येण प्रशस्तत्वरूपो लक्ष्यार्थः, ध्यानादिप्राप्तिकारणत्वेनेति निष्कृष्योक्तो भवतीत्यर्थः ।।

**भाष्यम् — केवलध्यानात् फलत्यागयुक्तं ध्यानमधिकम् । ध्यानयुक्तत्याग एव चात्रोक्तः । अन्यथा कथं त्यागाच्छान्तिरनन्तरम् उच्यते ? कथं च ध्यानादाधिक्यम् ? तथाच गौपवनशाखायाम् -**

**'ध्यानात्तु केवलात् त्यागयुक्तं तदधिकं भवेत्' इति ।**

---

१. 'कैवल्यार्थ'-इति सो ।

### प्रमेयदीपिका

प्रकारान्तरेण व्याख्याति– **केवलेति** ।। त्यागरहितात् ध्यानात् ।। ननु कुतो **'ध्यानात्'** इति केवलस्य निर्धारणम्? कुतश्च कर्मफलत्यागः? इति तत्सहितध्यानलक्षणा । त्यागस्य वा ध्यानसाहित्येनोपस्कार इत्यतः प्रतिज्ञापूर्वकमाह– **ध्यानेति** ।। त्यागयुक्तं ध्यानं ध्यानयुक्तः त्याग इति द्विविधोक्त्योक्तं प्रकारद्वयं सूचयति । **अन्यथा** केवलत्यागाङ्गीकारे ।। **'कथं च'** इत्यत्रापि 'अन्यथा' इति वर्तते ।।

न केवलमन्यथाऽनुपपत्त्याऽयमर्थः सिद्धः । किं तर्हि? श्रुत्याऽपीत्याह– **तथा चेति** ।। आद्यामन्यथाऽनुपपत्तिमुपपादयति– **न हीति** ।। **'ततश्च आपरोक्ष्यम्'** इत्युक्तश्रुतिविरोधादिति भावः । उक्ताङ्गीकारे कथमेतदनुपपत्त्यभाव इत्यत आह– **भवति चेति** ।। त्यागादिति सम्बन्धः । ज्ञानमात्रव्यवधानेति भावः । द्वितीयानुपपत्तिस्तु **'तयोस्तु'** इत्युपपादितैव ।।

### भावदीपः

**'ध्यानात् कर्मफलत्यागः'** इति गीतायां 'ध्यानात्' इत्यस्य केवलाद् ध्यानात् इति, 'त्यागः' इत्यस्य ध्यानयुक्तत्याग इति कुतो ज्ञायते? इति शङ्कते– **ननु कुत इति** ।। **द्विविधोक्त्येति** ।। भाष्ये प्रमाणे च मिलित्वेति भावः ।। **उक्तमिति** ।। अवतारिकायां स्वेनोक्तमित्यर्थः ।। **अन्यथा** इत्यनुवादः, **केवल** इत्यादि व्याख्या ।। **अन्यथाऽनुपपत्त्येति** ।। त्यागाच्छान्त्युक्त्यन्यथानुपपत्त्या ध्यानादाधिक्यानुपपत्त्या चेत्यर्थः ।। **इत्युक्तेति** ।। प्रागुदाहृत-श्रुतीत्यर्थः ।।

**भाष्यम्- नहि त्यागमात्रानन्तरमेव मुक्तिर्भवति । भवति च ध्यानयुक्तात् । केवलत्यागस्तुतिरेवमपि भवति । यथाऽनेन युक्तो जेता नान्यथेत्युक्ते ।।**

### प्रमेयदीपिका

ननु **'अथैतदप्यशक्तोऽसि'** इत्यनेन केवलत्यागो विहितः । तत्प्ररोचनाय **'श्रेयो हि'** इति तस्य स्तुतिरुपक्रान्ता । नच केवलध्यानात् तत्फलत्यागयुक्तं ध्यानमधिकमिति व्याख्याने केवलत्यागस्तुतिर्लभ्यते । किन्तु तद्युक्तस्य ध्यानस्यैव । अतः पूर्वसङ्गतत्वात् पूर्वमेव व्याख्यानं युक्तम् । नतु द्वितीयमसङ्गतेरित्यत आह– **केवलेति** ।।

यथा **अनेन** भृत्येन **युक्तो** राजा रिपूणां **जेता नाऽन्यथा** इत्युक्ते भृत्यस्य स्तुतिर्लभ्यते ।

तथैवमप्यस्मिन्नपि व्याख्याने **केवलत्यागस्तुतिर्युक्ता** । ध्यानस्य ध्यानान्तराधिक्ये तत्साहाय्यस्य हेतुत्वेनोक्तत्वादित्यर्थः ।। १२-१५ ।।

**भावदीपः**

**पूर्वसङ्गतत्वादिति** ।। **'अथैतत्'** इति वाक्योक्तत्यागविधिसङ्गतत्वात् पूर्वं प्राचीनमेव व्याख्यानं युक्तमित्यर्थः ।। **असङ्गतेरिति** ।। त्यागस्तुतेरप्राप्तेरिति भावः ।। **व्याख्यानेति** ।। येन केनचिदिति निमित्तोक्त्या तस्य व्याख्यानता प्रतीतेरिति भावः ।। १२-१५ ।।

( भगवत्प्रियभक्तलक्षणम् )

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ।। १३ ।।**
**सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ।। १४ ।।**
**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो य स च मे प्रियः ।। १५ ।।**
**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ।। १६ ।।**
**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ।। १७ ।।**

**भाष्यम् — 'सर्वारम्भपरित्यागी' इत्यादेः सामान्यविशेषव्याख्यानव्याख्येय-भावेनापुनरुक्तिः । हर्षादिभिर्मुक्त इत्युक्ते कादाचित्कमपि भवतीति 'यो न हृष्यति' (१२.१७) इत्युक्तम् । उपचारपरिहारार्थं पूर्वम् ।।**

**प्रमेयदीपिका**

पुनरुक्तिदोषमाशङ्क्य परिहरति– सर्वेति ।। **'सर्वारम्भपरित्यागी'**,**'शुभाशुभपरि-त्यागी'** इत्यादौ सामान्यविशेषभावेन ।। **'सन्तुष्टः सततं' 'सन्तुष्टो येन केनचित्'** इत्यादौ

व्याख्यानव्याख्येयभावेन ।। **'हर्षामर्षभयोद्वेगैर्मुक्तः'**, **'यो न हृष्यति'** इत्यत्र नोक्तं प्रकारद्वयं सम्भवतीत्यत आह– **हर्षादिभिरिति** ।। निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्षादिकं भवतीत्याशङ्क्य क्रियाप्रबन्धे विहितेन लटा प्रतिपादयतीत्यर्थः ।।

### भावदीपः

**क्रियाप्रबन्ध इति** ।। तृतीयाध्यायतृतीयपादे 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' (पा.सू.३.३.१३५) इति सूत्रम् । तस्यार्थः – भूतानद्यतने भविष्यदनद्यतने च लङ्-लृटौ विवक्षितौ । तयोः प्रतिषेधः क्रियते । अनद्यतने च प्रत्ययविधिर्न भवति । क्रियाप्रबन्धे सामीप्ये च गम्यमाने क्रियाणाम् । प्रबन्धक्रिया क्रियाप्रबन्धः । सातत्येनानुष्ठानं कालानाम्, सामीप्यं तुल्यजातीयेनाव्यवधानम् । यावज्जीवं भद्रमन्नमदात्, यावज्जीवं भृदामन्नं दास्यति, यावज्जीवं युक्तो अध्यापिपत् , यावज्जीवं युक्तो अध्यापयिष्यति । सामीप्ये तु 'येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनादधीत । 'सोमेनायष्ट । स ग्राममदादधिपतये यममावास्यागामिना एतस्या यक्ष्यति असङ्गां दास्यति उपाध्यायः अग्निना दास्यति सोमेन अग्निना अधीते इत्यादीन्युदाहरणानि ।।

अद्यतनवत् क्रियाप्रबन्धसामीप्ययोरित्येव वक्तव्ये नानद्यतनवदिति चेति द्वौ प्रतिषेधौ प्राप्तस्याप्यनुज्ञानायेत्युक्तम् । 'भूतभविष्यानद्यतनवत् प्रत्ययौ न भवतः' इत्युक्त्या अद्यतने लटो अप्रतिषेधात् क्रियाप्रबन्धे लडित्युक्तम् । तथा च हृष्यतीति सन्ततहर्षवान् इत्यर्थो भवतीति भावः ।। अपव्याख्यां 'हृष्यति' इत्युक्त्या अद्यतनो हि ईश्वरो उपासकानाम् इति ।।

**भाष्यम् — आधिक्यज्ञापनाय भक्त्यभ्यासः । 'ये तु सर्वाणि कर्माणि'** (१२.६) **इत्यादेः प्रपञ्च एषः ।। १६-१७ ।।**

### प्रमेयदीपिका

तर्हीदमेवास्तु किं तेन? इत्यत आह– **उपचारेति** ।। सिद्धेऽर्थे वचनमुपचारं तात्पर्यद्योतनेन परिहरतीत्यर्थः । **'यो मद्भक्तः'** इति भक्तिः पुनः पुनरुच्यते । तत्प्रयोजनमाह– **आधिक्येति** ।। **'अद्वेष्टा'** इत्यादिनोक्तेषु सर्वधर्मेषु भक्तेरिति शेषः । **'अद्वेष्टा'** इत्यादेः सङ्गत्यदर्शनात् तामाह– **ये त्विति** ।। **प्रपञ्चः** तदुपलक्षितस्याभिधानम् ।।

'अक्षरोपासकानधिकृत्यैतदुच्यते' इत्यसत् । सन्निहितसम्बन्धे सति व्यवहितसम्बन्धग्रहणायोगात् **'यो मद्भक्तः स मे प्रियः'** इत्यादिवचनाच्च ।। १६- १९ ।।

### भावदीपः

**एतदिति ।। अद्वेष्टा** इत्यादिकमित्यर्थः । **सन्निहितेति ।। येन सर्वाणि** इति भगवद्रूपकाः सन्निहिताः तैर्व्यवहिता 'ये त्वक्षरम्' इत्यक्षरोपासका इति भावः ।। **इत्यादिवचनाच्च** । इत्यस्य 'इत्यसत्' इत्यनेनान्वयः ।। १६ ।।

**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ।। १८ ।।**
**तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ।। १९ ।।**
**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ।। २० ।।**

ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे [1]भक्तियोगो नाम द्वादशोऽध्यायः ।। १२ ।।

**भाष्यम्- पिण्डीकृत्योपसंहरति– ये तु धर्म्यामृतमिति ।। धर्मो विष्णुः, तद्विषयं धर्म्यम्, अमृतं मृत्यादिसंसारनाशकं चेति धर्म्यामृतम् ।**
**श्रत् आस्तिक्यम्**[2] । 'श्रन्नामाऽस्तिक्यमुच्यते' इत्यभिधानम् ।
**तद्धधानाः श्रद्दधानाः ।। २० ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भगवद्गीताभाष्ये द्वादशोऽध्यायः ।।

### प्रमेयदीपिका

**'ये तु'** इत्युक्तमेव किमर्थमुच्यते? इत्यत आह– **पिण्डीकृत्येति ।। धर्म्यामृतम्** इत्येतदप्रतीतार्थं व्याख्यातुं धर्मशब्दं तावद्व्याख्याति– **धर्म** इति ।। **तद्विषयं** तदुपासनाङ्गत्वात् ।

---

१. देवोपायनस्याव्यक्तोपासनापेक्षया आधिक्यवर्णनं इति पां।
२. भा.ता.उदाहृतम् । ' '

धर्मादनपेतं **धर्म्यं,** धर्मश्च विष्णुः । नादृष्टम् । प्रवृत्तस्यासम्भवात् । निवृत्तस्यैतत्साधनत्वात् । इदानीम् अमृतशब्दं व्याकुर्वन् धर्म्यामृतमिति कर्मधारयोऽयमित्याह– **धर्म्यमिति** ।।

न मृतम् **अमृतम्** । नञ् विरुद्धार्थे । **मृतशब्दश्चोपलक्षक** इत्यर्थः । **श्रद्दधानाः** इत्येतद् व्युत्पादयति – **श्रदिति** ।। 'श्रत्शब्दस्योपसङ्ख्यानम्' इत्युपसर्गत्वेनोपसङ्ख्यायमानस्यापि अस्य सत्त्ववाचित्वम् अविरुद्धम् उपसर्गत्वस्य कार्यविशेषार्थत्वात् ।। २० ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वादशोऽध्यायः समाप्तः ।। १२ ।।**

**भावदीपः**

ननु ज्ञानमेव भगवद्विषयकं संसारनाशकम् । नतु 'ये तु सर्वाणि' इत्यादिना प्रागुक्तं भगवति सर्वकर्मसमर्पणादिकम् । तत्कथमुच्यते इदं सर्वकर्मसन्न्यसनादिकं धर्मविषयममृतं चेति । अत आह- **तदुपासनाङ्गत्वादिति** ।। यो प्रभावश्च' इति वक्तुमित्यादि भाष्यदिशेति भावः ।।[1]

(भावादि प्रकृत्योर्गतिशून्यत्वे परिणामोन्मुखत्वादिरूपप्रवृत्तिस्तु सम्भवतीति भावः।।)[2]

**प्रवृत्तस्येति** ।। काम्यकर्मणो भगवदर्पणादेरसम्भवाद् अमृतहेतुत्वाभावाच्चेत्यर्थः ।। **निवृत्तस्येति** ।। निष्कामकर्मणो हर्षामर्षादिसाधनत्वेन तत्साध्यानामेव प्रागुक्ततया तेषामेव अत्रेदंपदेन ग्राह्यत्वादिति भावः ।। आदिपदतात्पर्यमाह- **अमृतशब्दश्चेति** ।। सुखदुःख इत्यादिबन्धस्योपलक्षक इत्यर्थः ।। **इत्युपसर्गत्वेनेति** ।। वार्तिके उपसर्गत्वेन सङ्गृह्यमाणस्यापि आस्तिक्यरूपवस्तुवाचित्वमर्थः । उपसर्गत्वोक्तेः 'प्राग्धातोः' **(पा.सू.१.४.८०)** इति सूत्रेण विहितप्राक्प्रयोगादिरूपकार्यविशेषमात्रार्थत्वेन उपसर्गवदसत्ववाचित्वाभावाद् व्यर्थं न भवतीति सत्वावाचित्वमविरुद्धमित्यर्थः इति ।।

**।। श्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रयतिविरचिते श्रीमद्गीताभाष्यटीकाभावदीपे द्वादशोऽध्यायः ।। १२ ।।**

---

१. इतः परमेकपत्रं का-मातृकायां नास्ति । अतः अत्र न पूर्णपाठोपलब्धिः ।। तथा **सोमातृकायामेव आध्यायसमाप्ति कानिचनवाक्यानि यथालब्धं मुद्रितमत्र** । सोमातृकायां १९१ पत्रे अत्र अध्यायसमाप्तिः । इतः परं नोपलब्धम् । क्षाम्यन्तु महान्तः ।।

२. कंसान्तर्गतभागस्यान्वयो न स्पष्टः ।

# ।। अथ श्रीमद्भगवद्गीतायां त्रयोदशोऽध्यायः[1] ।।

( त्रयोदशाध्यायार्थनिरूपणम् )

**भाष्यम्-** पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् पिण्डीकृत्य विविच्य दर्शयत्यनेनाध्यायेन।।

**प्रमेयदीपिका**

पूर्वसङ्गतत्वेनाध्यायप्रतिपाद्यं दर्शयति– **पूर्वोक्ते**ति ।। पूर्वमाषष्ठसमाप्तेर्यज्ज्ञानं ज्ञान-साधनमुक्तम्, यच्च सप्तमादिभिः षड्भिर्ज्ञेयं ब्रह्मस्वरूपमुक्तम्, यदपि **'भूमिः आपः'** (७.४) इत्यादिना क्षेत्रमुक्तम्, यच्च **'न त्वेवाहम्'**(२.१२) इत्यादिना पुरुषतत्वमुक्तम्[2]। तत्सर्वम् **अनेनाध्यायेन दर्शयति** भगवान् । किमर्थम्? **पिण्डीकृत्य** विक्षिप्तमेकीकृत्य । गौणोऽत्र क्त्वाप्रत्ययः । पिण्डीकरणार्थमित्यर्थः । पिण्डीकरणे मिश्रत्वादप्रतिपत्तिरेवेत्यत उक्तम्– **विविच्ये**ति ।। प्रकरणशुद्ध्येत्यर्थः ।।

**भावदीपः**

**पुरुषतत्वमिति** ।। तज्जीवेश्वरस्वरूपमित्यर्थः ।। **पिण्डीकरणेति** ।। विविच्य प्रदर्शन-कार्यतया ततः [3]पूर्वभावित्वायोगादाह- **गौणोऽत्र क्त्वाप्रत्यय इति** ।। क्त्वाऽऽदेश[4]स्थानीभूत इति ज्ञेयम् ।। पिण्डीकरणपरिज्ञान[5]बुद्ध्यपेक्षया पूर्वकालीनत्वाभिप्राय इत्यर्थः ।।

( क्षेत्र-क्षेत्रज्ञविषयकप्रश्नोत्तरनिरूपणम् )

**अर्जुन उवाच -**

**प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।**
**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ।। १ ।।**

---

१. 'श्रीज्ञानदात्रे नमः' इति बे,गु-जपुस्तकयोः प्रारम्भे ।
२. सनाभि-मातृकायामेव । 'पुरुषभेद उक्त' इति प्रच ।
३. 'भावित्वाभावाद्वा' इति का-मातृकायामत्र वाक्यसमाप्तिः ।
४. 'स्थानीभूत' इति सो मातृकायामेव ।
५. 'ज्ञातत्वापेक्षया' इति का मातृकापाठः ।

( क्षेत्रज्ञशब्दार्थः )

**श्रीभगवानुवाच -**

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।। २ ।।[१]**
**[२]क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज्ज्ञानं मतं मम ।। ३ ।।**
**तत् क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ।। ४ ।।[३]**

**भाष्यम् — यद्विकारि** येन विकारेण युक्तम् । **यतश्च यत्** यतो याति प्रवर्तते ।

**प्रमेयदीपिका**

( 'यद्विकारि'शब्दापव्याख्यापराकरणम् )

'यो विकारो यस्य तद् यद्विकारि'[४] इति कश्चित् । तदसत् । बहुव्रीहितायामिनेः वैयर्थ्यात्। किन्तु यश्चासौ विकारश्चेति यद्विकारः । सोऽस्यास्तीति यद्विकारीति भावेनाऽह– **यदिति** ।। अत्र **येन विकारेणे**त्यनेन कर्मधारयं सूचयति । युक्तमिति इनेरर्थम् ।।

'यतश्च यत्' इत्येतद् 'यस्माच्च यत् कार्यमुत्पद्यते'[५] इति कश्चिद्व्याख्यातवान् ।

---

१. 'योऽन्तर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चेतसा' इति भाग.(१०.३६.१७ )श्लोके वि.टी.उ ।

२. (अ)भगवतो क्षेत्रज्ञशब्दवाच्यत्वे 'ज्ञेत्रज्ञ एता मनसो विभूतीः..'; 'क्षेत्रज्ञ आत्मा पुरुषः पुराणः...' इति भागवते , 'स्वेच्छयैवावृतो विष्णुर्जीवे तिष्टति सर्वदा ।योऽसौ नियामयन् जीवं क्षेत्रज्ञ इति शब्दितः' इति हरिवंशेषु ' इति मानत्रयमुदाहृतं बृ.उ.भा. ३.५.४ ।

(आ) 'क्षेत्रज्ञोऽक्षर एव च' इति **वि.स.नामसु** ।

(इ) 'जीवस्थो भगवान् विष्णुः क्षेत्रज्ञ इति गीयते' इति तत्त्वनिर्णयवचनम् (भाग.ता.२.२.१७)

(ई)'स्वात्माधारः स्वेच्छयैव जीवदृष्टेस्तिरोहितः । क्षेत्रज्ञेत्युच्यते विष्णुर्जीवस्थः '(भा.ता..११.१४)

३. न्यायामृते ब्रह्मणो 'अहं ब्रह्मास्मि' इत्यादिश्रुत्यर्थप्रकरणे उदाहृता इमे ४,६,७ श्लोकाः ।

४. शाङ्करभाष्ये, ३-भाग, पृ-२८ । 'यस्य' इति स्थाने 'अस्य' इति पठ्यते ।

५. शाङ्करभाष्ये, ३-भाग, पृ-२८ । 'कार्यमुत्पद्यते' इति वाक्यशेषः' इति पठ्यते ।

तदयुक्तम् । 'यद् विकारि' इत्यनेन गतार्थत्वात् । साध्याहारत्वाच्च । **'विकारांश्च गुणांश्च'**(१३.२०) इत्यस्यान्यथोपपत्तेः ।। [1]अपरस्तु 'यतश्चामानित्वादिभ्यो यज्ज्ञेयं प्राप्यते' इति । तदप्यसत् । अध्याहारादेव । **'अमानित्वम्'**(१३.८) इत्यादेः **'अनादिमत्'** (१३.१३) इत्यादेश्चान्यथासिद्धेः' इति भावेनान्यथा व्याचष्टे– **यतश्चेति** ।। **यतः** यस्य प्रेरणया । 'यत्' इति इणो [2]लडादेशशत्रन्तस्य रूपम् । इणो यातेश्चानतिभिन्नार्थत्वात्[3] 'याति' इत्युक्तम् । सर्वस्य क्षेत्रस्य गत्यभावाद् गौणीं वृत्तिमाश्रित्य विवृणोति– **प्रवर्तत** इति ।।

## भावदीपः

**इनेरिति** ।। 'अत इनिठनौ' (**पा.सू.**५.२.११५)इति मत्वर्थे विहित'इनि'प्रत्ययस्य वैय्यर्थ्यादिति भावः [4]।। **इत्यनेन गतार्थत्वादिति** ।। विकारशब्दितकार्यवत्वस्य यद्विकारिपदेन प्राप्तत्वात् **'तत् क्षेत्रम्'** इत्यनूद्य 'अनुत्पद्यते' इत्यनेनापि कार्यवत्वस्यैव प्राप्त्या 'उत्पद्यते' इति क्रियाध्याहाराच्चेत्यर्थः ।। ननु विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् इत्यग्रे सत्वादिगुणानां कार्यत्वे पुंविकाराणां पृथगुक्तेरिहापि उक्तव्यत्यासेन पौनरुक्त्यमित्यत आह - **इत्यस्यान्यथोपपत्तेरिति** ।। 'तेषामत्यल्पोपि विशेषो लयात्सर्गः' इति विशेषोक्तिः ।।

नन्वेवं प्रतिज्ञावाक्यानुक्तामानित्वादिसाधनोक्तिः,'अनादिमत्परं ब्रह्म' इति ज्ञेयोक्तिः 'यज्ज्ञात्वा अमृतमश्नुते' इति प्राप्त्युक्तिश्च अग्रेतना कथं स्यात्? इत्यत आह - **अमानित्वमिति** ।। नच 'यो यत्प्रभावश्च'इति वक्तुम् 'इत्यादिभाष्यदिशेति भावः ।।

ननु ज्ञानमेव भगवद्विषयकं संसारनाशकं च, नतु? **'ये तु सर्वाणि'** इत्यादिना प्रागुक्तं भवति ।। **इणो लडादेशशत्रन्तस्येति** ।। 'इणो यण्' (**पा.सू.**६.४.८१) इति यणादेशे 'यत्' इति रूपम् । यातेरेव रूपत्वे 'यात्' इति स्यादिति भावः ।।[5]**गत्यभावादिति** ।। प्रकृत्यादेः गतिशून्यत्वेऽपि परिणामोन्मुखत्वादिरूपप्रवृत्तिरस्तु सम्भवतीति भावः ।।

---

१. रामानुजीये नास्ति । भास्करः स्यात् ।

२. श्रीनिवासतीर्थीये लडादेशस्य इति प्रतीकग्रहणं कृतम् ।

३. 'अनतिभिन्नत्वात्' इति पाठः अत्र मातृकायाम् । तच्छब्दार्थः हंसपादं चिन्हित्वा एवं विवृतः । 'शतुरपि सार्वधातुकत्वेन ङित्वात् गुणप्रतिषेधे 'इणो यण्'इति इणो अपवादो यणादेशः । शपो लुकि प्राप्त्यर्थत्वेनानतिभिन्नार्थत्वात् (५)' इति ।।

४. इत आरभ्य नवपङ्क्तयः सो-मातृकायामेव नान्यमातृकासु ।।

५. इदं वाक्यद्वयं सो मातृकायां पूर्वाध्यायान्तिमश्लोकव्याख्यानात् पूर्वं लिखितम् ।।

**भाष्यम् — स च प्रवर्तकः । यतश्च यत्** इत्यस्मात् प्रवर्तते **क्षेत्रमिति** वचनम् । **स च यः** इति **स्वरूपमात्रम्** ।। ४ ।।

**प्रमेयदीपिका**

**'स च यः'** इति जीवप्रतिज्ञा' इति व्याख्यानमसत् । तस्याप्रकृतत्वात् । क्षेत्रज्ञ-शब्दस्यातद्विषयत्वादिति भावेनाऽऽह– **सचेति** ।। 'यतः क्षेत्रं प्रवर्तते' इति प्रवर्तकस्य प्रकृतत्वादित्याशयः ।। नन्वेवं चेदेतद्वक्तव्यम् । किं 'यतश्च यत् स च यः' इत्येकैव प्रतिज्ञा ? उत द्वे इति । नाद्यः । चशब्दद्वयानुपपत्तेः । **'तत्समासेन'** इत्यनेनान्वयात् । **'स च यः'** इत्यस्य वैय्यर्थ्याच्च । न द्वितीयः । अर्थभेदाभावादित्यतो द्वितीयमङ्गीकृत्याऽऽह– **यतश्चेति** ।। **'यतश्च यत्'** इति वचनम् **अस्मात्** एवंधर्मविशिष्टात् **क्षेत्रं प्रवर्तते** इति वक्तुं प्रतिज्ञारूपम् । **'स च यः'** इति **वचनं** प्रवर्तकस्य **स्वरूपमात्रं** वक्तुं प्रतिज्ञारूपमित्यर्थभेद इत्यर्थः ।। ४ ।।

**भावदीपः**

**यतः** इत्यस्य यतः प्रवर्तकादित्यर्थः ।। **'यत्'** इत्यस्यार्थानुवादः– **क्षेत्रं प्रवर्तत** इतीति ।। **इत्यनेनान्वयादिति** ।। 'यतः प्रवर्तकात् यत् प्रवृत्तिमत् स च प्रवर्तको यः यत्स्वरूपः' इति तच्छब्देनैव 'यतः' इत्यस्यान्वितत्वेन तत्समासे न इत्यत्रात्येतच्छब्देन अन्वयात् । **'यतः'** इत्यस्य **'तत्समासेन'** इति तच्छब्देनैवान्वयात् **'स च यः'** इति व्यर्थमित्यर्थः ।। **'अस्मात्'** इति भाष्यानुवादः, एवं **धर्म'** इत्यादि व्याख्या ।। उपद्रष्टृत्वादिवक्ष्यमाणगुणविशिष्टाद् इत्यर्थः ।। ४ ।।

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ।। ५ ।।**

**भाष्यम् — ब्रह्मसूत्राणि** (शारीरकम्[१]) शारीरकसूत्राणि ।। ५ ।।

**प्रमेयदीपिका**

ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि। ततश्च छन्दसामृषिवाक्यानां च तथात्वात्

१. गुज,वे-ग्रं पुस्तकेषु मातृकायां च 'शारीरकम्' इत्येव पठ्यते । न 'सूत्राणि' इति ।
(आ) 'ब्रह्मसूत्राणि' ब्रह्म वेदः, तदर्थः परब्रह्म वा, तस्य सूत्राणि तत्स्वरूपनिर्णायकानीत्यर्थः । गीताभाष्ये तु 'ब्रह्मसूत्राणि शारीरकसूत्राणि' इति रूढिरप्युक्ता । ब्र.सू.भाष्यदीपिका १-१-१।

**'ऋषिभिः'** इत्यादिकं वृथा स्यादित्यतो रूढि[1]माश्रित्याह– **ब्रह्मेति** ।। ५ ।।

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**[2]
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ।। ६ ।।**
**इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।**
**एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ।। ७ ।।**

भाष्यम् — **इच्छादयो विकाराः** ।। ७ ।।

**प्रमेयदीपिका**

**'महाभूतानि'** इत्यनुक्रम्य **'एतत् क्षेत्रं समासेन सविकारमुदाहृतम्'** इत्युक्तम् । तत्र न ज्ञायते किं क्षेत्रम्? के च तद्विकाराः? इत्यत आह– **इच्छादय इति** ।। पूर्वं क्षेत्रमिति भावः ।। ७ ।।

( ज्ञानसाधननिरूपणम् )

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।। ८ ।।**
**इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।। ९ ।।**

भाष्यम् — 'स च यो यत्प्रभावश्च' इति वक्तुं तज्ज्ञानसाधनान्याह– **अमानित्वमित्यादिना** ।। आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं दम्भः ।।

'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहात्म्यदर्शनम्'

इति ह्यभिधानम् ।

**आर्जवं** मनोवाक्कायकर्मणामवैपरीत्यम् ।। ८-९ ।।

---

१. 'रूढिमप्याश्रित्य' पां-सनाभि -मातृकायाम् , श.मा.२ मातृकायां च ।

२. न्यायामृते अहमर्थस्यानात्मत्वभङ्गप्रकरणे - 'महाभूतान्यङ्कार' इति स्मृतावहङ्कारस्य क्षेत्रज्ञात् पार्थक्येन क्षेत्रज्ञत्वोक्तेश्च' इति ।

### प्रमेयदीपिका

ननु षट्स्वर्थेषु प्रतिज्ञातेषु अमानित्वादिकमनन्तर्भूतं किमित्युच्यत इत्यत आह– **स चेति** ।। इति प्रतिज्ञातमर्थद्वयं वक्तुं **'ज्ञेयं यत् तत्**'(१३.१३) इत्यादिना । 'न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीत्याशयेन' इति शेषः । मानाहङ्काराभ्यां दम्भं पृथग्दर्शयति– **आत्मेति** ।। [1]'आर्जवं ज्ञानसाधनं यथा स्यात्तथा व्याचष्टे– **आर्जवमिति** ।। एतच्च सन्मार्ग इति ज्ञातव्यम् ।। ८-९ ।।

### भावदीपः

**वक्तुमिति** भाष्ये 'केन' इत्याकाङ्क्षां पूरयति–**ज्ञेयं यत्तदित्यादिनेति** ।। **'तज्ज्ञान'** इत्यतः पूर्वं शेषमाह - **न यादृशेत्यादि** ।। **सन्मार्ग इतीति** ।। अन्यस्य ज्ञानानुपायत्वादिति भावः।।

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।। १० ।।**
**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ।। ११ ।।**

**भाष्यम् — सक्तिः** स्नेहः । **स एवातिपक्वः अभिष्वङ्गः** ।

'स्नेहस्सक्तिस्सएवातिपक्वोऽभिष्वङ्ग उच्यते'

इत्यभिधानम् ।। १० ।। ११ ।।

### प्रमेयदीपिका

सत्त्यभिष्वङ्गशब्दयोरर्थभेदमाह– **सक्तिरिति** ।। १० ।। ११ ।।

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।। १२ ।।**

**भाष्यम् — तत्वज्ञानार्थदर्शनम्** अपरोक्षज्ञानार्थं शास्त्रदर्शनम् ।। १२ ।।

---

१. सनत्सुजातीये द्वितीयाध्याये ज्ञानसाधननिरूपणप्रस्तावे २४,२५ श्लोकौ । सत्यार्जवे ह्रीर्दमशौचविद्या षण्मानमोहप्रतिवन्धकानि' इति । आर्जवम् ऋजुमार्गवर्तित्वम्' इति वादिराजतीर्थाः ।

### प्रमेयदीपिका

ननु तत्त्वज्ञानार्थदर्शनं नाम ज्ञानमेव । तत्कथं ज्ञानसाधनेषूच्यते? इत्यत आह– **तत्त्वेति** ।। **शास्त्रदर्शनं** तत्पर्यालोचनम् । अत्र 'शास्त्रस्य' इत्यध्याहृत्य व्याख्यानमिति ज्ञातव्यम्।।

( ज्ञेयस्वरूपप्रभावनिरूपणम् )

**ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।**
**अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ।। १३ ।।**

**भाष्यम् — 'परं ब्रह्म'** इति **'स च यः'**(१३.४) इति प्रतिज्ञातमुच्यते । अन्यत् **'यत्प्रभावः'**(१३.४) इति । आदिमद्देहादिवर्जितम् **अनादिमत्** ।।

### प्रमेयदीपिका

प्रतिज्ञातार्थद्वयप्रतिपादनाय 'ज्ञेयं यत्तत्' इत्यादिकं वाक्यमिति सूचितम् । तत्र केन तु किमुच्यते? इत्यत आह– **परमिति** ।। **इति** नामोक्त्या । **अन्यत्** अनादिमदित्यादिकं **'यत्प्रभावः' इति** प्रतिज्ञातस्य प्रतिपादकमित्यर्थः ।।

( 'अनादिमत्'शब्दापव्याख्यानिराकरणम् )

'आदिरस्यास्तीत्यादिमत् । न आदिमत् अनादिमदिति व्याख्याने न विद्यते आदिः अस्येत्यनादीति बहुव्रीहित्वाश्रयणेनैव विवक्षितार्थसिद्धेः मतुपो वैयर्थ्यमिति दोषं पश्यन्तः **केचित्**[1] 'अनादिः' इति 'मत्परम्' इति च पदं विच्छिद्य 'अहं वासुदेवाख्या परा शक्तिः यस्य तत् मत्परम्' इति व्याचक्षते । तदसत् । अर्थासम्भवात् । न हि 'ब्रह्म' इति 'वासुदेवः' इति कश्चिद्भेदः । **'न चावतारेषु पारावर्यम्'** इत्युक्तमिति भावेन यथा मतुपो न वैयर्थ्यं तथा व्याचष्टे–**आदिमदिति** ।।

आदिः एषामस्तीत्यादिमन्ति । न विद्यन्ते आदिमन्ति यस्य तदनादिमत् । सामर्थ्यात् तानि च देहेन्द्रियगुणक्रिया[2]दीनीत्यर्थः । अथवा पूर्वोक्त एव विग्रहः । नच मतुपो वैयर्थ्यम् ।

---

१. शाङ्करभाष्ये पृ -४७ । भाग-२ । अत्र शाङ्करभाष्ये 'अनादिमत् परं ब्रह्म' इति भिन्नं पदम् । रामानुजीये 'अनादि' 'मत्परम्' इति भिन्नं पदम् । टीकाकारैः 'केचित्' इति निराकृतः पक्षः शाङ्करभाष्येपि निराकृतः।
२. 'कर्मादीनि'-पां श.मा-२ ।

वैदिकं लिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहिर्वा नञ्समासो वाऽयमिति संशयः स्यात् । तथा च ब्रह्म स्वयं कारणं न भवतीति शङ्क्येत । तन्निवृत्त्यर्थं मतुबन्तेनाऽदिशब्देन नञ्समासस्याऽश्रयणात् ।।

**भावदीपः**

**सूचितमिति** ।। 'वक्तुम्' इत्यन्तभाष्येणेति भावः ।। **न कश्चिद्भेद इति** ।। पूर्वाध्याये

**'परन्तु ब्रह्म न हि भगवतोऽन्यत्'** इत्यादिना तथोक्तेरिति भावः ।।

**'अवतारेषु पारावर्यं नास्ति'**(२.५१)

इति चोक्तं द्वितीयाध्यायान्त्यभागे । अतोऽपि न कश्चिद्भेद इत्यर्थः ।। **पूर्वोक्त एवेति** ।। आदिरस्यास्ति' इत्यादिनोक्त इत्यर्थः[१] (अवतारेषूक्त इत्यर्थः)।। ननु नञ्समासपक्षे 'अनादिः' इति निर्देशेन भाव्यम्, आदिपदस्य नित्यपुल्लिङ्गत्वात् । तत्कथम् 'अनादि' इत्युक्त्या नञ्समाससंशयः? इत्यत आह– **वैदिकं लिङ्गव्यत्ययमित्यादि** ।।

**भाष्यम् — अन्यथा 'अनादि' इत्येव स्यात्** ।। १३ ।।

**प्रमेयदीपिका**

ये त्वेवं प्रयोजनद्वय[२]मनभिधाय 'मतुपः प्रयोगः श्लोकपूरणार्थः'[३] इत्युक्तवन्तस्तान्निराचष्टे– **अन्यथेति** ।। अस्मदुक्तप्रयोजनद्वयानङ्गीकार इत्यर्थः । सार्थकेन शब्दान्तरेण श्लोकपूरणसम्भवादिति भावः । ननु बहुव्रीहिमाश्रित्य पुनः मतुपः प्रयोगे दोषः स्यात् । न चैवम् । किन्तु शब्दान्तरमेवैतत् । तत्कथमयं दोषः? अन्यथा **'यद्विकारि'** इत्यत्रापि दोषप्रसङ्गात् । मैवम् । बहुव्रीहिं विवक्षित्वाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणस्य दोषत्वेनोक्तत्वात्, **'यद्विकारि'** इत्यत्र गौरवाभावात् ।। १३ ।।

**भावदीपः**

**शब्दान्तरमिति** ।। 'आदिमन्नेत्यनादिमत्' इति नञ्तत्पुरुषरूपं शब्दान्तरमित्यर्थः ।। **अभिमतार्थेति** ।। आदिमत्वाभावरूपार्थेत्यर्थः । कारणहीनत्वरूपपराभिमतार्थेति यावत् ।

---

१. इयं पङ्क्तिः केवलं सो मातृकायामेवोपलभ्यते ।

२. **प्रयोजन'** इति वे,गुज,प्रच-पाठः । शमा-२, श्रीनि.टिप्पण्यनुगुणः द्वयशब्दः ।

३. शाङ्करभाष्ये भाग-२ ,पृ -४७ ।

**बहुयत्नेति** ।। मतुबन्तेन नञ्समासाश्रयणरूपेत्यर्थः ।। **गौरवाभावादिति** ।। बहुव्रीहित्वे यद्विकारमिति कर्मधारयादिन्नन्तत्वे तु 'यद्विकारि' इति । तावता शब्दाधिक्यगौरवं नेति भावः[१]।। १३ ।।

**सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।। १४ ।।**[२]
**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव[३] निर्गुणं गुणभोक्तृ च ।। १५ ।।**

**भाष्यम् — सर्वेन्द्रियाणि गुणांश्चाभासयतीति सर्वेन्द्रियगुणाभासम् । इन्द्रियवर्जितत्वाद्यर्थ उक्तः पुरस्तात् ।। १४ ।।**

**प्रमेयदीपिका**

'अहं परा शक्तिः यस्य' इति व्याख्याने अर्थासम्भवं कश्चिद् अन्यथा प्राह । 'ब्रह्मणः सर्वविशेषप्रतिषेधेनैवात्र विजिज्ञापयिषितत्वात् शक्तिमत्वप्रतिपादनं विरुद्धम्' इति । तदसत् । अत्र [४]विशेषत्त्वस्य दर्शनादिति भावेनाऽह– **सर्वेति** ।। गुणान् तद्विषयान् **आभासयति** प्रत्याययति प्रत्येतीति[५] वा । भासतेः पचाद्यच् । एवं **'सर्वतः पाणिपादं तत्' 'सर्वभृत्' 'गुणभोक्तृ च'** इत्यादिकमप्युदाहार्यम् । कथं तर्हि **'सर्वेन्द्रियविवर्जितम्' 'निर्गुणम्' 'अचरम्'**(१३.१६) इत्याद्युक्तमित्यत आह– **इन्द्रियेति** ।। आदिशब्दात् परं 'शब्द' इत्यध्याहार्यम् । पुरस्तात् द्वितीये[६] ।। १४ ।।

**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ।। १६ ।।**

---

१. 'नेत्यर्थः'इति का-मातृकायाम् ।
२. प्रकाशसंहितायामुदाहृतम् ।
३. 'गीतातात्पर्ये 'सर्वभुक् चैव' इति पाठः । 'सर्वभृच्च' इति पाठान्तरम्' इति गीताविवृतौ राघवेन्द्रतीर्थाः।
४. 'सविशेषत्वस्य' - सनाभि-मातृकायाम् ।
५. सनाभि-नास्ति ।
६. 'वदन्ति च लौकिकाद्वैलक्षण्ये' इत्यत्र ।

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १७ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।[१]
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १८ ॥

( क्षेत्र-क्षेत्रज्ञज्ञानस्तुतिः )

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १९ ॥

**भाष्यम्-** विकारान्तर्भावाज्ज्ञानसाधनं प्रथमत उक्तम् । बहुत्वात् साधनात्युपयोगात् प्रभावः ॥

**प्रमेयदीपिका**

ननु ब्रह्मणि प्रतिपादिते केन साधननेदं बुद्ध्यारूढं भवेदित्याकाङ्क्षायां साधनं पश्चाद् वक्तव्यम् । तत्कुतः प्रथमत उक्तम्? इत्यत आह– **विकारेति** ॥ विकारेष्वन्तर्भावं ज्ञापयितुं तदनन्तरमुपोद्घातप्रक्रिययोक्तमिति भावः । उद्देशक्रमानुसारेण **'यतश्च यत्'**(१३.४) इति प्रथममनुक्त्वा **'स च यो यत्प्रभावश्च'**(१३.४)[२]इत्येतत् कुत उक्तम्? इत्यत आह– **बहुत्वादिति** ॥ सूचीकटाह[२अ]निर्माणादौ बहुत्वस्य प्राथम्यव्यभिचाराद् हेत्वन्तरोक्तिः । अलौकिकस्य प्रभावस्य बुद्ध्यारोहे हि साधनानामत्युपयोगो नतु तावान् लौकिकस्य [३]प्रेरकत्वस्यानुभवारोह इति ज्ञापयितुं ज्ञानसाधनानन्तरमेव प्रभाव उक्तः । तत्प्रसङ्गेन स्वरूपं[४] चेति भावः ॥ १९ ॥

१. न्यायामृते ब्रह्मणो निराकारत्वभङ्गे - 'सर्वतः पाणिपादं तत्' इति स्मृतौ च अप्राकृतत्वस्योक्तेः' ॥ (तरङ्गिण्यां- 'ज्ञेयं तच...'इति प्रतिज्ञाय,'अनादि...तिष्ठति'इत्युक्त्वा 'ज्योतिषामपि.. ' इति तमःपरत्वोक्त्या अप्राकृतत्वसिद्धिः ।)
२. 'प्रभावश्चैतत्' बे । २.अ.कटाहदि' -मातृकायाम् ।
३. प्रेरकस्य-इति मातृकायाम् । तथा अत्र हंसपादं चिन्हित्वा अर्थः विवृतः ।'शब्देतरप्रमाणगृहीतव्याप्तिकानुमानसिद्धस्य विमतं केनचिन्नियतम् अप्राप्तशक्तिमत्वात् रथादिवत्' इति । कुत्रान्वयः इति न स्पष्टः ।
४. 'स्वरूपं' इति बे, गुज नास्ति ।

## भावदीपः

**साधनमिति** ।। अमानित्वादिज्ञेयब्रह्मसाधनं **'ज्ञेयं यत्तत्'**(१३.१३) इत्याद्युक्त्यनन्तरं वक्तव्यमित्यर्थः ।। **विकारेष्विति** ।। च्छाद्वेषादिष्वित्यर्थः ।। **तदनन्तरम्** इच्छाद्युक्त्यनन्तरम् ।। **हेत्वन्तरेति** ।। 'साधनात्युपायात्' इत्यादिहेत्वन्तरोक्तिरित्यर्थः ।। **तावानिति** ।। साधनानामत्युपयोग इत्यर्थः ।। **प्रेरकत्वस्येति** ।। **'यतो यत्'** इत्यत्र 'यतः' इत्यनेन उक्तप्रेरकत्वस्येत्यर्थः ।। १९ ।।

( सङ्क्षेपतो प्रकृतिपुरुषस्वरूपनिरूपणम् )

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ।। २० ।।**

**भाष्यम् — 'यतश्च यत्'** (१३.४) **इति वक्तुं प्रकृतिविकारपुरुषान् सङ्क्षिप्याऽह– प्रकृतिमिति ।।**

## प्रमेयदीपिका

ननु **'प्रकृतिं पुरुषं चैव विद्धि'** इत्यादिकमप्रतिज्ञातं [1]किमित्युच्यते ? मैवम् । **'यादृक् च'**(१३.४) इति प्रतिज्ञातस्य सप्रकारस्य क्षेत्रस्य कथनात् । तत्प्रतिज्ञाक्रमेण प्रागेव कुतो नोक्तमित्यत आह– **यतश्चेति** ।।

**'यतश्च यत्'**(१३.४) इति प्रतिज्ञातं प्रेरकस्वरूपं तावत्प्रभावानन्तरं वक्तव्यं प्राप्तम् । तत्र प्रेरकस्य [2]स्वरूपनिरूपणं प्रेर्यज्ञानमपेक्षते । प्रेर्यं च सप्रकारं क्षेत्रम् । अतः[3] प्रेरकस्वरूपं वक्तुमनेन प्रेरणीयं सप्रकारं क्षेत्रमुच्यते । तस्य प्रागपि वचने गौरवं स्यादिति भावः । तर्हि 'प्रकृति' इत्यादि कथमुच्यते? ईश्वरातिरिक्तस्सर्वोऽपि चेतनाचेतनवर्गः क्षेत्रमित्युच्यते । तत्र प्रकृतिशब्देन **'महाभूतानि'** (१३.६) इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते । विकारशब्देनेच्छाद्युपलक्षिताः क्षेत्रान्तर्भूता अपि गुणत्रयाद्यास्सर्वे विकारा विवक्षाविशेषवशेन पृथगुपात्ताः । पुरुषशब्देन जीव इति ।।

---

१. गुज,वे-ग्रं । किमुच्यते-बे।
२. 'प्रेरकस्वरूप' इति समस्तं पदं मातृकायाम् ।
३. भं-मातृकायां,श.मा-२ मातृकायां । मुद्रितपुस्तकेषु नास्ति ।

**'यावत् सञ्जायते'**(१३.२७) इत्यादिना पुनर्वक्ष्यमाणत्वात् पुनरुक्तिदोषं परिहर्तुं **'सङ्क्षिप्य'** इत्युक्तम् । आह सप्रकारान् निरूपयति ।।

**भावदीपः**

**स्वरूपं चेति** ।। **'परं ब्रह्म'** इति ब्रह्मस्वरूपं **'स च यः'** इति प्रतिज्ञातमित्यर्थः ।। **प्रभावानन्तरमिति** ।। **'अनादिमत्'** इत्यादि 'उपपद्येत' इत्यन्तग्रन्थान्तरमित्यर्थः ।। **अनेनेति** ।। **'प्रकृतिं पुरुषं च'** इत्यादिनेत्यर्थः ।। **प्रकृत्यादीति । कथमिति** ।। **'महाभूतानि'** इत्यादिना प्रकृत्यादेरनेकस्येच्छादिविकाराणां चोक्तत्वात् पुरुषपदेनेश्वरश्चेत् सोऽपि **'अनादिमत्परं ब्रह्म'** इति प्रागुक्त एवेति भावः ।।

'यादृक् च' इति प्रतिज्ञातोक्तिपरत्वलाभायाऽह– **सप्रकारान्निरूपयतीति** ।। प्रकृति पुरुषयोरनादित्वरूपं सत्वादीनां सर्गकालीनाल्पीभवत्प्रकृतिसम्भवत्वरूपम् इच्छादिविकाराणां बहुत्वप्रकृतिसम्भवत्वरूपं प्रकारं निरूपयतीत्यर्थ इत्येके । अन्ये तु प्रकृतेः कार्यकारणकर्तृत्वहेतुत्वरूपं, पुरुषस्य भोक्तृत्वरूपं, गुणानां सदसद्योनिगमनजन्मकारणत्वरूपं प्रकारं निरूपयतीत्यर्थ इत्याहुः ।।

**भाष्यम् — गुणाः सत्त्वादयः तेषामत्यल्पो विशेषो लयात् सर्ग[1] इति विकाराः पृथगुक्ताः ।**

**'कार्याकार्यगुणास्त्रिस्रो यतस्स्वल्पोद्भवो जनौ'**

**इति माधुच्छन्दसशाखायाम् ।। २० ।।**

**प्रमेयदीपिका**

'गुणाः सुखदुःखमोहाः'[2] इति **कश्चित्** । 'कार्यकारणलक्षणाः'[3] इत्यन्यः । तदुभयं निराकर्तुं व्याचष्टे– **गुणा** इति ।। ननु सत्वरजस्तमसामपि प्रकृतिविकारत्वाद् **'विकारांश्च गुणांश्च'** इति पृथगुक्तिः किमर्था ? इत्यत आह– **तेषामिति** ।। 'इति ज्ञापयितुम्' इति शेषः । **विकाराः पृथगुक्ता इति** ।। विकाराश्च गुणाश्च पृथगुक्ता इत्यर्थः । **कार्याश्च** ते **अकार्याश्च** । **तिस्रः** त्रयः । अनेन सुखाद्यङ्गीकारे विकारेभ्यः पृथग् ग्रहणमयुक्तमित्यपि सूचितम् ।।२०।।

१. 'अत्यल्पविशेषोदयात्सर्ग इति क्वचित्कः पाठः' इति श्रीनि.टि ।

२. शाङ्करभाष्ये-पृ-६६। भावानुवादः ।'गुणाश्च प्रकृतिसम्भवाः सुखदुःखमोहात्मकाः' इति

३. रामानुजीये नास्ति ।

## भावदीपः

**अनेनेति** ।। गुणानां विकाराणां पृथगुक्तौ बीजकथनेनेत्यर्थः । सुखादीति ।। गुणपदेन सुखाद्यङ्गीकार इत्यर्थः ।। २० ।।

( प्रकृतिपुरुषयोः कर्तृत्वभोक्तृत्वस्वरूपम् )

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।। २१ ।।**
**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।। २२ ।।**

**भाष्यम् —** **कार्यं** शरीरम् । 'शरीरं कार्यमुच्यते' इत्यभिधानम् । **कारणानि** इन्द्रियाणि । भोगोऽनुभवः । स हि चिद्रूपत्वादनुभवति । प्रकृतिश्च जडत्वात् परिणामिनी ।

'कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्'[1]
(भाग.३.२७.९) इति भागवते ।। २१ -२२ ।।

## प्रमेयदीपिका

कारणानामपि कार्यत्वात् पृथगुक्तिर्व्यर्थेत्यतो रूढिमाश्रित्य कार्यकारणशब्दौ व्याख्याति– **कार्यमिति** ।। **'भोक्तृत्वे'** इत्यत्र प्रकृत्यर्थो भोगो [2]अभ्यवहारादिः सुखादिविषयो न

१. 'अत्र कर्तृत्वं विवेचयति - कार्यकारणेति । कार्यं शरीरम् । कारणमिन्द्रियं कर्तृ मनः । एषां कारणं प्रकृतिं प्रधानाभिमानिनीं श्रियम् । जीवानां सुखादिभोक्तृत्वे कारणं प्रकृतेः परः पुरुषो विष्णुरिति विदुः । परमेष्टिकारणत्वं प्रतीयमानं विहायाप्रसिद्धार्थकथनं कथमिति चोद्यं 'ब्रह्मादिभिः सर्गकरी श्रीविष्णुर्बलसंश्रयात् । सुखदुःखप्रदो विष्णुः स्वयमेव जनार्दनः ।। कर्तृत्वं सर्वदुःखानामन्येषां तु तदाज्ञया । भोक्तृत्वं सुखदुःखानां करोत्येको हरिः स्वयम् ।। भोक्तृत्वमात्रहेतुत्वं जीवे नान्यत्र कुत्रचित् ।।' (भा.ता.नि.उ.भविष्यत्पर्ववचनम्) इत्यनेन परिहृतम् । 'प्रकृतिं पुरुषं चैव विद्ध्यनादी' इति चोक्तार्थे प्रमाणम्' इति विजयध्वजतीर्थाः।।

२. व्यवहारादिः -मातृकायाम् ।

सम्भवति । अत आह– **भोग** इति ।। स्वीयतया साक्षात्कार इत्यर्थः ।।

भोगः प्रकृतेरेव, न पुरुषस्य । अतः **'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः'** इति कथमुक्तम्? इति साङ्ख्याः । तत्राह– **स हीति** ।। 'न तु प्रकृतिः । अचैतन्यात्' इति शेषः । ननु 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिः' इत्युक्तम् । कर्तृत्वं च ज्ञानेच्छाप्रयत्नयोगः । तत्कथं प्रकृतेर्भोगासम्भव इत्यत आह - **प्रकृतिश्चेति** ।। चस्त्वर्थः । परिणामिकारणत्वात् कर्तृत्वमित्युपचर्यत इति भावः । श्लोकार्थे पुराणसम्मतिमाह[१]– **कार्येति** ।। **'कारणं विदुः'** इत्युत्तरार्धेऽनुवर्तते ।। २१ ।। २२ ।।

**भावदीपः**

अनुभवशब्दार्थमाह–**स्वीयतयेति** ।। स्वस्योच्चत्वनीचत्वापादकसुखदुःखसाक्षात्कार इत्यर्थः ।। २१ ।।

**( साध्वसाधुयोन्युत्पत्तौ भगवानेव स्वतन्त्रकारणम् )**

**[२]उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ।। २३ ।।**
**य एवं[३](एनं ) वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ।। २४ ।।**

**भाष्यम् —— 'यतश्च यत्'**(१३.४) इत्याह - **उपद्रष्टेति** ।। **अनुमन्ता** अन्वनु विशेषतो निरूपकः । **'पुरुषः सुखदुःखानाम्'** इति जीव उक्तः । **'पुरुषं प्रकृतिम्'** इति जीवेश्वरौ सहैवोच्येते ।।

**प्रमेयदीपिका**

'यतश्च यत् इति वक्तुम्'(१३.४) इत्युक्तम् । तत्केनोच्यते? इत्यत आह– यतश्चेति।।

---

१. सम्मतिं चाह- इति मातृकायाम् ।

२. उपद्रष्टा सर्वस्मादधिको द्रष्टा' ४.८.५० भा.टि.वि ।

३. गीताविवत्तिरीत्या अयं पाठः सम्भाव्यते । रामानुजीये एनमिति शाङ्करभाष्ये च एवमिति पाठः ।

इति **'प्रतिज्ञातम्'** इति शेषः । 'अनुमन्ताऽनुज्ञाता'[१] इति **कश्चित्** । तदसत् । औदासीन्यप्राप्तौ **'भर्ता' 'भोक्ता'** इत्यादि विरोधादिति भावेन व्याचष्टे– **अनुमन्तेति** ।। अनुशब्दः पुनरर्थे । क्रियाऽऽवृत्तिश्च तदर्थ इति ज्ञापनाय द्विरुक्तिः । **'विशेषतः'** इति तृनोऽर्थः । **निरूपकः** कर्तव्यस्याऽलोचकः । **'य एनं वेत्ति पुरुषम्'** इत्यत्र पुरुषशब्दं व्याख्यातुमुपोद्घातमाह– **पुरुष** इति ।। सुखदुःखभोक्तृत्व[२]लिङ्गादिति भावः ।।

सुखदुःखानां भोक्तृत्वे भोगे हेतुः कर्तेति व्याख्यानमाश्रित्येदमुक्तम् । व्याख्यानान्तरे[३] तु भगवानेवात्र पुरुषः 'पुरुषः प्रकृतिस्थो हि' इति तु[४] जीवः । उपलक्षणमेतत् । **'उपद्रष्टा'** इति ईश्वर उक्त इत्यपि द्रष्टव्यम् । ततः किम्? इत्यत आह– **पुरुषमिति** ।। यत एवमुभावपि प्रकृतौ, अतो **'य एनं वेत्ति पुरुषम्'** इत्यत्र पुरुषशब्देन जीवेश्वरौ द्वावपि गृह्येते । द्वयोरपि परामर्शसम्भवात् । तर्हि द्वयोर्द्विवचनेन भाव्यमित्यत उक्तम्– **सहैवेति** ।। [५]तन्त्रेणेत्यर्थः ।।

## भावदीपः

**कर्तव्यस्यालोचक इति** ।। 'मनु अवबोधने'**(पा.धा.१४७१)** इति धातोः पौनःपुन्यार्थकानुपसर्गयोगे आलोचनमेव सिद्ध्यतीति भावः ।। **व्याख्यानान्तरे त्विति** ।। 'भोक्तृत्वे भोक्तृशक्तिदाने पुरुषो हेतुः' इति तात्पर्योक्तव्याख्यानान्तर इत्यर्थः । **उपलक्षणमेतदिति** ।। **'पुरुषः'** इत्यादि भाष्यमित्यर्थः । एतच्च परामर्शसौकर्यायोक्तम् । अत एवाह– **उभावपि प्रकृताविति** ।। **तन्त्रेणेति** ।। सकृदुच्चरितमनेकोपकारकं तन्त्रम् । तेनेत्यर्थः ।।

### (ईश्वरस्योत्कर्षे सर्ववेदन्यायतात्पर्यमिति निरूपणम् )

**भाष्यम् — अन्यत्र महातात्पर्यविरोधः । उत्कर्षे हि महातात्पर्यम् । तथा हि सौकरायणश्रुतिः -**

**'अवाच्योत्कर्षे महत्त्वात् सर्ववाचां सर्वन्यायानां च महत् तत्परत्वम् ।**

---

१. शाङ्करभाष्ये - तृतीयभागः-पृ-७४ ।

२. 'भोक्तृलिङ्गात्' इति मुद्रितसर्वपाठः । 'भोक्तृत्व' इति मातृकायामेव ।

३. भावदीपानुगुणः । 'व्याख्यानावसरे'-प्रचलितपाठः ।

४. ख मातृकायामेव तुशब्दः ।

५. अत्र मातृकायां तन्त्रशब्दविवरणम् 'सकृदुक्तं बहूपकारकं तन्त्रम् । सकृदुक्तमनेकोपकारकं तन्त्रम्' इति लिखितम् ।

**विष्णोरनन्तस्य परात्परस्य तच्चापि ह्यस्त्येव न चात्र शङ्का ।**
**अतो विरुद्धं तु यदत्र मानं तदक्षजादावथवाऽपि युक्तिः ।**
**न तत् प्रमाणं कवयो वदन्ति न चापि युक्तिर्ह्यूनमतिर्हि दृष्टेः ' इति ।।**[१]

## प्रमेयदीपिका

अत्र **कश्चित्**[२] 'य एवं[३] वेत्ति पुरुषम्' 'साक्षाद् अयमहमस्मि'[४] इत्येवमध्याहारेण जीवेश्वरैक्यं व्याख्यातवान् । तद्दूषयति– **अन्यत्रेति** ।। जीवेश्वरैक्ये सर्ववेदानां प्राधान्येन यत्प्रतिपादकत्वं तद्विरोधः । कथम्? इत्यत आह– **उत्कर्षे हीति** ।। सर्वागमानामीश्वरस्य सर्वोत्कर्षे हि **महातात्पर्यमित्यर्थः** ।। तत्कुतः? प्रागुक्तयुक्तेः ।।

श्रुतेश्चेत्याह– **तथा हीति** ।। **विष्णोः** महत्त्वादेवावाच्यत्वेनोक्ते **सर्वोत्कर्षे** सर्वासां **वेदवाचां सर्वन्यायानां** न्यायव्युत्पादकस्य मीमांसाशास्त्रस्येति यावत् । **महत्तत्परत्वं** महातात्पर्यम्[५]। अस्तूत्कर्षे महातात्पर्यम् । तथाऽप्युत्कर्षस्य सत्त्वं कुतः? न हि जैनवाक्यस्य क्वचिन्महातात्पर्येऽपि तत्सत्त्वमस्तीत्यत आह– **तच्चापीति** ।।

न केवलं तत्र तात्पर्यम्, किन्तु तत्महत्त्वमपि **चास्त्येव** । धियां स्वतः प्रमाण्यादिति **हे**रर्थः । स्वतः प्रामाण्येऽपि बाधकाद् निषयासत्त्वं भवति । तदप्यत्र नास्तीत्याह– **न चात्रेति** ।। **शङ्केति** ।। शङ्काहेतुः बाधकमिति यावत् ।।

कथं बाधकाभावः? इत्यत आह– **अत इति** ।। **'अतः'** इत्यस्योत्तरत्रान्वयः । तत्र ईश्वरस्य सर्वोत्कर्षे **तु यत् विरुद्धं मानं** शङ्क्यते **तदपि** किम् **अक्षजादौ** अक्षजागमयोरन्यतरत्? **अथवा युक्तिः**? आद्यं निराकरोति– **न तदिति** ।। **कवयः** न्यायविदः । कुतः? **अतः** उपजीव्यवेदविरोधात् ।।

१. 'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् ।
अवान्तरं तत्परत्वं तदन्यत् सर्वागमानां पुरुषार्थस्ततोऽतः' इति पैङ्गिश्रुतिः ।।(वि.त.नि.प्र-परि)

२. शाङ्करभाष्ये - तृतीयभागः -पृ ७९ ।

३. 'एनम्' इति प्र-पाठः । परन्तु शाङ्करभाष्ये 'एवम्' इत्येव पाठः । अतः टीकायां 'एवम्' इति पाठ आदृतः।

४. गुज । शाङ्करभाष्ये स्फुठमेवमेव वाक्यरीतिः । 'साक्षादहमस्मि' इति वे-ग्रं,प्रच. ।

५. वि.त.नि.भावदीपे(पृ-४४५)'तत्परत्वं तात्पर्यमित्यर्थः । तात्पर्यं नाम तत्प्रमितिशेषत्वम् । 'शेषः परार्थत्वात्' इति जैमिनीयसूत्रोक्तदिशा तदेकोद्देशेन प्रवृत्तत्वम् । तच्च ब्राह्मणोपनिषन्मन्त्रभेदभिन्नवेदाद्यखिलशब्दराशेर्विष्णावित्र न धर्मादिप्रमित्युत्पादनमात्र एव पर्यवसानम् । ब्रह्मकाण्डस्य ब्रह्ममात्रप्रतिपादनेऽप्यन्त्यभागस्य धर्मादिप्रतिपादनद्वारा भगवज्ज्ञान एव पर्यवसानम् । 'विविदिषन्ति ज्ञानेन' इत्यादेः ।।'

एतेन द्वितीयोऽपि निरस्तः । तथाऽपि विशेषं वक्तुमाह– **न चेति** ।। **युक्तिरपि नैव मानं** यतो **दृष्टेः** श्रुतेः **ऊनमतिः** जात्यैव दुर्बलज्ञानोत्पादिका ।।

**भावदीपः**

**'तत्कुतः'** इति प्रश्नस्योत्तरं– **प्रागुक्तयुक्तेरिति** ।। **'महातात्पर्याच्च'** इत्याद्युपक्रम्य **'मोक्षो हि'** इत्यादिना मोक्षरूपपरम[1]पुमर्थहेतुभगवत्प्रसादकारणतदीयगुणोत्कर्षज्ञान-जननाय[2] प्रवृत्तत्वात् सर्ववेदानाम्' (२.२४) इति द्वितीयाध्यायोक्तयुक्तेरित्यर्थः ।। **युक्तरिति**।। 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतौ' इति योज्यम् । **उत्तरत्रेति** ।। 'अतो न प्रमाणम्' इत्यन्वय इत्यर्थः ।। तदनुवादेनार्थमाह– **तदुपजीव्येत्यादि** ।। **'दृष्टेः'** इत्यनुवादः, **श्रुतेः**' इति व्याख्या ।।

**भाष्यम् —अतो युक्तिभिः[3] एतदपलापो न युक्तः । अतो यया युक्त्या अविद्यमानत्वादि कल्पयति साऽप्याभासरूपेति सदैव माहात्म्यं वेदैरुच्यत इति सिद्ध्यति । अवान्तरं च तात्पर्यं तत्रास्ति । उक्तं च तत्रैव–**

**'अवान्तरं तत्परत्वं च सत्त्वे महद्वाप्येकत्वात् तयोरनन्ते'**

**इति । श्यामत्वाद्यभिधानाच्च ।।**

**प्रमेयदीपिका**

भगवदुत्कर्षे सर्वागमानां महातात्पर्यमित्यत्र पठितायाः श्रुतेः शेषेण योऽर्थो लब्धः सोऽपि प्रकृतोपयुक्त एव । उत्कर्षस्य सत्त्वाभावे जीवेश्वरैक्यस्य सद्विरोधाभावात् । अतस्तं स्ववाक्येनाप्याह– **अत** इति ।। **'युक्तिभिः'** इत्युपलक्षणम् । एतदपलापः भगवदुत्कर्षस्य अविद्यामानत्वादिकल्पनम् । **'अतः'** इत्युक्तमेवार्थं विशदयति– **अत** इति ।। वेदविरोधाद् इत्यर्थः । **आदिपदेनानिर्वाच्यत्वं**[4] गृह्यते । 'भगवदुत्कर्षस्य' इति शेषः । **'साऽपि'** इत्यपिशब्देन प्रत्यक्षादेस्समुच्चयः[5] । **इतिशब्दो** हेतौ । बाधकाभावादित्यर्थः । उत्कर्षस्य प्रकृतत्वेऽपि

---

१. 'पुरुषार्थ'–का-मातृकायाम्।

२. 'ज्ञानोपायाय' -का-मातृकायाम्।।

३. अत्र 'युक्तिभिरपि' इति प्रचलितसर्वपाठेषु । प्रभ-पाठेपि । परन्तु अपिशब्दः प्रामादिकः । 'अनेन अपिशब्दः प्रामादिक इति सूचितम्' इति कृ.टिप्पण्यनुरोधेन भाष्यपाठः स्वीकृतः ।

४. अत्र मातृकायां 'सदसद्विलक्षणत्वम्' इति शब्दार्थः विवृतः ।

५. 'सङ्ग्रहः' इति पाठान्तरम् - श-मा.२ ,कृ.टि.।

**'तच्चापि'** इति श्रौततच्छब्दव्याख्यानाय **'माहात्म्यम्'** इत्युक्तम्।।

ननु प्रतिपन्नस्य विद्यमानत्वादिकं बाधकाभावेन कल्प्यम् । स्वतः प्रामाण्यात् । न चोत्कर्षस्य सत्त्वं वेदात् प्रतिपन्नम् । उत्कर्षे तत्सत्त्वे च तात्पर्याङ्गीकारे वाक्यभेद-प्रसङ्गादित्यत आह– **अवान्तरं** चेति ।। चशब्दस्य **'तत्र सत्त्वे च'**इत्यन्वयः । उभयत्र महातात्पर्याभावान्न दोषः । एतत्कुतः? इत्यत आह– **उक्तं** चेति ।। **तत्रैव** तस्यामेव श्रुतौ । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तूत्कर्षसत्त्वे महदपि तत्परत्वम् । कुतः ? अनन्तसम्बन्धिनो स्तयोरुत्कर्षस्य तत्सत्त्वस्य चैकत्वात् । **अनन्ते** इति प्रकृतत्वादेवोक्तम् ।।

एतदुक्तं भवति । प्रमाणं हि प्रवर्तमानं विधिरूपं निषेधरूपं वा, न तूदासीनम् । तस्य च बाधाभावे स्वत एव सत्त्वासत्त्वलक्षणौ विधिनिषेधौ सिद्ध्यतः । किं तत्र तात्पर्या-न्तरकल्पनया? इति । ननु निराकारमेव ब्रह्म श्रूयते । तत्कथं तद्गुणोत्कर्षे सर्वश्रुतीनां महातात्पर्यं स्यात्? इत्यत आह–[1]**श्यामत्वादीति** ।। एतच्चानन्तरातीताध्याये प्रपञ्चितम् ।।

### भावदीपः

**शेषेणेति** ।। तच्चापि इत्यपिनेत्यर्थः[2]। सकृदुच्चरितत्वादिनेत्यर्थः।। **इत्युपलक्षणमिति** । 'प्रमाणमात्रस्य' इति योज्यम् । **प्रतिपन्नस्यापीति** । प्रमितस्यापीत्यर्थः । **इदमुक्तमिति** । उत्कर्षसत्वेऽवान्तरतात्पर्यं[3] तयोर्भेदमङ्गीकृत्योक्तमित्यर्थः ।। ननु घटादिपदार्थेष्वपि प्रमाणतः तत्स्वरूपसिद्ध्यैव सत्त्वं सिद्ध्यति । तत् किम् 'अनन्तम्' इति विशिष्योच्यते? इत्यत आह– **प्रकृतत्वादिति**।।अस्यां श्रुतौ पूर्वभागे 'विष्णोरनन्तस्य' इति प्रकृतत्वादित्यर्थः।।**प्रपञ्चितमिति**।। 'रूपं चेदं साधितं पुरस्तात्' इत्यादिना **'श्यामोऽथवा हृदयेऽष्टबाहुः'**(गी.भा.२.५१) इत्यन्तग्रन्थेनेति भावः ।।

( युक्त्यादेराभासत्वनिरूपणम् )

**भाष्यम् — युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम् । अज्ञानसम्भवात् । न तु स्वतः प्रमाणस्य वेदस्याऽभासत्वम् । अदर्शनं च सम्भवत्येव पुंसां बहूनामप्यज्ञानात् । तर्ह्यस्मदनधीतश्रुत्यादौ विपर्ययोऽपि स्यादिति न वाच्यम् ।**

१. 'श्यामत्वे च' इति बे -भाष्याननुगुणः। गुज-श्यामत्वेति- पां ।
२. इदं वाक्यं सो मातृकायामेव ।
३. 'तात्पर्यभेदं' -का-मातृकायाम् ।

यतस्तत्रैवाऽह–

"[1]नैतद्विरुद्धा वाचो नैतद्विरुद्धा युक्तय
इति ह प्रजापतिरुवाच प्रजापतिरुवाच[2]"

इति । तद्विरुद्धं च जीवसाम्यम् ॥

## प्रमेयदीपिका

वेदविरोधाद् युक्त्यादेराभासत्वमित्युक्तम् । तदयुक्तम् । नियामकाभावात् । विपर्ययस्यापि [3]सुवचनादित्यत आह– **युक्तं चेति** ॥ **युक्तं** सम्भावितम् । **अज्ञानसम्भवात्** अज्ञान-मूलत्वसम्भवात् । अज्ञान[4]मुपाधिव्यभिचारादिविषयम् । स्वतः प्रमाणस्यापौरुषेयतया पुरुष-गुणानपेक्षप्रमाणभावस्य । युक्तेरज्ञानमूलत्वसम्भावना निर्बीजेत्यत आह– **अदर्शनं चेति** ॥ **सम्भवति** शङ्कार्हमित्यर्थः ॥

एतदुक्तं भवति । वेदस्य युक्त्यादेश्च परस्परविरोधे द्वयोः प्रामाण्यानुपपत्तावन्यत रस्य आभासत्वे कल्पनीये युक्त्यादेरेव तत्कल्प्यं सम्भवात् । न तु वेदस्यासम्भवात् । निरवकाशेन सावकाशस्य बाधदर्शनादिति । पुरुषेष्वदर्शनमाशङ्कमानानामतिप्रसङ्गमाशङ्क्य निषेधति– **तर्हीति** ॥ **विपर्ययः** भगवद्गुणोत्कर्षस्य । **'सर्ववाचाम्'** इति श्रुत्यैवोक्तत्वादिति परिहारे स्थितेऽन्यमप्याह– **यत इति** ॥ तस्यामेव श्रुतौ आह वेदपुरुषः । **एतद्विरुद्धाः** भगवद्गुणोत्कर्षविरुद्धाः ।

**'उत्कर्षे हि'** इत्यादिनोक्तमुपसंहरति– **तदिति** ॥ सर्ववेदानां यद्भगवद्गुणोत्कर्षे महातात्पर्यमुक्तं **तद्विरुद्धं जीवसाम्यं** जीवस्यैकात्म्यम् ॥

## भावदीपः

**अदर्शनमाशङ्कमानानामिति** ॥ उपाध्यायादियुक्तिदोषाणामदर्शनमित्यर्थः ॥ **सर्व-वाचामिति श्रुत्यैवेति** ॥ प्राग्भाष्योक्तश्रुत्यैव सर्वश्रुत्यादौ विपर्ययाभावस्योक्तत्वाद् इत्यर्थः ॥

---

१. 'नैव तद्विरुद्धाः' इति गुज,वे-ग्रं पाठौ टीकाननुगुणौ ।
२. मातृकायां सकृदेव पठ्यते । गुज,प्रभ द्विवारम् ।
३. 'सुवचनत्वात्' इति मातृकायामेव ।
४. अज्ञानं च वे-ग्रं ।

( सूत्रेतिहासविरुद्धं जीवब्रह्मैक्यम् )

**भाष्यम् —** 'आभास एव च'(ब्र.सू.२.३.५०) इति चोक्तम् ।

'जनमेजय उवाच–

बहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठः तं भवान् वक्तुमर्हति ।। (म.भा.१२.३४९.७२)

श्रीवैशम्पायन उवाच–

नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।[1](म.भा.१२.३५०.०२)
बहूनां पुरुषाणां हि यथैका योनिरुच्यते । (म.भा.१२.३५०.०३)
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।'

इति मोक्षधर्मे ।।

**प्रमेयदीपिका**

सूत्रेतिहासविरुद्धं चेत्याह– **आभास** इति ।। **बहवः** इति पक्षेऽपि किं सर्वे समाः, उत

१. (अ) बृ.उ.भा-३.९.४ उदाहृतम् ।

**(आ)**श्रेष्ठवस्त्वैक्यार्थतयाऽपि ऐक्यश्रुतीः स्मृत्या व्याख्याति– नैतदिति ।। मोक्षधर्मे हि वैशम्पायनं प्रति हे ब्रह्मन् भेदवाक्याद् बहवः पुरुषाः प्रतिपत्तव्याः । ऐक्यवाक्यं तु प्रधानपुरुषपरमिति वा ? उताहो ऐक्यवाक्याद् एक एव पुरुषः, द्वैतवाक्यं तु व्यावहारिकभेदपरमिति ? तथा– पुरुषबाहुल्यमुपेत्यैक्यवाक्यस्य श्रेष्ठपरत्वपक्षेऽपि आत्मसु किं सर्वे समाः उतैकः श्रेष्ठः? द्वितीये कोऽसावत्र पुरुषेषु श्रेष्ठः? स कथं हि श्रेष्ठः ? तं तथा च भवान् वक्तुमर्हतीत्याशयेन कृतस्य जनमेजयप्रश्नस्य वैशम्पायनेनोक्तमुत्तरम् -

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।

**बहूनां पुरुषाणां हि यथैका योनिरुच्यते** ।। तथा तं **पुरुषं विश्वमाख्यास्यामि गुणाधिकम्** ।।' इति ।।

अस्यार्थः– एतन्मतं नेच्छन्ति विद्वांसः । एतदिति किमित्यतस्तद् विवृणोति– पुरुषमेकमिति ।। तथा च वेदाः एकमेव पुरुषं वदन्तीत्येतन्मतं ज्ञानिनो नेच्छन्तीत्यर्थः । यद्वा– एतस्मिन् जगति एकं पुरुषं नेच्छन्ति, किन्तु बहवः पुरुषाः सन्तीति । तर्ह्यद्वैतश्रुतिविरोध इति न वाच्यम् । यतो बहूनां श्रेष्ठः एक एव, तत्परमैक्यवाक्यम् । बहूनां कः श्रेष्ठः? स कथं श्रेष्ठः? इत्यस्योत्तरमाह - बहूनामिति ।। हे कुरुकुलोद्वह ! एतेषां बहूनां पुरुषाणाम् आत्मनां मध्ये या योनिः यः कारणभूतः 'एका' श्रेष्ठः यथा च श्रेष्ठ उच्यते श्रुत्यादौ 'तथा' तेन प्रकारेण 'तं' विश्वं पूर्णं गुणाधिकं पुरुषम् आख्यास्यामि व्याख्यास्यामीति प्रमेयदीपिकाव्यासतीर्थीयदिशा स्मृत्यर्थः । अनेन पराभिमतैक्यवाक्यमुत्तमवस्त्वैक्यपरम् ।' इति ब्र.सू.भाष्यदीपिकायाम् ।

**एकः** श्रेष्ठः? द्वितीये **कोऽसौ अत्र** पुरुषेषु श्रेष्ठः? कथं च **श्रेष्ठः? तं तथा वक्तुमर्हती**ति। **एतत्** एतस्मिन् जगति । किन्तु बहवः । तेषां **बहूनां पुरुषाणां** मध्ये यो **योनिः** यः कारणभूतः **सः श्रेष्ठः** । तथाच **तं पुरुषं तथा व्याख्यास्यामि । विश्वं** व्याप्तम् ।। स्यादेतत् । **सर्वं जगत् स्वप्नव**देकाज्ञानकल्पितमित्येके । **इन्द्रजालवत्** अनेकाज्ञान[1]कल्पितमित्यपरे । [2]अपकृष्टापेक्षश्चोत्कर्षः । तथा चापकृष्टस्य विश्वस्य मिथ्यात्वादुत्कर्षस्य सत्त्वं कथं स्यात् । कथं च तत्र सर्ववेदानां महातात्पर्यमित्यत आह– **नचेति** ।। 'भगवद्वचनं यतः' इति शेषः ।।

**( जगत् नैन्द्रजालिकम् )**

**भाष्यम् — नचैतत्सर्वं स्वप्नेन्द्रजालवत्[3] ।**

**'वैधर्म्याच न स्वप्नादिवत्'(ब्र.सू.२.२.२९)**

**इति भगवद्वचनम् ।**

**नच स्वप्नवदेकजीवकल्पितत्वे मानं पश्यामः । विपर्यये मा चोक्ता द्वितीये । उक्तं चायास्यशाखायाम्–**

**'स्वप्नो ह वाऽयं चञ्चलत्वान्न स्वप्नो न हि विच्छेदो एतदिति' इति ।।**

**प्रमेयदीपिका**

इतोऽप्येवमेवेत्याह– **नचेति** ।। **कल्पितत्वे** विश्वस्य । एवं बहुजीवकल्पितत्वेऽपीति वाच्यम् । **विपर्यये** सत्यत्वे । तर्हि कथं विश्वस्य पुराणेषु स्वप्नादिसाम्यमुच्यते ? इत्यत आह– **उक्तं** चेति ।। **अयं** प्रपञ्चः स्वप्न इवोच्यते । **चञ्चलत्वात्** अनित्यत्वात् विकारित्वाच्च । नतु स्वप्नः साक्षान्मिथ्या इति यावत् । कुतः? **एतत्** एतस्य **विच्छेदः** बाधो **न** **ही**त्यर्थः । यद्यपि स्वप्नः सत्यः । तथाऽप्यङ्गीकारवादोऽयम् । मिथ्यार्थप्राचुर्याद्वा ।।

**( प्रतिबिम्बत्वेन ऐक्योपचार इति निरूपणम् )**

**भाष्यम् — नायं दोषः ।। न हीश्वरस्य जीवैक्यमुच्यते । जीवस्य हीश्वरैक्यं**

---

१. परिकल्पित-वे-ग्रं,गुज । बे, मातृकायां च नास्ति ।

२. गुज, वे-ग्रं, भं-मा ।'अप्रकृष्ट'-प्र

३. 'जालादिवत्' इति प्रभ-पाठः टीकाननुगुणः ।

**ध्येयम् । तदपि न निरुपाधिकम् । अतो न प्रतिबिम्बत्वस्य विरोध्यैक्यम् । तथाच माधुच्छन्दसश्रुतिः–**

**'ऐक्यं चापि प्रतिबिम्ब्येन विष्णोः जीवस्यैतद्[1] ऋषयो वदन्ति' इति ।**

### प्रमेयदीपिका

ननु जीवस्य ब्रह्मणि 'अहं ब्रह्मास्मि'(बृ.उ.१.४.१) इत्यहङ्ग्रहोपास्तिस्तावत् कर्तव्या । जीवश्च न सर्वोत्कृष्टः । ततश्च तेनैकीभूतस्येश्वरस्य कथं सर्वोत्कर्षः? इत्यत आह– **नायमिति** ।। बुद्धिस्थस्य 'अयम्' इति परामर्शः । कुतः? इत्यत आह– **न हीति** ।। किं तर्ह्युच्यत इत्यत आह– **जीवस्य हीति** ।।

स्यादयं दोषः यदि 'अहं ब्रह्मास्मि' इत्यादिनी ईश्वरमुद्दिश्य तस्यानुत्कृष्टजीवैक्यम् उच्येत । न चैवम् । किन्तु जीवमुद्दिश्य तस्येश्वरैक्यम् । अन्यथा ब्रह्म मदात्मकं भवतीति निर्देशप्रसङ्गादिति । सत्यमेतज्जीवस्येश्वरैक्यमुच्यत इति । तथाऽपि नोक्तदोषपरिहारः । यदीश्वरः वस्तुतः सर्वोत्कृष्टः स्यात् तदा कथं जीवस्य तदैक्यं स्यात्? तस्यानुत्कृष्टत्वेन अनुभवात् । अतो जीवस्य ब्रह्मणि श्रुतस्याहङ्ग्रोपासनास्यान्यथानुपपत्त्येश्वरस्य सर्वोत्कृष्टत्वं मिथ्येत्यङ्गीकार्यमित्यत आह– **तदिति** ।। यज्जीवस्य **ईश्वरैक्यम्**[2] उच्यते तदपि **न निरुपाधिकं** निरुपचरितम् । किन्तु उपचारेणैवमुच्यते[3] ।

उपचारबीजं सहेतुकमाह– **अत** इति ।। यतः साक्षादैक्यं नार्थः । अतः 'अहं ब्रह्मास्मि' इत्यादावुच्यमानम् ऐक्यं प्रतिबिम्बत्वविरोधि प्रतिबिम्बत्वादन्यत्र भवति । किन्तु प्रतिबिम्बत्वमेवेत्यर्थः ।। ननु साक्षादैक्यं कुतो नार्थः ? कुतश्चोपचारोऽपि प्रतिबिम्बत्वनिमित्तः? इत्यत आह– **तथा चेति** ।। **जीवस्य अपि विष्णोरैक्यं** यद् **ऋषयो वदन्ति** तत् **प्रतिबिम्बेनैव** निमित्तेन हीत्यर्थः ।।

### भावदीपः

उपचारबीजं सहेतुकमाह-अत इतीति ।। 'अतः'इत्यनेन साक्षादैक्यार्थत्वाभावरूपबीजं [4]प्रतिबिम्बत्वरूपहेतुसहितमाहेत्यर्थः ।।

---

१. 'जीवस्यैवेतद्' इति गुज । 'जीवस्यैतद्धि' इति प्रभ ।

२. मातृकायाम् । भाष्यानुगुणपाठः । ईश्वरेणैक्यमिति-प्रच ।

३. 'चारेणैवोच्यते' वे-ग्रं, वे । ४. 'विम्बप्रतिबिम्बरूपहेतु 'इति मातृका ।

**भाष्यम्- अहङ्ग्रहोपासने च फलाधिक्यम् आग्निवेश्यश्रुतिसिद्धम् ।**

**'अहङ्ग्रहोपासकस्तस्य साम्यम् अभ्याशो ह वा अश्नुते नात्र शङ्का' इति ।**

**'तदीयोऽहमिति ज्ञानमहङ्ग्रह इतीरितः'**

**इति वामने ।**

**'तद्वशत्वात् सोऽस्मीति भृत्यैरेव न तु स्वतः'**

**इति च ।**

**प्रातिबिम्ब्येन सोऽस्मि भृत्यश्च इति भावना । तथा ह्ययास्यशाखायाम्**

**'भृत्यश्चाहं प्रातिबिम्ब्येन सोऽस्मि इत्येवं ह्युपास्यः परमः पुमान् सः'**

**इति । प्रातिबिम्ब्यं च तत्साम्यमेव ।। २३-२४ ।।**

## प्रमेयदीपिका

इतश्चोपचारेणैवाहङ्ग्रहोपासनमित्याह– अहमिति ।। **फलाधिक्यं** मुख्यं फलम् । अहङ्ग्रहोपासनस्य हि परमं प्रयोजनमीश्वरसारूप्यापत्तिरेव श्रुत्योच्यते । यदि च निरुपचरितमैक्यमुपास्यं स्यात् तदा तन्नोपपद्येत ।

'तं यथा यथोपासते तदेव भवति'[१]

इति श्रुतेरिति भावः । **अभ्याशः** समीपम् । अल्पेनैव कालेनेत्यर्थः ।

इतोऽप्युपचारेणैवाहङ्ग्रह इत्याह– **तदीय** इति ।। 'भृत्यैरेवोपास्यते' इति शेषः । **स्वतः** साक्षादैक्यात् । ननु 'अग्निर्माणवकः' इत्याद्युपचारो भेदज्ञानसहचरितो दृष्टः । नच प्रकृते तदस्ति । तत्कथमुपचारेणाहङ्ग्रहोपासनमित्यतोऽत्रापि भेदज्ञानसाहित्यमस्तीति सप्रमाणकमाह– **प्रातिबिम्ब्येनेति** ।। ननु [२]बिम्बत्वमङ्गीकृतं चैदैक्यमेवापन्नमित्यत आह–**प्रतिबिम्ब्यं** चेति ।। तदधीनत्वं च ग्राह्यम् । '**तदीयोऽहम्**' इत्युक्तत्वात् । **एव**शब्द-स्त्वैक्यस्य [३]व्यवच्छेदार्थः ।।

एतेन '**क्षेत्रज्ञं चापि मां विद्धि**' (१३.३) इत्यादेरपव्याख्यानमपास्तं भवति।।२३,२४।।

---

१ 'तदेव भवति तदेव प्राप्नुवन्तीत्यर्थः । भू प्राप्तौ परस्मैपदमेकवचनं छान्दसम्'त.प्र.३.३.५.भावदीपे।

२. 'प्रतिबिम्बत्वम्' इति मातृकायामेव ।

३. 'ऐक्यव्यवच्छेदार्थः' इति मातृकायां समस्तं पदम् ।

### भावदीपः

तदधीनत्वस्यापि ग्रहणे हेतुमाह–तदीयोऽहमित्युक्तत्वादिति ।। 'एव'इत्यवधारणाद्विरोधमाशङ्क्याह– एवशब्दस्त्विति ।। अपव्याख्यानमिति ।। 'क्षेत्रज्ञं जीवं मां विद्धि, मदैक्येन जानीहि'[१] इत्यपव्याख्यानम्, 'प्रातिबिम्ब्यं च तत्साम्यमेव' इति कथनेन 'अहङ्ग्रहोपासने' इत्युक्तेरन्यथाव्याख्यानेनापास्तमित्यर्थः ।। २३-२४ ।।

( परमपुरुषदर्शने साधननिरूपणम् )

**ध्यानेनाऽत्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ।। २५ ।।**
**अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ।। २६ ।।**

**भाष्यम्** — **साङ्ख्येन** वेदोक्तभगवत्स्वरूपज्ञानेन । कर्मिणामपि **श्रुत्वा** ज्ञात्वा ध्यात्वा दृष्टिः । श्रावकाणां च ज्ञात्वा ध्यात्वा । साङ्ख्यानां च ध्यात्वा । तथा च गौपवनश्रुतिः–

'कर्मकृच्चापि तच्छ्रुत्वा[२] ज्ञात्वा ध्यात्वाऽनुपश्यति ।
श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति ।
अन्यथा तस्य दृष्टिर्हि कथञ्चिन्नोपजायते' इति ।

**'अन्ये'** इत्यशक्तानामप्युपायदर्शनार्थम् ।। २५-२६ ।।

### प्रमेयदीपिका

**'अन्ये साङ्ख्येन योगेन'** इत्यत्र 'कापिलतन्त्रोक्तप्रकृतिपुरुषविवेकज्ञानं साङ्ख्यम्' इति व्याख्यानमसत् । कापिलतन्त्रस्यावैदिकस्यात्र ग्रहणायोगात् । तस्य भगवद्दर्शने प्रधानसाधन-

---

१. शाङ्करभाष्यानुवादः भाग-३,पृ -९ । 'क्षेत्रज्ञं यथोक्तलक्षणं चापि मां विद्धि जानीहि । सर्वक्षेत्रेषु यः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रेपाधिप्रविभक्तस्तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययगोचरं विद्धीत्यभिप्रायः' इति शाङ्करभाष्यम् ।।

२. 'तं श्रुत्वा' इति पाठान्तरं -प्रभ ।

त्वायोगाच्चेति भावेन अन्यथा व्याचष्टे - **साङ्ख्येनेति** ।। **ज्ञानेन** परोक्षज्ञानेन। **'ध्यानेन'** इत्यत्र 'ध्यानादीनां केवलानामेवेश्वरदर्शनसाधनत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासार्थमाह– **कर्मिणामिति** ।। **दृष्टिः** 'प्राप्या' इति शेषः । [१]पाठक्रमादर्थक्रमस्य प्राधान्याद् व्युत्क्रमेणोक्तिः । कुत एतत्? इत्यत आह– **तथा चेति** ।। 'ध्यात्वा' इत्येतत् **'ज्ञान्यपि'** इत्युत्तरेणापि सम्बद्ध्यते ।।

ननु सर्वत्र सर्वस्य संयोजने सत्येक एवायं प्रकारः स्यात् । तथाच **'केचित्' 'अन्ये' 'परे'** इत्युक्तमयुक्तं स्यादित्यत आह– **अन्य इति** ।। ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानादिप्रदर्शनार्थमवस्थाभेदमाश्रित्य **'अन्ये'** इत्याद्युक्तमित्यर्थः।।२५-२६।।

## भावदीपः

ननु **'ध्यानेनात्मनि पश्यन्ति'** इत्यस्य **'अन्ये साङ्ख्येन'** इति श्लोकात् पूर्वभावित्वात् तदर्थः । **'साङ्ख्येन'** इति श्लोकार्थोक्त्यनन्तरं 'साङ्ख्यानां च ध्यात्वा' इति कथमुक्तो भाष्य इत्यत आह– **पाठक्रमादिति** ।। कर्मिणो हि श्रवणं, श्राविणो हि साङ्ख्यशब्दितं परोक्षज्ञानं, ज्ञानिनो हि ध्यानं, ज्ञानाद् ध्यायिनो[२] दृष्टिर्भवतीत्यर्थक्रमस्य गीतोक्तपाठक्रमात् [३]'अग्निहोत्रं

१ **एवमेव षट्प्रश्नटीकायामपि कात्यायनप्रश्नप्रतिवचनसन्दर्भे टीकावचनम्-(१.३) 'पाठक्रमाद् अर्थक्रमो बलीयान्' इति पश्चादुक्तस्यापि कात्यायनस्य प्रश्नः प्रतिवचनं च प्रथममुक्तम् ।' इति ।।**

२. 'ध्याने हि'-इति सो मातृकायाम् ।

३. **(अ) 'अग्निहोत्रं जुहोतीति यवागूं पचतीति च । क्रमः पाठात्दर्थतो वा पाठात् सर्वत्र दर्शनात् ।। होमद्रव्यसमुत्पत्त्यै पूर्वपाकोवगम्यते । यवाग्वेति श्रुता होमद्रव्यतातोर्थतः क्रमः'।।**

**(जैमिनीयन्यायमाला)**

**'अग्निहोत्रं जुहोति यवागूं पचति इति यवागूपाकहोमयोः किमनियमः अथवा पूर्वं पाकः,ततो होमः ति नियमे प्रमाणाभावाद् विध्योः पाकहोममात्रपर्यवसानानान्न क्रमः अत्र पूर्ववद्विधीयते । अतः अनियमः । प्रयोजनवशात्तु नियमः । होमद्रव्यं यवागूः । तदुत्पत्त्यर्थं श्रुत्या लिङ्गेन च पाकः स पश्चात् क्रियमाणः अनर्थकः स्यात् । होमोप्यसति द्रव्ये न निवर्तेत, अतः पक्त्वा होमः '**

**इति शास्त्रदीपिकायां पार्थसारथिमिश्रः ।**

**(आ)इदमधिकरणं जिज्ञासाधिकरणचन्द्रिकायामुदाहृतम्।**

**(इ)** भाट्टसङ्ग्रहे –अथ द्वितीयं क्रमस्य कचिदार्थिकत्वाधिकरणम् अर्थाच्च ।। २ ।।

पूर्ववैषम्येण शङ्कनात् सङ्गतिः । 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यत्र होमयवागूपाकयोः किं क्रमानियमः, किं वा पूर्वं पाकस्ततो होम इति नियम इति सन्देहे, पूर्वत्रेवेह श्रुतिरूपनियामकप्रमाणा-भावात् पाकहोमविध्योस्तावन्मात्रे विधिपर्यवसानान्नात्र क्रमविधिरित्यनियम इति प्राप्ते, यवाग्वा होमद्रव्यत्वं

जुहोति' 'यवागुं पचति'[१] इत्यत्रेव प्राधान्याद् व्युत्क्रमोक्तिर्भाष्य इत्यर्थः ।।

**'ध्यानेन'** इति त्रिपादी **'उपासते'** इत्यनन्तरं पठितव्याऽपि दृष्टेरव्यवहितसाधनत्वात् पूर्वं पठितेति भावः ।। **ध्यानादाविति** ।। ज्ञानध्यान[२]श्रवणकर्मसु उत्तरोत्तरसाधने ध्याने साक्षाद् अशक्तानां परोक्षज्ञानसम्पादनमुपायः, तत्र अशक्तानां श्रवणे, तत्राप्यशक्तानां कर्मणि इति ध्यानाद्युपायज्ञानादिप्रदर्शनार्थमेव [३]कर्मित्वश्रावकत्वाद्यवस्थाभेदमाश्रित्ये-त्यर्थः ।। २५.२६ ।।

( प्रकृति-पुरुष-ईश्वरस्वरूपनिरूपणम् )

**यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ।। २७ ।।**
**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ।। २८ ।।**
**समं पश्यन्ति सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ।। २९ ।।**

**भाष्यम् —** पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुक्तमाह -**यावत्** इत्यादिना ।। २७-२९ ।।

**प्रमेयदीपिका**

**'तत् क्षेत्रं यच्च'**(गी.१३.४) इति प्रतिज्ञातस्य सर्वस्योक्तत्वात् किमुत्तरेणेत्यत आह– **पुनश्चेति** ।। उक्तस्य पुनर्वचने को हेतुरित्यत उक्तम्[४]– **साम्यादीति** ।। ईश्वरधर्मस्यो-भयधर्मात्

---

तावत् 'यवाग्वा अग्निहोत्रं जुहोति' इति तृतीययाऽवगम्यते । नच होमानन्तरं क्रियमाणो यावगूपाकोऽर्थवान् । न वा यवागूद्रव्येण विना होमनिष्पत्तिरस्ति । तस्मात् पक्त्वा होमः कार्य इति सिद्धान्तः । तदाह सूत्रे अर्थाच्चेति । आनुपूर्व्यमित्यस्ति । न केवलं श्रुतिलक्षणम् । किन्त्वार्थात् क्रतुनिर्वृत्तिरूपप्रयोजनवशाच्च आनुपूर्व्यं गम्यत इत्यर्थः । फलन्तु, होमार्थं यवागूपाकः पूर्वमनुष्ठेय इति ।।

१. 'अग्निहोत्रं पचति यवागुं जुहोति' इति सो मातृकायां व्यत्यस्य पठितम् ।
२ 'ध्यानज्ञान'इति कचित् ।
३ 'कर्मश्रावकत्व' इति का । अत्र मातृकाद्वयेप्यस्पष्टता वर्तते ।
४. वे-ग्रं,भं-मा, वे । 'आह' -प्र ।

प्राधान्येन साम्यग्रहणम् । तत्र प्रकृतिपुरुषधर्मकथनं **'यादृक्'** इति प्रतिज्ञाते अन्तर्भवति । ईश्वरधर्मकथनं च **'यत्प्रभावः'** इति ।। २७-२९ ।।

**भावदीपः**

भाष्ये **साम्यादिधर्म** इत्यत्र साम्यपदेनेश्वरधर्मस्य, आदिपदेन कार्योपादानत्व[१]-प्रकृत्यपादानक-देहयोगित्वरूपयोः प्रकृतिपुरुषधर्मयोरुपादानं प्रकृतिपुरुषेश्वरस्वरूपमिति निर्देशव्युत्क्रमतया कुतः कृतम्? इत्यत आह– **ईश्वरेति** ।। अप्रतिज्ञातोक्तदोषं निराह– **तत्र प्रकृतीति । यत्प्रभाव इति** इत्यनन्तरं 'प्रतिज्ञातेऽन्तर्भवति' इत्यनुषङ्गः ।।२७,२९।।

( भगवानेव कर्ता न प्रकृतिः )

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ।। ३० ।।**

**भाष्यम् — आत्मानं चाकर्तारं [२]यः पश्यति स पश्यति** ।। ३० ।।

**प्रमेयदीपिका**

**'प्रकृत्यैव च'** इत्यत्र 'यः प्रकृत्यैव च कर्माणि क्रियमाणानि पश्यति स आत्मानमकर्तारं पश्यति' इति **कश्चित्**[३] अन्वयमाह । तदसत् । तथाशब्दवैयर्थ्यापत्तेरिति भावेनान्यथाऽऽह– **आत्मानं चेति** ।। **स पश्यति** परमेश्वरम् ।। ३० ।।

**भावदीपः**

**अन्यथाऽऽहेति** ।। तथाशब्दं समुच्चयार्थत्वेनाऽहेत्यर्थः ।। ३० ।।

( भगवान् सर्वाधारः )

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ।। ३१ ।।**

---

१. अत्र 'रूपयोः' इत्यन्तं तुळुमातृका गलिता ।
२. 'यः' 'सः' इति वे-ग्रं नास्ति । बे.यः इति नास्ति ।
३. शाङ्करभाष्ये -तृतीयभागे -पृ ९१।

**भाष्यम् — एकस्थम् एकस्मिन् विष्णौ स्थितम् । तत एव च विष्णोः विस्तारम् ।। ३१ ।।**

**प्रमेयदीपिका**

'एकस्थम्' इत्यस्य 'एकस्थात्मकम्'[1] इति व्याख्यानं सर्वप्रमाणविरुद्धमिति भावेनाऽह– **एकस्थमिति** ।। 'तत एव च विस्तारम्' इत्यस्य स्वस्मादेव विश्वस्य विस्तारम्'[2] इति व्याख्यानमसदिति भावेनाऽह– **तत एवेति** ।। **विस्तारम्** उत्पत्तिम् ।। ३१ ।।

**(भगवान् अव्यय इति निरूपणम् )**

**अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ।। ३२ ।।**

**भाष्यम् — नच व्ययादिस्तस्येत्याह– अनादित्वादिति ।। सादि हि प्रायो व्ययि गुणात्मकं च । 'न करोति' इत्यादेरर्थ उक्तः पुरस्तात् । न लौकिकः क्रियादिस्तस्य । अतो**

**'न प्रज्ञम्' (मां.उ.२.१.) इत्यादिवदिति ।। ३२ ।।**

**प्रमेयदीपिका**

'अव्ययः' इत्यनुवादेन लेपाभावमात्रं विधीयते'[3] इत्यन्यथाप्रतीतिनिरासार्थमाह– **नचेति** ।। एतेनाव्ययत्वमपि साध्यमप्राप्तत्वादित्युक्तं भवति । **तस्य** विष्णोः । अनेन 'जीवविशेषणमेतत् । तस्य प्राप्तिसद्भावेन प्रतिषेधोपपत्तेः' इति निरस्तम् । विष्णोरपि '**शरीरस्थोऽपि**' इति प्राप्तेरुक्तत्वात् । अनादिनिर्गुणत्वयोरव्ययत्वे हेतुत्वमुपपादयितुं व्याप्तिमाह– **सादीति** ।। यद् व्ययि तत् **प्रायः सादि गुणात्मकं** चेति योजना । प्रागभावे व्यभिचारवारणाय '**प्रायः**' इत्युक्तम् । साद्येव गुणात्मकमेवेत्यवधारणेन यथास्थितयोजना वा ।

'न करोति निर्गुणत्वात्' इतीश्वरस्य क्रियागुणाभावः प्रतीयत इत्यत आह– **न करोतीति** ।।

---

१. शाङ्करभाष्यानुवादः -तृतीयभागे -पृ ९२ ।
२. शाङ्करभाष्यानुवादः -तृतीयभागे -पृ ९२ ।
३. शाङ्करभाष्यानुवादः । -तृतीयभागे -पृ ९३ ।

पुरस्तादुक्तमेव स्मारयति –**नेति** ।। इत्यादिवत् 'अक्रियत्वादिकं व्याख्येयम्' इति शेषः । **यद्यप्यव्ययत्वमप्यत्र** साध्यम् । तथाऽपि तल्लोकतो ज्ञातुं शक्यत इति लेपाभावमात्रं 'यथा **सर्वगतम्**' इत्युपपाद्यते ।। ३२ ।।

**भावदीपः**

यथाश्रुतयोजनायां ध्वंसे मुक्तौ चानैकान्त्यापत्तेः व्यतिरेकव्याप्त्युक्त्यनापत्तेश्चेति भावः । **इत्यवधारणेनेति** ।। तदा हेत्वभावस्य (व्याप्य)व्यापकत्वम्, अव्ययत्वरूपसाध्याभावस्य व्याप्यत्वमुक्तं भवतीति भावः ।। व्यतिरेकव्याप्तौ व्यापकाभावस्य व्याप्यत्वात् [1]अनादि-व्ययत्वस्य चाव्यापकत्वात्, व्यापकाभावपूर्वं व्याप्तिं दर्शयति–**यद्यपीति**[2]।।**लोकत** इति ।। **'यदनादि तदव्ययम्'** इत्यस्य देशकालादौ ज्ञातुं शक्यत इति तदनुपपाद्य **लेपाभावमात्रं** गीतायामुपपाद्यत इत्यर्थः । एतच्च **अव्ययम्** इत्यनुवादेन' इत्यादिना प्रागुक्तान्यथाप्रतीते-र्बीजखण्डनायोक्तमिति ज्ञेयम्[3]।। ३२ ।।

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ।। ३३ ।।**
**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ।। ३४ ।।**
**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ।। ३५ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे त्रयोदशोऽध्यायः[4] ।। १३ ।।

---

१ 'अनादिव्ययत्वस्य व्ययत्वव्यापकत्वात्'इति मातृका । मातृका शिथिला । यथामति योजिता । महान्तः प्रमाणम् ।

२. अत्र मातृकाद्वयेपि वाक्यं पूर्वापरीकृतम् ।

३. **'ध्येयम्'**-पां ।

४ **(विकीर्णतयोक्तज्ञानसाधनस्य** जीवेश्वरस्वरूपस्य च भगवदावासस्थानरूपक्षेत्रज्ञस्यापि विस्तृततया वर्णनं) (क्षेत्रक्षेत्रज्ञयोगो नाम)

( अपव्याख्यानिराकरणपूर्वकमध्यायार्थोपसंहारः )

**भाष्यम् — भूतेभ्यः प्रकृतेश्च मोक्षसाधनम् अमानित्वादिकम् ।। ३५ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते

श्रीमद्भगवद्गीताभाष्ये त्रयोदशोऽध्यायः ।। १३ ।।

## प्रमेयदीपिका

'भूतप्रकृतिमोक्षम्' इत्यस्य 'भूतानां प्रकृतिरविद्या तस्याः मोक्षमवसानलक्षणम्'[१] इति व्याख्यानमसत् । भूतशब्दवैयर्थ्यात् । अविद्याध्वंसस्यानुक्तत्वेन[२] **'एवम्'** इति परामर्शायोगाच्चेति भावेनाऽह– **भूतेभ्य** इति ।। अनेन 'भूतप्रकृति' इति द्वन्द्वः । ततः पञ्चमी इति योगविभागात् पञ्चमीतत्पुरुष इत्युक्तं भवति । **भूतेभ्यः** पृथिव्यादिभ्यः ।।

ननु मोक्षो न प्रागुक्त इत्यत उक्तम्– **मोक्षसाधनमिति** ।। करणे घञ् इत्यर्थः । मोक्षसाधनमपि नोक्तमित्यत आह– **अमानित्वादिकमिति** ।। ज्ञानसाधनमपि परम्परया मोक्षसाधनमिति भावः । मोक्षशब्दस्य नित्यसापेक्षत्वान्नासमर्थत्वम् । यद्वा 'भूतेभ्यः प्रकृतेश्च' इति समासद्वयसूचनार्थं पृथगेव वाक्यम् । ततो मोक्षपदव्याख्यानं पृथगेवेति ।। ३५ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां त्रयोदशोऽध्यायः समाप्तः ।। १३ ।।**

## भावदीपः

ननु 'पञ्चमी भयेन'(**पा.सू.२.१.३७**) इति सूत्रे 'पञ्चम्यन्तं भयपदेन समस्यते । 'चोराद्भयं चोरभयम्'[३] इत्युक्तेरिह कथं समासः? इत्यत आह **इति योगविभागादिति ।। करणे घञ् इति ।।** 'मुच्लृ मोक्षणे' (**पा.धा.१४३०**) इति धातोरिति भावः । ननु तज्ज्ञानसाधनत्वेनोक्तमित्यत आह– **ज्ञानसाधनमपीति ।।**

१. शाङ्करभाष्ये -तृतीयभागे -पृ -९९ ।
२ 'प्रागनुक्तत्वेन' इति मातृकायामेव ।
३. अनुवादोयम् । 'पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते ,विभाषा, तत्पुरुषश्च समासो भवति । चोरभयम् ' इति काशिकावृत्तिः पृ -५५ ।

ननु मोक्षपदस्य 'कस्मात्' इत्याकाङ्क्षायां 'भूतेभ्यः प्रकृतेश्च' इत्युक्तपञ्चम्यन्तसापेक्षत्वेन 'सापेक्षमसमर्थम्' इत्युक्तेर्कथं साधनपदेन समासोक्तिर्भाष्ये? इत्यत आह– **नित्येति** ।। देवदत्तस्य [1]गुरुकुलमित्यत्र यथेति भावः ।।

भाष्यं न समासाभिप्रायम्, किन्तु पञ्चम्यन्तद्वयं '**भूतप्रकृति**' इत्यत्र द्वन्द्वसमासेन मोक्षपदं प्रत्येकमन्वेतीति प्रदर्शनमात्रपरम् । मोक्षसाधनपदं मोक्षपदार्थोक्तिपरम् । अतो [2]भिन्नवाक्यत्वान्न दोष इत्याह– **यद्वेति** ।। **समासद्वयेति** ।। द्वन्द्वः पूर्वं पश्चात् पञ्चमीतत्पुरुष इति सूचनार्थ् इत्यर्थः ।।

**।। इति श्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रयतिविरचिते**

**श्रीमद्गीताभाष्यटीकाभावदीपे त्रयोदशोऽध्यायः ।।**[3]

---

१. सो-नास्ति ।

२. 'भिन्नविषयत्वात्' पा ।

३. 'त्रयोदशसहस्रवर्षपर्यन्तं राज्यपालकश्रीरामकृष्णवेदव्यासार्पणमस्तु' इति मातृकान्त्यभागे ।।

# ।। अथ श्रीमद्भगवद्गीतायां चतुर्दशोऽध्यायः ।।

( चतुर्दशाध्यायार्थप्रतिपाद्यनिरूपणम् )

**भाष्यम् —** साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति ।।

**प्रमेयदीपिका**

( अध्यायपञ्चकप्रतिपाद्यनिरूपणम् )

उत्तरेषां पञ्चानामध्यायानां प्रतिपाद्यमाह– **साधनमिति** ।। **'योगे त्विमां शृणु'**(२.३९) इति प्रतिज्ञाय, आषष्ठपरिसमाप्तेः कामवर्जनादीतिकर्तव्यतासहितं कर्मध्यानलक्षणं ज्ञान-साधनमुक्तम् । तत्रेतिकर्तव्यतांशम् **उत्तरैरध्यायैः** प्रपञ्चयतीत्यर्थः । **'मम योनिर्महद्ब्रह्म'** (१४.३), **'न तद्भासयते सूर्यः'** (१५.६) इत्यादिनेश्वरमाहात्म्यस्यापि वचनात् कथमेतत्? इत्यत उक्तम्– **प्राधान्येनेति** ।। प्राचुर्यापेक्षया सङ्ग्राहकमेतदित्यर्थः ।।

अवान्तरप्रतिपाद्यभेदादध्यायभेदः । तत्र **'यावत्सञ्जायते किञ्चित्'** (१३.२७) इत्युक्तविवरणपूर्वकं **'कारणं गुणसङ्गोऽस्य'**(१३.२२) इत्युक्तं गुणसम्बन्धं प्रपञ्च्य तदत्यय-साधनम् अनेनाध्यायेनोच्यते ।।

**भावदीपः**

**पञ्चानामिति** ।। तत्तदध्यायावान्तरप्रतिपाद्यं तत्र तत्र दर्शयिष्यतीति न सर्वस्यैका-ध्यायत्व(ता)प्रसक्तिरित्यनुपदमेव व्यक्तम् । **प्रतिज्ञायेति** ।। द्वितीये **'योगे =ज्ञानोपाये बुद्धिशब्दिताम् इमां वक्ष्यमाणां वाचं शृणु** (२.३९) इति प्रतिज्ञातेत्यर्थः ।। **आषष्ठेति** ।। 'आकडारात्'[१] (**पा.सू.१.४.१**)इतिवदयं निर्देशः । साधनशब्दोऽत्र भाष्ये तदितिकर्तव्यतापर इति भावेनाऽह– **तत्रेतिकर्तव्यतांशमिति** ।। तस्यैवोत्तराध्यायेषु प्रतीतेरिति भावः । **एतदिति** ।। प्रतिपाद्योक्तिपरं भाष्यमित्यर्थः । तात्पर्यदिशाऽवान्तरप्रतिपाद्यमस्य दर्शयति– **तत्रेति** ।। **इत्युक्तेति** ।। जायमानस्य यत्प्रकृतिविकारत्वमुक्तं पूर्वमित्यर्थः ।।

---

१. **'आकडारादेका सञ्ज्ञा' इति सूत्रपाठः ।**

( क्षेत्रक्षेत्रज्ञसंयोगहेतुकप्राणिजननविवरणम् )

**श्रीभगवानुवाच -**

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**
**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥[१]**
**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**
**सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।**
**तासां ब्रह्म महद् योनिरहं बीजप्रदः पिता ॥ ४ ॥**

( महद्ब्रह्मशब्दवाच्या प्रकृतिः )

**भाष्यम् — महद्ब्रह्म** प्रकृतिः । सा च श्रीभूर्दुर्गेति भिन्ना । उमासरस्वत्याद्यास्तु तदंशयुता अन्यजीवाः[२] । तथा च काषायणश्रुतिः–

'श्रीर्भूर्दुर्गा महती तु माया सा लोकसूतिर्जगतो बन्धिका च ।

---

१ (अ)**तत्त्वोद्योतटीकायाम्** (द्वि.भा.पृ-२९७) 'एवं प्रत्यक्षानुमानाभ्यां मुक्तेश्वरभेदं प्रसाध्य, आगमेनापि साधयति -'इदं ..व्यथन्ति च'।। अत्र 'साधर्म्यमागताः' इति भेदोक्तिः । नह्यभेदे समानधर्मत्वमस्ति । नचैते न मुक्ता इति वाच्यम् । सर्गप्रलयाभावलिङ्गात् ।।

(आ)**वि.त.नि.टीकायाम्**- (पृ-६८२)'भगवद्वचनं च मोक्षानन्तरमपि भेदं वक्ति' इत्युक्तम् ।।

(इ) **न्यायसुधायाम्**-(२.३.२८)'इदं ज्ञानम्' इति भगवद्वाक्येऽपि 'मम साधर्म्यमागताः' इति भेदो ज्ञायते । सर्गप्रलययोरप्युपजननव्यथाऽभावोक्त्या परममुक्तित्वं च ।।

(ई) **न्यायामृते** भेदश्रुतेर्व्यावहारिकभेदपरत्वभङ्गे -'किञ्चायं भेदः न व्यावहारिकः । मुक्तावपि भेदस्य स्मृतेः, श्रुतेश्च । नच सा मुक्तिरवान्तरा । 'इदं ज्ञानं...व्यथन्ति च ' इत्यादिस्मृतौ सर्गाद्यभावोक्तेः '।।

(उ) **न्यायामृते** एकजीवाज्ञानकल्पितत्वभङ्गे - 'नहि प्रत्यक्षेण....'इदं..मागताः' इत्यादिस्मृत्या च सिद्धे जीवभेदे बाधकमस्ति ।।'

२. 'तदंशयुतान्यजीवाः' इति प्रभ-टीकाननुगुणः ।

**उमावागाद्या अन्यजीवास्तदंशा स्तदात्मना सर्ववेदेषु गीताः' इति ।।**

**मम योनिः इति गर्भधानार्था योनिः । नतु माता, वाक्यशेषात् ।**

## प्रमेयदीपिका

### ( महद् ब्रह्मशब्दस्यापव्याख्याननिराकरणम् )

अत्र 'महद् ब्रह्म' इति जडाविद्योच्यते'[१] इति प्रतीतिनिरासार्थमाह– **महदिति** ।। **प्रकृतिः** महालक्ष्मीः । ननु **सत्त्वं रजस्तमः** इति जडा प्रकृतिः वक्ष्यते । तत्सन्निधाना-दत्रापि सैव युक्तेति चेन्न । तत्रापि चेतनप्रकृत्यभिधानात् । कथमस्याः सत्त्वादिभेदभिन्नत्वम् ? इत्यत आह– **सा चेति** ।। जडप्रकृतेरभिमानिनी तत्कार्यसत्त्वादिगुणाभिमानिनी एतद्रूपत्रयवतीत्यर्थः । ननु भगवती 'माहेश्वरी ब्राह्मी कौमारी माहेन्द्री श्री भू दुर्गा' इति सप्तधा भिन्ना आगमेषूच्यते । तत्कथं त्रिधा भिन्नोच्यते ? इत्यत आह– **उमेति** ।। **आद्याः** चतस्रो भगवत्या अन्याः । कुतः ? जीवाः । कथं तद्रूपत्वोक्तिः ? **तदंशयुताः** तत्सन्निधानोपेताः । कुत एतत् ? इत्यत आह– **तथा चेति** ।।

### ('मम योनिः' इत्यस्यापव्याख्याननिराकरणम् )

'मम योनिः' इत्येतत् **परे**[२] व्याचक्षते 'मम स्वरूपभूता[३] योनिः कारणं विश्वस्य । प्रतीत एवान्वये 'मम माता' इत्यापत्तेः' इति । तन्निरासार्थमाह– **ममेति** ।। भार्येत्यर्थः। 'मम' इत्यनुवादेनान्यथाप्रतीतावन्वयबाधः स्यादिति सूचयति । प्रतीतान्वयाङ्गीकारे **'माता'** इत्यपि प्रतीयेत । तत्र कथं भार्येति निश्चय इत्यत आह– **नत्विति** ।। 'इति प्रतीतिः प्रसज्यते' इति शेषः । कुतो न ? इत्यत आह– **वाक्येति** ।। **'तस्मिन् गर्भं ददाम्यहम्'** इति **वाक्यशेषात्** भार्यार्थतानिश्चयात् ।।

## भावदीपः

**भगवती** इत्यनुवादः **माहेश्वरीत्यादि** प्रभेदोक्तिः । **आद्या** इति भाष्यैकदेशानुवादः ।

---

१. शाङ्कररामानुजयोर्नास्ति ।

२. शाङ्करभाष्ये -तृतीयभागे -पृ -११० ।

३. शाङ्करभाष्ये यद्यपि 'स्वभूता' इति, तथाऽपि 'स्वरूपभूता' इति टीकायां तद्विवरणमिति ज्ञेयम् ।

तदवधिमाह– **चतस्र** इति ।। 'माहेन्द्री' इत्यन्तमित्यर्थः ।। **'ममेत्यनुवादेनेति** ।। इति **सूचयति** इत्यन्वयः ।। **अन्यथेति** ।। परोक्तयोजनापक्ष इत्यर्थः ।।

( लक्ष्म्या दुःखादिकं नास्ति )

**भाष्यम् —** तथा हि सामवेदे शार्कराक्षश्रुतौ–

'विष्णुर्योनिः गर्भसन्धारणार्था
महामाया सर्वदुःखैर्विहीना ।
तथाप्यात्मानं दुःखिवन्मोहनार्थं
प्रकाशयन्ती[1] सह विष्णुना सा'इति ।

अतः सीतादुःखादिकं मृषा प्रदर्शनमेव । तथा कूर्मपुराणे – न चेयं भूः । तथाच सौकरायणश्रुतिः ।

'अन्या भूः[2] भूरियं तस्य च्छाया
भूताऽवमा सा हि भूतैकयोनिः' इति ।
'अवाप स्वेच्छया दास्यं जगतां प्रपितामही'

इति अनभिम्लातश्रुतिः[3] ।

मत्स्यपुराणोक्तमपि स्वेच्छयैव । महद्ब्रह्मशब्दवाच्याऽपि प्रकृतिरेव ।

'महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः'

इति तत्रैव ।। ३-४ ।।

**प्रमेयदीपिका**

श्रुतिबलाच्चेत्याह– **तथा हीति** ।। **प्रकाशयन्ती** प्रवर्तते । अनयैव श्रुत्याऽन्यदपि लब्धमिति प्रसङ्गादाह– **अत** इति ।। **मृषा** अयथार्थं प्रदर्शनं यस्य तत्तथा ।। इतश्चैवमेवेत्याह– **तथेति**।। तत्र ह्येवमुक्तम्–

---

१. 'प्रदर्शयन्ती' इति कृ.टिप्पणीपाठः ।
२. 'अन्या भूमिः' इति ह-पाठः ।
३. मातृकायां 'श्रुतिः' इति । 'श्रुतेः' इति प्रभपाठः टीकाननुगुणः ।

**'दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः ।**

**रामायादर्शयत् सीतां पावकोऽसौ सुरप्रियः ।।'[१]** इत्यादि ।।

ननु महालक्ष्मीः 'श्रीः भूः दुर्गा' इति भिन्ना' इत्युक्तम् । भुवश्च

**'गौर्भूत्वाऽश्रुमुखी खिन्ना' (भाग-१०.१.१८)**

इति दुःखं प्रतीयते । तत्कथमेतत् ? इत्यत आह– **न चेति** ।। **इयं** भूताभिमानिनी प्रसिद्धा **भूः** भगवत्या रूपं **न** भवति । किन्त्वियमन्यैव । कुतः? इत्यत आह– **तथा चेति** ।। महालक्ष्मीरूपं **भूः अन्या** । **इयं** प्रसिद्धा **तस्य** तस्याः **छाया** प्रतिमा ।

ननु रावणहरणादिकं भवतु मायासीतायाः । वाल्मीकिदास्यं तावन्मत्स्यपुराणे साक्षात् सीताया एवोक्तम् । **दास्ये** च दुःखमवर्जनीयमित्याशङ्कां प्रमाणपूर्वकमपाकरोति – **अवापेति**।। **श्रुतिः** 'अस्ति यतः अतः' इति शेषः ।।

**'महद्ब्रह्म प्रकृतिः'** इत्युक्तम् । तत्र प्रमाणं वक्तुंव्यवहितत्वात् पुनः प्रतिजानीते– **महदिति** ।। 'महत्' 'ब्रह्म' इति भिन्ने पदे । ततः परम् 'इति'शब्दः अध्याहार्यः । कुतः ? इत्यत आह– **महतीति** ।। **तत्रैव** मत्स्यपुराणे । अर्थक्रमेण 'मम योनिः महद् ब्रह्म' इत्यत्र व्युत्क्रमेण व्याख्यानम् । मत्स्यपुराणोदाहरणप्रसङ्गादत्रोपपादनमिति ।। ३ ।। ४ ।।

### भावदीपः

**'प्रकाशयन्ती'** इत्यनूद्य तस्याध्याहारेण क्रियान्वयमाह– **प्रवर्तत इति** ।। ननु गीतापाठक्रमानुरोधेन व्याख्याने कार्ये महद्ब्रह्मपदार्थं पूर्वमुक्त्वा **'मम योनिः'** इति योनिपदव्याख्यानं भाष्ये पूर्वं कुतः कृतमित्यत आह– **अर्थक्रमेणेति** ।। 'ब्रह्म' इत्यस्य विशेष्यत्वात्, योनिपदस्य[२] विशेषणत्वाद्वा, ब्रह्मणः प्राधान्यरूपार्थक्रमेणेत्यर्थः । **'महद्ब्रह्म'** इति शब्दार्थत्वोपपादनं तत्रैवाकृत्वाऽत्र कुतः कृतम्? इत्यत आह– **मत्स्येति** ।। ३-४ ।।

### ( गुणत्रयकृतबन्धप्रकारनिरूपणम् )

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।[३]**

---

१. अत्र पादव्यत्यासः पद्मनाभतीर्थीये ।

२. 'योनिः' इत्यस्य-पां ।

३. (अ) श्लोकमिमं प्रधानलक्षणप्रतिपादकत्वेनोदाहृतमनुव्याख्याने१.४.६ अधिकरणे । तथाहि-

**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

**भाष्यम्- बन्धप्रकारं दर्शयति साधनानुष्ठानाय– सत्त्वमित्यादिना ॥ ५, ६ ॥**

### प्रमेयदीपिका

ननु प्रतिज्ञातं ज्ञानं श्लोकद्वयेनोक्तम् । तत्किमुत्तरेण ग्रन्थेनाध्यायासङ्गतमुच्यते ? इत्यत आह– **बन्धेति** ॥ यो हि बद्धोऽस्मीति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वा अनुतिष्ठति । अतो **बन्धोच्छेदसाधनानुष्ठानाय** तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृत**बन्धप्रकारम्** आदौ तावद् **दर्शयति** इति नासङ्गतिरित्यर्थः ॥ ५ ॥

### भावदीपः

**प्रतिज्ञातं ज्ञानमिति** ॥ ज्ञायत इति ज्ञानमिति कर्मव्युत्पत्त्या प्रकृतेः सर्वकारणत्वरूपं प्रकृतौ भगवतः बीजाधायकत्वरूपं ज्ञातव्यमित्यर्थः । **विजिज्ञास्य** विचार्य ॥ ५ ॥

**तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**
**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

**भाष्यम् — तृष्णासङ्गयोः समुद्भवं तयोः कारणम् ॥ ७ ॥**

### प्रमेयदीपिका

अत्र रजः 'तृष्णासङ्गसमुद्भवम्' इत्यस्य तृष्णासङ्गाभ्यां समुद्भवो यस्य'[1] इत्यपव्याख्यानमिति भावेन विग्रहप्रदर्शनपूर्वकमर्थमाह– **तृष्णेति** ॥ समुद्भवति अस्मादिति **समुद्भवं**

---

(सुधावाक्यानि) 'त्रिगुणत्वादिलक्षणोपेतप्रधानप्रतिपादकमितिहासवाक्यं पठति -सत्वमिति । 'सत्त्वं रज...मव्ययम् । इत्यादिवाक्यरूपेण ..(श्लो-४७)'। सुधा-'आदिपदेन भूमिरापो अनलो वायुः इत्यादेः ग्रहणम् । इत्यादिवाक्यप्रतिपाद्येन त्रिगुणत्वादिना रूपेणोपोतस्य प्रधानस्य सङ्ग्रहादिति सम्बन्धः ॥'

(आ)'सत्त्वं रजस्तम इति प्रकृतेः स्युर्गुणास्त्रयः । तद्बद्धत्वेन जीवानां त्रिविधत्वं प्रकीर्तितम् '॥

वराह.पु.चा.मा.२५-१.४ ॥

१. शाङ्करभाष्ये रामानुजीये च नास्तीदं व्याख्यानम् । 'तृष्णासङ्गयोः समद्भवः यस्मात्' इति वर्तते ।

कारणम् । अन्यथा **प्रकृतिसम्भवाः** (१४.५) इत्युक्तविरोधात् । समुद्भवशब्देनाविर्भावो विवक्षित इति चेत् । तथाऽपि गुणकार्यकथनप्रकरणविरोधात् ।। ७ ।।

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ।। ८ ।।**[१]

**भाष्यम् — अज्ञानं जायते यतस्तत् अज्ञानजम् ।**
**'प्रमादमोहौ तमसः'**(१४.१७)
**इति वाक्यशेषात् ।। ८ ।।**

**प्रमेयदीपिका**

**'तमस्त्वज्ञानजम्'** इत्यस्य 'अज्ञानाज्जातम्'[२] इत्यपव्याख्यां प्रत्याख्यातुमाह– **अज्ञानमिति** ।। एतच्च 'अन्येष्वपि दृश्यते'(**पा.सू.३.२.१०१**) इति दृशिग्रहणसामर्थ्या-ल्लभ्यते । कुतः प्रतीत एवार्थो न? इत्यत आह– **प्रमादेति** ।। वाक्यशेषेऽज्ञानस्य तमःकार्यत्ववचनादित्यर्थः ।। ८ ।।

**भावदीपः**

**एतच्चेति** ।। **'अज्ञानजनकम्'** इत्येतच्च 'सप्तम्यां जनेर्डः' (**पा.सू.३.२.९७**) इत्यत्र 'अन्येष्वपि दृश्यते' इत्युक्तेर्दृशिग्रहणसामर्थ्यात् करणे प्रथमान्ते उपपदेऽपि जनेर्डप्रत्यये लभ्यत इत्यर्थः ।। ८ ।।

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ।। ९ ।।**

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**

---

१. 'तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनावृतम् । सत्यं ज्ञानं तपो मौनं धृतिः शौचं शमः क्षमा ।।७.६२।। इत्यादयः सत्वनिष्ठे गुणाः कल्याणकारिणः । अहङ्कारस्त्रिधा दर्पः क्रोधो दम्भ इतीरितः ।।७.६३ ।। ग-ुणा रजोगुणस्यैते, तामसस्य तु कथ्यते । पैशुन्यं परनिन्दा च निद्रालस्यं नृशंसता ।।७.६४ ।। इत्यादयस्तमोधीने गुणाः प्रोक्ताश्चतुर्मुख '।।७-६५ ।। पाद्मसंहिता ।।

२. शाङ्करभाष्ये -पृ११९ तृतीयभागे ।

रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।

ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वमित्युत ॥ ११ ॥[1]

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।

रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।

तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

( गुणवृद्ध्यवस्थायां मृतानां गतिनिरूपणम् )

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।[2]

तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।

तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

( सात्विकादिकर्मफलनिरूपणम् )

कर्मणः सुकृतस्याऽहुः सात्त्विकं निर्मलं फलम् ।

रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

**भाष्यम् —** रजसस्तु फलं दुःखमिति ॥ अल्पसुखं दुःखम् ।

१. 'सत्वे प्रवृद्धे विज्ञानमुत्कृष्टं जायतेऽधिकम् ।
तेन प्राप्नोति परमं स्थानं प्रकृतिदुर्लभम्' ॥ ७.६६ ॥ पाद्मसंहिता ।

२ 'यत्प्राप्य न निवर्तन्ते संसारे दुःखसम्भवे ।
देहं त्यजन्तः सत्वस्थाः लोकान् यान्ति सनातनान् ॥ ७.६७ ॥
रजसस्थस्य प्रलीनस्य जन्ममात्रं महाकुले । प्रलये तमसिस्थस्य पुरुषस्य चतुर्मुख ॥७.६८ ॥
मूढयोनिषु जन्म स्यात् निकृष्टासु पुनः पुनः । त्यजतोऽन्ते स्मृतिर्येषु देहसम्बन्धमात्मनः ।
भावेषु तं तमाप्नोति पुरुषो भावनाशनात् ॥७.६९ ॥ पुंसामेवं बहुविधाः गतयः समुदाहृताः '॥
७.७ पाद्मसंहिता ।

तथा हि शार्कराक्ष्यशाखायाम् -

'रजसो ह्येव जायते मात्रया सुखं दुःखं
तस्मात्तान् सुखिनो दुःखिन इत्याचक्षते'

इति । अन्यथा दुःखस्यातिकष्टत्वात् तमोऽधिकत्वं रजसो न स्यात् ।। १६ ।।

**प्रमेयदीपिका**

'दुःखशब्दः केवलदुःखवाची'[१] इत्यन्यथाप्रतीतिनिरासायाह– **रजस** इति ।। 'दुःखशब्दे-नोच्यते' इतिशेषः । तत्कथम्? इत्यत उक्तम्– **अल्पेति** ।। अल्पत्वात् सुखस्याविवक्षेति भावः। [२]कुतः? इत्यत आह– **तथाहीति** ।। **'रजसः'** इति पञ्चमी । **मात्रया** इति सुखविशेषणम् । स्तोकात्मकं सुखं दुःखं चेत्यर्थः । **तान्** राजसकर्मिणः । केवलदुःखार्थाङ्गीकारे बाधकं चाह– **अन्यथेति** ।। **अतिकष्टत्वात्** अज्ञानादपि कष्टत्वात् । तत्फलकस्य **रजसः** । तथाच **'मध्ये तिष्ठन्ति राजसाः**,**'अधो गच्छन्ति तामसाः'**(१४.१८) इत्याद्ययुक्तं स्यादिति भावः।।१६।।

**भावदीपः**

**इति शेष इति** ।। **'रजसस्तु फलं दुःखम्'** इति दुःखशब्देनाल्पसुखं दुःखमुच्यत इति योजना ध्येयेति भावः ।। **अज्ञानादपीति** ।। तमःकार्यादपि । तमःकार्यादज्ञानादित्यर्थः[३] । 'रजसः' इत्यस्य विशेषणमाह– **तत्फलकस्य रजसः इति** ।। दुःखफलकस्येत्यर्थः । को दोषः? इत्यत आह– **तथा चेति** ।। १६ ।।

**सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ।। १७ ।।**
**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ।। १८ ।।**[४]

---

१. शाङ्करभाष्ये ३-भाग,-पृ १२७. ।
२. 'तत्कुतः' इति मातृकायामेव ।
३. 'तमःकार्यादज्ञानादपीत्यर्थः '-पां ।
४. 'सत्वस्थस्योर्ध्वगमनं स्थितिर्मध्ये रजोऽधिके ।
अधोगतिस्तामसानां त्रिविधानां त्रिधा गतिः' ।। ७.६१ ।। पाद्मसंहिता ।।

( गुणानां स्वातन्त्र्यनिराकरणम् )

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥**

**भाष्यम् —** परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यति । अन्यथा

'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्'[१]

(आथर्वण.३.१.३) इति श्रुतिविरोधः ।

'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः'[२]

(म.भा.१२.२२७.८४ ) इति मोक्षधर्मे ॥ १९ ॥

### प्रमेयदीपिका

**'नान्यं गुणेभ्यः कर्तारम्'** इति स्वतन्त्रकतृत्वं गुणानामेव नान्यस्येत्युच्यते'[३] इत्यपव्याख्याननिरासार्थमाह– **परिणामीति** ॥ कुत एतत्? इत्यत आह– **अन्यथेति** ॥ गुणेभ्यो अन्यस्य कर्तृत्वाभावे । **मोक्षधर्मे** 'परमेश्वरस्य कर्तृत्वमुक्तं तद्विरोधश्च'इति वाक्यशेषः॥१९॥

**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥**

(गुणातीतलक्षण-आचारविषयकप्रश्नोत्तरनिरूपणम् )

**अर्जुन उवाच**

**कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।**

---

१. (अ) तत्त्वोद्योते (द्वि.भा.पृ-२९७)इयं श्रुतिः मुक्तेश्वरभेदपरतया व्याख्याता । तथाहि -'पश्यतीति पश्यो जीवः । अत्रापि साम्यमुपैति इति भेद उच्यते । संसारेऽपि साम्यसद्भावात् परममिति विशेषणम् । अभिव्यक्तमिति यावत् । अत्र पुण्यपापे विधूय निरञ्जन इति मुक्तलिङ्गम् ॥

२. (अ) महाभारते बलिवचनमिदम् ।
(आ)भागवततात्पर्ये उदाहृतम् ।

३. शाङ्करभाष्ये तृतीयो भागः- पृ -१३०।

**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥**

**श्रीभगवानुवाच**

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥**

भाष्यम् — प्रायो न द्वेष्टि न काङ्क्षति । तथाहि सामवेदे भाल्लवेयशाखायाम् -

'रजस्तमस्सत्त्वगुणान् प्रवृत्तान् प्रायो न च द्वेष्टि न चापि काङ्क्षति[1] ।
तथाऽपि सूक्ष्मं सत्त्वगुणं च काङ्क्षेद् यदि प्रविष्टं सुतमश्च जह्यात्' इति ॥

'न हि देवा ऋषयश्च सत्त्वस्था नृपसत्तम ।
हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिका मताः[2] ।
कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम् '

(म.भा. १२.३४८.७८,७९) इति मोक्षधर्मे ।

'सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः'

(म.भा. १२.३४८.६९) इति च ॥ २२ ॥

## प्रमेयदीपिका

### ( स्थूलसूक्ष्मभेदेन गुणाः द्विविधाः)

**प्रकाशं च प्रवृत्तिं च** इत्यनेन गुणातीतस्य सर्वथा सत्त्वादिगुणकार्येषु प्रकाशादिषु द्वेषा-काङ्क्षे न स्त इत्युच्यते'[3] इत्यन्यथाप्रतीतिनिरासार्थमाह– प्राय इति ॥ इदमुक्तं भवति । सत्त्वादयो गुणाः द्विविधाः स्थूलाः सूक्ष्माश्च । तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायन्ते । सूक्ष्मेभ्यस्तु[4] परमेश्वरादिविषयाः । तत्राद्येषु गुणातीतस्य द्वेषाकाङ्क्षे प्रायो न

१. गुज, वे-ग्रं । 'काङ्क्षति' इति प्रभ-पाठः पद्मनाभतीर्थीयाननुगुणः । 'शुद्धसत्वं नाकाङ्क्षति' इति पद्मनाभतीर्थीयम् ।

२. अयं पद्मनाभतीर्थीयानुगुणः । 'स्मृताः' इति वे,कृ.टिप्पणानुगुणपाठः ।

३. शाङ्करभाष्ये ३ -भाग, -पृ-१३४.

४. 'सूक्ष्मेभ्यश्च' इति प्रच ।

स्तः । न तु सर्वथा प्रारब्धवशात् कदाचित् सम्भवात् । द्वितीयेषु त्वाकाङ्क्षादिकं विद्यत एवेति । कुत एतत्? इत्यत आह– **तथा हीति** ।। यद्यपि **'न द्वेष्टि'** इत्यादिकमुक्तम्[१] । तथाऽपि यदि **सुतमः** सूक्ष्मं तमः **दैववशात्** तं प्रविष्टं स्यात् । तदाऽसौ तत् **जह्यात्** द्विष्यात्।।

गुणातीतानां च सूक्ष्मसत्त्वसद्भावे भारतवाक्यं च पठति– **न हीति** ।। यदि **देवा ऋषयश्च सूक्ष्मेण सत्त्वेन हीनाः स्युः** तदा 'सत्त्वस्थाः' इति नोच्येरन् । किन्तु **ततः** तदा **वैकारिकाः मताः** प्रसज्येरन् । ततः किं **कथं वैकारिको गच्छेत् पुरुषोत्तमम्**? तेषां मोक्षो न स्यादिति यावत् । अस्ति च तेषाम् मोक्षः । अतः सूक्ष्मसत्त्ववन्त एव त इत्यर्थः । **सात्त्विकः** सूक्ष्मसत्त्ववान् ।

**'स सूक्ष्मसत्त्वसंयुक्तः संयुक्तस्त्रिभिरक्षरैः ।**

**पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकः'**[२] (म.भा)

इति सूक्ष्मसत्त्वप्रकरणात् । **मोक्षार्थनिश्चितः** मोक्षलक्षणे पुरुषार्थे निश्चितः ।। २२ ।।

**भावदीपः**

वक्ष्यमाणश्रुत्यनुरोधादाह–- **इदमुक्तं भवतीति** ।। 'सूक्ष्मसत्ववान्' इत्यर्थे ज्ञापकमाह **– स सूक्ष्मेति** ।। **त्रिभिरक्षरैः** ।। प्रणवाक्षरैः ।। २२ ।।

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ।। २३ ।।**
**समदुःखसुख स्वस्थः समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ।। २४ ।।**
**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ।। २५ ।।**

**भाष्यम् —** तुल्यत्वार्थ उक्तः पुरस्तात् ।। २३ ।। २४ ।। २५ ।।

---

१. 'इत्याद्युक्तम्' इति मातृकायामेव ।

२. 'पुरुषोव्यक्तं च महानहङ्कारो मनस्तथा । शव्दाद्या इन्द्रियाद्याश्च भूतेताः पञ्चविंशतिः' इति त.सा.सं.

### प्रमेयदीपिका

**'समदुःखसुखः'**(१४.२४)इत्यादिना सर्वथा सुखादौ तुल्यत्वबुद्धिरुच्यते'[१] इत्यन्यथा-प्रतीतिनिरासार्थमाह - **तुल्यत्वेति** ।। तुल्यत्ववाचिनः शब्दस्यार्थ इत्यर्थः । **'प्रायः सर्वान्'** (२.५५) इत्युक्त[२]रीत्येति भावः ।। २३-२४- २५ ।।

### भावदीपः

**'प्रायः सर्वान्'** इत्युक्तरीत्येति । द्वितीये **'प्रजहाति यदा कामान्'**(२.५५) इत्यत्र भाष्यो-क्तरीत्येत्यर्थः । तत्र तुल्यशब्दाभावेऽपि तुल्यत्ववाचिनः **'प्रजहाति कामान्'** इति **'दुःखेष्वनु-द्विग्नमनाः, सुखेषु विगतस्पृहः'** इत्यादिशब्दस्य सत्वात् 'तुल्यत्ववाचिनः शब्दस्यार्थः' इत्युक्तम् । अत एव भाष्येऽपि **'तुल्यत्वार्थः'** इत्येवोक्तम् ।। २५ ।।

### (गुणात्ययोपायकथनम् )

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ।। २६ ।।**

**भाष्यम् —** ब्रह्मवत् प्रकृतिवद् भगवत्प्रियत्वं ब्रह्मभूयम् । न तु तावत्प्रियत्वम् । किन्तु प्रियत्वमात्रम् ।

'बद्धो वाऽपि तु मुक्तो वा न रमावत् प्रियो हरेः'[३]

इति पाद्मे ।

भूयाय भावाय[४] ।। २६ ।।

### प्रमेयदीपिका

'ब्रह्मभूयाय' इत्यस्य 'परब्रह्मत्वाय' इति व्याख्यानं[५] प्रमाणविरुद्धमिति भावेनान्यथा

---

१. शाङ्करभाष्ये, तृतीयो भागः, पृ -१३७ रामानुजीये ?
२. भावदीपानुगुणः ।'इत्याद्युक्त' इति वे, श्रीनि.टिप्पणानुगुणः ।
३. 'बद्धा वापि तु(विमुक्ता) मुक्ता न रमावत् प्रिया हरेः' गुज,वे-ग्रं ।
४. 'भवाय' इति बे, मातृका च ।
५. रामानुजीये, ३ भाग. पृ १३९।

व्याचष्टे– **ब्रह्मवदिति** ।। नात्र ब्रह्मशब्दं परं ब्रह्म । किन्तु **मम योनिर्महद्ब्रह्म**(१४.३) इति प्रकृता प्रकृतिरेव । **ब्रह्मणो हि प्रतिष्ठाऽहम्** (१४.२७) इत्युत्तरवाक्यात् । तद्भूयं च न तादात्म्यम्, किन्तु तद्वद्भगवत्प्रियत्वमेव । अन्यस्यान्यभावायोगादिति भावः ।।

तत्किं यावत् प्रकृतेः भगवत्प्रियत्वं तावद्गुणातीतस्य? इत्यतः सप्रमाणमाह– **न त्विति** ।। तत्किं भूयशब्दः प्रियत्ववाची ? येनैवं व्याख्यायत इत्यत आह– **भूयायेति** ।। 'भुवो भावे'(**पा.सू.३.१.१०७**)इति वचनाद् भावो भवनं भूयशब्दार्थः । ब्रह्मवद् भावः **ब्रह्मभूयम्** । 'वदः सुपि' (**पा.सू.३.१.१०६**) इति सुबन्तमात्रस्योपपदस्यानुवृत्तेः । वत्यर्थस्य च वृत्तान्तर्भावात् । मयूरव्यंसकादिवत् । वत्यर्थश्च प्रियत्वमिति[1] तदुक्तमिति भावः ।। २६ ।।

## भावदीपः

**ब्रह्मशब्दमिति** ।। 'ब्रह्म' इति शब्दो यस्य तद् ब्रह्मशब्दम्, ब्रह्मशब्दवाच्यमित्यर्थः । **इति वचनादिति** ।। तृतीयस्याद्यपादे 'वदः सुपि क्यप् च'(**पा.सू.३.१.१०६**) इति सूत्रात् क्यप्प्रत्ययमनुवर्त्य 'भुवो भावे'(**पा.सू.३.१.१०७**) इति सूत्रे 'सुबन्त उपपदे भूधातोर्भवनरूपेऽर्थे क्यप्प्रत्ययो भवति'[2] इत्युक्तत्वात्, कित्वेन गुणाभावे 'भूयः' इति रूपसिद्धेरिति भावः ।।

ननु तत्र 'वदः सुपि' इत्यनुवृत्तेर्वत्यन्तस्य च सुबन्तत्वाभावात् कथमत्र क्यप्प्रत्यय इत्यत आह– **सुबन्तेति** ।। [3]मात्रपदेन **तद्ब्रह्म** इत्यादाविव भावकर्मरूपार्थविशेषो व्यावर्त्यते । नात्र वतिप्रत्ययोऽस्ति । किन्तु वत्यर्थ एव । स च समासेऽन्तर्भूत एव प्रतीयते । अतः सुबन्तोपपदत्वम् अस्त्येवात्रेति भावेनाऽह– **वत्यर्थस्येति** ।। **वृत्ताविति** ।। समास इत्यर्थः । मयूरवद् व्यंसको यस्य स मयूरव्यंसक इति समासो यथा 'मयूरव्यंसकादयश्च'(**पा.सू.२.१.७२**) इति सूत्रोक्तः तथात्रापि समास इत्यर्थः ।।

**तदुक्तमिति** ।। प्रकृतिवद् भगवत्प्रियत्वं ब्रह्मभूय[4]पदेनोक्तमित्यर्थः ।। २६ ।।

---

१. 'मित्युक्तमित्यर्थः' इति भं-मातृकायामेव ।
२. 'भवतेर्धातोः सुबन्त उपपदे अनुपसर्गे भावे क्यप्प्रत्ययो भवति' इति काशिका, २ भाग.५०३-पृ।
३. इदं सो-मातृकायामेव ।
४. 'वचनेनेक्तम्' पां ।

**ब्रह्मणो हि [1]प्रतिष्ठाऽहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥**

**ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे**
**श्रीकृष्णार्जुनसंवादे [2]गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

**(ब्रह्मशब्दवाच्या लक्ष्मी इति निरूपणपूर्वकमध्यायार्थोपसंहारः)**

**भाष्यम् — ब्रह्मणः** मायायाः ॥ २७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भगवद्गीताभाष्ये चतुर्दशोऽध्यायः ॥

**प्रमेयदीपिका**

**'ब्रह्मणो हि'** इत्येतत् 'परब्रह्मणो हि' इति व्याचक्षते[3] । तदसत् । **'प्रतिष्ठाऽहम्'** इति वचनात् । उपचारोऽसाविति चेन्न । मुख्ये सम्भवति तदुपादानायोगादिति भावेनाऽह– **ब्रह्मण** इति ॥ मायेति प्रकृता महालक्ष्मीः ॥ २७ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां चतुर्दशोऽध्यायः ॥**

**भावदीपः**

प्रकृता महालक्ष्मीरिति ॥ **मम योनिर्महद्ब्रह्म** इति प्रकृता मूलरूपभूतेत्यर्थः॥

**॥ इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते चतुर्दशोऽध्यायः ॥१४॥**

---

१. 'प्रतिष्ठा सर्वलोकस्य स विष्णुः समुदाहृतः ।
स एव सर्वलोकादिः तं ज्ञात्वा मुच्यते ध्रुवम्'.का.भा.१.१.१८.
२. त्रिगुणविकारस्थितेः विविच्य वर्णनं पां ।
३. शाङ्करभाष्यानुवादः । तृतीयो भागः, पृ -१४१।
४. 'चतुर्दशभुवनाधारश्रीकृष्णार्पणमस्तु ' इति मातृकायाम् ।

# ।। अथ श्रीमद्भगवद्गीतायां पञ्चदशोऽध्यायः ।।[1]

( संसारवृक्षस्वरूपम् )

**श्रीभगवानुवाच-**

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ।। १ ।।**

(अध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम्-** संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति । ऊर्ध्वो विष्णुः ।

'ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि ।
द्रविणꣳसवर्चसम्'[2] (तै.आ. ७.१०.१) इति हि श्रुतिः ।

ऊर्ध्वः उत्तमः सर्वतः ।।

**प्रमेयदीपिका**

अध्यायप्रतिपाद्यमर्थमाह– **संसारेति** ।। संसरत्यनेनेति संसारः । प्रकृत्यादिकं क्षेत्रम् । पूर्वाध्याये संसारैकदेशानां गुणानामेव वृत्तं दर्शितम् । अत्र पुनः समग्रं संसारस्वरूपं प्रदर्श्य

---

१. 'संसारच्छेत्रे नमः' इति गुज,वे-ग्रं- ।

२. 'ऊर्ध्वेन सर्वोत्तमेन नारायणेन पवित्रोस्मि । तत् वाजिरूपः सन्नयतीति वाजिनीः सूर्यः तत्र वसनशीलो वसुर्नारायणः तेन अमृतमस्मि मुक्तिं प्राप्तोस्मि । अमृतो यथा भवति तथाअमृतमिति वा अर्थः । द्रविण द्रवत्यनेन चित्तमिति द्रविणं सुखम्, तद्रूपोस्मीत्यर्थः । अत एव सुवर्चसं शोभनकान्तिवन्तं वदन्ति' इति वादिराजतीर्थाः प्रकाशिकायाम् ।

'ऊर्ध्वेन उत्कृष्टेन हरिणा पवित्रः पावितोस्मि यतो अतः इति योज्यम् । किञ्च वाजिनीवस्वमृतमस्मि। वाजी चासौ अश्वरूपश्चासौ नीश्च नेता च वाजिनीः नयतेः क्विप् । वाजिन्यां सूर्ये वसतीति वाजिनीवसुः वसतेरुः तेन वाजिनीवसुना अमृतम् अमृतोस्मि । प्रारब्धकर्मनिर्मुक्तोस्मि । कथं सुवर्चसं शोभनकान्तियुक्तं द्रविणं स्वर्णमिव जातोस्मि नित्यानन्दस्वरूपत्वादिति भावः । व्याख्यातैषा श्रुतिः गीताभाष्यटीकायां पञ्चदशे अध्याये ' तै.उ. राघवेन्द्रीयखण्डार्थे।

तदत्ययेच्छामुत्पाद्य तत्साधनजिज्ञासुं प्रति प्रागुक्तं साधनं प्रपञ्चयति । तत्प्रसङ्गादलौकिकं भगवन्महिमानं[१] च **दर्शयति** अनेनाध्यायेनेत्यर्थः ।।

जगद्वृक्षस्योर्ध्वमूलत्वं घटयितुमूर्ध्वशब्दाभिधेयं[२] तावदाह– ऊर्ध्व इति ।। कुतः? श्रौत-प्रयोगादित्याह– **ऊर्ध्वेति** ।। आदौ तावदहम् **ऊर्ध्वेन** विष्णुना **पवित्रः** निष्पापोऽस्मि । ततो वाजिरूपश्च नेता च[३]। वाजिनीः सूर्यः । तत्र वसतीति वाजिनीवसुः । तेन **वाजिनीवसुना** विष्णुना **अमृतं** प्रारब्धकर्मनिर्मुक्तश्च **अस्मि** । **'स तेजसि सूर्ये सम्पन्नः'**[४] (ष.प्र.उ.५.५) इति श्रुतेः । ततश्च तेनैव[५] **सवर्चसं** सप्रभम् । अनुभूयमानमिति यावत् । **द्रविणं** धनं सुखं च **अस्मि** इत्यर्थः ।।

## ( अकारन्तवर्चसशब्दस्वरूपम् )

वर्चसशब्दोऽकारान्तोऽप्यस्ति ।'ब्रह्महस्तिभ्यां वर्चसः'(पा.सू.५.४.७८) इत्यत्र योग-विभागात् समासान्तो वा[६]। विष्णुप्रसङ्गदर्शनाय श्रुतिशेषोदाहरणम् । इदानीं तस्य तत्र प्रवृत्तौ निमित्तमाह– ऊर्ध्व इति ।। उन्नतो ह्यूर्ध्व उच्यते । अतो ब्रह्मादिलोकस्थत्वादिलक्षणा सूक्ष्मत्वादिगुणयोगो वा नाऽश्रयणीयः । **सर्वतः** सर्वस्मात् प्रपञ्चात् । **सर्वैश्च** गुणैः ।।

## भावदीपः

सम्पूर्वात् 'सृ गतौ'[७] (पा.धा.९३५) इत्यतः करणे घञ् इत्युपेत्याह– **संसरतीति** ।। **क्षेत्रमिति** ।। त्रयोदशाध्याये **'महाभूतान्यहङ्कारः'**(१३.६) इति श्लोकोक्तं प्रकृत्यादीत्यर्थः। **वृत्तमिति** ।। **'सत्त्वं रजस्तमः'** इत्यादिना कार्यप्रवृत्तिर्दर्शितेत्यर्थः ।। **संसारेति** ।। प्रकृत्यादि-क्षेत्रस्वरूपमित्यर्थः ।।

१. 'भगवन्माहात्म्यम्' इति कृ.टि-पां ।
२. 'अभिप्रायम्' इति मातृकायाम् ।
३. 'वाजिरूपश्च नेता च वाजिनीः सूर्य उच्यते' इति तै.भा ।
४. 'सः ध्याता परमेश्वरमपरोक्षीकृत्य तेजोरूपे सूर्ये सम्पन्नः । तं प्राप्नोति , सूर्यं प्राप्य चासौ यथा पादोदरः सर्पः त्वचा जीर्णया विनिर्मुच्यते एवं खलु स ध्यानी पाप्मना प्रारब्धेन विनिर्मुक्तो भवति' तै.(राघ) खण्डार्थे ।।
५. 'तत्प्रसादेनैव' इति मातृकायां विवरणम् ।
६. इमानि वाक्यानि तै.श्रीनिटिप्पिण्यामप्युदाहृतानि । इतः परम् 'सवर्चसं द्रविणं सुवर्णमिवाहं जातः' इति पूर्वटीकाकाराः इति प्राचीनटीकोल्लेखः कृतः ।
७. अयं दिवादौ च १०९९ 'सृ गतौ' पठ्यते । अयं छान्दसः ।

**प्रागुक्तमिति** ।। प्रथमषट्काद्युक्तं[१] निवृत्तकर्म भगवज्ज्ञानध्यानरूपं साधनमित्यर्थः । **कुतः** इत्यनन्तरम् 'इत्यतः' इति शेषः ।। **इति श्रुतेरिति** ।। षट्प्रश्नश्रुतेरित्यर्थः ।। नपुंसकद्रविणशब्दे विशेषणत्वात् 'वर्चसः' इति भाव्यमित्यत आह– **वर्चसशब्द इति** ।। **योगविभागादिति** ।। ब्रह्मशब्दाद्धस्तिशब्दाच्च परस्य वर्चःशब्दस्याच्प्रत्यये 'ब्रह्मवर्चसम्' इत्यादि सिद्ध्यर्थमयमेको योगः,'वर्चसः' इति पुनरन्यो योगो विभज्य कर्तव्यः । अन्यत्रापि वर्चसशब्दः समासान्तो भवतीत्यर्थ इति । तथाच 'सवर्चसम्' इत्यकारान्तः साध्विति भावः । **अत इति** ।। मुख्यार्थसम्भवादिति भावः । **ब्रह्मादीति** ।। अत्युन्नतसत्यलोकवैकुण्ठलोकस्थत्वाद् ऊर्ध्व इति लक्षणा वा सूक्ष्मत्वाद् अतीन्द्रियत्वादिगुणयोगाद् गौणीवृत्तिर्वा नाऽश्रयणीयेति भावः[२] ।।

**भाष्यम् — अधो निकृष्टं शाखा भूतानि । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः। तथाऽपि न प्रवाहव्ययः । पूर्वब्रह्मकाले यथा स्थितिस्तथा सर्वत्रापीत्यव्ययता । फलकारणत्वाच्छन्दसां पर्णत्वम् । न हि कदाचिदप्यजाते पर्णे फलोत्पत्तिः।। १ ।।**

## प्रमेयदीपिका

**अधःशाखम्** इत्येतद् घटयन् अधःशब्दार्थं तावदाह– **अध** इति ।। शाखाः काः? इत्यत आह– **शाखा** इति ।। तानि हि मूलापेक्षयाऽपकृष्टानि ।।

### (अश्वत्थशब्दसाधुत्वोपपादनम् )

ननु वृक्षमात्रस्य[३] सारूप्यमभिदधता कथमश्वत्थत्वमस्योच्यते? इत्यत आह– **श्वोऽपीति** ।। 'सुपि स्थः' **(पा.सू.३.२.४)** इति कः । श्वसः सकारस्य तकारो धातुसकारस्य लोपश्च निरुक्तत्वात् । श्वः स्थाता श्वत्थः । श्वत्थो न भवतीति **अश्वत्थः** । 'किमुत कालान्तरे' इति, **अपिशब्दः** ।।

ननु पदार्थानां बहुकालस्थायित्वदर्शनात् कथमेतत्? इत्यत उक्तम्[४]– **एकेति**।। 'तिष्ठति' इति [५]लुडर्थेऽनादरसूचनाय लट् । अथवा **अपिशब्देन** वर्तमानातीतयोः समुच्चयः। ततः

---

१. 'प्रथमषट्कोक्तनिवृत्तकर्मभगवद्ध्यानज्ञानरूपम्' इति पां ।

२. अर्थः- इति सो-पाठे।

३. 'वृक्षमात्रसाम्यम्' इति कृटि.पाठः । 'वृक्षमात्रसारूप्यम्' इति मातृकायाम् ।

४. बे,गुज,वे-ग्रं । आह-प्र ।

५. 'भविष्यत्यनद्यतनेऽर्थे' इति मातृकायां विवरणम् ।

क्रियाप्रबन्धे लट् । तर्हि **अव्ययम्** इति व्याघात इत्यत आह– **तथाऽपीति**।। विकारित्वेऽपि । एतदपि नास्ति । जगत्प्रवाहस्य प्रलये व्ययादित्यत आह– **पूर्वेति**।। छन्दसां पर्णत्वं घटयति– **फलेति** ।। फलकारणत्व[1]सादृश्यादित्यर्थः । [2]अत्र फलं मोक्षादिकम् । **छन्दसां** वेदानाम् । स्यादिदं यदि पर्णानां फलकारणत्वं स्यात् । तदेव कुतः? अन्वयव्यतिरेकाभ्यामित्याह– **न हीति** ।। किन्तु जात एवेत्यन्वयोऽपि वाच्यः।।

### भावदीपः

**सुपि स्थ इति** ।। सुबन्त उपपदे 'ष्ठा गतिनिवृत्तौ'(**पा.धा.९२८**) इत्यतः कप्रत्ययो भवतीति कप्रत्यय इत्यर्थः । श्वस्शब्दोपपदात् स्थाधातोः कप्रत्यये 'आतो लोप इटि च'(**पा.सू.६.४.२४**) इत्याकारलोपे सकारस्य षत्वे सलोपे च अश्वत्थ इति रूपमिति भावः ।। ननु 'अनद्यतने लङ्' (**पा.सू.३.२.११**) इति सूत्रे भविष्यदनद्यतने काले लृट् भवतीत्युक्तत्वात् भाष्ये अनद्यतनवाचिनः 'श्वः' इत्यस्य प्रयोगात् 'स्थाता' इति प्रयोक्तव्यम् । कथं 'तिष्ठति' इति प्रयोगः? इत्यत आह– **तिष्ठतीति लुडर्थ इति** ।। 'व्यत्ययो बहुलम्' (**पा.सू.३.१.८५**) इत्युक्तेरिति भावः । किमर्थमेवमुक्तम्? 'स्थाता' इत्येव कुतो नोक्तम्? इत्यत आह– **अनादरेति** ।। कालविशेषेऽनादरसूचनायेत्यर्थः ।। **वर्तमानेति** ।। श्व इति पदेन ह्यद्यतनकालस्य ततः पूर्वतनकालस्य चेत्यर्थः ।। **ततः क्रियाप्रबन्धे लडिति** ।। अस्यार्थो द्वादशाध्याय (**१२.१६**) एवोक्तो ध्येयः।।१।।

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ।। २ ।।**

**भाष्यम् —** अव्यक्तेऽपि सूक्ष्मरूपेण सन्ति शरीरादौ च भूतानीति **अधश्चोर्ध्वं च प्रसृताः** । **गुणैः** सत्त्वादिभिः । प्रतीतिमात्रसुखत्वात् प्रवालाः विषयाः । **मूलानि** भगवद्रूपादीनि । भगवानपि कर्मानुबन्धेन हि फलं ददाति ।।

### प्रमेयदीपिका

**अधश्च** इत्येतद् घटयति– **अव्यक्तेऽपीति** ।। अनेन 'तस्य शाखा भूतानि अधश्च स्वापेक्षयाऽपकृष्टे शरीरादौ कार्ये च ऊर्ध्वं चोत्तमे कारणेऽव्यक्ते च प्रसृताः सूक्ष्मरूपेण सन्तीति

---

१. मातृकायाम् । कृ.टि.अनुगुणपाठः ।'कारित्व' इति प्र ।
२. 'अत्र' कृ.टि । 'तत्र' प्र ।

व्याख्यातं भवति । 'प्रसृता इत्यनेनोच्यन्ते' इति शेषः । 'अधः पातालादूर्ध्वं स्वर्गादौ'[१] इत्यादि व्याख्याने प्रकृतपरित्यागाप्रकृतप्रक्रिये[२] प्रसज्येते । गुणशब्दस्यानेकार्थत्वात्[३] **गुणप्रवृद्धाः** इत्यत्र विवक्षितमर्थमाह– **गुणैरिति** ।। अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवन्ति । सत्वादयश्च अर्वाचीनमूलानीति वक्ष्यति[४]। विषयाणां प्रवालत्वं घटयति– **प्रतीतिमात्रेति** ।। प्रतीति-समयमात्रसुखहेतुत्वादित्यर्थः । विमर्दनासहत्वसाम्यादिति भावः । **विषयाः** प्रवाला इति सम्बन्धः ।।

**अधश्च मूलानि** इत्यत्र 'रागद्वेषादिवासनामूलानि'[५] इति व्याख्यानमसत् । प्रक्रमविरोधा-दिति भावेनाऽह– **मूलानीति** ।। आदिपदेन जडाजडप्रकृत्योः सत्त्वादीनां च ग्रहणम् । तेषामपि 'ऊर्ध्वमूलम्' इत्यत्र विवक्षितत्वात् । ननु भगवतः कथं कर्मानुबन्धित्वम्? इत्यत आह– **भगवानपीति** ।। अत्र कर्मानुबन्धित्वं नाम कर्मानुसारित्वम् । तच्च कर्मसम्बन्धेन फलदातृत्वाद् भगवतोऽपि युक्तमित्यर्थः । यद्वा, कर्म एवानुबन्धः = चरमभाविकारणं कर्मानुबन्धः । तद्वत्त्वं कर्मानुबन्धित्वम् । तदपि कर्मानुबन्धेन फलदातृत्वात् भगवतो अपि[६] युज्यत इति ।।

## भावदीपः

**तस्येति** ।। जगद्वृक्षस्येत्यर्थः । **स्वापेक्षयेति** ।। स्वशब्देन भूतपरामर्शः ।। **प्रकृतेति** ।। अव्यक्तभूतादिक्षेत्रस्थितस्वरूपस्यैव प्रकृतत्वात् तत्त्यागोऽप्रकृतप्रकरणं च प्रसज्यत इत्यर्थः । **साम्यादिति** ।। प्रवालशब्दितपल्लवसाम्यादित्यर्थः । **प्रक्रमेति** ।। ऊर्ध्वपदेन ब्रह्मप्रकृत्यादेरेव प्रक्रमात् तद्विरोध इत्यर्थः । तत्कथम्? इत्यत आह– **तेषामपीति** ।। **चरमभाविकारण-मिति** ।। फलभोगादिकार्योत्पत्ताविति योज्यम् ।।

**भाष्यम्** — तथा च भाल्लवेयशाखायाम्–

---

१. शाङ्करभाष्यानुवाद इति भाति । 'अधो मनुष्यादिभ्यो यत् स्थावरं अत ऊर्ध्वं च यावद्ब्रह्मणो विश्वसृजो धाम' इति तद्भाष्यम् । भाग३, पृ-१५७ ।

२. मातृकायाम् । 'प्रकृतप्रक्रिये' इति बे,गुज-पाठः न युक्तः ।

३. 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागशौर्यादिसत्वादिसन्ध्याद्यावृत्तिरज्जुषु।।
शुक्लादावपि वत्स्यां च' इति मेदिनीकेशे।।

४. 'वक्ष्यन्ते' इति गुज, बे,वे-ग्रं पाठः न युक्तः ।

५. शाङ्करभाष्ये , तृतीयो भागः- पृ -१५८ ।

६. मातृकायामेव । मुद्रितपुस्तकेषु अपिः नास्ति।

'ब्रह्म वा अस्य पृथङ् मूलं प्रकृतिः समूलं सत्त्वादयोऽर्वाचीनमूलम् । भूतानि शाखाः छन्दांसि पत्राणि[१] देवनृतिर्यश्चश्च शाखाः[२] ॥ पत्रेभ्यो हि फलं जायते । मात्राः शिफाः । मुक्तिः फलम्, अमुक्तिः फलम् । मोक्षो रसः, अमोक्षो रसः । अव्यक्ते च शाखाः । व्यक्ते च शाखाः । अव्यक्ते च मूलम्, व्यक्ते च मूलम् । एषोऽश्वत्थो गुणाऽलोलपत्रो न स्थीयते न न स्थीयते न ह्येष कदाचनान्यथा जायते नान्यथा जायते' इति ॥ २ ॥[३]

### प्रमेयदीपिका

श्लोकद्वयार्थे श्रुतिसम्मतिं चाह– **तथा चेति** ॥ अस्य जगद्वृक्षस्य **पृथक्** वृक्षानन्तर्गतम् । सहभूतं मूलं **समूलम्** । **अर्वाचीनमूलं** भूम्यन्तर्गतपादाख्यम् । **छन्दांसि** इत्यस्योपपादनम्– **पत्रेभ्यो हीति** ॥ देवादिशरीराणि चोपशाखाः । **मात्राः** भूतसूक्ष्माणि । **शिफाः** जटाः । मुक्त्यमुक्तिशब्दाभ्यां मोक्षतदितरपुरुषार्थसाधने ज्ञानकर्मणी उच्येते । **फलम्** अवान्तरम् । मोक्षामोक्षाशब्दाभ्यां तु पुरुषार्थावेव । **रसः** श्रेष्ठफलम् । **गुणाः** विषयाः । **आलोलपत्राणि** प्रवालपत्राणि यस्यासौ तथोक्तः । **न स्थीयते** इत्यनेनाश्वत्थशब्दार्थकथनम् । तत्किं क्षणिकः? **न[४] न स्थीयते** प्रवाहव्ययो नास्तीत्यर्थः ॥

तस्योपपादनम्– **न हीति** ॥ द्विरुक्तिस्तात्पर्यार्था[५] ॥ २ ॥

### भावदीपः

अपौनरुक्त्याय साधनफलत्वेनार्थभेदमाह– **मुक्त्यमुक्तिशब्दाभ्याम्** इत्यादिना ॥ २ ॥

---

१. 'पर्णानि' इति गुज, वे-ग्रं । 'पत्राणि' प्रभ, मातृकायाम् ।

२. 'सर्वोचो भगवान् विष्णुः मूलं भूमिवदस्य तु । जगदाख्यस्य वृक्षस्य शाखा देवास्ततोवमाः ॥ वृक्षमूलं रमादेवी सोऽव आशुगतेर्हरिः । तद्यामत्वा् तदन्नत्वादश्वत्थोयं सनातनः 'का.भाष्ये.२.३.१'

३. (अ)'वीजं विष्णुर्हि जगतः शाखायाश्चान्यदेवताः' इति कौर्मे (भाग,ता ३.२९.१)

(आ) 'व्यञ्जनाज्जगतो विष्णुर्वीजं न परिणामतः ॥(भाग,ता ७.७.५१)

(इ) द्रं-११.१२.२२ निवृत्तवचनम् ।

४. बे,गुज, नास्ति । मातृकायां वर्तते । भाष्यानुगुणपाठः ।

५ 'द्विरुक्तिस्तात्पर्यार्था। यत्राधिक्यं तत्परता वहुवारमपि ध्रुवम्। तद्वदन्ति महाप्राज्ञा लोकवेदानुसारतः' इति ब्र.वै.वचनम्(भाग.ता.१-१२-३२)

(ज्ञानासिना जगद्वृक्षच्छेदः कार्यः)

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**

**भाष्यम्** — यथा स्थितस्तथा नोपलभ्यते । अन्तादिर्विष्णुः ॥

'त्वमादिरन्तो जगतोऽस्य मध्यम्'[१] (८.१७.२८)

इति भागवते ।

'अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः'

(म.भा.१२.७०.१३)इति च मोक्षधर्मे ।

असङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानेन ।

'ज्ञानासिनोपासनया सितेन'[२](११.२८.१८) इति भागवते ।

छेदश्च विमर्श एव । ततश्च तस्यैवाबन्धकं भवति ।

**प्रमेयदीपिका**

'अस्य रूपं नोपलभ्यते' इत्युक्ते प्रमाणबाधः । अत उक्तम्– **तथेति** ॥ तत्सापेक्षमित्यतः पूरयति– **यथेति** ॥ विकारित्वादिनेत्यर्थः । जगतो देशकालाभ्यां परिच्छेदस्योपलभ्यमानत्वात् 'नान्तः' इत्याद्युक्तमयुक्तमित्यत आह– **अन्तादिरिति** ॥ 'संहर्तृत्वादेः' इति शेषः ॥

अत्र सम्मतिमाह– **त्वमिति** ॥ मध्यं स्थितेः कर्ता । तस्यानुपलभ्यमानत्वे प्रमाणमाह–**अनादीति** ॥ आद्यन्तरहितम् । 'असङ्ग एव शस्त्रम्'[३] इति व्याख्यानमसदिति भावेनाऽह

---

१. 'यथा घटस्यादिरन्तो मध्यं च मृत्स्ना प्रशस्ता मृदेवोत्तमकारणं सलिलादि अवान्तरं कारणं तथा त्वमप्यस्य जगतः आद्यादिः' इति विजयध्वजतीर्थाः ।

२. अमूलमेतद्बहुरूपरूपं मनोवचःप्राणशरीरकर्म । ज्ञानासिनोपासनया शितेन च्छित्वा मुनिर्गां विचरत्यतृष्णः इति पूर्णपाठः ।।'मुनिः निरन्तारानुस्मरणासमर्थः पुरुष एतत्संसारकारणमज्ञानं मदुपासनया जातत्वात्रिशितेन ज्ञानेन छित्वा पुनस्तत्र अतृष्णः निस्सङ्गो भूत्वा गां विचरति' इति विजयध्वजतीर्थाः ।।

३. 'असङ्गशस्त्रेण असङ्गः पुत्रवित्तलोकैषणादिभ्यो व्युत्थानं तेन'इति शाङ्करभाष्ये।'गुणमयभोगासङ्गाख्येन शस्त्रेण'-इति रामानुजीये ३ भागः।

– **असङ्गेति** ।। असङ्गः सङ्गराहित्यम् । तेन सहितं ज्ञानम् **असङ्गशस्त्रम्** । दध्योदनादिवद् वृत्तौ साहित्यस्यान्तर्भावादप्रयोग इति भावः । प्रतीतार्थः कुतो न? इत्यतो ज्ञानस्यैव तत्र कारणत्वेनोक्तेरित्याह– **ज्ञानेति** ।।

'छित्वा' इत्यस्य 'सबीजमुद्धृत्य'[१] इति व्याख्यानमसदिति भावेनाऽह– **छेदश्चेति** ।। चस्त्वर्थः । **विमर्शः** विवेकः । व्याख्यानान्तरपरित्यागेनैवं व्याख्याने को हेतुः? इत्यत आह– **ततश्चेति** ।। यतो **विमर्श एव** प्रकृत्यादेः विश्वस्य **च्छेदः** न सर्वथोद्धारणम् । तत एव **तस्य** एकस्य **एव** इदम् **अबन्धकं भवति** इति युज्यते । अन्यथा एकेन च्छेदे कृते सर्वमुक्तिः स्यादिति भावः ।।

## भावदीपः

गीतायामन्वयमुखेन[२] पदान्यनुपेक्ष्य पदानुपपत्तियुक्तिपूर्वं गीताशेषमवतारयति – **अस्येति** ।। **विकारित्वादिनेति** ।। वृद्धिह्रासविनाशादिरादिपदार्थः । जगद्वृक्षस्य प्रसविता विष्णुः कथम् अन्तादिः केन हेतुना? इत्यत आह – **संहर्तृत्वादेरिति शेष इति** ।। संहर्तृत्वात् अन्तः, जनकत्वात् आदिः,स्थितिहेतुत्वात् सम्प्रतिष्ठा इत्युच्यत इत्यर्थः ।। **दध्योदनादिवदिति** ।। दधि-सिक्तोदनो घृतसिक्त ओदन इत्याद्यर्थे दध्योदन घृतोदन इत्यादि प्रयोगस्तथेत्यर्थः ।। साहित्यर्थे [३]पदप्रयोगे बीजमाह– **वृत्ताविति** ।। समासे साहित्यरूपार्थस्य [४]सङ्गम्यमानत्वादित्यर्थः । **उद्धृत्येति** ।। विनाश्येत्यर्थः । **विवेक इति** ।। कार्यत्वात् स्वतन्त्रत्वादिज्ञानादित्यर्थः ।।

**भाष्यम् —तथा हि मूलस्थं ब्रह्म प्रतीयते । तच्चोक्तं तच्छ्रुतावेव -**

**'विमर्शो ह्यस्य च्छेदः । स**[५] **तं न बध्नाति बध्नाति चान्यान्'** इति ।। ३ ।।

## प्रमेयदीपिका

इतश्चायमेव च्छेद इत्याह– **तथा हीति** ।। अत्र ह्यश्वत्थमेनं छित्वा '**ततः परं तत् परिमार्गितव्यम्**'(१५.४) इति विश्वच्छेदस्य ब्रह्मप्रतीतावुपायत्वमुच्यते । तथाहि विश्वस्य

---

१. शाङ्करभाष्ये (छित्वा संसारवृक्षं सबीजमुद्धृत्य- इति), तृतीयो भागः- पृ -१६० ।
२. अन्वयपदेन इति सो मातृकायां दृश्यते।
३. साहित्यार्थे दा प्रयोगे इति सो- पाठः।
४. गम्यमानत्वात् इति काणि, सो पाठौ।
५. मातृकाद्वये,तथा वे,गुजपाठे 'सः' इति वर्तते ।प्रभ-पाठे नास्ति ।

कार्यत्वादिना विमर्शे सति कार्यस्य कारणापेक्षत्वात्, चेतनानधिष्ठिताद् उपादानाद् उत्पत्त्यसम्भवात्, परतन्त्राणां मुख्यतो अधिष्ठातृत्वायोगात्, मूलस्थमुपादानकारणाधिष्ठातृ ब्रह्म प्रतीयते न विश्वविनाशे । अतो योग्यतावशाद् विमर्श एव च्छेदो न विनाश इति गम्यत इत्यर्थः । विश्वमिथ्यात्वज्ञानमेव च्छेद इति चेन्न । अस्य मिथ्याज्ञानत्वात् । श्रुतिसंवादाच्चैवमेवेत्याह– तच्चेति ।। तं वै प्रपद्येत[1] यं वै प्रपद्य इति तच्छ्रुतावेव । अतः तं छेदकमेव ।। ३ ।।

### भावदीपः

**परतन्त्राणामिति** ।। ब्रह्मादीनां जीवादीनामिति वा ।। **मूलस्थम्** इत्यनुवादः, उपादानेत्यादि व्याख्या ।। ३ ।।

( जगद्वृक्षच्छेदनोपायः )

**ततः परं तत् परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ।। ४ ।।**

**भाष्यम् —** तदर्थं च तमेव प्रपद्ये प्रपद्येत । तच्चोक्तं तत्रैव -

'तं वै प्रपद्येत यं वै प्रपद्य न शोचति
न हृष्यति न जायते न म्रियते
तद् ब्रह्म मूलं तच्छित्सुः' इति ।
'नारायणेन दृष्टश्च प्रतिबुद्धो भवेत् पुमान्' (१२.३३८.५०)
इति च मोक्षधर्मे ।

छेदनोपायो ह्यत्राकाङ्क्षितः । न च भगवतोऽन्यः शरण्योऽस्ति ।। ४ ।।

### प्रमेयदीपिका

वाक्यार्थस्य समाप्तत्वात् 'तमेव चाद्यम्' इति कर्तव्यान्तरं सङ्गतिं सूचयन्नाह– **तदर्थं चेति** ।। **विमर्शार्थं चेति** ।। विश्वविमर्शाद् ब्रह्मज्ञानं भवतु [illegible] विमर्श एव कथं स्यात्?

---

१. चतुर्थश्लोकस्यभाष्यानुगुणमातृकापाठः । 'प्रपद्ये' इति प्रच. बे ।

इत्याकाङ्क्षां **तदर्थम्** इत्यनेन सूचयति ।

**तर्हि चिच्छिदिषुं** प्रति तदुपायो विधेयः, न तु प्रपद्य इति वचनं सङ्गतमित्यतो 'व्यत्ययो बहुलम्'(**पा.सू.३.१.८५**) इति वचनमाश्रित्याह– **प्रपद्येतेति** ।। कुतः? इत्यतः श्रुतिस्मृतिसंवादादित्याह– **तच्चेति** ।। **तद्विश्वं छित्सुः** । अभ्यासलोपः [१]छान्दसः । **चिच्छिदिषुः च्छित्सुः** विश्वविमर्शार्थी यद् **ब्रह्म विश्वस्य मूलं तमेव** पुरुषं **प्रपद्येत** इत्यर्थः । प्रपत्त्या प्रसन्नेन **नारायणेन दृष्टः** पुमान् **प्रतिबुद्धः** विश्वविमर्शक्षमो **भवेत्** इत्यर्थः । इतश्च पुरुषव्यत्ययोऽत्र व्याख्येय इत्याह– **च्छेदनेति** ।। 'अतस्तदुपायविधानमेव सङ्गतम्' इति शेषः । न केवलमुत्तमपुरुषोऽत्रानुपयुक्तः । किन्त्वयुक्तश्चेत्याह– **न चेति**।। 'तमेव प्रपद्य इत्येवं परिमार्गितव्यम्'[२] इति सम्बन्धस्त्वयुक्तः । अस्य परिमार्गणत्वाभावात्।। ४ ।।

### भावदीपः

ननु 'छिदिर् द्वैधीकरणे (**पा.धा.१४४०**)(विशरणे)' इत्यतो 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (**पा.सू.३.१.७**) इति सन्प्रत्यये 'सन्यङोः' (**पा.सू.६.१.९**) इति द्विर्वचने, नलोपे 'आर्धधातुकस्येड् वलादेः' (**पा.सू. ७.२.३५**) इतीडागमे 'हलन्ताच्च' (**पा.सू. १.२.१०**) इति सनः कित्वेन गुणाभावे 'सनाशंसभिक्ष उः' (**पा.सू. ३.२.१६८**) इत्युप्रत्यये 'चिच्छित्सुः' इति भाव्यम् । कथं छित्सुः? इत्यत आह– **अभ्यासलोप इति** ।। इडभाव इति पाठो लेखकदोषमूलः । छिदेरनिट्त्वात् 'चिच्छिदिषुः' इति प्रयोगोऽपि तथैवेति ज्ञेयम् । 'छित्सुः' इत्यस्य प्रतिपदमुक्त्वा तस्यार्थमाह– **चिच्छिदिषुरिति** ।। **पुरुषव्यत्यय इति** ।। **प्रपद्ये** इत्युत्तमपुरुषः प्रथमपुरुषतया व्यत्यय इत्यर्थः ।। **तत्परिमार्गितव्यमिति** ।। **तमेव चाद्यं पुरुषं प्रपद्ये** इत्यन्वेषण-यत्नेन, प्रपत्तिकर्मत्वेन च पुरुषस्यैव प्रकृतत्वात् तत्स्वरूपोक्तेरेवाकाङ्क्षितत्वादिति भावः ।। ४ ।।

( भगवत्प्राप्तौ साधनान्तरनिरूपणम् )

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसञ्ज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ।। ५ ।।**

---

१ अत्र 'इडभावश्च' 'चिच्छिदिषुः' इत्यधिकः प्रचलितपाठः लेखकदोषमूलक इति भावदीपे ।

२. शाङ्करभाष्ये, तृतीयो भागः. पृ -१६० ।

**भाष्यम् -** साधनान्तरमाह– **निर्मानेति** ।। ५ ।।

**प्रमेयदीपिका**

तर्हि ब्रह्मज्ञानसाधनं विश्वविमर्शः । तत्र साधनं च तत्प्रपत्तिरिति समस्तमुक्तम्। किमुत्तरेण? इत्यत आह– **साधनान्तर**मिति ।। ५ ।।

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।। ६ ।।**[1]

**भाष्यम् –** स्वरूपं कथयति– **न तदित्यादिना** ।। ६ ।।

**प्रमेयदीपिका**

उत्तरवाक्यानां सङ्गत्यप्रतीतेस्तां सूचयन्नाह– **स्वरूप**मिति ।। अनेन कीदृशं तत्पदम्, यत्प्राप्तिः पुरुषार्थः? इत्याकाङ्क्षायामिदमुच्यत इत्युक्तं भवति । **स्वरूपम्** इत्यनेन **पदम्** इत्युक्तस्य **धाम** इति वक्ष्यमाणस्य चार्थोऽप्युक्तो भवति । स्थानतेजसोरसङ्गतत्वात्[2]।। ६ ।।

**भावदीपः**

पद-धामशब्दयोरर्थान्तरशङ्कां निराह– स्थानेति ।। ६ ।।

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**[3]
**मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।। ७ ।।**

---

१. ब्र.सू.भाष्यदीपिकायाम् -'ज्ञानिनो 'यद्गत्वा' यत्प्राप्य पुनस्तस्मान्न निवर्तन्ते, तन्मम परमं 'धाम' स्वरूपं, तदेतद्धाम सूर्यो 'न भासयते' न प्रकाशयते, एवं चन्द्रः । यदा चैवं तदा कुतोऽयमवमोऽग्निरिति गीतास्मृत्यर्थः। '

२. शाङ्करभाष्ये , तृतीयो भागः. पृ -१६६ ।

३. (अ) 'ॐअपि स्मर्यते ॐ' ब्र.सू.२.३.४५.भाष्यम्- 'ममैवांशो ..सनातनः' इति । तत्त्वप्रकाशिका- 'जीवलोके जीवच्छरीरे जीवभूतः जीवाख्यः' ।।

'जीवलोके जीवदेहे जीवभूतः जीवाख्यः चेतनः' इति तन्त्रदीपिकायाम् ।

(आ) न्यायामृते अंशत्वेनैक्यसिद्धिभङ्गे अयं श्लोक उदाहृतः ।

## ( पाङ्गीआचार्यव्याख्या )

अस्याद्वैतमतेनार्थः - कृष्णाख्यं ब्रह्म अर्जुनाख्यमधिकारणमुपदिशति -ममैवेति । ममैव नान्यस्य अंशः स्वरूपांशः, जीवलोके पृथ्वीतले, जीवभूतः जीवाख्यः, सोपि नाधुनिकः, किन्तु सनातनः अनादिसिद्धः। मनः षष्टं येषु तानि इन्द्रियाणि ज्ञानेन्द्रियाणि, प्रकृतिस्थानि देहस्थानि कर्षति नाटयतीति । अत्र विचारः । कृष्णाख्यः किं ब्रह्मणो भिन्नः अभिन्नो वा । नाद्यः ।

'अहो भाग्यमहो भाग्यं नन्दव्रजोकसाम् ।

यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्' इति भागवतवाक्यविरोधात् ।

न द्वितीयः । तस्य निर्धर्मकत्वेन वचनायोगात् । नोभयथापि कृष्णस्योपदेशकत्वं सिद्धयति । तथा अद्वैतमते कृष्णादर्जुनो भिन्नः अभिन्नो वा । नाद्यः अपसिद्धान्तात्। औपाधिकभेदाङ्गीकारेण नापसिद्धान्त इति चेन्न । उपाधेः निर्धर्मकब्रह्मणि संयोगेन जीवसिद्धिर्वा, जीवे संयोगेन वा, उभयसंयोगेन वा, उभयसंयोगं विनैव वा । नाद्यः, असङ्गश्रुतिविरोधात् । नचोपाधेर्मिथ्यात्वानङ्गीकारेण विरोधाभावः। उपाधौ वर्तमानं यन्मिथ्यात्वं तत् सत्यं मिथ्या वा । नाद्यः । अद्वैतमते एकस्य ब्रह्मण एव सत्यत्वाङ्गीकारेण उपाधिगतमिथ्यात्वस्य सत्यत्वाङ्गीकारे अपसिद्धान्तात्। न द्वितीयः । मिथ्यात्वस्य मिथ्यात्वे उपाधेः सत्यत्वसिद्धेः, तस्मात् श्रुतिविरोधः अपरिहार्यः । न द्वितीयः । उपाधिं विना जीवत्वायोगात् जीवं विना उपाधिसङ्गासिद्ध्या अन्योन्याश्रयात् । न तृतीयः । उभयशब्देनैव भेदासिद्धेः। अन्ततः आत्माश्रयाच्च । म चतुर्थः । भेदस्यौपाधिकत्वे अकारणकार्योत्पत्तिप्रसङ्गात् । तस्मान्नापसिद्धान्तसम्भवात् अर्जुनोपदेश्यत्वसिद्धिः ।।

श्लोकार्थेपि विचारः सद्भिः द्रटव्यः । 'ममैव' इति अस्मच्छब्दप्रयोक्ता कृष्णः जीवो वा ब्रह्म वा । आद्ये जीवस्य जीवांशत्वाङ्गीकारे अस्माकं का हानिः, तव च को लाभः । द्वितीये ब्रह्मणो निर्धर्मकत्वेन वक्तृत्वानुपपत्तेः । कृष्णाख्यं सगुणं ब्रह्म, निर्धर्मकं तु तदन्यत् इति चेन्न ।

रूपं यत् तत् प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ।

सत्तामात्रं निर्विशेषं निरीहं सत्वं साक्षाद्विष्णुरध्यात्मदीपम् ।।

इति भागवतविरोधात् ।।

तस्मादुपयथाध्यनुपपत्तिः । तथा एवशब्दस्य अन्ययोगव्यवच्छेदार्थकत्वे अन्यः किं ब्रह्मोत जीवोथ जडः । नाद्यः । तवानभिमतसिद्धेः । न द्वितीयः । देवयोग्यातिरिक्तानां जीवानामंशाभावेन भागासिद्धेः । न तृतीयः । जडस्य जीवरूपांशाभावेन प्राप्यभावात् निषेधानुपपत्तेः । निषेधस्य प्राप्तिपूर्वत्वात् । तस्मान्नैव शब्दस्योपयोगः । ब्रह्मणोंशोप्युक्तः । अखण्डत्वात् । विशेषाद्युज्यत इति चेन्न । निर्विशेषत्वाङ्गीकारात् ।।

किञ्च जीवलोकशब्देन किं भूलोको गृह्यते उत जीवसमुदायो वा । नाद्यः । दूर्व्वादिस्थानां कृष्णांशत्वानुपपत्तेः । न द्वितीयः । सप्तम्यनुपपत्तेः । न तृतीयः । मृतस्य अंशत्वानुपपत्तेः । देहशब्देन लिङ्गदेहो गृह्यते इति हेतोः मृतस्यापि तद्वत्वमिति चेत् लिङ्गदेहस्थितः अंशः किं स्वरूपभूतः उत प्रतिबिम्बरूपः । नाद्यः । रूपं रूपं प्रतिरूपो बभूव इति श्रुति-व्याकोपात् । न द्वितीयः । ऐक्यानुपपत्तेः । नहि प्रतिबिम्बं बिम्बे निविशतीति केनचिद् दृष्टम् । तस्मान्न जीवलोकपदोपादानं युज्यते । जीवभूत इत्यपि अंशविशेषणं न युज्यते । न जीवः अजीवः अजीवः जीव इव स्थित इति जीवभूत इति विग्रहेण साम्यसिद्ध्या तादात्म्यासिद्धेः ।।

किञ्च साधनपूर्तिमतो जीवस्य ब्रह्मैक्यरूपसायुज्यमुक्तौ सिद्धायां पुनः कालान्तरे यथा पूर्वमकल्पयत् इति श्रुत्या पुनर्ब्रह्मणः संसरणप्राप्तौ मुक्तांशं विहाय ब्रह्मविद्यया संसरति मुक्तांशेन सहैव वा । आद्ये ऐक्यानुपपत्तिः । ब्रह्मणः अखण्डत्वहानिश्च । न द्वितीयः । नच पुनरावर्तते यद् गत्वा न निवर्तन्ते इति श्रुतिस्मृतिविरोधात् । तस्मादैक्यानुपपत्तिः ।।

सनातनशब्देनानादित्वमुच्यते । अनाद्यंशस्य अन्तेप्यंशत्वानपगमात् । अंशिना ब्रह्मणा साकमैक्यं कथं घटेत् । पूर्वसिद्धस्योत्तरत्राप्यसिद्धेः । अस्तु ज्ञानवदिति चेन्न । ज्ञानस्य अज्ञानावरणेन प्रतिबन्धे जातेपि श्रुतादिना तन्निवृत्तौ जीवस्य चिद्रूपतया पूर्वसिद्धस्यैवाभ्युदयात् । नासिद्धसिद्धिः ।।

अपिच जीवस्य अनादित्वमेव दुर्घटं त्वन्मते ष अनादेर्भावस्य सान्तत्वायोगात् । तदनादित्वं षण्मध्ये अस्मदीयैरङ्गीकृतमिति चेन्न ।

'वासुदेवावा इदमग्र आसीत्' 'न ब्रह्मा नच शङ्करः '।

'नान्यद्यत् सदसत्परम् 'इति श्रुतिस्मृतिव्याकोपात् ।।

अद्वैतमते मनसः इन्द्रियाणां प्रकृतेः कर्षणक्रियायाश्च मिथ्यात्वेन उत्तरार्धस्य कथनायोगः

। नहि मिथ्यापदार्थः आकृष्टुं शक्यते । तथात्वेन शुक्तिरजतस्याप्याकर्षणप्रसङ्गात् । नापि हि भ्रमज्ञानविषयस्य क्रियाविषयत्वम् । शुक्तिरजतस्यापि तापनताडनसहत्वापातात् । तस्मात् त्वन्मते श्लोकार्थानुपपत्तिः ।। तर्हि कोर्थस्तस्येति चेदुच्यते । पूर्वश्लोके कृष्णेन स्वस्वरूपस्य सूर्याद्यप्रकाश्यत्वं गन्तुरपुनरावृत्तिकारकत्वं चोक्तम् । तत्र कोसौ सूर्यादिकस्य च प्रकाश इत्यत आह पूर्वार्धेन -ममैवेति।। प्रथमप्रश्नस्योत्तरं ममैवांश इति । द्वितीयस्योत्तरं जीवलोक इति । जीवस्य लोके = प्रकाशे । लुक प्रकाश इति धातोः । ईष्ट इति शेषः । उत्तरार्धोक्तं गन्तुरपुनरावृत्तिकारकत्वं भगवतः कथमित्यत आह त्रिभिः पादैः -जीवभूत इति ।। सनातनः पुराणपुरुषो भगवान् प्रकृतिस्थानि जडशरीरस्थानि मनःषष्ठानीन्द्रियाणि मनसा सह षड् ज्ञानेन्द्र्याणि जीवभूतः जीवस्य भूः चिच्छरीरं तस्मात् कर्शति आकृष्य वियोजयतीति यावत् । जडेन्द्रियवियोगे एव मुक्तानामपुनरा वृत्तिकारकभगवत्स्वरूपप्राप्तिर्भवतीति भावः ।। यद्वा यस्य सूर्याद्यप्रकाशत्वादिकत्वमुक्तं स क इत्यत आह- ममैवेति । स ममैवांशः स्वरूपभूतः, ना = पुरुषरूपः, अतनः = अत सातत्यगमने इति धातोः नित्यज्ञानी वा जीवभूतः= जीवे भूतः । भू सत्तायामिति धातोः स्थित इति यावत् ।तथा सत् प्रकृतिस्थानि = स्वभावस्थितानि स्वभावतो विषयासक्तानीति यावत् । मनःषष्ठानि इन्द्रियाणि जीवलोके जीवप्रापके भगवति विषये कर्षति =आकर्षति भगवद्विषयकाणि करोतीति यावत् । अपुनरावृत्तिधाम च अनेन सत्कृत्यैव प्राप्यमिति सूचितम् ।।

अथवा अपुनरावृत्तिधामगन्ता क इत्यत आह - ममैवेति ।। जीवलोको प्रतिबिम्बरूपांशः सनातनः नादेन विधिनिषेधात्मकशब्दरूपेण वेदेन सहितः सनादनः, सनादन एव सनातनः ।

'वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ।

धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इति ऋग्भाष्ये ।

तदुक्तम् 'निषेधविधिपात्रत्वात् सनातन इतीरित 'इति महाविष्णुपुराणे ।

मन आदि षडिन्द्रियाणि प्रकृतिस्थानि प्रकृष्टा सर्वोत्कृष्टा कृतिर्यस्य स प्रकृतिः भगवान्, तत्स्थानि तदाश्रितानि तदधीनानि इति यावत् । कर्षति प्रवर्तयति स एव तद्धाम गन्तेति भावः।। ७ ।।

यद्यप्ययं गुणैर्हीनो यः सेनाग्रणीरिव ।
भाष्यराजपुरोमान्यः स्यात् सततं सताम् ।।
श्रीनारदस्वान्तपद्मस्थितश्रीप्राणवल्लभ ।
मामुद्धर दयोसिन्धो सज्जीवार्जुनादि वत् ।।

।। इति नारदशिष्यपाङ्गरीभीमाचार्यात्मजश्रीनिवासविरचिता
त्रिविधार्थविवृतिः समाप्ता ।।

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ।। ८ ।।**

( जीवाः अंशाभासाः )

**भाष्यम्- कर्षति** इत्युक्ते जीवस्य स्वातन्त्र्यं प्रतीतम् । तन्निवारयति – **शरीर-मित्यादिना** ।। **यत्** यदा **शरीरमवाप्नोति** उत्क्रामति च जीवः, तदा **ईश्वरः एतानि गृहीत्वा संयाति** ।।

**प्रमेयदीपिका**

'पूर्ववाक्ये जीवस्य प्रकृतत्वात् तदुत्तरमपि तद्विषयम्' इति व्याख्यानमसत्। ईश्वरपद-रूढार्थपरित्यागदोषादित्याशयवान् सङ्गतिं तावदाह– **कर्षतीति**[1] ।। 'शरीरावाप्तौ मूल-कारणाद् उत्क्रमणे शरीरात् स्थितौ गोलकादिभ्यो विषयान् प्रतीन्द्रियाणि जीवः कर्षति' इति पूर्वत्रोक्तम् । तथा च तस्य नियामकान्तरानुक्त्या इन्द्रियकर्षणे **स्वातन्त्रं प्रतीतम्** । तद्युक्तम् । पूर्वोक्तेन[2] विरोधादित्याशङ्क्य, ईश्वरस्यैव तत्प्रतिपादयन् **तत्**= जीवस्य स्वातन्त्र्यं **निवारयतीत्यर्थः** । श्लोकद्वयोपपादनायादिपदम् ।।

---

१. अत्र पद्मनाभतीर्थीये 'अंशोऽपि स्वरूपांशो नेत्यभिप्रायेण..व्याचष्टे- कर्षतीति' इति ।
शाङ्करभाष्ये-'मम एव परमात्मनः अंशो भागः अवयव एकदेश इत्यनर्थान्तरम् इति';
एवं रामानुजीयेऽपि- 'उक्तस्वरूपः सनातनो ममांश एव सन्..' ।
२. भावदीपानुसारी । 'पूर्वोक्त' इति प्रच ।

### भावदीपः

'प्रकृतिस्थानीन्द्रियाणि कर्षति' इत्यत्र कस्मात् कर्षणम्? किं निमित्तं च कर्षति? इत्याकाङ्क्षायामाह – **शरीरावाप्तौ मूलकारणादित्यादिना ।। पूर्वोक्तेनेति ।। 'न हि प्रतिबिम्बस्य क्रिया च'** (२.१९) इत्यादिना जीवास्वातन्त्र्यस्य द्वितीये समर्थनेन तद्विरोधादित्यर्थः ।।

( जीवस्य शरीरान्तरावाप्तिरीश्वराधीना )

**भाष्यम् — 'यत्र यत्रैव[1] संयुक्तो धाता गर्भं पुनः पुनः ।**

**तत्र तत्रैव वसति न यत्र स्वयमिच्छति'** (१२.३२६.११)

**इति मोक्षधर्मे ।।**

### प्रमेयदीपिका

अत्र शरीरावास्युत्क्रमणयोरुक्तत्वादीश्वरस्य तदयोगात् कथमिदं तद्विषयम्? इत्यतो व्याचष्टे– **यदिति** ।। 'जीवः' इति पूर्ववाक्यादनुवर्तते । **यदा** इति श्रवणात् 'तदा' इति लभ्यते । **एतानि** इन्द्रियाणि । **संयाति** शरीरम्, लोकान्तरं च ।। कुतोऽयमर्थः? इत्यतो जीवस्य शरीरप्राप्तौ तावदीश्वराधीनत्वे प्रमाणसम्मतिमाह– **यत्रेति**।। **संयुक्तः** प्रेरकत्वेन संयुक्तः[2]। **यत्र यत्रैव** योनौ **गर्भं धाता तत्र तत्रैव वसति** जीवः ।।

### भावदीपः

**गर्भं धातेति** ।। निदधातीत्यर्थः ।। ७, ८ ।।

( जीवीयप्रवृत्तिरीश्वराधीना )

**भाष्यम् - 'भावाभावावपि जानन् गरीयो जानामि श्रेयो न तु तत् करोमि ।**

**आशासु [3]हर्म्यासु हृदासु कुर्वन् यथा नियुक्तोऽस्मि तथा वहामि'**

**(म.भा.१२.२२६.१) इति च ।**

---

१. टीकानुसारी । 'यत्र च ' इति प्रचलितः ।

२. (अ) 'संयुक्तः परमेश्वरः इति कचित् पाठः' - कृ.टि ।

(आ) 'प्रेरकत्वेन सम्बन्धः' इति मातृकायां विवरणम् ।

३. इदं नमुचिवचनम्- 'हत्वा' इत्युत्तरवचनं प्रकरणान्तरपठितमिन्द्रवचनमिति पद्मनाभतीर्थाः।

'हत्वा जित्वाऽपि मघवन् यः कश्चित् पुरुषायते ।
अकर्ता त्वेव भवति कर्ता त्वेव करोति तत्'

(म.भा.१२.३२४.१५) इति च ।

प्रमेयदीपिका

प्रवृत्तावप्यीश्वराधीनत्वे जीवस्य प्रमाणसंवादमाह– **भावेति** ।। **भावाभावौ** लौकिके शुभाशुभे । **गरीयः** श्रेयो मोक्षमपि । तथाऽपि **तन्न करोमि** साधयितुं न स्वतन्त्रोऽस्मि । किन्तु **आशासु** दिक्षु **हर्म्यासु** हर्म्येषु हृदासु हृदेषु । तास्ताः क्रियाः **कुर्वन्** इव प्रतीयमानोऽहं यथेश्वरेण **नियुक्तोऽस्मि तथा** ताः वहामि । हननादिक्रियाः कृत्वा **यः कश्चित्** परमपुरुषवत् स्वातन्त्र्यमात्मनो मन्यते सोऽपि **अकर्तैव भवति** । यतः **तत्** हननादिकं **कर्ता**[1] ईश्वर एव **करोति** ।।

**भाष्यम्** — 'तद्यथाऽनः सुसमाहितं उत्सर्जद्यायात् ।
एवमेवायं शारीर आत्मा प्राज्ञेनात्मना अन्वारूढ उत्सर्जद्याति'

(बृ.४.३.३५) इति च श्रुतिः ।

'वाङ् मनसि सम्पद्यते , मनः प्राणे, प्राणस्तेजसि,
तेजः परस्यां देवतायाम्'[2] (छां.उ. ६.८.६) इति च ।

प्रमेयदीपिका

शारीरोत्क्रमणमपीश्वराधीनमित्यत्र श्रुतिसम्मतिमाह–**तद्यथेति** ।। **अनः** शकटम् । **सुसमाहितं** पुरुषेण सम्यगधिष्ठितम् । **उत्सर्जत्** ग्रामादिकमुत्सृजन् । **शारीरः** आत्मा जीवः ।

१. तद्धननादिकं कर्ता इति मातृकायामेव ।'तद्धननादिकर्ता'इति प्रच ।

२. (अ)श्रुतिरियं ब्र.सू.भाष्ये ४.२.१ अधिकरणे उदाहृता । व्याख्यता च टीकायाम् - 'तस्य..... म्रियमाणस्य पुरुषस्य वाग् वागभिमानिन्युमा मनसि मनोभिमानि रुद्रे सम्पद्यते ग्रस्तव्यापारा भवति ...इत्यादि ।

(आ)'हे सौम्य प्रयतः म्रियमाणस्य मुच्यमानस्य चास्य जीवस्य वाक् वाग्देवी उमा मनसि मनःप्रेरके रुद्रे सम्पद्यते मनो रुद्रश्च प्राणे, प्राणस्तेजसि श्रीतत्वे सम्पद्यत इत्यन्वेति । प्राणस्य तेजसिसम्पत्तिः द्वारमात्रं न लय इति ज्ञेयम् । तेजः श्रीतत्वं च परस्या देवत्यां सम्पद्यते । पुरुषाः मृत्यादौ वाग्देवीमुमां प्राप्य ईश्वरं प्राप्नुवन्तीत्यर्थः' इति खण्डार्थे राघवेन्द्रीये ।

**प्राज्ञेन** आत्मना परमात्मना **अन्वारूढः** अधिष्ठितः । **उत्सर्जत्** शरीरमुत्सृजत् । **वाक्** इत्यनेन उत्क्रमणे परदेवता वागादीन्याकर्षतीत्युच्यते ।।

**भाष्यम् — गन्धानिव सूक्ष्माणि ।। ७।। ८ ।।**[१]

१. भागवते -सप्तमस्कन्धे सत्यधर्मीये विशेषविचारः - 'यथोक्तम् । वायुर्गन्धानिवाश्रयादिति गीताभाष्यटीकाटिप्पणीषु । गन्धानिव सूक्ष्माणि । अनेकेष्वाकृष्यमाणेषु गन्धोपादानेऽभिप्रायमाह ।। गन्धानिवेति । गन्धवतः पुष्पाद्यवयवानित्यर्थः ।

ननु गन्धशब्दस्य गुणवाचित्वे सूक्ष्माणीत्युपमानोपमेयसाधारणधर्मोक्तिविरोधः । गुणस्य सूक्ष्मत्वाभावात् । यथा गन्धस्य भूमेश्च न भावो व्यतिरेकत इति तृतीयस्कन्धोक्तेराश्रयं विना गुणाकर्षणायोगश्चेत्यत आह ।। यथा गन्धवत इति । गन्धो गन्धक आमोदे लेशो सम्बन्धगर्वयोः । स एव द्रव्यवचनो वहुत्वे पुंसि च स्मृत इत्युक्तेर्गन्धशब्दस्य द्रव्यवाचित्वादिति भावः । एतेन गन्धानिति वहुवचनं च समाहितम् । न चावयवागमनपक्षे व्यतिरेको गन्धवदिति सूत्रविरोधः । तत्रापि भागगमनस्यैवाभिप्रेतत्वात् । अन्यथांऽशिनं विहायांशगतौ गन्धदृष्टान्तोपादानायोगात् । गन्धस्य गुणत्वेनांशत्वाभावात् । न च गुणाद्वेत्युक्तालोकवद्गुणस्यैवागमनं किं न स्यादिति वाच्यम् । वैषम्यात् । युक्तमालोकस्यागमनम् । तथात्वेऽपि स्वाश्रयं विहाय वृत्तेरभावात् । किन्तु स्वाश्रयमविहायैवान्यत्रापि वृत्तिः । गन्धागमने तु स्वाश्रयं विहायैवान्यत्र वृत्तिः प्रसज्यते । सा चोक्ततृतीयस्कन्धविरुद्धा । गुणस्य तथात्वाभावायुक्तिविरुद्धा च । न च व्यतिरेकसूत्रीयचन्द्रिका-विरोधः । तत्र स्थूलावयवागमनस्य दूषितत्वात् । इह पुनरतिसूक्ष्मभागागमनाङ्गीकारात् । अत एव सूक्ष्माणीत्युक्तमिति दिगिति ।

एतेनैव यथा पुष्पाद्गन्धः पृथगच्छतीति भाष्यं यथा पुष्पाद्गन्धः पृथगच्छतीति दृष्टान्तान्न विरोध इति तत्त्वप्रदीपिका च व्याख्याते भवतः । वस्तुतस्तु गुणगमनाङ्गीकारेऽपि न वाधकं पश्यामः । न च भागवतं निरंशत्वयुक्तिश्च वाधेते इति वाच्यम् । भूमिगुणत्वमेव नान्यभूतगुणभूतत्वमित्येवं परत्वाद्भागवतस्य । अत एव गीताविवृतौ यथाभाष्यटीकं गन्धानिव गन्धवतः पुष्पाद्यवयवानिति व्याचख्युरिति न तद्वैसंवाद्यम् । तदर्थस्यापि स्वीकारात् । ।

ननु गुणो निरंश इति कथं तस्य गमनमिति वाच्यम् । न चानवयवं वस्तु क्वचित्स्यान्मानगोचरम् । तस्माद्गुणादिकमपि नास्त्यनंशतया क्वचित् ।। ननु गुणानां निरवयवत्वात् कथं नानवयवं वस्तु क्वचित् स्यादित्युच्यत इत्यत आह ।। तस्मादितीति । गीतातात्पर्यन्यायदीपिकयोर्गुणानां सांशतोक्तेर्गमनसंभवादिति । न चोक्तगीताभाष्यप्रमेयदीपिकाविरोध इति वाच्यम् । तत्र गन्धानिति वहुवचनस्वारस्यात्तथा व्याख्यानस्य न्याय्यत्वात् । न व्यासेधामो वयं द्रव्यगमनं नास्तीति किन्तु गुणगमनं च संभवतीति वदामः ।।

न चोदाहृतटिप्पणीविरोधः । दत्तोत्तरत्वात् । गुणानामनंशत्वं पराभ्युपगमेन सा वक्तीत्युपपत्तेः । एवं च चन्द्रिकाऽपि न पीडिता स्यादिति ज्ञेयम् । तन्त्रदीपिका यथा पुष्पगन्धस्य स्वांशैर्विभागस्तथेति वदन्ती शिर आंदोलयत्येतदर्थ एवेति विभावनीया । अत्र च वलं गन्ध इत्येकवचनम् । अभिनवचन्द्रिका च यद्यपि गन्धो गुणो नांशस्तथाऽपि गुणोऽपि यदा व्यतिरिच्यते किमु तदांऽशस्यांशिव्यतिरेके वक्तव्यमिति

## प्रमेयदीपिका

अनेकेष्वाकृष्यमाणेषु सत्सु गन्धोपादानेऽभिप्रायमाह– **गन्धानिवेति** ।। गन्धवतः पुष्पाद्यवयवानित्यर्थः ।। ७ ।। ८ ।।

---

भावेन गुणो दृष्टान्तत्वेनोपात्त इति प्रवृत्ता स्फुटं गुणगमनमनुगुणमावेदयति । गुणाद्वाऽऽलोकवदित्यस्य लोके गुणे द्रव्यमाश्रित्यैवागमनमिति तन्मात्रे तद्विशेषपरिकल्पकाभावात् ।।

गीताभाष्यताम्रपर्णीये । ननु व्यतिरेको गन्धवदित्यत्र गुणस्य गन्धस्य गुणिनं विहाय गमनोक्तेरत्रापि तथार्थसम्भवाद्भाष्ये न लक्षणया सूक्ष्मग्रहणं युक्तमिति चेन्न । अत्र गन्धवत्पुष्पाद्यवयवगमनोक्तावपि गन्धमात्रस्य गमनानिषेधात् । इन्द्रियसूक्ष्माणां गमने द्रव्यसूक्ष्मगमनस्य दृष्टान्तत्वं संश्लिष्यत इति भावेनात्र सूक्ष्मग्रहणं न तु मुख्यानुपपत्येत्युक्तम् । किं च दीपप्रभाया द्रव्यतानिरासप्रस्तावे तस्य द्रव्यत्त्वसाधकत्वे विवादादिति टीका तथोत्तराधिकरणे गुणस्यापि गन्धस्य द्रव्यं विहायापि वृत्तेर्वक्ष्यमाणत्वादिभाव इत्युक्तांत्या-धिकरणीयचन्द्रिका च गुणगमनमेव स्पष्टमवगमयतः ।।

न च गीताभाष्यभावबोधे तस्य द्रव्यत्वसाधकत्वे विवादादितिवदद्भिष्टीकाकारैरुत्तराधिकरणे गुणस्यापि गन्धस्य द्रव्यं विहायापि वृत्तेर्वक्ष्य-माणत्वादित्यादिना पुनः प्रवेशकल्पनं प्रमाणाभावादिति वदद्भिष्टीकाकारैरपि गुणस्य गमनमंगीकृतम् । अतस्तद्विरुद्धमवयवगमनं कथमंगीक्रियत इत्याशंक्य स्थूलावयवांगीकारस्य दूषितत्वात् । अतिपरमसूक्ष्मावयवागमनमंगीकृत्येदानीमुच्यत इत्याहुरित्युक्तेः कथमिदमुदाहृतमिति न च वाच्यम् । दत्तोत्तरत्वात् । किं चाहुरित्युक्तिस्वारस्येनास्वारस्यसूचनात् । तद्द्रव्यत्वे त्वविवादम् ।।

परभाष्ये च यथा गुणस्यापि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति । अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु कुसुमादिगन्धोपलब्धेः । एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति । अतश्चानै कान्तिकमेतद्गुणत्वाद्रूपादिवदाश्रयविश्लेषानुपपत्तिरिति ।

गुणस्यैव सतो गन्धस्याश्रयविश्लेषदर्शनात् । गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेन्न । यस्मान्मूल-द्रव्याद्विश्लेषस्तस्य क्षयप्रसङ्गात् । अक्षीयमाणमपि तत्पूर्वावस्थातोऽवगम्यते । अन्यथा (इतरथा) पूर्वाव-स्थैर्गुरुत्वादिभिर्हीयेत । स्यादेतद्गन्धाश्रयाणां विश्लिष्टानामल्पत्वात्सन्नपि विश्लेषो नोपलक्ष्यते । सूक्ष्मा हि गन्धपरमाणवः सर्वतो विप्रसृता गन्धबुद्धिमुत्पादयन्ति । न नासिकापुटमनुप्रविशन्त इति चेन्न । अतीन्द्रियत्वात्परमाणूनाम् । स्फुटगन्धोपलब्धेश्च । नागकेसरादिषु ।।

न च लोके प्रतीतिर्गन्धवद्द्रव्यमाघ्रातमिति गन्ध एवाघ्रात इति लौकिकाः प्रतियन्ति । रूपादिष्वाश्रय-व्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेन्न । प्रत्यक्षत्वादनुमानाप्रवृत्तेः । तस्माद्यथा लोके दृष्टं तत्तथैवानुगन्तव्यम् । निरूपकैर्नान्यथा । न हि रसो गुणो जिव्हयोपलभ्यत इति । अतो रूपादयो गुणा अपि जिह्वयोपलभ्येरन्निति नियन्तुं शक्यत इति । अतो गुणस्य गमनमद्रव्यांशस्यापि सांशत्वादुपपन्नमिति । वाक्यशावल्यात् द्वावपि सरलौ पक्षाविति । गन्धः सुरभिरसुरभिर्मिश्रश्चेति गन्धास्तैरिति बहुवचनोपपत्तिरेतत्पक्षे ज्ञेया ।।'

**[1]श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

**भाष्यम्** — भोगो अस्यापि साधितः पुरस्तात् ॥ इन्द्रियद्वाराऽपि सोऽपि भुङ्क्ते ।

'तद्य इमे वीणायां गायन्त्येतं ते गायन्ति'[2](छां.उ.१.७.६)

इति च श्रुतिः ।

गुणान्वितमेव भुङ्क्ते ।

'न ह वै देवान् पापं गच्छति' (बृ.उ.३.६.२७)

इति श्रुतेः ॥ ९ ॥

## प्रमेयदीपिका

ननु **श्रोत्रम्** इत्यादिना विषयभोगोऽस्योच्यते । न चेश्वरस्यासावस्ति । किन्तु जीवस्यैव । तत्कथमिदमीश्वरविषयम्? इत्यत आह– **भोग** इति ॥ **पुरस्तात्** सप्तमे ॥

अस्तीश्वरस्य भोगः । किन्तु जीवेन्द्रियैर्नास्तीत्यतो जीवविषयमेतदित्यत आह– **इन्द्रियेति** ॥ 'राजाद्यन्तर्गतं गायन्ति' इत्यनेन हि तच्छ्रोत्रेण गानभोगो लभ्यते । विषयभोगाङ्गीकारे दुष्टस्यापि भोगः स्यादित्यत उत्तरवाक्यगतं विशेषणमाश्रित्याह– **गुणेति** ॥ [3]गुणमेवेत्यर्थः । एतद्भुञ्जानस्य विशेषणमिति केचित्[4]। तान् प्रत्याह– **न ह वा** इति ॥ ९ ॥

## भावदीपः

'कर्तुः क्यङ् सलोपश्च'(पा.सू.३.१.११) इत्युपमानादाचारार्थे क्यङन्तोऽयं पुरुषायत इति शब्द इत्युपेत्य तदर्थमाह **पुरुष इवेति** ॥ तद्वदाचारः । स्वातन्त्र्यमतिरेवेति भावः । **कर्ता** इति

१. (अ)अयं श्लोकः **ब्र.सू. १.२.११ भाष्यदीपिकायाम्** -'आत्मान्तरात्मेति... इति च वृहत्संहितायाम्' इति भाष्यगतचशब्दार्थत्वेनोदाहृत्य भगवतो कर्मफलभोगाभिधायक इत्येवं व्याख्यातः ॥

आ)'अधिष्ठाय इत्यस्य विषयानुपसेवते इति चतुर्थपादस्थक्रियया अन्वयः । अयमिति यच्चाप्युत्क्रामतीश्वर इति पूर्वप्रकृतेश्वरः परामृश्यते ' न्या.सु.परिमले-१.२.२ । सम्पुटम्-१२,पृ-५५३१ ।

२. 'न केवलं वाक्-प्राणवेव तस्य गायकौ, किन्तु लोके गायकाः सर्वेपि तद्गायका इत्याह- तद्य इति । य इमे लौकिका राजादिपुरतः वीणायां गायन्ति इति यत् तद् एतमेव हरिं ते गायन्ति' इति छा.खण्डार्थे ।

३. 'शुभमेव' इति मातृकायामेव । श्रीनि-टि-'शुभमेव' इति व्याख्या।

४. शाङ्करभाष्ये ,रामानुजीये च तृतीयो भागः- पृ -१७४ ।

कारकपदम् ।। एतं ते गायन्ति इत्यत्रैतच्छब्दार्थमाह– **राजाद्यन्तर्गतमिति** ।। **उत्तरवाक्येति** ।। **गुणान्वितम्** इत्युत्तरवाक्येत्यर्थः । **न ह वै देवानिति** ।। **किमु देवोत्तमं हरिम्** इति श्रुति-शेषः ।। ९ ।।

**उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ।। १० ।।**

**भाष्यम्** — तर्हि किमिति न दृश्यते? इत्यत आह– **उत्क्रामन्तमित्यादिना** ।।

**प्रमेयदीपिका**

उक्तमेव किमित्युच्यते ? इति मन्दाशङ्कानिरासार्थमुत्तरश्लोकद्वयस्य सङ्गतिमाह– **तर्हीति** ।। 'यदि जीवातिरिक्तो देहे नियामकः स्यात् ' इति शेषः । उक्तानुवादेन विमूढत्वमनुपलम्भे कारणम् न तदभाव इत्युच्यत इति भावः ।। १० ।।

**भावदीपः**

**उक्तमेवेति** ।। '**विषयानुपसेवते**' इत्युक्तमेव '**भुञ्जानं वा गुणान्वितम्**' इति किमुच्यत इत्यर्थः ।। १० ।।

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ।। ११ ।।**

**भाष्यम्** — **यतन्तः** ज्ञानं प्राप्य । **अकृतात्मानः** अशुद्धबुद्धयः ।। ११ ।।

**प्रमेयदीपिका**

'यतन्तो योगिनश्च' इति कारणान्तरमुच्यते' इति प्रतीतिनिराकरणार्थमाह– **यतन्त** इति ।। आत्मा जीवश्चेत् सर्वदा अकृत एव । शरीरं चेद् असम्भव इत्यत आह– **अकृतेति** ।। **आत्मा** बुद्धिः । अकृतत्वं चाशुद्धत्वम् । 'केशान् करोति' इत्यादौ शोधनेऽपि करोतेः प्रयोगादिति भावः[१] ।। ११ ।।

---

१. वि,त.नि.टि.गुरुराजीये इदं वाक्यमुदाहृतम् । 'केशान् करोति इत्यादौ शोधनेपि प्रयोगदर्शनेन करोतेरनेकार्थत्वात्' ।

### भावदीपः

कारणान्तरमिति ।। ज्ञानचक्षुष्ट्वापेक्षयेति योज्यम् ।। ११ ।।

### ( भगवतो सर्वान्तर्यामित्वप्रपञ्चनम् )

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।। १२ ।।**[1]

**भाष्यम् —** पूर्वोक्तमेव ज्ञानं प्रपञ्चयति – **यदादित्यगतमित्यादिना**।।१२ ।।

### प्रमेयदीपिका

ननु **'न तद् भासयते'** (१५.१६) इत्यादिना स्वरूपं कथितम् । तत्किमुत्तरेण? इत्यत आह– **पूर्वोक्तमेवेति**[2] ।। **'अधश्च मूलान्यनुसन्ततानि'** (१५.२) इति यत्सर्वान्तर्यामिस्वरूपं विज्ञानमुक्तम्, यच्चोर्ध्वशब्देन सर्वोत्तमत्वं तदध्यायशेषेण **प्रपञ्चयतीत्यर्थः**।।१२ ।।

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ।। १३ ।।**

**भाष्यम् — गां भूमिम् ।। १३ ।।**

### प्रमेयदीपिका

[3]धेनोः आवेशो न भूतधारणे कारणम् इत्यत आह– गामिति ।। १३ ।।

---

१. (अ)ब्र.सू.'अपि स्मर्यते'१.३.२३ भाष्यम्-'यदादित्यगतं..मामकम्' इति,'न तद्भासयते..परमं मम इति च' ।। तत्वप्रकाशिका- मामकम् । मदधीनं मदीयं च । किञ्च ,न तत्र सूर्यो भाति न चन्द्रतारकं नेमा वियुतो भान्ति कुतोयमग्निः । इत्यानुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमुच्यते । तच्च विष्णोरेव स्मर्यते । अतो विष्णुरेवात्र प्ररतिपाद्यत इति सूत्रस्यार्थान्तरमभिप्रेत्य तां स्मृति मुदाहरति– न तदिति । धाम स्वरूपम् । तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते इत्यभिधानात् ।।
तत्वप्रदीपिका- मत्तेज एव आदित्यादिस्थितं तत्तेजःप्रेरकत्वेनाखिलं भासयतीत्यर्थः ।।
(आ) तलवकारोपनिषद्भाष्ये चतुर्थखण्डे श्रुतिव्याख्यानरूपतयोदाहृतः अयम् ।

२. नोत्तरत्राद्वैतमुच्यत इत्याह-पूर्वोक्तमिति इति पद्मनाभतीर्थीये।

३. मातृकायाम्, गुज,वे-ग्रं -'धेनोः आवेशेन भूतधारणे किं कारणम्' इति प्रच ।

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**
**सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**[१]वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥[२]**

**भाष्यम्**- वेदनिर्णायात्मिका मीमांसा वेदान्तः[३]।

तथाच सामवेदे प्राचीनशाला(ल)श्रुतिः –

'स वेदान्तकृत् स कालक[४] इति,

स ह्येव युक्तिसूत्रकृत्', 'स कालकः' इति ॥ १५ ॥

## प्रमेयदीपिका

'वेदान्तकृत्' इत्युपनिषदां कर्ता' इत्यन्यथाप्रतीतिनिरासार्थमाह– **वेदेति** ॥ वेदः वेदार्थः । तस्यान्तो निर्णयः । तदात्मिका । तादर्थ्यात् ताच्छब्द्यम् । **मीमांसा** ब्राह्मी । तस्याः 'कर्ता' इति शेषः । कुत एतत्? इत्यत आह– **तथा चेति** ॥ **युक्तिसूत्रकृत्** वेदार्थनिर्णयार्थयुक्तिसूचकवाक्यकृत् । **स कालकः** इति द्वितीयेन कलधातोः ज्ञानाद्यर्थतया प्रसिद्धत्वान्निगदव्याख्यानमेतदित्याचष्टे ॥ १५ ॥

## भावदीपः

'हि'इत्यन्तप्रतीकं गृहीत्वा **स हि** इत्यादिना **वेदान्तकृत्** इत्येतावदेव व्याख्यानम् । 'स कालकः' इत्येतत्कुतो न व्याख्यातम्? इत्यत आह– **स कालक इति द्वितीयेनेति** ॥ **इत्याचष्टे** इत्यन्वयः ॥ १५ ॥

---

१. (अ) **ब्र.सू. १-१-५ भाष्ये**- भगवतो वाच्यत्वसमर्थनायोदाहृतः.।
(आ) **न्यायामृते** अहमर्थस्यानात्मत्वभङ्गे -'वेदैश्च सर्वैरहमेव वेद्यः' इत्यत्र सर्ववेदवेद्यत्वोक्तेः ॥

२ **'वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्' २२ - कैवल्योपनिषत्** ॥

३ आथर्वणभाष्य १खण्डे-३-४-५मन्त्रटिप्पण्यां सत्यप्रियतीर्थैरुदाहृतोयं भागः ।

४. कालकः= ज्ञानहारी इति पद्मनाभतीर्थीये।

## ( विष्णुसर्वोत्तमत्वप्रपञ्चनम् )

**[1]द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।। १६ ।।[2]**

**भाष्यम् —** क्षरभूतानि ब्रह्मादीनि[3] । **कूटस्थः प्रकृतिः ।**

**तथा च शार्कराक्ष्यश्रुतिः -**

'प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम् ।
तदुत्तमं चान्यमुदाहरन्ति जालाजालं मातरिश्वानमेकम्' इति ।। १४ ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भगवद्गीताभाष्ये पञ्चदशोऽध्यायः ।। १५ ।।

### प्रमेयदीपिका

'क्षराक्षरशब्दौ जडजीवार्थौ' इत्यपव्याख्याननिरासार्थमाह– **क्षरेति** ।। भूतग्रहणं युक्तिसूचनार्थम् । नहि जडमात्रे भूतशब्दो रूढः । किन्तु जीवेष्वपि । पुरुषशब्दस्य चैतदुपलक्षणम् । **प्रकृतिः** चेतना । 'अक्षरः' इति वक्तव्ये 'कूटस्थः' इति वचनमपि युक्तिसूचनार्थमेव । न हि जीवानां कूटस्थत्वमस्ति । सुखादिमत्त्वेन विकारित्वात् ।।

श्रुतिसम्मत्या चायमेवार्थ इत्याह– **तथा चेति** ।। **क्षरः** इत्यनुवादेन 'प्रजापतिः' इत्यादि व्याख्यानम् । **अन्यं** परमात्मानम् । क्षरान्तर्भूतोऽपि मातरिश्वा विवक्षाविशेषेणाक्षरोऽपि

---

१. (अ) **कर्मनिर्णयभाष्ये** - कार्यतावादनिराकरणोपयुक्ततयोदाहृता इमे श्लोकाः । भाष्यम् — ज्ञानमात्रेपि महाप्रयोजनदर्शनात् ।। आह च भगवान् -द्वाविमौ....।। तत्रच **राघवेन्द्रतीर्थीयम्** -'द्वाविमौ इति गीतावाक्यं मायावादखण्डनटीकादौ व्याख्यातम् । तत्र एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च इति ज्ञानमात्रेण मोक्षरूपमहाफलत्वोक्तेः प्रकृतोपयोग इति भावः ।।'

(आ) बृ.उ.भा. ३.५.४. 'गीतायामपि जीवभिन्नस्य विष्णोः सर्वोत्तमत्वस्यैव सर्वसच्छास्त्रप्रतिपाद्यतया अभिहितत्वात्तदेव वेदादिप्रतिपाद्यं नात्मब्रह्मैक्यमित्याह -द्वाविमाविति' इति भाववोधे ।।

(इ)बृ.उ.भा.५.५.१ 'द्वाविमौ ..दाहृतः' इत्यादिना च भेदेन महोत्कर्षे परमतात्पर्यं सर्वशास्त्राणामाह ।

२. त.प्र.१-२-९ यथा रमायां पुंवच्छक्तिमत्वात् पुल्लिङ्गप्रयोगः कूटस्थो अक्षर उच्यते इत्यादौ ।।

३. 'ब्रह्मादयो हि भूतानि ' बृ.उ.भा.५.४ भारतवचनम् ।

भवतीत्युच्यते– **जालेति** ।। जालं संसारबन्धः । सोऽस्यास्तीति जालः । 'अर्श आदिभ्यो अच् '**(पा.सू.५.२.२७)**। तद्रहितश्चाजालः । अभिमानाभावात् ।। १६-२० ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पञ्चदशोऽध्यायः ।। १५ ।।**

## भावदीपः

युक्तिसूचनार्थमित्युक्तं व्यनक्ति– **नहीति** ।। **यतो वा इमानि भूतानि** जायन्ते इत्यादौ जीवेष्वेव प्रयोगादिति भावः । न केवलं भूतपदप्रयोगान्न जडं क्षरपदार्थः । किन्तु 'द्वाविमौ पुरुषौ' इति निर्दिष्टपुरुषपदायोगाच्चेति भावेनाऽह– **पुरुषशब्दस्य चैतदुपलक्षणमिति** ।।

**विवक्षाविशेषेणेति** ।। सत्यपि संसारे तत्कृतविकाराभावरूपकूटस्थत्वविवक्षयेत्यर्थः । 'जालश्चासावजालश्च' इति विग्रहमुपेत्याह– **जालमिति** ।। एतेन 'मातरिश्वानमेकमक्षरमुदाहरन्ति' इति योजना सूचिता ।। १४ ।।

**श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिविरचिते पञ्चदशोऽध्यायः[1]।। १५ ।।**

**[2]उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।। १७ ।।**

(भगवान् पुरुषोत्तमः)

**[3]यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।। १८ ।।[4]**

---

१. पञ्चदशरूपात्मकश्रीकृष्णार्पणमस्तु इति मातृकायाम् ।

२. तत्त्वोद्योतटीकायाम्- अनेन सर्वस्माद्भगवतो भेद उत्तमत्वश्चोक्तम् । परमात्मेत्युदाहृत इति तत्रागमसम्मतिरुक्ता । लोकत्रयमाविश्य इति युक्तिः । विनाशिनि लोके स्थितस्य विनाशशङ्कायां तन्निरासाय- अव्यय इत्युक्तम् । ईश्वर इति तदुपपादनायैश्वर्यवचनम् ।।

३. तत्त्वोद्योत एवान्यत्र- (द्वितीयभागे-पृ-२७८) टीका-अत्राप्युत्कृष्टत्वापकृष्टत्वाभ्याम् (ईश्वरवचनैस्तस्य संसारिभेदानुभव एवानुमीयते ।)

४. कालाज्जीवत्तथाऽव्यक्तान्महतश्चोत्तमो यतः ।
उत्तमः पुरुषस्तस्माद्भगवान् विष्णुरच्युतः ।। (भाग.ता.११.६.१४)

( भगवत्सर्वोत्तमत्वादिज्ञातृफलनिरूपणम् )

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।[१]**
**स सर्वविद्भजति मां सर्वभावेन भारत ।। १९ ।।[२]**

---

१. **वि.त.नि.–** ' यो मां..भारत' इति गुणोत्कर्षज्ञानादेव परमा प्रीतिर्भगवता स्वयमेवाभिहिता । अतो विष्णोर्गुणोत्कर्ष एव सर्वश्रुतिस्मृतीनां महातात्पर्यम्'।

**टीका** - इतश्चैवमित्याह-यो मामिति । अत्र 'भजति मां सर्वभावेन' इति परमप्रीतेर्द्योतकत्वम् ।। स्मृतिग्रहणेन पौरुषेयाः सर्वे अपि सदागमा गृह्यन्ते । तेन -'लोके वेदे च 'इति व्याख्यातं भवति।।

**राघ**-तेनेति । सर्वसदागमग्रहणेन गीतागतं लोकपदं सर्वपौरुषेयग्रन्थपरमिति व्याख्यातं भवति मूलकृतैवेत्यर्थः ।।

२. (अ)मायावादखण्डनटीकायां विवृता इमे श्लोकाः - इदानीं परमाप्ततमेन भगवता श्रुत्या च विष्णोः सर्वोत्तमत्वस्यैव सर्वशास्त्रप्रतिपाद्यतयाऽभिहितत्वाच्च तदेव वेदादिप्रतिपाद्यं नाऽत्मब्रह्मैक्यमित्याह -

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।

इमौ इति प्रमाणसितां सूचयति । पुरुषौ चेतनौ । एवशब्दस्य द्वावेवेति सम्बन्धः । तद्घटनाय परमपुरुषं व्यावर्तयितुं लोक इत्युक्तम् । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।। तदनेनोत्तमपुरुषनिरूपणस्य अपेक्षितं पुरुषनिरूपणं कृतम् । ततः किमित्यत आह - उत्तमः पुरुषस्त्वन्यः । अन्यः क्षराक्षराभ्याम् । न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति भावः । अन्यस्योत्तमपुरुषत्वे श्रुत्यादिसंमतिमाह -परमात्मेत्युदाहृतः । आत्मशब्दोऽत्र चेतनपर्यायः ।।

युक्तिं चाऽह -यो लोकत्रयमाविश्य बिभर्ति । यो हि यस्य भर्ता स तस्मादुत्तमो युक्तः । आविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत आह-...अव्ययः ।।

तत्कथम् ? ऐश्वर्यादित्याह - ईश्वरः ।। स च कः ? इत्यतोऽहमेवेति सप्रमाणकमाह -

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।

क्षरं चातीत इति चशब्दान्वयः । लोकशब्देन पौरुषेयागम उच्यते । तात्पर्यद्योतनाय वेत्तुः फलमाह- यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविजति मां सर्वभावेन भारत ।। एवमित्यस्य व्यावृत्तिनिरासः:- असंमूढ सति । न पुनरश्वकर्णादिवत् सञ्ज्ञामात्रत्वेनेत्यर्थः । स सर्ववित् , अस्यैव सर्वशास्त्रार्थत्वात् । सर्वभावेन सर्वप्रकारेण । एतच्च न यस्मै कस्मै वाच्यमित्याह इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । स सर्वविदित्याद्युक्तम् । ततः किम् ? इत्यत आह - एतद्बुद्ध्वा बुमिान् स्यात् कृतकृत्यश्च भारत । बुमिान् अपरोक्षज्ञानी । कृतकृत्यो मुक्तः ।।

(आ)न्यायसुधा- २.२.१२.यो मामेवमित्यादिना कृतकृत्यस्येत्यन्तं भगवद्वाक्यं सङ्गृह्णाति । एवं समस्तैर्गुणै- र्दोषाभावैश्च । क्षराक्षरोत्तमो हि पुरुषोत्तमः । स सर्वविदित्यादिस्तुत्या प्रसन्नता द्योत्यते ।

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ।। २० ।।[१]

ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे पुराणपुरुषोत्तमयोगो[२] नाम पञ्चदशोऽध्यायः ।। १४ ।।

---

सर्वभावेन सर्वेण प्रकारेण । अन्यथा व्याघातात् । कृतकृत्यो मुक्तः ।। इति यन्मया मम पुरुषोत्तमत्वादिकमुक्तमिदं गुह्यतमं शास्त्रं तात्पर्येण सर्वशास्त्रैः प्रतिपाद्योऽर्थः । एतद् बुद्ध्वा इति प्रशंसया आदरः प्रतीयते ।।

१. विष्णुतत्त्वनिर्णये प्रथमपरिच्छेदे - विष्णोस्सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् इत्येतद्विवरणे प्रमाणतयोक्तानीमानि व्याख्यातानि । वि.त.नि.टीका- तद्वाक्यं पठति-द्वाविमाविति । द्वावेवेति सम्बन्धः ।।

इमौ प्रमितौ । पुरुषौ चेतनौ । लोके अवलोके पर्यालोचने सति । अथवा द्वावेवेत्यस्योपपत्तये परमपुरुषं व्यावर्तयितुं लोक इत्युक्तम् । ईशितव्यवर्ग इत्यर्थः । सर्वाणि भूतानि ब्रह्मादयो जीवाः। कूटस्थो महालक्ष्मीः । यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह-उत्तम इति।अन्यः क्षराक्षराभ्याम्। नपुनरेतयोर्मध्ये कश्चित् परुषोत्तमः कल्पनीयः तत्र श्रुत्यादिसम्मतिमाह-परमात्मेति । आत्मशब्दो हि चेतनपर्यायः । युक्तिमप्याह-य इति । लोकत्रयमिति सर्वोपलक्षणम् । योहि यस्य धारणपोषणादिकर्ता स तस्मादुत्तमो युक्तः । तदाविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तम् - अव्यय इति । तत्कथम् ? ऐश्वर्यादित्याह -ईश्वर इति ।।

स च क इत्यपेक्षायाम्-अहमेवेति सप्रमाणकमाह - यस्मादिति । क्षरं चेत्यन्वयः । लोके पौरुषेयागमे । अत्र आत्मनस्तात्पर्यद्योतनाय वेत्तुः फलमाह -यो मामिति । एवं न त्वश्वकर्णादिवत् सञ्ज्ञात्वेन ।

एतच्च पुरुषोत्तमत्वमपारमार्थिकमिति सम्मोहवर्जितः । सर्ववित् । अस्यैव सर्वशास्त्रार्थत्वात् । सर्वभावेन सर्वप्रकारेण । एतच्च नायोग्याय वाच्यमित्याशयेनाह -इतीति । स सर्वविदित्यायुक्तम् । ततः किमित्यत आह-एतदिति । बुद्धिमान् अपरोक्षज्ञानी । कृतकृत्यो मुक्तः । अत्र हि सर्वविदित्युक्तत्वात् सर्वेषां पौरुषेयापौरुषेयागमानां विष्णोस्सर्वोत्तमत्व एव महातात्पर्यमिति स्फुटं प्रतीयते ।। (अत्र राघवेन्द्रतीर्थीयविशेषः तत एवावसेयः )

२. क्षेत्रज्ञशब्दितजगत्स्वरूपस्य तदत्ययोपायभूतभगवदादिज्ञानम् -पां

# ।। अथ श्रीमद्भगवद्गीतायां षोडशोऽध्यायः ।।

( देवलक्षणम् )

**श्रीभगवानुवाच -**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।। १ ।।**[1]

( अध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम् —** पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति ।

तपः ब्रह्मचर्यादि । 'ब्रह्मचर्यादिकं तपः' इत्यभिधानात् ।। १ ।।

**प्रमेयदीपिका**

अध्यायप्रतिपाद्यं दर्शयति– **पुमर्थेति** ।। यद्यपि पूर्वयोरध्याययोः साधनप्रतिपादन एव तात्पर्यम् । तथाऽपि तत्र प्रपञ्चितम् । किं नाम बन्धस्वरूपम्? साधनमनुतिष्ठता च तद्विरोधिनां त्यागोऽवश्यं करणीयः । पूर्वाध्याये च **निर्मान** (१५.५)इत्यादिना पुमर्थयोर्ज्ञानमोक्षयोः साधनं **यतन्तोऽप्यकृतात्मानः** (१५.११) इत्यादिना तद्विरोधि च सङ्क्षेपेणोक्तम् । तदुभयमिदानीं प्रपञ्चनीयम् । सुरासुरलक्षणं च तथेति तदनेनाध्यायेन **दर्शयतीत्यर्थः** ।

'तपो वक्ष्यमाणम्' इति कश्चित् । तदसत् । **देवद्विज** (१७.१४)इत्यादिनोक्तस्यात्र ग्रहणे शौचादेरपि तपोग्रहणेन गृहीतत्वात् पुनरुक्तिप्रसङ्गात् । अतो वक्ष्यमाणान्तर्गतं यदत्र पृथगुच्यते तद्व्यतिरिक्तमेव । [2]तच्च प्रधानस्यैवोपलक्षणत्वोपपत्तेर्नोपवासादीति भावेन स प्रमाणकमाह– **तप** इति ।। १ ।।

---

१. 'अभयम्' इत्यनेन अभयादिलक्षणं देवत्वम् , दम्भादिलक्षणं चासुरस्वभाव एवेति ज्ञायते - **न्यायसुधा** ३.४.४१ (पृ-५११०).

२ इदं वाक्यमुदाहृत्य वैशेषिकाधिकरणसुधाटिप्पण्यां वाक्यार्थरत्नमालायां (द्रं -सुधा -सम्पुटम्-१५. पत्रे.७२०७) अनेकवाक्यविरोधं प्रदर्श्य एकवाक्यता योज्येत्युक्तम् । विदांकुर्वन्तु सूरयः ।

### भावदीपः

**बन्धस्वरूपमिति** ।। 'प्रपञ्चितम्' इत्यनुषङ्गः ।। **तद्विरोधि चेति** ।। अशुद्धबुद्धित्वादिकम् ।। **वक्ष्यमाणेति** ।। **'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्'** (१७.१४) इत्यादिना उत्तराध्याये वक्ष्यमाणलक्षणमित्यर्थः । **पुनरुक्तीति** ।। आर्जवशौचादेरत्राप्युक्तेः 'तपः' इत्यनेन पुनरुक्तीत्यर्थः ।। १ ।।

**अहिंसा सत्यमक्रोधस्त्यागः[1] शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ।। २ ।।**

**भाष्यम् —** [4]पैशुनं परोपद्रवनिमित्तदोषाणां[3] राजादेः **कथनम्** ।

**'परोपद्रवहेतूनां दोषाणां पैशुनं वचः ।**
**राजादेस्तु मदाद्भीतेरदृष्टिर्दर्प उच्यते ।।'** **इत्यभिधानात् ।**

**लौल्यं रागः ।**

**'रागो लौल्यं तथा रक्तिः'** **इत्यभिधानात् ।**

**अचापलं स्थैर्यम् ।**

**'चपलश्चञ्चलोऽस्थिरः'** **इत्यभिधानात् ।। २ ।।**

### प्रमेयदीपिका

'पैशुनाभावो अपैशुनम् । [2]'पैशुनं च परस्यापराधवचनम्'[5] इति। तदसत् । शिष्यादिदोषानुवादस्य शिक्षार्थस्यापि तत्त्वप्राप्तेरित्याशयेनाह– **पैशुनमिति** ।। राजादेस्तच्छ्रावणम् । **परोपद्रवनिमित्त** इति दोषेषूपचारः । अनेन परोपद्रवायेति सूचयति । **वचः** कथनम् । **मदात्** कारणात् । **भीतेरदृष्टिः** अनुत्पत्तिरिति यावत् । **भीतेः** भीतिकारणस्य तथात्वेन **अदृष्टिरिति** वा । बालादीनां भीतेरदर्शनं व्यावर्तयितुं **मदात्** इत्युक्तम् । अनेन धात्वर्थोऽप्यनुगतः ।।

---

१. त्यागः मिथ्याभिमानवर्जनम् । 'मिथ्याभिमानविरतिस्त्याग इत्यभिधीयते' भा.ता.नि. १.१६.२७

२. 'पैशून्यं=सत्यस्यापि राजदेशपौरवातदिः निःप्रयोजनं वर्णनम्' इति मनु. स्मृ. न्या.१२.६.कुल्लूकः.

३. भावबोधानुगुणः । निमित्तानाम् इति हृषी-पाठः ।

४. पैशुनम् इति वे, वे-ग्रं नास्ति ।

५. शाङ्करभाष्ये तृतीयभागे पृ-२०२ ।

एतेनासुरलक्षणं दर्पोऽपि व्याख्यातः । अलोलुत्वाचापलत्वयोर्भेदं क्रमेण सप्रमाणकं दर्शयति– **लौल्यमिति** ।। लोलुत्वपर्यायोऽयमित्यत एवमुक्तम् ।। २ ।।

**भावदीपः**

राजादेः परकीयदोषश्रवणस्यैव परोपद्रवहेतुत्वाद्दोषेषु कथं तद्धेतुत्वोक्तिरित्यत आह – **राजादेस्तच्छ्रावणमिति** ।। अदृष्टिपदस्यार्थमाह- **अनुत्पत्तिरि**त्यादिना ।। यथाश्रुते भीतेः मनोधर्मस्य ज्ञातैकसत्वेनादृष्टेरयोगादिति भावः ।। **धात्वर्थोऽपीति** ।। **मदात्** इत्यादिना दर्पपदार्थव्याख्यानेनोक्तेऽर्थे [१]''दर्पहर्ष(वि)मोहनयोः'(**पा.धा.११९६**) इत्युक्तदृप्धात्वर्थानुगत इत्यर्थः ।। विमोहनस्यादृष्टिरूपत्वादिति भावः । गीतायां त्वप्रत्ययान्तश्रवणाद्भाष्ये **अल्पम्** इति कथमुक्तम्? इत्यत आह– **लौल्यमितीति** ।। २ ।।

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ।। ३ ।।**

**भाष्यम् — क्षमा तु क्रोधाभावेन सहापकर्तुरनपकारः[२] ।**

**'अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते'**

**इत्यभिधानात् ।। ३ ।।**

प्रमेयदीपिका

**अक्रोधः**(१६-२) इत्युक्तत्वात् **क्षमा** इति पुनरुक्तिरित्यत आह– **क्षमा त्विति** ।। क्रोधं दोषमपकारं च न करोति इति **अक्रोधदोषकृत्** । शत्रोः अपकर्तुः ।। ३ ।।

(असुरलक्षणम्)

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ।। ४ ।।**

**[३] दैवीसम्पद्विमोक्षाय निबन्धायाऽसुरी मता ।**

१. इत आरभ्य वाक्यत्रयं मं-मातृकायामेव ।

२. अपकृतिः-पां (प्रभ)।

३. **'मोक्षतारतम्यवादिनीः श्रुतिस्मृतीस्तावत्पठति -दैवीति ।। सम्पत् योग्यता । विमोक्षः विशिष्टमोक्षः ।**

**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

**भाष्यम् —** **दैवीं सम्पदम् अभिजातः** प्रतिजातः ॥ ५ ॥

## प्रमेयदीपिका

**सम्पदं दैवीमभिजातोऽसि** इत्यत्र अभिजातः उत्तमजन्मा । नायं धातुः सकर्मकः । तत् कथं द्वितीया? इत्याशङ्क्य 'अभिलक्ष्य जातः' इति केचित्[१] व्याचक्षते । तदसत् । अर्जुनस्य देवत्वेन देवत्वमुद्दिश्य जन्मायोगादित्याशयवानाह– दैवीमिति ॥ अनेनैतद्या-व्याचष्टे[२]।

नायमभिरुपसर्गः । येन तस्य जनिसम्बन्धे द्वितीयाऽनुपपत्तिः स्यात्[३], लक्षि[४]सम्बन्धे चोक्तानुपपत्तिः स्यात् । किन्तु प्रत्यर्थलक्षणे[५] कर्मप्रवचनीयः । तथा च 'कर्मप्रवचनीययुक्ते द्वितीया'(**पा.सू.२.३.८**)उपपद्यते । यथा वृक्षमभिवृक्षं प्रति विद्योतत इत्यत्र वृक्षो विद्योतनस्य लक्षणमित्यर्थः । एवं **दैवीसम्पत्** जातस्य तव लक्षणमित्यर्थः सम्पद्यते । तथा चार्जुनस्य प्राप्तदेवत्वाविरोध[६] इति । अत एव **'सम्पदं दैवीमभिजातस्य भारत'**[७], (१६.३) **'अभिजातस्य पार्थ सम्पदमासुरीम्'**(१६.४) इत्येतद्विहायेदं व्याख्यातम् । अर्जुनस्य देव-त्वप्रसिद्धेरेतत्साहचर्यात् तत्राप्येतदर्थत्वोपपत्तेः ॥ ५ ॥

## भावदीपः

**प्रत्यर्थलक्षण इति** ॥ 'लक्षणे इत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' (**पा.सू. १.४.९०**) इति प्रतीत्युपसर्गस्य लक्षणरूपेऽर्थे कर्मप्रवचनीयसञ्ज्ञोक्तेरिति भावः ॥ **अत एवेति** ॥ देवत्वस्य अर्जुनलक्षणत्वज्ञापनार्थत्वादेवेत्यर्थः। प्रसिद्धस्यैव लक्षणत्वात् । षष्ठ्यन्तनिर्दिष्टस्थले च देवासुरत्वाप्रसिद्धेरिति भावः ॥ ५ ॥

---

निवन्धः नीचस्थाने अन्धे तमसि बन्धः । तादर्थ्ये चतुर्थी ॥ **न्यायसुधा-३.४.१६(पृ-५१२४)।**

१. शाङ्करभाष्ये ,तृतीयभागे पृ-२०९ ।

२. मातृकायाम् । तदाचष्टे -वे ।

३. स्यात् इति मातृकायामेव ।

४. लक्षि इति कृ-टि, लक्ष्य इति इति श्रीनि-टि-पाठः ।

५. मातृकायाम्,भावदीपे च । तद्विवरणं च तत्रैव -प्रतेरर्थः प्रत्यर्थः । प्रत्यर्थश्च तल्लक्षणं च प्रत्यर्थलक्षणम् । तस्मिन् । अभिभाग इति लक्षणे अर्थे अभिः कर्मप्रवचनीयसञ्ज्ञ इत्यर्थः ।

६. नार्जुनस्याप्राप्तदेवत्वविरोधः इति, वे-ग्रं, मातृकायां च ।

७. मातृकायामेव ।

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥
[1]असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥ ८ ॥[2]

---

१ (अ)तत्त्वोद्योते-(पृ-२८५)टीका- 'प्रपञ्चानिर्वचनीयताभिधायिनां वाक्यानामुक्तार्थान्तरपरता-समर्थनार्थं तत्सत्यतां भगवद्गीताभिः श्रुतिभिश्च दृढीकरोति– 'असत्यं...जगतोऽहिता इत्यादि च गीतासु'।। टीका- ते असुराः ,असत्यत्वादप्रतिष्ठं ज्ञानबाध्यम् । तत एवानीश्वरम् । नच यतो यतो जातमसामसावीश्वर इति वाच्यम् । यतः -अपरस्परसम्भूतम् । एकस्मादेकस्य नोत्पत्तिरिति यावत् । सत्यं नचेत् किमसदेव? परस्परसम्भूतं नचेत् किं नित्यं स्वतो वा जातम् ? आद्यस्योत्तरम्– अन्यत् । सदसद्भ्यामिति शेषः । द्वितीयस्य - कामहैतुकम् । काम इति तत्कारणमविद्योपलक्ष्यते । अत्र जगदसत्यवादिनामसुरत्वाद्युक्त्या तत्सत्यताऽवगम्यते' ।।

(आ)वि.त.नि.टीकायाम् (पृ-६५१)-'अप्रतिष्ठं ज्ञानबाधितत्वात् । ते असुराः । अपरस्परसम्भूतं परमेश्वराधिष्ठितायाः प्रकृतेर्महान्,महतोऽहङ्कार इत्यादिक्रमेण परस्परसम्भूतं न भवति । सत्यं नचेत् किं तर्हि ? अन्यत् । सदसद्भ्याम् । पपरस्परसम्भूतं नचेत् किं तर्हि कामहैतुकम् । काम इति कार्येण कारणं मिथ्याज्ञानमुपलक्ष्यते ।

(इ) 'स इदं सर्वं भवति' इत्यत्रैतादृग्ब्रह्मज्ञानादविद्याकृतासर्वत्वनिवृत्त्येदं सर्वं भवतीति व्यावर्तकरूपासर्वत्वस्य ज्ञाननिवर्त्यत्वं परैरुक्तम् । तदसत् । ज्ञाननिवर्त्यत्वरूपासत्यत्ववादिनां निन्दनादिति भावेनाऽह -असत्यमिति' बृ.उ.भा - भावबोधे ३.९.४ ।।

२. (ई)ब्र.सू. २.१.१८ भाष्ये अर्धश्लोक उदाहृतः ।।

भाष्यदीपिकायां- ''विश्वमिथ्यात्वमतमासुरत्वादयुक्तमिति गीतास्मृत्या दर्शयति - असत्यमिति ।।

अपरस्परसम्भूतं किमन्यत् कामहैतुकम् । एतां दृष्टिमवष्टभ्य नष्टात्मनोऽल्पबुद्धयः ।।

प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।। इति वाक्यशेषः ।।

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।।

इति पूर्ववाक्ये प्रकृता आसुराः जगत् असत्यत्वादप्रतिष्ठं ज्ञानबाध्यं तत एवानीश्वरमित्याहुः । ननु यतो यतो जातमसावसावीश्वरोऽस्तु इत्यत उक्तम् - अपरस्परसम्भूतमिति ।। परमेश्वराधिष्ठितायाः प्रकृतेः महान्, महतोऽहंकार इत्यादिक्रमेण परस्परसम्भूतं न भवतीत्यर्थः । ननु सत्यं न चेत् किमसत् ? एवं परस्परसम्भूतं न चेत् किं नित्यम् ? स्वतो वा जातम् ? आद्यस्योत्तरम् - अन्यदिति ।।

**भाष्यम्** — जगतः सत्यं प्रतिष्ठा । ईश्वरश्च विष्णुः । तद् वैपरीत्येनाऽहुः ।

'तस्योपनिषत् सत्यस्य सत्यमिति ।
प्राणा वै सत्यम् , तेषामेष सत्यम्'[१]
(बृ.उ.८१.२०) इति हि श्रुतिः।

'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च ... स्थितं च यच्च सच्च त्यच्च'
(बृ.उ.२.३.१)[२] इति ।

'तस्योपनिषत् सत्यस्य सत्यमिति
एष ह्येवैतत् सादयति यामयति चेति'
इति प्राचीनशालाश्रुतिः ।

---

सदसद्भ्यामिति शेषः । द्वितीयस्योत्तरं - कामहैतुकमिति ।। काम इति तत्कारणमविद्या मिथ्याज्ञानं चोपलक्ष्यते । तथा चाविद्यादिकल्पितमित्यर्थः । 'एतां दृष्टिं' बुद्धिमवष्टभ्य 'नष्टात्मानो' दुष्टचित्ताः, अत एव 'अल्पबुद्धयः' अल्पज्ञानाः 'जगतोऽहिताः' विरोधिनोऽहितकरा वा । जगतः 'क्षयाय' अनिष्टप्राप्तये विनाशाय वा 'उग्रकर्माणः' क्रूरकर्माणस्सन्तः 'प्रभवन्ति' कलियुगादावुत्पद्यन्त इत्यर्थः । अत्र जगदसत्यतावादिनामासुरत्वायुक्त्या तत्सत्यताऽवगम्यत इति प्रकृतसङ्गतिः ।।

गीताभाष्ये तु - न केवलं जगतो मिथ्यात्वादि वदतामासुरत्वम् 'असत्यमप्रतिष्ठन्ते' इत्यनेनोच्यते, किन्तु जगज्जन्मादिकारणं विष्णुं ये न मन्यन्ते तेषां सर्वेषामपीति भावेन न विद्यते सत्यमस्येत्यसत्यं विष्ण्वाख्योत्पादकरहितम्, एवं न विद्यते प्रतिष्ठा प्रतिष्ठापक ईश्वरश्च विष्णुर्यस्य तदप्रतिष्ठमनीश्वरमिति चोक्तम् । 'अन्नाद् भवन्ति भूतानि' इत्यादिक्रमेण परस्परसम्भूतं न भवतीत्यपरस्परसम्भूतमेतादृशं जगद् ये आहुः, ते आसुरा इति व्याख्यातम् ।

(उ ) द्रं -बृ.उ.भा -६.३.९.।

१. (अ)वि.त.नि.टीकायामपीयं श्रुतिर्व्याख्याता । यत्सत्यस्य सत्यत्वे वाक्यान्तरसंवादमाह-तस्येति । सत्यस्य सत्यमिति तस्य परमात्मनः उपनिषत् रहस्यं नाम । तस्य व्याख्यानम् 'प्राणा वा' इति । प्राणन्तीति प्राणाः ब्रह्माद्याः । सम्पन्नानां सम्पन्नत्वे राजा हेतुरितिवत्, न प्राणानां सत्यत्वमपारमार्थिकं भवति, किन्तु तदधीनमेवेति ।।

(आ) न्यायामृते 'सत्यस्य' इति श्रुत्यर्थापत्तिप्रमाणभङ्गप्रकरणे विस्तृततया विवृतेयं श्रुतिः ।

२. (अ)'विशरणावसादनयुक्तं सत् । ततं सर्वज्ञं च त्यम्' बृ.उ.भा ।

(आ) 'उक्ता विद्याः हरेर्मूर्तामूर्तसारवैलक्षण्यज्ञानपूर्वकमनुष्ठिताः फलिष्यन्ति नान्यथेत्यतो मूर्तामूर्तसारस्वरूपोक्तिपूर्वकं हरेः सर्ववैलक्षण्यमाह- द्वे वावेत्यादिना खण्डेन । ब्रह्मणो हरेः मूतममूर्तं चेति द्वे रूपे प्रतिमे एवेत्यवधारणे । प्रतिमे एव न स्वरूपे इति । वावेति प्रसिद्धौ । मूर्तामूर्तयोर्विशेषणान्याह- मर्त्यमिति' इति खण्डार्थे ।

**परस्परसम्भवो ह्युक्तः अन्नाद्भवन्ति भूतानि (३.१४)इत्यादिना ।। ८ ।।**

## प्रमेयदीपिका

न केवलं जगतो मिथ्यात्वादि वदतामसुरत्वम् **असत्यमप्रतिष्ठं ते** इत्यनेनोच्यते । किन्तु जगज्जन्मादिकारणं[1] विष्णुं ये न मन्यन्ते तेषां सर्वेषामपीति भावेनाऽह– **जगत** इति ।। **तद्वैपरीत्येने**ति ।। न विद्यते सत्यमस्येत्यादि । **जगतः सत्यं विष्णुः** इत्यत्र श्रुतिमाह– **तस्ये**ति ।। **तस्य** विष्णोः **सत्यस्य सत्यमिति उपनिषत्** रहस्यं नाम । कथम्? **प्राणाः** मूर्तामूर्तं जगदिति यावत् सत्यमित्युच्यते । **तेषां** प्राणानाम् **एषः** विष्णुः **सत्य**मित्यर्थः ।।

एवं चेज्जगतो मुख्यं सत्यत्वं न भवेत् । अन्यथा निर्धारणायोगादित्यतो मूर्तामूर्तात्मकस्य जगतः सत्यत्वं तावदन्यथा श्रुत्यैव व्याचष्टे– **द्वे वावे**ति ।। **रूपे** प्रतिमे । तत्र **मूर्तं** 'स्थितम्' इति 'सत्' इति चोच्यते । **अमूर्तं** तु **यत्** इति **त्यत्** इति च उच्यत इत्यर्थः । तथा च **सच्च त्यच्च** सत्यमित्युक्तं भवति । इदानीं जगतः सत्यत्वं विष्णोः श्रुत्या व्याचष्टे– **तस्ये**ति ।। सादयति विशरणादिकं प्रापयतीति **सत्** । **यामयति** नियच्छतीति **यत्** । **सच्च** तत् **यच्च** सत्यमित्यर्थः । **प्रतिष्ठा** ईश्वरश्चेति प्रसिद्धमेव ।।

**अपरस्परसम्भूतम्** इत्यस्य 'अपरं परस्मात् सम्भूतम्'[2] इति व्याख्यानमसत् । प्रतिषेधप्रकरणात् । अतः परस्परसम्भूतं न भवतीत्याहुरित्येवं व्याख्येयम् । स्यादेवं यदि परस्परसम्भवो भगवतोऽभिमतः स्यादित्यत आह– **परस्परे**ति ।। यद्वाऽनेन परव्याख्याना-साधुत्वमुपपादयति । भगवता परस्परसम्भवस्योक्तत्वात् तद्वचनं कथमासुरमिति? ईश्वराक्षेपे तात्पर्यमिति चेन्न । पुनरुक्तिप्रसङ्गात् ।। ८ ।।

## भावदीपः

**न विद्यते सत्यमस्येत्यादीति** ।। अस्य जगतः सत्यं साधनरूपविशरणादि[3]प्रापकं नियामकं च न विद्यत इत्यस्य सत्यं न विद्यते प्रतिष्ठास्थितिहेतुरस्येति 'अप्रतिष्ठा' इत्यादिरूपेण ध्येय इत्यर्थः ।। **विशरणादिकमिति** ।। 'शद्लृ विषरण गत्यवसादनेषु' (पा.धा.१४२७)इति धातोरिति भावः ।। **प्रतिषेधेति** ।। 'असत्यम्' इत्यादिपदत्रये बहुव्रीहिप्रतिषेधस्य प्रक्रान्तत्वादित्यर्थः ।।

---

१. 'कर्तारम्' इति मातृकायां कारणपदविवरणम् ।

२. रामानुजभाष्ये, ३भागे. पृ.२१४ ।

३. विदारिणादि इति सो ।

उक्तत्वादिति ।। 'तृतीये' इति योज्यम् । **पुनरुक्तीति** ।। **अनीश्वरम्** इत्यनेनेति भावः।। ८ ।।

( आसुराणां प्रवृत्तिः )

**एतां दृष्टिमवष्टभ्य नष्टाऽत्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।। ९ ।।[१]**
**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ।। १० ।।**

**भाष्यम्** — दुष्पूरो हि कामः ।

**'पाताल इव दुष्पूरो मां हि क्लेशयते सदा'** (१२.१७७.३९)

**इति हि मोक्षधर्मे ।।**

प्रमेयदीपिका–

**काममाश्रित्य दुष्पूरम्** इति कामस्य दुष्पूरत्वं किं विशेषणम्? नेति ब्रूमः । किं तर्हि? कामस्य प्रवृत्तिहेतुत्वे हेतुरयमुच्यत इति भावेनाऽह– **दुष्पूरो** हीति ।। विशेषणमेव किं न स्यात्? कामस्य दुष्पूरत्वाव्यभिचारादिति भावेनाऽह– **पाताल** इवेति ।। १० ।।

**भावदीपः**

**अयमिति** ।। दुष्पूरत्वरूपो धर्मः कामस्य नानाविषयेषु प्रवर्तकत्वे बीजभूतोऽयमित्यर्थः ।।

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ।। ११ ।।**
**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**

१. 'नष्टात्मानो नष्ट(दुष्ट)चित्ताः । अल्पबुद्धयोऽल्पज्ञानाः । प्रभवन्ति कलियुगादौ । क्षयाय अनिष्टप्राप्तये' **वि.त.नि.टीकायाम् (पृ-६५१).**

ईहन्ते [1]कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥

[2]इदमद्य मया लब्धमिमं[3] प्राप्स्ये मनोरथम् ।

इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।

ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।

यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।

प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।

यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

( ईश्वरस्यैकस्यैव कर्तृत्वे बाधकोद्धारः )

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥[4]

**भाष्यम्- मामात्मपरदेहेष्विति** ।। न कस्यचित् विष्णुः कारयिता । यदि स्यान्मामपीदानीं कारयतु इत्यादि ।

---

१. सुधा-३.४.१६ (पृ-५०९४) कामकर्मत्वाद्धि विषयाः कामाः । कर्मणि घञो विधानात् । परिमले-कमु कान्तौइति धातोः, 'अकर्तरि च कारके सञ्ज्ञायाम् 'कर्मणि घञ् प्रत्यये,'अत उपधायाः'इति वृद्धौ काम इति सिद्धेः ।।

२. इमे (१३,१४,१५)श्लोकाः वराह.पु.चा.मा.-२३ अध्याये ७६,७,७८,७९ उदहृताः ।।

३. रामानुजभाष्ये -'इमम्' इति , शाङ्करभाष्ये च 'इदम्' इति पाठः ।

४ (अ) न्यायसुधायाम् -(पृ-४८९२)आत्मपरदेहेषु प्रेरकत्वेन स्थितम् । संसरन्तीति संसाराः देहाः । तस्य विवरणम् 'आसुरीष्वेव' इत्यादि ।।

(आ) 'मामात्म' इत्यनेनासुरस्वभावानामन्धतमसावाप्तिपर्यवसानमभिधीयते' न्यायसुधा(पृ.५१९१)।

**'ईश्वरो यदि सर्वस्य कारकः कारयीत माम् ।**
**अयेति वादिनं ब्रूयात् सदाऽधो यास्यसीति तु'**
**इति हि सामवेदे यास्कश्रुतिः ।। १८ ।।**

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भगवद्गीताभाष्ये षोडशोऽध्यायः ।। १६ ।।

## प्रमेयदीपिका

भगवद्द्वेषस्याऽत्मपरदेहाधिकरणत्वं कथम्? इत्यत आह– **मामिति** ।। कुतो न? **कारयिता यदि स्यात्** तर्हि इदानीमकुर्वाणं **मामपि कारयतु** । कुर्वाणं च निवारयत्वित्यर्थः। **सदाऽधः** नित्यनरकम् ।। १८ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां षोडशोऽध्यायः ।।१६ ।।**

## भावदीपः

भाष्यमवतार्य शेषोक्त्या व्याचष्टे– **कुत इति** ।। आदिपदार्थोक्तिः **कुर्वाणं चेति** ।।

।। इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते षोडशोऽध्यायः[1]।।१६ ।।

( आसुरलक्षणवतां फलम् )

**[2]तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**

---

१. षोडशस्त्रीसहस्रसमेतश्रीकृष्णार्पणमस्तु - इति ख मातृकायाम् ।

२. (अ) 'स्मरन्ति च'(ब्र.सू.३.१.१५) भाष्यम् – 'गच्छन्ति... तत्सदा' इत्यादि ।।

**तत्त्वप्रकाशिका** -सूत्रे वहुवचनश्रवणात् ' इत्यादि स्मरन्ति' इत्युक्तम् । तेन-'तानहं द्विषतः क्रूरान्' इत्यादे-स्सङ्ग्रहः । **भावदीपः**-'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इत्यादेर्गीतास्मृतेः सङ्ग्रह इत्यर्थः ।।

(आ)तत्त्वप्रदीपे-१.२.१२' सत्यं भिदा' इति सूत्रभाष्योक्तश्रुतिव्याख्यानतया - 'असत्यमप्रतिष्ठम्'-.. इत्यारभ्य 'तानहं.. योनिषु' इति भगवद्वचनम्, 'असत्यमप्रतिष्ठं ये (ते) जगदाहुरनीश्वरम् । त आसुराः स्वयं नष्टाः जगतः क्षयकारिणः' इति व्यासस्मृतिवचनम्' इत्याद्युदाहृत्य 'इत्यादिश्रुतिशतैरन्धन्तम एव मायिनां गतिरिति निश्चीयते' इति गीताश्लोको व्याख्यातः ।।

क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

( तमोद्वारं त्रिविधम् )

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ २१ ॥
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

( शास्त्रविधित्यागे सुखाभावः )

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

ओं तत्सदिति श्रीमगद्भवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे [1]दैवासुरसम्पत्ति(सम्पद्विभाग)योगो नाम षोडशोऽध्यायः ।। १६ ।।

---

( इ)तत्त्वोयोते व्यासस्मृतिवचनमुदाहृतम् ।।

१ ज्ञानमोक्षयोः साधन,विरोधरूप,देवासुरलक्षणप्रपञ्चनं - इति क्वचित् ।

## ।। अथ श्रीमद्भगवद्गीतायां सप्तदशोऽध्यायः ।।

(अर्जुनकृतशास्त्रविध्यज्ञानिनिष्ठाप्रश्नः)

**अर्जुन उवाच–**

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ।। १ ।।**

(अध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम् —** गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन । शास्त्रविधिमुत्सृज्य अज्ञात्वा एव[1]।

'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना'

इति विधिरुत्सृष्टो हि तैः ।

### प्रमेयदीपिका

अध्यायार्थमाह– **गुणेति** ।। गुणनिमित्ताः श्रद्धादीनां भेदाः । **नान्यं गुणेभ्यः कर्तारम्** (१४.१९) इत्युक्तत्वात् **प्रपञ्चयति** इत्युक्तम् । 'सात्त्विकानां पुमर्थसाधनत्वादनुष्ठेयत्वम्, अन्येषां तद्विरुद्धत्वाभावः[2], त्याज्यत्वं च ज्ञापयितुम्' इति शेषः । **शास्त्रविधिमुत्सृज्य** इत्यस्य 'वेदविधानमप्रामाण्यबुद्ध्या परित्यज्य'[3] इत्यर्थप्रतीतिं निवारयितुमाह– **शास्त्रेति**।। अज्ञानमेवात्रोत्सर्गः, न त्वप्रामाण्यबुद्ध्या त्याग इत्यर्थः ।। ननु प्राप्तपरित्याग उत्सर्गः[4] । एवञ्च प्रतीतार्थ एव युक्तः । नतु 'अज्ञात्वा' इति । तत्राह - **वेद इति**।। अर्थज्ञानपर्यन्तोऽयं विधिः । अयं च सर्वान् द्विजन्मनः प्राप्तः तैः अज्ञानिभिः **उत्सृष्टश्च** । अतो **अज्ञात्वा** इति युक्तमित्यर्थः ।।

---

१. बे,वे-ग्रं नास्ति । प्रभ-गुज वर्तते।
२. तद्विरुद्धत्वात् -प्रच । (क-मातृकायामपि वर्तते)
३. शाङ्करभाष्ये– तृतीयभागे पृ-२४० ।
४. 'उत्सर्ग इति । अपवादभिन्नस्थल इत्यर्थः' वि.त.नि.टी.भावदीपे ।

**भावदीपः**

गुणैर्भेदाः श्रद्धाऽऽहारयज्ञतपप्रभृतीनामिति विग्रहमुपेत्याह - **गुणनिमित्ता इति** ।। इत्युक्तत्वादिति ।। 'परिणामः सर्वोऽपि गुणकृतः' इत्युक्तत्वाच्चतुर्दश इत्यर्थः ।। प्रपञ्चनं किमर्थम्? इत्यत आह– **सात्त्विकानामिति** ।। धर्माणामित्यर्थः ।।

**भाष्यम् — 'ये वै वेदं न पठन्ते न चार्थं वेदोज्झांस्तान् विद्धि सानूनबुद्धीन्'**

**इति माधुच्छन्दसश्रुतिः ।**

**अन्यथा 'तामसाः' इत्येवोच्येत । नतु विभज्य । यदि सात्त्विकाः, तर्हि नोत्सृष्टशास्त्राः । नहि वेदविरुद्धो धर्मः ।**

**'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्'[1] (मनु.२.६)**

**इति हि स्मृतिः ।**

**'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः'[2]**

**इति च भागवते (भाग. ६.१.४०) ।। १ ।।**

**प्रमेयदीपिका**

अत्र श्रुतिसम्मतिं चाह– **य** इति ।। न चार्थमधिगच्छन्ति । सहानूनया वेदतदर्थाधिगतियोग्यया बुद्ध्या वर्तमानान् । सानूनबुद्धयोऽपि **'ये वेदं न पठन्ते'** इति योज्यम् । अप्रामाण्यबुद्ध्या परित्यज्य इत्येवार्थः किं न स्यात्? इत्यत आह– **अन्यथेति**।।

यद्यत्र वेदविरोधिनां बौद्धादीनां निष्ठा पृच्छ्येत तदा ते **तामसाः इत्येव** उत्तरम् **उच्येत** । तदीयतामसत्वस्याविकल्पितत्वादिति भावः । न केवलं वक्तव्यानुक्तिरेव दोषः । किन्तु तद्विरुद्धोक्तिश्च स्यादिति भावेनाऽह– **न त्विति** ।। **त्रिविधा भवति श्रद्धा** (१७.२) इत्यादिना श्रद्धां **विभज्य** उत्तरं नोच्येतेत्यर्थः । एवमुत्तरवचनेऽपि किं स्यात्? इति चेत् वेदाप्रामाण्यवादिनामपि पाक्षिकं सात्त्विकत्वं स्यात् । तथाच वक्ष्यामः । तदपि स्यादिति चेन्न । सात्त्विकत्ववेदविरोधित्वयोः सहानवस्थानादित्याह– **यदीति** ।। सहानवस्थानमपि कुतो

---

१. 'वेदो धर्ममूलम् । तद्विदां च स्मृतिशीले ' इति गौतमधर्मसूत्रे १.१/२ ।

२. इमे वाक्ये द्वितीयाध्याये ५२ श्लोके उदाहृते तत्रैव व्याख्याते च ।

निश्श्रेयम्? इति चेत् । सात्त्विकाः हि धर्ममाचरन्ति । 'सत्त्वाद्धर्मो भवेत् पुंसाम्' (भाग. ११. १३.२) इति वचनात् । तथा च वेदविरोधिनो धर्मिणश्चेत्युक्तं भवति । एवञ्च वेदविरोधी धर्म इत्याद्यापद्येत । तच्चानुपपन्नमित्याह– **न हीति** ।। कुतो न? इत्यत आह– **वेद** इति ।। १।।

**भावदीपः**

शेषमाह– **अधिगच्छन्तीति** ।। विकल्पितत्वादिति ।। **सत्वमाहो रजतस्तमः** इत्यनेनेति योज्यम् ।। **तथाच वक्ष्याम इति**[१] ।। एवञ्चेति ।। 'वेदविरोधिनश्च धर्मिणश्च' इत्युक्ते सतीत्यर्थः।।

**श्रीभगवानुवाच–**

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ।। २ ।।**

**भाष्यम्** — अतो विभज्याऽऽह– **त्रिविधा** इत्यादिना ।। २ ।।

**प्रमेयदीपिका**

ननु **तेषां निष्ठा का** ' (१७.१) इति पृष्टे सात्विकत्वादिकं वक्तव्यम् । **त्रिविधा** इत्यादिकं [२]किमुच्यते? इत्यत आह– **अत** इति ।। यत एवं अर्जुनेन वेदविधिमजानतां निष्ठा पृष्टा, अज्ञानं च न[३] भेदकं त्रयाणामपि सम्भवात् । न चाज्ञानस्य (प्र)भेदाः सन्ति । **अतः श्रद्धयाऽऽन्विताः** इति तद्विशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण तेषां स्वरूपम् आह इत्यर्थः ।। २ ।।

**भावदीपः**

**त्रयाणामिति** ।। सात्विकराजसतामसानामित्यर्थः ।। **तद्विशेषणत्वेनेति** ।। वेदविद्यज्ञ-विशेषणत्वेनेत्यर्थः । **तेषां** सात्विकादीनां वेदार्थाज्ञानामिति चार्थः ।। **कथं न व्याहतमिति** ।। सात्विकादिस्वरूपानुरूपेति न वक्तव्यमिति भावः ।। २ ।।

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**

---

१. अस्य वाक्यस्य व्याख्या नास्ति ।

२. श. मातृका.१+२ ।'किमर्थमुच्यते'-प्र । ' किमित्युच्यते' -भं मातृकायाम् ।

३. ब्रे, वे-ग्रं, गुज पुस्तकेषु नास्ति । मातृकात्रये वर्तते । अवश्यं चैतदेवम् ।

**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

**भाष्यम् — सत्वानुरूपा** चित्तानुरूपा । **यो यच्छ्रद्धः स एव सः** सात्त्विकश्रद्धः सात्त्विक इत्यादि ॥ ३ ॥

**प्रमेयदीपिका**

सात्त्विकत्वादिभेदेन श्रद्धा त्रिविधा इत्युक्ता । पुनः **सत्त्वानुरूपा सर्वस्य श्रद्धा भवति** इति वचनं कथं न व्याहतम्? इत्यत आह– **सत्त्वेति** ॥ **चित्तं** चैतन्यम् । जीव इति यावत् । ननु श्रद्धास्वरूपमेव निरूपितम् । न तु तदाश्रित्य[1] जीवस्वरूपम् । अतो न सङ्गतमुत्तरमित्यतो येन तदुच्यते तत्पठित्वा व्याचष्टे– **य** इति ॥ इत्यादि 'ज्ञातव्यम्' इति शेषः । राजसश्रद्धः राजसः । तामसश्रद्धस्तामस इत्यर्थः ॥ ३ ॥

**भावदीपः**

**विभज्य** इत्यनूद्य कर्मकारकमाह –विभज्य श्रद्धास्वरूपमिति ॥ ३ ॥

**यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।[2]**
**प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥[3]**

**भाष्यम् —** कः सात्विकश्रद्धः? इत्यादि **विभज्याऽह– यजन्त** इत्यादिना ।।४ ॥

१. वे-ग्रं, गु-ज, शमातृका १+२ । 'तदाश्रयजीवस्वरूपम्'-इति बे, भं-मातृकायां च ।

२. वराह.पु.चा.मा.२४अध्याये -

सात्विका राजसा जीवास्तामसाश्च तथाऽपरे ।।७५ ॥

अनादिकालतस्त्वेवं तत्तत्कर्माणि कुर्वते । मद्भक्तिवहुला ये स्युः सात्त्विकास्ते प्रकीर्तिताः ॥ ७६ ॥

केवलं विषयासक्तास्तत्तत्कामवशं गताः । ये भजन्ति कदाचिन्मां कदाचिद्रुद्रमीश्वरम् ॥ ७७ ॥

रविं विनायकं शक्तिं कदाचित्पूजयन्ति हि ॥ ७८ ॥

मुक्तिवाञ्छाविरहिताः भ्रमन्तीह पुनःपुनः । मम द्रोहरता नित्यं रुद्रादीनां च पूजकाः ॥ ७९ ॥

तत्तत्कामवशं याताः देहशोषं प्रकुर्वते । स्वप्नवद्विषयान् भुक्त्वा यान्ति तेऽन्धं तमो ध्रुवम् ।।८० ॥

तथाह्यनन्तान्नरकान् यान् गत्वा न निवर्तते । तामसास्ते समाख्याताः प्रत्येकं त्रिविधा इमे ।।८१।।

३. विष्णुं विहाय ये देवान् पितॄन् भूतेशमेव वा ।

साम्येन वा पूजयन्ति ते ज्ञेया आसुरा गणाः ॥ (भाग.ता ११.२१.३)

## प्रमेयदीपिका

**तां शृणु** इति प्रतिज्ञातं नोच्यते, **यजन्ते सात्त्विकाः** [१]इत्यप्रस्तुतं चोच्यत इत्यत आह– **क** इति ।। **इत्यादि** 'जिज्ञासायाम्' इति शेषः । विभज्य श्रद्धास्वरूपं प्रतिज्ञातं श्रद्धात्रैविध्यमेवोच्यते । अतो नासङ्गतिरिति भावः । एतेन **सात्त्विकाः** इत्यादेः 'सात्त्विक-श्रद्धाः' इत्यादिरर्थ उक्तो भवति ।। ४ ।।

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ।। ५ ।।**
**कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।**
**मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ।। ६ ।।**

**भाष्यम् —** भगवत्कर्शनं नामाल्पत्वदृष्टिरेव ।

## प्रमेयदीपिका

ननु निर्विकारस्य भगवतः कथं **मां चैवान्तःशरीरस्थं कर्शयन्तः** इति कर्शनमुच्यते? इत्यत आह– **भगवदिति** ।। 'प्रातिपदिकाद् धात्वर्थे बहुलम् इष्टवच्च'इति वचनाद् दृष्टिरपि णेरर्थ इति भावः । 'मां चैव जीवरूपेणान्तःशरीरस्थम्'[२] इति व्याख्यानं तु सम्यग्- व्याख्यानेनैव परास्तम् । जीवरूपत्वदर्शनस्यैव कृशीकरणत्वात् । 'मदनुशासनाकरणमेव मत्कर्शनम्'[३] इति व्याख्याननिरासार्थम् एव इत्युक्तम् । अशाब्दत्वात् ।।

## भावदीपः

**प्रातिपदिकादिति** ।। तृच्प्रातिपदिकात् दृशिरूपधात्वर्थेन बहुलं णिच् भवतीत्यर्थलाभात् गुणावादेशादौ सति 'कर्षयन्तः' इति रूपसिद्धेः **कर्शयन्तः** अल्पतां पश्यन्त इति गीतार्थ इत्यर्थ[४] इति भावः ।। **सम्यगिति** ।। अल्पत्वदृष्टिरेवेति व्याख्यानेनैवेत्यर्थः ।। **अन्तःशरीरस्थमितीति** ।।

---

१. बे, वे-ग्रं, गुज, १+२,। 'इत्यादिकम्'-प्र ।
२. शाङ्करभाष्ये -तृतीयभागे, पृ-२४८।
३. शाङ्करभाष्ये -तृतीयभागे, पृ-२४८। ।
४. इत्यर्थ इति सो नास्ति ।

कर्शयन्तः तदनुशासनमकुर्वन्त इति परव्याख्यानमित्यर्थः ।।

**भाष्यम् —'यो वै महान्तं परमं पुमांसं नैवं द्रष्टा कर्शकः सोऽतिपापी'**

इत्यनभिम्लान(त)श्रुतिः ।

आसुरो **निश्चयो** येषां त आसुरनिश्चयाः ।

**'देवास्तु सात्त्विकाः प्रोक्ता दैत्याः राजसतामसाः'**

इति ह्याग्निवेश्यश्रुतिः ।। ६ ।।

### प्रमेयदीपिका

उक्तव्याख्याने श्रुतिसम्मतिं चाऽह– **य** इति ।। **नैवं** महत्त्वविरुद्धम् । **द्रष्टा** इति तृन्नन्तम् । **कर्शकः** 'तस्योच्यते' इति शेषः । कर्मधारयत्वशङ्कानिरासार्थमाह– **आसुर** इति ।। **निश्चयः** श्रद्धा । कर्मधारयपक्षे हि सामानाधिकरण्यं गौणमिति कल्प्यम्, मत्वर्थीयप्रत्ययो वा । तथाच गौरवमिति भावः ।।

ननु प्रकरणात् 'तामसनिश्चयान्' इति वक्तव्यम् । **आसुरनिश्चयान्** इति कथमुक्तम्? इत्यत आह– **देवास्त्विति** ।। **सात्त्विकाः देवाः** देवपर्यायवाच्याः प्रोक्ताः । **राजसाः** तामसाश्च **दैत्याः** दैत्यपर्यायवाच्याः **प्रोक्ताः** इत्यर्थः ।। ६ ।।

### भावदीपः

**श्रुतिसम्मतिं चेति** ।। व्याख्यार्थस्य शाब्दत्वसमुच्चयार्थश्चशब्दः ।। श्रुतौ **नैवमिति** ।। महत्वाद्यज्ञानप्रतीतिनिरासाय तद्विरुद्धत्वाल्पत्वज्ञानलाभाय आह – **महत्वविरुद्धमिति** ।। अल्पत्वं दृष्ट्वेत्यर्थः ।। **तृन्नन्तमिति** ।। तृजन्तत्वे सति 'कर्तृकर्मणोः कृति' (पा.सू.२.३.६५) इति षष्ठी स्यादिति भावः ।। **तस्येति** महतः परमपुंसमित्यर्थः । **'त्रिविधा भवति श्रद्धा'**(१७.१) इत्युपक्रमविरोधायाऽह– **निश्चयः श्रद्धेति** ।। **गौणम्** इति ।। असुर-सम्बन्धिश्रद्धारूपत्वस्य तामसजनेषु मुख्यस्यासम्भवादित्यर्थः ।।

**मत्वर्थीय इति** ।। 'अर्श आदिभ्योऽच्'(पा.सू.५.२.१२७) इत्युक्तमत्वर्थक-अचूप्रत्ययान्तो वा कर्तव्य इत्यर्थः ।। **तामसनिश्चयानिति** ।। तामसश्रद्धानित्यर्थः । 'सात्विकाः सुराः' इत्यादि यत्र क्वचित् श्रुतप्रयोगनिर्वाहायाऽह– **देवपर्यायेति** ।। 'राजसादेः' इति श्रुतत्वाभावात् प्रकृते

असुरशब्दस्यैव भावाचाह– दैत्यपर्यायेति ॥ ६ ॥

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**

**( सात्त्विकादिभेदेन त्रिविधाहारनिरूपणम् )**

**आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥**[1]

**भाष्यम् —** प्रीतिः आनन्तरिका । हृद्यत्वं दर्शने । स्थिराश्च न तदैव पक्का भवन्ति। तथा ह्याज्यादयः ॥ ८ ॥

### प्रमेयदीपिका

'प्रीतिविवर्द्धनाः', 'हृद्याः' इत्येतयोरर्थभेदमाह– **प्रीतिरिति** ॥ **आनन्तरिकेति** ॥ ठन् प्रत्ययान्तम् । सेवाव्यवहितकाल इत्यर्थः । 'प्रियं तत्कालसौख्यदम्' इति वचनात् ।

दर्शनेऽनुभवे सति पश्चादपि यन्मनोहारित्वं तत् हृद्यत्वम् । **'हृद्यं पश्चात् मनोहारि'** इति वचनादित्यर्थः । आहाराणां क्षणिकानामभावात् कथं 'स्थिराः' इति विशेषणम्? इत्यत आह– **स्थिराश्चेति** ॥ चस्त्वर्थः प्रसिद्धं स्थैर्यं व्यावर्तयति । **तदैव** अचिरकाल एव । **पक्काः** निवृत्तपाकाः[2], चिरकालं देहे गुणप्रदा इत्यर्थः । असम्भवपरिहाराय तानुदाहरति– **तथा हीति** ॥ ८ ॥

### भावदीपः

ननु ठक्प्रत्ययान्तत्वे 'टिड्ढाणञ्' **(पा.सू.४.१.१५)** इत्यादिना ङीप्प्रत्यये सति आनन्तरिकी इति भाव्यमित्यतो नायं ठगन्तः, अपितु 'तद्धिताः'**(पा.सू.४.१.७६)** इति बहुवचन-निर्देशादन्य एवेत्याह– **ठन्प्रत्ययान्तमिति** ॥ तथाच टाबन्तः साधुरिति भावः ॥

---

१. पाद्मसंहितायां सप्तमाध्याये - सत्वादिगुणयुक्तानामाहारस्त्रिविधः स्मृतः ॥ ५७ ॥
स्निग्धाश्च मधुरा हृद्यास्तिष्ठतः प्रथमे गुणे । कट्वाम्ललवणप्राया: मध्यमे तिष्ठतः प्रियाः ॥ ५८ ॥
रसहीनं यातयामं पूतिगन्धं चिरोषितम् । उच्छिष्टं प्रीतिजननं जघन्यगुणवर्तिनः ॥ ५९ ॥

२. अयं भावदीपानुगुणः ।'निर्वृतपाकाः' इति पाठस्तु श्रीनि, कृ.टि अनुगुणः ।

इति वचनादिति ।।

'हृद्यं पश्चान्मनोहारि प्रियं तत्कालसौख्यदम्'

इति तात्पर्यवचनादित्यर्थः ।। निवृत्तेति ।। निष्फला इत्यर्थः ।। ८ ।।

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ।। ९ ।।**
**[1]यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ।। १० ।।**

( सात्त्विकादिभेदेन त्रिविधयज्ञनिरूपणम् )

**अफलाऽऽकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ।। ११ ।।**
**अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ।। १२ ।।**
**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ।। १३ ।।**

(कायिक-वाचिक-मानसिकभेदेन त्रिविधतपोनिरूपणम् )

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।[2]**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।। १४ ।।**

---

१. 'यातयामं गतरसं यामः सार इहोच्यते ' भा.ता.नि ।

२.(अ) वाङ्मनःकायजत्वेन तपस्तत् त्रिविधं मतम् ।देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।। २ ।।
अहिंसनं ब्रह्मचर्यं तपः शारीरमीरितम् ।। अनुग्रहकरं वाक्यं सत्यं भूतोपकारकम् ।। ३ ।।
स्वाध्यायाभ्यसनं चेति वाचिकं कथितं तपः।। सन्तोषः सततं ब्रह्मचिन्तयाऽऽत्मविनिग्रहः।। ४ ।।
भावशुद्धिः सौम्यता च तपो मानसमुच्यते ।। पाद्मसंहितायाम् अष्टमाध्याये ।
(आ) इमानि त्रीणि श्लोकानि का.वेदेशीये १.१.१८ मन्त्रव्याख्याने उदाहृतानि ।

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥**
**मनःप्रसादः सौम्यत्वं [1]मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

**भाष्यम् — सौम्यत्वम्** अक्रौर्यम् ।

'अक्रूरः सौम्य उच्यते' इत्यभिधानम् ।

**मौनं** मननशीलत्वम् ।

'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः'[2]

(बृ.उ. ५.५.१कहोळब्राह्मणे) इति हि श्रुतिः ।

'एतेन हीदं सर्वम् मतं । यदनेन हीदं सर्वं
मतं तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षते'

इति भाल्लवेयश्रुतिः ।

कथं चान्यथा[3] मानसं तपः स्यात्? ॥ १६ ॥

**प्रमेयदीपिका**

नन्वङ्गसौष्टवं सौम्यत्वम् । तत्कथं मानसं तप उच्यते? इत्यत आह– **सौम्यत्वमिति**॥ 'मौनं वाङ्नियमनम्' [4]इत्यन्यथाप्रतीतिनिरासार्थमाह– **मौनमिति** ॥

कुत एतत्? इत्यत आह – **बाल्यमिति** ॥ युक्तिबलोपेतत्वं **बाल्यम्** । आगमज्ञत्वं पाण्डित्यम् ।

१. (अ)'मौनं तूपासनासिद्धिः' इति भागवते एकादशे ।
(आ) सम्बन्धप्राप्तसुखादिजनितविकारप्रदर्शनरूपतूष्णींभावः मौनम्' इति सनत्सुजातीये २-२२ श्लोक० याख्याने श्रीवादिराजतीर्थाः ।
(इ) मौनेन कथं भगवत्प्राप्तिः इति विषये द्रं सनत्सुजातीये -३ अध्यायः ।
२. 'एवं पाण्डित्यं बाल्यं च निर्विद्य प्राप्य अथ अनन्तरं मुनिः ध्यानी भवति ' इति खण्डार्थे ।
३. कथमन्यथा-प्रभ, वे-ग्रं ।
४. रामानुजीये 'मनसा वाक्प्रवृत्तिनियमनम्'इति व्याख्यातम् ।
परं पैशाचभाष्ये 'मौनं वाक्संयमः' इति व्याख्यातम् । तृतीयो भागः- पृ -२६२ ।

अथ **मुनिः** मननशीलो भवतीत्यर्थः । **'एतेन हीदम्'** इत्युक्तमर्थं **यदनेन** इति हेतुत्वेनोपादत्ते । यस्मादेवं मुनिस्तस्मात्तं **मुनिरित्याचक्षते** । 'मन ज्ञाने' **(पा.धा.११७६)** इत्यतः इकारप्रत्ययः । उपधाया उकारश्च । मुनेर्भावश्च मौनम् । तच्च मननशीलत्वम्[1] आगमार्थस्य युक्तिभिरनुसन्धानम् । उक्तार्थानङ्गीकारे बाधकमाह– **कथमिति** ।। 'मौनम्' इति शेषः ।।

'वाङ्नियम एव न मौनम् । किन्त्वत्र तत्कारणमनोनियमो लक्ष्यते' इति **कश्चित्**[2] । तदसत् । 'आत्मविनिग्रहः' इति पुनरुक्तिदोषात् । कथश्चित् [3]परिहारेऽपि मुख्यार्थसम्भवे लक्षणाश्रयणस्यैव दोषत्वात् ।। १६-२२ ।।

**भावदीपः**

'तस्मान्मुनिः' इत्ययं विधिरित्युपेत्य तदनन्तरमपेक्षितमध्याहृत्योत्तरवाक्यं संयोजयति– **'यस्मादेवं मुनिस्तस्मात्' इत्यादिना** ।। 'मौनं मननशीलत्वम्' इति भाष्यं कार्यकारणभावाभिप्रायमिति भावेनाऽह– **तच्चेत्यादिना** ।। ननु वाङ्नियमकारणमनोनिग्रहो मौनपदेन, आत्मनिग्रहपदेन तु चक्षुरादीन्द्रियनियमनहेतुमनोनिग्रहो गृह्यत इत्यत आह– **कथश्चित्परिहारेऽपीति** ।। एवेति ।। अस्मदुक्तार्थ एवेत्याहेत्यर्थः।। १६ ।।

( सात्त्विकादिभेदेन त्रिविधतपोनिरूपणम् )

**श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।**
**अफलाऽकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ।। १७ ।।**
**सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ।। १८ ।।**
**मूढग्राहेणाऽत्मनो यत् पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत् तामसमुदाहृतम् ।। १९ ।।**

---

१. श.मातृका१+२+भं मातृका च। शीलत्वाख्यम्- इति प्रच ।

२. शाङ्करभाष्ये 'वाक्संयमोऽपि मनस्संयमपूर्वको भवतीति ..मनस्संयमो मौनमिति', ३भागः,पृ -२६१ ।

३. तत्परिहारे इति कृ.टि श.मा.२ पाठः । कथश्चित्परिहारे इति भं-मातृका, भावदीपसम्मतपाठः ।

( सात्त्विकादिभेदेन त्रिविधदाननिरूपणम् )

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम्[१] ॥ २१ ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ॥ २२ ॥

( ब्रह्मणो त्रिविधनिर्देशः )

ओ३म् तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ।

**भाष्यम् — पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह– ओ३म् तत्सत् इत्यादिना ॥**

### प्रमेयदीपिका

**'ओ३म्'** इत्यादिकं तु प्रकृतासङ्गतं कथमुच्यते? इत्यत आह– **पुनश्चेति** ॥ **कर्म** इति यज्ञ उच्यते । **आदिपदेन** तपोदाने । **इतिकर्तव्यता** इत्थम्भावः । **विधानार्थं** प्रतिपादनार्थम् । **अफलाकाङ्क्षिभिः** इत्यादिनोक्तत्वात् **पुनश्च** इत्युक्तम् । यज्ञतपोदानानां सात्त्विकत्त्वादि हेतवो असाधारणधर्माः प्रागुक्ताः । साधारणांस्तु वक्तुं पुराकल्पादिरूपम् **अर्थवादमाह** इत्यर्थः ॥

### भावदीपः

**इत्थम्भाव इति** ॥ 'ओ३म् तत् सत्' इतिशब्दत्रयार्थभगवज्ज्ञानभक्त्यादिपूर्वकं फलानभिसन्धानेन ओमादिशब्दत्रयार्थभगवन्तमुद्दिश्य ब्राह्मणैः सह यज्ञतपोदानानुष्ठानं कार्यमित्येवं यज्ञास्तदनुष्ठानोपयुक्ताङ्गकलाप इत्यर्थः । अर्थाभावे विध्यभावात् कल्प्याविध्यभिप्रायं भाष्यमिति भावेनाऽह- **प्रतिपादनार्थमिति** ॥ **प्रागुक्ता इति** ॥ **अफलाकाङ्क्षिभिः**

---

१. प्राचीनपाठः । 'तद्राजसमुदाहृतम्'- इति रामानुजीयपाठः ।

इत्यादिनोक्ता इत्यर्थः ।। **साधारणांस्त्विति** ।। ज्ञानभक्त्यादिरूपानित्यर्थः ।। **पुराकल्पेति** ।। अनेककर्तृकचरितानुवादमित्यर्थः ।। मोक्षकाङ्क्षिभिरिति बहुवचननिर्देशादिति भावः । **आदिपदेन** एककर्तृकचरितानुवादाख्यपराकृतिरूपमिति गृह्यते । तेन 'विहिताः' इति कर्तुरेकत्वप्रतीतेरिति ज्ञेयम् ।।

**भाष्यम् — परस्य ब्रह्मणः ह्येतानि नामानि ।।**

**प्रमेयदीपिका**

ब्रह्मशब्दस्य हिरण्यगर्भाद्यर्थतां निर्देशशब्दस्य च भावार्थतां वारयितुं व्याख्याति– **परस्येति** ।। निर्दिश्यतेऽनेनेति **निर्देशः** नाम । कुत एतत्? इत्यतो **हि** इत्युक्तम् । भावार्थत्वे 'ओ३म् तत् सत्' इत्येतैः सामानाधिकरण्यानुपपत्तेः नामार्थत्वमेवाङ्गीकार्यम् । ॐआदिकं च परब्रह्मनामत्वेन प्रसिद्धमित्यर्थः ।।

**भावदीपः**

**भावार्थतामिति** ।। 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इत्युक्त भावार्थतामित्यर्थः ।। निरुपपदाद् 'दिश अतिसर्जने'**(पा.धा.१२८३)** इत्यतो भावे घञन्तोऽयं शब्द इति भ्रान्तिं वारयितुमित्यर्थः । तथात्वे निर्देशशब्दस्योक्तिरित्यर्थापत्तेरिति भावः । निर्दिश्यते व्यवह्रियते अर्थोऽनेनेति करणे घञन्तोऽयं शब्द इत्यर्थः ।।

**( ओम्शब्दार्थनिरूपणम )**

**भाष्यम् — 'ओतं जगद् यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च ।**
**सर्वैः शुभैश्चाभियुतो न चान्यैः ओ३म् तत् सत् इत्येनमतो वदन्ति'**
**इति हि ऋग्वेदखिलेषु[1]।**

**द्वितीयपादस्तच्छब्दार्थः ।**

**प्रमेयदीपिका**

तामेव प्रसिद्धिं दर्शयति– **ओतमिति** ।। ओतं प्रविष्टम् आश्रितं **यत्र** परमेश्वरे यः **स्वयं**

---

१. 'ओतमस्मिन् जगयस्मादोमित्युक्तो हरिस्सदा ।
तमेव जगदाधारं यतयस्समुपासते' इति कर्मनि.भा.उ.मान्यसंहितावचनम् ।

च जगति ओतः प्रविष्टः । पूर्णः, अनुपचारतः मुख्यया वृत्त्या । अत्र 'ओतं जगद् यत्र' इत्यादिना ॐशब्दस्य निमित्तद्वयेन भगवति वृत्तिर्दर्शिता[१] । 'अवतेः टिलोपश्च'[२]इति

---

१. अत्र मातृकायामेवं विवरणम् - ..'जगत् अवति ओमिति कर्तृव्युत्पत्तिः । अवतेः प्रवेशनार्थत्वात्' ।

२. **न्यायसुधा.१.१.१** 'ॐङ्कारस्तावद् ओतत्वस्य गतत्वस्य प्रविष्टत्वस्य वा वाचकः । गत्यर्थस्यावतेः खलु रूपमेतत् । 'अवतेष्टिलोपश्च' इति वचनात् । 'ॐ' इति पुनः कस्य वक्ता?' इति प्रश्नपूर्वकमवति-र्नामाऽयं धातुर्गतिकर्मा प्रवेशनकर्मा च' इत्यन्यत्राप्येवमेव निरुक्तत्वात् । तथाच यद्यसौ कर्मणि तदा कर्तुः, यदि वा कर्तरि तदा कर्मणोऽपेक्षायामुपपदाद्यभावे योग्यतया श्रुत्यन्तरबलाद्वाऽसावोङ्कारस्तस्य जिज्ञास्यस्य गुणै-रानन्दाद्यनन्तकल्याणगुणैर्गुणान् वोततां वक्ति ।।'

**परिमलम्** 'गत्याद्यर्थस्येति ।। अव-रक्षण,गति,कान्ति,प्रीति,तृप्त्यवगम,प्रवेश,श्रवण,स्वाम्यर्थ-याचन-क्रियेच्छा-दीप्त्यवाप्त्यालिङ्गन-हिंसा-दान-भाग-वृद्धिवति भीमसेनधातुपाठेऽवतेः अनेकार्थत्वोक्तेः गत्याद्यर्थस्येत्युक्तम् । कथं रूपमित्यत आह ।। अवतेरिति ।। उणादावाद्यपादे 'अर्तिस्तुसुहुसृधृक्षिक्षुभाया-वापदियक्षिनीभ्यो मन्' इत्यव्यवहितसूत्रान्मन्प्रत्ययमनुवर्त्य अवतेष्टिोपश्च इति सूत्रे अवतेर्मन्प्रत्ययः टिलोपश्च भवतीति सूत्रार्थ उक्त उणादिवृत्तौ । 'टिलोपश्च' इति सामान्योक्तावपि मन्प्रत्ययस्यैव टिोपो भवति । टिग्रहणसामर्थ्यात् । अवतिधातोरेव टिलोपे टिग्रहणमनर्थकम् । लोप इत्युक्तावप्यवधातार्लोपो भविष्यति।।

न च 'अलोऽन्त्यस्य' इति परिभाषयाऽवधातोर्वकारमात्रोपनिवृत्त्यर्थं टिग्रहणमिति शङ्क्यम् । षष्ठीनिर्दिष्टस्याल एवालोन्त्यपरिभाषावतारात् । इह च मन्प्रत्ययविधानार्थमवतेरित्यस्य पञ्चम्यन्तत्वात् । 'अलोन्त्यस्य' इति वकारमात्रस्यलोपेऽप्यतो लोप इत्यकारस्य ोपः स्यादेवेत्यनर्थकं टिग्रहणम् ।।

ननु च 'अतो लोपः' इत्यस्याकारान्तस्य लोप इत्यर्थ इति चेत् सत्यम् । आद्यन्तवदेकस्मिन्नित्याद्य-न्तवावसम्भवात् ।। केचित्तु यदि धातोष्टिलोपस्तर्हि 'अवतेर्डिच' इति सूत्रकरणेनैवावतेर्मन्प्रत्ययो डिच्च' इत्युक्तावपि धातोस्सर्वस्य लोपः, सि इति टिलोप इति न वक्तव्यम् । तेन ज्ञायते प्रत्ययस्यैव टिलोप इति टिग्रहणसामर्थ्यं प्रकारान्तरेणाहुः । तथाच अवम् इति स्थिते 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यकारवकारयोर्द्वयोरपि ऊठि कृते सवर्णदीर्घे सार्वधातुकार्धधातुकयोरिति गुणे 'नेड्वशि कृति' इतीडागमाभावे चोमिति रूपमित्यर्थः ।।

यद्यप्यङ्गपादे 'ज्वरत्वर' इति सूत्रवृत्तौ कौ खादौ किति परत ऊठ् भवतीत्येवोक्तम्, नत्वनुनासिके परत' इत्यपि । तथाप्युणादिवृत्तौ 'ज्वरत्वर' इत्यूठ् इत्युक्तमेवोमिति रूपसिद्धेरुक्तत्वात् । 'छ्वोः शूडनुनासिके च' इति पूर्वसूत्राद् 'अनुनासिके च' इत्येतत् 'ज्वरत्वर' इत्यत्राप्यनुवर्तत इति ज्ञायत इत्यदोषः । धातुवृत्तावप्येवमुक्तेश्च औणादिकानामर्थानुमत्यदृष्टेरोपदेऽप्येव-मिति शङ्कानिरासायाह ।। ओमितीति ।। गतिकर्मेति बहुव्रीहिः । गतिक्रियावाचीत्यर्थः । एवमग्रेऽपि ।।

अन्यत्रेति महाभाष्य इत्येके । निरुक्तग्रन्थ इत्यन्ये ।। कर्मणीति ।। यद्यप्युणादीनामपि धात्वधिकारविहितत्वेन कृदतिङ् इति कृत्संज्ञकत्वात् कर्तरि कृद् इति कर्तर्येवोणादिः विहितः । तथाऽपि 'उणादयो बहुलम्' इति बहुलग्रहणात् कर्मणीत्युक्तम् । निष्पन्न इति योज्यम् ।। '

वचनात् । **सर्वैः** इत्यनेन सच्छब्दस्य । **'साधुभावे च'** (१७.२६) इति वक्ष्यमाणत्वात् । तच्छब्दस्य तु न केनापि । अतः **ॐ तत् सत्** [1]इत्ययुक्तमित्यत आह– **द्वितीयेति** ।। **'वेदोक्तः'** इति **द्वितीयपादः** तच्छब्दार्थव्याख्यानपरः । **तत्** इति हि नित्यपरोक्षत्वमुच्यते । नचेश्वरस्वरूपमनुमातुं शक्यम् । अतो वेदैकवेद्यत्वात् **तत्** इत्युच्यत इति भावः ।।

**भावदीपः**

**निमित्तद्वयेनेति** ।। सर्वाश्रयत्वसर्वत्रप्रतिष्ठितत्वरूपनिमित्तद्वयेनेत्यर्थः ।। **अवतेरिति** ।। औणादिकसूत्रेण 'गतिकान्तिप्रवेश'(**पा.धा.**) इति प्रवेशार्थकादवतेर्मन्प्रत्यये तस्य टिलोपे 'ज्वरत्वर'(**पा.सू.६.४.२०**) इति ऊटि गुणः ।।

ननु तच्छब्दो वेदोक्तं वक्तीति श्रुतिगतद्वितीयपादेन गम्यते । तथाच परोक्षेऽपि ईश्वरे प्रत्यक्षावसरेऽप्यनुमानप्रवृत्तिरस्तु । तथाच **वेदोक्तरूपः** इत्यनेन कथं तच्छब्दार्थो भगवानिति व्याख्यानप्राप्तिः? इत्यत आह - **न चेश्वरेति** ।। शास्त्रयोनिसूत्रे भाष्यादौ तथोक्तेरिति भावः ।।

**भाष्यम् — 'सदेव सोम्येदमग्र आसीत्'**(छां.उ.६.२.१)**इति च ।**

**'ओ३म् इति ब्रह्म'**[2](तै.उ .१.८.१) **इति च ।**

**तेन ब्रह्मणा । आत्मपूजार्थम् । वेदविधिः व्यञ्जनम् ।**

---

श्रुत्यन्तरादीति ।। 'ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च ।
सर्वैः शुभैश्चाभिहितो न चान्यैरों तत्सदित्येनमतो वदन्ति'

इति सप्तदशगीताभाष्योक्तश्रुतिबलात् 'ओमिति' इति श्रुतिबलाच्च 'ओंनामा भगवान्विष्णुरधिकोच्च-गुणत्वतः' इत्यादि तैत्तिरीयभाष्योक्तस्मृतिबलात्

'ओतमस्मिन् जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः' इत्यादि छान्दोग्यभाष्योक्तस्मृतिबलाच्चेत्यर्थः ।।

कर्मसाधनत्वेऽर्थमाह ।। गुणैरिति ।। कर्तरि निष्पन्नत्वेऽर्थमाह ।। गुणान्वेति ।। पक्षद्वयेऽपीति ।। गतिप्रवेश-रूपार्थद्वयपक्षेऽपीति वा कर्तृकर्मणोरन्यतरार्थनिष्पन्नत्वपक्षेऽपि इति वाऽर्थः ।।'

(आ) ष.प्र.उ.५.१.मन्त्रटिप्पण्यां मङ्गालीये -ओङ्काररूपनिष्पत्तिः- द्रं ।

१. 'इति, तदयुक्तमित्यतः' इति श्रीनि.टिपाठः ।

२. 'ओं नामा भगवान् विष्णुरधिकोच्चगुणत्वतः' इति तै भा । 'वेदविद्याभ्यासार्थिनः पूर्वभाविनीं प्रणवविद्यामाह -ओमिति ब्रह्मेति । ब्रह्म विष्णुः ॐ इत्युच्यते' (तै.खं.रा)

### प्रमेयदीपिका

'सत्''ओ३म्'शब्दयोः परब्रह्मनामत्वे श्रुत्यन्तरं चाह– **सदेवेति** ।।

**तेन** इति निर्देशपरामर्श इति **कश्चित्**[१]। तदसदिति भावेनाऽह– **तेनेति** ।। कुत एतत्? निर्देशस्य ब्राह्मणादिविधानायोगात् । निर्देशस्तुत्यर्थमिदमुच्यत इति चेन्न । [२]भूतोक्तिसम्भवे तदयोगात् । ब्रह्मणाऽपि ब्राह्मणादिविधानानुपपत्तिः प्रयोजनाभावाद् इत्यत आह– **आत्मेति** ।। आत्मपूजया प्राणिनां सुखार्थं ब्राह्मणादयो विहिता इति सम्बन्धः ।।

'ब्राह्मणादिवत् वेदानामपि विधानं निर्माणमेव'[३] इति प्रतीतिनिरासार्थमाह– **वेदेति** ।। व्यञ्जनमेव विधानं न निर्माणमित्यर्थः ।।

### भावदीपः

**निर्देशपरामर्श इति** ।। **तेन** इत्यनेनेति योज्यम् । **भूतेति** ।। पूर्वं भूतस्य भूसत्तायाः परब्रह्मरूपविद्यमानस्यार्थस्योक्तित्वसम्भवे स्तुत्यर्थत्वायोगादिति भावः ।।

**भाष्यम् — मा तूक्ता पुरस्तात् ।। २३ ।।**

### प्रमेयदीपिका

**( वेदे अनादिः शब्दार्थसम्बन्धः )**

सकृच्छ्रुतस्य विहितशब्दस्य द्विधा अर्थकल्पनं कुतः? इति चेत् - वेदापौरुषेयत्वस्य प्रमितत्वात् । किं तत्प्रमाणम्? इत्यत आह– **मा त्विति** ।। परमेश्वरस्य वेदव्यञ्जनं नाध्यापकवत् । किन्तु स्वातन्त्र्यमप्यस्तीति ज्ञापयितुं विधिग्रहणं कृतम् । वेदो हि विध्यात्मा अस्ति । 'विधिः', 'प्रेरणम्', 'नियोगः' इति चानर्थान्तरम् । नच नियोक्तारमन्तरेण नियोगः सम्भवति । नच शब्दादीनां नियोक्तृत्वं सम्भवति । लोकविरोधात्[४]। न चोच्चारक एव नियोक्ता ।

१. शाङ्करभाष्ये तृतीयो भागः- पृ -२६८ ।

२. ससम्यन्तः भावदीपे, श्रीनि.टि अनुगुणश्च । 'सम्भवेन' इति तृतीयान्तपाठः कृ.टि. ।

३. शाङ्करभाष्ये तृतीयो भागः- पृ -२६८ ।

४. **विष्णु.त.नि.टीकायां** ब्रह्माण्डपुराणवचनोदाहरणेनापौरुषेयत्वसमर्थनं यथा -
'नित्या वेदा समस्ताश्च शाश्वता विष्णुबुद्धिगाः' इत्यत्र 'ननु 'विधिः' 'नियोगः' प्रेरणा' इत्यनर्थान्तरम् । सच प्रेरकपुरुषधर्मः । अतो वैदिकानां विध्युद्देशानां लौकिकवत् स्वतन्त्रवक्तृकत्वम् एवोचितम्। तथा अर्थवादानामपि हानोपादानाभिप्रायेण प्रवृत्तत्वाद्, अभिप्रायस्य च स्वतन्त्रवक्तृधर्म-

'मां उपासीत' इत्यादावव्यवस्थापातात् । तस्मात् स्वतन्त्रेण वक्त्रा भाव्यम् । न चैवं पौरुषेयत्वापत्तिः । अनादिसिद्धेनैव शब्दार्थसम्बन्धेन तस्य नियोक्तृत्वाभ्युपगमादिति।।२३।।

**भावदीपः**

**मा त्वितीति** ।। द्वितीये **'देहिनोऽस्मिन्'** (२.१३) इति श्लोकव्याख्यानावसरे धर्मादिसिद्ध्यन्यथानुपपत्तिरूपप्रमाणमुक्तमित्यर्थः ।। **लोकेति** ।। लोके चेतनस्यैव नियोक्तृत्वदृष्टेरिति भावः ।। **अव्यवस्थेति** ।। उच्चारकाणामनेकत्वेनानेकेषाम् अस्मच्छब्दार्थत्वापत्त्या ब्रह्मैव उपास्यमिति व्यवस्था न स्यादित्यर्थः ।। २३ ।।

**तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्** ।। २४ ।।[1]
**तदित्यनभिसन्धाय फलं यज्ञतपः क्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः** ।। २५ ।।

**भाष्यम् —** **तत् फलं मे स्यात् इत्यनभिसन्धाय** ।। २५ ।।

**प्रमेयदीपिका**

'तदित्यनभिसन्धाय' इति वाक्यं ब्रह्मणीव यज्ञादावपि [2]तच्छब्दस्य प्रवृत्तिं प्रतिपादयतीति ज्ञापयितुं योजयति– **तदिति** ।। वेदोक्तं स्वर्गादिकम् ।। २५ ।।

**भावदीपः**

**प्रतिपादयतीति** ।। 'भगवान्' इति योज्यम् । 'ज्ञापयति' इत्यत्राप्येवं ज्ञेयम् ।।२५।।

---

त्वात् ।..तस्मादेवमादीनां पौरुषेयत्वमेव इत्यतो 'वेदा नित्याः' इत्युक्त्वा 'समस्ताश्च' इत्याह । कथमिति चेत्? नहि वेदे वयं पुरुषाभिप्रायप्रवेश एव नास्तीति वदामः । तथात्वे सङ्कल्पप्रार्थनादिवाक्यनाम् आनर्थकत्वप्रसङ्गादिति भावः । कथं तर्ह्यपौरुषेयत्वमित्यत आह - शाश्वता इति । शश्वदेकप्रकाराः पूर्वं स्थितान्येव वेदवाक्यानि कानिचित् कैश्चित्पुरुषैः स्वाभिप्रायनिवेशेन प्रयुज्यन्ते, नत्वपूर्वाणि क्रियन्त इत्याशयः' ।।

१. 'तस्मादोमित्युदाहृत्य यज्ञदानादि कुर्वते' -अनु.१.१.५(श्लो-२.१) ।

२. वे,-वे-ग्रं, श.मा- १+२ । भं-मातृकायां विवरणे- वेदैकवेद्यत्वेन' इति ।

**सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ।। २६ ।।**

**भाष्यम् — सद्भावशब्देन** प्रजननं **सूचितम्**[१] । **ॐ** इत्युक्त्वा **अनभिसन्धाय फलं** यज्ञदानतपआदिकृताम् **अतिप्रीतेः नामसाम्याद्** ब्रह्मैव **निष्पादितं**[२] भवति इत्याशयः।।

**प्रमेयदीपिका**

'सद्भावे सत्तायाम्'[३] इति प्रतीतिनिरासार्थमाह– **सद्भावेति** ।। **प्रजननं** प्रागसतः सत्ताऽऽपादनम् । यद्यपि सद्भावशब्दः सत्तामात्रवाची । तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात् सत्ताविशेषप्रजननपर इति ज्ञायत इति प्रतिपादयितुं[४] **सूचितम्** इत्युक्तम् ।।

नन्वनेन यज्ञादीनां का इतिकर्तव्यता प्रतिपादिता भवति? इत्यत आह– **ॐ इति**।। उक्तोङ्कारार्थज्ञानपूर्वकम् **अनभिसन्धाय**, फलं ब्रह्माभिसन्धाय च ब्रह्मज्ञानभक्तिपूर्वकं तद्विषयत्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सहेत्यपि ग्राह्यम् । **आदि**पदेन जपादिग्रहणम् । षष्ठी तृतीयार्थे । **नामसाम्यात्** नामसाम्येनावगतात् तत्प्रतिमात्वात् । घटादीनामपि ब्रह्मप्रतिमात्वसाम्यात् को विशेषो यज्ञादेः? इत्यत उक्तम्– **अतिप्रीतेरिति** ।। ब्रह्मणः यज्ञादिषु **निष्पादितं** प्रतिष्ठापितम् । अतः 'एवं क्रियमाणं[५] यज्ञादिकं सात्विकं अन्यद्राजसं तामसं वा इत्येवमितिकर्तव्यता प्रतिपादिता' इति वाक्यशेषः ।।

अत्र हि 'ओं तत् सत्' इत्यनेन ब्रह्मणो यन्नामत्रयं तद्यज्ञादेरपि वाचकमिति प्रतिपादितम्।

---

१. न्यायसुधायाम् -१.१.१५ 'सत्यं ज्ञानम्' इति श्रुतिव्याख्याने सच्छब्दः सद्भाववाची।'सद्भावे ..प्रयुज्यते' इति वचनात् । सद्भावो जन्म । यथोक्तम् - सद्भावशब्देन प्रजननं सूचितमिति । तथाच सच्छब्दे जन्मवाचिनि कर्मण्युपपदे यातेरन्तर्णीतण्यत्थात् 'आतोनुपसर्गे कः' इति कप्रत्यये कृते 'अयस्मयादीनि छन्दसि' इति छन्दस्युपपदस्य भसंज्ञायां सत्यमिति भवति।ततः ' सत् सद्भावं जन्म, यापयेत् प्रापयेत्, स्वव्यतिरिक्तं सर्वं, यस्मात् तस्मात्, तद् ब्रह्म सत्यं कथ्यते' इत्युक्तम् ।।

२. ब्रह्मैव निष्पादितं = सन्निधापितं स्यात् । यज्ञादेः तत्प्रतिमात्वात्। ब्रह्मप्रतिमात्वं कुतः नामसाम्यात् । इति पद्मनाभतीर्थीये ।

३. रामानुजभाष्यम् तृतीयभागः-पृ-२७२ ।

४. 'ज्ञापयितुम्' -इति क मातृका ।

५. मातृकायामेव । वे-क्रियमाणे इति अपपाठः ।

तेन यज्ञादेर्ब्रह्मप्रतिमात्वं सूचितम् ।। **ब्राह्मणाः** इत्यादिना ओङ्कारं ब्रह्मणि यज्ञादौ च व्युत्पाद्य तदुच्चरणाचार उक्तः । तेनार्थस्मरणपूर्वकमोङ्कारमुच्चार्य वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकं कार्यमिति सूचितम् ।।

**तत्** इत्यनेन तच्छब्दो यज्ञादौ ब्रह्मणि च व्युत्पादितः । तेन **फलमनभिसन्धाय** ब्रह्माभिसन्धाय चेति लब्धम् । **सद्भावे** इत्यनेन सच्छब्दो ब्रह्मणि व्याख्यातः । तेन ब्रह्मज्ञानपूर्वकमिति लभ्यते ।। २६ ।।

**भावदीपः**

**सूचितमित्युक्तमिति** ।। सद्भावपदस्य प्रजननवाचकत्वे तु 'उक्तम्' इत्येव ब्रूयादिति भावः ।। **निष्पादितम्** इत्यनेन अन्वयमाह-**षष्ठी तृतीयार्थ इति** ।। 'कर्तृकरणयोस्तृतीया' **(पा.सू.२.३.१८)** इत्युक्तेरिति भावः ।। **नामसाम्येनावगतादिति** ।। ओं तत्सदिति नामत्रयं भगवतीव यज्ञादावपि वर्तत इत्यनुपदमग्रे वक्ष्यति । तच्च यज्ञादौ भगवन्नामसाम्यं तत्प्रतिमात्वेनैव नान्यथा । 'शारीररूपकविन्यस्तगृहीतेः' **(ब्र.सू.१.४.१)** इति न्यायादिति भावः ।।

**प्रतिपादितमिति** ।। ओ३म् तत्सदितीत्याद्यर्थवादस्य यज्ञादौ भगवति च नामत्रयप्रतिपादनार्थमेव प्रवृत्तत्वात् , जगति ओतत्वरूपनिमित्तस्य ब्रह्मणीव वेदादावोतत्वरूपत्वस्य यज्ञादावपि सत्वादिति भावः ।। **व्युत्पाद्येति** ।। तेन ओंनामकेन हरिणा नाम्ना यज्ञादयो विहिता इत्युक्त्या व्युत्पादितमिति भावः ।। यद्वा, हरेर्जगत्प्रवेशनिमित्तेन ओंनामकत्वोक्त्या तत्प्रवेशार्थं यज्ञादीनां विधानोक्त्या ओंनामभगवत्सम्बन्धाद् यज्ञादेः 'शरीररूपकविन्यस्तगृहीतेः' इति न्यायाद् ओ३म्नामत्वं यज्ञादेरिति भावः ।।

**वेदोक्तेति** ।। 'विधानोक्ता' इत्यनेन लब्धोऽर्थः- **ब्राह्मणैः सहेति** । अन्यथा तत्सृष्टि-र्वृथा स्यादिति भावः ।। **तदित्यनेनेति** ।। **'तदिति फलमनभिसन्धाय यज्ञादयः क्रियन्त'** इत्युक्त्या यज्ञादौ परोक्षवाचित्वात् परोक्षे ब्रह्मणि च तच्छब्दो व्युत्पादित इत्यर्थः । **'मोक्षकाङ्क्षिभिः'** इत्युक्त्या लब्धमाह– **ब्रह्माभिसन्धाय चेति** ।। **सद्भाव इत्यनेनेति** ।। तस्य प्रजननवाचित्वात् ब्रह्मणश्च तत्कर्तृत्वादिति भावः ।। २६ ।।

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ।। २७ ।।**

### प्रमेयदीपिका

'यज्ञे तपसि ....कर्म चैव' इत्यनेन यज्ञादिषु सच्छब्दो व्याख्यातः । तेन ब्रह्मविषयत्वेन निष्ठया चेति लब्धम् ।। २७ ।।

### भावदीपः

**कर्म चैवेतीति** ।। 'कर्म चैव तदर्थीयम्' इत्यनेनेत्यर्थः ।। २७ ।।

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ नच तत् प्रेत्य नो इह ।। २८ ।।**[1]

**ॐ तत्सदिति श्रीमद्भवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे**
**श्रीकृष्णार्जुनसंवादे त्रिगुणविभागो[2] नाम सप्तदशोऽध्यायः ।। १७ ।।**

**भाष्यम् —** तथा च ऋग्वेदखिलेषु–

**'ॐ यज्ञाद्या निष्फलं कर्म तत् स्यात्**
**सद् वै तदर्थं कर्मेति वदन्ति देवाः ।**
**तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेः**
**तद्रूपत्वाज्जनितं ब्रह्म तस्य' इति ।। २८ ।।**

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते

श्रीमद्भगवद्गीताभाष्ये सप्तदशोऽध्यायः ।। १७ ।।

### प्रमेयदीपिका

**'अश्रद्धया'** इत्यनेन ब्रह्मभक्तिरपीति[3] ।।

---

१ (अ) तत्वप्रदीपे ३.१.५.श्रद्धाप्रधानत्वं पुण्यानां शंसति । 'श्रद्धया हूयते हविः' इति श्रुतिः। 'अश्रद्धया.. इह' इतिच भगवद्गीतासु' इत्युक्तम् ।।
(आ) न्यायामृते जगदसत्त्ववाचिपुराणवचनार्थप्रकरणे उदाहृतः ।

२. सत्वादिगुणकृतानां श्रद्धानामाहारस्य, यज्ञतपःप्रभृतिकर्मणां च सदसद्रूपभेदेन प्रपञ्चनं, श्रद्धात्रयविभागः

३. भं मातृकायाम् - 'इति' इत्यनन्तरं 'व्यतिरेकेण लब्धा' इति विवरणं कृतम् ।

अत्र श्रुतिसम्मतिमाह- **तथा चेति** ।। **ओं यज्ञाद्याः** वेदाद्योतत्वात् । **निष्फलम्** । फलोद्देशरहितत्वात् । **तदर्थं** ब्रह्मविषयम् । एवं **तच्छब्दानां** ब्रह्मशब्दानां यज्ञादिषु **सन्निधेः** अवगत**तद्रूपत्वात्** तत्प्रतिमात्वात् । **तस्य** उक्तप्रकारेण यज्ञादीनामनुष्ठातुः ।। २८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तदशोऽध्यायः ।। १७ ।।

**भावदीपः**

**अश्रद्धयेत्यनेनेति** ।। तादृशहोमादेरसत्वादिना निन्दोक्त्या भक्तिपूर्वानुष्ठानस्य लाभादिति भावः ।। **अत्रेति** ।। 'ओमित्युक्त' इत्यादिनोक्तार्थे भाष्ये '**यज्ञाद्या ओंनामकाः**' इत्यर्थमुपेत्य ओंपदवाच्यत्वे निमित्तं स्वयमाह- **वेदाद्योतत्वादिति** ।। **सन्निधेरिति** ।। पञ्चमी यज्ञादिषु विद्यमानस्य हेतुना अवगतत्वादिति शेषोक्तिः । '**तस्य**' इत्यनुवादः । '**उक्त**' इत्यादि व्याख्या । '**उक्तोङ्कारार्थज्ञानपूर्वकम्**' (१७.२६) इत्यादिनोक्त-प्रकारेणेत्यर्थः ।। २८ ।।

**।। इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते सप्तदशोऽध्यायः ।।**

# ।। अथ श्रीमद्भगवद्गीतायाम् अष्टादशोऽध्यायः ।।

( अर्जुनकृतसन्न्यासत्यागस्वरूपप्रश्नः )

**अर्जुन उवाच –**

**सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषिकेश पृथक् केशिनिषूदन ।। १ ।।**

( अध्यायप्रतिपाद्यनिरूपणम् )

**भाष्यम् —** पूर्वोक्तं साधनं सर्वं सङ्क्षिप्योपसंहरत्यनेनाध्यायेन ।। १ ।।

**प्रमेयदीपिका**

[1]अध्यायप्रतिपाद्यमाह– **पूर्वोक्तमिति** ।। साधनं ज्ञानसाधनम् । उक्तस्योक्तिर्व्यर्थेत्याशङ्का-निरासाय **सङ्क्षिप्योपसंहरति** इत्युक्तम् । अनुक्तं त्रैगुण्यं च वक्तीत्यपि द्रष्टव्यम्[2] ।। १ ।।

**भावदीपः**

**पूर्वोक्तमिति** ।। पूर्वतनेष्वध्यायेषु विप्रकीर्णतयोक्तमित्यर्थः ।। **अनुक्तं त्रैगुण्यं चेति** ।।

**'कारणं गुणसङ्गोऽस्य'** (१३.२१) इत्यादिना त्रयोदशे,

**'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः'**[3] (१४.५)

इत्यादिना चतुर्दशादावुक्तादन्यदेव [4]त्रैगुण्यमित्यर्थः ।। वक्तीति ।।

**'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः'** (१८.२१)[5]

इत्यादिना वक्तीत्यर्थः ।। १ ।।

---

१. 'अध्यायप्रतिपाद्यार्थमाह'-क मातृकायाम् ।
२. ग्राह्यम् -इति पाठान्तरं मातृकाद्वये ।
३ इदं वाक्यं सो मातृकायां पूर्वत्र पठितम् ।
४. त्रैगुण्यमिति का- नास्ति ।
५. मं-मातृकायामिदं न पठ्यते ।

( सन्न्यासत्यागस्वरूपनिरूपणम् )

**श्रीभगवानुवाच –**

**काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**[१]

**भाष्यम् —** फलानीच्छयाऽकरणेन वा काम्यकर्मणो न्यासः सन्न्यासः । त्यागस्तु फलत्याग एव । तथा हि प्राचीनशालाश्रुतिः –

'अनिच्छयाऽकर्मणा वाऽपि काम्यकर्मन्यासो न्यासः फलत्यागस्तु त्यागः' इति ॥ २ ॥

**प्रमेयदीपिका**

'काम्यानां कर्मणाम्' इत्येतं श्लोकं केचिद् व्याचक्षते [२]"काम्यानां कर्मणामश्वमेधादीनां स्वरूपेण त्यागः सन्न्यासः । नित्यनैमित्तिकादिसर्वकर्मफलत्यागः त्यागः' इति । तदसदिति भावेनाऽह– **फलेति** ॥ वैकल्पिककाम्यानां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागः, नियतकाम्यानां[३] स्वरूपाकारणेन त्यागः सन्न्यासः ॥ काम्यकर्मणामेव फलत्यागस्तु त्यागः करणाकरणे तु न विवक्षित इत्यर्थः । कुत एतत्? इत्यत आह– **तथा हीति** ॥ **अकर्मणा** अकरणेन ॥ [४]जनकाश्वपत्यादिभिर्मुमुक्षुभिः अश्वमेधादीनाम् अनुद्दिष्टफलानाम् अनुष्ठानात् न काम्यानां स्वरूपपरित्याग एव । नित्यनैमित्तिकफलस्यान्तःकरणशुद्धेः सर्वापेक्षितत्वेन तत्त्यागो न युक्तः ॥ २ ॥

**भावदीपः**

**फलानिच्छया अकरणेन** वा इति भाष्यं भिन्नकर्मविषयतया व्याचष्टे– **वैकल्पिकेति** ॥ अश्वमेधज्योतिष्टोमादयो हि फलकामनया तदकामनया वा अनुष्ठानयोग्यत्वाद्वैकल्पिककाम्याः, तेषां कामनाविषयत्वरूपविशेषणत्यागेन स्वरूपाकरणत्यागेन स्वरूपाकरणम् इत्यर्थः ॥

---

१. सनत्सुजातीये २-५ श्लोकव्याख्याने श्रीवादिराजतीर्थैरयमुदाहृतः ।
२. शाङ्करभाष्ये तृतीयो भागः- पृ -२८७ ।
३. 'ग्रामपश्वादिकामनया विहितानां यागानाम्' इति भं -मातृकाविवरणे ।
४. इदमपव्याख्यानम् - श्रीनि ।

**नियतेति** ।। पुत्रेष्ट्यादिरूपकाम्यकर्मणामित्यर्थः ।। **काम्यकर्मणामेवेति** ।। स्वर्गादि-फलकाश्वमेधज्योतिष्टोमराजसूयादिकर्मणामित्यर्थः ।। एव इत्यनेन प्रागुक्तानामिति द्योतयति । भाष्यस्थस्यैवाक्षरतात्पर्यमाह– **करणाकरणे तु न विवक्षत इति** ।। उत्तरं वक्तुर्भगवत इति योज्यम् । सन्यासशब्दार्थे तु उक्तदिशा केषाञ्चित् करणं केषाञ्चिदकरणं विवक्षितमिति सन्यासत्यागयोर्भेद इति भावः[1] ।। २ ।।

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपः कर्म न त्याज्यमिति चापरे ।। ३ ।।**

**भाष्यम् - मनीषिणः इति विशेषणात्[2] पूर्वपक्षोऽपि ग्राह्य एव । फलत्यागेन त्यागो विवक्षितः । यज्ञादेस्तत्पक्षे । 'यस्तु कर्मफलत्यागी' (१८.११)इति च वक्ष्यति । अत एक एवायं पक्षः ।। ३ ।।**

### प्रमेयदीपिका

'त्याज्यं दोषवत्' इत्यनेन 'हेयः कापिलानां पक्ष उपन्यस्तः' इति **केचित्**[3]। तदसदिति भावेनाऽह– **मनीषिण** इति ।। **पूर्वपक्षः** पूर्वोपन्यस्तः पक्षः । ननु **'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्'** (१८.५) इति भगवन्मतविरुद्धोऽसौ कथं ग्राह्यः? इत्यत आह– **फलत्यागेनेवेति** ।। फलत्यागाभिप्रायेण **यज्ञादेः त्यागो विवक्षितः तत्पक्षे** न स्वरूपतः । कुतः? **मनीषिणः** इति विशेषणादेव । अतो न भगवन्मतविरुद्धोऽसौ । कर्मत्यागशब्दः कथं फलत्यागेनार्थेनार्थवान्? इत्यत आह– **यस्त्विति** ।।

नन्वेवं सति पूर्वोत्तरार्धोपन्यस्तयोः पक्षयोरविरोध आपद्यत इति चेत् - सत्यमित्याह - **अत** इति ।। **अतः** मनीषिपक्षत्वात् **एकः** अविरुद्धः । **अयं** पूर्वोत्तरार्धोपन्यस्तः । किन्त्वापातप्रतीतिमपेक्ष्य सन्देहबीजत्वेन विप्रतिपत्तिरियमुद्भावितेति भावः ।। ३ ।।

### भावदीपः

पूर्वोपन्यस्त इति ।। **'त्याज्यम्'** इति श्लोके पूर्वोत्तरार्धयोः **'एके अपरे** 'इत्युक्त-

१. 'योज्यम् '-इति पां ।
२. टीकानुगुणः, प्रभ-पाठे च । इत्युक्तत्वात् -इति प्रच पाठः ।
३. रामानुजभाष्यानुवादः तृतीयो भागः- पृ -२९२ ।

पक्षयोर्मध्ये पूर्वार्धोपन्यस्तः पक्ष इत्यर्थः ।। **फलत्यागेन** इति वाक्यस्य 'ग्राह्यः' इत्यन्तवाक्येन अन्वयमाह – **अत इति** ।। **अविरोध इति** ।। फलत्यागानुमानस्य पक्षद्वयेऽपि साम्याद् इति भावः ।। कुतस्तर्हि पक्षभेदोपन्यासः? इति पृच्छायामाह– **किन्त्वित्यादिना** ।। **आपातेति** ।। कर्मणस्त्यागरूपापातप्रतीतिमित्यर्थः ।। **अपेक्ष्य** इत्यस्य **उद्भाविता** इत्यनेनान्वयः।। ३।।

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**

**त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ।। ४ ।।**

**भाष्यम्** — तत्प्रकारं चाह– **निश्चयमित्यादिना** ।। **यज्ञभेद उक्तः 'द्रव्ययज्ञाः'** (४.२८) **इत्यादिना । दाने त्वभयदानमन्तर्भवति । एतेषां मध्ये यत्किञ्चिद् यज्ञादिकं कर्तव्यमेवेत्यर्थः । अन्यथा–**

**'ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।**
**यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेत्'**

**इत्यादि व्यासस्मृतिविरोधः ।**

### प्रमेयदीपिका

न केवलं **मनीषिणः** इति विशेषणसामर्थ्यादेवमुच्यते । किन्तु भगवताऽपि तदविरोध-प्रकारस्य व्युत्पाद्यमानत्वादिति भावेनोत्तरवाक्यतात्पर्यमाह– **तदिति** ।। ननु परमहंसानां यज्ञदानयोरभावात् कथमुच्यते 'न त्याज्यं कार्यमेव तत् इति ?। तत्राह– **यज्ञेति** ।। ननु ज्योतिष्टोमादिकमेव यज्ञः धनदानादिकमेव दानं गृहीत्वा पारमहंस्यमेव कुतो न निराक्रियत इत्यत आह– **अन्यथेति** ।। **यतिः** हंसादिः । **आस्थातुं** प्राप्तुम् । **उत्तमाश्रमं** पारमहंस्यम् ।।

### भावदीपः

यज्ञेतीति ।। **'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे'** (४.२८)इत्यादिना चतुर्थे यज्ञभेद उक्त इति भाष्यार्थः ।। **गृहीत्वा** इत्यतः पूर्वम् इतिशब्दोऽध्याहार्यः ।। **यतिः हंसादि-रिति** ।। चतुर्थाश्रमो हंसकुटीचकबहूदकपरमहंसभेदेन चतुर्विधः । ततो 'हंसादेः' इत्युक्तम् । यतेरेव परमहंसत्वे **उत्तमाश्रममाश्रयेत्** इत्युक्तं स्यादिति भावः ।।

**भाष्यम्** — ज्ञानयज्ञविद्याऽभयदानब्रह्मचर्यादितपसो हि ते । अतो यद्वचः अन्यथा प्रतीयते अधिकारभेदेन तद्योज्यम् । अन्यथेतरेषां गत्यभावात् ।। ४ ।।

### प्रमेयदीपिका

नन्वेतेषां मध्ये इत्येवं व्याख्यानेऽपि कथं परमहंसानां यज्ञादिसम्भवः? इत्यत आह– **ज्ञानेति** ।। बहुव्रीहित्रयगर्भः कर्मधारयोऽयम् । विद्याऽभयविषयं दानं येषां ते तथोक्तास्ते परमहंसाः ।।

ननु पारमहंस्ये हि प्रवृत्तः प्रियव्रतो हिरण्यगर्भेण निवारित इति पुराणेषूच्यते । तत्कथं पारमहंसस्याकर्तव्यता? इत्यत आह– **अत** इति ।। उक्तवाक्यविरोधादेव । वाक्यत्वाविशेषात् पुराणवाक्येनैव स्मृतेर्बाधः किंन स्यात्? इत्यत आह– **अन्यथेति** ।। एवमयोजयने **इतरेषां** ब्रह्मचारी इत्यादीनाम् 'गत्यन्तराभावादप्रामाण्यमेव प्रसज्यते' इति शेषः ।।

एवं परमहंसानामपि यज्ञादिकर्तव्यतासम्पादनेनेदमपि परास्तम् । यत् **केनचिदुक्तम्**[1] 'अज्ञान् कर्मण्यधिकारिणोऽधिकृत्यैतत् प्रकरणं प्रवृत्तम्, न परमहंसपरिव्राजकान्' इति ।। ४।।

### भावदीपः

**बहुव्रीहित्रयेति** ।। ज्ञानमेव यज्ञो येषां त इति बहुव्रीहिद्वयमुक्तम् । **विद्याऽभयदान** इत्यत्रास्फुटत्वाद् आह– **विद्याभयेति** ।। विद्याऽभययोर्दानं येषामिति, ब्रह्मचर्यादिरेव तपो येषां त इति कर्मणि षष्ठ्या विषयसप्तम्या वा व्यधिकरणबहुव्रीहिः, ज्ञानयज्ञाश्च ते विद्याऽभयदानाश्च ते ब्रह्मचर्यस्तपश्चेति कर्मधारय इति भावः ।। '**ते**' इत्यनुवादः । '**परमहंसाः**' इति व्याख्या ।। **पुराणेष्विति** ।। '**गृहाश्रमः किन्नु करोत्यवद्यम्**'(भाग.५१.१७)

इत्यादिना भागवतादिष्वित्यर्थः ।। **उक्तेति** ।। ब्रह्मचारीत्यादिवाक्येत्यर्थः ।। ४ ।।

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानंतपश्चैव पावनानि मनीषिणाम् ।। ५ ।।**[2]

---

१. शाङ्करभाष्यानुवादः तृतीयो भागः, पृ -२९३ ।

२. दानं तपश्च यज्ञश्च त्रिविधं कर्म कीर्तितम् । तत्सर्वं भगवत्प्रीत्यै कुर्वीत सुसमाहितः - वृद्धहारीतस्मृतौ -८.२७.

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

(त्रिविधत्यागनिरूपणम्)

**नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।**
**मोहात् तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**[1]
**दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**
**कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥**
**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥**
**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥**

**भाष्यम् —** अन्यस्त्यागार्थो न युक्त इत्याह– नहीति ॥ ११ ॥

**प्रमेयदीपिका**

ननु **'इति मे पार्थ'**(१८.६) इति भगवता स्वसिद्धान्तो निष्टङ्कितः । अतो **न हि देहभृता** इति किमुच्यते? इत्यत आह– **अन्य** इति ॥ सर्वकर्मपरित्यागलक्षणः । त्यागार्थः त्यागशब्दार्थः । 'पूर्वपक्षबीजनिरासार्थम्' इति शेषः ॥ ११ ॥

**भावदीपः**

निःष्टङ्कितः निष्कृष्टः ॥ पूर्वपक्षबीजेति ॥ **'त्याज्यं दोषवत्'**(१८.३) इत्यत्र सर्वकर्म त्याज्यमिति यः पूर्वपक्षस्तस्य यद्बीजम् आपातप्रतीतिरूपं वा, 'एके अपरे' इति विप्रतिपत्त्युक्तिरूपं वा तन्निरासार्थमित्यर्थः ॥ ११ ॥

१. 'नियतस्य..कीर्तितः'इति सन्ध्यावन्दनादिकर्मणामत्याज्यत्वस्यैव भगवता कथनाच्च-ई.टी.टि.प्रकाशिका.

( कर्मत्यागस्तुतिः )

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥ १२ ॥**

**भाष्यम् —** त्यागं स्तौति– **अनिष्टमिति** ॥ १२ ॥

**प्रमेयदीपिका**

कर्मफलाभावो नाम संसारनिवृत्तिरेव । सा कथं त्यागफलत्वेनोच्यते? इत्यत आह– त्यागमिति ॥ उपपादितमेतत् '**त्यागाच्छान्तिः**' (१२.१२) इत्यत्र ॥ १२ ॥

**भावदीपः**

**संसारनिवृत्तिरेवेति** ॥ संसारस्य कर्मफलरूपत्वादिति भावः ॥ **कर्मफलाभावमिति** ॥ '**अनिष्टमिष्टम्**' इति श्लोके इष्टानिष्टमिश्रशब्दितस्वर्गनरकमानुषभावरूपफलत्रयं त्यागिनां नास्तीति '**न तु सन्न्यासिनां क्वचित्**' इतिपदेन कर्मफलाभाव उक्तः । स तु सन्न्यासाद् अनिवृत्तिरेव । सा कथं सन्न्यासशब्दितत्यागिनां नास्तीति त्यागफलत्वेनोच्यत इत्यर्थः ॥ **त्यागाच्छान्तिरित्यत्रेति** ॥

**'श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद् ध्यानं विशिष्यते ।**
**ध्यानात् कर्मफलत्यागः त्यागाच्छान्तिरनन्तरम्'** (१२.१२)

इत्यत्र द्वादशे ध्यानमुक्तम्, त्याग एवचात्रोक्तः । अन्यथा कथं '**त्यागात् शान्तिरनन्तरम्**' इत्युच्यते? इत्यादिना भाष्ये उपपादितं त्यागस्य मोक्षफलकत्वं ध्यानसाहित्येनेत्यर्थः ॥ १२ ॥

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

**भाष्यम् —** पुनः सन्न्यासं प्रपञ्चयितुं कर्मकारणान्याह– **पञ्चेत्यादिना** ॥ **साङ्ख्ये कृतान्ते** ज्ञानसिद्धान्ते ॥ १३ ॥

**प्रमेयदीपिका**

**पञ्च** इत्यादेः प्रकृतेन सङ्गत्यप्रतीतेस्तामाह– पुनरिति ॥ न केवलं काम्यानां कर्मणां

न्यासः सन्न्यासः, किन्तु कर्तृत्वाभिमानत्यागश्चेत्येवं प्रागुक्तं **सन्न्यासं पुनः प्रपञ्चयितुम्** आत्मनोऽकर्तृत्वे क्रियाऽनिष्पत्तिप्रसङ्गादङ्गीकार्ये कर्तृत्वे कथं तदभिमानत्यागो युक्तः? इत्याशङ्कापरिहारार्थमात्मव्यतिरिक्तान्येव **कर्मकारणान्याह** इत्यर्थः ।।

साङ्ख्यशब्दः कापिलतन्त्रे रूढः । 'कृतं कर्म, तस्यान्तो निवृत्तिर्यत्र उच्यते'[1] इत्युपनिषत्सु कृतान्तशब्दं कश्चिद्व्याख्यातवान् । तदुभयं निवर्तयितुमाह– **साङ्ख्य** इति ।। ज्ञानार्थः सिद्धान्तः ज्ञानसिद्धान्तः । 'सिद्धान्तः' इति शास्त्रं लक्ष्यते । कापिलतन्त्रस्य निन्दितत्वात् । उपनिषत्स्वपि कर्मत्यागाप्रतिपादनात् ।। १३ ।।

**भावदीपः**

**सन्न्यासमिति** ।। 'त्यागरूपं प्रपञ्चयितुं कर्मकारणान्याह' इत्यन्वयः । किमर्थं प्रपञ्चनम्? इत्यत उक्तम्– **इत्येवं प्रागुक्तमिति** ।। **शरीर(१८.१५)** इत्यादिश्लोकेन वक्तुमित्यर्थः ।। **आत्मव्यतिरिक्तान्येवेति** ।। तथाच आत्मजीवत्वाकर्तृत्वेपि न क्रियानुपपत्तिदोष इति भावः । प्रामाणिकत्वेनाभ्युपगतार्थस्य सिद्धान्तशब्दितस्य ज्ञानार्थत्वाभावादाह– **शास्त्रं लक्ष्यत इति** ।। **निन्दितत्वादिति** ।। '**निन्दितत्वाच्चेतरयो-र्मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पञ्चरात्रस्तुत्या**' इति द्वितीयाध्यायभाष्य एव प्रपञ्चनादिति भावः ।। **कर्मत्यागाप्रतिपादनादिति** ।। प्रत्युत

**'अन्या चरथ नियतं सत्यकामा'**(२.१) इत्याथर्वणे,

**'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतꣳसमाः'** (२)

इति ईशावास्यादौ तत्र विधानाच्चेत्यपि ध्येयम् ।। १३ ।।

( कर्मकारणानि पञ्च )

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ।। १४ ।।**
**शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ।। १५ ।।**

---

१. शाङ्करभाष्ये तृतीयो भागः- पृ -३१० ।

**भाष्यम् — अधिष्ठानं** देहादि[1]। **कर्ता विष्णुः; 'स हि सर्वकर्ता'** इत्युक्तम् । जीवस्य चाकर्तृत्वे प्रमाणमुक्तम् । **करणम्** इन्द्रियादि च । **चेष्टाः** क्रियाः । हस्तादिक्रियाभिः होमादिकर्माणि जायन्ते ।।

**प्रमेयदीपिका**

अधिष्ठानादि करण एवान्तर्भूतमिति वक्ष्यति ।[2]तत्प्रबोधनायाधिष्ठानं निर्दिशति– **अधिष्ठान**मिति ।। **आदि**पदेन भूम्यादि । 'कर्ता जीवः'[3] इति व्याख्यानमसदिति भावेनाऽह– **कर्ते**ति ।। शरीरवाङ्मनोभिः क्रियमाणानां कर्मणां कर्ता कथं विष्णुः? इत्यत आह– **स ही**ति ।। **उक्तम्** उपपादितम् । तथाऽपि जीवोऽत्र कर्ता किं न स्यात्? इत्यत आह– **जीवस्य चे**ति।। अपराधीनत्वाभिप्रायेणेदं निराकरणम् । पराधीनं कर्तृत्वमङ्गीकृत्यान्यत्र जीवो व्याख्यात इत्यविरोधः ।।

[4]भावसाधनताप्रतीतिनिरासार्थमाह– **करण**मिति ।। **आदि**पदेन स्रुवादि । भाव-साधनार्थस्य साध्यत्वात् । चेष्टाग्रहणेन च गृहीतत्वाच्च । 'वायवीयाः प्राणापानाद्याः चेष्टा'[5] इत्यसत् । द्रव्याभिधाने चेष्टत्वानुपपत्तेः । प्राणनाद्यभिधाने साध्यत्वात् कारकत्वानुपपत्ते-रित्याशयवानाऽह– **चेष्टे**ति ।। क्रियाणां [6]साध्यत्वात् कथं कारकत्वम्? इत्यत आह– **हस्ता-दी**ति ।। सावान्तरव्यापारं हि करणं कारकमुच्यते । तत्राधिष्ठानादिपदैर्व्यापारिणो निर्दिश्यन्ते । क्रियाशब्देन त्ववान्तरा व्यापाराः । कारकाश्रिताभिरवान्तरक्रियाभिः प्रधानक्रियाजननं च प्रसिद्धमेवेत्यर्थः ।।

**भावदीपः**

**तत्प्र(तद्बो)बोधनायेति** ।। अन्तर्भावबोधनायेत्यर्थः ।। **उक्तमुपपादितमिति** ।। सर्व-कर्तृत्वोक्त्या **'वा हि'** इति प्रमाणप्रसिद्ध्युक्त्या वा सर्वान्तःपातिकर्मकर्तृत्वं कैमुत्यसिद्धमिति भावेनोपपादितमित्यर्थः ।। **जीवस्य चेतीति** ।। 'जीवस्याकर्तृत्वे प्रमाणमुक्तम्' इति भाष्ये

१. मातृकया शोधितः, कृ.टि.अनुगुणः पाठः । 'देहादिः' इति बे,प्रच ।

२. भावदीपानुगुणः । 'तद्बोधनाय' इति च भावदीपे पाठान्तरम् । 'तत्प्रतिबोधनाय' इति प्रच ।

३. रामानुजभाष्यानुवादः तृतीयो भागः- पृ -३१३ ।

४. 'भावो धात्वर्थ एव साधनं निमित्तं प्रत्ययोत्पत्तौ यस्य शब्दस्य स भावसाधन इत्यर्थः' परिमले-१.२.२।

५. शाङ्करभाष्ये तृतीयो भागः- पृ -३१३।

६. साधकत्वात् इति का मातृकायाम् ।

**नहि प्रतिबिम्बस्य क्रिया** इत्यादिना द्वितीये **'यत्र यत्रैव संयुक्तः'**(१५.८) इत्यादिना पञ्चदशे चोक्तमित्यर्थः ।। अन्यत्रेति ।।

**'स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनोक्तश्च'**

इति तात्पर्य इत्यर्थः । 'कर्ता शास्त्रार्थवत्वात्'(ब्र.सू.२.३.३३) इति सूत्रभाष्ये चेत्यर्थः ।। **भावेति** ।। करणं निर्माणप्रतीतीत्यर्थः ।। **साध्यत्वादिति** ।। निष्पाद्यमानस्य अवश्यपूर्ववर्तित्वरूपकारणात्वानुपपत्तेरिति भावः । हस्तादिक्रियार्थत्वे दोषमाह - **चेष्टेति** ।। **द्रव्येति** ।। वायुविकारप्राणादिद्रव्येत्यर्थः ।।

**( मानसक्रियायाः ध्यानहेतुत्वम् )**

**भाष्यम् — ध्यानादेरपि मानसी चेष्टा कारणम् । पूर्वतनी चेष्टाऽपि संस्कारकारणत्वेन भवति ।**

**प्रमेयदीपिका**

नन्वत्र कारकाभिधानप्रसङ्गे अधिष्ठानाद्येवोक्तम् । कर्मसम्प्रदानापादानानि कुतो नोक्तानि? अधिष्ठानादीनां सर्वक्रियानुगमात् । कर्मादीनां तदभावादिति ब्रूमः । तथाच वक्ष्यति **शरीरवाङ्मनोभिर्यत्** ' (१८.१५) इति ।। एवं तर्हि चेष्टाऽपि न वक्तव्या । ध्यानादिजनने करणस्य मनसः चेष्टाभावेनाननुगमादित्यत आह– **ध्यानादेरपीति** ।। **आदिपदेन** स्मरणं गृह्यते । ज्ञात एवार्थे ध्यानं भवति । ज्ञानं चाऽत्मेन्द्रियसन्निकृष्टेनैव मनसा जायते । सन्निकर्षश्च मानसचेष्टाजन्यः । अतो ध्यानादेरपि मनस्सम्बन्धिनी चेष्टा कारणं भवतीति भावः ।।

ननु नियतपूर्वक्षणे सत् कारणम् । नच ध्यानादिपूर्वक्षणे मनसि क्रियाऽस्ति । चिरातीतत्वात् । मनोनैश्चलसाध्यत्वाद् ध्यानादेः।। नच सन्निकर्षः ज्ञानद्वारा करणम् । तस्यापि चिरातीतत्वादित्यत आह– **पूर्वतनीति** ।। **पूर्वतनी** चिरातीताऽपि मानसी क्रिया सन्निकर्षज्ञान[१]द्वारा ध्यानादिहेतु-**संस्कारकारणत्वेन भवति** ध्यानादेः कारणम् । संस्कारस्य स्थायित्वादित्यर्थः ।।

**भावदीपः**

**अधिष्ठानादीनामिति** ।। देहेन्द्रियादृष्टकर्तृहस्तादिक्रियाणामित्यर्थः ।। **कर्मादीनां** कर्म-

१. ज्ञान इति १ -मातृकायामेवाधिकम् ।

कारकादीनामित्यर्थः । भूम्यां तिष्ठति, चैत्रश्चलति इत्यादावभावादिति भावः ।। **वक्ष्यतीति** ।। सर्वक्रियानुरूपगतिमधिष्ठानादेरिति योज्यम् ।। **तस्यापीति** ।। सन्निकर्षजज्ञानस्यापीत्यर्थः ।। **ध्यानादिहेतुसंस्कारेति** ।। ध्यानविषयस्य मानसंवासना परिणामत्वादिति भावः ।। भाष्ये शेषमाह– **ध्यानादेः कारणमिति** ।। मानसक्रियानन्तरं तस्य तेन श्रोत्रादीन्द्रियसन्निकर्षे सति, स तस्य श्रोत्रादिसन्निकृष्ट[१]विषयानुभवे सति, तज्जन्यसंस्कारपरिणतवस्तुविषयकमानसात्वलोकनस्य ध्यानत्वात् परम्परया ध्यानरूपक्रियाहेतुर्भवति मानसक्रियेति भावः ।।

**भाष्यम् — दैवम् अदृष्टम् । तथा चायास्यश्रुतिः–**

**'देहो ब्रह्माथेन्द्रियाद्याः क्रियाश्च तथा दृष्टं पञ्चमं कर्म हेतुः[२]' इति ।। १४-१५ ।।**

**प्रमेयदीपिका**

'देवमन्तर्यामिव्यापारः'[३] इति **कश्चित्** । तदसत् । 'कर्ता' इत्यनेनैवोक्तत्वात् ।'चक्षुराद्यनुग्राहकाः सूर्यादयः'[४] **इत्यपरः** । तदप्यसत् । करणादिशब्दैरेव गृहीतत्वादिति भावेनाऽह– **दैवमदृष्टमिति** ।। उक्तमर्थं श्रुतिसम्मत्याऽपि समर्थयति– **तथा चेति** ।। **देहः** इत्युपलक्षणम् । **हेतुः** कारणम् । **कर्म हेतु इति क्वचित्** पाठः । तत्र छान्दसो लिङ्गव्यत्ययः ।। १४,१५ ।।

**भावदीपः**

**करणादीति** ।। करणाधिष्ठानकर्तृशब्दैरित्यर्थः । अधिष्ठानकारणशब्दाभ्यां देहाद्यनुग्राहकाणाम् अपि प्राप्तेः तन्मते कर्तृपदेन जीवानां ग्रहणादिति भावः ।। **उपलक्षणमिति** ।। भूम्यादेरिति भावः ।। १४-१५ ।।

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ।। १६ ।।**

**भाष्यम् — केवलं निष्क्रियम् ।**

**'एनं केवलमात्मानं निष्क्रियत्वाद् वदन्ति हि' इति तत्रैव ।। १६ ।।**

१. सन्निकर्षसूचित इति पा सो ।
२. 'कर्म हेतु इति क्वचित् पाठः' इति टीकाकृत्सूचितपाठान्तरम् ।
३. रामानुजभाष्ये तृतीयो भागः- पृ -३१४ ।
४. शाङ्करभाष्ये तृतीयो भागः- पृ -३१३ ।

### प्रमेयदीपिका

नन्वेवं जीवस्य कर्मकारणेष्वनन्तर्भावे व्याख्यायमाने **तत्रैवं सति** इत्युत्तरवाक्ये **केवलम्** इति न युज्यते । एकाकिनमात्मानं कारणत्वेन मन्यमानस्य निन्दयाऽस्य ससहायस्य कारणत्वप्रतीतेरित्यत आह– **केवलमिति** ।। नात्र केवलशब्द एकाकिवचनः । किन्तु निष्क्रियत्ववाची । तदुक्तिश्च [१]निन्दोपपादनार्थेति भावः । केवलशब्दस्य निष्क्रियार्थत्वं कुतः? इत्यत आह– **एनमिति** ।। **तत्रैव** अयास्यश्रुतावेवोक्तम् ।। १६ ।।

### भावदीपः

**निन्दोपपादनायेति** ।। केवलं निष्क्रियं क्रियाशून्यकर्तृत्वहीनमिति यावत् । '**आत्मानं कर्तारं पश्यन्नपि न पश्यति सक्तः**' इति निन्दोपपादनायेत्यर्थः ।। १६ ।।

**यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वाऽपि स इमांल्लोकान्न हन्ति न निबद्ध्यते ।। १७ ।।**

**भाष्यम् - तज्ज्ञानं स्तौति - यस्येति । यस्त्वीषद् बद्ध्यते स ईषदहङ्कारी च ।।**

### प्रमेयदीपिका

अवश्यं चैतदेवम् यावतोत्तरश्लोके स्वात्मानमकारणं जानतः स्तुतिः क्रियते । अन्यथा ससहायस्य[२] कारणत्वं जानतः स्तुतिः क्रियेतेति भावेनाऽह–**तदिति**। स्वात्मनो निष्क्रियत्वज्ञानम् । ननु निरहङ्कारस्यापीन्द्रादेः वृत्रवधादिनेषद्बन्धो दृश्यते । तत्कथमेतत्? इत्यत आह – **यस्त्विति** ।। इयञ्च कल्पना वक्तुराप्तत्वादिना युज्यते ।। १७ ।।

### भावदीपः

**ईषद्बन्धो दृश्यत इति** ।। '**ब्रह्महत्या हते तस्मिन् नाससाद वृषाकपिम्**' इत्यादिना षष्ठस्कन्धे प्रसिद्धमिति भावः ।। **इयञ्चेति** ।। भाष्यकारीया कल्पना '**यस्य नाहङ्कृतो भावः**' इति वक्तुः कृष्णस्याप्तत्वाद्, आदिपदोक्तान्यथानुपपत्तिबलादेः अहङ्कारस्य [३]पारिजातहरणेन्द्रयागविघातादौ दर्शनेन सम्भावितत्वाच्च युज्यत इत्यपेरर्थः।।१७ ।।

१. भावदीपानुगुणः । 'पादनार्था' इति कृ-टि, श्रीनि- अनुगुणः ।
२. मातृकायामेव । 'सहायस्य' -इति बे ।
३. सो-मातृकायामेव । का-नास्ति ।

( त्रिविधः कर्मसङ्ग्रहः )

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥ १८ ॥**

**भाष्यम्** — एवं तर्हि न पुरुषमपेक्ष्य विधिः, अकर्तृत्वादित्यत आह– **ज्ञानमिति । त्रिविधा कर्मचोदना** एतत्त्रिविधमपेक्ष्य कर्मविधिरिति **त्रिविधा** इत्युच्यते ॥

### प्रमेयदीपिका

यदि न जीवस्य कारणत्वं कथं तर्हि तज्ज्ञानादेरुत्तरवाक्ये कर्मणां मूलकारणत्वमुच्यते ? [1]ज्ञानादित्रयं कर्मणां प्रवर्तकमिति इत्याशङ्क्य तस्यार्थान्तरं विवक्षुस्तन्निवर्त्यामाशङ्कामाह– **एवं तर्हीति** ॥ यदि जीवो न कर्मणां कारणमित्यर्थः । **विधिः** श्रौतः स्मार्तश्च । **न** प्रवर्तेत । ततश्च 'तद्वैयर्थ्यप्रसङ्गः' इति शेषः । **एवं तर्हि** इत्युक्तस्यैव विवरणम्– **अकर्तृत्वादिति** ॥ 'जीवस्य घटवत्' इति शेषः ॥

ननु ज्ञानादिरूपेण कर्मचोदनायाः त्रैविध्यमयुक्तमनुपयुक्तं च कथमुच्यते? । नियोक्तुः प्रेरणं हि विधिः । नच तज्ज्ञानादित्रयरूपम् । न चानेनोक्तशङ्कानिवृत्तिरित्यत आह– **त्रिविधेति** ॥ स्पष्टप्रतीत्यर्थोऽनुवादः । 'इत्यत्र' इति शेषः । **एतत्** ज्ञानादिकम् । **कर्मविधिः** 'प्रवर्तते जीवं प्रति' इति शेषः । **इति**शब्दो हेतौ । **त्रिविधा इत्युच्यते** कर्मचोदना । निमित्त नैमित्तिकभावेनाभेदोपचार इत्यर्थः ॥

### भावदीपः

[1]उच्यत इत्युक्तम् । तत्कथम्? इत्यतो ज्ञानं ज्ञेयम् इत्यत्र तात्पर्यमाह- **ज्ञानादित्रयमिति** ॥ 'प्रवर्तते' इति शेषोक्तिः । तेन **अपेक्ष्य** इति ल्यबन्तप्रयोगोपपत्तेरिति भावः॥ **तद्वैयर्थ्येति** ॥ विधिवैयर्थ्यर्थं (वैयर्थ्ये)[2] जडेश्वरयोः विध्यविषयत्वाज्जीवं प्रत्यप्यविधाने वैयर्थ्यमेवेति भावः ॥ कस्य? इत्यतो 'जीवस्य' इति शेषोक्तिः ॥ जीवो न विधिविषयः कर्तृत्वाद् घटवतदिति प्रयोग इति भावः । अयुक्तत्वानुपयुक्तत्वे क्रमाद्व्यनक्ति- **नियोक्तुरित्यादिना** ॥ एतत् इत्यनुवादः,

१. इत आरभ्य वहुभागः मं -मातृकामात्रवर्ति । अतः वहुशः अनन्वितत्वं तत्र तत्र । तत्सुधीभिः विविच्य पठितव्यम् । कचित् सो मातृकापि उपलब्धा ।

२. मं- मातृका छिन्ना । सो-मातृकायामप्यस्पष्टपदानि ।

**ज्ञानादिकम्** इति व्याख्या । **प्रवर्तते** इति शेषोक्तेः प्राग्वदेव कृत्यम् ।। अयुक्त इति शङ्कायाः किमुत्तरमुक्तम्? इत्यत आह- **निमित्तेति** ।। जीवस्याकर्तृत्वाद् घटादेरिव विधिविषयतेत्यनुपयुक्तत्वशङ्कानिरासस्तु **अकर्तृत्वेपि** इत्यादि भाष्ये भविष्यतीति भावः ।।

**भाष्यम् — कारणानि सङ्क्षिप्याऽह– करणमिति ।। कर्मसङ्ग्रहः कर्मकारणसङ्ग्रहः । अधिष्ठानादि कारण एवान्तर्भूतम् ।।**

## प्रमेयदीपिका

कर्मकरणानामुक्तत्वात् किमिदं पुनरुच्यते? इत्यत आह– **कारणानीति** ।। तर्हि 'कर्मसङ्ग्रहः' इति कथम्? 'कारणसङ्ग्रहः' इति वक्तव्यत्वादित्यत आह– **कर्मेति** ।। कर्मशब्देन तत्कारणानि लक्ष्यन्त इत्यर्थः । यदि पञ्चानां कारणानामयं सङ्ग्रहस्तर्हि कस्य कुत्रान्तर्भावः? इत्यत आह– **अधिष्ठानादीति** ।।

**आदिपदेन** देवपदोक्तमदृष्टं गृह्यते । 'कांस्यपात्र्या पात्र्या भुङ्क्ते' '**दैवेन कृतमन्यथा**' इत्यादिवत् साधकतमत्वेन विवक्षितत्वात्, 'विवक्षातः कारकाणि भवन्ति' इति वचनात् । न चाऽदिपदेन चेष्टायाः सङ्ग्रहः । तत्र कारकान्तर्भावस्यैवौचितत्वात् । **कर्म** इति पृथक्ग्रहणाच्च । नच कर्म अदृष्टम् । 'कर्म चेष्टा' इत्यन्यत्र व्याख्याततत्वात् ।

'कर्तुरीप्सिततमं कर्म'.**(पा.सू.१.४.४९)**[१] इति **कश्चित्** । तदसत् । पञ्चसु कारणेषु तस्य अगृहीतत्वात् ।।

## भावदीपः

देहभूम्याद्यधिष्ठानस्यादृष्टस्य च कथं कारणकोटिप्रवेशः? इत्यतः प्रयोगौ दर्शयति- **कांस्यपात्र्येति** ।। कर्तृकरणयोस्तृतीयेति भावः ।। [२]अन्यथा चिति 'तं कार्यं दैवेन कृतमन्यथा' इति प्रयोगात् करणान्तर्गतिः युक्तेत्यर्थः । तत्रापि कथम्? इत्यत आह- **साधकेति** ।। **आदिपदेनेति** ।। 'अधिष्ठानादि' इत्यादिपदेनेत्यर्थः ।। **तत्रेति** ।। कारणेषु अधिष्ठानादिकारणान्तर्भावस्यैवोचितत्वात् । चेष्टायाश्च कारकव्यापारत्वेन कारकत्वाभावादिति भावः ।। **अन्यत्रेति** ।। तात्पर्ये ।।

---

१. शाङ्करभाष्ये तृतीयो भागः- पृ -३२४ ।

२. इदं वाक्यं सो मातृकायामेव । मं -नास्ति । ।

( जीवं प्रति विधिद्वारा कर्मचोदनस्य समर्थनम् )

**भाष्यम् —** तथा हि ऋग्वेदखिलेषु -

'ज्ञानं ज्ञेयं ज्ञानिनं चाप्यपेक्ष्य विधिरुत्थितः ।
करणं चैव कर्ता च कर्मकारणसङ्ग्रहः' इति ।।

अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति । ईश्वराधीनत्वेऽपि विधिद्वारा नियतः तेनैव ।।

**प्रमेयदीपिका**

श्लोकार्थे श्रुतिसम्मतिं चाह– **तथा हीति** ।। 'कर्म' इत्यावर्तनीयम् । तत्रैकं व्यस्तम् । परं समस्तम् ।। ननु **ज्ञानं ज्ञेयम्** इत्यनेन कथमुक्तशङ्कानिरासः? इत्यत आह– **अकर्तृत्वेऽपीति** ।। अपराधीनकर्तृत्वाभावेऽपि जीवस्य न तं प्रति विधिवैयर्थ्यम् । कुतः? 'इति हेतोः' इत्यन्वयः । विधिशब्देन तज्ज्ञानमुपलक्ष्यते । **इच्छा** इत्यनेन प्रयत्नोऽपि । उक्तकारणैरधिष्ठानादिभिः ।।

अनेन **ज्ञानं** विधिविषयं **ज्ञेयं** च - इच्छाप्रयत्नलक्षणम्, अधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च । **परिज्ञाता** सर्वज्ञ ईश्वरश्च सर्वप्रेरको जीवे सन्निहितोऽस्ति । अतस्तं प्रति कर्मचोदनेत्यर्थः सूचितो भवति।।

**भावदीपः**

[१]..लाभायाह- **कर्मेत्यावर्तनीयमिति** ।। **उक्तशङ्कानिरास इति** ।। एवं तर्हि 'न पुरुषमपेक्ष्य विधिः' इत्युक्तशङ्केत्यर्थः ।। **इत्यन्वय इति** ।। तस्यापि **'न प्रवृत्तिविधिवैयर्थ्यम्'** इत्यनेन अन्वयः ।। श्लोकार्थं निष्कृष्याह- **अनेनेति** ।। विधिभाष्येणेत्यर्थः ।।

**प्रमेयदीपिका**

एतदुक्तं भवति । नापराधीनकर्तृत्वं विधिविषयत्वे प्रयोजकम् । येन जीवं प्रति कर्मविधि-वैयर्थ्यं स्यात् । तथासतीश्वरस्यापि विधिविषयत्वापातात् । किन्तु यस्य स्वसम्बन्धितया विधि-ज्ञानं, कर्म, तत्फलं चोद्दिश्येच्छा, तदनुगुणश्च प्रयत्नः, अधिष्ठानादिसन्निधानं कर्मसम्बन्धः,

---

१. मातृका छिन्ना । अस्य वाक्यस्य व्याख्या नास्ति ।

फलभाक्त्वं, चास्ति तं प्रति कर्मविधयः प्रवर्तन्ते । अस्ति चेदं समस्तं परमेश्वरप्रसादायत्तं जीव इति कथं न तं प्रति कर्मविधयः स्युरिति? एतत्सङ्ग्रहवाक्यमुत्तरवाक्यैर्विव्रियते ।।

नन्वीश्वरश्चेत् प्रेरको जीवशरीरेऽभ्युपगतः, तदा तत्प्रसादादेवेच्छाप्रयत्नयोरुत्पादात् किं विधिज्ञानमङ्गीक्रियते? इत्यत आह– **ईश्वरेति** ।। **इच्छति** 'प्रयतते च' इति शेषः । अनेन विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्यैतद् विवृतं भवति ।।[1]

### भावदीपः

**तथासतीति** ।। अपराधीनकर्तृत्वस्यैव विषयत्वप्रयोजकत्वे सतीत्यर्थः ।। **विध्यपीति** ।। तस्यापीत्यपेर्थः ।। कर्मसम्बन्धः कर्मानुष्ठातृता ।। जीवे इति सप्तम्यन्तम् ।। अनेनात्रापि विधिशब्दो विधिज्ञानपर इत्युक्तं भवति ।।

### ( अधिष्ठानादीनां स्वव्यापारे स्वातन्त्र्यनिराकरणम् )

**भाष्यम् — यदि चेच्छादिर्जायते तर्हि कारितमेवेश्वरेण । फलं च नियतम् ।।**

### प्रमेयदीपिका

उक्तकारणैः कर्म भवतीत्युक्तम् । तेनाधिष्ठानादीनां स्वव्यापारे स्वातन्त्र्यं प्राप्तम् । तन्निरासार्थमाह– **यदि चेति** ।। **ईश्वरेणैव** कर्माधिष्ठानादीनि निमित्तमात्राणि कृत्वा **कारितं** भवति । अत्र णिचं प्रयुञ्जानस्य **स्वातन्त्र्यमिति** [2]वक्ष्यमाणोऽभिप्रायः ।।

---

१ **कर्तृत्वाधिकरणभाष्यदीपिकायाम्** 'अत्रायं चन्द्रिकोक्तो भावः - जीवस्य विधिवाक्यतदर्थज्ञाने तज्जन्यसाधन-फलेच्छयोः साधनविषयककृतौ च भगवत्प्रेर्यत्वेऽपि न विधिविषयत्वकर्मफलभाक्त्व-योरनुपपत्तिरिति न शास्त्रप्रवृत्तिवैयर्थ्यम् । राजभटाद्युत्पादितेच्छादिमतोऽपि त्रिवर्णैर्विशिष्टगृहीतस्य च सन्ध्योपासनादौ भारवहनादौ च विध्यादिदर्शनेन तद्वदेवास्वतन्त्रकर्तृतामात्रेण तयोरुपपत्तेरिति । उक्तं हि गीताभाष्ये - अकर्तृत्वेऽपि विधिद्वारा ईशप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा मोक्षो भवतीति न प्रवृत्तिविधिवैयर्थ्यमिति । विवृतं चैतत्प्रमेयदीपे- जीवस्यापराधीनकर्तृत्वाभावेऽपि स्वसम्बन्धितया विधिज्ञानस्येश्वरप्रसादायत्तयोः कर्मफलं चोद्दिश्येच्छाप्रयत्नयोरधिष्ठानादिकर्मकारणसन्निधानस्य कर्म-सम्बन्धस्य तत्फलभाक्त्वस्य च विधिविषयताप्रयोजकस्य सत्त्वात् तस्य विधिविषयत्वोपपत्तिरिति । एतच्च प्रयोजकं नेश्वरमुक्तजीवजडेष्वस्तीति च तेषां विधिविषयत्वं किन्तु संसारिजीवस्येति चोक्तम् । यद्यपि वैषम्यादिपरिहारः पूर्वमेव वैषम्यसूत्रे कृतः। तथाऽपि स एव कर्तृत्व-शक्तेरीश्वराधीनत्वप्रयुक्तवैषम्यादिशङ्कापरिहारायेहाऽदिशब्देन स्मारयितुं पुनरुक्त इति न पौनरुक्त्यम् ।।'

२. वक्ष्यमाणाभिप्रायः -मातृकायाम् ।

## ( कर्मफलदाता ईश्वर एव )

कर्मद्वारा पुरुषार्थो भवतीति पुरुषार्थसाधने कर्मणां प्राधान्यं प्राप्तम् । अत आह– **फलं चेति** ।। ईश्वरेणैवेति वर्तते । यद्वा **'यदि च'** इत्यादिना वाक्यद्वयेन विधिविषयतासिद्धये कर्मफलसम्बन्धस्य काकतालीयता निराक्रियते । इदं च नेश्वरमुक्तजडेषु विध्यविषयेष्वस्ति, किन्तु संसारिष्वेवेति भवति प्रयोजकम् ।।

### भावदीपः

**कर्म भवतीत्युक्तम्** इत्यर्थानुवादः । **जायते** इत्यत्र केन ? इत्याकाङ्क्षायामुक्तम् – **ईश्वरेणैवेति** ।। 'कारितम्' इत्यत्र विशेष्याकाङ्क्षायामुक्तं – **कर्मेति** ।। अधिष्ठानादेरवैय्यर्थ्यायोक्तम् – **निमित्तमात्राणीति** ।। **कारित**मित्युक्त्या प्रयोजककर्तृत्वमेवेति भ्रमनिरासायोक्तम्– **कर्तृत्वादिति** ।। तर्हि कृतमिति वाच्यमित्यत आह– **अत्रेति** ।। जीवस्यापि कर्तृत्वमस्तीत्यभिप्राय इत्यर्थः ।।

वेदानां वाक्यद्वयमुक्तविवरणपरं किन्तु विधिविषयत्वे हेतुत्वेनोक्तो यः कर्मसम्बन्धः फलसम्बन्धश्च तद्वयं कर्तुर्जीवस्य निर्हेतुकमिति शङ्काव्यावृत्त्यर्थं प्राप्तमित्याह– **यद्वेति** ।। **काकतालीयतेति** ।। यादृच्छिकेत्यर्थः ।। विधिज्ञानद्वारेच्छाप्रयत्नावुत्पाद्य जीवस्येश्वरः स्वयमेव कर्मसम्बन्धं फलसम्बन्धं च सम्पादयतीति काकतालीयता निरस्यत इत्यर्थः ।। **इदं चेति** ।। विधिविषयताया प्रयोजकीभूतं स्वसम्बन्धितया विधिज्ञानोतेपन्नेच्छाप्रयत्नद्वारा ईश्वरकारितकर्मफलसम्बन्धवत्वमित्यर्थः ।। **संसारिष्वेव** इत्यनन्तरम् इतिशब्दो अध्याहार्यः ।।

विवृतमेतत् चन्द्रिकायाम्[1] जीवेपि विध्यविषयेभ्यः ईश्वरजडमुक्तेभ्यो व्याहतस्य स्वसम्बन्धितया विधिज्ञानस्य तज्जन्यायाः फलसाधनेच्छायां साधनविषयकृते अनुभवसिद्धत्वात्, तस्य ज्ञानादेः सम्मते त्वत् इत्यादिश्रुतिभिरीशाधीनत्वेप्यस्वतन्त्रकर्तृत्वमात्रेण विधिविषयत्वं कर्मफलभाक्त्वं च युक्तमिति ।।

**भाष्यम् — वस्तुतोऽकर्तृत्वेऽप्याभिमानिकं कर्तृत्वं तस्यैव । स्वातन्त्र्यं च जडम् अपेक्ष्यैवेति न प्रवृत्तिविधिवैयर्थ्यम् । सर्वं चैतदनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते ।। १८ ।।**

---

१. (अ)अयं भागः सोमातृकायामेव । (आ) कर्तृत्वाधिकरणचन्द्रिकायाम् ।

## प्रमेयदीपिका

### ( ईश्वरस्य कर्तृत्वेपि प्रवृत्तिविधिवैयर्थ्याभावसाधनम् )

एवमेकं[1] गीतोक्तं कारणमुक्त्वा भाष्यकारः कारणान्तरं चाह– **वस्तुत** इति ।। **वस्तुतः** परमार्थतः । **आभिमानिकम्** अहङ्कारकारितं भ्रान्तिप्रतीतम् । **तस्य** जीवस्य **एव** इत्यवधारणेनास्य जीवं प्रति विधिप्रवृत्तौ प्रयोजकत्वं समर्थयते । परमेश्वरकृतासु क्रियासु स्वस्य स्वातन्त्र्यं मन्यमानस्यापराधीनो विधिबन्धलक्षणो दण्ड इति भावः ।।

प्रकारान्तरमाह– **स्वातन्त्र्यं चेति** ।। 'तस्य' इति वर्तते । स्यादिदं [2]प्रवृत्तिविधिवैयर्थ्यं यदि जीवस्य क्रियास्वातन्त्र्यलक्षणं कर्तृत्वं सर्वथा न स्यात् । न चैवम् । ईश्वरायत्तस्य तस्याङ्गीकारात् । अपराधीनापेक्षया तदभावोक्तेः । न चैवं जडतौल्यमित्याह– **जडमपेक्ष्येति** ।। 'अधिकम्' इति शेषः । जडं हि तदा परकृतेन नोदनादिना क्रियावद्भवति । न त्वागन्तुककारणमन्तरेण स्वेच्छया । जीवस्त्वनादिसिद्धया परमेश्वरप्रसादायत्तया सत्तातुल्यया क्रियाशक्त्या कर्तेति युक्तस्तं प्रति कर्मविधिरिति ।।

नन्वेतत् सर्वं कुतः प्रमाणात् प्रतिपत्तव्यम्? इत्यत आह– **सर्वं चेति** ।। अनुभवेनोक्तप्रमाणैश्च । 'विधिज्ञाने सतीच्छोत्पत्तिः' इत्यादिकमनुभवसिद्धम् । **ईश्वरप्रसादात्** इत्यादिकं तु '**यथा नियुक्तोऽस्मि**' इत्याद्युदाहृतागमसिद्धम् ।। **पृथक्** पुनः ।। १८ ।।

## भावदीपः

[3]**गीतोक्तमिति** ।। '**ज्ञानं ज्ञेयम्**' (१८.१) इति गीतोक्तमित्यर्थः ।। **समर्थयते** इत्युक्तं व्यनक्ति– **परमेश्वरेति** ।। कथमनेन विधिविषयत्वप्रकारोपादनम्? इत्यत आह– **स्यादिदमित्यादिना** ।। अधिकम् इत्युक्तेः कृत्यमाह– **जडं हीति** ।। विक्रिया चानुभवरीत्युक्त्या विक्रियारूपावान्तरक्रियायामस्ति कर्तृत्वं तस्येति सूचितम् ।। अनुभवादिकं व्यनक्ति– **विधिज्ञाने सतीत्यादिना** ।। **उदाहृतेति** ।। 'यथा नियुक्तोऽस्मि तथा वहामि' इति [4]पञ्चरात्रागमेत्यर्थः ।। **पृथक्** इत्यनुवादः, **पुन**रिति व्याख्या ।।

---

१. 'एवमनेकम्-' इति कृ.टि पाठः । 'गीतोक्तकारण' इति कचित् पाठः' इति -कृ.टि. ।

२. कृ.टि., भाष्यानुगुणपाठः । 'विधिप्रवृत्ति' इति श्रीनि-पाठः ।

३. अयं भागः का-मातृकायां नास्ति ।

४. पञ्चदशोक्तागम-मं मातृकायाम् ।

तावता कथं मोक्षसाधनप्रपञ्चनम्? इत्यत आह– सात्त्विकं हीति ।। १८ ।।

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ।। १९ ।।**

**भाष्यम् —** पुनः साधनप्रथनाय गुणभेदानाह – **ज्ञानमित्यादिना** ।। **गुण-सङ्ख्याने** गुणगणनप्रकरणे ।। १९ ।।

प्रमेयदीपिका

**ज्ञानं कर्म** इत्यादेः प्रकृतोपयोगाप्रतीतेस्तं दर्शयन्नाह– **पुनरिति** ।। मोक्षसाधनप्रपञ्चनात् प्रागपि गुणभेदानामुक्तत्वात् पुनः इत्युक्तम् । **गुणसङ्ख्यान**शब्देन कापिलं शास्त्रमुच्यते इति भावेनाऽह– **गुणेति** ।। तच्च वैदिकमभिप्रेतम् ।। १९ ।।

भावदीपः

**प्रागपीति** ।। पूर्वाध्यायादौ ।।

( ज्ञाने सात्त्विकादिविभागनिरूपणम् )

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ।। २० ।।**[१]

**भाष्यम् —** **एकं भावं** विष्णुम् ।। २० ।।

प्रमेयदीपिका

**एकं भावम्** इति सामान्येनोक्तम् । कोऽसावेको भावः? इत्याकाङ्क्षायामाह– **एक-मिति**।। २० ।।

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।**

१. **वि.त.नि.टीकायाम्- (पृ-६६८)** इदानीं स्मृतिसमाख्यामप्याह- सर्वभूतेष्विति । विभक्तेषु परस्परं परमेश्वराच्च भिन्नेषु सर्वभूतेषु चेतनाचेतनेष्वविभक्तं स्वगतभेदवर्जितम् । तेषां व्ययेऽप्यव्ययमेकं भावं सर्वोत्तमं पदार्थं येन ज्ञानेनेक्षते विषयीकरोति तद् ज्ञानं सात्त्विकं विद्धीत्यर्थः ।।

वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥
यत् तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत् तामसमुदाहृतम् ॥ २२ ॥

( कर्मणि सात्त्विकादिविभागनिरूपणम् )

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत् तत् सात्त्विकमुच्यते ॥ २३ ॥
यत् तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ॥ २५ ॥[१]

( कर्तरि सात्त्विकादिविभागनिरूपणम् )

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

भाष्यम् — परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री ।
'परेण यः कृतो दोषः दीर्घकालकृतोऽपि वा ।
यस्तस्य सूचको दोषाद्दीर्घसूत्री स उच्यते'
इत्यभिधानात् ॥ २८ ॥

१. इमानि २० तः २६ श्लोकाणि त.प्र.भावदीपे ३..४.५ उदाहृतानि ।

### प्रमेयदीपिका

दीर्घसूत्रित्वं कथं तामसत्वहेतुः? इत्यतः सप्रमाणकं व्याचष्टे– **परेति** ।। **दीर्घकालकृतं** चिरातीतकालकृतम् । **अनुचितं** वचनायोग्यम् । परोपद्रवहेतुत्वात् **दोषात्** मात्सर्यादेः ।।

### भावदीपः

'**दोषादिति** प्रमाणस्यानुवादः ,'मात्सर्यादेः' इति व्याख्या ।। २८ ।।

( बुद्धेः गुणतः सात्त्विकादिविभागनिरूपणम् )

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ।। २९ ।।**
**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ।। ३० ।।**
**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ।। ३१ ।।**

**भाष्यम् —** यथार्थत्वनियमाभावे राजस्याः । अन्यथा तामस्याः भेदाभावात् ।। ३१ ।।

### प्रमेयदीपिका

**यया धर्ममधर्मं च** इति राजस्याः बुद्धेः धर्मादिविषयाया अयथार्थज्ञानहेतुत्वमुच्यते'[२] इत्यन्यथाप्रतीतिनिरासार्थमाह- **यथार्थत्वेति** ।। '**अयथावत् प्रजानाति**' इत्यस्य यथार्थज्ञानजनननियमाभावे तात्पर्यमित्यर्थः ।।

प्रतीत एवार्थः किं न स्यात्? इत्यत आह - **अन्यथेति** ।। **राजस्याः** इति षष्ठ्यन्तमनुवर्तते । **तामस्याः** इति पञ्चमी । **भेदाभावात्** भेदाभावप्रसङ्गात् ।। ३१ ।।

१. अयं भागः का मातृकायां नास्ति ।
२. शाङ्करभाष्यानुवादः -तृतीयो भागः- पृ -३४२ ।

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥[1]

( धृतौ सात्त्विकादिविभागनिरूपणम् )

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥
यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥

( सुखे सात्त्विकादिविभागनिरूपणम् )

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥
विषयेन्द्रियसंयोगाद्यत् तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

---

१. (अ)३.११.२५ **भाग.तात्पर्ये** उदाहृतः । 'दुःखे च सुखमानिनो असुराः' इति तात्पर्यम् । 'सर्वार्थानपि विपरीतानेव पश्यन्ति' यादुपत्यम् ।

(आ) 'अधमसम्बन्धिचैतन्ये तु सदोषत्वमेव' इति न्यायसुधावचनस्य यादवार्या एवं व्याचक्रुः - नचैवमधमानां मुक्त्यनन्तरं स्वरूपदुःखानुभवोप्ययथार्थः स्यात् । ततश्च तस्यापुरुषार्थताप्रसङ्ग इति वाच्यम् । दुःखस्वरूपांशे यथार्थत्वेपि तस्येश्वराद्यधीनत्वादिप्रकारांशे अयथार्थत्वसम्भवात् । अत एवोक्तं पद्धतौ- अधमानां स्वरूपेन्द्रियं स्वरूपमात्रे यथार्थमेव । प्रकारांशे त्वयथार्थम्' इति । एवमेव 'सर्वार्थान् विपरीतांश्च' इत्येतदपि प्रकारांशमादायेव नेयम् ॥' अधिकविचारः- द्रं -**सुधा टिप्पणी** शे.वा.चं, **+सत्यव्रतीया- सम्पुटम्**-१२. पत्रम्-५५२४-५५२८. अधमजीवानां ज्ञानस्वरूपनिरूपणावसरे ।

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४० ॥

( ब्राह्मणादिस्वभावकर्माणि )

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥[1]
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥[2]

( सिद्धिप्राप्त्युपायकथनम् )

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

---

१. यजनाध्ययनं दानं त्रीणि कर्माणि सर्वदा । ब्राह्मणादिद्विजातीनां त्रयाणामीरितानि वै ॥ २ ॥
याजनाध्यने चैव तृतीयं तु परिग्रहः । जीवितार्थं त्रिकर्माणि ब्राह्मणस्य स्मृतानि वै ॥ ३ ॥
युद्धे वैरिजयो वापि मरणं वा नृपस्य तु । जीविका प्रोच्यते देवि वैश्यानां कृषिकर्मणा ॥ ४ ॥
गोरक्षा चैव वाणिज्यं शूद्रस्योत्तमसेवनम् ॥....॥ वराह.पु.चा.मा.-१३अध्याये ।

२. इदं वाक्यमुदाहृतं कथालक्षणभावदीपे- 'त्रैवर्णिकानां दर्शपूर्णमासादिरिव त्रैवर्णिकेतरस्य 'परिचर्यात्मकं कर्म .. लभते नरः ' इचि त्रैवर्णिकपरिचर्या तीर्थस्नानादिरपि स्वर्गस्य कारणान्तरं दृष्टम्'..॥

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।। ४७ ।।**
**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।। ४८ ।।**
**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ।। ४९ ।।**

**भाष्यम् — नैष्कर्म्यसिद्धिं नैष्कर्म्यफलां योगसिद्धिम्** ।। ४९ ।।

**प्रमेयदीपिका**

'नैष्कर्म्यसिद्धिं मोक्षम्'[१] इति केचित् । तदसत् । तदनन्तरं मां विशते इति वाक्यशेष-विरोधादिति भावेनान्यथा व्याचष्टे– **नैष्कर्म्यमिति** ।। नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः । सा च योगस्येत्यर्थः ।। ४९ ।।

**भावदीपः**

**विशते तदनन्तरम्** इत्यस्यान्वयमुखेन अनुवादः, तदनन्तरं मां विशत इति ।। ततो **मां तत्वतो ज्ञात्वा विशते** इत्यत्राङः प्रश्लेष इति भावः ।। ४९ ।।

**सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ।। ५० ।।**

**भाष्यम् —** यथा येनोपायेन **सिद्धिं प्राप्तो ब्रह्म (प्रा)आप्नोति तथा निबोध** । या सिद्धिः **ज्ञानस्य परा निष्ठा** ।। ५० ।।

**प्रमेयदीपिका**

**'सिद्धिं प्राप्तः'** इति योगसिद्धिप्राप्त्यनन्तरं ब्रह्मप्राप्तावुपायकथनं प्रतिज्ञायते'[२] इत्यन्यथा-प्रतीतिनिरासार्थं व्याचष्टे– **यथेति** ।। **ब्रह्माऽऽप्नोति** इत्यनुवादमात्रम् । **तथा** तमुपायम् ।।

१. शाङ्करभाष्ये तृतीयो भागः- पृ -३६९ ।
२. शाङ्करभाष्यानुवादः तृतीयो भागः- पृ -३७१ ।

प्रतीत एवार्थः किं न स्यात्? इति चेन्न । सिद्धेः ज्ञाननिष्ठाऽऽत्मकत्वेन अभिधानात् । ज्ञानस्य च ब्रह्मप्राप्तावनपेक्षत्वादिति भावेन '**निष्ठा**' इत्येतद् व्याचष्टे– येति ।। ५० ।।

### भावदीपः

तमिति शेषः, '**उपायम्** इति व्याख्या, उपायमिति वा शेषः ।। **अनपेक्षत्वादिति** ।। अन्यानपेक्षतया स्वस्यैवाहेतुत्वादित्यर्थः ।। **येतीति** ।। **या सिद्धिः ज्ञानस्य** परिनिष्ठा नितरां स्थितिस्तां **सिद्धिं प्राप्तः** इति भाष्ये गीतायां चान्वय इति भावः ।।

**बुध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।**
**शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।। ५१ ।।**
**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।। ५२ ।।**
**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।। ५३ ।।**
**[2]ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।। ५४ ।।**

**भाष्यम्- ब्रह्मभूयाय कल्पते । ब्रह्मणि भावो ब्रह्मभूयं ब्रह्मणि स्थितिः । सर्वदा तन्मनस्कतेत्यर्थः ।। ५३-५४ ।।**

### प्रमेयदीपिका

'ब्रह्मभूयाय ब्रह्मत्वाय' इति प्रतीतिनिरासार्थं व्याचष्टे– **ब्रह्मेति** ।। 'इत्यर्थः' इति शेषः । भावो न जन्मादि' इत्याशयेन विवृणोति– **ब्रह्मणीति** ।। इयमपि न मुक्तिः । 'ब्रह्मभूतः' इति पुनर्भक्त्यादिलाभश्रवणादिति भावेनाऽह– **सर्वदेति** ।। ५३-५४ ।।

---

१. अयं भागः का-मातृकायां नास्ति ।

२. '**ब्रह्मभूतः ब्रह्मणि भूतं मनः यस्य स तथा । ब्रह्मनिविष्टमनाः इति यावत् । भूतं वृत्ते समे सत्ये चित्तेऽतीतेऽभिधीयते इत्यभिधानात्** ' इति विजयध्वजतीर्थाः भाग ५-१०-६ ।

**भावदीपः**

'ब्रह्मभूत इतीति ।। 'ब्रह्मभूतः' इति श्लोक इत्यर्थः ।। ५३-५४ ।।

**भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।। ५५ ।।**[२]

( अन्तरङ्गसाधननिरूपणम् )

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।। ५६ ।।**

**भाष्यम्** —पुनरन्तरङ्गसाधनान्युक्त्वोपसंहरति - **सर्वकर्माणीत्यादिना** ।।५६।।

**प्रमेयदीपिका**

उत्तरग्रन्थस्य सङ्गतिं सूचयंस्तात्पर्यमाह - **पुनरिति** ।। उपसंहरति -'शास्त्रम्' इति शेषः ।। ५६ ।।

**चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ।। ५७ ।।**
**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**[३]
**अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ।। ५८ ।।**
**यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ।। ५९ ।।**

---

१. अयं भागः का-मातृकायां नास्ति ।

२. (अ) **न्यायामृते अहमर्थस्यानात्मत्वभङ्गे** -' ततो मां ..तदनन्तरम्' इत्यत्र मुक्तप्राप्यत्वोक्तेः ।।
(आ)' भक्त्या मा..तदनन्तरं सर्वेषां भक्त्यादिन पूर्णज्ञानोत्पत्तेः सम्पूर्णज्ञानेनैव मोक्षस्मरणात्' इति ३.३.५२ त.प्र.टीकायां पूर्वपक्षे उदाहृतः । सिद्धान्तस्तु -'यावान् यश्चास्मि इति हिरण्यगर्भविषयमेतत् । सामन्यतः सर्वज्ञानमिति सर्वविषयं वा ' इति ।।

३. **न्यायामृते ज्ञाननिवर्त्यत्वान्यथोपपत्तिविचारप्रकरणे** - वस्तुतस्तु ईश्वरप्रसादादेव बन्धनिवृत्तिः । 'मत्प्रसादात्तरिष्यसि' इति स्मृतेः ।।

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥ ६० ॥**
**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥**
**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥**

**भाष्यम् —** परोक्षवचनं तु द्रोणं प्रति भीमवचनवत् ॥ ६१-६२ ॥

**प्रमेयदीपिका**

**'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'** ,**'तमेव शरणं गच्छ'** **'तत्प्रसादात्'** इत्यादिरूपात् परोक्षवचनात् कृष्णस्यानीश्वरत्वं प्रतीयते । तन्निराकर्तुमाह– परोक्षेति ॥ निश्चितार्थत्वाभिप्रायेण । 'अन्यथा सिद्धम्' इति शेषः ॥ ६१-६२ ॥

**इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥**
**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥**[1]
**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**[2]
**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥**[3]

---

१. इमौ (६४-६५) भगवद्भक्तिज्ञानवैराग्यपूर्वकं कर्म कर्तव्यमित्यत्र मानमिति कर्म.नि-भाष्यान्त्यभागे उ॥

२. ६४-६५ श्लोकौ वराह.पु.चा.मा.२३-२५३,२५४ उ ।'सर्वधर्मान् मयि न्यस्य' इति पूर्वार्धे व्यत्यासः।

३. (अ) सुधा-३.३.४८(पृ-५००६) 'धर्मान् वैष्णवान् काम्यार्थान् च । शरणप्राप्तिश्च 'सर्वोत्तमत्व-विज्ञानपूर्वम्' इत्यादिना अन्यत्र भगवत्पादैरेव व्याख्याता । ततः प्रसन्नो अहम् । मा शुचः । न शोचिष्यसि मुक्तो भविष्यसि ॥'

**भाष्यम्** — धर्मत्यागः फलत्यागः । कथमन्यथा युद्धविधिः?–
**'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते'** (१८.११)इति चोक्तम् ।। ६६ ।।

**प्रमेयदीपिका**

'सर्वधर्मान् परित्यज्य' इति वर्णाश्रमविहितानामपि सर्वधर्माणां परित्यागो विधीयते'[१] इत्यन्यथाप्रतीतिनिरासार्थमाह– **धर्मेति** ।। प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **कथमिति** ।। 'अस्मिन् शास्त्रे क्रियते' इति शेषः । अशाब्दोऽयमर्थ इति चेन्न, धर्मशब्दस्य स्वकार्यफलोपलक्षणत्वात् । एवमेव भगवता व्याख्यातत्वाच्च इत्याह– **यस्त्विति** ।। ६६ ।।

( गीताध्ययनानधिकारिनिरूपणम् )

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**[२]
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ।। ६७ ।।**
[३]**य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**

(आ) वि.त.नि.टी.टि व्या.टि. उदाहतम् (मा.रा.सं.स.प्रकाशनम्-पृ.६४१.)

१. शाङ्करभाष्यानुवादः -पृ ४००.।'सर्वधर्मान् परित्यज्य सन्न्यस्य सर्वकर्माणीत्येतत्' इति शाङ्करभाष्ये।

२. तै.उ.भा.टि.प्रकाशिकायाम् -'दमायन्तु…, शमायन्तु..ब्रह्मचारिणः स्वाहा ' शमो मन्निष्ठता बुद्धेः' इति वचनाच्छमः विष्णुविषयकनिष्ठा । विष्णुविषयकनिष्ठाभावे तं प्रति वेदोपदेशायोगादिदं प्रार्थनम् । 'नाभक्ताय कदाचन ' इति गीतोक्तेः । 'दम इन्द्रियनिग्रहः' इति वचनाद् दमा इन्द्रियनिग्रहवन्तः । 'इदं ते नातपस्काय' इति गीतायामेवेक्तत्वादिदं प्रार्थनम् ।

३. (अ) अनु-३.४.१६ 'य इमं परमम्' इति श्लोको दृश्यते ।

सुधा-(पृ-५१३८)'य इमम्' इति व्याख्येतुरध्येतुः श्रोतुश्च तारतम्यमुच्यते । व्याख्यानादिप्राचुर्यं च प्रत्येकं मोक्षसाधनमित्यन्यत्रोक्तम् ।।

(आ) अनु-३.४.४९ सुधा-(पृ-५३५४) ज्ञानफलादप्याचार्यस्य ज्ञानफलमधिकमित्यत्र भगवद्गीता-संवादमाह- य इममिति ।। 'अध्येष्यते' इत्युत्तरवाक्यमप्यत्र पठनीयम् ।।

(इ) ब्र.सू.भा.१.१.१ त.प्र- 'य इमं परमं गुह्यम्' इत्यादेः कर्मादिनाऽपि भगवत्प्रसादसिद्धेः ।।

(ई) त.सा.सं.४-१४३ उदाहृताविमौ -'गुह्यं रहस्यशास्त्रम् । अभिधास्यति व्याख्यास्यति । तस्मात् व्याख्यातुः कश्चिदन्यः प्रियकृत्तमः अतिशयेन प्रियकारी । तस्माद् व्याख्यातुः अन्यः प्रियतरः अतिशयेन प्रीतिविषयः । अत्र कृष्णेन व्याख्यातुः मामेवेष्यसीति स्वप्राप्तिरूपफलाभिधानात् प्रियकृत्तम इत्यनेन व्याख्यातुः अयं तस्य प्रियकारित्वोक्तेश्च प्रियतर इत्यनेन तस्यातिशयेन स्वप्रीतिविषययत्वोक्तेश्च व्याख्यानस्योत्तमत्वं सिद्ध्यतीति ज्ञेयम् ।' इति छलारीये ।।

भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥[1]
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता नच मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥
श्रद्धवाननसूयश्च[2] शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभांल्लोकान् प्राप्नुयात् पुण्यकर्मणाम् ॥ ७१ ॥
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ॥ ७२ ॥

( अर्जुनेन युद्धप्रतिज्ञा )

अर्जुन उवाच -

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥

(सञ्जयेन गीतोपंहारः)

सञ्जय उवाच -

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवान् एतद्गुह्यमहं परम् ।
योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम् ॥ ७५ ॥
राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।

---

१. पूर्वार्धे प्रचलितः 'य इदम्' इति - पाठः रामानुजीयपाठः ।

२. 'न गुणान् गुणिनो हन्ति स्तौति चान्यान् गुणानपि । न हसेचान्यदोषांश्च सानसूया प्रकीर्तिता' -अत्रिसंहिता १-३४.

**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**
**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥ ७७ ॥**

(श्रीकृष्णार्जुनयोर्माहात्म्यम्)

**यत्र योगेश्वरः[1] कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥**

॥ ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसन्न्यासयोगो नामाष्टादशोऽध्यायः ॥

( भाष्यान्तिममङ्गलाचरणम् )

**पूर्णादोषमहाविष्णोः गीतामाश्रित्य लेशतः ।**
**निरूपणं कृतं तेन प्रीयतां मे सदा विभुः ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये अष्टादशोऽध्यायः समाप्तः ॥ १८ ॥

**प्रमेयदीपिका**

इदानीं समापितभाष्यो भगवानाचार्यो भाष्यनिर्माणस्य फलं भगवत्प्रीतिमेवाऽऽशास्ते– **पूर्णे**ति ॥ एतत् '**गीताम्**' इत्यनेन '**निरूपणम्**' इत्यनेन च सम्बद्ध्यते । '**तेन**' इति श्रवणात् 'यत्' इति लभ्यते ॥

**भावदीपः**

**समापितभाष्येति** ॥ बहुव्रीहिः, स्वस्य चेत्यर्थः ॥ **एतदिति** ॥ पूर्णादोषमहाविष्णोः इत्येतदित्यर्थः ॥

---

१. 'सहजाणिमादियोगैश्वर्यवान् । सर्वोपायानामीश्वरो वा' । इति विजयध्वजतीर्थाः १.८.१७ ।

**प्रमेयदीपिका**

करतलकलितामलकमिव प्रभुणा येनेदमवगतं विश्वम् ।।
स जयति[1] जनकसुतायाः कान्तः श्रीरघुनन्दनो देवः ।। १ ।।

नमामि व्यासदासस्य पूर्णबुद्धेः पदाम्बुजे ।
नतामरशिरोरत्नराजिनीराजिते सदा ।। २ ।।

अक्षोभ्यतीर्थगुरुणा शुकवच्छिक्षितस्य मे ।
वचोभिरमृतप्रायैः प्रीयन्तां सततं बुधाः ।। ३ ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायाम् अष्टादशोऽध्यायः समाप्तः ।। १८ ।।[2]

**भावदीपः**

**जयति** ।। सर्वोत्कृष्टो वर्तते । नतेति नमनं कुर्वताम् अमराणां देवानां शिरोरत्न-राजैः **नीराजिते** आरार्तितेत्यर्थः । बुधाः विद्वांसः । अमृतैर्विबुधा देवा यथा प्रीयन्ते तथा मे **वचोभिः** अमृतकल्पैः मूलार्थं स्पष्टं प्रकाशयद्भिः वचोभिः विद्वांसः प्रीयन्ताम् इत्यर्थः ।।[3]

[4]कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ।।
श्रीमद्गीताभाष्यटीकाभावदीपः कृतो मया ।
राघवेन्द्रेण यतिना प्रीत्यै माधवमध्वयोः ।।

।। इति श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते अष्टादशोऽध्यायः समाप्तः ।।

श्रीकृष्णार्पणमस्तु

---

१ 'जयेर्जयाभिभवयोराद्येर्थेऽसावकर्मकः । उत्कर्षप्राप्तिराद्योऽर्थः' इति मा.ख.टीकायाम् ।

२ अत्र गुज पुस्तके इमौ द्वौ श्लोकौ भाष्यान्त्ये पठ्येते ।
'सङ्कराख्यस्य दुर्योनेः निस्सृतेन रजस्वला । गीतानारी समीरेण शोधिता हंसरूपिणा ।।
मायिनः शलभायन्ते भास्करस्तस्करायते । यस्य तस्मिन्प्राणनाथे यतीन्द्रे भक्तिरस्तु मे ।।'

३. 'परशब्दादतिशये मप्रत्य इति भावः' -वि.त.नि.टीकायां-प्र-परिच्छेदे ।

४. प्रमाणपद्धतिटिप्पण्यामपि भावदीपे अयमेव मङ्गलाचरणश्लोकः दृश्यते ।

## परिशिष्टम् -१

श्रीमद्भागवते श्रीमद्भगवद्गीतायां भगवता विभूतिरूपवर्णनं कृतम् । तस्यायं सङ्ग्रहः।

### भगवतो विभूतिविवेकः

| उल्लेखः | जातिः | विभूतिः | विभूतिस्वरूपम् |
|---|---|---|---|
| गीता+भाग | आदित्याः | विष्णुः | नैजः |
| गीता | ज्योतिषः | रविः | |
| | तपन्तः, द्युमन्तः | | मनुष्यदृष्टिगोचरज्योतींषि |
| गीता | मरुतः | मरीचिः | |
| गीतां | नक्षत्राणि | चन्द्रः | विजातीयम् |
| भागवते | ओषधयः | | सजातीयम् |
| गीता | वेदाः | (सामवेदः | सजातीयैकदेशः |
| भागवते | | ऋग्वेदः | सजातीयः |
| गीता | देवाः | वासवः | सजातीयैकदेशः |
| भागवते | | | सजातीयः |
| भागवते | सर्वदेवाः | इन्द्रः | सजातीयैकदेशः |
| गीता | इन्द्रियाणि | मनः | सजातीयः |
| गीता | भूतानि | चेतना | धर्मविशेषनिष्ठम् |
| गीता | रुद्राः | शङ्करः | सजातीयः |
| भागवते | | नीललोहितः | |
| गीता+भाग | यक्षराक्षसाः | कुबेरः | |
| गीता+भाग | वसवः | पावकः | |
| गीता | शिखरिणः | मेरुः | |
| भागवते | गिरयः | | |

| | | | |
|---|---|---|---|
| गीता | मानुषपुरोधसः | वसिष्ठः | |
| भागवते | | | |
| भागवते | ब्रह्मिष्ठाः | बृहस्पतिः | सजातीयैकदेशः |
| गीता+भाग | सेनान्यः | स्कन्दः | |
| गीता+भाग | सरसः | सागरः | |
| गीता | महर्षयः | भृगुः | सजातीयः |
| भागवते | ब्रह्मर्षयः | | |
| गीता | गिरः | ओङ्कारः | |
| गीता | यज्ञाः | जपयज्ञः | सजातीयैकदेशः |
| भागवते | | ब्रह्मयज्ञः | |
| गीता | स्थावराणि | हिमालयः | |
| भागवते | गहनानि | | |
| गीता | वृक्षाः | अश्वत्थः | |
| भागवते | वनस्पतयः | | |
| गीता+भाग | देवर्षयः | नारदः | |
| गीता+भाग | राजर्षयः | स्वायम्भुवमनुः | सजातीयः |
| | पुरुषाः | | सजातीयैकदेशः |
| भागवते | स्त्रियः | शतरूपा | |
| गीता | गन्धर्वाः | चित्ररथः | |
| गीता+भाग | सिद्धाः | कपिलः | नैजः |
| गीता | अश्वाः | उच्चैश्रवाः | |
| गीता+भाग | गजाः | ऐरावतः | |
| | नराः | चक्रवर्ती | |
| गीता | आयुधाः | वज्रम् | सजातीयैकदेशः |
| भागवते | | सुदर्शनम् (धनुः) | |
| गीता+भाग | धेनवः | कामधेनुः | |
| गीता | प्रजनाः | मन्मथः | |
| गीता+भाग | सर्पाः | वासुकिः | |
| गीता+भाग | नागाः | अनन्तः | |

| | | | |
|---|---|---|---|
| गीता+भाग | जलचराः | वरुणः | |
| गीता+भाग | पितरः | अर्यमा | |
| गीता+भाग | संयमिनः | यमः | सजातीयैकदेशः |
| गीता+भाग | दैत्याः | प्रल्हादः | |
| गीता+भाग | संहारकाः | कालः | |
| गीता | मृगाः | मृगेन्द्रः | |
| भागवते | शृङ्गिणः, दंष्ट्रिणः | | |
| गीता+भाग | पक्षिणः | गरुडः | |
| गीता | शोधकाः | पवनः | |
| गीता | शस्त्रभृतः | रामः | नैजः |
| गीता | झषाः | मकरः | |
| गीता | स्रोतसः | जाह्नवी | |
| भागवते | तीर्थाः | | |
| गीता | विद्याः | अध्यात्मविद्या | |
| गीता | प्रवदन्तः | वादः | धर्मनिष्ठविभूतिरूपम् |
| गीता+भाग | अक्षराणि | अकारः | |
| गीता | समासाः | द्वन्द्वः | |
| गीता | मारकाः | मृत्युः | |
| गीता | भविष्यन्तः | उद्भवः | |
| गीता | नार्यः | कीर्तिः, श्रीः, वाक् | |
| गीता | सामानि | बृहत्साम | |
| गीता | छन्दांसि | गायत्री | सजातीयैकदेशः |
| भागवते | | पदानि | नैजः |
| गीता+भाग | मासाः | मार्गशीर्षः | |
| गीता | ऋतवः | कुसुमाकरः | |
| भागवते | | मधुमाधवौ | |
| गीता | छलयन्तः | द्यूतम् | |
| गीता | वृष्णयः | वासुदेवः | नैजः |

| | | | |
|---|---|---|---|
| गीता | पाण्डवाः | धनञ्जयः | सजातीयैकदेशः |
| गीता | | भीमः | सजातीयः |
| गीता+भाग | मुनयः | वेदव्यासः | नैजः |
| गीता+भाग | कवयः | शुक्राचार्यः | सजातीयैकदेशः |
| गीता | दमयन्तः | दण्डः | |
| गीता | जिगीषवः | नीतिः | |
| गीता+भाग | गुह्यानि | मौनम् | |
| गीता | ज्ञानवन्तः | ज्ञानम् | धर्मनिष्ठविभूतिरूपम् |
| भागवते | गुणाः | सौम्यम् | सजातीयः |
| भागवते | गुणिनः | औत्पत्तिकःगुणः | |
| भागवते | सूक्ष्माः | जीवः | |
| भागवते | दुर्जयाः | मनः | |
| भागवते | मन्त्राणि | प्रणवः | |
| भागवते | प्रजापतयः | दक्षः | |
| भागवते | मनुष्याः | भूपतिः | |
| भागवते | धातवः | काञ्चनम् | |
| भागवते | आश्रमाः | सन्न्यासः | |
| भागवते | वर्णाः | ब्राह्मणः | जातिनिष्ठरूपम् |
| भागवते | ओषधयः | यवः | |
| भागवते | अग्रण्यः | ब्रह्मा | |
| भागवते | व्रतानि | अहिंसा | |
| भागवते | शुचयः | शुचिः | धर्मनिष्ठविभूतिरूपम् |
| भागवते | योगाः | आत्मसंरोधः | |
| भागवते | विजिगीषवः | मन्त्रम् | |
| भागवते | कौशलानि | आन्वीक्षकी | |
| भागवते | ख्यातिवादिनः | विकल्पः | |
| भागवते | स्त्रियः | शतरूपा | |

| | | | |
|---|---|---|---|
| भागवते | मुनयः | नारायणः | नैजः |
| भागवते | ब्रह्मचारिणः | कुमारः | सजातीयः |
| भागवते | धर्माः | सन्त्यागः | |
| भागवते | क्षमाः | अवहिर्मतिः | |
| भागवते | मिथुनम् | पुरुषः | विजातीयः |
| भागवते | अनिमिषाः | संवत्सरः | |
| भागवते | नक्षत्राणि | अभिजित् | |
| भागवते | युगाः | कृतयुगः | |
| भागवते | धीराः | देवलोसितः | सजातीयैकदेशः |
| भागवते | वृष्णयः | वासुदेवः | नैजः |
| भागवते | भागवताः | उद्धवः | सजातीयैकदेशः |
| भागवते | किंपुरुषाः | हनुमान् | |
| भागवते | विद्याधराः | सुदर्शनः | |
| भागवते | रत्नानि | पद्मरागः | |
| भागवते | पेशसः | पद्मकोशः | |
| भागवते | दर्भजातयः | कुशः | |
| भागवते | हवींषि | गव्यमाज्यम् | |
| भागवते | व्यवसायिनः | लक्ष्मीः | |
| भागवते | कितवाः | छलम् | धर्मनिष्ठरूपम् |
| भागवते | तितिक्षवः | तितिक्षा | धर्मनिष्ठरूपम् |
| भागवते | बलवान् | ओजः, सहः | धर्मनिष्ठरूपम् |
| भागवते | सात्वताः | कर्म | धर्मनिष्ठरूपम् |
| भागवते | नवमूर्तयः | आदिमूर्तिः | नैजः |
| भागवते | गन्धर्वाः | विश्वावसुः | सजातीयैकदेशः |
| भागवते | अप्सरसः | पूर्वचित्तिः | सजातीयैकदेशः |
| भागवते | भूधराः | स्थैर्यम् | धर्मनिष्ठः |

| | | | |
|---|---|---|---|
| **भागवते** | तेजिष्ठाः | **विभावसुः** | सजातीयैकदेशः |
| **भागवते** | सूर्य-इन्दु-ताराणि | **प्रभा** | धर्मिनिष्ठः |
| **भागवते** | ब्रह्मण्याः | **वलिः** | सजातीयैकदेशः |
| **भागवते** | वीराः | **अर्जुनः** | सजातीयैकदेशः |

## परिशिष्टम् -२. सात्विकादिभेदेन जीवविभागः

| | |
|---|---|
| **सात्विकसात्विकसात्विकसात्विकः** | ब्रह्मा, वायुश्च |
| **सात्विकसात्विकसात्विकराजसः** | ब्रह्माणी, भारती च |
| **सात्विकसात्विकसात्विकतामसः** | रुद्रः |
| **सात्विकसात्विकसात्विकाः** | ब्रह्मादि-रुद्रान्ताः |
| **सात्विकसात्विकराजसः** | इन्द्रः |
| **सात्विकसात्विकतामसः** | बृहस्पत्यादयः |
| **सात्विकसात्विकः** | तात्त्विकदेवाः |
| **सात्विकराजसः** | अतात्विकदेवताः |
| **सात्विकतामसः** | ऋषयः,पितरः,गन्धर्वाः... |
| **राजससात्विकाः** | विप्रादिपुल्कसान्ताः मनुष्योत्तमाः |
| **राजसराजससात्विकाः** | मनुष्यमध्यमाः स्वर्गभूप्रचुराः |
| **राजसतामससात्विकाः** | मनुष्यमध्यमाः निरयप्रचुराः |
| **तामससात्विकाः** | मनुष्याधमाः |
| **तामसराजसाः** | दैत्यभृत्याः |
| **तामसतामसाः** | प्रधाना देवशत्रवः: |

## परिशिष्टम् -३. अवस्थादिषु सात्विकादिविभागः -भागवते

| | सात्त्विकम् | राजसम् | तामसम् | निर्गुणम् |
|---|---|---|---|---|
| अवस्था | जाग्रत् | स्वप्नम् | प्रस्वापः | तुरीयावस्था |
| लयः | स्वर्गप्राप्तिः | नरलोकप्राप्तिः | निरयप्राप्तिः | भगवत्प्राप्तिः |
| कर्म | भगवदर्पितम् | फलकङ्क्ल्पम् | हिंसाप्रायादि | |
| ज्ञानम् | कैवल्यम् | कर्मनिष्ठम् | प्राकृतम् | भगवन्निष्ठम् |
| वासः | वनम् | ग्रामः | द्यूतसदनम् | भगवन्निकेतम् |
| कारकः | असङ्गी | रागान्धः | स्मृतिविभ्रष्ठः | भगवदपाश्रयः |
| श्रद्धा | आध्यात्मिकी | कर्मश्रद्धा | अधर्मश्रद्धा | भगवत्सेवाश्रद्धा |
| सुखम् | आत्मोत्थम् | विषयोत्थम् | मोह-दैन्योत्थम् | भगवदपाश्रयम् |

## परिशिष्टम् -४. गुणादिषु सात्विकादिविभागः

| सत्वगुणम् | रजोगुणम् | तमोगुणम् |
|---|---|---|
| देवबन्धिकाश्रीः अभिमानिनी | मनुष्यबन्धिका भूः (अभि) | दैत्यबन्धिका दुर्गा (अभि) |
| निर्मलम्, अनामयम्, तत्व-ज्ञानोत्पादकं सत् तत्वज्ञानसङ्गेन देवबन्धकम् | सृष्ट्यादिरञ्जनस्वरूपं तृष्णा-सङ्गजनकम्, कर्मसङ्गेन जीव-बन्धकम्. | सर्वदेहिनामज्ञानमिथ्या-ज्ञानजनकम्. प्रमादआलस्य-निद्राभिः बन्धकम्. |
| सुखविषयं प्रवर्तकम् | कर्मविषयप्रवर्तकम् | मनसः तत्वज्ञानशक्तिं प्रति-बध्याधर्मे धर्मबुद्धिजनकम् |
| सत्वगुणवृद्धिकाले सर्वद्वारेषु श्रोत्रादिषु शब्दादिज्ञानात्मकः प्रकाशः, सुखादि चोपजायते | रजोगुणवृद्धिकाले धनादेर-त्यागेच्छा, त्यर्थोद्योगः, काम्य-कर्मारम्भः, चित्तानुपरतिः, अप्राप्ताभिलाषः जायते | तमोगुणवृद्धिकाले श्रोत्रादिषु शब्दादिज्ञानाभावः, अनुद्यमः, अनवधानं, विपर्ययश्च भवति |
| परापरतत्वज्ञानजनकम् | स्वर्गादिविषयलोभजनकम् | प्रमादमोहाज्ञानजनकम् |

| | | |
|---|---|---|
| सत्वगुणवृद्धिकाले मरणे सात्त्विककुले देहप्राप्तिः | रजोगुणवृद्धिकाले मरणे काम्यकर्मिकुले देहप्राप्तिः | तमोगुणवृद्धिकाले मरणे दैत्यकुले देहप्राप्तिः |
| सत्वात् जनोलोकादिप्राप्तिः | रजसः स्वर्गादिलोकप्राप्तिः | तमसः नरकप्राप्तिः |

| | | |
|---|---|---|
| श्रद्धा | सात्त्विकाः | शास्त्रविधिमजानन्तः सात्त्विकश्रद्धामात्रया देवतायाजकाः, मोक्षफल-भाजः |
| | राजसाः | शास्त्रविधिमजानन्तः राजसश्रद्धावन्तः यक्षरक्षोयाजकाः, साङ्कल्पिक-स्वर्गादिगन्तारः |
| | तामसाः | शास्त्रविधिमजानन्तः तामसश्रद्धावन्तः अज्ञानिनः प्रेतादियाजकाः भूतादित्वगन्तारः |
| आहारः | सात्त्विकः | जीवन,साधुत्व,शक्ति,रोगराहित्य,सुख,प्रीतिविवर्धकः,. रसयुक्तः, स्नेहवान्. सेवनेन बहुकालगुणप्रदः, अनुभवे सति पश्चादपि भूयादिति मनोहारी आहारः |
| | राजसः | कटुः-आम्ल-लवण-अत्युष्ण-तीक्ष्ण-रूक्षण-दग्धः,दुःख,शोक, आमयप्रदः |
| | तामसः | यातयामः, गतरसः, पूति, पर्युषितम्, अन्यभुक्तावशिष्टम्,अमेध्यम् |
| यज्ञः | सात्त्विकः | फलाकाङ्क्षारहितेन विधिज्ञानपूर्वकं यष्टव्यमेवेति मनःसमाधाय अनुष्ठीयमानः |
| | राजसः | फलं मे भूयादिति कामयमान एव आत्ममहत्वप्रदर्शनार्थमेव अनुष्ठीयमानः |
| | तामसः | शास्त्रविधि-अन्नदान-मन्त्र-दक्षिणा-श्रद्धादिहीनतया क्रियमाणः |
| तपः | सात्त्विकम् | अफलाकाङ्क्षिभिः भगवति मनोयुक्तैः क्रियमाणम् |
| | राजसम् | मानसिकआदर-वाचिकप्रशंसा-पूजाद्यर्थं, दम्भेन आत्मनो महत्त्व-प्रदर्शनार्थं वा क्रियमाणं, पातभयेन चलहेतु, क्षयिष्णु च |
| | तामसम् | अविवेकदुराग्रहेणआत्मनः पीडया शत्रोरुत्सादनार्थं वा क्रियमाणम् |

| | | |
|---|---|---|
| कर्म | सात्विकम् | फलप्राप्तीच्छाहीनेन हरेः सर्वोत्तमत्वज्ञानपूर्वकं तदर्पणबुद्ध्या क्रियमाणं स्ववर्णाश्रमोचितम्, मदीयतास्नेहहीनम्, कीर्त्यादौ रागादिहानतः अकीर्त्यादौ द्वेषत्यागतः कृतम्, |
| | राजसम् | फलप्राप्तीच्छावता कर्तृत्वाभिमानसहितेन वहुलायासेन कृतम् |
| | तामसम् | अनुबन्धं कर्मान्तरमेवानुबध्यमानं, नाशं, परपीडाम्, आत्मनः कर्मसामर्थ्यं चाविमृश्य मोहादहं कर्तेति मिथ्याज्ञानात् कृतम् |
| कर्म फलम् | सात्विकम् | विद्वत्कुलप्रसूतेन सुष्ठु कृतस्य कर्मणः दुःखगन्धहीनं फलम् |
| | राजसम् | दुःखमिश्रं सुखम् |
| | तामसम् | अज्ञानं दुःखम् |
| कर्ता | सात्विकः | फलस्नेहहीनः, अनहंवादी (सर्वं भगवदधीनमिति निश्चयेन अहं कर्तेति न वदति=आत्मकर्तृत्वाभिमानहीनः), धृति(कर्मण्यव-र्जनीयदुःखसहनम्) उत्साह(कर्मकातरता) समन्वितः, फलसिद्धि-असिद्ध्योः हर्षविषादहीनः. |
| | राजसः | कीर्त्यादिकामः, कर्मफलप्राप्तीच्छावान्, लुब्धः=कर्मणि अपेक्षित द्रव्यव्ययहीनः, हिंसात्मकः, अशुचिः = द्रव्यादिषु शुद्धिहीनः, कार्य-सिद्धियसिद्ध्योः हर्षशोकान्वितः. |
| | तामसः | अयुक्तः=भगवदर्पणादियोगरहितः,प्राकृतः=भगवद्भक्तिसामर्थ्यात् प्रकृष्टः अकृतः, स्तब्धः = आत्मसम्भावनया क्वाप्यनम्रः, शठः = गूढद्वेषेण कर्मकारी, नैष्कृतिकः = नीचकर्मकृत्, अलसः = प्राप्त-कालेपि कर्मण्युदासीनः, विषादी = सर्वव्यापारोपरतिहेतुमनो-दौर्बल्यवान्, दीर्घसूत्री परकृतदोषं दीर्घकालकृतमप्यनुचितं सूचयन् |
| बुद्धिः | सात्विकी | यया संसारहेतुं प्रवृत्तिहेतुं च धर्मं, निवृत्तिहेतुधर्मं, कार्याकार्ये, भयाभयं, बन्धं, मोक्षं च यथावत् जानाति |
| | राजसी | यया धर्ममधर्मं कार्याकार्ये च अयथावदेव नियमेन जानाति |
| | तामसी | यया अधर्मे धर्मबुद्धिः, सर्वार्थान् विपरीतानेव जानाति |

| | | |
|---|---|---|
| धृतिः | **सात्विकी** | यया भगवद्भक्तियोगयुक्तया विहितविषयया मनःप्राणेन्द्रियक्रियाः ध्रियन्ते |
| | **राजसी** | यया फलाकाङ्क्षिण्या कर्मणि ममत्वस्नेहेन धर्मकामार्थान् ध्रियन्ते |
| | **तामसी** | अतीवनिद्रां, भयं, शोकं, दुःखं, विषादं, स्वप्नाद्युपलक्षितं सर्वं निषिद्धं भगवद्द्वेषादि यया नाविमुञ्चति |
| सुखम् | **सात्विकम्** | प्रारम्भे आयाससाध्यत्वात् विषमिव दृश्यमानं परिणामे अमृतसदृशं विष्ण्वनुग्रहाद् जातं, स्वतः विषयेष्वप्रवृत्त्या जातम् |
| | **राजसम्** | शब्दादिविषयाणां श्रोत्रादीन्द्रियाणां संयोगेनोत्पन्नविषयानुभवेन जायमानं प्रथमममृतसदृशं परिणामे विषमिव दुःखावहम्. |
| | **तामसम्** | अग्रे विपाके च मोहकरं निद्रा-आलस्य-प्रमाद (अधर्मे धर्मबुद्धिः)जन्यम्, |
| दानम् | **सात्विकम्** | दातव्यमित्यास्तिक्यबुद्ध्या पुण्यदेशे पुण्यकाले अनुपकारिणे उपकारमनपेक्ष्य सत्पात्रे दीयमानम् |
| | **राजसम्** | प्रत्युपकारार्थं, फलमुद्दिश्य वा अन्यायार्जितद्रव्यदानम् |
| | **तामसम्** | अशुचिदेशकालयोः नमस्कारादिसत्काररहित्येन अवज्ञाकरणेन अपात्रेभ्यः दीयमानम् |
| | **त्रिविधं तपः** | देव-द्विज-गुरु-प्राज्ञपूजनम्, बाह्याभ्यन्तरशौचम्, ब्रह्मचर्यं, अहिंसा च शारीरं तपः **(भगवदर्पितं सात्विकमिति सर्वत्रान्वेति)** |
| | | परानुद्वेगकरं सत्यं श्रवणसमये पुनःपुनः श्रवणेच्छाकरं कालान्तरे सुखकरं वाक्यं, स्वाध्यायाभ्यसनं च वाङ्मयं तपः |
| | | विषयेष्वप्रयासेन अप्रवृत्तिः, अक्रौर्यं, मननशीलत्वं, परमात्मनि विशिष्य मनसः अवस्थानं अन्तःकरणे नानाकामराहित्यं मानसं तपः |

## परिशिष्टम् -५ .मतत्रयभाष्यटीका-टिप्पणीषु गीतापाठान्तराणि

अत्र प्रधानतः माध्वभाष्यमधिकृत्य भाष्य-टीकान्तरेषु विद्यमानपाठान्तराणि उल्लिखितानि । रिक्तस्थलेषु भाष्य-टीकान्तरेषु विद्यमानः पाठः माध्वभाष्यपाठश्चैक एवेत्यवधेयम् ।

| अ-श्लो | माध्वभाष्यम् | शाङ्करभाष्यम् | रामानुजभाष्यम् | वल्लभः, ब्रह्मानन्दगिरिः, पैशाचः, नीलकण्ठः, अमृततरङ्गिणी, अविगीता |
|---|---|---|---|---|
| १-८ | सोमदत्तिस्तथैव च | | | सोमदत्तिर्जयद्रथः (नील) |
| २-२ | कुतस्त्वा | | | कुतस्त्वां (अमृततरङ्गिणी) |
| २-३ | क्लैब्यं मास्मगमःपार्थ | | | मा क्लैब्यं गच्छ कौन्तेय |
| २-५ | भैक्षमर्पीह | | | भैक्ष्यमर्पीह (पै, वल्लभ) |
| २-१० | विषीदन्तं | | सीदमानं | |
| २-१८ | अनाशिनः | | विनाशिनः | |
| २-२० | भूत्वा भविता | भूत्वा अभवित्ता | | |
| २-३३ | त्वमिमं धर्म्यं | त्वं धर्म्यमिमं | | |
| २-३७ | प्राप्स्यसि स्वर्गं | | प्राप्स्यसे स्वर्गं | (ब्र.गि) |
| ३-१० | सहयज्ञाः प्रजाः | | सहयज्ञैः प्रजाः | |
| ३-२३ | वर्तेयं | वर्तेय | | वर्तेय (नील) |
| ३-४१ | प्रजहि ह्येनं | प्रजहिहि ह्येनं | | |
| ४-४ | अपरं भवतः | | अवरं जन्म | |
| ५-२६ | विजितात्मनाम् | | विजितात्मनाम् | |
| ६-७ | मानापमानयोः | | मानावमानयोः | |
| ६-११ | चैलाजिन | चैलाजिन | | |

| | | | | |
|---|---|---|---|---|
| ६-१३ | अचलं स्थिरः | | अचलं स्थिरम् | |
| ६-२६ | निश्चरति | | | निश्चलति(ब्र.गि) |
| ६-२८ | एवं युञ्जन् | युञ्जन्नेवं | | |
| ६-३९ | एतन्मे संशयं | | एवं मे संशयं | |
| ६-४१ | पुण्यकृतां | | | पुण्यकृतान् (वल्लभः) |
| ७-२१ | अचलां श्रद्धां | | | अचलां भक्तिं(ब्र.गि ) |
| ७-२२ | हि तान् | हितान् (पां) | | |
| ८-१६ | आ ब्रह्मभुवनात् | | | आ ब्रह्मभवनात् (ब्र.गि) (अ.त) |
| ९-२१ | एवं त्रयीधर्मं | एवं हि त्रैधर्म्यम् | | |
| ११-२६ | अमी च त्वां | | अमी सर्वे | |
| ११-३७ | प्रजापतिस्त्वं | | | पितामहस्त्वं (अविगीता) |
| १३-१ | प्रकृतिं पुरुषं चैव | नोल्लिखितं | नोल्लिखितं | अमृततरङ्गिण्यां व्याख्यातम् |
| १३-२ | एतद्यो वेत्ति | | | एतद्यो वेद (अभिनवगुप्तः) |
| १३-१३ | अनादिमत् परं | | | अनादि मत्परं(अविगीता) |
| १४-२३ | योवतिष्ठति | योनुतिष्ठति (पां) | | |
| १४-२५ | मानापमानयोः | | मानावमानयोः | |
| १५-४ | ततः पदं | | | ततः परं (अविगीता) |
| १५-४ | प्रपद्ये यतः | | प्रपद्येयतः (पां) | |
| १५-२० | कार्यकारणसङ्ग्रहः | कार्यकरणसङ्ग्रहः | | |
| १८-२५ | हिंसामनवेक्ष्य | हिंसामनपेक्ष्य | | |

## परिशिष्टम् - ६. [1]मध्वसिद्धान्तसारे गीता-गीताभाष्य-प्रमेयदीपिकानामुल्लेखः

अस्मिन् ग्रन्थे द्वैतसिद्धान्तप्रमेयप्रतिपादनाय नैकवारं गीताद्युल्लेखः कृतः । गीताया बहुमुखत्वनिदर्शनायायमत्र सङ्गृहीतः । अत्र येषु पृष्ठेषु गीतादीनामुल्लेखः यद्विषयमधिकृत्येतावन्मात्रं सूच्यते । अधिकविचारः तत्रैवानुसन्धेयः ।।

| | |
|---|---|
| १. पृ-६ | निवृत्तं कर्म |
| २. पृ-४० | शक्तिरूपपदार्थनिरूपणे |
| ३. पृ-७२. | भगवान् नानारूपः |
| ४. पृ-७९. | लक्ष्मी भगवद्भार्या नानारूपा |
| ५. पृ-९८. | मुक्ताः तारतम्यवन्तः |
| ६. पृ-११३. | गुणत्रयविचारः |
| ७. पृ-१५० | भगवतः श्वासः |
| ८. पृ-१५३. | ईश्वरस्वरूपभूतं तेजः |
| ९. पृ-१९६. | कालविचारः |
| १०. पृ-२०५ | प्रतिबिम्बविचारः |
| ११. पृ-२१४ | भगवतः चित्ररूपविचारः |
| १२. पृ-२१५ | भगवत्स्वरूपभूतः रसः |
| १३. पृ-२२४ | अपरोक्षज्ञानस्यास्त्युष्णस्पर्शः |
| १४. पृ-२२१ | विष्णोः स्वरूपभूतगन्धः |
| १५. पृ-२१९ | विष्णुस्वरूपभूतरसविचारः |
| १६. पृ-२६१ | भगवतो पुण्यपापसम्बन्धो नास्ति |
| १७. पृ-२५९ | कामः मनोगतः धर्मः |
| १८. पृ-२६४ | अपरोक्षज्ञानेन पुण्यनाशविचारः |
| १९. पृ-२७३ | दैत्यानामैहिकपुण्यविचारः |

---

१ द्वैतवेदान्तसंशोधनप्रकाशनस्य पृष्ठसङ्ख्या निर्दिष्टा

श्रीकृष्णार्पणमस्तु

## परिशिष्टम् -७. सत्तत्त्वरत्नमालायां गीतावाक्योल्लेखः

सत्तत्त्वरत्नमालायां नवप्रकरणेषु गीता-भाष्य-प्रमेयदीपकानामुल्लेखः द्वैतसिद्धान्त-प्रमेयनिरूपणार्थं कृतः । तदयं सङ्ग्रहः । प्रकरणसङ्ख्या- श्लोकसङ्ख्या चादौ निर्दिष्टा । ततः विषय-वाक्य-श्लोकनिरूपणमिति क्रमः ।

| | | |
|---|---|---|
| १. | १.९ | वेदनित्यत्वविचारः |
| २. | १.११ | वेदानामभिव्यक्तिः |
| ३. | १.११ | भगवतो सुखभोगः |
| ४. | १.२४ | प्रलयलक्षणम्, साम्यावस्थाविचारः |
| ५. | १.२५ | कार्यं कारणनिष्ठम् |

| | | |
|---|---|---|
| ६. | १.३६ | ईश्वरकर्तृत्वम् |
| ७. | १.४६ | बह्व्योहि बुद्ध्यो मतभेदात् |
| ८. | २.७० | गुणदोषौ मनुष्याणां |
| ९. | २.७१ | यथार्थत्वनियमाभावात् |
| १०. | ४.७९ | नैकांशसममाहात्म्याः |
| ११. | ४.७९ | नित्योपाध्या स्वरूपया |
| १२. | ४.७९ | यत्र प्रणो मनस्तत्र |
| १३. | ४.८४ | सत्वात् सञ्जायते ज्ञनम् |
| १४. | | उपद्रष्टाऽनमन्ता च |
| १५. | ४.९६ | आधिकारिकपुंसां तु |
| १६. | | रागादि दोषकारणमाह |
| १७. | ४.१०१ | सङ्गात् सञ्जायते कामः |
| १८. | | जीवकर्तृत्वविचारः |
| १९. | ४.१०२ | कर्मण्येवाधिकारस्ते |
| २०. | ५.१३० | आधिकरिक्तपुंसां तु |
| २१. | | देवानां ज्ञानविचारः |
| २२. | ५.१३३ | एकान्तनां नकस्यचित् |
| २३. | | नैकात्म्यतां मे |
| २४. | | भागवतवाक्यविरोधपरिहारः |
| २५. | ५.१३६ | शुकादीनामपि ईशदर्शनात् |
| २६. | ७.१५५ | यद्यद् विभूतिमत् |
| २७. | ७.१६५ | पुरुषः सुखदुःखानां |
| २८. | ८.१९६ | मम योनिर्महद्ब्रह्म |
| २९. | ८.१२४ | येत्वक्षरमनिर्देश्यम् |
| ३०. | ९.२६३ | सोनन्तवीर्यः |

३१. ९.२६४ तानि चैकैकरूपाण्यनन्तानि
३२. ९.३१९ पाकशासनविक्रम
३३. ९.३३९+३६९आगमिष्यत् सुखं चापि
३४. ९.३५५ आह च सूक्ष्माशनम्
३५. ९.३५७ इन्द्रियद्वारा सोपि भुङ्क्ते
३६. १२.४४० दिव्यं ददामि ते चक्षुः
३७. १३.४५३ वृद्धिह्रासविचारः
३८. १३.४६३ कर्मक्षयविचारः
३९. १४.४७० मार्गविचारः

**श्रीकृष्णार्पणमस्तु**

## परिशिष्टम् - ८. ब्रह्मसूत्रभाष्ये तत्त्वप्रकाशिकायां च गीतोल्लेखः

| | |
|---|---|
| अहं वैश्वानरो भूत्वा | ब्र.सू.भा. १.२.७ |
| कूटस्थोक्षर उच्यते | ब्र.सू.भा. १.२.६, १.४.१ |
| अक्षरं ब्रह्म परम् | ब्र.सू.भा. १.४.१ |
| उभयोरपि दृष्टोन्तः | ब्र.सू.भा.३.१.१ |
| कर्मणैव हि | ब्र.सू.भा.३.३.२९. |
| भक्त्या मामभिजानाति | त.प्र.३.३.५२. |
| मम योनिर्महद्ब्रह्म | ब्र.सू.भा. १.१.१२ |
| वेदैश्च सर्वैरहमेव | ब्र.सू.भा. १.१.६ |
| यदादित्यगतं तेजः | ब्र.सू.भा. १.३.२३ |
| न तद्भासयते | ब्र.सू.भा. १.१.१, १.३.२३ |
| प्रियो हि ज्ञानिनो | त.प्रदीपिका ३.३.५०. |
| प्रजहाति यदा कामान् | त.प्र.३.४.१. |
| यस्त्वात्मरतिरेव | ब्र.सू.भा.३.४.४. |

| | |
|---|---|
| सर्वभूतेषु यैनेकं | त.प्र ३.४.३७. |
| विहाय कामान् यः सर्वान् | त.प्र.३.४.४३. |
| अवजानन्ति मां मूढाः | त.प्रदीपिका ३.४.४९. |
| असत्यमप्रतिष्टं | त.प्रदीपिका ३.४.४९. |
| समं कायशिरोग्रीवं | ब्र.सू.भा.४.१.१०. |
| नात्यश्नतस्तु | त.प्रदीपिका.४.१.११. |
| योगारूढस्य तस्यैव | त.प्र.४.१.१२. |
| नहि कश्चित् क्षणमपि | त.प्र.४.१.१३. |
| यं यं वापि | त.प्र.४.२.२. |
| अग्निर्ज्योतिरहः | ब्र.सू.भा.४.२.२२. |
| धूमो रात्रिः | ब्र.सू.भा.४.२.२२. |

## ※ श्रीमद्भागवतटीकायां विजयध्वजीये प्रासङ्गिकतया उदाहृताः गीताश्लोकाः ※

**प्रथमस्कन्धे**

| | | | |
|---|---|---|---|
| १.१.१<br>१.१७.२० | अहं सर्वस्य प्रभवः | १.१.१ | वेदैश्च सर्वैरहमेव वेद्यः |
| १.१.१ | तान्यहं वेद सर्वाणि | १.१.२ | यत्करोषि यदश्नासि |
| १.५.१७ | क्षिप्रं भवति धर्मात्मा | १.९.७ | ब्रह्मार्पणं ब्रह्महविः |
| १.९.४२ | सेनयोरुभयोर्मध्ये | १.१७.२० | अहं हि सर्वयज्ञानां |
| १.१७.२० | बुद्धिर्ज्ञानमसम्मोहः | १.१७.२० | अहिंसा समता तुष्टिः |
| १.९.४३ | हत्वार्थकामांस्तु | १.९.४३ | अशोच्यानन्वशोचस्त्वम् |

**द्वितीयस्कन्धे**

| | | | |
|---|---|---|---|
| २.१.४ | सद्भावे साधुभावे च | २.८.२५ | यद्यदाचरति श्रेष्ठः |
| २.५.१५ | अहं हि सर्वयज्ञानां | | |

तृतीयस्कन्धे

| | | | |
|---|---|---|---|
| ३.८.१२ | बहूनां जन्मनामन्ते | ३.८.८<br>३.१७.१८ | यदा यदा हि |
| ३.११.२५ | सर्वार्थान् विपरीतांश्च | ३.२५.३३ | द्वाविमौ पुरुषौ |
| ३.२७.९ | प्रकृतिं पुरुषं चैव | ३.३४.८ | अतोस्मि लोके वेदे |

चतुर्थस्कन्धे

| | | | |
|---|---|---|---|
| ४.१.५५ | यथाकाशस्थितो नित्यं | ४.८.३८ | भक्त्या त्वनन्यया शक्यः |
| ४.८.४१ | यच्चन्द्रमसि यच्चाग्नौ | ४.८.२८ | गतिमण्वीं प्रयुञ्जे |
| ४.७.२७<br>४.२०.१ | अहं हि सर्वयज्ञानां | ४.२०.७ | उत्तमः पुरुषस्त्वन्यः |
| ४.२४.३३ | प्रशस्ते कर्मणि तथा | ४.२४.५५ | भक्त्या त्वनन्यया शक्यः |
| ४.२७.२५ | तस्माच्छास्त्रं प्रमाणं ते | ४.२८.३६ | नात्यश्नतस्तु योगोस्ति |
| ४.२९.७९ | न हि कश्चित् क्षणमपि | ४.३०.३१ | नान्तोस्ति मम भूतीनाम् |
| ४.३१.२१ | ज्ञानी त्वात्मैव मे मतम् | ४.३१.२२ | प्रियो हि ज्ञानिनोत्यर्थम् |

पञ्चमस्कन्धे

| | | | |
|---|---|---|---|
| ५.११.१७ | अजो नित्यः शाश्वतः | ५.१७.१७ | पश्यामि त्वां सर्वतोनन्तरूपम् |
| ५.१७.१७ | अनन्तश्चास्मि नागानाम् | ५.१७.१८ | बुद्धिर्ज्ञानमसम्मोहः |
| ५.१७.१८ | अहिंसा समता तुष्टिः | ५.१८.८ | यदादित्यगतं तेजः |
| ५.२४.२ | त्रिविधा भवति श्रद्धा | ५.२४.२ | सत्वानुरूपा सर्वस्य |
| ५.२४.२ | यजन्ते सात्विका | | |

षष्टस्कन्धे

| | | | |
|---|---|---|---|
| ६.३.१२ | यदा यदा हि | ६.३.२२. | एष मे सर्व |
| ६.९.४० | यदि ह्यहं न वर्तेयं | ६.१३.१८ | अहं हि सर्व यज्ञानां |
| ६.१३.१९ | ज्ञानाग्निः सर्वकर्माणि | ६.१४.३. | मनुष्याणां सहस्रेषु |

सप्तमस्कन्धे

| | | | |
|---|---|---|---|
| ७.१.२७ | भक्त्या त्वनन्यया. | ७.१.२७. | प्रियो हि ज्ञानिनो |
| ७.१.२७. | मोघाशा मोघकर्माणः | ७.१.४५. | राक्षसीमासुरीं चैव |

| | | | |
|---|---|---|---|
| ७.१.४५. | यं यं वापि. | ७.२.४९ | गतासूनगतासूंश्च |
| ७.६.३० | प्रद्विषन्तोभ्यसूयकाः | ७.७.३०<br>७.१६.१० | ब्रह्मार्पणं ब्रह्महविः |
| ७.१२.३३<br>७.१६.९ | सर्वधर्मान् परित्यज्य | ७.१६.२० | विषया विनिवर्तन्ते |

**अष्टमस्कन्धे**

| | | | |
|---|---|---|---|
| ८.५.२९ | कूटस्थोक्षर उच्यते | ८.५.३५ | पचाम्यन्नं चतुर्विधम् |
| ८.५.४८ | सर्व धर्मान् परित्यज्य | ८.५.४५ | यदा यदा हि धर्मस्य |

**नवमस्कन्धे**

| | | | |
|---|---|---|---|
| ९.८.२४ | कार्यते ह्यवशः कर्म | ९.१६.२४ | ध्यायतो विषयान् पुंसः |
| ९.१८.९ | शुनि चैव श्वपाके च | ९.२१.५७ | उत्तमः पुरुषस्त्वन्यः |
| ९.९.१८ | मम योनिर्महद्ब्रह्म | ९.२१.३७ | मयैवेते निहताः पूर्वमेव |

**दशमस्कन्धे**

| | | | |
|---|---|---|---|
| १०.४.२४ | न त्वत्समश्चाभ्यधिकश्च | १०.२५.११ | सर्वं समाप्नोषि ततोसि |
| १०.२६.१५ | अजो नित्यः शाश्वतः | १०.२७.१३ | त्रिविधं नरकस्येदं |
| १०.३६.१७ | इदं शरीरं कौन्तेय | १०.७०.३०<br>१०.७४.२४ | कार्यते ह्यवशः कर्म |
| १०.७२.३९ | बहूनां जन्मनामन्ते | १०.९१.२१ | प्रियो हि ज्ञानिनः |

**एकादशस्कन्धे**

| | | | |
|---|---|---|---|
| ११.१२.१० | मयि सर्वाणि कर्माणि | | |

## श्रीमद्गीताभाष्यटीकाभावदीपोदाहृतप्रमाणश्लोकार्धानुक्रमणिका

## प्रमेयदीपिका-भावदीपयोरुदाहृतधातवः सूत्राणि च

प्रतियोगे पञ्चम्यास्तसिः (पा.सू.)
आद्यादिभ्य उपसङ्ख्यानम् (वा)
इत्थम्भूतलक्षणे तृतीया(पा.सू.)
स्पृहि-गृहि-पति-दयि-निद्रा (पा.सू.)
कृपो रो लः (पा.सू.)
स्वं रूपं शब्दस्याशब्दसञ्ज्ञा (पा.सू.)
अग्रेर्ढक् (पा.सू.)
इको यणचि (पा.सू.)
कर्तरि च (पा.सू.)
याजकादिभ्यश्च(पा.सू.)
बुध अवगमने (पा.धा.)
अकर्तरि च कारके सञ्ज्ञायाम् (पा.सू.)
पुगन्त(पा.सू.)
अल्पे(पा.सू.)
तद्धितार्थोत्तरपदसमाहारे च (पा.सू.)
सङ्ख्यापूर्वो द्विगुः (पा.सू.)
द्विगोः(पा.सू.)
विशेषणं विशेष्येण बहुलम् (पा.सू.)
चुटू (पा.सू.)
हलन्त्यम् (पा.सू.)
सहयुक्तेऽप्रधाने (पा. सू.)
कृदतिङ् (पा.सू.)
कर्तृकर्मणोः कृति (पा.सू.)
न लोकाव्ययनिष्ठाखलर्थतृणाम् (पा.सू. )
इदमस्थमुः(पा.सू. )
हलन्त्यम्(पा.सू.)

न विभक्तौ तु स्माः(पा.सू.)
अव्ययीभावश्च(पा.सू.)
स्वरादिनिपातमव्ययम् (पा.सू. )
तोसुन्-कसुनोरप्रतिषेधः
स्थेण्-कृञ्-वदि-चरि-(पा.सू.)
कर्तरि च (पा.सू.)
याजकादिभ्यश्च (पा.सू.)
द्वितीया श्रितातीत (पा.सू.)
गमिगाम्यादेरुपसङ्ख्यानम् (वार्तिक.)
न लोका-व्यय (पा.सू.)
कृते ग्रन्थे (पा.सू.)
तेन प्रोक्तम् (पा.सू. )
अमानो नाः प्रतिषेधः(गणसूत्रम्)
माङि लुङ्(पा.सू.)
दुःखात् प्रातिलोम्ये (पा.सू.)
असम्भवस्तु सतोऽनुपपत्तेः (ब्र.सू.)
एतेन सर्वे व्याख्यात(ब्र.सू.)
असदिति चेत् (ब्र.सू.)
सुप्यजातौ णिनिस्ताच्छील्ये (पा.सू.)
दाधाघ्वदाप् (पा.सू.)
उपसर्गे घोः किः (पा.सू.)
स्त्रियां च (पा.सू.)
कृत्याः(पा.सू.)
प्राङ् ण्वुलः इति (पा.सू.)
ण्वुल् तृचौ (पा.सू.)
प्राक् तव्यत्तव्यानीयरः (पा.सू.)

| | |
|---|---|
| ॠहलोर्ण्यत् (पा.सू.) | टिड्ढाणञ् (पा.सू.) |
| अर्हे कृत्यतृचश्च (पा.सू.) | अजाद्यतष्टाप्(पा.सू.) |
| अंशो नाना(ब्र.सू.) | प्रोपाभ्यां युजेरयज्ञपात्रेषु (पा.सू.) |
| आभास एव (ब्र.सू.) | तेन तुल्यं क्रिया (पा.सू.) |
| यस्येति च ( पा.सू. ) | भुजोऽनवने(पा.सू.) |
| विद्यैव (ब्र.सू.) | राजाहः सखिभ्यष्टच् (पा.सू.) |
| अचतुर-विचतुर-(पा.सू.) | ऋक्-पूरब्धूःपथामानक्षे (पा.सू.) |
| द्वित्रिभ्यां पादन् मूर्धसु (पा.सू. ) | पूरणगुणसुहितार्थसदव्ययतव्य(पा.धा.) |
| द्वित्रिभ्यां ष मूर्ध्नः(पा.सू. ) | तद्धिताः (पा.सू ) |
| ध्रुवमपायेऽपादानम् (पा.सू.) | ओर्गुणः (पा.सू.) |
| आन् महतः समानाधिकरण(पा.सू.) | तद्धितेष्वचामादेः(पा.सू.) |
| अल्पाच्तरं पूर्वम् (पा.सू.) | उणादयो बहुलम् (पा.सू.) |
| माङि लुङ्(पा.सू.) | अत उपधायाः (पा.सू.) |
| राजाहः सखिभ्यष्टच् (पा.सू. ) | सहयुक्तेऽप्रधाने(पा.सू.) |
| ऋक्पूरब्धूःपथामानक्षे(पा.सू.) | सहयुक्ते (पा.सू.) |
| ह्रस्वनद्यापो नुट्(पा.सू.) | कर्तृकरणयोस्तृतीया(पा.सू.) |
| नामि (पा.सू.) | न वा अरे पत्युः कामाय (बृ.उ.) |
| तन्निर्धारणार्थनियमस्तद्दृष्टेः (ब्र.सू.) | अचोऽञ्णिति(पा.सू. ) |
| लक्षणेत्थम्भूताख्यान (पा.सू.) | करणाधिकरणयोश्च (पा.सू.) |
| अनुर्लक्षणे(पा.सू.) | युवोरनाकौ(पा.सू.) |
| कर्मप्रवचनीययुक्ते द्वितीया(पा.सू.) | रषाभ्याम् (पा.सू.) |
| सङ्ख्यापूर्वो द्विगुः (पा.सू.) | णेरनिटि (पा.सू.) |
| द्विगुरेकवचनम् (पा.सू.) | करणोधिकरणयोश्च (पा.सू.) |
| उपमर्दं च | कर्मव्यतिहारे णिच् स्त्रियाम् (पा.सू.) |
| कार्यं बादरिः(ब्र.सू.) | उपसर्गाः क्रियायोगे (पा.सू.) |
| स एनान् ब्रह्म गमयति(छा.उ.) | आकेस्तच्छीलतद्धर्मतत्साधुकारिषु (पा.सू.) |
| तस्येदम् (पा.सू.) | पञ्चमी भयेन (पा.सू . ) |

| | |
|---|---|
| सर्वधर्मोपपत्तेश्च (ब्र.सू.) | स्वमोर्नपुंसकात् इति |
| सत्याप-पाश-रूप-वीणा-तूल(पा.सू.) | न लोकाव्ययनिष्ठा खलर्थतृनाम् (पा.सू.) |
| णिचश्च (पा.सू.) | आकेस्तच्छीलतद्धर्मतत्साधुकारिषु (पा.सू.) |
| गुणवचनब्राह्मणादिभ्यः(पा.सू.) | इगुपधाज्ञाप्रीकिरः सम्प्रसारणम् (पा.सू.) |
| व्यत्ययो बहुलम् (पा.सू.) | नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (पा.सू.) |
| अनियमः सर्वेषाम् (ब्र.सू.) | क्ङिति च (पा.सू.) |
| अणवश्च (ब्र.सू.) | पुगन्तलघूपधस्य च (पा.सू.) |
| शारीररूपकविन्यस्तगृहीतेः (ब्र.सू.) | इकोऽचि विभक्तौ (पा.सू.) |
| कर्ता शास्त्रार्थवत्वात्(ब्र.सू.) | स्त्रियाः पुंवद्भाषित (पा.सू.) |
| आकेस्तच्छीलतद्धर्मतत्साधुकारिषु(पा.सू.) | एकतद्धिते च (पा.सू.) |
| सनाशंसभिक्ष उः (पा.सू.) | अनेकमन्यपदार्थे (पा.सू.) |
| समानकर्तृकयोः पूर्वकाले (पा.सू.) | षष्ठी शेषे(पा.सू.) |
| स नपुंसकम् (पा.सू.) | गिरौ डश्छन्दसि (वार्तिकम्) |
| अव्ययीभावश्च (पा.सू.) | कुगतिप्रादयः(पा.सू.) |
| अव्ययं विभक्तिसमीपसमृद्धि(पा.सू.) | लक्षणहेत्वोः क्रियायाः(पा.सू.) |
| आतो लोप इटि च(पा.सू.) | लटः शतृ शानचावप्रथमास(पा.सू.) |
| अत इनि ठनौ (पा.सू.) | वर्तमाने लट् (पा.सू.) |
| धातुसम्बन्धे प्रत्ययाः (पा.सू.) | विदिपुरोश्च(उ.सू.) |
| प्रत्ययः (पा.सू.) | उदोष्ट्यपूर्वस्य(पा.सू.) |
| परश्च (पा.सू.) | उरण् रपरः (पा.सू.) |
| सर्वादीनि सर्वनामानि (पा.सू.) | ण्वुल् तृचौ(पा.सू.) |
| आमि सर्वनाम्नः सुट्(पा.सू.) | जैमिनिः(ब्र.सू.) |
| अकर्तरि च कारके सञ्ज्ञायाम्(पा.सू.) | लशक्वतद्धिते (पा.सू.) |
| प्रतियोगे पञ्चम्यास्तसिः (पा.सू) | हलन्त्यम्(पा.सू.) |
| प्रकारवचने थाल् (पा.सू.) | इदमपृक्तस्य.(पा.सू.) |
| इकोऽचि विभक्तौ (पा.सू.) | शि तुक् (पा.सू.) |
| न लुमताङ्गस्य (पा.सू.) | सहयुक्ते अप्रधाने (पा.सू.) |

| | |
|---|---|
| स्त्रियाः पुवद्भाषितपुंस्कात् (पा.सू.) | अत इनिठनौ (पा.सू.) |
| ङ्यापोः सञ्ज्ञाछन्दसोः बहुलम् (पा.सू.) | इणो यण् (पा.सू.) |
| कुगतिप्रादयः (पा.सू.) | पञ्चमी भयेन(पा.सू.) |
| अव्ययीभावश्च(पा.सू.) | आकडारात् (पा.सू.) |
| नाव्ययीभावादतोऽम्त्व(पा.सू.) | सप्तम्यां जनेर्डः (पा.सू.) |
| सार्वधातुकार्धधातुकयोः (पा.सू.) | वदः सुपि क्यप् च(पा.सू.) |
| बहुलं छन्दस्यमाङ्योगे(पा.सू.) | भुवो भावे(पा.सू.) |
| न लोकाव्ययनिष्ठा(पा.सू.) | मयूर-व्यंसकादयश्च(पा.सू.) |
| उपसर्जनं पूर्वम् (पा.सू.) | आतो लोप इटि च(पा.सू.) |
| तदस्यास्त्यस्मिन्निति मतुप् (पा.सू.) | अनद्यतने लङ् (पा.सू.) |
| अन्येभ्योऽपि दृश्यते(पा.सू.) | व्यत्ययो बहुलम् (पा.सू.) |
| आतो मनिन्-क्वनिप्-(पा.सू.) | धातोः कर्मणः समानकर्तृका(पा.सू.) |
| अलुगुत्तरपदे(पा.सू.) | सन्यङोः (पा.सू.) |
| न लोपो नञः (पा.सू.) | आर्धधातुकस्येड् वलादेः (पा.सू. ) |
| सार्वधातुकार्धधातुकयोः(पा.सू.) | हलन्ताच्च (पा.सू.) |
| इण् कोः(पा.सू.) | सनाशंसभिक्ष उः (पा.सू. ) |
| रषाभ्यां नो णः(पा.सू.) | कर्तुः क्यङ् सलोपश्च(पा.सू.) |
| पुगन्तलघूपदस्य(पा.सू.) | लक्षणे इत्थम्भूताख्यानभाग(पा.सू |
| रषाभ्यां नो णः (पा.सू. ) | कर्तृकर्मणोः कृति (पा.सू.) |
| आतो लोपः (इटि च) (पा.सू.) | अर्श आदिभ्योऽच्(पा.सू.) |
| उणादयो बहुलम् (पा.सू.) | टिड्ढाणञ् (पा.सू.) |
| सार्वधातुकार्धधातुकयोः (पा.सू.) | तद्धिताः(पा.सू.) |
| भूते(पा.सू.) | ज्वरत्वर(पा.सू.) |
| निष्ठा (पा.सू.) | कर्तृकरणयोस्तृतीया (पा.सू.) |
| अकर्तरि च कारके :पा.सू.) | |
| नानद्यतनवत् (पा.सू.) | |
| प्राग्धातोः (पा.सू.) | |

|  |
|---|
| ष अप्रीतौ(पा.धा.) |
| हर्ष(वि) मोहनयोः(पा.धा.) |
| द्लृ विषरण गत्यवसादनेषु (पा.धा.) |
| ङ्क्षि,माङ्क्षि,काङ्क्षायाम्(पा.धा.) |
| पू सामर्थ्ये (पा.धा.) |
| ञ् धारणे (पा.धा.) |
| [ गतौ (पा.धा.) |
| जिर् योगे(पा.धा.) |
| [ इच्छायाम् |
| पु स्तुतौ (पा.धा.) |
| इन्धी दीप्तौ (पा.धा.) |
| ॡ मोक्षणे (पा.धा.) |
| [ अवबोधने(पा.धा.) |
| सत्तायाम्(पा.धा.) |
| न्त्यम् (पा.सू.) |
| [ विस्तारे(पा.धा.) |
| भक्षणे(पा.धा.) |
| निवासे(पा.धा.) |
| आच्छादने(पा.धा.) |
| गतौ (पा.धा.) |
| गतिनिवृत्तौ(पा.धा.) |
| दिर् द्वैधीकरणे (पा.धा.) |
| कान्तिप्रवेश (पा.धा) |
| निटि (पा.सू.) |
| दयो धातवः(पा.सू.) |
| देवपूजा (पा.धा.) |
| हिंसायाम् (पा.धा.) |

|  |
|---|
| आस उपवेशने(पा.धा.) |
| हृञ् हरणे (पा.धा.) |

गीताभाष्यप्रमेयदीपिकाभावदीपेषु व्याकरणरीत्या शब्दस्वरूपविचारः

उपोद्धातः

**श्रीकृष्णार्पणमस्तु**

## प्रमेयदीपिकायाम्

## परमतविमर्शस्थानानि

**भास्करमतविमर्शः**

१४, ३२, १७८, २२३,
२२६, २८७, ३०७, ३५४,
४२१, ४४२, ४७१, ५७८,
६००, ६०४, ६९९

**अद्वैतोद्वारः** ५४८

**राजानरामकविव्याख्या** ५४७

**शाङ्करभाष्यविमर्शः**

८१, ८४, १००, १०६
१५०, १६१, १६८. १७०
१८३, १८५, २२४, २३३
२४१, २४४, २५१, २५३
२५४, २५६, २६४, २८०
२८७, २९२, २९६, ३०३
३०५, ३१६, ३२३, ३३७
३३९, ३४१, ३४७, ३४९
३५०, ३८५, ३८६, ३८८.
३८९, ३९०, ३९२, ३९३,
३९४, ३९६, ३९८, ४०२
४०३, ४०७, ४१४, ४१६
४२१, ४२४, ४३२, ४३३
४५३, ४५४, ४५५, ४५८
४६०, ४६१, ४६२, ४६६
४६७, ४६८, ४७२, ४७३
४७५, ४७६, ४७९, ४९६
५०३, ५०४, ५२८, ५३८
५४२, ५४४, ५४५, ५४८
५७७, ५७८, ५८१, ५८५,
५९६, ५९९, ६००, ६०२,
६०६, ६१०, ६२८, ६३०,
६३३. ६५४, ६५९, ६६१,
६९८. ७०३, ७०४, ७०८,
७१२, ७२०, ७२३, ७२४,
७२६, ७३४, ७३६, ७३८,
७४०, ७४२, ७४७ ७४९,
७५०, ७५२, ७५३, ७५७,
७६२, ७७१, ७७३, ७८१,
७८५, ७९०, ७९५, ८०२,
८०५, ८०८, ८०९, ८११,
८१४, ८२१. ८२४, ८२८.

# शुद्धाशुद्धपत्रिका

| पृष्ठ-पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|
| ४-४ | पुरणार्षिः | पुराणर्षिः |
| १४३-२४ | अच्यतः | अच्युतः |
| १९४.२४ | उदाहत | उदाहृत |
| २०८ | युधिष्ठिरे- तीति | युधिष्ठिरेतीति ।। |
| २६४-१८ | कल्लूटभट्ट | कल्लूकभट्ट |
| ३६६-८ | इत्येतत् शब्दरूपं | इति एतच्छब्दरूपं |
| ४०७-१७ | तात्पय | तात्पर्य |
| ६३६-१३ | प्र- त्येक | प्रत्येक |
| ७३०- १४ | इत यनु | इत्यनु |
| ७४८ -२१ | तद्व्याप्तत्वा् | तद्व्याप्तत्वात् |
| ७५७ - ४ | दयोसिन्धो | दयासिन्धो |
| | र्जुनादि वत् | र्जुनादिवत् |
| ७५७-५ | पाङ्गरी | पाङ्गी |
| ७८५-२०. | तृच् प्रातिंपदिकात् | कृष्प्रातिपदिकात् |
| ८१३ | ५-एततत्रिविधं | एतत्त्रिविधं |
| ८१६ | कर्तृत्व-शक्ते | कर्तृत्वशक्ते |
| ८१६ २५-२ | वैषम्‍ यादि | वैषम्यादि |

## उपयुक्तग्रन्थसूची

**अस्मिन् संस्करणे त्रिशताधिकाः ग्रन्थाः अवलोकिताः । ग्रन्थानां वाहुल्यात् केवलं ग्रन्थप्रकाशकसंस्थादीनां नाममात्रं निर्दिष्टम् ।।**

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला

मध्वसिद्धान्तप्रतिष्ठानग्रन्थमाला-

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम्

विश्वमध्वमहापरिषत्-प्रकाशनम्

श्रीमन्यायसुधा षट्टिप्पणी १-६ भागः

श्रीमन्यायसुधा २५ टिप्पणी १-१५ भागः(मन्त्रालयप्रकाशनम्)

श्रीराघवेन्द्रस्वीमिमठः -मन्त्रालयप्रकाशनम्

श्रीमद्भागवतम् (विजयध्वजीयसहितम्)१-१२स्कन्धाः - बागलिङ्गंपल्लीप्रकाशनम्

दशप्रकरणानि माध्वराद्धान्तसंवर्धकसभाप्रकाशनम्

सर्वमूलग्रन्थाः-श्रीव्यासमध्वसंशोधनप्रतिष्ठानम्

सत्यतीर्थप्रतिष्ठानम्

रामायणम्-महाभारतम् टि.आर्.कृष्णाचार्यः

प्राच्यविद्यासंशोधनालयग्रन्थमाला -मैसूर्

आनन्दाश्रमग्रन्थमाला- पूना

ब्रह्मसूत्रभाष्यदीपिका-१-४भागः भाष्यदीपिकाप्रकाशनसमितिः

वैयाकरणग्रन्था- मोतीलाल्बनारसीदासप्रकाशनम्

पुराणानि महिशूरप्राच्यविद्यासंशोधनालयस्थानि